


THE
CHOWKHAMBÂ SANSKRIT SERIES
A
COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.
No's. 460, 461 & 462.

विद्वद्वररामकृष्णकृतः

# संस्कारगणपतिः

पारस्करगृह्यसूत्रविस्तृतविवरणरूपः ।

# SAMSKĀRA GAṆAPATI

BY

PANDIT S'RĪ RĀMA KṚṢṆA

*Edited by*

NYĀYĀCHĀRYA KĀVYATĪRTHA
PANDIT S'RĪ DHUNDHIRÂJA S'ĀSTRĪ
Principal N, Veda Vidyâlaya, Benâres.
AND
VEDĀCHĀRYA PANDIT S'RĪ MĀRTANDA S'ĀSTRĪ
Professor of Veda, Goyanka Sanskrit
Vidyalaya, Benares.

FASCICULUS. VIII–X. ८–१०.

*PUBLISHED BY THE SECRETARY,*
CHOWKHAMBA SANSKRIT SERIES OFFICE.
*Benares City.*

1938




श्रीः

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ।
सुवर्णाऽङ्कितभव्याभशतपत्रपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ।
रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोहितम् ॥ २ ॥

स्तबकाः ४६०, ४६१, ४६२.

*Printed by Jaya Krishna Das Gupta*
*at the Vidya Vilas Press, Benares.*
1938.

THE

CHOWKHAMBĀ SANSKRIT SERIES.

A

COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

No's. 428, 429, 430, 439, 442, 451, 452, 460, 461 & 462.

THE

# SAMSKĀRA GAṆAPATI

BEING AN EXHAUSTIVE COMMENTARY OF THE PĀRASKARA GṚHYASŪTRA WITH TEXT.

( From the begining to Kaṇdikā XII of Kāṇda II )

BY

YĀJNĪKA S'RĪ RĀMA KṚIS'NA S'ARMĀ

*Edited by*

NYĀYĀCHĀRYA KĀVYATIRTHA

PT. DHUNDHIRĀJA S'ĀSTRI

Principal, N. V. Vidyalaya, &

VEDĀCHĀRYA

PT. MĀRTANDA S'ĀSTRI

Prof. Goyanka Sanskrit College, Benares.

FASCICULUS. I–X. १-१०.

PUBLISHED BY

JAYA KRISHNADAS HARIDAS GUPTA

*The Chowkhamba Sanskrit Series Office,*

BENARES.

1938

॥ श्रीः ॥


–≫ चौखम्बा-संस्कृत-ग्रन्थमाला ≪–

( ग्रन्थ-संख्या ८० )

ग्रन्थाङ्काः ४२८, ४२६, ४३०, ४३६, ४४२, ४५१, ४५२, ४६०,
४६१, ४६२.


---

याज्ञिकमूर्धन्य-रामकृष्ण-विरचितः

# संस्कारगणपतिः ।

पारस्करगृह्यसूत्रीयप्रथमकाण्डमारभ्य द्वितीयकाण्डस्थद्वादशकण्डिका-
पर्यन्तविस्तृतविवरणरूपः ।

सम्पूर्णमूल-क्षेपक-परिशिष्टादिसहितः ।

वाराणसेय नित्यानन्द वेदविद्यालयीय प्रधानाध्यापकेन
**न्यायाचार्य पण्डित ढुण्ढिराजशास्त्रिणा**
निर्म्यातः

गोयनका संस्कृत विद्यालये यजुर्वेदाध्यापकेन
**वेदाचार्य पण्डित मार्तण्डशास्त्रिणा**
संशोधितः ।

---


प्रकाशकः—

**जयकृष्णदास-हरिदास गुप्तः—**

**चौखम्बा संस्कृत सीरिज़ आफिस,**

बनारस सिटी ।

१९९५

॥ श्रीः ॥

अत्र पुस्तके सङ्कलितानां

# विषयाणामनुक्रमणिका ।







# भूमिका ।

## उपोद्घातः ।

अथायमारभ्यते संस्कारगणपतिनामा पारस्करगृह्यसूत्रीयसंस्कारप्रकरणव्याख्यानरूपस्तत्प्रतिपादकनिबन्धनिकरेषु चूडामणिर्महानिबन्धो मुद्रयित्वा प्रकाशयितुम् ।

## संस्कारप्राधान्यम् ।

यद्यपीदमीयमूलसूत्राणां गृह्यसूत्रमिति समाख्यया गृह्याग्निव्याप्तकर्मबोधकत्वं प्रतीयते, तथापि प्राणभृन्न्यायेन त्रेताग्निसाध्यसंस्कारेतरसंस्कारपरतया तादृक्कर्मप्रतिपादकत्वमवसेयम् । अस्य शुक्लयजुःशाखीयगृह्यसूत्रस्य विरचयिता महर्षिप्रवरः पारस्कराचार्य एव कात्यायन इति पारस्करसूत्रगदाधरभाष्यादिपर्यालोचनयाऽवगम्यत इति विद्वांसः । विक्रमसमयात्पूर्वं दशमशताब्दीस्थितिकालस्यापस्तम्बस्य पूर्ववर्ती कात्यायनोऽयं वार्तिकप्रणेतुः कात्यायनापरनाम्नो वररुचेर्विभिन्न एव । गृह्यसूत्राणां प्राचीनकर्कजयरामहरिहरगदाधराचार्यादिकृतभाष्यैः समलङ्कृतत्वेऽपि संस्काराणामेव स्मार्तकर्मसु प्राधान्यात्प्रचलितत्वाच्चेन्द्रयागादीनां परिशिष्टानामतथात्वात्तन्मात्रप्रतिपादकद्वितीयकाण्डीयचतुर्दशकण्डिकान्तग्रन्थस्यैव विवरणं विहितं तत्रभवता विजयसिंहदेवनृपतिसम्प्राप्तजीविकेन वाराणसीवास्तव्येन काण्वयजुःशाखीयेन काण्डभट्टापरनामधेयकोनेरदेवतनूजन्मना विद्वद्वररामकृष्णयाज्ञिकमूर्धन्येनेति उपोद्घातीयपद्यसमुदायैः स्वयमेव निर्धारयिष्यन्ति विद्वत्प्रवराः । निखिलश्रौतस्मार्तकर्मसु संस्काराणामेव प्राधान्यमित्यत्र—

पञ्चविंशतिसंस्कारैः संस्कृता ये द्विजातयः ।
ते पवित्राश्च योग्याश्च श्राद्धादिषु नियोजिताः ॥ (वीरमित्रोदये)
वैदिकैः कर्मभिः पुण्यैर्निषेकाद्यैर्द्विजन्मनाम् ।
कार्यः शरीरसंस्कारः पावनः प्रेत्य चेह च ॥
संस्कारैः संस्कृतः पूर्वैरुत्तरैरनुसंस्कृतः ।
नित्यमष्टगुणैर्युक्तो ब्राह्मणो ब्रह्मलौकिकः ॥
ब्राह्मं पदमवाप्नोति यस्मान्न च्यवते पुनः । ( शंखस्मृतौ )
ब्राह्मसंस्कारसंस्कृत ऋषीणां समानतां गच्छति ।
दैवेनोत्तरसंस्कारेण संस्कृतो देवानां समानतां गच्छति ॥
( हारीतस्मृतौ )
स्वाध्यायेन व्रतैर्होमैस्त्रैविद्येनेज्यया सुतैः ।
महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः ॥ ( मनुस्मृतौ )

इत्यादीनि वाक्यजातानि प्रमाणीक्रियन्ते । तथा चैहिकपारलौकिकसकलकर्मजन्यफलप्राप्तियोग्यतापादककायविशुद्धिसायुज्यतादिजनककर्मविशेषत्वं संस्कारत्वमिति संस्कारसामान्यलक्षणमव्याप्त्यादिदुष्टिविरहितत्वान्निर्दुष्टमिति बोध्यम् ।

## संस्कारविभागः ।

ते च संस्कारा द्विविधाः—ब्राह्मा दैवाश्च । तथाच हारीतः—**द्विविधो हि संस्कारो भवति ब्राह्मो दैवश्चेति** । तत्राद्या गर्भाधानाद्याः, तथा चाऽत्रापि हारीतः—

**गर्भाधानादिः स्मार्तो ब्राह्मः स्नानान्त इति ।**

आदिपदग्राह्यास्तु—

**गर्भाधानं[1] पुंसवनं[2] सीमन्तो[3] बलिरेव[4] च ।**
**जातकृत्यं[5] नामकर्म[6] निष्क्रमो[7]ऽन्नाशनं[8] परम् ॥**
**चौलकर्मो[9]पनयनं[10] तद्व्रतानां चतुष्टयम्[14] ।**
**स्नानो[15]द्वाहौ[16] चाग्रयण[17]मष्टकाः[18] च यथा तथा ॥**
**श्रावण्या[19]माश्वयुज्यां[20] च मार्गशीर्ष्यां[21] च पार्वणम्[22] ।**
**उत्सर्ग[23]श्चाप्युपाकर्म[24] महायज्ञाश्च[25] नित्यशः ॥**
**संस्कारा नियता ह्येते ब्राह्मणस्य विशेषतः ।**

इति वीरमित्रोदयप्रोक्ताः पञ्चविंशतिः ।

व्यासेन तु—

**गर्भाधानं[1] पुंसवनं[2] सीमन्तो[3] जातकर्म[4] च ।**
**नामक्रिया[5] निष्क्रमो[6]ऽन्नप्राशनं[7] वपनक्रिया[8] ॥**
**कर्णवेधो[9] व्रतादेशो[10] वेदारम्भक्रियाविधिः[11] ।**
**केशान्तः[12] स्नानं[13] उद्वाहो[14] विवाहो[15]ऽग्निपरिग्रहः ।**
**त्रेताग्निसङ्ग्रह[16]श्चैव संस्काराः षोडश स्मृताः ॥**

इत्यादिना षोडशैवोररीकृताः । एत एव चाधुनिकस्मार्तकर्मसु विशेषतः प्रचलितत्वात्सर्वसम्मता इत्यत्र—

**त्रयोदशानामाद्यानामधिकारी पिता भवेत् ।**
**इतरेषां त्रयाणां स्यादधिकारी स्वयं सुतः ॥**

इत्यादीनि गृह्यपरिशिष्टकारिकाद्युक्तवाक्यानि प्रमाणम् । एते च यद्यपि तत्तच्छाखासु प्रतिपादिता अभिन्ना एव, तथापि—

**स्वे स्वे गृहे यथा प्रोक्तास्तथा संस्कृतयोऽखिलाः ।**
**कर्तव्या भूतिकामेन नान्यथा भूतिमृच्छति ॥**

इत्याद्यङ्गिरःस्मृत्यादिवाक्यसमूहैः स्वस्वशाखाविहिता एव तत्तच्छाखाशालिभिर्विधेया इत्यवधेयम्, अन्यथा शाखारण्डदोषापत्तेस्तथा चोक्तं वसिष्ठेन–

न जातु परशाखोक्तं बुधः कर्म समाचरेत् ।
आचरन्परशाखोक्तं शाखारण्डः स उच्यते ॥ इति ।

एतेन सर्वदेशीयदशविधब्राह्मणानां विवाहादिसम्बन्धो वैध इति वदन्तः सर्वत्र साङ्कर्यमापादयन्तः पण्डितम्मन्याः केचिदाधुनिकाः प्रत्युक्ताः ।

## संस्कारगणपतेर्विशेषः ।

ननु सत्स्वन्येषु सूत्रव्याख्यानेषु कुतोऽयमपूर्वव्याख्यानव्यापारायास इति चेत्, प्राचीनतमकर्काचार्यकृतभाष्यव्याख्यानोपजीविनां जयराम–हरिहर–गदाधरादीनां यथासंख्यं मन्त्रविवरण–पद्धति–ज्योतिःशास्त्रानुसारितत्तत्कर्मशुभाशुभविहितप्रतिषिद्धयोग, प्रासङ्गिकार्कविवाहादिवर्णनरूपप्रधानविषयमात्रप्रतिपादकतया नाखिलविषयाणामेकेनैवावयवेन सम्प्रतिपत्तिरित्यालोच्य सकलसंस्कारेषु प्रासङ्गिकविषयेषु च प्रमाणभूतानि संहिता–सूत्र–स्मृति–तन्त्र–भाष्यादिवचनजातानि महता श्रमेणाऽन्विष्य ३७७ प्रमाणनिबन्धानां साहाय्येन भूतपूर्वव्याख्या ृणां च कृत्स्नान् विषयान् यथावस्थितान् न्यायोपन्यासेन व्याचक्षाणेन श्रीरामकृष्णविदुषाऽतीत्यापि निखिलभाष्यकृतो न स्वव्याख्याने भाष्यत्वस्याभिमानलवोऽपि स्फुटीकृत इति नाव्यक्तं संस्कारगणपतिमधीयानानां याज्ञिकप्रवराणाम् । एवञ्च संस्कारोपयुक्तनिखिलविषयाणामाकरत्वात् संस्कारगणपतिः संस्कारान्तगृह्यसूत्रव्याख्याननिबन्धेषु प्रधान इत्युक्तौ न काप्यतिशयोक्तिः स्यात् ।

## ग्रन्थकर्तृसमयपरिचयादि ।

ईदृशोऽस्य श्राद्धगणपतिसहोदरस्य महानिबन्धस्य निर्माता तत्रभवान् सुगृहीतनामधेयः श्रीरामकृष्णयाज्ञिको दाक्षिणात्यवैदिकसमाजे प्रसिद्ध एव । स चायं निर्णयसिन्धुकाराद्विद्वत्प्रकाण्डात्कमलाकरभट्टादर्वाचीनः "शाके त्रिनगभूपाख्ये" इत्यादिप्रस्तुतनिबन्धनिर्मातृविरचितश्राद्धगणपत्यन्तोक्तपद्येन १६८३ शालिवाहनशाके बभूवेति निर्धार्यते ।

## कृतज्ञताप्रकटनम् ।

ईदृशस्यास्य दुर्लभस्य महानिबन्धस्य प्रकाशनाद्धर्माचार्याणां वर्णाश्रमधर्मिणाञ्च।महानुपकारो भविष्यतीति मनसि कृत्वा मुद्रणाय प्रार्थितश्चौखम्बासंस्कृतपुस्तकालयाध्यक्षः प्राचीनग्रन्थानां समुद्धरणे बद्धपरिकरः श्रेष्ठिकुलावतंसः श्रीजयकृष्णदासगुप्तमहोदयः स्वव्ययेनैनं महानिबन्धं स्वकीयविद्या-

विलासयन्त्रालये मुद्रितवानिति तस्मै सादरं कोटिशो धन्यवादान्प्रयुंज्महे ।

आदर्शपुस्तकत्रयमालम्ब्यैतस्य संस्करणं सम्पादितं बभूव । यत्रैकं श्रीमतां प्रातः स्मरणीयानां तातपादानां तर्कतीर्थोपाधिसमलङ्कृतानां बटुकनाथशास्त्रिणां नाथपुस्तकालयस्थं प्रायशः शुद्धं प्राचीनं च । द्वितीयं पुनः काण्वयजुःशाखीयानां काशीस्थकाशीनाथखोंडभट्टमहोदयानां प्रायशः प्रथमपुस्तकानुकारि नवीनलेखसंयुक्तम् । तृतीयन्तु श्री पं० दुर्गाशङ्कर लक्ष्मीशङ्करभट्ट ('भुज' कच्छनिवासि) महोदयद्वारा म०म० पं० नित्यानन्दपन्तपर्वतीयमहोदयैर्दत्तं तदेव प्रायशोऽशुद्धम् । आदर्शत्रिकेऽपि संस्कारान्तव्याख्यानस्योपाकर्मपद्धत्यन्तस्यैवोपलब्धेरेवास्माभिरस्य सूत्रव्याख्याननिबन्धस्य संस्कारगणपतिरित्येतन्नामान्वर्थमिति निर्धारितम् । प्रयोजनं चास्य पुरस्तात् प्रोक्तमेव ।

अतोऽन्ते पुस्तकप्रदानेनापूर्वसाहाय्यमाचरद्भ्यो बहुशो धन्यवादान् कृतज्ञतया वितीर्य मूलसंशोधनादिकर्मणि विशेषश्रमेण साहाय्यकं विदधतेऽस्मत्प्रियान्तेवासिने वाराणसेयगोयनकासंस्कृतमहाविद्यालयीयशुक्लयजुर्वेदाध्यापयित्रे घोडेकरोपाह्वमार्तण्डशास्त्रिणे शुभाशिषं प्रदाय च हंसक्षीरन्यायेन दोषदृष्टीरुज्झित्वा गुणैकपक्षपातिनां याज्ञिकानामनेन श्रमेण यदि उपकारलेशोऽपि भवेत्तदा कृतकृत्यो भवेयमित्याशासे । ग्रहमण्डलचक्रादिसंशोधनकर्मणि सामयिकमवलम्बं प्रयच्छतां दैवज्ञप्रवर पं० यागेश्वरपाठकानां चोपकृतीः कदापि न विस्मरिष्यामः । अत्र चाधुनिकैः प्रकाशितेषु पारस्करगृह्यसूत्रमूलपुस्तकेषु भाष्यकारैरव्याख्याताः प्राचीनतममूलपुस्तकेष्वनुपलब्धा अपि काश्चित्क्षेपककण्डिकाः परिशिष्टभूता मध्ये निवेश्य मुद्रिता उपयुक्ता अपि ग्रन्थकर्त्रा प्रकरणवशादापतिता व्याख्याताः काश्चित्परित्यक्ता अपि कियत्यः । अतो ग्रन्थकर्तृव्याख्यावशिष्टपारस्करगृह्यसूत्रमूलकण्डिका अव्याख्यातक्षेपकपरिशिष्टकण्डिकाश्च ग्रन्थान्ते संनिवेश्य समूलगृह्यसूत्रक्षेपकपरिशिष्टाध्येतॄणामपि हितं विहितमिति । एवं यथामति संस्कृतस्याप्यस्य निबन्धस्य विषयाणां सौकर्येण बोधार्थमखिलविषयाणां सूचीपत्रं प्रमाणग्रन्थानामकारादिक्रमेणानुक्रमणिका च निवेशिता । कृतेऽपि संस्करणश्रमेऽत्र दृष्टिदोषेणाज्ञानतो वा सीसकाक्षरयोजकदोषेण वा सुलभानि स्खलितानि क्षाम्यन्तु गुणैकपक्षपातिनो विद्वांसः, प्रीयताञ्चानेन व्यापारेण त्रिलोकीलोकमनोमन्दिरचरं श्रीकृष्णाख्यं मह इति प्रार्थयते—

| | |
|---|---|
| अगस्त्याश्रमः<br>दीपावली १९९५ | विदुषामनुविधेयः<br>**ढुण्ढिराजशास्त्री ।** |

अथ संस्कारगणपतिस्थविषयाणां —

# अनुक्रमणिका ।

श्रीगणेशाय नमः। श्रीसरस्वत्यै नमः। श्रीगुरुभ्यो नमः।

विद्वद्वररामकृष्णकृतः।

# संस्कारगणपतिः।

पारस्करगृह्यसूत्रविवरणरूपः।



वन्दे श्रीगणनायकं सुरगुरुं सर्वार्थसिद्धिप्रदं
भक्तानां सुखदायकं गजमुखं सिन्दूरशोभाकरम्।
ब्रह्माविष्णुशिवार्कमुख्यखचरान्श्रीशारदां शैलजां
लक्ष्मीं पद्मनिवासिनीं निजगुरून् कार्य्यस्य संसिद्धये॥ १॥
श्रीविन्ध्याचलदक्षिणे सुललिते देशे च पुण्यालये
चातुर्वर्ण्यसमाकुले बहुविधे नाम्ना मडूपत्तने।
तत्रासीन्निजवंशवर्द्धनकरः श्रीवासुदेवः सुधी-
दोर्दण्डप्रथितप्रतापविभवो भूमण्डलाखण्डलः॥ २॥
शत्रूणां ललनासहस्रनयनेष्वम्भःप्रवाहं दद-
ज्जातः श्रीपरतापसाहिनृपतिः श्रीवासुदेवात्मजः।
तेजस्वी च महायशा नृपगुणोदारो दयालुः प्रभु-
स्तत्पुत्रोऽपि महाशयः खलु महासिंहो नृपोऽभूत्ततः॥ ३॥
तदङ्गजो हिम्मतिसाहिनामा बभूव राजा रजनीशवक्त्रः।
गयन्दसिंहो नृपतिस्ततोऽभूत्तेजोयशोवीर्यबलान्वितश्च॥ ४॥
तस्यात्मजः सेङ्गरवंशवीरो धीरो धुरीणो धरणीधरश्च।
मान्यो वदान्यो गणकाग्रगण्यो धन्यो विपूर्वोजयसिंहदेवः॥५॥
संप्राप्तजीविकस्तस्मात्काश्याङ्कोनेरदेवविबुधः।
तत्सूनुरामकृष्णाख्यः सूत्रविवरणङ्कुरुते॥ ६॥

बालकानां सुबोधाय तोषाय विदुषामपि ।
आकल्पमपि संसारे कीर्त्त्यवस्थापनाय च ॥ ७ ॥
स्वाभिप्रायेण हि मया न किञ्चिदिह लिख्यते ।
किन्तु वाचनिकं सर्वमतो ग्राह्यं मनीषिभिः ॥ ८ ॥
आलोड्य सर्वशास्त्राणि मन्वादिभिः कृतानि च ।
परिशिष्टान्यनेकानि कात्यायनकृतानि च ॥ ९ ॥
कर्काचार्य्यकृतं भाष्यङ्गदाधरकृतन्तथा ।
भाष्यं हरिहरस्यैव त्वन्यानि च बहूनि च ॥ १० ॥
सारमेव समुद्धृत्य स्मृतीनां वचनं तथा ।
सिद्धान्तानि समूलानि विचार्य्य लिख्यते मया ॥ ११ ॥
शब्दतश्चार्थतश्चेह पौनरुक्तिर्न दुष्यति ।
स्फुटबोधाय बालानां ग्रन्थोऽयं रच्यते यतः ॥ १२ ॥

इह खलु सकलमुनिगणवरिष्ठचक्रचूडामणिः श्रीभगवान् पारस्करा-ऽऽचार्यः परमकारुणिको निर्विघ्नेन ग्रन्थसमाप्त्यर्थमध्येतृणाञ्च शुभार्थं शिष्टाचाररक्षणार्थं ग्रन्थादौ मङ्गलाचरणमातनोति—

**मू० अथातो गृह्यस्थालीपाकानां कर्म ॥१॥ परिसमुह्योपलिप्योल्लिख्योद्धृत्याभ्युक्ष्याग्निमुपसमाधाय दक्षिणतो ब्रह्मासनमास्तीर्य प्रणीय परिस्तीर्यार्थवदासाद्य पवित्रे कृत्वा प्रोक्षणीः संस्कृत्यार्थवत्प्रोक्ष्य निरुप्याज्यमधिश्रित्य पर्यग्निकुर्यात् ॥२॥ स्रुवं प्रतप्य संमृज्याभ्युक्ष्य पुनः प्रतप्य निदध्यात् ॥ ३ ॥ आज्यमुद्वास्योत्पूयावेक्ष्य प्रोक्षणीश्च पूर्ववदुपयमनान्कुशानादाय समिधोऽभ्याधाय पर्युक्ष्य जुहुयात् ॥ ४ ॥ एष एव विधिर्यत्र क्वचिद्धोमः ॥ ५॥१॥**

अथेति । ग्रन्थादौ ग्रन्थमध्ये ग्रन्थान्ते मङ्गलमाचरणीयमिति शिष्टाचारः । वेदप्रामाण्याभ्युपगन्तारः शिष्टाः । मङ्गलं त्रिविधम् आशीर्नमस्क्रियावस्तूपानिर्देशलक्षणम् । अत्राथशब्दो मङ्गलवाची । तदुक्तं प्राति-

शाख्यभाष्ये—

ॐकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा ।

(१)गण्डौ भित्वा विनिष्क्रान्तौ तेन माङ्गलिकावुभौ ॥ इति ।

यथा 'वृद्धिरादैच्' इत्यत्र वृद्धिशब्दमादौ प्रयुङ्क्तवान्पाणिनिस्तथेहापि ग्रन्थादावथशब्दप्रयोगः । ननु सम्बन्धादिचतुष्टयकथनं विना शास्त्रारम्भवैयर्थ्यप्रसङ्गः स्यात्, उक्तञ्च—

सिद्धिः श्रोतृप्रवृत्तीनां सम्बन्धकथनाद्यतः ।

तस्मात्सर्वेषु शास्त्रेषु सम्बन्धः पूर्वमुच्यते ॥ इति ।

अत्र सम्बन्धस्त्वाब्रह्मादिविनिःसृतं वेदाङ्गमिति । तथाच नारदः—

अस्य शास्त्रस्य सम्बन्धो वेदाङ्गमिति धातृतः ॥ इति ।

तत्र वेदपुरुषस्य कान्यङ्गानि तान्याह वसिष्ठः—

छन्दः पादौ शब्दशास्त्रञ्च वक्त्र-

ङ्कल्पः पाणी ज्योतिषञ्चक्षुषी च ॥

शिक्षा घ्राणं श्रोत्रमुक्तन्निरुक्तं

वेदस्याङ्गान्याहुरेतानि षट्च ॥ इति ॥

तथाच मूलागमे—

शिक्षा घ्राणन्तु वेदस्य मुखं व्याकरणं स्मृतम् ।

ज्योतिषामयनञ्चक्षुर्निरुक्तं श्रोत्रमुच्यते ॥

छन्दः पादौ तु वेदस्य हस्तौ (२)कल्पान्प्रचक्षते ॥ इति ।

प्रतिपदम्[१] अनुपदं[२] छन्दोभाषा[३] धर्मो[४] मीमांसा[५] न्यायस्तर्क[६] इत्युपाङ्गानि । ननु हस्तौ कल्पान्प्रचक्षत इत्यनेन श्रौतस्यैव वेदाङ्गत्वमायाति नतु स्मार्त्तानाम् तस्य श्रुतिमूलकत्वात् । प्रत्यक्षा हि श्रुतयः, श्रौतेषु वेदत्रयीसाध्यं ज्योतिष्टोमादिकर्मानुष्ठानं हौत्रमार्ग्वेदिकम् याजुर्वेदिकमाध्वर्य्यवम् सामवेदिकमुद्गातृत्वमिति । न हि ज्ञायतेऽमुकवेदोक्तं स्मार्त्तमिति । अविज्ञातं स्मार्त्तम्, यत्र ज्ञायते किमार्ग्वेदिकम् किं याजुर्वेदिकम् किं वा सा-

(१)कण्ठं भित्त्वेति पाठान्तरम् ।

(२) कल्पोऽथ पठ्यत इति पाठान्तरम् ।

मवेदिकमिति तस्माच्छ्रौतस्यैव वेदाङ्गत्वमिति चेन्न । स्मार्त्तानामपि वेदमूलकत्वमुक्तं भाट्टैः । **स्मार्त्तेषु पुनः कर्तृसामान्यादनुमेयाः श्रुतयः ।** तथाचापस्तम्बः । **'तासामुच्छिन्नाः पाठाः प्रयोगादनुमीयन्ते । अतः स्मार्त्तस्यापि वेदमूलकत्वम् वेदमूलकत्वाद्वेदाङ्गत्वमिति विशेषणेनावश्याध्ययनता प्रतीयते, यतः 'साङ्गो वेदोऽध्येतव्यो ज्ञेयश्चेति'** । श्रुतिरपि—

"ब्राह्मणेन निष्कारणः षडङ्गो वेदोऽध्येयो ज्ञेयश्चेति" ।

ब्राह्मण इति त्रैवर्णिकोपलक्षणार्थम् । निष्कारण इत्यनेन प्रयोजनजिज्ञासां विनैवाध्येतव्यमित्युक्तम्भवति ।

अथ वेदप्रशंसा । तत्र मनुः—

चातुर्वर्ण्यं त्रयो लोकाश्चत्वारश्चाश्रमाः पृथक् ।
भूतं भव्यं भविष्यञ्च सर्वं वेदात्प्रसिद्ध्यति ॥ १ ॥

याज्ञवल्क्योऽपि—

यज्ञानां तपसाञ्चैव शुभानाञ्चैव कर्मणाम् ।
वेद एव द्विजातीनां निःश्रेयसकरः परः ॥ २ ॥

मनुः—

वेदमेव सदाऽभ्यस्येत्तपस्तप्यन्द्विजोत्तमः ।
वेदाभ्यासो हि विप्रस्य तपः परमिहोच्यते ॥ ३ ॥
ऋषिदेवमनुष्याणां वेदश्चक्षुः सनातनः इति ॥

स्मृतिसारसमुच्चयेऽपि—

वेदो यस्य शरीरस्थो न स पापेन लिप्यते ।
वेदात्मा स तु विज्ञेयः शरीरं किं प्रयोजनम् ॥ ४ ॥

ऋग्विधाने—

वेदाक्षराणि यावन्ति पठितानि द्विजातिभिः ।
तावन्ति हरिनामानि कीर्त्तितानि न संशयः ॥ ५ ॥
वेदः शिवः शिवो वेदो वेदाभ्यासी सदाशिवः ।
पाषाणः शिवतां याति कथं विप्रः शिवं न हि ॥ ६ ॥
संहिता नयते सूर्य्यं पदानि शशिनः पदम् ।

क्रमोऽपि नयते सूक्ष्मं य(१)त्तत्पदमनामयम् ॥ ७ ॥

वेदोऽत्रैका शाखा न शाखासमूहः । तथा च देवलः—

एकशाखां सकल्पाश्च षड्भिरङ्गैरधीत्य च । इति ।

यत्तु—

तपोविशेषैर्विविधैर्व्रतैश्च विधिनोदितैः ।
वेदः कृत्स्नोऽधिगन्तव्यस्सरहस्यो द्विजन्मना ॥

इति मनुना कृत्स्न इति वेदविशेषणमुपात्तन्तदपि वेदशब्दस्य शाखापरत्वेन तस्याश्च कृत्स्नत्वमभिधत्ते नैकवेद(२)मनेकशाखासमूहमिति न विरोधः ।

अथ वेदार्थज्ञानफलम् । तत्र मनुः —

वेदशास्त्रार्थतत्त्वज्ञो यत्र यत्राश्रमे वसेत् ।
इहैव लोके तिष्ठन्स ब्रह्मभूयाय कल्पते ॥ १ ॥

हारीतोऽपि—

मन्त्रार्थज्ञो जपञ्जुह्वँस्तथैवाध्यापयन् द्विजः ।
स्वर्गलोकमवाप्नोति नरकन्तु विपर्य्यये ॥ २ ॥

निरुक्तमपि—

"योऽर्थज्ञ इत्सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा"इति ।

वीरमित्रोदये—

वेदस्याध्ययने सर्वं धर्मशास्त्रस्य चैव हि ।
अजानतोऽर्थन्तद्व्यर्थन्तुषाणां कुट्टनं(३) यथा ॥ ३ ॥
पाठमात्ररतान्नित्यं द्विजाँश्चार्थविवर्जितान् ।
पशूनिव च तान्प्राज्ञो वाङ्मात्रेणापि नार्चयेत् ॥ ४ ॥
योऽधीत्य विधिवद्वेदं वेदार्थं न विचारयेत् ।
स सान्वयः शूद्रसमः पात्रतां न प्रपद्यते ॥ ५ ॥

---

(१) सूक्ष्ममेतदिति पाठान्तरम् । (२) नैकवेदीमिति पाठान्तरम् ।
(३) कंडनमिति पाठान्तरम् ।

लघुव्यासः—

नो वेदपाठमात्रेण सन्तोषङ्कारयेद्विजः ।
पाठमात्रावसानस्तु पङ्के गौरिव सीदति ॥ ६ ॥
यथा पशुर्भारवाही न तस्य लभते फलम् ।
द्विजस्तथाऽर्थानभिज्ञो न वेदफलमश्नुते ॥ ८ ॥

पराशरः--

ज्ञातव्यः सर्वदैवार्थो वेदानां कर्मसिद्धये ।
पाठमात्रमधीते यः पङ्के गौरिव सीदति ॥ ८ ॥

वेदमनधीयमानस्य च प्रत्यवायवाक्यानि पुराणस्मृतिषु प्रसिद्धान्येव,

स्कन्दपुराणे—

वेदविद्याविहीनस्य शास्त्रजालं निरर्थकम् ।
कण्ठसूत्रविहीनायाः कामिन्या इव भूषणम् ॥ १ ॥

नारदीयपुराणे—

योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम् ।
सजीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ॥ २ ॥

व्यासः—

वेदाभ्यासविहीनस्य शास्त्राभ्यासरतस्य च ।
न तस्य वचनं ग्राह्यं श्वानोच्छिष्टं हविर्यथा ॥ ३ ॥

स्मृतिसारसमुच्चयेऽपि —

यस्य वेदश्च वेदी च विच्छिद्येते त्रिपूरुषम् ।
स वै दुर्ब्राह्मणो नाम सर्वकर्मबहिष्कृतः ॥ ४ ॥

विधानपरिजातके--

नित्यं नैमित्तिकं काम्यं यच्चान्यत्कर्म वैदिकम् ।
अनधीतस्य विप्रस्य सर्वं भवति निष्फलम् ॥ ५ ॥

व्यासः--

तथा वेदविहीनस्य क्रियाः सर्वास्तु निष्फलाः ।

तथा--

नाधीतवेदो यो विप्र आचारेषु प्रवर्त्तते ।
नाचारफलमाप्नोति यथा शूद्रस्तथैव सः ॥ ६ ॥
अनधीतस्य विप्रस्य पुत्रो वाऽध्ययनान्वितः ।
शूद्रपुत्रः स विज्ञेयो न वेदफलमश्नुते ॥ ७ ॥

महाभारतेऽपि--

वेदविक्रयिणश्चैव वेदानाञ्चैव लेखकाः ।
वेदानान्दूषकाश्चैव ते वै निरयगामिनः ॥ ८ ॥

अथाभिधेयं निरूप्यते। अभिधेयशब्देन विषयः स, च यदि नोच्यते तदा ग्रन्थकरणं वृथैव । उक्तञ्च--

किमेवात्राभिधेयं स्यादिति पृष्टस्तु केन चित् ।
यदि न प्रोच्यते तस्मै फलशून्यन्तु तद्भवेत् ॥ इति ॥१॥

अत्र सँस्कारा अभिधेयाः । ते च द्विविधाः—ब्राह्मा दैवाश्च

तथा च हारीतः—

"द्विविधो हि सँस्कारो भवति ब्राह्मो दैवश्चेति" ।

तत्र ब्राह्मया गर्भाधानाद्याः । तथा च हारीतः--

गर्भाधानादिः स्मार्त्तो ब्राह्मः स्नानान्त इति ।

ते च पञ्चविंशतिः । तदुक्तम् वीरमित्रोदये--

गर्भाधानं पुंसवनं सीमन्तो बलिरेव च ।
जातकृत्यं नामकर्म निष्क्रमोऽन्नाशनं परम् ॥ १ ॥
चौलकर्मोपनयनं तद्व्रतानाञ्चतुष्टयम् ।
स्नानोद्वाहौ चाग्रयणमष्टका च यथा तथा ॥ २ ॥
श्रावण्यामाश्वयुज्याञ्च मार्गशीर्ष्याञ्च पार्वणम् ।
उत्सर्गश्चाप्युपाकर्म महायज्ञाश्च नित्यशः ॥ ३ ॥
सँस्कारा नियता ह्येते ब्राह्मणस्य विशेषतः ॥ इति ।

बलिर्विष्णुबलिः । तद्व्रतानां वेदव्रतानां चतुष्टयम् । महानाम्नि(१)

(१) महानाम्न्यादिव्रतविशेषे इत्यर्थः ।

महाव्रतम् । उपनिषद्व्रोदानानि । स्नानं समावर्त्तनम् । आग्रयणं नवान्नेष्टिः । अष्टका हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणामष्टमीषु विहितानि श्राद्धानि । श्रावण्याङ्क्रियमाणं श्रवणाकर्म । एवमाश्वयुज्यामाश्वयुजी कर्म । मार्गशीर्ष्यां स्रस्तरारोहणङ्कर्म । पार्वणम्पर्वण्यमावास्यायां क्रियमाणम्पार्वणश्राद्धम् । उत्सर्गो वेदानामुत्सर्जनमिति । पाकयज्ञाद्या दैवाः । तथा च हारीतः—

पाकयज्ञा हविर्यज्ञाः सौम्याश्च दैवाः इति ।

सौम्याः सोमयागाः अग्निष्टोमादयः । व्यासेन तु षोडशैव संस्कारा उक्ताः—

गर्भाधानं १ पुंसवनं २ सीमन्तो ३ जातकर्म ४ च ।
नामक्रिया ५ निष्क्रमो ६ऽन्नप्राशनं ७ वपनक्रिया ८ ॥ १ ॥
कर्णवेधो ९ व्रतादेशो १० वेदारम्भक्रियाविधिः ११ ।
केशान्तः १२ स्नान १३ मुद्वाहो १४ विवाहो १५ ऽग्निपरिग्रहः ॥ २ ॥
त्रेताग्निसङ्ग्रहश्चैव १६ संस्काराः षोडश स्मृताः ।
नवैताः कर्णवेधान्ता मन्त्रवर्ज्यं क्रियाविधौ ॥ ३ ॥
विवाहो मन्त्रवत्तस्याः शूद्रस्यामन्त्रतो दश ।

गृह्यकारिकायाञ्च—

त्रयोदशानामाद्यानामधिकारी पिता भवेत् ।
इतरेषां त्रयाणां स्यादधिकारी स्वयं सुतः ॥

प्रयोजनन्निरूप्यते । उक्तञ्च—

सर्वस्यैव हि शास्त्रस्य कर्मणो वाऽपि कस्य चित् ।
यावत्प्रयोजनं (१)नास्ति तावत्केन न गृह्यते ॥

प्रयोजनन्तु गर्भाधानादिसंस्कारैः शरीरपावनता सायुज्यता च स्यात् । तथा हि वीरमित्रोदये—

पञ्चविंशतिसंस्कारैः संस्कृता ये द्विजातयः ।

(१) नोक्तमिति पाठान्तरम् ।

ते पवित्राश्च योग्याश्च श्राद्धादिषु नियोजिताः ॥

अन्यच्च शङ्खः——

वैदिकैः कर्मभिः पुण्यैर्निषेकाद्यैर्द्विजन्मनाम् ।
कार्यः शरीरसंस्कारः पावनः प्रेत्य चेह च ॥
संस्कारैः संस्कृतः पूर्वैरुत्तरैरनुसंस्कृतः ।
नित्यमष्टगुणैर्युक्तो ब्राह्मणो ब्रह्मलौकिकः ॥
ब्राह्मं पदमवाप्नोति यस्मान्न च्यवते पुनः ।

हारीतोऽपि——

ब्राह्मसंस्कारसंस्कृत ऋषीणां समानतां गच्छति ।
दैवेनोत्तरसंस्कारेण संस्कृतो देवानां समतां गच्छति ॥

मनुरपि——

स्वाध्यायेन व्रतैर्होमैस्त्रैविध्येनेज्यया सुतैः ।
महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः ॥

यद्यपि सर्वशाखाप्रतिपादितमेकं कर्म तथापि स्वस्वशाखाविहितङ्कुर्य्यात् । तथा चाङ्गिराः——

स्वे स्वे गृह्ये यथा प्रोक्तास्तथा संस्कृतयोऽखिलाः ।
कर्त्तव्या भूतिकामेन नान्यथा भूतिमृच्छति ॥

गृह्यकारिकायामपि——

पारम्पर्यगतो येषां वेदः सपरिबृंहणः ।
तच्छाखं कर्म कर्त्तव्यन्तच्छाखाध्ययनन्तथा ॥
अधीत्य शाखामात्मीयाम्परशाखान्ततः पठेत् ।
स्वशाखान्तु परित्यज्य शाखारण्डः स उच्यते ॥

परिबृंहणान्यङ्गानि यस्य, या पित्रादिक्रमगता शाखा तच्छाखीयेन कर्मणा संस्कृतः प्रथमन्तां शाखामधीयीत इत्यर्थः ।

तथा च वीरमित्रोदये वासिष्ठः——

यच्छाखीयैस्तु संस्कारैः संस्कृतो ब्राह्मणो भवेत् ।
तच्छाखाध्ययनङ्कार्यमन्यथा पतितो भवेत् ॥

शाखान्तरीयकर्मकरणे दोषमाह वसिष्ठः—

न जातु परशाखोक्तं बुधः कर्म समाचरेत् ।
आचरन्परशाखोक्तं शाखारण्डः स उच्यते ।
यः स्वशाखोक्तमुत्सृज्य परशाखोक्तमाचरेत् ।
अप्रमाणमृषिङ्कृत्वा सोऽन्धे तमसि मज्जति ॥

स्मृत्यन्तरेऽपि—

स्वकर्मपारमुत्सृज्य यदन्यत्कुरुते नरः ।
अज्ञानादथ वा लोभात्स हतः पतितो भवेत् ॥

छन्दोगपरिशिष्टेऽपि—

स्वशाखाश्रयमुत्सृज्य परशाखाश्रयन्तु यः ।
कर्त्तुमिच्छति दुर्मेधा मोघं तस्य च यत्कृतम् ॥

कात्यायनोऽपि—

बह्वल्पं वा स्वगृह्योक्तं यस्य यावत्प्रकीर्त्तितम् ।
तस्य तावति शास्त्रार्थे कृते सर्वः कृतो भवेत् ॥

स्वशाखानुक्तमप्यविरुद्धं परशाखोक्तं ग्राह्यम् । तथा च कात्यायनः —

यन्नाम्नातं स्वशाखायां परोक्तमविरोधि च ।
विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकर्मवत् ॥ इति ॥

सूत्रान्तरानुक्तमपि स्मृत्युक्तङ्ग्राह्यम् ।

तत्रादौ स्मृतिकर्तार उच्यन्ते—

मन्वत्रिविष्णुहारीतयाज्ञवल्क्योशनोऽङ्गिराः ।
यमापस्तम्बसंवर्त्ताः कात्यायनबृहस्पती ॥
पराशरव्यासशङ्खलिखिता दक्षगौतमौ ।
शातातपो वसिष्ठश्च धर्मशास्त्रप्रवर्त्तकाः ॥

बुधदेवलसोमाग्निप्रजापतिविश्वामित्रपैठीनसिपितामहबौधायनछागलेयजाबालिच्यवनमरीचिशाट्यायनकाश्यपप्रचेतःसुमन्तुजातूकर्ण्यनारदाः । चकारादेतेषां ग्रहणम् । केवलसूत्रोक्तकर्मकरणे दोषमाह पाकयज्ञप्रदीपे

देवीपुराणे वचनम्--

अन्यथा ये प्रकुर्वन्ति सूत्रमाश्रित्य केवलम्।
निराशास्तस्य गच्छन्ति सर्वे देवा न संशयः॥

अथ पौरुषा आचार्याः कथ्यन्ते। कर्काचार्यवासुदेवहारिहरामिश्र-रेणुदीक्षितपरशुरामढौंढुमिश्रवैजनाथमिश्रगंगाधरभर्तृयज्ञश्रीअनंतदेवयाज्ञिक-मुरारिमिश्रगदाधरदीक्षितगर्गोपाध्यायजयरामादयो बहवः सन्ति। तन्मध्ये कर्काचार्यहारिहरवासुदेवदेवयाज्ञिकरेणुदीक्षितानां मतं मुनिमतमिव शिष्टैराद्रियते। अत एवास्माभिर्मूलभूतं यत्र मुनिवाक्यं लभ्यते तत्र तदेव लिखितम्। यत्र पुनर्मूलभूतं मुनिवाक्यं न लभ्यते तत्रैतानि कर्कादिवाक्यान्येव शिष्टसंमतत्वाल्लिख्यन्ते, मुनिवाक्येभ्य उत्पन्नत्वात्। उक्तञ्च—

आर्षेयं पौरुषं वाऽपि शास्त्रं द्राक् सिद्धिमाश्रयेत्।
यथोत्तमाज्जघन्याद्वा प्राप्तं रत्नं हि तद्भवेत्॥ इति।

समयभेदेन बहून्यपि शास्त्राण्युच्छिन्नानि भविष्यन्ति, विशेषतो विन्ध्योत्तरभागे, तथाच जगन्मोहने—

शते न्यूने सहस्राणां चतुष्कन्तु कलौ युगे।
विन्ध्यस्योत्तरभागे स्यान्मूलागमपरिक्षयः॥

कलियुगस्यैकशतोनितानि चतुःसहस्रमितानि ३९०० वर्षाणि यदा व्यतीतानि भविष्यन्ति तदा विन्ध्योत्तरे मूलागमाभावः, किन्तु पौरुषा एव ग्रन्थाः प्रवर्तिष्यन्ते। तथा च व्यासः—

सम्प्राप्ते तु कलौ काले विन्ध्याद्रेरुत्तरे स्थिताः।
ब्राह्मणा यज्ञरहिता ज्योतिःशास्त्रपराङ्मुखाः॥

धर्मशास्त्रे—

विन्ध्यस्य दक्षिणे भागे यत्र गोदावरी स्थिता।
तत्र वेदाश्च यज्ञाश्च भविष्यन्ति कलौ युगे॥

तथैवात्रिः—

विन्ध्यस्योत्तरभागे तु सम्प्राप्ते तु कलौ युगे।
सिद्धान्तानां परिज्ञानं न कस्यापि भविष्यति॥

चतुःशतीं सप्तशतीं श्रीगीतास्तुतिमेव च ।
वेदत्वेन ग्रहीष्यन्ति स्मार्त्तकर्मविवर्जिताः ॥

अथ चतुर्णां वेदानां पृथक् पृथक् किञ्चिच्छाखाभेद उच्यते । यथा अत्र किलाविच्छिन्नपारम्पर्येणेयं कथा स्मर्यते । मेरुपृष्ठे सकलेषु मुनिगणेषु निविष्टेषु श्रेष्ठः कश्चिन्मुनिस्तान् प्रत्यगमत् । ततस्तं मुनिशार्दूलमालोक्यासनपाद्यादिपूजाविधिं विधायेदमूचुः । तदुक्तम्—

मेरुपृष्ठे सुखासीनाः सकला ऋषयः पुरा ।
तदन्तरे समायातो मुनिः कश्चिद्द्विजोत्तमः ॥
कुतो ह्यागमनं स्वामिंस्तमूचुः श्रूयतां द्विजाः ! ।
रुद्रलोकात्समायातं का कथा तत्र वर्त्तते ॥
श्रीरुद्रेणैव महता स्कन्दाय प्रतिबोधितम् ।
शाखाभेदं मया तस्मात्तद्विज्ञातं महर्षयः ॥
स्वामिन्नः कथयस्वेति शृणुध्वं स्वस्थमानसाः ॥ इति ।

ततस्तेन श्रीरुद्रस्कन्दसंवादो मुनीन् प्रत्याह । शिव उवाच--

कदाचिद्विश्वकर्त्ताऽसौ तपसि स्कन्द ! संस्थितः ।
ध्यानस्थितं निरीक्ष्यैनं शङ्खो दुष्टमनाः खलः ॥
जहार वेदशास्त्राणि पुराणानि च षण्मुख ! ।
प्रविवेश समुद्रं स ब्रह्मणा नेक्षितस्तदा ॥
गतेषु वेदशास्त्रेषु पुराणेषु गतेष्वपि ।
श्रौतस्मार्त्तक्रियाः सर्वा आसँल्लुप्ता जगत्त्रये ॥
त्यक्त्वा ध्यानं पुरो नैक्षत्पुस्तकानि प्रजापतिः ।
शङ्खस्य चरितं बुध्वा ययौ विष्णुं निवेदितुम् ॥
क्षीराब्धौ शयितं ज्ञात्वा विष्णुं ब्रह्मा शिवं ययौ ।
सुखासीनं शिवं दृष्ट्वा प्रणम्य कमलासनः ॥
उवाच दीनवचनं लोकानां हितकाम्यया ।

**ब्रह्मोवाच**

शङ्खेन वेदशास्त्राणि पुराणानि च शङ्कर ! ॥

नीतानि ध्यायतो मोहात्तथायं मम जगत्पते ! ।
मम चैवाथ देवानामृषीणां कर्मलोपनम् ॥
श्रौतस्मार्त्तक्रियागुप्तिः कृता दुःखस्य कारणम् ।
उपायं वद मे किञ्चिच्छ्रौतस्मार्त्तक्रियावहम् ॥

शिव उवाच

ब्रह्माणमवदच्छम्भुः श्रुत्वा तद्वचनं पुरा ।
ब्रह्मन्! शङ्खं स निद्रान्ते विष्वक्सेनो हनिष्यति ॥

तदनन्तरं कतिपयदिनैः श्रीकृष्णः शङ्खासुरं हत्वा वेदानानयि ब्रह्मणे ददौ । वराहपुराणे—

दैत्यं विदार्य तान्वेदान् ब्रह्मणे स ददौ हरिः । इति ।

ब्रह्मणः सकाशात्परम्परया पृथिव्यां प्राप्तः स तु केनापि ज्ञातुमशक्यो गाथारूपत्वात् । तत्पृथक्करणार्थं भगवान्परमकृपाविष्टः सन् व्यासावतारङ्गृहीतवान् । उक्तञ्च—

मत्स्यः १ कूर्मो २ वराहो ३ नृहरि ४ लघुतनू ५ भार्गवो ६ रामचन्द्रः ७ कृष्णो ८ बौद्धो ९ ऽथ कल्की १० कपिल ११ हयमुखौ १२ नारदो १३ हंस १४ यज्ञौ १५॥ दत्तात्रेयो १६ विराण्नऽ १७ ऋषभ १८ मुनिचयौ २० व्यास २१ वेन्यौ २२ ध्रुवश्च २३ स्वायम्भूः २४ पापशान्त्यै युगपतिगदिता विष्णुतत्त्वावताराः ॥ १ ॥

उक्तञ्च द्वादशस्कन्धे—

अस्मिन्मन्वन्तरे ब्रह्मन्भगवाँल्लोकभावनः ।
ब्रह्मेशाद्यैर्लोकपालैर्याचितो धर्मगुप्तये ॥
पराशरात्सत्यवत्यामंशांशकलया विभुः ।
अवतीर्णो महाभाग ! वेदश्चक्रे चतुर्विधम् ॥
ऋगथर्वयजुःसाम्नां राशिमुद्धृत्य सर्वशः ।
चतस्रः संहिताश्चक्रे सूत्रैर्मणिगणा इव ॥

तासां स चतुरः शिष्यानुपहूय महामतिः ।
एकैकां संहितां ब्रह्मन्नेकैकस्मै ददौ विभुः ॥
पैलाय संहितामाद्यां बह्वृचाख्यामुवाच ह ।
वैशंपायनशिष्याय निगदाख्यं यजुर्गणम् ॥
साम्नां जैमिनये प्राह तथा च्छन्दोगसंहिताम् ।
अथर्वाऽङ्गिरसे प्राह स्वशिष्याय सुमन्तवे ॥
तैश्च शिष्यप्रशिष्यादिद्वारा शाखाः प्रवर्तिताः । इति ।

तत्र ऋग्वेदस्य पञ्चशाखा भवन्ति—आश्वलायनाः १ सांख्यायनाः २ शाकलाः ३ बाष्कलाः ४ माण्डुकाश्चेति ५ । तेषामध्ययनम्—

अध्यायाश्च चतुःषष्टिर्मण्डलानि दशैव तु ।
वर्गाणाम्परिसंख्यातं द्वे सहस्रे षडुत्तरे ।
सहस्रमेकं सूक्तानां निर्विशङ्कं विकल्पितम् ॥ इति ।

अथ यजुर्वेदस्य शाखाभेदो विधीयते । स द्विविधः कृष्णः शुक्लश्च । तत्र तैत्तिरीयादिभिः पठ्यमानो यजुर्वेदः कृष्णः, तदुक्तं वेदभाष्ये सायनाचार्यैः श्रीपादैः—

कृपालुः सायनाचार्यो वेदार्थं व्याकरोत् खलु ।
ऋग्यजुःसामवेदा ये ख्यातास्तेषु च यद्यजुः ॥
कृष्णं शुक्लमिति द्वेधा तत्कृष्णं तैत्तिरीयकम् ॥ इति ।

प्रसङ्गतोऽत्र तैत्तिरीयशाखोत्पत्तिप्रकारमाह विष्णुपुराणे तृतीयेंऽशे, पराशर उवाच—

यजुर्वेदतरोः शाखा आसन्नेकोत्तरं शतम् ॥
एकोनषष्ठिशाखाश्च कठादय उदीरिताः ॥
सप्तविंशतिशाखाश्च ततः कृष्णाह्वयाः स्मृताः ।
वैशंपायननामाऽसौ व्यासशिष्यश्चकार सः ॥
शिष्येभ्यः प्रददौ ताश्च जगृहुस्तेऽप्यनुक्रमात् ।

भाविवृत्तान्तमाज्ञाय व्यासः सत्यवतीसुतः ॥
दशपञ्चाथ याः शाखाः सूर्य्यायोपदिदेश ह ।
वैशम्पायनशिष्यस्तु याज्ञवल्क्यः प्रकृष्टधीः ॥
ब्रह्मरातसुतो ब्रह्मन्! गुरुवृत्तिरतोऽभवत् ।
ऋषीणां यो महामेरौ समाजे नागमिष्यति ॥
तस्य वै सप्तरात्रात्तु ब्रह्महत्या भविष्यति ।
पूर्वमेवं मुनिगणैः समयोऽभूत्कृतो द्विजैः ॥
वैशंपायन एकस्तु तं व्यतिक्रान्तवाँस्तदा ।
स्वस्रीयं बालकं सोऽथ पदात्यर्थमघातयत् ॥
शिष्यानाह च भोः शिष्याः! ब्रह्महत्यापहं व्रतम् ।
चरध्वं मत्कृते सर्वे न विचार्य्यमिदं तथा ॥
अथाह याज्ञवल्क्यस्तु किमेभिर्भगवन्! द्विजैः ।
क्लेशितैरल्पतेजोभिश्चरिष्येऽहमिदं व्रतम् ॥
ततः क्रुद्धो गुरुः प्राह याज्ञवल्क्यं महामतिम् ।
मुच्यतां यत्त्वयाऽधीतं मत्तो विप्रावमन्यक! ॥
निस्तेजसो वदस्येतान् यस्त्वं ब्राह्मणपुङ्गवान् ।
तेन शिष्येण नार्थोऽस्ति ममाज्ञाभङ्गकारिणा ॥
याज्ञवल्क्यस्ततः प्राह भक्त्यैतत्ते मयोदितम् ।
ममाप्यलं त्वयाऽधीतं जन्म यातमिदं द्विज! ॥

पराशर उवाच—

इत्युक्त्वा रुधिराक्तानि सरूपाणि यजूंषि सः ।
छर्दयित्वा ददौ तस्मै प्रययौ स्वेच्छया मुनिः ।
यजूंष्यथ विसृष्टानि याज्ञवल्क्येन वै द्विजाः ।
जगृहुस्तित्तिरीभूत्वा तैत्तिरीयास्तु ते ततः ॥
ब्रह्महत्याव्रतं चीर्णं गुरुणाऽऽदेशितैस्तु यैः ।
चरकाध्वर्यवस्ते तु चरणान्मुनिसत्तम! ॥
व्यवस्थितप्रकरणं यजुः कृष्णमितीर्यते । इति ॥

अथास्य षडशीतिर्भेदा भवन्ति। तत्र चरका नाम द्वादशभेदा भवन्ति। चरकाः १ आह्वरकाः २ कठाः ३ प्राच्यकठाः ४ कपिष्ठकठाः ५ चारायणीयाः ६ वार्त्तान्तवेयाः ७ श्वेताः ८ श्वेततराः ९ औपमन्यवः १० पान्ताजिनीयाः ११ मैत्रायणीया १२ श्चेति। तत्र मैत्रायणीया नाम सप्तभेदा भवन्ति। मानवाः १ दुन्दुभाः २ चैकेयाः ३ वाराहाः ४ हारिद्रवेयाः ५ श्यामाः ६ श्यामायणीयाश्चेति ९। तैत्तिरीयानामपि द्विभेदा भवन्ति। औख्यायाः १ खण्डिकेयाश्च २ इति। खाण्डिकेया नाम पञ्च भेदा भवन्ति। आपस्तम्बी १ बौधायनी २ सत्याशाढी ३ हिरण्यकेशी ४ औधेयाश्च ५ इति। तेषामध्ययनं अष्टशतं यजुःसहस्राण्यधीत्य शाखापारो भवति। तान्येव द्विगुणान्यधीत्य पदपारो भवति। तान्येव त्रिगुणान्यधीत्य क्रमपारो भवति। तेषां मध्ये कतिपयभेदा उच्छिन्ना जाताः। वमनानन्तरं याज्ञवल्क्यः किङ्कृतवानित्याह, विष्णुपुराणे तृतीयेऽशे पञ्चमाध्याये—

याज्ञवल्क्योऽथ मैत्रेयः प्राणायामपरायणः।
तुष्टाव प्रयतः सूर्यं यजूंष्यभिलषंस्तथा॥

याज्ञवल्क्य उवाच—

नमः सवित्रे द्वाराय विमुक्तेस्तिग्मतेजसे।
ऋग्यजुःसामभूताय त्रयीधाम्ने च ते नमः।
नमोऽग्निसोमभूताय जगतः कारणात्मने।
भास्कराय परं तेजः सौषुम्णमुरु बिभ्रते॥
कलाकाष्ठानिमेषादिकालज्ञानात्मने नमः।
ध्येयाय विष्णुरूपाय परमाक्षररूपिणे॥

बिभर्ति यः सुरगणानाप्यायेन्दुः स्वरश्मिभिः।
स्वधामृतेन च पितॄंस्तस्मै तृष्णात्मने नमः॥
हिमाम्बुघर्मवृष्टीनां कर्त्ता हर्त्ता च यः प्रभुः।
तस्मै त्रिकालरूपाय नमः सूर्य्याय वेधसे॥
अवहंति तमो यस्य जगतोऽस्य जगत्पतिः।

सत्त्वधामधरो देवो नमस्तस्मै विवस्वते ॥
सत्कर्मयोग्यो न जनो नैवापः शौचकारणम् ।
यस्मिन्ननुदिते तस्मै नमो देवाय भास्वते ॥
स्पृष्टो यदंशुभिर्लोकः क्रियायोग्योऽभिजायते ।
पवित्रकारिणे तुभ्यं नमः शुद्धात्मने नमः ॥
नमः सवित्रे सूर्य्याय भास्कराय विवस्वते ।
आदित्यायादिभूताय देवादीनां नमो नमः ॥
हिरण्मयं रथं यस्य केतवोऽमृतवाजिनः ।
वहन्ति भुवनं लोकचक्षुषं त्वां नमाम्यहम् ॥

श्रीपराशर उवाच—

इत्येवमादिभिस्तेन स्तूयमानः स वै रविः ।
वाजिरूपधरः प्राह व्रियतामिति वाञ्छितम् ॥
याज्ञवल्क्यस्ततः प्राह प्रणिपत्य दिवाकरम् ।
यजूंषि तानि मे देहि यानि सन्ति न मे गुरौ ॥
एवमुक्तो ददौ तस्मै यजूंषि भगवान्रविः ।
अयातयामच्छन्दांसि यानि वेत्ति न तद्गुरुः ॥
याज्ञवल्क्यस्ततो ब्रह्मन्स्वशिष्येभ्य उवाच ह ।
यजूँषि परिधीतानि तानि विप्रैर्द्विजोत्तम ! ॥
वाजिनस्ते समाख्याताः सूर्य्यस्त्वश्वोऽभवद्यतः ।
शाखाभेदस्तु तेषां वै दश पञ्च च वाजिनाम् ॥
कण्वाद्यास्तु महाभाग ! याज्ञवल्क्यप्रकीर्त्तिताः ।
तासां मध्ये काण्वशाखा विशिष्टा प्रथमा यतः ॥
अतः प्रथमशाखेति यजुषामुत्तमा स्मृता ।

इति श्रीविष्णुपुराणे तृतीयेंऽशे पञ्चमोऽध्यायः ।

श्रीभागवतेऽपि—

याज्ञवल्क्यस्ततः सूर्य्यमाराध्यास्मादधीतवान् ।
व्यवस्थितप्रकरणं यजुः कृष्णमितीर्य्यते ॥

पौराणिकीं कथामेतां वेदव्याख्यान आदरात् ।
आदिशन्महामाचार्याः श्रुतावपि मया श्रुतम् ॥
काण्ववेदगता विद्या वंशब्राह्मण ईर्यते ।
यजूंषि शुक्लान्यादित्यान्मुनिः प्रापेत्यपि स्फुटम् ॥

तथा च श्रुतिः "आदित्यानीमानि शुक्लानि यजूंषि वाजसनेयेन याज्ञवल्क्येनाख्यायन्ते"। आदित्येनाध्यापितत्वादादित्यान्युच्यन्ते । वाज इत्यन्नस्य नामधेयम् "अन्नं वै वाजः" इति श्रुतेः । वाजस्य सनिर्दानं यस्य महर्षेरस्ति सोऽयं वाजसनिस्तस्य पुत्रो वाजसनेयस्तस्य याज्ञवल्क्य इति नामधेयम् , तेन याज्ञवल्क्येन तानि शुक्लयजूंषि महर्षिभ्यः पञ्चदशभ्य आख्यायन्ते समन्तादुपदिश्यन्ते । एवंसति याज्ञवल्क्येन प्रवर्त्तिताः शुक्लयजुर्विषयाः शाखाः पञ्चदश सम्पद्यन्ते । तच्छाखाध्यायिनश्चरणव्यूहादिग्रन्थे जाबालादिभिः पञ्चदशभिर्नामभिरित्थं व्यवह्रियन्ते—जाबालाः १ गौधेयाः २ काण्वाः ३ माध्यन्दिनीयाः ४ श्यापीयाः ५ स्थापीयाः ६ कपोलाः ७ पौण्ड्रवत्साः ८ आवटिकाः ९ परमावटिकाः १० पाराशर्याः ११ वैणयाः १२ बौधेयाः १३ वैजपाः १४ कात्यायनीयाश्च १५ इति पञ्चदश नामानि । तत्र काण्वाभिधेन महर्षिणा लब्धो यजुर्वेदशाखाविशेषः काण्वः । तल्लाभश्च स्मर्यते—

युगान्तेऽन्तर्हितान्वेदान्सेतिहासान्महर्षयः ।
लेभिरे तपसा पूर्वमनुज्ञाताः स्वयंभुवा ॥ इति ॥

यद्यप्ययं वेदः परमेष्ठ्यादिभिः परम्परया प्राप्त आदित्यशिष्येण याज्ञवल्क्येन बहुभ्यः शिष्येभ्य उपदिष्टस्तथापि महता तपसा तुष्टस्येश्वरस्यानुग्रहात् काण्वसम्बन्धितयैव लोके प्रख्यायते । तमेतं काण्ववेदमधीयते विदन्ति वा इति व्युत्पत्त्या काण्वशिष्यप्रशिष्यादिपरम्परया वर्तमानाः सर्वेऽपि काण्वा इत्युच्यन्ते । एवं ज्ञात्वा जाबालादिषु द्रष्टव्यम् । यद्यप्यनयोः शाखयोरुभयोराध्वर्य्यव एव प्रयोगः प्रतिपाद्यते, तथापि मन्त्रपाठविशेषैः प्रयोगविशेषैर्वाऽस्ति महान्भेदः, स चानुष्ठातृभेदेन व्यवस्थितवि-

षयत्वान्न विकल्पते । अत एव "स्वाध्यायोऽध्येतव्य" इति स्वकीयशाखाऽध्ययनमनुष्ठानविशेषाय विहितम् । ननु किं काण्वमाध्यन्दिनादिभिः पठ्यमानो मुख्यो यजुर्वेद उत शाखामात्रमिति ? उभयथा वचनदर्शनात्सन्देहः । तथा हि तैत्तिरीयब्राह्मणे—

"भारद्वाजो ह त्रिभिरायुर्भिर्ब्रह्मचर्यमुवास, तꣳह जीर्णꣳस्थविरꣳशयानमिन्द्र उपव्रज्योवाच—भारद्वाज ! यत्ते चतुर्थमायुर्दद्याम्, किमनेन कुर्य्यादिति । ब्रह्मचर्यमेवैनेन चरेयमिति होवाच । तꣳह त्रीन् गिरिरूपानविज्ञातानिव दर्शयाञ्चकार ॥ तेषाꣳहैकैकस्मान्मुष्टिनाददे स होवाच भरद्वाजेत्यामन्त्र्य वेदा वा एते अनन्ता वै वेदाः । एतद्वा एतैस्त्रिभिरायुर्भिरन्ववोचथाः । अथान्तरतरदाननूक्तमेव एहीमं विद्धि । अयं वै सर्वविद्येति ॥" सर्वासां शाखानां वेदशब्दाभिधानात् । स्कन्दपुराणे तु—

अवतीर्णो महायोगी सत्यवत्यां पराशरात् ॥
उत्सन्नान्भगवान्वेदानुज्जहार हरिः स्वयम् ।
चतुर्द्धा व्यभजत्तांश्च चतुर्विंशतिधा पुनः ॥
शतधा चैकधा चैव तथैव च सहस्रधा ।
अथर्वणं द्वादशधा भित्वा शाखा अवाक्लृपत् ॥

इति सामान्यतः शाखाशब्दश्रवणात् । तत्र पूर्वः पक्षः । द्वापरादौ वेदव्यासेन स्वशिष्येभ्यश्चतुर्भ्यो य उपदिष्टास्त एव मुख्या वेदाः । तैर्व्यासशिष्यैर्विभज्य स्वशिष्येभ्यो दत्ताः शाखा इति । तथा चापस्तम्बादिवेदानामेवोपदेशात् त एव मुख्या वेदाः । काण्वादयस्तु तदनन्तरभावित्वादमुख्या इति द्वादशस्कन्धोक्तत्वात् ।

भाविवृत्तान्तमाज्ञाय व्यासः सत्यवतीसुतः ।
दश पञ्चाथ याः शाखाः सूर्यायोपदिदेश ह ॥

इति विष्णुपुराणोक्तत्वात काण्वादीनामपि पूर्वभावित्वम् । एवमुभयत्रापि मुख्यत्वे प्राप्ते पुनरपि सन्देहः । तन्निर्णयश्चरणव्यूहे शौनकेन दर्शितः ।

**मन्त्रब्राह्मणयोर्वेदस्त्रिगुणं यत्र पठ्यते ।**
**यजुर्वेदः स विज्ञेयो ह्यन्ये शाखान्तराः स्मृताः ॥**

इति कात्यायनपरिशिष्टप्रमाणेन शुक्लयजुष्ट्वेनायातयामत्वेन च काण्वादयो मुख्या इतरे त्वमुख्या इति ।

परिशिष्टवचनमितरत्रापि समानमिति चेत् । न । इतरत्र वचनार्थाऽसम्भवात। तथा हि **"मन्त्रब्राह्मणयोर्वेदनामधेयम्"** इत्युक्त्वा यजुर्वेदे विशेषमाह–'त्रिगुणं पठ्यते यत्र स यजुर्वेद' इति। तत्र त्रिगुणमिति पदं क्रियाविशेषणं वा, मन्त्रब्राह्मणयोरिति समस्तस्यापि पदस्य बुद्ध्या विविक्तस्य ब्राह्मणपदस्य नपुंसकलिङ्गस्य विशेषणं वा, अन्यद्वा ? अत्र प्रथमे पक्षे मन्त्रब्राह्मणात्मको यो वेदः स यत्र शाखायां त्रिगुणं यथा स्यात्तथा पठ्यते स मुख्यो यजुर्वेद इत्यर्थः सम्भवति । तत्र त्रैगुण्यं किं (१)विध्यर्थवादरूपेण वा, आहोस्वित्संहितापदक्रमरूपेण वा ? नाद्यः । शाखामात्रस्य ब्राह्मणस्य विध्यर्थवादमन्त्ररूपत्वेनातिव्याप्तेः । द्वितीयस्तु काण्वादेरेव सम्भवति, तेषाम्मन्त्र ब्राह्मणात्मकस्य वेदस्य संहितादित्रिगुणपाठसत्त्वात्। ननु शतपथब्राह्मणस्य पदक्रमपाठाभावान्मन्त्रब्राह्मणात्मकवेदस्य त्रिगुणः पाठः काण्वमाध्यन्दिनानां न सम्भवति, सम्भवति चापस्तम्बादीनां तादृशः पाठः। तथा हि तैत्तिरीयप्रथमाष्टके, **"सम्पश्यामि प्रजा अहमिडप्रसो मानवी"**रित्युपक्रम्य, **"संपश्यामि प्रजा अहमित्याह यावन्त एव ग्राम्याः पशवस्तानेवावरुन्धेऽम्भस्थाम्भो वो भक्षीयेत्याहांभो ह्येता महस्थ महो वो भक्षीयेत्याह मह्येताः सहस्थ सहो वो भक्षीयेत्याह सह्येताः"** इत्यादौ मन्त्रभागे ब्राह्मणस्य दर्शनात् । हन्त तर्हि काण्वमाध्यन्दिनादीनां संहितायाम् **"वसन्ताय कपिञ्जलानालभते ग्रीष्माय कलविङ्कान्"** इत्यादौ, तथा **"ब्राह्मणे ब्राह्मणम् क्षत्राय राजन्य"**मित्यादेश्च ब्राह्मणभागस्य सत्त्वमेव हि। अथ तर्हि उभयेषामपि लक्षणसत्त्वान्मुख्यवेदत्वम् , अन्येषां शाखान्तरत्वमस्तीति चेन्न । वैलक्षण्यात । तथा हि काण्वादीनां संहिता

(१) विधिः प्रेरणम् । अर्थवादः स्तुतिः ।

ऽन्तःपाति ब्राह्मणमित्यत्र महर्षिणा कात्यायनेनानुक्रमणिकाऽध्यायेषु 'अश्व-स्तूपरो ब्राह्मणोऽध्यायो ब्रह्मणे ब्राह्मणमिति ब्राह्मणोऽध्यायः' इत्युक्तत्वाद्भवति ब्राह्मणभागत्वम्। आपस्तम्बादीनामनुक्रमणिकादिप्रमाणा-भावात्संहितान्तःपातिमन्त्रव्याख्यानरूपस्य ब्राह्मणत्वे प्रमाणाभावात्। अन्य-था ब्राह्मणान्तःपातिनो मन्त्रभागस्यापि संहितात्वापत्तेः। किञ्च व्याख्यान-मात्रत्वेन ब्राह्मणत्वे "केसीन्द्रं ज्योतिरुच्यते" इत्यादेः "सूर्य्य एका-की चरति" इत्यादेश्च संहिताभागस्यापि व्याख्यानत्वेन ब्राह्मणत्वं स्यात्। अपि च मीमांसायां द्वितीयाऽध्याये तच्चोदकेषु मन्त्राख्येत्यधिकरणे वेदो द्वेधा मन्त्रो ब्राह्मणमिति। तत्र मन्त्रानधीतिमन्त्रानध्यापयाम इति यत्र वैदिकानां मन्त्रे प्रसिद्धिः स इन्द्रदेवताप्रकाशनसमर्थः संहिताभागो मन्त्र इत्युक्त्वा शेषे ब्राह्मणशब्द इति अवशिष्टभागस्यैव ब्राह्मणत्वमिति जैमिनिरप्यवोचत्। तस्मा"द्यावद्वचनं वाचनिकमि"तिन्यायेन वाजस-नेयिनां काण्वादीनामेवेदं लक्षणं नान्येषामिति सिद्धम्। न द्वितीयः। त्रिगुणशब्दस्य सन्निहितवेदशब्देनान्वये सम्भवति समस्तं ब्राह्मणपदं विविच्य तेनान्वयकथने व्यवहितान्वयत्वदोषप्रस ङ्गात् क्लिष्टकल्पनाच्च। भवतु वा व्यवहितान्वयः, ब्राह्मणस्य किं त्रिगुणत्वं संहितापेक्षया, ग्रन्थतो वा, किं वा आदौ मन्त्रप्रतीकतो गृही-त्वा तस्य व्याख्यानं कृत्वा पश्चान्मन्त्रप्रतीकस्योपसंहार इति, तथा च ब्राह्मणे "आब्रह्मन्ब्राह्मणो ब्रह्मवर्चसी जायतामित्याह ब्राह्मण एव ब्रह्मवर्चसं दधाति तस्मात्पुरा ब्राह्मणो ब्रह्मवर्चस्यजायत" इत्यादौ तथात्वदर्शनादिति। अत्रापि प्रथमपक्षस्तु काण्वादीनामेव सम्भवति नापस्तम्बादीनाम्, शतपथब्राह्मणस्य संहितापेक्षया ग्रन्थतस्त्रि-गुणत्वोपलब्धेः। आपस्तम्बादीनां संहितायां ब्राह्मणस्य च ग्रन्थतः सा-म्यात्। अत्रापि किं मंत्रव्याख्यानत्वेन त्रिगुणः पाठः, किंवा मंत्रैकदेश-व्याख्यानत्वेन। एवमपि प्रथमः पक्षः काण्वादीनामेव सम्भवति, तेषां शतपथब्राह्मणे मन्त्रमात्रस्य व्याख्यानात्। आपस्तम्बादिब्राह्मणस्य ग्रन्थतो

मन्त्रसमानत्वेन मन्त्रमात्रव्याख्यानासंभवात् । नान्त्यः, शाखान्तरेष्वपि ब्राह्मणस्य मन्त्रैकदेशव्याख्यानत्वेनातिव्याप्तेः। मन्त्रैकदेशव्याख्यानन्तु मैत्रायणीयादिशाखासु प्रसिद्धम्। अन्यद्वेति तृतीयोऽपि न, तस्यानिर्वचने नवत्वेन विकल्पासहत्वात् । किञ्च "शुक्लानीमानि यजूंषि वाजसनेयेन याज्ञवल्क्येनाख्यायन्ते" इति बृहदारण्यकश्रुतेरिमानि काण्वादीनि शुद्धानि यजूंषि वाजसनेयेन याज्ञवल्क्येन व्याख्यायन्ते स्वशिष्येभ्यः उपदिश्यन्त इति विद्यारण्यश्रीपादैर्व्याख्यातत्वेन,

आध्वर्य्यवं क्वचिद्धौत्रं क्वचिदित्यव्यवस्थया ।
बुद्धिमालिन्यहेतुत्वाद्यजुः कृष्णमितीर्यते ॥
व्यवस्थितप्रकरणं यजुः शुक्लमितीर्यते ।

इति स्मृत्या च शुक्लयजुष्ट्वविधानेनापि मुख्यत्वात् । अपि च "अयातयामान्येव रवेरेव ये भविष्यन्ती"त्यथर्ववचनेन "यजूंष्ययातयामानी"ति भागवतादिवचनेन च काण्वादिशाखाना वीर्यवत्त्वाभिधानाच्च मुख्यवेदत्वमिति सिद्धम् । यदुक्तम्—वेदव्यासेन द्वापरादौ अनुपदिष्टत्वात्काण्वादीनाममुख्यत्वम् -इति । तदपि न, सर्वज्ञेन वेदव्यासेन भाविवृत्तान्तं ज्ञात्वा सारभूतं यजुर्गणं सूर्यायोपदिश्य निधित्वेन स्थापितत्वात् । तदुक्तं वाराहपुराणे—

हयग्रीवः कदाचित्तु सुरद्वेषी महाबलः ।
सुराणामपकाराय वेदानाहृत्य चौर्यतः ॥
भक्षयित्वा बहून् वेदान्स पातालं समाविशत् ।
दैत्यं विदार्य तान्वेदान्ब्रह्मणे स ददौ हरिः ॥
द्वापरादौ ततो योगी पाराशर्यो महातपाः ।
अवतीर्य्याथ तान्वेदान्स्वशिष्येभ्य उवाच ह ॥
भाविवृत्तान्तमाज्ञाय त्रिकालज्ञो मुनिस्तदा ।
यजूंष्ययातयामानि सूर्यमध्याद्व्य निक्षिपत् ॥
छर्दित्वा याज्ञवल्क्योऽथ छन्दांस्यथ गवेषयन् ।
गुरोरविद्यमानानि उपतस्थे दिवाकरम् ॥

सूर्यं प्रसाद्य कालेन प्राप तस्माद्यजुर्गणम् ।
शुक्लान्ययातयामानि यजूंषि प्राप्य भास्वतः ॥
शाखाशुक्ले पञ्चदश कण्वाद्याश्च महामुनिः ॥ इति ।

पञ्चदशस्वपि शाखासु काण्वशाखा मुख्या वेदितव्या । तदुक्तम् बृहन्नारदीये—

यजुर्वेदमहाकल्पतरोरेकशतं स्मृताः ।
शाखास्तत्र शिवाकारा दश पञ्चाथ शुक्लगाः ॥
तत्राऽपि मुख्या प्रथमा शाखा वै काण्वसंज्ञिका ॥ इति ।

तस्मादिति सिद्धं यजुःषु प्रथमा शाखा मुख्येति । सामवेदस्याखिलसहस्रभेदा भवन्ति अनध्यायेष्वधीयमानास्ते शतक्रतोर्वज्रेणाभिहताः प्रनष्टाः । शेषान्प्रवक्ष्यामि । आसुरायणीया १ वासुरायणीया २ वार्चान्तवीया ३ प्राञ्जलिः ४ ऋत्वैर्णभिदाः ५ प्राचीनयोग्याश्च ६ इति । तत्र राणायनीया नाम नवभेदा भवन्ति । राणायनीयाः १ शाक्यायनीयाः २ सत्यमौद्गलाः ३ खल्वलाः ४ महाखल्वला ५ लाङ्गला ६ कौथुमाः ७ गौतमाः ८ जैमिनीयाश्च ९ इति । तेषामध्ययनमष्टौ सहस्राणि सामानि । अथर्ववेदस्य नव भेदा भवन्ति । पैप्पलाः १ दान्ताः २ प्रदान्ताः ३ तौन्ताः ४ औन्ताः ५ ब्रह्मदावलाः ६ शौनकी ७ देवदर्शी ८ चरणविद्याश्च ९ इति । तेषामध्ययनम् पञ्चकल्पानि भवन्ति । नक्षत्रकल्पो १ विधानकल्पो २ विविधानकल्पः ३ संहिताकल्पः ४ शान्तिकल्पश्च ५ इति । ऋग्वेदस्यायुर्वेद उपवेदो यजुर्वेदस्य धनुर्वेद उपवेदः सामवेदस्य गान्धर्ववेद उपवेद अथर्ववेदस्यार्थशास्त्राणि । एवंसति यच्छाखोक्तं कर्म सम्प्राप्तं तत्र तच्छाखोक्ताशीर्ग्रहणमादौ भवति । सङ्ग्रहे—

सर्वत्र कर्मणामन्ते मन्त्राशिषमनुत्तमाम् ।
दद्युर्विप्राः स्वशाखोक्तामादौ तत्कर्मशाखिनः ॥ इति ॥

तत्र ऋग्वेदस्य ततः काण्वादेः तत आपस्तम्बादेः ततः सामगादेः, इति क्रमो भवति मुख्यक्रमानुग्रहादिति । वेदेषु यजुर्वेदः प्रधानभूतः

अन्ये उपसर्ज्जनभूताः, "सर्वा गतिर्याजुषी हैव शश्वत् । तस्य यजुरेव शिर ऋग्दक्षिणः पक्षः सामोत्तरः पक्ष इति । ऋग्भ्यो जातं वैश्यवर्णं यजुर्वेदं क्षत्रियस्याहुर्योनिं सामवेदं ब्राह्मणानां प्रसूतिम् । तथा असृक्षि वा इममि"त्युपक्रम्य यजुर्वेदसामवेदर्ग्वेदोत्पत्तिक्रमस्योक्तत्वात् । आपस्तम्बशाखायाम् प्राधान्यं कर्मोत्पादकत्वेन । कर्म त्वग्निहोत्रचातुर्मास्य-ज्योतिष्टोमादि । तेन च प्राधान्यकर्मणि विहिते तदुपकारित्वेन हौत्रौद्गात्रपूरकत्वेन तयोः प्रवेशः, सति राज्ञि सचिवादेरिव ।

अथाधिकारी निरूप्यते । एतच्च त्रैवर्णिकैरेवाध्येतव्यम् न तु शूद्रैः । तथा च भास्करः—

तस्माद्द्विजैरध्ययनीयमेतत्पुण्यं रहस्यं परमञ्च तत्त्वम् । इति ।

शूद्राणामध्यापने दोषमाह गर्गः—

स्नेहाल्लोभाच्च मोहाच्च यो विप्रो ज्ञानतोऽपि वा ।
शूद्राणामुपदेशन्तु दद्यात्स नरकं व्रजेत् ॥

एतच्च सुपरीक्षितेभ्यो देयम् न तु शूद्रेभ्य इत्याह शाकल्यसंहितायाम्—

न देयं यस्य कस्यापि रहस्यं शास्त्रमुत्तमम् ।
एतद्देयं सुशिष्याय मुने ! वत्सरवासिने ॥

ज्योतिषे—

नैतद्देयं दुर्विनीताय जातु ज्ञानं गुप्तं तद्धि सम्यक् फलाय ।
अस्थाने हि स्थाप्यमानैव वाचां देवी कोपान्निर्दहेन्नो चिराय॥

श्रुतावपि —

'विद्या ह वै ब्राह्मणमाजगाम गोपाय मां शेवधिस्तेऽहमस्मि ।
असूयकायानृताय न मां ब्रूयादवीर्यवती तथा स्याम्" इति ।

नन्वस्मिन्ग्रन्थे बाहुल्यमेव दूषणमिति चेन्न । यतो ग्रन्थसंक्षेपे अन्यग्रन्थापेक्षया विचारसंशयश्च भवति, ग्रन्थविस्तारे संशयापेक्षयोरभावो भवति, तस्माद्ग्रन्थविस्तारो न दोषाय इति ज्ञेयम् ।

उक्तञ्च—

संक्षेपे संशयापेक्षे श्रोतुः स्यातामसंशयः।
वरीयान् विस्तरस्तस्मादपेक्षासंशयापहः॥

इत्यलमतिप्रसङ्गेन। प्रकृतमनुसरामः। "अथातोऽधिकारः" इत्यादिना श्रौतानि कर्माण्युक्तानि तदनन्तरं स्मार्त्तानि विधीयन्ते। तत्रैतत्प्रथमं सूत्रम् "अथातो गृह्यस्थाली पाकानां कर्म"। उच्यते इति सूत्रशेषः। ग्रन्थादौ मङ्गलबोधकोऽथशब्दः। यद्वा अथशब्द आनन्तर्यवाची। श्रौतकर्मविधानानन्तरं स्मार्त्तकर्माण्यभिधेयानि। अतःशब्दो हेत्वर्थः। यतः श्रौतान्युक्तानि स्मार्त्तान्येवावशिष्यन्ते अतस्तान्युच्यन्ते। ननु पूर्वं गर्भाधानादीनामनुष्ठानं पश्चाच्छ्रौतानामिति, अतोऽनुष्ठानक्रमेण स्मार्त्तान्येव पूर्वमभिधेयानि पश्चाच्छ्रौतानि। सत्यमुच्यते। श्रौतेषु हि प्रत्यक्षाः श्रुतयः स्मार्त्तेषु च पुनः कर्तृसामान्यादनुमेयाः श्रुतयः। तस्मात्प्रत्यक्षश्रुतित्वाच्छ्रौतानामेव पूर्वमभिधानम्, पश्चात्स्मार्तानामिति। किञ्च स्मृत्वा स्मृत्वा कर्म क्रियते इति स्मार्त्तम्, तच्च स्मरणम् श्रौतानामेव तद्विना स्मरणाऽनुपपत्तेः। गृह्यः शालाग्निस्तत्र ये स्थालीपाकास्ते गृह्यस्थालीपाकास्तेषां कर्म क्रियानुष्ठानमिति यावत। कारिकायाम्—

आधाने चावसथ्ये च अग्निहोत्रे गृहाश्रमे।
दायाद्यवित्तभागे च गृह्यशब्दो भवेदिति॥

गृहाय हितं गृह्यम्। गृह्यशब्दो दम्पत्योरिति वर्त्तते तस्मिन्नित्यावसथ्ये। अतश्च यत्किञ्चिद्दम्पत्योर्हितं कर्म शान्तिकं पौष्टिकं व्रताङ्गहोमादिकं स्मार्त्तम्, तत्सर्वमावसथ्येऽग्नौ भवति। अत एवाह कात्यायनः—

न स्वेऽग्नावन्यहोमः स्यान्मुक्त्वैकां समिदाहुतिम्।
स्वगर्भसत्क्रियार्थाश्च यावन्नासौ प्रजायते॥
अग्निस्तु नामधेयादौ होमे सर्वत्र लौकिकः।
न हि पित्रा समानीतः पुत्रस्य भवति क्वचित्॥

अतः "सीमन्तोन्नयनमपि स्मार्त्ताग्नावेव कार्यम्" इति देव-

भाष्ये परिभाषायाम् । उत्पत्त्यनन्तरं तत्संस्कारकं सर्वमन्नप्राशनादिहवनं लौकिकाग्नावेव कर्त्तव्यम् । किमावसथ्याधानादिषु वक्ष्यमाणेषु सर्वकर्मसु अध्वर्योः कर्तृत्वमुत यजमानस्य इति? "अध्वर्युः कर्मसु वेदयोगात्" इति परिभाषणात् "पूर्णपात्रो दक्षिणा वरो वा" इति दक्षिणाम्नानात् अध्वर्योः कर्तृत्वमिति चेत् । उच्यते । न स्मार्तेषु कर्मस्वध्वर्योः कर्तृत्वम् , वेदयोगाभावात् । समाख्यया हि अध्वर्योः कर्मसु योगः । समाख्या हि वेदयोगात् । न च स्मार्तेषु वेदयोगोऽस्ति । न हि ज्ञायते अमुकवेदोक्तं स्मार्त्तमिति । अविज्ञातं स्मार्त्तं यत्र ज्ञायते किमाग्वेदिकं । किं याजुर्वेदिकम् । किं वा सामवैदिकमिति । नापि दक्षिणाऽन्यथाऽनुपपत्त्याऽन्यस्य कर्त्तृत्वम् । अस्ति ह्यत्रान्योऽपि ब्रह्माऽऽख्यः कृताकृतावेक्षणत्वेन कर्त्ता तदर्थः परिक्रयोऽयमिति दक्षिणार्थापत्तिः । तस्मात्स्वस्यैव कर्त्तृत्वम् ।

अथ साधारणो विधिरुच्यते । तत्र पारस्करः "परिसमुह्योपलिप्योल्लिख्योद्धृत्याभ्युक्ष्याग्निमुपसमाधाय" इति सूत्रम् । परिसमूहनं पांसूनामपसारणम् । तच्च सामर्थ्यात्पांसूपसारणयोग्यैर्दर्भादिभिर्यावत् स्वपसारणम्भवति तावत्कार्य्यम् । "प्राञ्च्युदग्वा" इति कात्यायनपरिभाषातः प्राक्संस्थमुदक्संस्थं वा । एकदर्भेण वारत्रयमिति कारिकाकारः । त्रिभिर्दर्भैर्वारत्रयमेव परिसमूहनमित्यन्ये । साधनान्तरानुक्तत्वात् हस्तेनैव वेदिं परिसमुह्य इत्यत्र श्री अनन्तः "अग्निं गृह्य त्रिभिर्दर्भैः"। उक्तञ्च —

गृहीत्वा तु त्रयो दर्भाऽनामिकाङ्गुष्ठमेव च ।
दक्षिणे चोत्तरे कुर्य्यात्परिसमूह इति स्मृतः ॥
कृमिकीटपतङ्गाद्या भ्रमन्ति वसुधातले ।
तेषां संरक्षणार्थाय कुर्य्यात्परिसमूहनम् ॥

'उपलिप्य' । उपलेपनं भूमेरुद्वर्त्तनम् । तच्च गोमयेन । स्थण्डिलं गोमयेनोलिप्य "मण्डलं चतुरस्रं वाऽग्निं निर्मथ्याभिमुखं प्रणयेदिति" मैत्रायणीयगृह्यात् ।

पुरा इन्द्रेण वज्रेण हतो वृत्रो महासुरः ।
मेदसा व्यापिता भूमिस्तदर्थमुपलेपनम् ॥

इदमपि वारत्रयम्भवतीति केचित् । 'उल्लिख्य' उल्लेखनं रेखाकरणम् । तच्च स्फ्येन । "अथ स्फ्यमादाय परिलिखति वज्रो वै स्फ्यो वज्रेणैव तत्परिलिखति त्रिः कृत्वः परिलिखति" इति श्रुतेः । "स्फ्येनान्तर्लिखिति तमायनीति प्रतिमन्त्रमिति" कात्यायनसूत्रात् । अन्ये तु—

खादिरं स्फ्यं प्रकल्प्याऽथ तिस्रो लेखाश्च पञ्च वा ।
स्थण्डिलोल्लेखनङ्कुर्यात्स्रुवेण च कुशेन वा ॥

इति वासनाभाष्यधृतवचनात् । रेखाश्च प्राक्संस्था उदक्संस्था वा कुण्डायामपरिमिताः प्रागग्रा उदगग्रा वा तिस्रः कार्याः ।

त्रीणि पश्चाथ वा रेखा न भिद्यन्ते कदाचन ।
रेखा रेखाभिर्भिद्यन्ते तमाहुर्ब्रह्मघातकम् ॥
प्रथमा दक्षिणा रेखा द्वितीया मध्यमा भवेत् ॥
उत्तरा च तृतीया स्यात्त्रयुल्लिख्यैवं सदा बुधैः ॥ २ ॥

वायुपुराणे—

कण्डनं पेषणं चैव तथैवोल्लेखनाक्रिया ।
सकृदेव पितॄणां स्याद्देवतानां त्रिरुच्यते ॥
वसुन्धरा यदा सृष्टा हीना वा यदि वा समा ।
ततः समात्समः कुर्याच्छेषोद्धृत्य बहिः प्लुनः ॥ इति ॥

'उद्धृत्य' उद्धरणं रेखातः पांसूनामुद्वापनम् । तच्चोल्लेखनक्रमेण अनामिकाङ्गुष्ठाभ्याङ्कर्तव्यम् इति साम्प्रदायिकाः ।

अङ्गुष्ठाङ्गुलिपर्वाभ्यामुद्धरेत्पांसुमेव हि ॥
पांसुयुक्ता तु पूर्वेण त्यक्त्वा दारा धनं तथा ।
विचरन्ति पिशाचा ये आकाशस्थाः सुखासिनः ।
तेभ्यः संरक्षणार्थाय उद्धृत्य चैव कारयेत् ॥

'अभ्युक्ष्य' अभ्युक्षणं सेचनम् । तच्च अद्भिः ।

गङ्गादिसर्वतीर्थेषु समुद्रेषु सरित्सु च ।
सर्वतश्चापि आदाय अभ्युक्ष्य च पुनः पुनः ॥

अभ्युक्षणञ्च न्युब्जेन हस्तेन कार्यमित्याह वर्द्धमानादिधृतपरिशिष्टान्तरं वचनम्--

उत्तानेन तु हस्तेन प्रोक्षणं समुदाहृतम् ।
तिरश्चावेक्षणं प्रोक्तं नीचेनाभ्युक्षणं स्मृतम् ॥
प्रोक्ष्यमुद्राविहीनस्तु प्रोक्षणङ्कुरुते यदि ।
तत्तोयं रुधिरं ज्ञेयं तत्पात्रमशुचि भवेत् ॥

त्रिरुल्लेखनं त्रिरुद्धरणमिति हरिहरः। परिसमूहनादि पञ्चापि त्रिस्त्रिरित्यन्ये । कर्कोपाध्यायैरपि दैवे परिसमूहनादि त्रिस्त्रिः पित्र्ये सकृत् इत्युक्तम् । परिसमूहनादयः पञ्च पदार्था भूमिशुद्ध्यर्था इति केचित् । तदयुक्तम् । नह्यशुद्धदेशे अग्नेः स्थापनप्रवृत्तिर्युक्ता इति । तस्मादग्न्यर्था इति युक्तम् । यत्र यत्राग्नेः स्थापनं तत्र तत्र एते कर्त्तव्याः। न च गृह्यस्थालीपाकादिकर्मान्तर्भाव एषाम् , येन "एष एव विधिर्यत्र क्वचिद्धोम" इति अभिहितेऽपि पुनरभिधीयते "उद्धृतावोक्षितेऽग्निमुपसमाधायेति" नूनमनेनाप्रवृत्तिः । तस्मादग्न्यर्था एवेति । तथा च लिङ्गम् "उद्धृतावोक्षितेऽग्निमुपसमादधीतेति" प्रयोजनं स्वस्थानस्थित एवाग्नौ क्रियमाणे स्थालीपाकादौ न क्रियन्ते । "अग्निमुपसमाधाय" इति सूत्रम् । उप समीपवर्त्तिनि उक्तसंस्कारसंस्कृते देशे कांस्यादिना सम्म्यक् प्रकारेण, आ अभिमुखं यथा भवति तथा स्थापयित्वेत्यर्थः । उक्तम् गृह्यसंगृहे --

शुभं पात्रन्तु कांस्यस्य तेनाग्निं प्रणयेद्बुधः ॥
तस्याभावे शरावेण नवेनाभिमुखेन तम् । इति ॥

तथा च अग्निगुह्ये--

पात्रद्वये न्यसेद्वह्निं संपुटे धारयेत्करैः ।
प्रणीता दाक्षिणे हस्ते वामहस्ते च प्रोक्षणीः ॥

सुवासिन्याऽऽनयेद्वह्निं संपुटे पात्रयोर्मृदः ।
विन्यस्याभिमुखं स्वस्य निक्षिपेत्कुण्डमध्यतः ॥

"दक्षिणतो ब्रह्मासनमास्तीर्य" इति सूत्रम् । अग्नेरुपास्थितत्वात्तद्दक्षिणतः । ननु "दक्षिणतो ब्रह्मयजमानयोरासने" इति परिभाषातो दक्षिणत आसनं प्राप्तं किमर्थं पुनर्दक्षिणग्रहणम्? सत्यमुच्यते । पुनर्दक्षिणग्रहणं यजमानस्य तत्रासनं माभूदित्येतदर्थमित्यदोषः । आसनमात्रं स्यान्न ब्रह्मा आस्तरणमात्रोपदेशात्, क्वचिच्च "दक्षिणतो ब्रह्माणमुपवेश्य" इति । नैतत् । अदृष्टप्रसङ्गात् । नह्यदृष्टाय कश्चिदासनप्रकल्पनं कुर्वीत, ब्रह्मासनव्यपदेशानुपपत्तेश्च । तस्माद्दक्षिणतो ब्रह्माणमुपवेश्येति हिरण्यकेशिगृह्यसूत्रे स्पष्टतरम् । सर्वसाधारणेतिकर्त्तव्यतासु ब्रह्मोपवेशनस्योक्तत्वात् । तद्यथा "ब्रह्मा यज्ञोपवीतङ्कृत्वाऽऽचम्यापरेणाग्निं दक्षिणातिक्रम्य ब्रह्मासनात्तृणं निरस्याप उपस्पृश्याग्निमभिमुख उपविशतीति" । ब्रह्मण उपवेशनार्थमासनं ब्रह्मासनम् वारुणदारुनिर्मितं पीठम् आस्तीर्य्य आच्छाद्य, सामर्थ्यात्कुशैः । अन्ये तु आसनं तृणमयम् । अन्यत्रासनात्तृणनिरसनदर्शनादित्याहुः । तथा चोक्तम् अग्निगुह्ये–

ब्रह्माचार्यप्रणीतानामासनञ्च त्रिभिः कुशैः ।
न द्वाभ्यां नैकदर्भेण ऋषयो बहवो विदुः ॥
उत्तरे सर्वपात्राणि उत्तरे सर्वदेवताः ।
उत्तरे प्रणीता यास्ताः किमर्थं ब्रह्म दक्षिणे ॥
यमो वैवस्वतो राजा वसते दक्षिणा दिशि ।
तस्य संरक्षणार्थाय ब्रह्मा तिष्ठति दक्षिणे ॥

हरिहरेण तु अत्रैव ब्रह्मवरणमुक्तम् । अग्नेरुत्तरतः स्वशाखिनं प्राङ्मुखमासीनं स्वयमुदङ्मुख आसीनः सम्पूज्य वृत्वा उपवेश्य तदभावे पञ्चाशत्कुशनिर्मितम् । उक्तञ्च विधानपारिजातके––

पञ्चाशत्कुशको ब्रह्मा तदर्द्धेन तु विष्टरः ।
ऊर्ध्वकेशो भवेद्ब्रह्मा लम्बकेशस्तु विष्टरः ॥

दक्षिणावर्त्तको ब्रह्मा वामावर्त्तस्तु विष्टरः ॥

"प्रणीय" इति सूत्रम् । अप इति शेषः । तद्यथा अग्नेरुत्तरतः प्रागग्रं कुशैरासनद्वयं कल्पयित्वा चमसं सव्यहस्ते कृत्वा दक्षिणोद्धृतपात्रस्थोदकेन पूरयित्वा पश्चिमासने निधाय उपालभ्य पूर्वासने स्थापयति । प्रणीतालक्षणन्तु पाकयज्ञप्रदीपे यज्ञपार्श्वोक्तम्—

चमसानान्तु वक्ष्यामि दण्डाः स्युश्चतुरङ्गुलाः ।
त्र्यङ्गुलन्तु भवेत्खातं विस्तारैश्चतुरङ्गुलम् ॥
विकङ्कतमयाः श्लक्ष्णास्त्वग्बिलाश्चमसाः स्मृताः ।
अन्येभ्यो वाऽपि कार्याः स्युस्तेषां दण्डेषु लक्षणम् ॥

इति चमसलक्षणं सौमिकचमसस्यैव इति न विरोधः । चतुरङ्गुलखातमिति हरिहरः । प्रणीतापूरणं मध्यमातर्जन्यङ्गुष्ठाग्रे ।

नो भूमौ नैव हस्ते च न काष्ठोपरि संस्थितिः ।
उदकं पूरयेत्तत्र आकाशवति संस्थिते ॥

आकाशवल्लक्षणमाह अग्निगुह्ये—

मध्यमा तर्जनीयुक्ता अंगुष्ठेन समर्पिता ।
आकाशसहिता ख्याता प्रणीता पूरणं भवेत् ॥ इति ।

अन्यच्च—

सांगुष्ठे चाङ्गुलित्रीणि प्रणीता सव्यहस्तके ।
पूरयेद्दक्षिणा धारा आकाशे शब्दतन्मतम् ॥
सरत्निः स्यादरत्निस्तु निष्कनिष्ठेन मुष्टिना ।
कुण्डस्योत्तरदिग्भागे प्रणीतास्थापनं भवेत ॥ इति ।

एवं सव्यहस्तेन पात्रं गृहीत्वा दक्षिणेन पूरणम् पश्चिमासने निधानम् पात्रालम्भः पूर्वासने निधानं भवति। "परिस्तीर्य" इति सूत्रम्। परिस्तरणञ्च कुशैरग्नेः समन्तादाच्छादनम् । उक्तञ्च श्रौते कात्यायनेन "तृणैरग्नीन्परिस्तीर्य्य पुरस्तात्प्रथमम्" इति। तृणशब्देन बर्हिरुच्यते बर्हिःशब्देन कुशा एवोच्यन्ते । "कौशं बर्हि"रिति तेनैव परिभाषणात् । पुरस्ता-

त्प्रथमम्। तच्च पूर्वस्यां दिशि प्रथमङ्कर्त्तव्यम्। एवञ्च "आवृत्तिसामन्तेषु प्रदक्षिणम्" इतिसूत्रबोधितप्रादक्षिण्यानुग्रहाय ईशानकोणादारभ्य प्रागग्रैः कुशैः परिस्तरणं भवति। उक्तञ्च अग्निगुह्ये—

ईशान्यादिषु पूर्वाग्रैः कुशैः सव्यं परिस्तरः। इति।

स्मृत्यन्तरे—

यज्ञवास्तुनि मुष्टौ च स्तम्भे दर्भबटौ तथा।
दर्भसंख्या न विहिता विष्टरास्तरणेषु च॥ इति॥

अग्निगुह्ये—

वह्नितस्तु परित्यज्य द्वादशाङ्गुलतो बहिः।
परिस्तरणदर्भास्तु षोडश द्वादशापि वा॥

"अर्थवदासाद्य" इति सूत्रम्। अर्थः प्रयोजनम्। नन्वत्र "अर्थप्रसंख्यया द्रव्योपकल्पनम्" इति कात्यायनपरिभाषातः प्राप्नोत्येवासादनम् किमर्थम्पुनरिदं सूत्रमिति चेन्न। "अपणस्य पश्चादुत्तरतो वा" इति कात्यायनस्य देशविशेषद्वंद्वतादिविशिष्टबोधनार्थत्वेनाऽस्य सार्थकत्वात्। एतच्च आसादनं विनियोगक्रमेण। तदाऽऽह च्छन्दोगपरिशिष्टे कात्यायनः—

प्राञ्चं प्राञ्चमुदगग्रेरुदगग्रं समीपतः।
तत्तथा सादयेत्पात्रं यद्यथा विनियुज्यते॥ इति॥

प्राञ्चं प्राञ्चमिति पुंस्त्वमार्षम्। विशिष्टो नियोगो विनियोगः मुख्यः प्रयोग इति यावत्। तथा च यत्कार्य्यार्थं यत्पात्रमुपादीयते तत्कार्य्यक्रमेण तस्यासादनम्। कारिकायाम्—

पश्चादुत्तरतो वा स्यात्पात्रासादनमग्नितः।
उत्तरे चेदुदक्संस्थं प्राक्संस्थं पश्चिमे भवेत्॥
प्राग्बिलान्युदगग्राणि प्राक्संस्थान्यग्नितो यदि।
प्रागग्रोदग्बिलान्यग्रेरुदक्संस्थानि चैव हि॥

अग्निगुह्ये—

आसादयति पात्राणि प्रादेशे करके बुधैः।

अङ्गुलित्रिप्रमाणेन पात्रात्पात्रान्तरे स्थितिः ॥
दर्भास्त्रयः पवित्रे द्वे प्रोक्षणीपात्रमुत्तमम् ।
आज्यस्थाली चरुस्थाली संमार्गोपयमौ कुशौ ॥
पालाश्यः समिधस्तिस्रः स्रुव आज्यं गवेधुका ।
तण्डुलान्पूर्णपात्रञ्च दक्षिणाऽथ वरोऽथ वा ॥

एतच्च विपुलस्थानसम्भवे, असम्भवे तु कात्यायनोक्तम्--

प्राञ्चं प्राञ्चमुदगग्नेरुदगग्रं समीपतः ।

इति देवयाज्ञिकाः । "पवित्रे कृत्वा" इति सूत्रम् । प्रथमैस्त्रिभिः कुशतरुणैरग्रतः प्रादेशमात्रं विहाय द्वे कुशतरुणे प्राच्छिद्य । कात्यायनसूत्रम् "कुशौ समावप्रशीर्णाग्रावनन्तर्गर्भौ कुशैश्छिनत्ति" इति । अत्र कुशाविति कुशतरुणे उच्येते । तथा च शाङ्खायनः "कुशतरुणे अविषमे अविच्छिन्नाग्रे अनन्तर्गर्भे प्रादेशेन मापयित्वा कुशेन च्छिनत्ति" इति ।

छन्दोगपरिशिष्टे च--

अनन्तर्गर्भिणं साग्रं कौशं द्विदलमेव च ।
प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित् ॥ इति ॥

पवित्रे द्वे त्रीणि वा इति विकल्पः । तथा च श्रुतिः "अथो पवित्रा स्युर्वा नो हि तृतीयो द्वे त्वेव" । प्रोक्षणीपात्रलक्षणमाह प्रोक्षणीपात्रं वारणं द्वादशाङ्गुलदीर्घं करतलमितखातं पद्मपत्राकृति कमलमुकुलाकृति वा भवतीति हरिहरादयः । कारिकाकारस्तु--

वैकङ्कतं पाणिमात्रं प्रोक्षणीपात्रमुच्यते ।
हंसवक्त्रप्रसेकञ्च त्वग्बिलं चतुरङ्गुलम् ॥
दण्डस्तस्य प्रणीतानां स्यादप्यङ्गुष्ठमात्रतः । इति ।

यज्ञपार्श्वे तु--

अश्वत्थदलवत्प्रोक्तं दीर्घं स्याद्द्वादशाङ्गुलम् ।
पूर्णपात्रं तथा कुर्यात्प्रोक्षणीनाञ्चपात्रकम् ॥ इति ॥

आज्यस्थाल्याः स्वरूपमाह च्छन्दोगपरिशिष्टे कात्यायनः—

आज्यस्थाली प्रकर्त्तव्या तैजसद्रव्यसम्भवा।
महीमयी वा कर्त्तव्या सर्वास्वाज्याहुतीषु च॥
आज्यस्थाल्याः प्रमाणन्तु यथाकामन्तु कारयेत्।
सुदृढामव्रणां भद्रामाज्यस्थालीं प्रचक्षते॥

तैजसं सुवर्णादि। चरुस्थालीप्रमाणमाह स एव—

तिर्य्यगूर्द्ध्वं समित्मात्री दृढाऽनतिबृहन्मुखी।
मृण्मय्यौदुम्बरी वापि चरुस्थाली प्रचक्ष्यते॥ इति।

हरिहरकारिकाकारादयस्तु द्वादशाङ्गुलबिला प्रादेशा आज्यस्थाली चरुस्थाली च भवति इत्याहुः। समिधो लक्षणमाह ब्रह्मपुराणे—

पालाशाश्वत्थन्यग्रोधप्लक्षवैकङ्कतोद्भवाः।
वेतसौदुम्बरौ बिल्वश्चन्दनं सरलस्तथा॥
शालश्च देवदारुश्च खादिरश्चेति याज्ञिकाः।

मरीचिः—

विशीर्णा विदला ह्रस्वा वक्राः ससुषिराः कृशाः।
दीर्घाः स्थूला घुणैर्जुष्टाः कर्मसिद्धिविनाशकाः॥

गृह्यसङ्ग्रहेऽपि—

प्रागग्राः समिधो देयास्ताश्च काम्येष्वपाटिताः।
शान्त्यर्थेषु सवल्कार्द्रा विपरीता जिघांसताः॥ इति॥

परिशिष्टान्तरेऽपि—

समित्पवित्रं वेदश्च त्रयं प्रादेशसम्मितम्।
इध्मस्तु द्विगुणः कार्यस्त्रिगुणः परिधिः स्मृतः।

अथ स्रुवलक्षणमाह कात्यायनः—

"अरत्निमात्रः स्रुवोऽङ्गुष्ठपर्ववृत्तपुष्करः"। इति।

अङ्गुष्ठपर्वणा तुल्यं वृत्तं पुष्करं यस्य सोऽङ्गुष्ठपर्ववृत्तपुष्कर इति। तच्च खादिरं "खादिरः स्रुवः स्फ्यश्चेति" तेनैवोक्तत्वात्। स्फ्योऽपि खादिरः खड्गाकृतिः। शेषं स्पष्टम्। "प्रोक्षणीः संस्कृत्य"

इति सूत्रम् । प्रोक्षणीपात्रं प्रणितासन्निधौ निधाय तत्र पात्रान्तरेण हस्तेन वा प्रणीतोदकमासिञ्च्य पवित्राभ्यामुत्पूय पवित्रे प्रोक्षणीषु निधाय दक्षिणेन प्रोक्षणीपात्रमुत्थाप्य सव्ये कृत्वा तदुदकं दक्षिणेनोत्थाप्य प्रणीतोदकेन प्रोक्ष्य । तथा च कात्यायनसूत्रम् "हविर्ग्रहण्यामपः कृत्वा ताभ्यामुत्पुनाति सवितुर्व इति ताः स्थानं तयोः सव्ये कृत्वा दक्षिणेनोदिङ्गयति देवीराप इति प्रोक्षितास्थेति तासां प्रोक्षणमिति"। अस्यार्थः । यस्यां हविर्ग्रहणमाम्नातं सा हविर्ग्रहणी स्रुक् अग्निहोत्रहवणी इति यावत् , तस्यामपः कृत्वा ताभ्यां पवित्राभ्यामुत्पुनाति उत्पवनङ्करोति उत्क्षिपति इति यावत् । ताः स्थानं तयोः, ताः प्रोक्षण्य आपस्तयोः पवित्रयोः स्थानं निधानस्थलम् । सव्ये कृत्वा सव्यहस्ते ताः पात्रे स्थिताः प्रोक्षणीः स्थापयित्वा दक्षिणेनोदिङ्गयति दक्षिणहस्तेनोर्ध्वं गमयति । तासाम्प्रोक्षणम् प्रणीतोदकेन प्रोक्षणीनां प्रोक्षणम् । "अर्थवत्प्रोक्ष्य" इति सूत्रम् । अर्थवत्प्रयोजनवत् तज्जलेन यथासादितानाम्पात्राणाम्प्रत्येकम्प्रोक्षणम् । इदम्प्रोक्षणमुत्तानहस्तेन इत्युक्तं प्रागभ्युक्षणप्रसङ्गे । न चैवं तण्डुलानामपि प्रत्येकम्प्रोक्षणं स्यादिति वाच्यम् । अर्थवत्प्रोक्ष्येत्यनेन प्रयोजनवतः प्रोक्षणविधानात् , न च तण्डुलानाम्प्रत्येकं प्रयोजनमस्ति समुदितानामेव प्रयोजनवत्त्वात् । एवञ्च तिसृणां समिधामपि न प्रत्येकं प्रोक्षणम् । अग्निसमिन्धनरूपकार्य्योपयोगित्वात् । अत एव श्रौते कपालानां परिधीनां च न प्रत्येकं प्रोक्षणम् इति । आर्थिकञ्च प्रोक्षणीनां निधानम् प्रणीताग्न्योरन्तरालरूपे असञ्चरे भवति, श्रौते तथा दृष्टत्वात् । उक्तञ्च अग्निगुह्ये—

तेन दर्भद्वयेनैव सपवित्रकरेण च।
क्रमात्पात्रगणं प्रोक्ष्य प्रोक्षणीपात्रवारिणा ।
निदध्यात्प्रोक्षणीपात्रं सपवित्रं समाचरेत् ।
अनन्तरं प्रणीताग्न्योरसञ्चरस्तु स स्मृतः इति ॥

"निरुप्याज्यम्"इति सूत्रम् । आसादितमाज्यं आज्यस्थाल्यां पश्चा-

दग्नेर्निहितायां प्रक्षिप्य, चरुश्चेच्चरुस्थाल्यां प्रणीतोदकमासिच्य आसादिततण्डुलान्प्रक्षिप्य । एवञ्चर्वादीनामाज्यनिर्वापोत्तरं निर्वापस्यैवाप्रामाणिकत्वात् चरुपात्रे प्रणीतोदकमासिञ्च्य तण्डुलप्रक्षेप इति प्रकारविशेषकथनन्त्वसंगतमेवेति चेन्न । "**पवित्रान्तर्हितेऽप आनीय तण्डुलानोप्य मेक्षणेन पर्यायुवन् जीवतण्डुलं श्रपयति**" इति मैत्रगृह्ये, गृह्यान्तरेऽप्याज्यनिर्वापाद्युत्तरमेव सधर्मकचरुनिर्वापादिदर्शनात् । "**अधिश्रित्य**" इति सूत्रम् । अधिश्रयणम् अग्नौ स्थापनम् । तत्र आज्यं ब्रह्मा अधिश्रयति । तदुत्तरतः स्वयं चरुमेव युगपदग्नावारोप्य । अत्र आज्यचर्वोर्युगपदधिश्रयणं, दर्शपौर्णमासयोस्तथा दृष्टत्वात् । न च तत्रापि सूत्रकारेण स्पष्टतयाऽनुक्तत्वात् कथमेवमिति वाच्यम् । "**तद्वा एतदुभय ँ सह क्रियते तद्यदेतदुभय ँ सह क्रियतेऽर्द्धो हि वा एष आत्मनो यज्ञस्य यदाज्यमर्द्धो यदिह भवति स यश्चासावर्द्धो य उ चायमर्द्धस्ता उभावग्निं गमयात्रेति तस्माद्वा एतदुभय ँ सह क्रियते**" इति श्रुतेः सूत्रकारस्यापि तत्र तात्पर्यकल्पनात् । "**पर्यग्नि कुर्य्यात्**" इति सूत्रम् । आज्यमित्यनुवर्तते । अधिश्रितस्याज्यस्य परितः अग्निङ्कुर्य्यात् इति तात्पर्यम् । पर्य्यग्निकरणम् परितः उल्मुकभ्रामणं न तु परितः अग्निस्थापनम् । अत्र "**निरुप्याज्यमधिश्रित्य पर्य्यग्नि कुर्य्यात्**" इति सूत्रस्थमाज्यपदं चर्वादीनामुपलक्षणार्थम् । एवं चर्वादीनामपि निर्वापाधिश्रयणपर्य्यग्निकरणानि भवन्ति । **अत्र नियते सामान्यतः प्रतिनिधिः स्यात्**" इति सूत्रात् मुख्यद्रव्याभावे तत्सदृशं प्रतिनिधेयम् । तत्र मुख्यं द्रव्यं गव्यमाज्यं व्रीहयो यवाश्च । तत्र घृतमात्राभावे प्रतिनिधिर्ग्राह्यः । तदाह मण्डनः—

**घृताभावे भरद्वाजबौधायनमुनी पृथक् ।**
**आहतुः सूत्रबौधायनोक्तमादौ वदिष्यते ॥**

**घृतार्थे गोघृतङ्ग्राह्यं तदभावे तु माहिषम् ।**
**आजं वा तदभावे तु साक्षात्तैलमपीष्यते ॥**
**तैलाभावे गृहीतव्यं तैलं यत्तिलसम्भवम् ।**

तदभावेऽतसीस्नेहः कौसुम्भः सर्षपोद्भवः ॥
वृक्षस्नेहोऽथ वा ग्राह्यः पूर्वालाभे परः परः ।
तदभावे यवव्रीहिश्यामाकान्यतमोद्भवम् ॥
भरद्वाजोऽन्यथा प्राह घृतप्रतिनिधिं मुनिः ।
गव्याज्याभावतश्छागमहिष्यादेर्घृतङ्क्रमात् ॥
तदभावे गवादीनां क्रमात्क्षीरं विधीयते ।
तदभावे दधि ग्राह्यमलाभे तैलमिष्यते ॥

व्रीहीनां यवानाञ्च मुख्यत्वमाह कात्यायनः "व्रीहीन्यवान्वा हवीषीति"। तदभावे एतत्सुसदृशं ग्राह्यम्। अत्र मण्डनोक्ता मुख्या विशेषाः—

हविर्व्रीहिमयङ्कार्य्यं यद्वा यवमयम्भवेत् ।
तयोरभावे श्यामाका नीवारा वा हविर्भवेत् ॥
वेणुयवा गोरसं वा कंदमूलफलं जलम् ।
सत्यं वा हविरेतेषां यथासम्भवमाहरेत् ॥
प्रतिनिध्यन्तरं सत्यं विज्ञेयं हविरत्यये ।
प्रधानदेवतोद्देशात्सन्त्यजेत्सत्यमात्मनः ॥
अतोऽन्यदपि वा ग्राह्यं सदृशं धान्यमात्रकम् ।
न ग्राह्यं सर्वथा माषमसूरदरकोद्रवम् ॥
यद्वा व्रीहियवाभावे तुषतण्डुलयोगिनीः ।
ओषधीः प्रतिगृह्णीयादणुकोद्रववर्ज्जिताः ॥
ग्राम्याणां वा भवेद्ग्राम्यमारण्यानामरण्यजम् ।
यवाभावे तु गोधूमास्ततो वेणुयवादयः ॥
छन्दोगगृह्यवचनाज्जुहुयाद्धविरत्यये ।
फलं यज्ञियवृक्षस्य तत्पत्रमथवा जलम् ॥
आग्रायणे न लभ्यन्ते श्यामाकाश्चेत्कथञ्चन ।
श्यामाकप्रस्तरस्तत्र कार्य्यो बौधायनाशयात् ॥ इति ।

"स्रुवं प्रतप्य" स्रुवप्रतपनमधोमुखस्याग्नौ तापनम् "संमृज्य"

इति सूत्रम्। सम्मार्जनञ्च कात्यायनेनोक्तम् "वेदाग्रैरन्तरतः प्राक् संमार्ष्ट्यनिशित इति विपर्य्यस्य बहिर्मूलैः प्राङुत्क्रम्य इति"। वेदः—ग्रथितकुशमुष्टिविशेषः। तदग्रैः अन्तरतः मुखप्रदेशे उपरि प्रदेशे इति यावत्। प्राक् प्राक्संस्थं संमार्ष्टि सम्यक् प्रकारान्तरेण तत्संलग्नं रजःपातः यथा स्यात्तथा मार्जनङ्करोति। विपर्य्यस्येति। प्राक् इत्यस्य विपर्य्यासः प्रत्यक् इत्यर्थः। बहिः बाह्यतः मूलैः वेदाग्रमूलैः प्राङुत्क्रम्य(१)प्रागगत्वा। अत्र स्मार्त्ते वेदाभावेन तदग्रस्याभावात् संमार्गार्थं कुशा एवोपादीयन्ते, वेदस्यापि कुशात्मकत्वेन कुशांशे बाधायोगात्। तथा च च्छन्दोगपरिशिष्टे कात्यायनः—

तेषां प्राक्शः कुशैः कार्यः सम्प्रमार्गो जुहूषता। इति।

तेषां कुशानामग्नौ प्रक्षेप इति आह आश्वलायनकारिका—

"तान्कुशान्कृतसम्मार्गान्प्रोष्याग्नौ प्रहरेदथेति"।

युक्तश्चैतत् श्रौते दर्शनात्। "अभ्युक्ष्य" इति सूत्रम्। अभ्युक्षणं सेचनम्। तच्च प्रणीतोदकेन, यावदुदककार्य्यार्थं प्रणीतानामुपादानात्। "पुनः प्रतप्य निदध्यात्" इतिसूत्रम्। पुनरुक्तप्रकारेण प्रतपनङ्कृत्वा निदध्यात्। निधानञ्चाज्यदेशाद्दक्षिणतः, दर्शपूर्णमासयोस्तथा दृष्टत्वात्। आत्मनो दक्षिणतो निधानमिति पद्धतिकाराः। पठन्ति च—

पुनः प्रतप्य तौ मन्त्री दर्भानग्नौ विनिक्षिपेत्।
आत्मनो दक्षिणे भागे स्थापयेत्तौ कुशान्तरे॥

तौ स्रुक्स्रुवौ। स्रुवस्यायं संस्कारो होमार्थः। एवञ्च दृष्टार्थता तत्संस्कारस्य। अतः संस्कारविस्मरणे प्रायश्चित्तपूर्वकम्प्रागन्त्यहोमात्कार्यः। ऊद्ध्र्वन्तु प्रायश्चित्तमात्रम्। "प्रोक्षण्युदकेनाभ्युक्षणमि"ति गर्गः। "आज्यमुद्वास्य" इति सूत्रम्। उद्वासनमुत्तारणम्। तच्च उत्तरतः। तथा च कात्यायनसूत्रम् "उदगुद्वासयति हविश्चेति"। "उत्तरत उपचारो वै

(१) प्राङुत्क्रम्य किञ्चित्प्राग्देशं गत्वेत्यर्थः। एतदुत्क्रमणमन्तःसंमार्गकाले बहिःसंमार्गकाले च उभयत्र कार्यम "प्राङ वैवोत्क्रम्य" इति श्रुतेः।

यज्ञ इति" श्रुतेश्च। आज्यमिति चरोरप्युपलक्षणार्थम्, तस्यापि होमार्थत्वेनावश्यकत्वात्। तत्र आज्यमुत्थाप्य चरोः पूर्वेण नीत्वाऽग्नेरुत्तरतः स्थापयित्वा चरुमुत्थाप्य आज्यपश्चिमतो नीत्वा आज्यस्योत्तरतः स्थापयेत् इति सम्प्रदायः। अपरे तु "हविष्पात्रस्वाम्यृत्विजां पूर्वं पूर्वमन्तरं ऋत्विजाश्च यथापूर्वमिति"परिभाषासूत्रात्। शृतानान्तु पूर्वेणोद्वासितानान्तु पृष्ठत इति रीत्यैव स्मार्त्ते उद्वासनमाहुः। उद्वासितमाज्यं चरुश्चाग्नेः पश्चिमतो निदध्यात्। श्रौते हविरासादनस्य तथा दृष्टत्वात् इति सम्प्रदायः।"उत्पूय"इति सूत्रम्।आज्यमित्यनुवर्त्तते। उत्पवनमुत्क्षेपणमात्रमिति बहवः। उदगग्रे पवित्रे धारयन्नङ्गुष्ठाभ्याम् चोपकनिष्ठिकाभ्याञ्चोभयतः प्रतिगृह्योदूर्ध्वाग्रे प्रह्वे कृत्वाऽज्ये प्रत्यस्यति। "सवितुस्त्वा प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण सूर्य्यस्य रश्मिभिरि"त्याज्यसंस्कारः। सर्वत्र "नासंस्कृतेन जुहुयात्" इति शाङ्खायनगृह्यप्रकारेणोत्पवनम्, उत्पवनप्रकारविशेषस्याकांक्षितत्वात्। आकांक्षितं परोक्तमपि गृह्यते अविरोधात्। सवितुस्त्वेति मन्त्रस्तु न गृह्यते। "एष एव विधिर्यत्र क्वचिद्धोमः" इत्यनेन विरोधादित्यन्ये। "अवेक्ष्य" इति सूत्रम्। अवेक्षणमवलोकनमाज्यस्य। "प्रोक्षणीश्च पूर्ववत्" इति सूत्रम्। चकारादुत्पूय। पूर्ववत् श्रौतवत्, तेन पवित्राभ्यामिति लभ्यते। गदाधरमते व्याख्या—पूर्ववदिति पवित्राभ्यां प्रोक्षणीरुत्पूय तास्वेव पवित्रनिधानम्। चशब्दादाज्यमपि। पूर्ववदेव पवित्राभ्यामुत्पवनम्। प्रोक्षणीसंस्कारोऽयं पर्य्युक्षणार्थः। "उपयमनकुशानादाय" इति सूत्रम्। उपयमनकुशा उपग्रहार्थाः कुशाः तान् दक्षिणहस्तेनादाय सव्ये निधाय। "समिधोऽभ्याधाय" इति सूत्रम्। तिष्ठन् समिधः प्रक्षिप्य "तिष्ठन् समिध आदधात्यस्थीनि वै समिधस्तिष्ठतीव वा अस्थीनीति" श्रुतेः। "तिष्ठन् समिधः सर्वत्र मध्ये" इति कात्यायनसूत्राच्च। ताश्च प्रागग्रा आदधाति।

प्रागग्राः समिधो देया स्ताश्च काम्येष्वपाटिताः।
शान्त्यर्थेषु सवल्कार्द्रा विपरीता जिघांसता॥

इति गृह्यपरिशिष्टात । "पर्य्युक्ष्य" इति सूत्रम् । चुलकगृहीतेनोदकेनाग्निंईशानादि तदन्तं परिषिच्य । एतच्च प्रोक्षण्युदकेन, उत्पवनरूपप्रोक्षणीसंस्कारस्योत्तरकार्यार्थत्वात् ।

ऊर्द्ध्वपादावधोवक्त्रः प्राङ्मुखो हव्यवाहनः ।
ईदृशे वह्निरूपे तु आहुतिः कस्य दीयते ॥
सपवित्राम्बुहस्तेन वह्नेः कुर्य्यात्प्रदक्षिणम् ।
हव्यवाट् सलिलं दृष्ट्वा बिभीतः सन्मुखो भवेत् ॥

"जुहुयात्" इति सूत्रम् । वक्ष्यमाणहोमङ्कुर्यात् । संस्रवधारणार्थम् पात्रं प्रणीताग्न्योर्मध्ये निदध्यात् । "एष एव विधिर्यत्र क्वचिद्धोमः" इति सूत्रम् । एषः परिसमूहनादिपर्य्युक्षणपर्य्यन्तो विधिरेव न मन्त्राः, एवकारो मन्त्रप्रतिषेधार्थः । क्व ? यत्र क्व चन लौकिके स्मार्त्ते वाग्नौ होमस्तत्र वेदितव्यः । अत्र देवीपुराणे प्रत्येकं परिसमूहनादिषु मन्त्रा उक्ताः । "यद्देवा देवहेडनमिति परिसमूहनम् । मानस्तोक इत्यनुलेपनम् । त्वां वृत्रेष्विन्द्र सत्पतिमित्युल्लेखनम् । व्रजं गच्छेत्युद्धरणम् । देवस्य त्वेत्यभ्युक्षणम् । अग्निर्मूर्द्धेत्यग्न्युपसमाधानम् । समिधाग्निं दुवस्यतेति समिदाधानम् । मयि गृह्णामीत्यग्नेः सन्धुक्षणम् । हिरण्यगर्भेति ब्रह्मासनम् । आपोहिष्ठेति प्रणीताः । कया नश्चित्र इति प्रणीतापूरणम् । पवित्रेस्थो वैष्णव्याविति पवित्रकरणम् । इषेत्वेत्याज्यनिर्वपनम् । त्रातारमिन्द्रमिति स्रुवप्रतपनम् । अनिशितोऽसि सपत्नक्षिदिति संमार्ज्जनम् । धूरसीत्यभ्युक्षणम् । प्रत्युष्टᳲरक्ष इति पुनः प्रतपनम् । सवितुर्वः प्रसव इत्युत्पवनम् । धूरसीति पर्य्युक्षणम्" । इति ।

एवंलक्षणसंयुक्तं सर्वहोमेषु याज्ञिकम् ।
विधानं विहितं तत्र ब्रह्मणाऽमिततेजसा ॥
अन्यथा ये प्रकुर्वन्ति सूत्रमाश्रित्य केवलम् ।
निराशास्तस्य गच्छन्ति सर्वे देवा न संशयः ॥

सूत्रे मन्त्रवर्जितकुशकण्डिकाकरणमुक्तम् , देवीपुराणे तु समन्त्रकम्

कुशकाण्डिकाकरणम् इत्येवं सन्देहे प्राप्ते निर्णयमाह संहिताप्रदीपः —

**एकार्थरूढानि वचांसि यानि मिथोविरुद्धार्थपदानि सन्ति ।**
**न तानि मिथ्या मुनिभाषितानि विद्वान्विदध्याद्विषयव्यवस्थाम् ॥**

इदं तु देवीपुराणोक्तशान्तिकस्थालीपाकपरम् , तदन्ते एव तत्र पाठात् । सामान्यतः स्मार्त्तकर्ममात्रपरत्वे च "**एष एव विधिर्यत्र क्वचिद्धोम**" इति इत्यादिसूत्रविरोधः स्यात् । कर्काचार्य्येण एवं निर्णीतम्—यत्र क्वचिद्धोमः शान्तिकपौष्टिकादिष्वपीति क्वचिच्छदः गृह्याग्निव्यतिरेकेणापि यथाऽयं विधिः ।

अथात्र वक्ष्यमाणविवाहहोमप्रसङ्गेन सर्वकर्मसाधारणीं परिभाषामाह "**अन्वारब्ध आघारावाज्यभागौ महाव्याहृतयः सर्वप्रायश्चित्तं प्राजापत्यꣳस्विष्टकृच्चैतन्नित्य ꣳसर्वत्र**" इति सूत्रम् । अस्यार्थः । अन्वारब्धः ब्रह्मणा कृताऽन्वारम्भः । यद्यपि "**दानवाचनान्वारम्भवरवरणव्रतप्रमाणेषु यजमानं प्रतीयादिति**'कात्यायनपरिभाषातः यजमानकर्त्तृकोऽन्वारंभः सर्वत्र, तथाप्यत्र होमे यजमान एव कर्त्तेति स्वस्मिन् स्वकर्त्तृकान्वारम्भासम्भवेन होमकर्त्तुरन्वारम्भस्य यजमानकर्त्तृकस्यासम्भवात् अन्यकर्त्तृक एवान्वारम्भो वाच्यः । अन्यश्च न पत्नी "**अक्लृप्तो वा कश्चित्कर्माणि पुरुषाणामि**"ति कात्यायनपरिभाषया क्लृप्तऋत्विजामेव कर्मकर्त्तृत्वबोधनात् , प्रकृते च ब्रह्मणः सत्त्वात् तत्कर्त्तृक एवान्वारम्भ इति । अथैवमुक्तपरिभाषया ब्रह्मण एव सकलेतिकर्त्तव्यताकलापकर्त्तृत्वमस्तु अन्वारम्भे यजमानस्यैव कर्त्तृत्वमस्त्विति चेन्न । परिसमूह्येत्यादिभिर्ल्यबन्तैः परिसमूहनादीनां सर्वेषां पदार्थानां समानकर्त्तृकत्वलाभात् । परिसमूहनादौ तु न ब्रह्मणः कर्त्तृत्वम् तदानीं तस्याविद्यमानत्वात् । न हि ब्रह्मोपवेशनात्पूर्वमपि तस्मिन्कर्मणि ब्रह्मास्ति येन तत्कर्त्तृकं परिसमूहनादि भवेत् इति ।

"**ब्रह्मैवैक ऋत्विक् पाकयज्ञेषु स्वयं होता भवति**" ॥ इति गोभिलगृह्याच्च । ब्रह्मणा दक्षिणे बाहौ दक्षिणहस्तेन अन्वारब्धे कृते सति आघारसंज्ञके आहुतिं जुहोति । आघारशब्देन होमविशेषो । तत्र

पूर्वाघारः प्राजापत्यः अग्नेरुत्तरभागे। उत्तराघार ऐन्द्रः अग्नेर्दक्षिणभागे। पूर्वाघारोऽग्नेरुत्तरप्रदेशे उत्तराघारश्च दक्षिणप्रदेश इति। "स यदुभयत आघारयतीति" श्रुतेः। "दक्षिणहस्तेनान्तरेण जानुनी आसीन आघारौ जुहोति प्राजापत्यमुत्तरार्द्धे प्राञ्चं मनसा ऐन्द्रं दक्षिणार्द्धे प्राञ्चमेवेति' मैत्रायणीगृह्याच्च। आज्यभागौ अग्निदैवत्यसोमदैवत्यौ होमविशेषौ। तत्राग्नेयमुत्तरपूर्वार्द्धे सौम्यं दक्षिणपूर्वार्द्धे अतिप्रज्वलितप्रदेशे वा तदुभयं जुहोति। "आग्नेयमुत्तरपूर्वार्द्धे दक्षिणपूर्वार्द्धे सौम्य२ सभिद्धतमे वेति" कात्यायनोक्तेः। अत्र च सर्वत्रान्ते स्वाहाकारः कार्यः। सीतायज्ञप्रकरणे "मन्त्रवत्प्रदानमेकेषाᳬ स्वाहाकारप्रदाना इति श्रुतेर्विनिवृत्तिरिति" सूत्रेण पारस्करेणैव सर्वत्र स्वाहाकारेणैव होमस्योक्तत्वात्। "स्वाहाकारः सर्वत्रेति स्वाहाकारप्रदाना" इति च कात्यायनसूत्रात्। स्वाहाकारपरिप्राप्तौ तदेकवाक्यत्वाय चतुर्थ्यन्तं देवतापदं उच्चार्य स्वाहान्तेन होमः कार्य इति। तथा च शाङ्खायनगृह्यम् "अनाम्नातमन्त्रास्वादिष्टदेवतासु अमुष्मै स्वाहेति जुहुयादिति"। हिरण्यकेशिगृह्यञ्च "सर्वदर्विहोमानामेषकल्पो मन्त्रान्ते स्वाहाकारोऽमन्त्रास्वामुष्मै स्वाहेति यथादैवतमिति। एते सर्वेपि होमाः समिद्धे कार्याः। तथा च च्छन्दोगपरिशिष्टे कात्यायनः—

योऽनर्चिषि जुहोत्यग्नौ व्यङ्गारिणि च मानवः।
मन्दाग्निरामयावी च दरिद्रश्चापि जायते॥
तस्मात्समिद्धे होतव्यं नासमिद्धे कदाचन।
आरोग्यमिच्छन्नायुश्च श्रियमात्यन्तिकीं तथा॥

अग्निधमनेऽपि विशेष उक्तस्तत्रैव—

जुहूषंश्च हुते चैव पाणिशूर्पास्यदर्विभिः।
न कुर्यादग्निधमनं कुर्याद्वा व्यजनादिना॥
मुखेनैके धमन्त्यग्निं मुखाद्ध्येषोऽध्यजायत॥ इति।

मुखेन धमनञ्चलौ न भवति इत्याहतुर्माधवपृथ्वीचन्दोदयौ—

प्रजार्थन्तु द्विजाग्र्याणां प्रजाऽरणिपरिग्रहः।

ब्राह्मणानां प्रवासितं मुखाग्निधमनन्तथा ॥

इति न भवति इत्यनुवर्त्तते । यत्तु वंशादि व्यवधाय धमनमाचरन्ति तन्मुखविन्नुट्पतनशङ्कया । गौतमस्तु सामान्येनैव मुखं निषेधयति "अग्निमुखोपधमनविगृह्यवादादि वर्जयेत्" इति । एवं "प्रजापतये स्वाहा" इति मन्त्रेण पूर्वाघारो भवति इति तु पद्धतयः ।

त्यागश्च इदं प्रजापतये नमम इत्येवम् । स च पत्नीयजमानाभ्याम् उभाभ्यामपि कार्यः उभयोः स्वामित्वाविशेषात् । "प्रधानर्ठ० स्वामीफलयोगादिति" । कात्यायनेन सामान्यतः स्वामिन एव त्यागकरणस्योक्तत्वात् । मण्डनेन तु विशेषः(१)—

तुल्य एवाधिकारः स्याद्दम्पत्योरुभयोरपि ।
कर्तृत्वश्च तयोस्तुल्यं द्रव्यत्यागे प्रचक्षते ॥
यद्वा त्यागं पतिः कुर्य्यात्पत्नी तदनुमन्यते ।
अधिकारे च वैषम्यं प्रोक्तं शब्दानुसारिणा ॥
प्राधान्येन स्वनिष्ठः सन् यजमानोऽधिकारवान् ।
पत्नी तत्परतन्त्रा सत्यङ्गभूताधिकारिणी ॥

तथा—

सन्निधौ यजमानः स्यादुद्देशत्यागकारकः ।
असन्निधौ तु पत्नी स्यादुद्देशत्यागकारिका ॥
असन्निधौ तु पत्नी स्यादध्वर्य्युस्तदनुज्ञया ।
उन्मादे प्रसवे चर्त्तौ कुर्वीतानुज्ञया विना ॥

तथा—

उभावप्यसमर्थौ चेन्नियुक्तः कश्चन त्यजेत् । इति ।

महाव्याहृतयोऽप्येतृप्रसिद्धाः भूर्भुवःस्वास्तिस्रः । सर्वानुक्रमेऽपि "भूर्भुवः स्वस्तिस्रो महाव्याहृतयोऽग्निवायुसूर्य्यदेवत्याः क्रमेणेति" । सर्वप्रायश्चित्तम् इति त्वन्नो अग्न इत्यादिमन्त्रकरणकपञ्चहोमानां संज्ञा । "सर्वप्रायश्चित्तं पञ्चभिः प्रत्यृचं त्वन्नो अग्न इति द्वा-

---

(१) उक्त इति शेषः ।

भ्याम् आयाश्चाग्ने ये ते शतमुदुत्तमामिति" च कात्यायनसूत्रम्। प्राजापत्यं प्रजापतिदैवत्यकर्म होम इति यावत्। स्विष्टकृच्च। स्विष्टकृच्छब्देन स्विष्टकृद्दैवत्यो होम इत्युच्यते। स च 'अग्नये स्विष्टकृते स्वाहा'। अत्रावदाने हविष उत्तरार्द्धादवदाय अग्नेरुत्तरार्द्धे होतव्यम्। स्विष्टकृतं प्रकृत्यैव "सर्व्वा उत्तरार्द्धादवद्यत्युत्तरार्द्धे जुहोति" इति श्रुतेः। पूर्वं हुताभिराहुतिभिः संसर्गो यथा न भवति तथा च होतव्यम्। "असंसृष्टामाहुतिभिरिति" कात्यायनसूत्रम्। "अग्नये स्विष्टकृतेस्वाहेत्यसंसक्तामुत्तरार्द्धपूर्वार्द्धे जुहोति" इति मैत्रायणीयगृह्याच्च। अत्र कदाचिन्महाव्याहृतिभ्यः प्राक् स्विष्टकृद्धोमो भवति कदाचित्पश्चात्। स च कर्मविशेषस्थानान्तरे भवति "प्राङ्महाव्याहृतिभ्यः स्विष्टकृदन्यच्चेदाज्याद्धविः" इतिवक्ष्यमाणसूत्रम्। महाव्याहृतिभ्यः प्राक् स्विष्टकृद्धोमो भवति चेद्यदि आज्यात्सकाशादन्यदपि चरुप्रभृति हविर्भवति। केवलाज्ययागे सर्वाहुतिशेषे भवति। कर्मकौमुद्याम् —

स्वाहान्ते जुहुयाद्धोता स्वाहया सह वा हविः।
त्यागान्ते ब्रुवते केचिद्द्रव्यप्रक्षेपणं बुधाः॥
हीयते यजमानश्चेत्स्रुवमूलस्य दर्शनात्।
तस्मात्संगोपयेन्मूलं होमकाले स्रुवस्य च॥

पाण्याहुतिर्द्वादशपर्वपूरिका कंसादिना चेत्स्रुवपूरमात्रकम्।
दैवेन तीर्थेन च हूयते हविः स्वङ्गारिणि स्वर्चिषि तच्च पावके॥
उत्तानेन तु हस्तेन त्वङ्गुष्ठाग्रेण पीडितम्।
संहताङ्गुलिपाणिस्तु वाग्यतो जुहुयाद्धविः॥

इति विधानपारिजातात्। "एतन्नित्यꣳसर्वत्र" इति सूत्रम्। एतच्चतुर्दशाहुतिकं कर्म नित्यं सर्वकर्मसु च भवति। ततः संस्रवप्राशनम्। अत्र सर्वहोमार्थं स्रुवेण गृहीतस्यासर्वहोमः हुत्वा च पात्रान्तरे तस्य शेषस्य स्थापनम्। सर्वहोमान्ते च सर्वशेषाणां प्राशनम्। तथा च कात्यायनः "पाकयज्ञेष्ववत्तस्यासर्वहोमो हुत्वा शेषप्राशनम्" इति। अस्यार्थः पाकयज्ञशब्देन स्मार्त्तहोमा उच्यन्ते। अत्र होमार्थं यद-

वत्तं गृहीतं तस्य असर्वहोमः कर्त्तव्यः । स्रुवादिभिर्यद्गृहीतं तद्धुत्वा किंचित्परिशिष्य पात्रान्तरे स्थापनमित्यर्थः । सर्वहोमाद्धुत्वा पात्रान्तरस्थापितसर्वशेषाणां प्राशनमाह रेणुः—

स्रुवहोमे सदा त्यागः प्रोक्षणीपात्रमध्यतः ।
पाणिहोमे सदा त्यागो विना प्रोक्षणिकं द्विज ! ॥

शोधः—

ऋत्विजां जुह्वतां वह्नौ बहिः पतति यद्धविः ।
स ज्ञेयो वारुणो भागः प्रक्षेप्यो विमले जले ॥

इति रङ्गनाथकृतरुद्रपद्धतौ ।

अथ दक्षिणा । तत्र कात्यायनः पाकयज्ञेष्वनुवर्त्तमानेषु "पूर्णपात्रं दक्षिणा वरो वा" इति । मैत्रायणगृह्ये च "पूर्णपात्रं दक्षिणा बर्हिरनुप्रहरत्येतेन स्थालीपाकेन स्थालीपाकाः सर्वे व्याख्याता" इति । पूर्णपात्रञ्च परिभाषितं यज्ञपार्श्वे—

अष्टमुष्टिर्भवेत्किञ्चित्किञ्चिदष्टौ च पुष्कलम् ।
पुष्कलानि च चत्वारि पूर्णपात्रं तदुच्यते ॥

एतदशक्तौ तु—

यावता बहुभोक्तुस्तु तृप्तिः पूर्णेन विद्यते ।
नावरार्ध्यमतः कुर्य्यात्पूर्णपात्रमिति स्थितिः ॥

इति च्छन्दोगपरिशिष्टीयकात्यायनवचनात् । ततो न्यूनमपि भवति । "औषधस्य मानपात्रं पूर्णं पूर्णपात्रमिति" तु कर्कः । तथा गोभिलगृह्यम् "पूर्णपात्रो दक्षिणान्नं ब्रह्मणे दद्यात् कंसं वा चमसं वाऽन्नस्य पूरयित्वा कृतस्य वापि वा फलानामेवैतत् पूर्णपात्रमित्याचक्षत इति" । अत्र च शक्तितो व्यवस्था "स्वाधीनं द्रव्यं वरशब्देनोच्यते" इति कर्कः । "गौर्ब्राह्मणस्य वरो ग्रामो राजन्यस्याश्वो वैश्यस्येति" पारस्करपरिभाषित एव वरः सर्वत्र ग्राह्यः ।

इति श्रीप्रथमशाखीयरामकृष्णविरचिते पारस्करगृह्यसूत्रविवरणे संस्कारगणपतौ प्रथमकण्डिका ॥ १ ॥

अथास्य स्पष्टप्रयोगः। कर्त्ता प्राङ्मुखः शुचिपीठे उपविश्य शुद्धायां भूमौ सप्तविंशत्यङ्गुलं मण्डलं परिलिख्य तत्र त्रिभिर्दर्भैः पांसूनपसार्य, गोमयोदकेनोपलिप्य, खादिरेण स्फ्येन प्रागग्रोदक्संस्थाः स्थण्डिलपरिमाणास्तिस्रो लेखा लिखेत्। अनामिकाङ्गुष्ठाभ्यां यथालिखिताभ्यो रेखाभ्यः पांसूनुद्धृत्य, उदकेनाभ्युक्ष्य, कर्मसाधनभूतमग्निं सीमन्तिन्या स्थापयित्वा, अग्नेर्दक्षिणतो ब्रह्मासनमास्तीर्य्य, तत्र ब्रह्मोपवेशनम्। अग्नेरुत्तरतः प्रागग्रं कुशैरासनद्वयं स्थापयित्वा चमसं वामहस्ते कृत्वा दक्षिणहस्तोद्धृतपात्रस्थोदकेन पूरयित्वा पश्चिमासने निधायालभ्य ब्रह्मणो मुखमवलोक्य पूर्वासने स्थापयित्वा, बर्हिर्मुष्टिमादाय, ईशानादिप्रागग्रैर्बर्हिर्भिरुदक्संस्थमग्नेः परिस्तरणम्। अग्नेरुत्तरतः पश्चाद्वा पात्रासादनम्। पवित्रच्छेदनानि त्रीणि। पवित्रे द्वे। प्रोक्षणीपात्रम्। आज्यस्थाली। चरुस्थाली। संमार्गकुशाः पञ्च। उपयमनकुशाः सप्त। समिधस्तिस्रः। स्रुवः। आज्यम्। व्रीहयः। तण्डुलाः। पूर्णपात्रम्। दक्षिणा। पवित्रच्छेदनैः पवित्रीकरणम्। द्वयोरुपरि त्रीणि निधाय। द्विमूलेन प्रदक्षिणीकृत्य त्रिभिश्छिद्य। द्वौ ग्राह्यौ त्रिस्त्याज्यः। प्रोक्षणीपात्रे प्रणीतोदकमासिच्य पवित्राभ्यामुत्पवनम्। पवित्रयोः प्रोक्षणीषु निधानम्। प्रोक्षणीनां सव्यहस्तकरणम् दक्षिणेनोदिङ्गनम्। प्रणीतोदकेन प्रोक्षणीनां प्रोक्षणम्। प्रोक्षण्युदकेन आज्यस्थाल्याः प्रोक्षणम्। चरुस्थाल्याः प्रोक्षणम्। सम्मार्गकुशानां प्रोक्षणम्। उपयमनकुशानां प्रोक्षणम्। समिधां प्रोक्षणम्। स्रुवस्य प्रोक्षणम्। आज्यस्य प्रोक्षणम्। तण्डुलानां प्रोक्षणम्। पूर्णपात्रस्य प्रोक्षणम्। असञ्चरे प्रोक्षणीनां निधानम्। आज्यस्थाल्यामाज्यनिर्वापः। चरुपात्रे प्रणीतोदकासेकपूर्वकं तण्डुलप्रक्षेपः। आज्याधिश्रयणम्। चरोरधिश्रयणम्। आज्यस्योत्तरतः। पर्यग्निकरणमुभयोः। अर्धशृतचरौ स्रुवस्य प्रतपनं न्युब्जपुष्करस्य। सम्मार्गकुशैः सम्मार्जनमुत्तानपुष्करस्य। बुध्न्यादारभ्य कुशैरग्रपर्य्यन्तं सम्मृज्याग्रादारभ्य अधस्तान्मूलैर्मूलान्तम्। प्रणीतोदकेनाभ्युक्षणम्। पुष्करादारभ्य पुनः प्रतपनम्। दक्षिणतो निधानम्।

आज्योद्वासनम्। चरोः पूर्वेणानीयाग्नेरुत्तरतः स्थापयेत्(१)। आज्योत्पवनम्। अवेक्षणम्। अपद्रव्यनिरसनम्। प्रोक्षण्युत्पवनम्। उपयमनकुशादानम्। तिष्ठन्समिदाधानम्। प्रोक्षण्युदकेन प्रदक्षिणम् पर्य्युक्षणम्। पवित्रयोः प्रणितासु निधानम्। अथ दक्षिणं जान्वाच्य जुहोतिस्थान उपविष्ट उपयमनकुशसहितं प्रसारितांङ्गुलिकं सव्यहस्तं हृदि निधाय ब्रह्मणा कुशैरन्वारब्धः स्रुवेण जुहोति। अग्नेरुत्तरभागे ॐ प्रजापतये स्वाहा। इदं प्रजापतये नमम। अग्नेर्दक्षिणभागे ॐ इन्द्राय स्वाहा। इदमिन्द्राय नमम। समिद्धतमे ॐ अग्नये स्वाहा। इदमग्नये नमम। ॐ सोमाय स्वाहा। इदं सोमाय नमम। ॐ भूः स्वाहा। इदमग्नये नमम। ॐ भुवः स्वाहा। इदं वायवे नमम। ॐ स्वः स्वाहा। इदं सूर्य्याय नमम। ॐ त्वन्नो अग्ने व्वरुणस्य व्विद्वान्देवस्य हेडो अवयासिसीष्ठाः। यजिष्ठो वह्नितमः शोशुचानो व्विश्वा द्वेषाᳬंसि प्रमुमुग्ध्यस्मत्स्वाहा। इदमग्नीवरुणाभ्यां नमम। ॐ सत्वन्नो ऽअग्ने ऽवमो भवोती नेदिष्ठो अस्या उषसो व्युष्टौ। अवयक्ष्व नो व्वरुणᳬं रराणो व्वीहि मृडीकᳬं सुहवो न एधि स्वाहा। इदमग्नीवरुणाभ्यां नमम। अयाश्चाग्नेऽस्यनाभिशस्तिपाश्च सत्यमित्वमया असि। अया नो यज्ञं वहास्यया नो धेहि भेषजᳬं स्वाहा। इदमग्नये अयसे नमम। ॐ ये ते शतं वरुण ये सहस्रं यज्ञियाः पाशा वितता महान्तः। तेभिर्नो अद्य सवितोत विष्णुर्विश्वे मुञ्चन्तु मरुतः स्वर्काः स्वाहा। इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यश्च नमम। ॐ उदुत्तमं व्वरुण पाशमस्मदवाधमं व्वि मध्यमᳬं श्रथाय। अथा व्वयमादित्य व्रते तवानागसो अदितये स्वाम स्वाहा। इदं वरुणायादित्यायादितये नमम। ॐ प्रजापतये स्वाहा। इदं प्रजापतये नमम। ॐ अग्नये स्विष्टकृते स्वाहा। इदमग्नये स्विष्टकृते नमम। एवं केवलाज्यहोमे। यदि चर्वाद्यन्यदपि होमे द्रव्यं तदा महाव्याहृतिभ्यः प्राक् स्विष्टकृद्धोमः।

(१) चरुमुदगुद्वास्य आज्यस्य पश्चिमतो नीत्वा उत्तरतः स्थापयेत्। ततः स्वपुरतो दक्षिणत आज्यम् उत्तरतश्चरुं च कृत्वा। मूलपुस्तके रहितोऽप्ययं पाठोऽत्रापेक्षितः।

घृते होमद्रव्ये तदा प्रोक्षणीपात्रे प्रक्षेपः । चर्वादिद्रव्ये सति पात्रान्तरे । ततः संस्रवप्राशनम् । आचमनम् । पवित्राभ्यां नाभितो दक्षिणाङ्गेन शिरः-पर्य्यन्तं मार्जनम् । पवित्रत्यागोऽग्नौ । प्रणिताविमोकः प्रत्यक् । ब्रह्मन् अस्य कर्मणः साङ्गतासिद्ध्यर्थं पूर्णपात्रमेतत्तुभ्यमहं सम्प्रददे । यत्र यत्राग्नि-स्थापनं तत्र तत्रैते पदार्था भवन्ति ॥

अथावसथ्याधानं तत्साध्यानि कर्माणि च लिख्यन्ते । तत्रादौ तत्प्रशंसा तदधिकारी च लिख्यते ।

तत्र वाक्यम् गृहस्थकाण्डे—

**नावसथ्यात्परो धर्मो नावसथ्यात्परं तपः ।**
**नावसथ्यात्परं दानं नावसथ्यात्परं धनम् ॥**
**नावसथ्यात्परः सेव्यो नावसथ्यात्परं यशः ।**
**नावसथ्यात्परा सिद्धिर्नावसथ्यात्परा गतिः ॥**
**नावसथ्यात्परं स्थानं नावसथ्यात्परं तपः ॥ इति ॥**

अतः आवसथ्याधानमवश्यमेव कर्त्तव्यम् । आथर्वणगृह्ये च "**अथ योऽयमनग्निकः स कुम्भलोष्ठस्तद्यथा कुम्भे लोष्ठः प्रक्षिप्तो नैव-शौचार्थाय कल्प्यते नैव शस्यं निवर्त्तयत्येवमेवायं ब्राह्मणोऽनग्नि-कः तस्य ब्राह्मणस्यानग्निकस्य मा दैवं दद्यात् न पित्र्यं न चास्य स्वाध्यायाशिषो न यज्ञाशिष इति**" । केन कर्त्तव्यमित्यपेक्षायामाह । तत्र अङ्गहीनाश्रोत्रियषण्ढशूद्रवार्जितब्राह्मणराजन्यवैश्यानुलोम्यरथकारा-णां स्त्रीणां चाधिकारः । तत्राङ्गहीनस्यासमर्थत्वात् , अश्रोत्रियस्यावैदि-कत्वात् , षण्ढस्याशुचित्वात् , शूद्रस्यावैदिकत्वात् । ननु रथकाराणां स्त्रीणां चावैदिकत्वात्कथमधिकार इति चेत्, न । "**वर्षासु रथकार आदधीत**" इति पार्थक्येनाधानश्रुतेः । "**मेखलया यजमानं दीक्षयति योक्त्रेण पत्नी**"मित्यादिना स्त्रीणां दीक्षादिदर्शनेन रथकाराणां स्त्रीणाञ्चाधिकारः ।

तथा चात्रिः—

**ब्राह्मणाः क्षत्रिया वैश्याः शूद्रं हित्वाऽनुलोमजाः ।**
**अधिकुर्वन्ति गार्ह्येषु सह भर्त्रा स्त्रियस्तथा ॥**

स्त्रीणामत एव भर्त्रा सहाधिकारो न पृथक् । मनुरपि—

नास्ति स्त्रीणां पृथक् यज्ञो न व्रतं नाप्युपोषणम् ।
शुश्रूषयति भर्त्तारं तेन स्वर्गे महीयते ॥ इति ॥

अकृताधाने ज्येष्ठे सोदर्ये पितरि पितामहे वा तिष्ठति तु नाधिकारः । तदाहतुः शातातपसुमन्तू—

सोदर्ये तिष्ठति ज्येष्ठे न कुर्य्याद्दारसङ्ग्रहम् ।
आवसथ्यं तथाधानं पतितस्तु तथा भवेत् ॥
ज्येष्ठभ्राता यदा तिष्ठेत्पिता वाऽपि पितामहः ।
कनिष्ठपुत्रपौत्राणामाधानं नैव कारयेत् ॥

तिष्ठति इति अकृताधाने तिष्ठति इत्यर्थः ।

अग्रजस्तु यदाऽनग्निरधिकारोऽनुजे कथम् ।

इत्यनेनैकवाक्यत्वात् । कारयेत् कुर्य्यादित्यर्थः । अत्र सोदर्यपदं स्वपितृजन्यसोदर्यपरम् । तेन तथाविधे भिन्नपितृजन्यसोदर्ये तिष्ठति तु नाधिकारविघ्नात् । तदाहात्रिः—

क्षेत्रजादावनीजाने विद्यमानेऽपि सोदरे ।
नाधिकारविघातोऽस्ति भिन्नोदर्येपि चौरसे ॥ इति ॥

देशान्तरस्थादौ ज्येष्ठे सत्यपि नानधिकार इत्याह च्छन्दोगपरिशिष्टे कात्यायनः—

देशान्तरस्थक्लीबैकवृषणानसहोदरान् ।
वेश्यातिसक्तपतितशूद्रतुल्यातिरोगिणः ॥
जडमूकान्धबधिरकुब्जवामनखोडकान् ।
अतिवृद्धानभार्य्यांश्च कृषिसक्तान्नृपस्य च ।
धनवृद्धिप्रसक्तांश्च कामतोऽकारिणस्तथा ।
कुहकाँस्तस्करांश्चापि परिविन्दन्न दुष्यति ॥

एकवृषण एकाण्डः । शूद्रतुल्याः गोरक्षणादिकर्मपराः । मनुः—

गोरक्षकान्वाणिजकांस्तथा कारुकुशीलवान् ।

प्रेष्यान्वार्धुषितांश्चैव विप्रान् शूद्रवदाचरेत् ॥

खोडकः चरणरहितः। कामतोऽकारिणः स्वेच्छयैवाधानमकुर्वाणाः। कुहकः वृथा परवंचनायोद्योगपरः। शातातपोऽपि—

क्लीबे देशान्तरगते पतिते भिक्षुकेऽपि वा।
योगशास्त्राभियुक्ते च न दोषः परिवेदने ॥

भिक्षुको यतिः गद्गदः अस्पष्टवाक्। हेमाद्रौ सुमन्तुः—

ज्येष्ठो भ्राता यदा तिष्ठेदाधानं नैव कारयेत्।
अनुज्ञातस्तु कुर्वीत शङ्खस्य वचनं यथा ॥ इति ॥

भ्रातृपदश्च स्वपितृजन्यसोदरपरम्। तत्राधिकारिणोऽकृताधानस्य दोषश्रवणादाधानं नित्यम्। तदाह स्मृतिचन्द्रिकायां गर्गः—

कृतदारो न वै तिष्ठेत्क्षणमप्यग्निना विना।
तिष्ठन्भवेद्द्विजो व्रात्यस्तथा च पतितो भवेत् ॥

तच्च कदा भवतीत्यपेक्षायामाह—

**सू० आवसथ्याधानं दारकाले दायाद्यकाल एकेषां वैश्यस्य बहुपशोर्गृहादग्निमाहृत्य चातुष्प्राश्यपचनवत्सर्वमरणिप्रदानमेके पञ्चमहायज्ञा इति श्रुतेरग्न्याधेयदेवताभ्यः स्थालीपाकꣳश्रपयित्वाऽऽज्यभागाविष्ट्वाऽऽज्याहुतीर्जुहोति त्वन्नो अग्ने सत्वन्नो अग्न इमम्मे वरुण तत्वा यामि ये ते शतमयाश्चाग्न उदुत्तमं भवतन्न इत्यष्टौ पुरस्तादेवमुपरिष्टात्स्थालीपाकस्याग्न्याधेयदेवताभ्यो हुत्वा जुहोति स्विष्टकृते चायास्यग्नेर्वषट्कृतं यत्कर्मणाऽत्यरीरिचं देवा गातुविद इति बर्हिर्हुत्वा प्राश्नाति ततो ब्राह्मणभोजनम् ॥ २ ॥**

'आवसथ्याधानन्दारकाले' इति सूत्रम्। आवसथ्यस्य गृह्यस्याग्नेराधानमावसथ्याधानम्। तद्दारकाले विवाहकाले चतुर्थीकर्मानन्तरं कुर्यात्। प्राक् चतुर्थीकर्मणः पत्न्या भार्यात्वस्यानुपपत्तेः। सभार्यस्य च आधाने अधिकारः। केचित्तु 'पित्रा प्रत्तामादाय गृहीत्वा निष्क्राम-

ति' इत्येष दारकालः । प्राग्ध्रुवदर्शनाद्दारकाल इति भर्तृयज्ञः । वैवाहिकोऽग्निरेवौपासनाग्निरित्याश्वलायनादीनां पक्षः । ते हि विवाहहोममेव दाराग्न्योः संस्कारकं मन्यन्ते । अस्माकन्तु "आवसथ्याधानं दारकाले" इत्यारभ्याऽग्निसंस्कारस्य पारस्कराचार्येण पृथगभिधानात्तत्संस्कारसंस्कृतोऽग्निरौपासनः । "दायाद्यकाल एकेषाम्" इति सूत्रम् । दायं पैतृकं धनम् तस्य विभागादिना स्वीयत्वेन आद्यः(१) कालः । तस्मिन्काले आवसथ्याधानं कर्त्तव्यम् इत्येकेषामाचार्य्याणां मतम । एवञ्चात्र पारस्करकल्पानां माध्यन्दिनीयानामविभक्तदायादरहितानां दारकाले अविभक्तदायादवताञ्च तेषां दायाद्यकाल एवाधानं भवतीति व्यवस्थितविकल्प इति ।

अत एव रेणुः—

आधानं दारकाले वा कुर्य्याद्दायाद्यकालतः ।
अभ्रातृमान्दारकाले दायाद्ये भ्रातृमाँस्तथा ।
चतुर्थीकर्मनिर्वृत्तौ दारकालः प्रकीर्त्तितः ॥
भ्रातॄणां धनभागे सत्युक्तदायाद्यकालतः ।
व्यवस्थितविकल्पोऽयं भाष्यकारेण दर्शितः ॥

कालातिक्रमे तु—

यावदब्दान्यतीतानि निरग्नेर्विप्रजन्मनः ।
तावन्ति कृच्छ्राणि चरेद्धोम्यं दद्याद्यथाविधि ॥

अस्यार्थः अतिक्रान्तसंवत्सरसंख्यया प्राजापत्यरूपं प्रायश्चित्तं कृत्वा अतिक्रान्तदिवसान् गणयित्वा सायं प्रातर्होमद्रव्यं प्रत्यहमाहुतिचतुष्टयपर्याप्तं ब्राह्मणेभ्यो दद्यात् । प्राजापत्यलक्षणन्तु स्मृत्यर्थसारे—

त्र्यहं प्रातस्त्र्यहं सायं त्र्यहमद्यादयाचितम् ।
त्र्यहं परन्तु नाश्नीयात्प्राजापत्योऽयमुच्यते ॥

अत्र ग्राससंख्या पाराशरेणोक्ता—

सायन्तु द्वादश ग्रासाः प्रातः पञ्चदश स्मृताः ।
चतुर्विंशतिरयाच्याः परं निरशनं स्मृतम् ॥

(१) आद्यो नतु द्वितीयादिर्ग्राह्य इत्यर्थः ।

कुक्कुटाण्डप्रमाणस्तु यथा वास्य विशेन्मुखम् ॥ इति ।

कृच्छ्राद्यनुष्ठाने साधारणेतिकर्त्तव्यता मनुनोक्ता—

महाव्याहृतिभिर्होमः कर्त्तव्यः स्वयमन्वहम् ।

इदं मुख्यविधिना प्राजापत्यम् । तदशक्तौ प्रतिप्राजापत्यं गां दद्यात् तदभावे तन्मौल्यम् । तदुक्तं मनुना—

प्राजापत्यक्रियाऽशक्तौ धेनुं दद्याद्द्विजोत्तमः ।
धेनोरभावे दातव्यं मूल्यं तुल्यं न संशयः ॥
निष्कं निष्कार्धपादं वा पञ्च कार्षापणानि च ॥

तदशक्तौ द्वादशब्राह्मणभोजनमयुतगायत्रीजपं वा गायत्र्या तिलाज्य होमसहस्रं वा । तदुक्तं षट्त्रिंशन्मते—

कृच्छ्रोऽयुतश्च गायत्र्या द्वादश ब्रह्मभोजनम् ॥
तिलहोमसहस्रं च वेदाध्ययनमेव च ॥

अत्र प्रसङ्गात्सर्वेषां मूल्यान्याह । कात्यायनमूल्याध्यायपरिशिष्टे—

द्वात्रिंशत्पणिका गावश्चतुष्कार्षापणो वरः ।
वृषे षट् कार्षापणका अष्टावनडुहि स्मृताः ॥
दश कार्षापणा धेनोरश्वे पञ्चदशैव तु ।
हिरण्ये कार्षापणकः पणा नव तथाऽधिकाः ॥
वस्त्रे कार्षापणश्छागेऽष्टौ पणा द्वादशाविके ।
वृषल्यामथ पञ्चाशन्मूल्यं कार्षापणाः स्मृताः ॥
निष्के पञ्चाशदेव स्याद्गजे पञ्चशतानि तु ॥
पञ्च कार्षापणाः प्रोक्ता दोलायां षड् रथे तथा ।
गृहेऽष्टौ कार्षापणकास्ताम्रकर्षे पणः स्मृतः ।
ताम्रकर्षेऽपि च पण इति मूल्यप्रकल्पना ॥
अधिकं कल्पयेन्मूल्यं नोनं वित्तानुसारतः ॥ इति ॥

दक्षिणाविषय आवश्यकदाने मुख्यासम्भवे ग्राह्यः । अधमो ह्ययं पक्षः सति वित्ते नाश्रयणीयः । वित्तासम्भवेऽप्यतो न्यूनं न कुर्य्यात् । पणा वराटकामान-ताम्रमान रौप्यमान-सुवर्णमान-रजतमान-भेदात्पञ्चधा । अ०

शीतिकपर्द्दिकाभिः एकः पणः। अशीतिगुञ्जामितं ताम्रं ताम्रपणः। सार्द्धसर्षपमितं सुवर्णं रौप्यपणः। सपादषड्गुञ्जामितं सुवर्णं सुवर्णपणः। सपादषड्गुञ्जापरिमितं रजतं राजतः पणः। कपर्द्दिकापणप्रमाणमाह लीलावत्याम्—

वराटकानां दशकद्वयं २० यत्
सा काकिणी ताश्च पणश्चतस्रः ८० ॥
ते षोडश द्रम्म १२८० इहावगम्यो
द्रम्मैस्तथा षोडशभिश्च २०४८० निष्कः ॥ १ ॥

एवमशीति ८० वराटकपरिमितः प्रथमः पण इति। ताम्रपणप्रमाणमाह याज्ञवल्क्यः। "कार्षिकस्ताम्रिकः पणः" इति। कर्षपरिमितन्ताम्रं ताम्रपण इत्यर्थः। बृहस्पतिस्तु किञ्चिद्विशेषमाह—

ताम्रः कर्षमितं प्राप्तो विज्ञेयस्ताम्रिकः पणः। इति।

तत्र कर्षपरिमाणमाह मनुः—

जालान्तरगते भानौ यत्सूक्ष्मं दृश्यते रजः।
प्रथमं तत्प्रमाणानां त्रसरेणुः प्रचक्षते ॥
त्रसरेणवोऽष्टौ विज्ञेया लिक्षा तु परिमाणतः।
ता राजसर्षपस्तिस्रस्ते त्रयो गौरसर्षपः ॥
सर्षपाः षड् यवो मध्यस्त्रियवस्त्वेक(१)कृष्णलः।
पञ्चकृष्णलको माषस्ते सुवर्णस्तु षोडश ॥
पलं सुवर्णाश्चत्वारः पलानि धरणन्दश।

इत्येवं प्रमाणसिद्धस्य सुवर्णस्य द्वितीया संज्ञा कर्ष इति। तथा च लीलावत्याम्—

दशार्द्धगुञ्जं प्रवदन्ति माषं माषाह्वयैः षोडशभिश्च कर्षम्।
कर्षैश्चतुर्भिश्च पलं तुलाज्ञाः कर्षं सुवर्णस्य सुवर्णसंज्ञम् ॥

यद्यपि लीलावत्यां "तुल्या यवाभ्यां कथिताऽत्र गुंजा" इत्यत्र यवद्वयेनोक्ता, अत्र तु मध्ययवत्रयेणोक्तत्वात्तत्र गुरुयवद्वयं बोध्यमित्यदोषः। तेन कर्षपरिमिते ताम्रेऽपि पणो भवतीत्ययं द्वितीयः। रौप्यपणप्रमाणमाह—

(१) कृष्णलः गुञ्जा इत्यर्थः।

कार्षापणो दक्षिणस्यां दिशि रौप्ये प्रवर्त्तते(१) ॥

इति हेमाद्रौ नारदेनोक्तेः । कार्षापणं प्रकृतो वात् । अर्थात् कार्षापणस्य षोडशोंऽशः पणो भवतीति विज्ञायते तेन सार्द्धसर्षपमितं सुवर्णं रौप्यीयः पणस्तृतीयः । तथा विंशति षप्रमितस्य सुवर्णस्य सुवर्णकार्षापणत्वेन वक्ष्यमाणस्य षोडशोंऽशः सपादैकमाषात्मकः सौवर्णः पणश्चतुर्थः । तथा रजतस्य राजतविंशतिमाषप्रमितत्वेन वक्ष्यमाणषोडशोंऽशः सपादराजतमाषात्मको राजतः पणः पञ्चमः । रजतमाषस्वरूपमुक्तं हेमाद्रौ—

द्वे कृष्णले समधृते विज्ञेयो रूप्य(२)माषकः । इति ।

एवं कृते एकस्या गोर्मूल्यं वराटकामानेन षष्ठ्यधिकपञ्चविंशतिवराटका२५६०भवन्ति । ताम्रमानेन मृदुमुद्रांकितढबुकस्य चतुश्चत्वारिंशदधिकशत १४४ गुञ्जात्मकत्वात् अष्टादश १८ ढबुका (३)भवन्ति । रौप्यमानेन द्वियवाधिकगुञ्जाद्वयं सुवर्णं भवति । सुवर्णमानेन चत्वारिंशन्माषप्रमितं ४० सुवर्णं भवति । राजतमानेन चत्वारिंशन्माषप्रमितं ४० रजतं भवति । अथ वरमूल्यमाह । "चतुष्कार्षापणो वर" इति । चत्वारः कार्षापणा मूल्यं यस्य इति । तत्र कार्षापणमानमपि पञ्चधोक्तम् । वराटकामान-ताम्रमान रौप्यमान-सुवर्णमान-रजतमान-भेदात् । एतत्प्रमाणसंख्यादिकं पूर्वोक्तमेव । एवं सर्वत्र । अथ वृषमूल्यमाह । "वृषे षट् कार्षापणका" इति । वृषो नाम प्रजोत्पादनसमर्थोऽस्पृष्टधुरः । तस्य षट् कार्षापणका मूल्यं भवति । अथानडुहि मूल्यमाह "अष्टावनडुहि स्मृताः" इति ।

---

(१) अस्यार्थः ताम्रस्य कार्षापणो नाम कपर्दिकामानेन गो मूल्यं ॥) तदेव दक्षिणस्यां दिशि रौप्यकार्षापणे प्रवर्त्तते प्रचलतीति । तादृशमूल्योऽपि रौप्यीयः पण इति भावः । तेन द्विविधोऽयम् । तुलारूपो द्रव्यरूपश्चेति ध्येयम् ।

(२) हेमाद्रिमतस्यैवं स्वरूपं तेनायमपि द्विविधस्तुलारूप एव ।

(३) ढबुकानामधुना प्रचाराभावाद्द्वात्रिंशत्कर्षपरिमितन्ताम्रमेकस्या गोर्मूल्यमित्यवधेयम् ।

कार्षापणका इत्यनुवर्त्तते । ते चानडुहोऽष्टौ मूल्यं भवति । अनडुन्नाम प्रजोत्पादने धूर्वहने च समर्थः । अथ धेनुमूल्यमाह । "**दश कार्षापणा धेनोः**" इति । धेनुर्नाम वत्सप्रचुरदुग्धयुता धेनुः । तस्या दश कार्षापणा मूल्यम् । अथाश्वमूल्यमाह "**अश्वे पञ्चदशैव तु**" इति स्पष्टम् । हिरण्यमूल्यमाह—

**हिरण्ये कार्षापणकः पणा नव तथाधिकाः** । इति ।

नवपणाधिकैककार्षापणक इत्यर्थः । अथ वस्त्रमूल्यमाह "**वस्त्रे कार्षापण**" इति । एकः कार्षापणो वस्त्रमूल्यं भवति । अथ च्छागमूल्यमाह "**छागेऽष्टौ पणा**" इति । छागे अष्टौ पणा भवन्ति । अत्र "गोरपेक्षया क्रमेण पादमात्रं भवति । अथाविमूल्यमाह "**द्वादशाविके**" इति । आविके द्वादश पणा मूल्यं भवति । अत्राजापेक्षया क्रमेण सार्द्धमधिकं बोध्यम् । अथ वृषलीमूल्यमाह--

**वृषल्यामथ पञ्चाशन्मूल्यं कार्षापणाः स्मृताः** । इति ।

वृषली दासी तस्याः पञ्चाशत्कार्षापणा मूल्यं भवति । अत्र धेन्वपेक्षया क्रमेण पञ्चगुणं बोध्यम् । अथ निष्कमूल्यमाह "**निष्के पञ्चाशदेव स्यात्**" इति । निष्को भूषणविशेषः । तत्र पञ्चाशत्कार्षापणा मूल्यं भवति । अत्र दासीतुल्यमूल्यं बोध्यम् । अथ गजमूल्यमाह "**गजे पञ्चाशतानि तु**" इति । गजे हस्तिनि पञ्चाशतानि शतपञ्चकं मूल्यं भवति । अथ दोलामानमाह "**पञ्च कार्षापणाः प्रोक्ता दोलायामिति**" दोला नरवाह्यं यानम् । तत्र पञ्च कार्षापणा मूल्यं भवति । अत्र धेन्वपेक्षयाऽर्द्धक्रमेण बोध्यम् । अथ रथमूल्यमाह "**षड्रथे तथा**" इति । रथे षट् कार्षापणा मूल्यं भवति । अत्र वृषबन्धो बोध्यः । अथ गृहमूल्यमाह "**गृहेऽष्टौ कार्षापणकाः**" इति । गृहेऽष्टौ कार्षापणका मूल्यं भवति । अत्रानडुहोद्वहक्रमेण बोध्यम् । अथ ताम्रमूल्यमाह "**ताम्रकर्षे पणः स्मृतः**" इति । अत्र गवापेक्षयाऽर्द्धक्रमेण बोध्यम् । अथ पणलक्षणमाह "**ताम्रकर्षेऽपि च पणः**" इति । कर्षवति ताम्रे पणो बोध्य इत्यर्थः । अभ्यासो ग्रन्थसमाप्तिसूचकः ।

## अथ स्पष्टार्थप्रबोधाय चक्रप्रस्तारोऽयं लिख्यते ।

| द्रव्याणि | गौः | वरः | वृषः | अनड्वान | धेनुः | अश्व | हिरण्यम् | वस्त्रम् | छागः | अविः | वृषली. | निष्कम् | गजः | दोला | रथः | गृहम् |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| कार्षापणा | २ | ४ | ६ | ८ | १० | १५ | ११९ | १ | ॥ | ।।। | ५० | ५० | ५०० | ५ | ६ | ८ |
| पणाः | ३२ | ६४ | ९६ | १२८ | १६० | २४० | २५ | १६ | ८ | १२ | ८०० | ८०० | ८००० | ८० | ९६ | १२८ |
| कपर्दिका मानम् | २५६०<br>।।) | ५१२०<br>१) | ७६८०<br>१॥) | १०२४०<br>२) | १२८००<br>२॥) | १९२००<br>३॥।) | २०००<br>।=)। | १२८०<br>।) | ६४०<br>=) | ९६०<br>≡) | ६४०००<br>१२।।) | ६४०००<br>१२॥) | ६४००००<br>१२५) | ६४००<br>११) | ७६८०<br>१॥) | १०२४०<br>२) |
| ताम्रमानम् | ताम्र<br>३२ भर<br>१) | ताम्र<br>६४भर<br>२) | ताम्र<br>९६ भर<br>३) | ताम्र<br>१२८भर<br>४) | ताम्र<br>१६०भर<br>५) | ताम्र<br>२४०भर<br>७॥) | ताम्र<br>२ भर<br>।॥)॥ | ताम्र<br>१६ भर<br>।।) | ताम्र<br>८भर<br>।) | ताम्र<br>१२ भर<br>।=) | ताम्र<br>८००भर<br>२५) | ताम्र<br>८००भर<br>२५) | ताम्र<br>८००० भर<br>२५०) | ताम्र<br>८० भर<br>२॥) | ताम्र<br>९६ भर<br>३) | ताम्र<br>१२८भर<br>४) |
| रौप्यमानम् | सुवर्ण<br>२ गुं.<br>२ य. | सुवर्ण<br>५ गुं.<br>१ य. | सुवर्ण<br>१मा.<br>३ गुं. | सुवर्ण<br>२मा.<br>० गुं.<br>२ यं. | सुवर्ण<br>२ मा.<br>३ गुं.<br>१ य. | सुवर्ण<br>४ मा. | सुवर्ण<br>१ गुं.<br>३ य.<br>१॥ सर्ष. | सुवर्ण<br>१ गु.<br>१ य. | सुवर्ण<br>२ य. | सुवर्ण<br>१ गुं. | सुवर्ण<br>१३ मा.<br>१ गुं.<br>२ य. | सुवर्ण<br>१३ मा.<br>१ गुं.<br>२ य. | सुवर्ण ८ भर<br>९ मा.<br>१ गुं.<br>२ य. | सुवर्ण<br>१ मा.<br>१ गुं.<br>२ य. | सुवर्ण<br>१ मा.<br>३ गुं. | सुवर्ण<br>२ मा.<br>० गुं.<br>२ य. |
| सौवर्णमानम् | सुवर्ण<br>२।।भर<br>वा<br>४०मा. | सुवर्ण<br>५ भर<br>वा<br>८०मा. | सुवर्ण<br>७॥ भर<br>वा<br>१२०मा | सुवर्ण<br>१० भर<br>वा<br>१६०मा | सुवर्ण<br>१२॥भर<br>वा<br>२००मा. | सुवर्ण<br>१८॥।भर<br>वा<br>३००मा. | सुवर्ण<br>१ भर वा<br>१५मा ३१मा<br>११ गुं. ११ गुं. | सुवर्ण<br>१ भर<br>४ मा.<br>वा<br>२० मा | सुवर्ण<br>१०मा. | सुवर्ण<br>१५मा. | सुवर्ण<br>६९ भर<br>वा<br>१०००मा<br>वा ऽ।॥− | सुवर्ण<br>६९ भर<br>वा<br>१०००मा.<br>वा ऽ।॥− | सुवर्ण<br>६९० भर<br>वा<br>१००००मा<br>वा ऽ८= | सुवर्ण<br>६। भर<br>वा<br>१००मा. | सुवर्ण<br>७॥ भर<br>वा<br>१२०मा. | सुवर्ण<br>१० भर<br>वा<br>१६०मा. |
| राजत मानम् | रजत<br>२॥भर<br>वा<br>४०मा. | रजत<br>५ भर<br>वा<br>८०मा. | रजत<br>७॥ भर<br>वा<br>१२० मा. | रजत<br>१० भर<br>वा<br>१६० मा. | रजत<br>१२॥भर<br>वा<br>२००मा. | रजत<br>१८॥।भर<br>वा<br>३००मा. | रजत<br>१ भर वा<br>१५मा ३१मा<br>११ गुं. ११ गुं. | रजत<br>१भर<br>४मा.<br>वा<br>२०मा. | रजत<br>१०मा. | रजत<br>१५मा. | रजत<br>६९ भर<br>वा<br>१००० मा.<br>वा<br>ऽ।॥− | रजत<br>६९ भर<br>वा<br>१००० मा.<br>वा<br>ऽ।॥− | रजत<br>६९० भर<br>वा<br>१००००मा.<br>वा<br>ऽ८= | रजत<br>६। भर<br>वा<br>१००मा | रजत<br>७॥ भर<br>वा<br>१२०मा. | रजत<br>१० भर<br>वा<br>१६०मा. |

अथाहरणपक्षे आधानमाह। तत्रादौ स्वशाखाध्यायिनं कर्मसुतत्त्वज्ञं ब्राह्मणं गन्धपुष्पमाल्यवस्त्रालङ्कारादिभिरभ्यर्च्य अमुकगोत्रं अमुकशर्माणं अमुकशाखाध्यायिनं आवसथ्याधानं करिष्यन् कृताकृतावेक्षणत्वेन ब्रह्माणमेभिश्चन्दनपुष्पाक्षतवस्त्रालङ्कारैः त्वामहं वृणे। वृतोस्मीति तेन वाच्यम्। केचिद्ब्रह्माणं मधुपर्केणार्चयन्ति। ऋत्विक्त्वाविशेषात्। ततः पत्न्या सह अहते वाससी परिधाय अग्न्याधानदेशे स्थण्डिलमुपलिप्य पञ्चभूसँस्कारान्कृत्वा तं देशं वस्त्रेण पिधाय ब्रह्मणा सह मृदः स्थालीमादाय ब्राह्मणैः परिवृतो गत्वा **"वैश्यस्य बहुपशोर्गृहादग्निमाहृत्य चातुष्प्राश्यपचनवत्सर्वम्"** इति सूत्रम्। वैश्यस्य तृतीयवर्णस्य बहुपशोः बहुभिः पशुभिः समृद्धस्य गृहात् स्थाल्यामग्निं गृहीत्वा ब्राह्मणैः परिवृतो वेदघोषगीतवादित्रादिभिः जनितोत्साहः स्वगृहमागत्य परिसमूहनादिपञ्चभूसँस्कारसंस्कृते स्थण्डिले प्राङ्मुख उपविश्यात्माभिमुखमग्निं निदध्यात्। ततो ब्रह्मोपवेशनादिब्राह्मणभोजनान्तं वक्ष्यमाणं कर्म कुर्यात्। चातुष्प्राश्यस्य पचनवत्सर्वमिति। वैश्याभावे गोभिलादिसूत्रवचनात्। गोभिलसूत्रम् **"वैश्यकुलाद्वाम्बरीषाद्वाग्निमाहृत्याभ्यादध्यादपि वा बहुयाजिन एवागाराद्ब्राह्मणस्य वा राजन्यस्य वा वैश्यस्य वाऽपि वाऽन्यं मथित्वाऽभ्यादध्यात्पुण्यस्त्वेवानर्द्धुको भवतीति**। पुण्यः पुण्यकृत् केवलपुण्यकोषकृदेवायमारणेयोऽग्निरिति। अनर्द्धुकः ऋद्धिवृद्धिब्रह्मवर्चसादीनामृद्धिं न करोतीति अनर्द्धुकः। तुशब्दो विशेषार्थः। इति गोभिलगृह्यसूत्रभाष्ये। अथ वा पुण्यः पुण्यकृदेवायमारणेयोऽग्निः। अनर्द्धुकः अनृद्धिकरः।

तत्र कात्यायनः—

> **पुण्यमेवादधीताऽग्निं स हि सर्वैः प्रशस्यते।**
> **अनदृर्धुकत्वं यत्तस्य काम्यैस्तन्नीयते शमम्॥**

इत्यपि तदीयभाष्यान्तरे। एवं च सति यथा कामयेत्तथा कुर्यात्। अम्बरीषो भ्राष्ट्रः। बहुयाजिनो ब्राह्मणगृहादाहितोऽग्निस्तेन तस्मिन्ननुगते पुनराधाने वा तत **एवानेय** इत्येवं विधिर्नियमार्थः। बह्वन्नपाकाद्ब्राह्मण-

महानसाद्वा। तथा पाकयज्ञप्रदीपोक्ताः स्मृतयः—

ब्रह्मक्षत्रियवैश्येभ्यो वित्तवद्भ्योऽग्निमाहरेत्।
तथा च श्रोत्रियागारादिति तन्त्रान्तरं यतः॥
अम्बरीषो भवेद्भ्राष्ट्रस्तद्रूपात्कन्दुकादपि।
महानसादपि भवेद्बहुशो यत्र पच्यते॥
बहुयज्ञकृतो विप्रात्क्षत्रियाद्विट्कुलादपि।
अन्नसत्रप्रवृत्ताद्वा श्रुतवृद्धादपीष्यते॥

अधुना आरणेयपक्षमाह। "अरणिप्रदानमेके" एके आचार्याः, अरणिप्रदानम्। प्रशब्द उपशब्दार्थे। अरणिप्रदानमुपादानं कारणं उत्पत्तिस्थानं यस्याग्नेः सोऽरणिप्रदानस्तमरणिप्रदानमग्निमादधीतेति मन्यन्ते। "पञ्च महायज्ञा इति श्रुतेः" पञ्चमहायज्ञानां श्रौतत्वादारणेयाऽग्नावनुष्ठानं युक्तमित्यभिप्रायः। अरणिलक्षणमाह छन्दोगपरिशिष्टे—

अश्वत्थो यः शमीगर्भः प्रशस्तोर्वीसमुद्भवः।
तस्य या प्राङ्मुखी शाखा वोदीची वोर्द्ध्वगापि वा॥
अरणिस्तन्मयी ज्ञेया तन्मय्येवोत्तरारणिः।

शमीगर्भलक्षणमाह छन्दोगपरिशिष्टे—

संसक्तमूलो यः शम्याः स शमीगर्भ उच्यते॥

उक्तगर्भाभावे अश्वत्थमात्राद्ग्राह्या। स एवाह—

अलाभे त्वशमीगर्भाद्धरेदेवाविलंबितः। इति।

दैर्घ्यपृथुत्वोच्चत्वप्रमाणान्याह स एव—

चतुर्विंशतिरङ्गुष्ठा दैर्घ्यं षडपि पार्थिव।
चत्वार उच्छ्रयो मानमरण्योः परिकीर्त्तितम्॥

अन्यच्च—

चतुर्विंशांगुला दीर्घा विस्तारेण षडङ्गुला।
चतुरङ्गुलमुत्सेधा अरणिर्याज्ञिकैः स्मृता॥

मन्थने स्थलविशेषबोधनायारण्यवयवानाह यज्ञपार्श्वे "प्रथमानि चत्वार्य्यङ्गुलानि शिरश्चक्षुः श्रोत्रमास्यञ्च यानि चत्वार्य्यङ्गुलानि

ग्रीवाऽसौ यदन्यानि चत्वार्यङ्गुलानि सा श्रोणी यदन्यानि चत्वार्यङ्गुलानि तान्यूरू यान्यन्यानि चत्वार्यङ्गुलानि जङ्घे पादौ इत्येषा अरणिः सर्वैरङ्गैः सम्पूर्णा भवति, यच्छिरसि मन्थति शिरोरोगेण यजमानः प्रमीयते, यद्ग्रीवांसेषु मन्थति पक्षहतो यजमानो भवति, यदुदरे मन्थति क्षुधया यजमानः प्रमीयते, यच्छ्रोण्यां मन्थति सा देवयोनिर्यदूर्वोर्मन्थति सा यातुधानानां यज्जङ्घायां मन्थति सा पिशाचानां प्रथमे मन्थने कल्पना नेतरे" इति ।

छन्दोगपरिशिष्टे तु—

मूर्द्धाक्षिकर्णवक्त्राणि कन्धरा चापि पञ्चमी ।
अङ्गुष्ठमात्राण्येतानि द्व्यङ्गुष्ठं वक्ष उच्यते ॥
अङ्गुष्ठमात्रं हृदयं त्र्यङ्गुष्ठमुदरं तथा ।
एकाङ्गुष्ठा कटिर्ज्ञेया द्वौ बस्ती द्वौ च गुह्यकम् ॥
ऊरू जङ्घे च पादौ च चतुस्त्र्येकैर्यथाक्रमम् ।
अरण्यवयवा ह्येते याज्ञिकैः परिकीर्त्तिताः ॥
यत्तद्गुह्यमिति प्रोक्तं देवयोनिस्तु सोच्यते ।
तस्यां यो जायते वह्निः स कल्याणकृदुच्यते ॥
अन्येषु ये तु मथ्नन्ति ते रोगभयमाप्नुयुः ।
प्रथमे मन्थने त्वेष नियमो नोत्तरेषु च ॥
मूलादष्टाङ्गुलं त्यक्त्वा अग्राच्च द्वादशाङ्गुलम् ।
अन्तरं देवयानिः स्यात्तत्र मथ्यो हुताशनः ॥ इति ॥

प्रमन्थादिपरिमाणमाह च्छन्दोगपरिशिष्टे कात्यायनः । यज्ञपार्श्वपरिशिष्टञ्च—

अष्टाङ्गुलं प्रमन्थः स्याच्चात्रं स्याद्द्वादशाङ्गुलम् ।
ओविली द्वादशैव स्यादेतन्मन्थनयन्त्रकम् ॥

प्रमन्थः मन्थनकरणीभूतोत्तरारणिखण्डः ।

उत्तरारणिनिष्पन्नः प्रमन्थः सर्वदा भवेत् ।

इति तेनैवोक्तेः । चात्रं प्रमन्थप्रोतनायोत्कीर्णमूलं रज्जुवेष्टनका-

ष्ठम्। ओविली उपरिधारणकाष्ठम्। इति मन्थनयन्त्रम्। अथ पात्राणि पूर्वोक्तानि। ततो ब्रह्मोपवेशनादि आज्यभागान्तं कर्म कृत्वा। "**अग्न्याधेयदेवताभ्यः स्थालीपाकꣳश्रपयित्वाऽऽज्यभागाविष्ट्वाऽऽज्याहुती र्जुहोति त्वन्नो अग्ने स त्वन्नो अग्न इमम्मे व्वरुण तत्त्वायामि ये ते शतमयाश्चाग्न उदुत्तमं भवतन्न इत्यष्टौ**"इति सूत्रम्। अग्न्याधेयस्य श्रौतस्य देवताः अग्निः पवमानोऽग्निः पावकोऽग्निः शुचिरदितिश्च अग्न्याधेयदेवताः ताभ्यः स्थालीपाकं चरुं श्रपयित्वा यथाविधि पक्त्वा आज्यभागौ आग्नेयसौम्यौ आघारपूर्वकौ हुत्वा। आज्येन आहुतयो होमा आज्याहुतयस्ता आज्याहुतीर्जुहोति। 'त्वन्नो अग्न' इत्यादिर्भिर्भवतन्न' इत्यन्ताभिरष्टाभिः प्रत्यृचमष्टौ। ननु "**अग्न्याधेयदेवताभ्यो हुत्वा जुहोति**" इति वक्ष्यति तत्किमर्थमत्र अग्न्याधेयदेवताभ्य इत्युक्तम्? बह्वीनां देवतात्वज्ञापनायेति चेत्। ननु बहुत्वमस्त्येव कुतः शङ्का? पवमानादिविशेषणविशिष्टस्याग्नेरेकत्वात्। अग्निरेका अदितिर्द्वितीयेति द्वे अग्न्याधेयदेवते इति द्वयोरेव देवतात्वं मा भूदिति पुनर्ग्रहणम्। बह्वीनामेव देवतात्वं विशिष्टस्य देवतान्तरत्वमिति इन्द्रमहेन्द्राधिकरणे जैमिनीयैर्निर्णीतत्वात्। आज्यभागाविष्ट्वेति किमर्थं पुनर्वचनम् आघारादीनां चतुर्दशाहुतीनां क्रमेण पठिष्यमाणत्वात्? उच्यते। आज्याहुतीनां किं स्थानमिति संशये आज्याहुतिस्थानविधानार्थम्। अष्टग्रहणन्तु मन्त्रप्रतीकसंशयनिवृत्त्यर्थम्। "**पुरस्तादेवमुपरिष्टात्स्थालीपाकस्याग्न्याधेयदेवताभ्यो हुत्वा जुहोति**"इति सूत्रम्। पुरस्तात्पूर्वं कस्याग्न्याधेयदेवताहोमस्याष्टौ जुहोति यथा एवमुपरिष्टात् एवं तथा त्वन्नो अग्न इत्यादिना क्रमेण उपरिष्टात् कुर्वन् जुहोत्यष्टौ। किंकृत्वा? हुत्वा। काभ्यः अग्न्याधेयदेवताभ्यः पूर्वोक्ताभ्यः। कस्य स्थालीपाकस्य चरोः। स्थालीपाकस्येत्यवयवलक्षणा षष्ठी। "**स्विष्टकृते च**"इति सूत्रम्। स्विष्टकृते चाग्नये स्विष्टकृते इत्यष्टर्चहोमान्ते स्थालीपाकस्य हुत्वा। चशब्दात् "अयास्यग्नेर्व्वषट्कृतम्" इत्यनेन मन्त्रेण आज्याहुतिं जुहोति। ननु स्विष्टकृते इति किमर्थमुक्तम्?

'प्राङ्महाव्याहृतिभ्यः स्विष्टकृदन्यच्चेदाज्याद्धवि''रिति वक्ष्यमाणत्वात् । अत्र चान्यस्य हविषः सद्भावात् । प्राङ्महाव्याहृतिभ्यः प्राप्तस्य स्विष्टकृद्धोमस्य अयास्याग्नेरिति आज्याहुतेः महाव्याहृतिभ्यः पूर्वं प्राप्त्यर्थम् । ''बर्हिर्हुत्वा प्राश्नाति'' बर्हिः प्रस्तरणार्थम् । अग्नौ प्रक्षिप्य प्राश्नाति भक्षयति । अत्र प्राशनोपदेशसामर्थ्यात्प्राश्यमाकाङ्क्षितम् । तत्किम् हुतशेषः अन्यद्वा किञ्चित् ? उच्यते । पाकयज्ञेष्ववत्तस्यासर्वहोमो हुत्वा होमशेषरक्षणं भक्षणं च श्रौतसूत्रे उक्तमस्ति ''पाकयज्ञेष्ववत्तस्यासर्वहोमो हुत्वा शेषप्राशनमिति'' । अस्यार्थः । पाकयज्ञशब्देन स्मार्त्तहोमा उच्यन्ते । तत्र होमार्थं यदवत्तं गृहीतं तस्य असर्वहोमः कर्त्तव्यः । स्रुवादिभिर्यद्गृहीतं तद्धुत्वा किञ्चित् परिशिष्य पात्रान्तरे स्थापनमित्यर्थः । सर्वहोमान्हुत्वा पात्रान्तरस्थापितसर्वशेषाणां प्राशनम् । अत्र प्राशनग्रहणं न कर्त्तव्यम् । ''श्रौतपरिभाषां स्मार्त्ते संयोजयाञ्चकार'' इति सांख्यायनसूत्रोक्तत्वात् । श्रौते सूत्रे प्राशनस्य विधानात् । प्राश्नातीति पुनरुक्तिर्मार्जनादिनिवृत्त्यर्थम् । श्रौते यथा मार्जनम् पवित्रप्रतिपत्तिर्बर्हिर्होमः प्रणिताविमोकस्तथा स्मार्त्ते न भवति । उक्तञ्च--अत्र मार्ज्जनम् पवित्रप्रतिपत्तिः प्रणिताविमोकः बर्हिर्होम इत्येते चत्वारः पदार्था न भवन्ति मानाभावात् । भाष्यकारहरिहरादयोऽपि 'बर्हिर्होमश्चात्रैव(१) वचनाद्भवति नान्यकर्मसु, बर्हिर्होमे प्रजापतिर्देवता अनिरुक्तत्वात् । तथा च लिङ्गम् । ''अनिरुक्तो वै प्रजापतिरिति'' ।

आज्यं द्रव्यमनादेशे जुहोतिषु विधीयते ।
मन्त्रस्य देवतायाश्च प्रजापतिरिति स्थितिः ॥

इति च्छन्दोगपरिशिष्टे कात्यायनोक्तेश्च । ननु अकृते वैश्वदेवे त्वित्यादिवचनात् वैश्वदेवात्प्राक् स्थालीपाकानुष्ठानं प्राप्तम् , तत्र च संस्रवप्राशनं विहितम् , तत्कथं माध्याह्निकवैश्वदेवादिकर्मण्यधिकार इति चेत् ? उच्यते । शेषप्राशनस्य कर्माङ्गत्वेन विधानात् । अप्राशनेऽस्य कर्मणो

---

(१) अत्रैव अग्न्याधान एवेत्यर्थः ।

वैगुण्यात् । नोत्तरकर्माधिकारनिवृत्तिः । "ततो ब्राह्मणभोजनम्" सूत्रम् । ततः समाप्ते कर्मणि ब्राह्मणभोजनं दद्यात् । ब्राह्मणभोजनमित्यत्र एकस्मै द्वाभ्यां बहुभ्यो वा भोजनं ब्राह्मणभोजनमिति समासस्य तुल्यत्वात् । एकस्मिन्नपि ब्राह्मणे भोजिते अर्थस्यानुष्ठितत्वात् । एकस्यैव भोजनमिति युक्तम् । यज्ञपार्श्वे--

**गर्भाधानादिसंस्कारे ब्राह्मणान्भोजयेद्दश ।**
**शतं विवाहसंस्कारे पञ्चाशन्मेखलाविधौ ॥**

ननु ततो ब्राह्मणभोजनमिति भोजनशब्दस्याशीर्वादोपलक्षकत्वात् कर्मसमाप्त्यनन्तरमाशीर्वचनं ग्राह्यमित्युक्तम्, किं बलादेतत्कल्प्यते, "**स्वस्तिवाचनमन्त्रेष्ट**"मित्याश्वलायनकारिकायास्तु स्वस्तिवाचनप्रकरणोक्तत्वात् कर्मणामाद्यन्तयोः स्वस्तिवाचनङ्कर्त्तव्यमित्येतत्परत्वात् इति चेत् ? सत्यम् । आशीर्वचनस्यापि पुण्याहवाचनान्तःपातित्वेन तद्विधायकत्वसम्भवात् । किञ्च शतपथब्राह्मणे "**एता आशिष आशास्ते यजमानाय**" इत्यादेरनारभ्याधीतत्वादाख्यातसमानाधिकरणत्वेनानारभ्याधीतत्वात्सर्वगुण इति कात्यायनेन परिभाषाध्यायेऽभिहितत्वात् प्रमाणमप्यस्ति । तथा शिष्टाचाराच्चेति सर्वमङ्गलम् । सङ्ग्रहेऽपि—

**सर्वत्र कर्मणामन्ते मन्त्राशिषमनुत्तमाम् ।**
**दद्युर्विप्राः स्वशाखोक्तामादौ तत्कर्मशाखिनः ॥**

**इति श्री प्रथमशाखीयरामकृष्णविरचिते गृह्यसूत्रविवरणे संस्कारगणपतौ द्वितीया कण्डिका ॥ २ ॥**



अथ सकलसाधारणशिष्टाचारप्राप्तस्येतिकर्त्तव्यतामाह । तथा हि कृतमङ्गलस्नानः स्वलङ्कृतः कृताचमनः प्राङ्मुखो यजमानो वस्त्राच्छादिते पीठे उपविश्य पत्नीञ्च स्वदक्षिणतः प्राङ्मुखीमुपवेश्य संस्कार्यञ्च तथैवोपवेश्य कर्म कुर्यात् । उक्तञ्च—

**कर्मादौ मन्त्रसंयुक्तं मङ्गलस्नानमाचरेत् ।**

दिव्याभरणवासोभिरलङ्कृत्य ततः शुचिः ॥

अन्यच्च—

विवाहादिदिने प्राप्ते तत्कर्त्ता भार्यया सह ।
कुलदेवादिसम्प्रीत्यै ब्राह्मणांश्च सुवासिनीम् ॥
स्नापयित्वा सकन्येन स्नातव्यं ससुतेन तु ।
परिधायाहतं वस्त्रं द्विपटीश्च स्त्र्यपि द्वयम् ॥ इति ।

मङ्गलस्नानमाह—

तैलाभ्यङ्गं बुधैः प्रोक्तं मङ्गलस्नानमुच्यते ।
उत्सवादौ प्रकर्त्तव्यं सर्वदा शुभकाङ्क्षिभिः ॥

वसिष्ठसंहितायाम्—

नरकाख्यचतुर्दश्यां विवाहादिमहोत्सवे ।
तथा संवत्सरस्यादौ सूतकान्ते शिरोरुजि ॥
श्रावण्यां बलिराज्ये च वसन्तस्योदये तथा ।
तैलाभ्यङ्गो न दुष्येत संक्रान्तिग्रहणादिषु ॥

अलंकृतो वस्त्रादिना ।

अहतञ्च नवं श्वेतं सदशं यन्न धारितम् ।
पवित्रं तद्विजानीयाद्वस्त्रं सकलकर्मसु ॥

इति धर्मप्रवृत्तिवचनम् । "कार्पासे अन्तरीयोत्तरीये द्वे वस्त्रे परिधीय" इति सूत्रान्तरात् । याज्ञवल्क्यः—

दग्धं जीर्णञ्च मलिनं मूषकोपहतं तथा ।
खादितं गोमहिष्याद्यैस्तत्त्याज्यं सर्वथा बुधैः ॥
नीलीरक्तन्तु यद्वस्त्रं दूरतः परिवर्जयेत् ।
द्रव्यान्तरयुता नीली न दुष्यति कदाचन ॥
केवलं पट्टसूत्रे च नीलीदोषो न विद्यते ।
स्त्रियो वस्त्रं सदा त्याज्यमन्यवस्त्रं विवर्जयेत् ॥
अधौतं क्षारधौतञ्च पूर्वेद्युर्धृतमेव च ।
त्रयमेतदसंबद्धं सर्वकर्मसु वर्जयेत् ॥

गौतमः--

एकवस्त्रो न भुञ्जीत श्रौते स्मार्त्ते च कर्मणि ।
न कुर्याद्देवकार्याणि दानं होमं जपन्तथा ॥

मनुः—

खण्डवस्त्रावृतश्चैव वस्त्रार्द्धालम्बितस्तथा ।
उत्तरीयव्यतीतस्य तत्कृतं निष्फलं भवेत् ॥

विधानपारिजातके—

एकवस्त्रा तु या नारी कच्छहीना व्यवस्थिता ।
न साऽधिकारिणी ज्ञेया श्रौते स्मार्त्ते च कर्मणि ॥

कृताचमनः--

गोकर्णकृतहस्तेन माषमात्रं जलं पिबेत् ।
तन्न्यूनमधिकं पीत्वा सुरापानसमं भवेत् ॥

गोकर्णलक्षणम्—

अङ्गुष्ठाग्रं समाकुंच्य मध्यमाङ्गुलिपर्वणि ।
मुक्ताङ्गुष्ठकनिष्ठाभ्यामेष गोकर्ण उच्यते ॥
देवकर्माङ्गाचमने प्राङ्मुखस्योपवेशनम् ।
उदङ्मुखेन वा कुर्य्यादीशानाभिमुखेन वा ॥

वस्त्राच्छादिते पीठे उपविश्य ।

स्नात्वा चैव शुचौ देशे पीठे यज्ञियदारुजे ।
अभावे कुशविस्तृते तूपविश्य सुखासने ॥

अन्यच्च—

पीठद्वयेंऽबराच्छन्न उपविश्येन्द्रादिङ्मुखः ।

अथ पीठप्रमाणं धर्मप्रवृत्तौ—

अष्टत्रिंशाङ्गुलं पीठमुन्नतं स्यात्षडङ्गुलम् ।
अष्टाङ्गुलन्तु विस्तारं कुर्यादौदुम्बरादिकम् ॥

अथ पत्नीकुमारोपवेशनम् प्रयोगपारिजाते--

संस्कार्यः पुरुषो वाऽपि स्त्री वा दक्षिणतः सदा ।

संस्कारकर्त्ता सर्वत्र तिष्ठेदुत्तरतः सदा ॥

धर्मप्रवृत्तौ--

जातके नामके चैव ह्यन्नप्राशनकर्मणि ।
तथा निष्क्रमणे चैव पत्नी पुत्रस्य दक्षिणे ॥
गर्भाधाने पुंसवने सीमन्तोन्नयने तथा ।
वधूप्रवेशने चैव पुनः सन्धान एव च ॥
पूजने मधुपर्कस्य कन्यादाने तथैव च ।
कर्मस्वेतेषु वै भार्य्या दक्षिणे तूपवेशयेत्

स्मृतिसङ्ग्रहे--

व्रतबन्धे विवाहे च चतुर्थीसहभोजने ।
व्रतदाने मखे श्राद्धे पत्नी तिष्ठति दक्षिणे ॥

धर्मप्रवृत्तौ--

आशिर्वादेऽभिषेके च पत्नी तूत्तरतो भवेत् ।

अनन्तपाठककारिकायाम्--

दूर्वापाणिर्द्विराचम्य त्रिःकृत्वाऽसूंन्नियम्य च ।
गणाधिपं गुरुं स्मृत्वा कुलपूजितदेवताम् ॥
इष्टमन्यत्ततो देशकालौ स्मृत्वैकमानसः ।

ततः सङ्कल्पं कुर्य्यात । उक्तञ्च विधानपारिजातके--

मासपक्षतिथीनाञ्च निमित्तस्य च सर्वशः ।
उल्लेखनमकुर्वाणो न तत्फलमवाप्नुयात् ॥

अथ गणपतिपूजनपुण्याहवाचनमातृकापूजननान्दीश्राद्धं विवक्षुस्तत्रादौ वैश्वदेवमाह । यतः श्राद्धात्पूर्वं पिण्डपितृयज्ञो विहितस्तस्मादपि पूर्वं वैश्वदेवः । तथा च देवलः--

अकृते वैश्वदेवे तु स्थालीपाकाः प्रकीर्त्तिताः ।
अन्यत्र पितृयज्ञात्तु सोऽपराह्णे विधीयते ॥ इति ॥

अत्र स्थालीपाकसाध्यानि कर्माणि स्थालीपाकशब्देनोच्यन्ते । तानि च पिण्डपितृयज्ञादन्यत्राकृत एव वैश्वदेवे क्रियन्ते । पिण्डपितृयज्ञस्तु कृते

वैश्वदेवे पश्चादपराह्णे क्रियते । पिण्डपितृयज्ञश्च श्राद्धात्पूर्वमुक्तो मनुना—

पितृयज्ञन्तु निर्वृत्य विप्रश्चन्द्रक्षयेऽग्निमान् ।
पिण्डान्वाहार्यकं श्राद्धं कुर्यान्मासानुमासिकम् ॥ इति ॥

अमुमेवार्थं स्पष्टमाह हेमाद्रौ लौगाक्षिः--

पक्षान्तं कर्म निर्वृत्य वैश्वदेवञ्च साग्निकः ।
पिण्डयज्ञं ततः कुर्यात्ततोऽन्वाहार्यकं बुधः ॥ इति ॥

अत्र साग्निकस्त्रेताग्निमान्, पक्षान्तं कर्मान्वाधानमन्वाहार्यं दर्शश्राद्धम् । परिशिष्टे--

सम्प्राप्ते पार्वणश्राद्धे एकोद्दिष्टे तथैव च ।
अग्रतो वैश्वदेवः स्यात्पश्चादेकादशेऽहनि ॥

तथा च हेमाद्रौ शालङ्कायनः--

श्राद्धात्प्रागेव कुर्वीत वैश्वदेवन्तु साग्निकः ।
एकादशाहिकं मुक्त्वा तत्र ह्यन्ते विधीयते ॥ इति ॥

शाङ्खायनपरिशिष्टेऽपि--

वृद्धावादौ क्षये चान्त्ये दर्शे मध्ये तु कुर्वते ।
महालये च पिण्डान्ते वैश्वदेवं विधीयते ॥ इति ।

रेणुकारिकायामपि--

निर्णेजनान्तं निर्वृत्य वैश्वदेवं ततो द्विजः ।
श्राद्धं करिष्ये संकल्प्य तत्कृत्वा पूर्ववत्स्थितः ॥

अतो निरग्निनाप्याभ्युदयिकश्राद्धे चिकीर्षिते पूर्वं वैश्वदेवः कार्यः । आवसथ्याधानपक्षादिस्थालीपाकाङ्गभूतमाभ्युदयिकं श्राद्धमपि वैश्वदेवानुष्ठानपूर्वकम् । विधानपारिजातके बृहत्पराशरः--

वैश्वदेवोऽग्रतश्चैव साग्नेर्हीनाग्निकस्य च । इति ।

यत्तु—

अकृते वैश्वदेवे तु स्थालीपाकाः प्रकीर्त्तिताः ।

इति देवलवचनं तद्द्वितीयादिप्रयोगविषयम् । गणपतिपूजनात्पूर्वं वैश्वदेवः ।

अथ गणपतिपूजनम् । तदुक्तं पद्मपुराणे—

नार्चितो हि गणाध्यक्षो यज्ञादौ यत्सुरोत्तमाः ! ।
तस्माद्विघ्नं समुत्पन्नमक्रोधजमिदं तव ॥ इति ॥

ब्रह्मवैवर्त्तेऽपि —

ढुण्ढिराजः प्रियः पुत्रो भवान्याः शङ्करस्य च ।
तस्य पूजनमात्रेण त्रयोऽपि वरदाः सदा ॥

त्रयो ब्रह्मविष्णुशिवाः । भवानीशङ्करगणेशा इति वा । रुद्रकल्पद्रुमेऽपि—

गणेशः सर्वदेवानामादौ पूज्यः सदैव हि ।
सर्वैरपि महाविघ्ननाशकोऽन्यो न विद्यते ॥ इति ।

पूजाविधिमाह रुद्रपद्धतिकृत्परशुरामः—

गणेशं पूजयेत्पूर्वं निर्विघ्नार्थं स्वकर्मणः ।
यद्वेवा मृन्मये पीठे रक्तवस्त्रारुणाक्षतैः ॥
कार्य्यमष्टदलं पद्मं तस्योपरि गणेश्वरम् ।
गणानान्त्वेति संस्थाप्य पूजयेत्तदनन्तरम् ॥

गणेश्वरं संस्थाप्य गणानांत्वेति मन्त्रेण पूजयेदित्यन्वयः । स्थापनं गणेशप्रतिमायाः । गणानान्त्वेति मन्त्रपरिसमाप्तिस्तु कण्डिकापरिसमाप्त्या ज्ञेया । सर्वत्र स्मार्त्ते कर्मणि मंत्रावसाने बोधकप्रमाणाभावे मन्त्रस्य कण्डिकान्तत्वात् । उक्तञ्च रेणुकारिकायाम्—

गृह्यकर्मसु ये मंत्रा ज्ञेयाः स्वाध्यायपाठतः ॥
किञ्च मध्यमवृत्त्या ते न द्रुता न विलंबिताः ॥ इति ॥

यत्तु काशीदीक्षितैर्विश्वनाथभट्टैश्च प्रयोगरत्ने रुद्रपद्धतौ च गणानान्त्वेत्ययं मन्त्रो वसो ममेत्यन्त इत्युक्तन्तत् काण्वशाखाविषयम् । कण्वशाखायां गणानांत्वेति काण्डिकाया वसो ममेत्यन्ताया एव समधीतत्वात् । गणानान्त्वेत्यादि गर्भधमित्यन्तो मन्त्रो माध्यन्दिनानाम् । तत्रैव कण्डिकावसानात् । ततः पूजा प्रकारमाह । रुद्रकल्पद्रुमे मत्स्यपुराणवचनम्—

उपचारैः ससिन्दूरैश्चन्दनै रक्तचन्दनैः ।

पुष्पैर्धूपैस्तथा दीपैराच्छादनसुशोभनैः ॥
इति पञ्चोपचारैश्च यन्मया पूजनं कृतम्।
प्रारब्धकर्मसिद्ध्यर्थं देवाय कल्पयामि तत् ॥
नारिकेलेण देयोऽर्घः फलेन फलकांक्षिभिः ॥ इति।

रक्ष रक्ष गणाध्यक्षेत्यादि अर्घ्यमन्त्रान् प्रार्थनामन्त्रांश्च प्रयोगे वक्ष्यामः। पञ्चोपचारैरिति वाक्ये पञ्चोपचारग्रहणमुपलक्षणार्थम्। तेन षोडशोपचारा अपि भवन्ति। षोडशोपचारपूजनं विष्णुपुराणे—

पूर्वमावाहनं प्रोक्तमासनं तदनन्तरम्।
ततश्च पाद्यमर्घ्यञ्च ततस्त्वाचमनीयकम् ॥
स्नानं वस्त्रं चोपवीतं ततो गन्धादिचन्दनम्।
पुष्पं धूपश्च दीपश्च नैवेद्यं तदनन्तरम् ॥
ततो देयः प्रणामश्च ततो देया प्रदक्षिणा।
विसर्जनं ततो दद्यादुपचरास्तु षोड़श ॥

क्वचित्तु प्रणामप्रदक्षिणास्थाने ताम्बूलदक्षिणा इति।

वैद्यनाथकृतरुद्रपद्धतौ—

आदौ विनायकं पूज्य ग्रहांश्चैव विधानतः।
कर्मणां सिद्धिमाप्नोति श्रेयश्चाप्नोत्यनुत्तमम् ॥

इति याज्ञवल्क्यवचनात्संकल्पपूर्वकमविघ्नसमाप्त्यर्थं विनायकस्य ग्रहाणाञ्चादौ पूजा। कर्मतत्त्वदीपिकायाञ्च—

विवाहोत्सवयज्ञेषु प्रतिष्ठादिषु कर्मसु।
निर्विघ्नार्थं मुनिश्रेष्ठ! तथोद्वेगोद्भवेषु च ॥
वश्यकर्माभिचारेषु तथैवोच्चाटनादिषु।
नवग्रहमखं कृत्वा ततः कार्य्यं समाचरेत् ॥

पितृभक्तितरङ्गिण्यां वाचस्पतिमिश्रास्तु वृषोत्सर्गे आदौ प्रधानसङ्कल्पः ततः पुण्याहवाचनम् ततो मातृपूजा तत आभ्युदयिकम्। उक्तञ्च—आदौ प्रधानसङ्कल्पस्ततः पुण्याहवाचनम्।
मातृपूजां ततः कृत्वा वृद्धिश्राद्धं ततः परम् ॥ इति ॥

अथ पुण्याहवाचनम् । तच्च यद्यप्यस्मच्छाखायां नोक्तं तथापि परशाखीयं ग्राह्यम् ।

यन्नाम्नातं स्वशाखायां पारक्यमविरोधि यत् ।

इति कात्यायनवचनात् । व्यासः—

सम्पूज्य गन्धमाल्याद्यैर्ब्राह्मणान् स्वस्ति वाचयेत् ।
धर्मकर्मणि मांगल्ये संग्रामेऽद्भुतदर्शने ॥

धर्मप्रवृत्तौ—

पत्नीपुत्रैः समायुक्तः शुभार्थैर्ब्राह्मणैः सह ।
पुण्याहवाचनं कुर्य्यात्सर्वेषु वृद्धिकर्मसु ॥
विवाहान्तेषु सर्वेषु गर्भाधानादिकर्मसु ।
नान्दीश्राद्धं समुद्दिश्य स्वस्तिवाचनमाचरेत् ॥

गृह्यपरिशिष्टे—"अथ स्वस्तिवाचनमृद्धिपूर्त्तेषु" ऋद्धिर्विवाहान्ता अपत्यसंस्काराः प्रतिष्ठोद्यापने पूर्त्तं तत्कर्मणश्चाद्यन्तयोः कुर्यादिति ।

आश्वलायनस्मृतिः—

वैदिके तान्त्रिके चादौ ततः पुण्याह इष्यते ।

गृहतत्त्वदीपिकायाम्—

आदौ मध्यावसाने च कुर्य्याद्ब्राह्मणवाचनम् ॥

शौनकः—

पुण्याहवाचनविधिं वक्ष्यामोऽथ यथाविधि ।
प्रयोक्तुः कर्मणामादावन्ते चोदयसिद्धये ॥

तच्च कर्म प्रयोगान्तर्गतमिति केचित् । बहवस्तु प्रयोगबहिर्भूतमिति । आद्यपक्षे तु कर्मप्रयोगसंकल्पं कृत्वा कार्य्यम् । द्वितीये तु तत्कृत्वा कर्मसंकल्पः । अथ पुण्याहवाचनेतिकर्त्तव्यता ।

कलशस्थापनं कार्यं कमलेऽष्टदलेऽमले ।
उदकुम्भं समानीय रुद्रकुम्भवदर्चितम् ॥

अष्टदलकमलकरणप्रकारमाह—

"आद्यं तृतीयं १।३ तृतीयश्च भूता ३।५ ।

भूता द्वितीयं ५।२ द्वितीयं चतुर्थम् २।४ ॥
चतुर्थमाद्यं ४।१ च पुनस्तथेति ।
संयोजयेद्विन्दुशरप्रमाणे ॥
भूमिं भूरसि सम्प्रार्थ्याथाजिघ्रेत्यम्बुजे न्यसेत् ।
एवं कलशमापूर्य्य" इति ॥

हारीतोऽपि—

गोमयेनोपलिप्योर्वीं रङ्गवल्लिकयार्च्चयेत् ।
प्रस्थधान्योपरि स्थाप्यं पूर्णं हि कलशद्वयम् ॥
दक्षिणे चोत्तरे चैव उत्तरे तु निधापयेत् ।
पात्रमक्षतपूर्णन्तु फलपुष्पसमन्वितम् ॥

उत्तरे तु निधापयेदिति वचनात् उत्तरकलश एव पूर्णपात्रम् निधाय तत्र वरुणपूजां कुर्यात् । परशुरामेण एकस्यैव कलशस्य स्थापनमुक्तम् । एतदनुसारी शिष्टाचारोऽपि । कलशद्वयस्थापनन्तु दाक्षिणात्या एवाचरन्ति । "कलशस्य मुखे विष्णु"रित्यादिना कलशं स्थाप्य "अवनिकृतजानुमण्डलम्" इत्यादि बह्वृचपरिशिष्टोक्तं "ब्राह्मणानन्नेन परिविश्य पुण्याहं स्वस्तिकृद्धिरित्योङ्कारपूर्वं त्रिस्त्रिरित्येकामाशिषं वाचयेत्" इति बौधायनोक्तं वा यथाऽचारं कार्यम् । उक्तञ्च—

पद्मासने समाविष्टो नमस्कुर्य्यात्प्रयत्नतः ।
पुण्याहवाचनं पूर्वं सतारं ब्राह्मणस्य च ॥
तदेव च निरोङ्कारं कुर्य्यात्क्षात्रियवैश्ययोः ।

इति पारिजाते यमोक्तेः । वैद्यनाथकृतरुद्रपद्धतावपि—

सोङ्कारं ब्राह्मणे कुर्य्यान्निरोङ्कारं महीपतौ ।
उपांशु च तथा वैश्ये स्वस्ति शूद्रे प्रकीर्त्तितम् ॥ इति ।

आशिषः प्रार्थनामाह "एताः सत्या आशिषः सन्तु" । कलशपश्चिमदेशे युग्मान् द्विचतुरादिकान् ब्राह्मणानुपवेश्य गन्धादिभिः सम्पूज्य पुण्याहं वाचयिष्ये इति वदेत् । उक्तञ्च महतत्त्वदीपिकायाम्—

पुण्याहवाचने विप्रा युग्मा वेदविदः शुभाः ।
यज्ञोपवीतिनः शस्ताः प्राङ्मुखाः स्युः पवित्रिणः ॥
गन्धपुष्पार्चिताः शुद्धाः सोत्तरीयाः कुशायुधाः ।
आसीनाः पश्चिमे भागे पूर्णकुम्भस्य सत्तमाः ॥
गुरोर्दक्षिणभागे तु कर्ताऽसीत तदाज्ञया ।
सूत्रेण वेष्टितं कुम्भमद्भिः पूर्णं सुशोभितम् ॥
मृत्ताम्रादिमयं भूमौ रत्नगर्भसमार्चितम् ।
सिततण्डुलपूर्णेन पात्रेण पिहिताननम् ॥
पल्लवाद्यैश्च संगृह्य गुरुस्तिष्ठेदुदङ्मुखः ।
वक्तारश्चापि तिष्ठेयुर्विप्रास्तान्वाचयेद्गुरुः ॥
मनः समाधीयतामित्युक्तास्ते गुरुणा द्विजाः ।
समाहितमनसः स्म इति ब्रूयुस्ततः स्थिताः ॥
प्रसीदन्तु भवन्तश्चेत्युक्ते ते चानुमन्त्रिणम् ।
ब्रूयुः प्रसन्नाः स्म इति ततो गुरुमुखा द्विजाः ॥

ततो यजमानो वामहस्ते कलशं निधाय दक्षिणहस्तं तन्मुखोपरि दत्वा सुवर्णादिपात्रे जलं प्रसिञ्चेत् "शान्तिरस्तु पुष्टिरस्तु" इत्यादिभिः । ततः पुण्याहकालं वाचयिष्ये यजमानः । विप्राः वाच्यताम् । यजमानः पुण्याहं कुरुते--भो ब्राह्मणाः मम गृहे अस्य कर्मणः पुण्याहं भवन्तो ब्रुवन्तु । ॐ पुण्याहं ब्राह्मणाः । उक्तञ्च शौनककारिकायाम्—

पुण्याहं वाचयिष्येऽहमिति वाचयिता वदेत् ।
वाच्यतामिति भाषन्ते वक्तारश्च सुचेतसः ॥
ओमुक्तिपूर्वं पुण्याहं भवन्त इति भाषते ।
परे ब्रुवन्त्विति ब्रूयुरों पुण्याहमितीतरे ॥
पुनरप्येवमेव द्विः कृत्वा पुण्याहवाचनम् ।

स्वयं प्रथमं मन्द्रस्वरेणोक्त्वा पुनरेवं मध्यमस्वरेणोक्त्वा पुनरेवमुच्चैः स्वरेणोक्ते तथैव तैरुक्तैः । उक्तञ्च विधानपारिजाते—

पुण्याहादेस्त्रिरभ्यासे मन्द्रमध्योच्चनिःस्वनम् ।
आश्रवेरन्निमे सर्वे यथाऽऽगमपरंपरम् ॥ इति ॥

एवं ऋद्धिं कल्याणं स्वस्ति श्रीम् । स्वस्तिवाचने शौनकेन विशेषो दर्शितः--

प्रारीप्सितं चतुर्थ्योक्त्या कर्मवाचयिता ततः ।
वक्तारश्च चतुर्थ्यन्तं तत्तत्कर्मोक्तिपूर्वकम् ॥

तथा च पाणिनीयसूत्रम् "नमः स्वस्ति स्वाहा स्वधाऽलं वषड्योगाच्च" एभिर्योगे चतुर्थी स्यात् । 'भो ब्राह्मणाः मम गृहे अस्मै कर्मणे स्वस्ति भवन्तो ब्रुवन्तु' इति प्रयोगः कर्त्तव्यः(१)। ततः कर्तुर्वामतः पत्नीमुपवेश्य पात्रपाणिजलेन पल्लवदूर्वाभिरुदङ्मुखा विप्रा अभिषिञ्चेयुस्तिष्ठन्तः । विशेषस्तु शौनकीये--

ततो वाचयिता कुम्भजलं संस्कार्य मूर्द्धनि ।
किञ्चित्किञ्चित्तथैवान्ये ब्रूयुश्च विविधाशिषः ॥

अभिषेकमन्त्रास्तु स्मृत्यन्तरोक्ताः—

चतुः स्वस्ति पयः पञ्च विष्णोर्द्वादश देवताः ।
प्रातः षट् पञ्च भगः पञ्चेन्द्रैः पञ्च वारुणैः ॥
षड् वातैस्तु शान्तिरष्टौ जपान्मृत्युर्विनश्यति ।

चतुः स्वस्ति इत्यनेनोक्तेन यस्मिन्मंत्रे स्वस्ति पदानि चत्वारि सन्ति स ग्राह्यः । एवं सर्वत्र व्याख्येयम् । चतुः स्वस्ति 'स्वस्तिन इन्द्र' इति कण्डिका । पयः पञ्च 'पयः पृथिव्या'मिति कण्डिका । विष्णोरपि 'विष्णोरराटमसी'ति कण्डिका । द्वादश देवताः 'अग्निर्देवता व्वातो देवता' इति

---

(१) इयं शौनकोक्तिस्तु साध्वी किन्त्वेतत्प्राचीना न सहन्ते । यतः स्वस्तये स्वस्तिः इत्यादिप्रयोगाणां वेदे लोकेषु च बहुत्र दर्शनात्स्वस्तिशब्दो न केवलमव्ययम् किन्तु सार्वविभक्तिकोऽपि । "नमः स्वस्ति" इति सूत्रन्तु "सहचरितासहचरितयोः सहचारितस्यैव ग्रहणम्" इति न्यायेनाव्ययसहचारितस्याव्ययिनो योगे चतुर्थी विदधाति न तु सार्वविभक्तिकस्य । तेन "अस्य कर्मणः स्वस्ति भवन्तो ब्रुवन्तु ॐ आयुष्मतः स्वस्तिः" इत्यपि प्रयोगः साधुः ।

कण्डिका । प्रातः षट् 'प्रातरग्निम्' इति काण्डिका । पञ्च भगः 'भग प्रणेतः' इति कण्डिका । पञ्चेन्द्रैः 'त्रातारमिन्द्र'मिति कण्डिका । पञ्च वारुणैः 'व्वरुणस्योत्तम्भनमसि' इति कण्डिका । षट् वातैः 'नियुत्वान्वाय'विति कण्डिका । शान्तिरष्टौ 'द्यौः शान्तिः' इति कण्डिका । एते अभिषेकमन्त्राः । रूपनारायणादयस्तु यजमानः प्राङ्मुखस्तीनधिकान्वोदङ्मुखान्ब्राह्मणानुपवेश्य चन्दनवस्त्रताम्बूलादिभिः परितोष्य ॐ पुण्याहं भवन्तो ब्रुवन्तु इति त्रिस्तान् श्रावयेत् । ते ब्रूयुः । ॐ पुण्याहमिति । ॐ स्वस्ति भवन्तो ब्रुवन्त्विति त्रिस्तान् श्रावयेत् । ॐ स्वस्तीति ते त्रिर्ब्रूयुः । ऋद्धिं भवन्तो ब्रुवन्त्विति तान् श्रावयेत् । ॐ ऋद्ध्यतामिति त्रिर्ब्रूयुः । इदं ब्राह्मणस्यैव सोङ्कारम् । क्षत्रियादिकस्य निरोङ्कारम् । ततः कुशाग्रैः सपल्लवैर्विप्रा अभिषिञ्चेयुः । ततः सुवासिनीभिर्नीराजनं कुर्य्यात् । इति पुण्याहवाचनम् । अत्र रेणुहरिहरगङ्गाधराद्याः प्रयोगमध्ये प्रतिमन्त्रं ऋष्यादिकमनुस्मरन्ति । तन्न कर्कादिसम्मतम् । तथा हि—

प्रयोगमध्य ऋष्यादि प्रतिमन्त्रे च न स्मरेत् ।
मानाभावात्प्रयोगस्य प्रांशुभावस्य हानितः ॥

"एतान्यविदित्वा योऽधीतेऽनुब्रूते जपति जुहोति यजते याजयते तस्य ब्रह्म निर्वीर्य्यं यातयामं भवति" इति सर्वानुक्रमण्यामुक्तत्वात् प्रतिमन्त्रं ऋष्यादिचिन्तनमिति चेन्न । किन्तु तत्र परिज्ञानमात्रं प्रकीर्त्तितम् । न तु कर्मकालोच्चारणम् । यथार्थज्ञानम् । तथाचोक्तं गोभिलेन—

भार्गवेण तथैवोक्तं जपकालेऽस्य चिन्तनम् ।
न होमादौ कर्मकाले न चापि श्रौतकर्मणि ॥
तस्मादेषां परिज्ञानमात्रं कर्त्तुरपेक्षितम् ॥ इति ।

कारिकायामपि—

प्रतिमन्त्रङ्कर्मकाले नेष्टमृष्यादिचिन्तनम् ॥ इति ।

अथ मातृकापूजा विष्णुपुराणे—

अकृत्वा मातृयागन्तु वैदिकं यः समाचरेत् ।

तस्य क्रोधसमायुक्ता हिंसामिच्छन्ति मातरः ॥
यत्र यत्र भवेच्छ्राद्धं तत्र तत्र च मातरः ॥

इति परिशिष्टात् ।

नानिष्ट्वा तु पितॄन्श्राद्धे कर्म कुर्याच्च वैदिकम् ।
तेभ्योऽपि मातरः पूर्वं पूजनीयाः प्रयत्नतः ॥

इति शातातपोक्तेः । नैतावता श्राद्धाङ्गं मातृपूजा ।

कर्मादिषु च सर्वेषु मातरः सगणाधिपाः ।
पूजनीयाः प्रयत्नेन पूजिताः पूजयन्ति ताः ॥

इति कात्यायनेन साक्षात्कर्मान्वयोक्तेः । अत एव श्राद्धसङ्कल्पात् पृथगेवास्याः सङ्कल्पः । स्मार्त्तकर्माङ्गेषु पृथक् सङ्कल्प आचारप्रमाणकः । श्रौते तु न तथा । श्राद्धस्य कर्माङ्गतायां मानम्—

यज्ञोद्वाहप्रतिष्ठासु मेखलाबन्धमोक्षयोः ।
पुत्रजन्मवृषोत्सर्गे वृद्धिश्राद्धं समाचरेत् ॥

इति विष्णुपुराणीयं वचः । मातरश्च च्छन्दोगपरिशिष्टे कात्यायनः—

गौरी पद्मा शची मेधा सावित्री विजया जया ।
देवसेना स्वधा स्वाहा मातरो लोकमातरः ॥
धृतिः पुष्टिस्तथा तुष्टिरात्मनः कुलदेवता ।
गणेशेनाधिका ह्येता वृद्धौ पूज्यास्तु षोडश ॥

अन्ते श्रुतमपि गणपतिपूजनमादौ कार्य्यम् ।

आदौ विनायकः पूज्यो ह्यन्ते च कुलमातरः ।

इति स्मृतिकौस्तुभे बह्वृचपरिशिष्टात् । एतेन मदनरत्नादीनां मते गणपतिपूजोक्तिर्नादरणीया । इदञ्च गणपतिपूजनं मातृपूजाङ्गम् "मातरः सगणाधिपाः" इत्यनेनोक्तत्वात् । अत एव कर्मारम्भे निर्विघ्नफलसिद्ध्यर्थमपि गणपतिपूजनम् । अत्र चतुर्दशपदसमभिव्याहारान्मातरो लोकमातर इति सर्वासां विशेषणम् । एता मातरो लोकमातरो भवन्ति । एता मातरो वृद्धौ पूज्या इत्यर्थः । एवमेव नारायणवृत्तावादित्यभाष्ये च परशुरामादीनां मतेऽप्येवम् । हेमाद्रिरूपनारायणमदनरत्नदानसागरदानप्रदीपादिकारास्तु

"पूज्याश्च षोडशेत्येव मातरो लोकमातरः" इति परिगणनातः पठन्ति अत एव पद्धतिकारौ पक्षावुपन्यस्तौ । वस्तुतस्तु चतुर्दशमन्त्राणामेव सत्त्वात् चतुर्दशत्येव पाठः साधीयान् । अत एव अविच्छिन्नाध्ययनसम्प्रदायसमागतं पाठं सम्यग् जानन्तः परिशिष्टाध्येतारोऽपि "वृद्धौ पूज्याश्चतुर्दशे" त्येव पठन्ति । वाजसनेयिभिश्च यद्यपि स्वगृह्ये मातृपूजाविधेरनुक्तत्वात्

सर्वेषामपि पक्षाणां स्वगृह्योक्तं विधीयते ।
स्वगृह्योक्तस्य चाभावे ग्रहणं स्वेच्छया भवेत् ॥

इति सङ्ग्रहवचनाद्यद्यपि स्वेच्छयोक्तं तथाऽपि च्छन्दोगपरिशिष्टोक्ता एव मातरः पूज्याः । सूत्रपरिशिष्टयोरेककर्तृकत्वात्, पारस्करमतस्याप्याश्रयणीयत्वाच्च । तथा च स्मृतिसङ्ग्रहः—

न गृह्याणि स्मृतिर्येषां श्राद्धादावुपलभ्यते ।
कर्तुमर्हन्ति ते सर्वे पारस्करमुनीरितम् ॥ इति ॥

मातॄणां पूजाविधिमाह च्छन्दोगपरिशिष्टे—

प्रतिमासु च शुभ्रासु लिखित्वा वा पटादिषु ।
अपि वाऽक्षतपुञ्जेषु नैवेद्यैश्च पृथग्विधैः ॥ इति ॥

नैवेद्यैरिति पञ्चोपचारान्तरोपलक्षणम् । अत्र केचित्—"मातरः सगणाधिपाः" इत्यत्र मातॄणां गौर्य्याद्यविशेषितानां पूज्यत्वावगमात् तासामेव मिलितानां देवतात्वम् । न तु गौर्य्यादिविशेषितानामश्रुतत्वात्तासाम् । यद्यपि "गौरी पद्मे" त्यादिना विशेषिता एव मातरो देवतात्वेन श्रूयन्ते, तथाऽपि तस्य वचनस्योद्देशमात्रपरत्वान्मिलितानामेव मातॄणां देवतात्वमिति मन्यन्ते । अन्ये तु गौर्य्यादीनां प्रत्येकं देवतात्वमाहुः । युक्ततरमिति चैतत् । अन्यथा बहुत्वविशिष्टमातॄणामेकदेवतात्वे "वृद्धौ पूज्याश्चतुर्दश" इति चतुर्दशसंख्याऽनुपपत्तेः ।

दशोपचारैर्देवेशि ! प्रत्येकं नामभेदतः ।

इति रुद्रयामले प्रत्येकं पूज्यत्वविधानानुपपत्तेश्च । तस्मात्प्रत्येकं देवतात्वम् ।

ततो वसुधारा । छन्दोगपरिशिष्टे मातृपूजामुक्त्वा

कुड्यलग्ना वसोर्द्धारा पञ्च धारा घृतेन तु।

कारयेत्सप्त धाराश्च नातिनीचा न चोच्छ्रिताः" ॥ इति ॥

कुड्यादौ "वसोः पवित्रमसि" इति।

घृतधारा उदक्संस्थाः कुर्य्याद्गुडघृतेन च ॥ इति।

सगुडेन घृतेन वसोर्द्धाराः कार्य्या इत्युक्तं रुद्रकल्पद्रुमे मदनरत्ने। ततो 'वसोर्द्धारादेवताभ्यो नमः' इति पंचोपचारैः पूजाङ्कुर्यात्। वसोर्द्धाराकरणं च कातीयानामेव नान्येषाम्। वसोर्द्धाराऽपि स्वतन्त्रैव। नापि सा मातृसांप्रदायिका। मन्त्रलिङ्गादेश्चोदकस्याभावात्। वसोर्द्धारेति समाख्यानात्। एषा वसोर्द्धारा मातृसन्निहितकुड्यादिलग्ना विवक्षिता। पाञ्चालदेशीयास्तु मातृपट्टं कुड्यलग्नं विधाय तस्योपरि वसोर्द्धारां पातयन्ति तत्र प्रमाणमन्वेषणीयम्। अन्येऽपि देशाचारा बहवो दृश्यन्ते। गोमयमातृकाः तृणतोरणमातृकाः हरिद्रामातृकाः ब्राह्म्यादिमातृकादयोऽश्रुतसंख्याः। इति मातृपूजा।

अथाभ्युदयिकं श्राद्धमुच्यते। अभ्युदये पुत्रजन्मादौ यत् क्रियते तदाभ्युदयिकम्। तच्च द्विविधं सपिण्डकमपिण्डकं वा। इदं यथा कुलदेशाचारं सपिंडकमपिण्डकं वा। तदुक्तं भविष्यपुराणे—

पिण्डनिर्वपणं कुर्य्यान्न वा कुर्य्याद्विचक्षणः।

वृद्धिश्राद्धे कुलाचारदेशकालाद्यवेक्ष्य हि ॥

रुद्रकल्पद्रुमे मत्स्यपुराणवचनम्—

नानिष्ट्वा तु पितॄन् श्राद्धे कर्म वैदिकमाचरेत् ॥

तत्कदा भवतीति नियममाह विष्णुपुराणे—

कन्यापुत्रविवाहेषु प्रवेशे नववेश्मनः।

शुभकर्मसु बालानां चूडाकर्मादिके तथा ॥

सीमन्तोन्नयने चैव पुत्रादिमुखदर्शने।

नान्दीमुखान्पितॄनादौ तर्पयेत्प्रयतो गृही ॥

पुत्रादिमुखदर्शने पुत्रजन्मनीत्यर्थः। धर्मप्रवृत्तौ जाबालिः—

यज्ञोद्वाहप्रतिष्ठासु मेखलाबन्धमोक्षयोः।

पुत्रजन्मवृषोत्सर्गे वृद्धिश्राद्धं समाचरेत् ॥

वृद्धगार्ग्यः--

अग्न्याधानाभिषेकादाविष्टापूर्ते स्त्रियाऽऋतौ ।
वृद्धिश्राद्धं प्रकुर्वीत आश्रमग्रहणे तथा ॥

इष्टशब्देन विवाहादि । पूर्तशब्देन वाप्यादि । मदनरत्ने जातूकर्ण्यः-

वापीकूपतडागादि देवतायतनानि च ।
अन्नप्रदानमारामाः पूर्तमित्यभिधीयते ॥ इति ।

आदिशब्दात् ग्रहयज्ञवापीकूपतडागारामदेवतायतनारम्भप्रतिष्ठाऽयुतलक्षकोटिहोममहादानारम्भशालारंभशालाप्रवेशकर्मस्वभिमताऽनभिमता चाभ्युदयिकं कार्य्यम् । आवसथ्याधानसायंप्रातर्होमपक्षादिकर्मपञ्चमहायज्ञोपाकर्मलांगलयोजनश्रवणाकर्मप्रौष्ठपदीकर्माश्वयुजीकर्मसीतायज्ञनवान्नप्राशनाग्रयणीयकर्मस्रस्तरारोहणानीत्येवं सर्वदा कर्मादौ श्राद्धे प्राप्तेऽपवादमाह कात्यायनः—

असकृद्यानि कर्माणि क्रियन्ते कर्मकारिभिः ।
प्रतिप्रयोगं नैता स्युर्मातरः श्राद्धमेव च ॥

यानि कर्माणि श्रावण्याग्रयणादीनि वारंवारमनाहिताग्न्यादिना क्रियन्ते एषु प्रथमप्रयोग एव मातृपूजाऽभ्युदयिके न तु प्रतिप्रयोगमित्यर्थः । असकृत्क्रियमाणेष्वपि येषु कर्मसु न प्रतिप्रयोगं श्राद्धावृत्तिस्तानि नियमयितुं विशिष्य दर्शयति स एव—

आधाने होमयोश्चैव वैश्वदेवे तथैव च ।
नवयज्ञेषु यज्ञज्ञा वदन्त्येवं मनीषिणः ॥
एकमेव भवेच्छ्राद्धमेतेषु न पृथक् पृथक् ॥

आधानभेदा नित्यनैमित्तिककाम्यरूपाः । होमयोः सायंप्रातर्होमयोः । नवयज्ञ आग्रयणेष्टिः । एवं चान्येषु सोमयागादिषु प्रतिप्रयोगं श्राद्धावृत्तिरित्यायातम् । एतानि यद्यपि चेदसकृत्क्रियन्ते तदा प्रथमप्रयोग एव श्राद्धं न प्रतिप्रयोगे । तदुक्तं ब्रह्मपुराणे——

नाष्टकासु भवेच्छ्राद्धं न श्राद्धे श्राद्धमिष्यते ।

न सोष्यंतीजातकर्मप्रोषितागतकर्मसु ॥

इदमाभ्युदयिकं श्राद्धं वक्ष्यमाणं च मातृपूजनमेकस्थाने कर्मसंस्कारेषु एककर्तृकेषु युगपदुपस्थितेषु सर्वादौ तन्त्रेण कार्यम् , न तु प्रतिसंस्कारमावृत्त्या । यथा दैवतकृतजातकर्मादिकस्योपनयनकाले जातकर्माद्यनुष्ठाने देशान्तरगतस्य मृतबुद्ध्या कृतौर्ध्वदेहिकस्यागतस्य पुनर्जातकर्मादिसंस्काराणां विहितानां युगपदनुष्ठाने कर्मनाशाजलस्पर्शादीनां प्रायश्चित्ततया पुनः संस्काराणां विहितानां युगपदनुष्ठाने वा । तदुक्तं ब्रह्मपुराणे--

गणशः क्रियमाणानां मातृभ्यः पूजनं सकृत् ।
सकृदेव भवेच्छ्राद्धमादौ न तु पृथक् पृथक् ॥ इति ॥

तथा च च्छन्दोगपरिशिष्टे —

गणशः क्रियमाणानामेकं स्यान्मातृपूजनम् ।
नान्दीश्राद्धं भवेदेकं होममन्त्राः पृथक् पृथक् ॥

इदं बह्वपत्यानां युगपत्संस्कारविषयमिति वोपदेवः । तत्कथं कर्तव्यमित्याह "प्रदक्षिणमुपचारः" इति सूत्रम् । उपचरणमुपचारः । अनुष्ठानं करणमिति यावत् । तेनात्र सर्वमनुष्ठानं प्रदक्षिणं भवतीत्यर्थः । अत्र प्रदक्षिणग्रहणं कर्मकर्तृनिष्ठसकलदेवधर्मोपलक्षणार्थम् । ततश्च प्राक्संस्थत्वोदक्संस्थत्वोपवीतित्वप्राङ्मुखोदङ्मुखत्वदक्षिणजानुनिपातित्वदेवतीर्थवत्त्वादि दैवधर्मः कृत्स्नोऽत्र भवति । यथाऽह हेमाद्रौ शातातपः—

कर्तव्यं चाभ्युदयिकं श्राद्धमभ्युदयार्थिना ।
सव्येन चोपवीतेन ऋजुदर्भैश्च धीमता ॥
पितॄणां रूपमास्थाय देवा अन्नं समश्नुते ।
तस्मात्सव्येन दातव्यं वृद्धिकाले तु नित्यशः ॥
यथैवोपचरेद्देवांस्तथा वृद्धौ पितॄनपि ।

छन्दोगपरिशिष्टे कात्यायनोऽपि—

दक्षिणं पातयेज्जानु देवान्परिचरन् सदा ।
पातयेदितरज्जानु पितॄन्परिचरन्नपि ॥
निपातो न हि सव्यस्य जानुनो विद्यते क्वचित् ।

सदा परिचरेद्भक्त्या पितॄनप्यत्र देववत् ॥

अत्रैके प्राङ्मुखस्य कर्तुरुदक्संस्थताया विधानसामर्थ्यात्प्रादक्षिण्यमपास्येदित्याहुः । तत्राऽपि प्रादक्षिण्यमेवेत्युदङ्मुखस्यैव कर्तृत्वमित्यन्ये । एतच्च मतद्वयं काशिकाकार उपन्यस्तवान् । अत्र ब्रूमः—

प्रागग्रेष्वथ दर्भेषु आद्यमामन्त्र्य पूर्ववत् ।
अपः क्षिपेन्मूलदेशेऽवनेनिक्ष्वेति निस्तिलाः ॥
द्वितीयं च तृतीयं च मध्यदेशाग्रदेशयोः ।
मातामहप्रभृतींस्तु एतेषामेव वामतः ॥ इति ।

पार्वणवद्दैवे प्राङ्मुखान्पित्र्ये चोदङ्मुखान् । हेमाद्रौ भविष्यपुराणेऽपि —

प्राङ्मुखांश्चतुरश्चैव चतुरश्च उदङ्मुखान् ।
निवेश्य ऋजुभिर्दर्भैर्दद्यादासनमादरात् ॥
सर्वानेव तु तान्विप्रान्प्राङ्मुखानुपवेशयेत् ॥

इति हेमाद्रौ छागलेयोक्तेर्दैवे पित्र्ये च ये विप्रास्ते सर्वेऽपि प्राङ्मुखा उदङ्मुखा वोपवेशनीया इत्ययमपि पक्षोऽस्ति । तथाऽपि च्छन्दोगपरिशिष्टे कात्यायनेन प्रकृतिप्राप्तस्यापि ब्राह्मणोपवेशनस्य पुनर्विधानात्प्रकृत्यनुग्रहाच्च पूर्वोदाहृतपक्ष एव कात्यायनादिसम्मत इति वाजसनेयिभिः स एवाश्रयणीयः । परन्त्वेतावान्विशेषः । अत्र प्रदक्षिणोपचारताविधानात्तदनुग्रहाय ब्राह्मणपंक्तिनिवेशः प्रागुपक्रमः पश्चादवर्ग एव विधेय इति । अत्र कर्तुर्दिङ्नियमोऽभिहित आश्वलायनगृह्यपरिशिष्टे—"**आभ्युदयिके युग्मा ब्राह्मणा अमूला दर्भाः प्राङ्मुखेभ्य उदङ्मुखो दद्यादुदङ्मुखेभ्यो वा प्राङ्मुखो द्वौ दर्भौ पवित्रे**" इति । अत्र प्राङ्मुखेभ्य उदङ्मुखो दद्यादित्युदङ्मुखतानियमः । उदङ्मुखेभ्यो वा प्राङ्मुख इत्यनेन प्राङ्मुखत्वोदङ्मुखत्वयोर्विकल्प उक्तः । अत एव हेमाद्रौ मार्कण्डेयपुराणे—

उदङ्मुखः प्राङ्मुखो वा यजमानः समाहितः ।
वृद्धिश्राद्धं प्रकुर्वीत नान्यवक्त्रः कदाचन ॥ इति ।

अत्र वृद्धिश्राद्धवाच्यं पितृपार्वणं मातामहपार्वणं चेति पार्वणद्वयमेव न तु वैश्वदेविकम्, वृद्धिश्राद्धांशेन वैश्वदेविकधर्माणामेव विधेयत्वात्। केचित्तु यद्यपि सूत्रकारेण विश्वेदेवौ नोक्तौ तथापि स्मृतिवचनाद्ग्राह्यौ

(१)इष्टिश्राद्धे क्रतूदक्षौ सत्यौ नान्दीमुखे वसू।

इति हेमाद्रौ शङ्खोक्तेः। वृद्धिश्राद्धे कालमाह "पूर्वाह्णे" इति सूत्रम्। पूर्वाह्णे आभ्युदयिकं विधेयमित्यर्थः। अत्र पूर्वाह्णस्त्रेधाविभक्तस्याह्नः प्रथमो भागः। "पूर्वाह्णो वै देवानां मध्यन्दिनो मनुष्याणामपराह्णः पितॄणाम्" इति श्रुतेः। अत एव च्छन्दोगपरिशिष्टे कात्यायनः—

पिण्डान्वाहार्यकं श्राद्धं क्षीणे राजनि शस्यते।
वासरस्य तृतीयेंशे नातिसन्ध्यासमीपतः॥ इति।

त्रेधा विभागमाह—"विभागस्तु समो ज्ञेयः"। पुत्रजन्मादौ तु तत्काल एव। पूर्वेद्युर्मातृपार्वणम्। कर्माहे पितृपार्वणम्। कर्मोत्तराहे मातामहपार्वणम्। अस्याप्यसम्भवे पूर्वेद्युरेव पूर्वाह्णे मातृपार्वणं मध्याह्ने पैतृकमपराह्णे मातामहानाम्। तथाच हेमाद्रौ गार्ग्यशातातपौ—

मातृश्राद्धं तु पूर्वेद्युः कर्माहनि तु पैतृकम्।
मातामहं चोत्तरेद्युर्वृद्धौ श्राद्धत्रयं स्मृतम्॥

---

(१) इष्टिश्राद्धलक्षणमाह श्राद्धचन्द्रिकायाम्—"इष्टिमाद्यमाधान-सोमयागादौ क्रियमाणं श्राद्धम्" इति। कर्माङ्गश्राद्धलक्षणमपि तत्रैव पारस्करः—

निषेककाले सोमे च सीमन्तोन्नयने तथा।
ज्ञेयं पुंसवने श्राद्धं कर्माङ्गं वृद्धिवत्कृतम्॥

इति मञ्जर्याम्। इष्टिश्राद्धमेव कर्माङ्गश्राद्धमिति कौस्तुभे। अभ्युदयो वृद्धिरित्यनर्थान्तरम्। वृद्धिश्राद्धमेव नान्दीमुखम्। संज्ञाभेदः प्रयोगविशेषार्थः। तथा च वृद्धवसिष्ठः—

पुत्रजन्मविवाहादौ वृद्धिश्राद्धमुदाहृतम्।
तत्र नान्दीमुखमिति विशेषः समुदाहृतः॥

इति श्राद्धकाशिकायाम्। तेन सर्वत्रेष्टिश्राद्धे कर्माङ्गश्राद्धे च क्रतुदक्षसंज्ञकानां विश्वेषान्देवानामुल्लेखः। नान्दीमुखे वृद्धिश्राद्धे आभ्युदयिके च सत्यवसुसंज्ञकानामिति भावः।

अस्याप्यसम्भवे पूर्वेद्युरेव पूर्वाह्णे मातृपार्वणम् । मध्याह्ने पैतृकम् । अपराह्णे मातामहानाम् ।

**पूर्वाह्णे मातृकं श्राद्धं मध्याह्ने पैतृकं तथा ।**
**ततो मातामहानां च वृद्धौ श्राद्धत्रयं स्मृतम् ॥** इति ।

कालत्रयं तु तदन्यशाखाविषयम् । वाजसनेयिनान्तु एकवचननिर्देशादेकस्मिन्पूर्वाह्णे आभ्युदायिकं कार्यमित्यर्थात् पूर्वाह्ण इति सूत्रादाभ्युदयिकश्राद्धस्यैककालसाध्यतावगमात् । यदि तु मात्रादित्रीणि श्राद्धानि सूत्रकृता उक्तानि स्युस्तदा तेषां दिनत्रयसाध्यता पूर्वाह्णादिकालत्रयसाध्यता वा स्यात् । नैव सूत्रकृता त्रीणि श्राद्धान्युक्तानि किन्तु पितृमातामहपार्वणद्वयात्मकं श्राद्धद्वयमेवोक्तम् । अपि च मात्रादिश्राद्धानां कालभेदात्प्रयोगभेदो भविष्यति । सूत्रकारस्तु द्वयोर्द्वयोः प्रयोगैकत्वं दर्शयति-"**नान्दीमुखाः पितरः पितामहाः प्रपितामहा मातामहाः प्रमातामहा वृद्धप्रमातामहाश्च प्रीयन्तामिति**"। एतच्च प्रकृ(१)तिमिव सह प्रयोग एवोपपद्यते ।

**प्रागग्रेष्वथ दर्भेषु आद्यमामन्त्र्य पूर्ववत् ।**
**अपः क्षिपेन्मूलदेशेऽवनेनिक्ष्वेति पात्रतः ॥**
**द्वितीयं च तृतीयं च मध्यदेशाग्रदेशयोः ।**
**मातामहप्रभृतींस्तु एतेषामेव वामतः ॥**

इति च्छन्दोगपरिशिष्टे कात्यायनेन निःसन्दिग्धं सह प्रयोगो दर्शितः । आद्यं पितरं द्वितीयं पितामहं तृतीयं प्रपितामहम् । न हि प्रयोगभेदे पित्रादीनां वामतो मातामहादीनामवनेजनं सम्भवति । यदपि—

**अलाभे भिन्नकालानां नान्दीश्राद्धत्रयं बुधः ।**
**पूर्वेद्युर्वै प्रकुर्वीत पूर्वाह्णे मातृपूर्वकम् ॥**

इति वृद्धमनुवचनं तदपि शाखान्तरविषयम् । अत एव च्छन्दोगपरिशिष्टे—

---

(१) "**सर्वमन्नमेकतोद्धृत्योच्छिष्टसमीपे दर्भेषु त्रींस्त्रीन्पिण्डानवनेज्य दद्यादिति**" प्रकृतिः । तद्वदत्रापीत्यर्थः । **वीप्सा मातामहविषया ।**

**आयुष्याणि च शान्त्यर्थं जप्त्वा तत्र समाहितः ।**
**षड्भ्यः पितृभ्यस्तदनु श्राद्धदानमुपक्रमेत् ॥**

तथा च कात्यायनः—

**कर्षूसमन्वितं मुक्त्वा तथाऽद्यं श्राद्धषोडशम् ।**
**प्रत्याब्दिकविशेषेषु पिण्डाः स्युः षडिति स्थितिः ॥ इति ।**

दाहदिनादारभ्य दशमादिनपर्यन्तं तैलकल्कोदकक्षीरनिवेशनार्थं गर्तः कर्षूशब्देनोच्यते, तद्युक्तं श्राद्धमित्यर्थः । अत्र मंत्रे पित्रादिषण्णामेव संकीर्तनमाभ्युदयिकं षड्दैवतमिति प्रज्ञप्त्यर्थम् । तुल्ययोगिताऽर्थश्चकारः । तथा काशिकायाम्—

**पितरो यत्र पूज्यन्ते तत्र मातामहा ध्रुवम् ॥ इति ।**

**'नान्दीमुखाः पितरः पितामहा'** इति **'षड्भ्यः पितृभ्य'** इति **'पिण्डाः स्युः षडिति स्थितिः ।**

इत्यादिवचनविरोधात् । तस्मात्पित्रादीनां षण्णामेवेह देवतात्वम् । यत्तु कैश्चिदुक्तं षड्भ्यः पितृभ्य इति वाक्यं कोकिलविषयमिति तन्न । यतश्छन्दोगपरिशिष्ट एव षड्भ्यः पितृभ्य इति वाक्यमधि पित्रादीनामवनेजनमुक्त्वा

**मातामहप्रभृतींस्तु एतेषामेव वामतः ।**

इत्यादिना मातामहादीनामवनेजनं कात्यायनो ब्रूते । नचैवं कोकिलमते सम्भवति, मातृमातामहप्रमातामहानां त्रयाणामुद्देशेनैव द्वितीयपार्वणस्य सर्वत्र तन्मते विहितत्वात् । तस्मान्न षड्भ्यः पितृभ्य इति वचनं कोकिलविषयमिति । अतश्च कात्यायनसूत्रानुसारिणां वाजसनेयिनां वासिष्ठसूत्रानुसारिणां छन्दोगानां च षड्दैवत्यमेवाभ्युदयिकश्राद्धं भवतीति सिद्धम् । यत्तु "अन्वष्टकासु वृद्धौ च" इति स्मृत्यन्तरवचनं तच्छाखान्तरविषयम् । यानि तु—

**मातृश्राद्धं तु पूर्वं स्यात्पितॄणां तदन्तरम् ।**
**ततो मातामहानां च वृद्धौ श्राद्धत्रयं स्मृतम् ॥**

इत्यादीनि वचनानि शाखान्तरविषयाणि । यद्यपि श्राद्धकाशिकायाम्–

नवानां नवकं वृद्धौ तथैवान्वष्टके विदुः ।
कुर्याद्द्वादशदैवत्यं प्रेते तीर्थे गयासु च ॥

इति कात्यायननाम्ना लिखितवचनं तदप्यन्यशाखाविषयम् । सूत्रस्मृत्योर्विरोधे सूत्रस्यैवासाधारणत्वेन बलीयस्त्वात् । स्मृतेस्तु सर्वशाखासाधारण्येनात्र सावकाशत्वेन दुर्बलत्वात् । एतेन हलायुधश्राद्धकाशिकाकारादिभिः कात्यायनसूत्रानुसारिभिर्यद्वाजसनेयिनामाभ्युदयिकं नवदैवत्यमित्युक्तं तत्कात्यायनसूत्रविरुद्धत्वात्कात्यायनप्रणीतच्छन्दोगपरिशिष्टादिवचनविरुद्धत्वाच्चोपेक्षणीयम्(१) । "पित्र्यमन्त्रवर्जं जपः" इति सूत्रम् । पित्र्यमन्त्रा अश्नत्सु जपेदित्यत्रोक्ता "उदीरतामवर" इत्यादयस्तान्वर्जयित्वा जपेदित्यर्थः । पित्र्यमन्त्रग्रहणं मधुमतीपितृसंहितयोरुपलक्षणार्थम् । तथा च श्राद्धकाशिकायां मनुकात्यायनौ –

मधुव्वाता जपस्थाने कुर्यात्तत्र प्रयत्नतः ।
उपास्मै गायतेत्यादि ऋचः पञ्च जपेत्तथा ॥

इति पञ्चर्चां जपविधानं ऋक्शाखीयविषयम् । अत्र जपशब्दाद्यो भुञ्जानेषु द्विजेषु पितृलिङ्गकानां मन्त्राणां जपः स एव निषिध्यते, न तु पदार्थानुकरणीभूतानामपि । अत एवाह जातूकर्ण्यः—

पितृलिङ्गेन मन्त्रेण यत्कर्म मुनिभिः स्मृतम् ।
तेनैव तद्विधातव्यममन्त्रमकृतं यतः ॥ इति ।

"ऋजवो दर्भाः" इति सूत्रम् । अत्रामूला ऋजवो दर्भा भवन्ति न

(१) छन्दोगपरिशिष्टस्य कात्यायनकृतत्वेऽपि च्छन्दोगानुद्दिश्यैव करणाच्छन्दोगानां षड्दैवतमन्येषां नवदैवतमिति स्वारसिकोऽर्थः । षड्भ्य इति वचनं मात्रादेरप्युपलक्षणमिति कल्पतरुः । जीवन्मात्रादित्रिकपरमिति श्राद्धकल्पः । वस्तुतस्तु षड्भ्यः पितृभ्य इत्यस्य शातातपादिवचनैकवाक्यतालाघवात् । आनन्तर्यमात्रविधायकत्वात् न संख्यायां तात्पर्यम् । इति न कोऽपि विरोधशङ्काऽवभास इति निष्कण्टकः पन्थाः । इति संस्कारदीपके । तेन यथाऽऽचारं व्यवस्थितो विकल्प इति भाति ।

द्विगुणा इत्यर्थः । दर्भाणाममूलत्वविशेषणमुक्तं रुद्रकल्पद्रुमे आश्वलायनसूत्रे "आभ्युदयिके युग्मा ब्राह्मणा अमूला दर्भा" इति । "यवैस्तिलार्थाः" इति सूत्रम् । अत्र ये तिलार्थास्ते सर्वे यवैः कार्याः । तदत्र मन्त्रे यवोऽसीति ऊहः कार्यो मुख्यद्रव्याभिधायकत्वात् । मन्त्रोहश्चाश्वलायनसूत्रे प्रदर्शितः "यवोऽसि सोमदैवत्यो गोसवो देवनिर्मितः ॥ प्रत्नमद्भिः पृक्तः पुष्ट्या नान्दीमुखान् पितॄन् लोकान् प्रीणाहि नः स्वाहा"इति । रुद्रकल्पद्रुमेऽपि--

तिलोऽसीति पदस्थाने यवोऽसीति पदं वदेत् ।
स्वधयेति पदस्थाने पुष्ट्याशब्दं वदेदिह ॥
पितॄनिति पदात्पूर्वं वदेन्नान्दीमुखानिति ।

अत्रार्घदाने विशेषमाह च्छन्दोगपरिशिष्टे कात्यायनः—

ज्येष्ठोत्तरकरान् युग्मान् कराग्राग्रपवित्रकान् ।
कृत्वाऽर्घः सम्प्रदातव्यो नैकैकस्यात्र दीयते ॥ इति ।

युग्मान् पित्र्यब्राह्मणान् ज्येष्ठोत्तरकरान् ज्येष्ठस्य प्रथमोपवेशितस्य कर उपरि येषान्ते तथा कराग्रे पवित्राग्रं येषां ते कराग्राग्रपवित्रकास्तांस्तथाविधान् कृत्वाऽर्घो दातव्य इत्यर्थः । इदं च च्छन्दोगविषयं तत्परिशिष्टगतत्वादिति स्मृतिरत्नावलीकारः । तेनाऽस्य मते प्रकृतिवदेवार्घदानं नत्विह कश्चिद्विशेषः । अन्ये मदनरत्नढोंढूपद्धतिकारादयस्तु-अर्घदाने विशेषविधेर्वाजसनेयिशाखासाधारण्यं मन्यन्ते । अत्र च "शेषं प्रकृतिव"दित्यतिदेशेन प्राप्ताऽर्घपात्रस्य न्युब्जता भवत्येव । श्राद्धकाशिकाकारस्तु--

अपसव्यं पित्र्यमन्त्रा वामजानुनिपातनम् ।
न्युब्जपात्रं न कर्तव्यं वृद्धिश्राद्धेषु सर्वदा ॥

इतीश्वरवाक्यान्न विधेयमित्याह । तद्विशेषवाक्यानवलोकननिबन्धनमित्युपेक्षणीयम् । "सम्पन्नमिति तृप्तिप्रश्नः" इति सूत्रम् । तृप्ताः स्थेत्यस्य स्थाने सम्पन्नमित्ययं प्रश्नो भवति । सुसम्पन्नमितीतरे ब्रूयुरिति पठन्ति । तत्स्वनादृतं कर्कोपाध्यायादिभिर्भाष्यकारैः । छन्दोगपरिशिष्टे कात्यायनोऽपि–

सम्पन्नमिति तृप्ताः स्थ प्रश्नस्थाने विधीयते ।
सुसम्पन्नमिति प्रोक्ते शेषमन्नं निवेदयेत् ॥ इति ।

केचित्तु विकरो वृद्धिश्राद्धे न कार्यः ।

आमश्राद्धे च वृद्धौ च प्रेतश्राद्धे तथैव च ।
विकरं नैव कुर्वीत मुनिः कात्यायनोऽब्रवीत् ॥

इति धर्मप्रदीपादित्याहुः, तन्न ।

नान्दीमुखान् पितॄन् पूज्य पितृकार्यं विधानवत् ॥

इति प्रकृत्य—

विकरं च तथा पिण्डान्दद्याच्च नियमं विना ।
ब्रूयात्तृप्तेषु सम्पन्नं वृद्धिश्राद्धे समाहितः ॥

इति हेमाद्रौ चतुर्विंशतिमतोक्तेः, सर्वजातीयसिद्धमन्नमेकपात्रे समुद्धृत्य विकरं कुर्यादिति सार्थकात् ,

सुसम्पन्नं च ते ब्रूयुः सर्वसिद्धान्नतः क्षिपेत् ॥

इति हेमाद्रौ ब्रह्मपुराणाच्च । वस्तुतस्तु धर्मप्रदीपवचने "कात्यायनोऽब्रवीत्" इत्युक्तेः कात्यायनसूत्रपरिशिष्टादिविरुद्धत्वात्तन्निर्मूलम् । "न स्वधां प्रयुञ्जीत" इति वक्ष्यमाणसूत्रम् । इदं सूत्रं किंचित्पूर्वमेव व्याख्यातम् । तदुपयोगीनि किञ्चिद्वचनान्याह तथा च पुराणसमुच्चये—

न स्वधा शर्म वर्मेति पितृनाम न चोच्चरेत् ।
न कर्म पितृतीर्थेन न कुशा द्विगुणीकृताः ॥
न तिलैर्नापसव्येन पित्र्यमन्त्रविवर्जितम् ।
अस्मच्छब्दं न कुर्वीत श्राद्धे नान्दीमुखे क्वचित् ॥

अत्र "पितृनाम न चोच्चरेत् । अस्मच्छब्दं न कुर्वीत" इति शाखान्तरविषयम् । अत्र सङ्कल्पादौ विशेषः सङ्ग्रहे—

शुभाय प्रथमान्तेन वृद्धौ सङ्कल्पमाचरेत् ।
न षष्ठ्या यदि वा कुर्यान्महादोषोऽभिजायते ॥

अथ पिण्डदानम् । "दधिबदराक्षतमिश्राः पिण्डाः" इति सूत्रम् ।

अक्षता यवाः मिश्रणं मिश्रः। दध्यादिभिर्मिश्रितौदनेन पिण्डा अत्र देया इत्यर्थः। बहुव्रीह्युपलब्धेः। छन्दोगपरिशिष्टे कात्यायनोऽपि—

**सर्वस्मादन्नमुद्धृत्य व्यञ्जनैरुपसिच्य च।**

**संयोज्य यवकर्कन्धुदधिभिः प्राङ्मुखस्ततः॥ इति।**

अत्र पक्षप्राप्तायाः प्राङ्मुखतायाः प्राङ्मुख इत्ययमनुवादो न पुनरुदङ्मुखतायाः परिसंख्या। अत एव हेमाद्रौ पद्मपुराणे—

**प्रदक्षिणोपचारेण दध्यक्षतफलोदकैः।**

**प्राङ्मुखोदङ्मुखो वाऽपि प्रदद्याद्बदरैर्युतान्॥ इति।**

पिण्डानिति शेषः। अत्र पिण्डादानं बहिःशालायां कार्यम्। यथाऽह रुद्रकल्पद्रुमे वृद्धशातातपः—

**प्रदद्यात्प्राङ्मुखः पिण्डान्वृद्धौ नाम्ना स बाह्यतः॥ इति।**

स श्राद्धकर्ता बाह्यतो भोजनशालाया बहिर्न तूच्छिष्टसमीप इत्यर्थः। अत्र दक्षिणसंस्थमेव लेखाकरणावनेजनपिण्डदानादि कार्यम्। **'आभ्युदयिके प्रदक्षिणमुपचारः'** इत्युक्तत्वात्। अत्र केचित्तु अप्रदक्षिणत्वेऽप्यस्यानौचित्यत्वादुदक्संस्थमेवेत्याहुः, तदयुक्तम्। **"आभ्युदयिके प्रदक्षिणमुपचारः"** इति विरोधात्। नचोदक्संस्थायाम्प्रमाणमुपलब्धम्। दक्षिणसंस्थत्वे च प्रदक्षिणप्रमाणमस्ति। तस्माद्दक्षिणसंस्थमेव लेखाकरणादि। नारायणवृत्तौ श्राद्धकाशिकायाञ्चाप्येवम्। अत्र केचित्प्रपितामहमारभ्य प्रतिलोमक्रमेण पिण्डदानादिप्रयोगमाचरन्ति, तदुक्तं वशिष्ठेन—

**नान्दीमुखे विवाहे च प्रपितामहपूर्वकम्।**

**नाम संकीर्त्तयेद्विद्वानन्यत्र पितृपूर्वकम्॥**

तन्न, **"नान्दीमुखाः पितरः पितामहाः"** इत्यादिना भगवताऽऽचार्येणानुलोमक्रमेणैव विहितत्वात्, छन्दोगसूत्रेऽप्येवम्।

**माता पितामही चैव तथैव प्रपितामही।**

**पित्रादयस्त्रयश्चैव मातुः पित्रादयस्त्रयः॥**

**एते नवार्चनीयाः स्युः पितरोऽभ्युदये द्विजैः।**

इत्याश्वलायनस्मृतावनुलोमक्रमाभिधानादाश्वलायनानामप्यनुलोमक्रम-

एवेति पारिजातादयः। यत्तु वृद्धवशिष्ठवचनं तच्छाखान्तरविषयम्। आथर्वणानां तु पिण्डपितृयज्ञदर्शश्राद्धादौ सर्वत्र प्रतिलोम एव तद्गृह्य उक्तोऽस्ति। अत्रावनेजनपिण्डदानादि सर्वकर्म देवतीर्थेन कुर्यात्। तदुक्तं छन्दोगपरिशिष्टे--

**नात्रापसव्यकरणं न पित्र्यं तीर्थमिष्यते।**
**पात्राणां पूरणादीनि दैवेनैव हि कारयेत्॥** इति।

आदिशब्दादन्नोत्सर्गपिण्डदानादि यावदेव पित्र्यं कर्म दैवेन तीर्थेन कुर्यात्। एवकारस्तु--

**नान्दीमुखानां कुर्वीत प्राज्ञः पिण्डोदकक्रियाम्।**
**प्राजापत्येन तीर्थेन यच्च किञ्चित्प्रजापतेः॥**

इति मार्कण्डेयपुराणोक्तप्राजापत्यव्यावृत्त्यर्थ इत्युक्तं नारायणवृत्तौ। तेन मार्कण्डेयोक्तं प्राजापत्यं तु शाखान्तरपरम्। आदित्यभाष्येऽप्येवम्।

**प्राङ्मुखास्त्वथ दर्भा वै दद्यात्क्षीरावनेजनम्।**

इति ब्रह्मपुराणे। अत्र क्षीरेणावनेजनं कर्तव्यमिति श्राद्धकाशिकाकृत्, तन्न।

**अपः क्षिपेन्मूलदेशेऽवनेनिक्ष्वेति निस्तिलाः॥**

इति च्छन्दोगपरिशिष्टे कात्यायनेनाद्भिरेव विहितत्वात्। यत्तु क्षीरावनेजनन्तच्छाखान्तरविषयम्। छन्दोगपरिशिष्टे कात्यायनेन पुनरवनेजनं पिण्डपात्रप्रक्षालनोदकेनैवाभिहितं तच्छन्दोगाविषयम्। वाजसनेयिनान्तु "अथोदपात्रमादायावनेजयति" इति शतपथश्रुत्या पुनरवनेजनस्योदपात्रेणैव विहितत्वात्। अत्र कश्चिदाह--

**द्वौ द्वौ चाभ्युदये पिण्डावेकैकस्य पृथक् पृथक्।**
**एकं नाम्ना परं तूष्णीं दद्यात्पिण्डद्वयं बुधः॥**

इति चतुर्विंशतिमतादेकैकस्मै पिण्डद्वयं देयमिति, तन्न। सूत्रकृता भगवताऽस्य विशेषस्यानुपदिष्टत्वात्। प्रकृतित एकैकस्मा एकैकपिण्डदानप्राप्तेश्च। अत एवोक्तं ब्रह्मपुराणे—

**उक्तमादाय पिण्डं तु कृत्वा बिल्वप्रमाणकम्।**
**दद्यात्पितामहादिभ्यो दर्भमूले यथाक्रमम्॥** इति।

पिण्डद्वयमेकैकस्मै देयमित्युक्तं तच्छाखान्तरविषयं कुलधर्मविषयं वा। पिण्डदानं चात्र वैकल्पिकमित्युक्तं मिताक्षरायाम्—

**वृद्धिश्राद्धे विकल्पेन पिण्डदानं बुधैः स्मृतम् ॥** इति।

हेमाद्रौ विष्णुपुराणे—

**दध्यक्षतैः सबदरैः प्राङ्मुखोदङ्मुखोऽपि वा।**
**दैवतीर्थेन वै पिण्डान् दद्यात्कामेन वै नृप !॥** इति।

कामेन इच्छया। आभ्युदयिकं प्रकृत्य **"आहिताग्नेः पित्रर्चनं पिण्डैरेव"** इति निगमपरिशिष्टोक्तत्वादाहिताग्नेः सपिण्डकाभ्युदयिकश्राद्धनियमः। तदितरस्य तु सपिण्डकमपिण्डकं वेति विकल्पः। अत्र पिण्डकरणाकरणयोः कुलाचारत्वेन व्यवस्थाऽभिहिता, रुद्रकल्पद्रुमे भविष्यपुराणे—

**पिण्डनिर्वपणं कुर्यान्न वा कुर्यान्नराधिप !।**
**वृद्धिश्राद्धे महाबाहो कुलधर्ममवेक्ष्य वै ॥** इति।

अनेन येषां कुले वृद्धपरम्परया वृद्धिश्राद्धे पिण्डदानमनुष्ठीयते तैरनुष्ठेयमेव। येषां तु कुले नानुष्ठीयते तैर्नानुष्ठेयमिति व्यवस्थाऽभिहिता भवति। वृद्धिश्राद्धे विकल्पेन पिण्डदाने मिताक्षरायामभिहितं वचनं तदन्यशाखाविषयम्। वाजसनेयिनां सर्वेषां सपिण्डकमेवाभ्युदायिकं श्राद्धं भवति स्वसूत्रानुरूपम्। **"नान्दीमुखान् पितॄनावाहिष्य इति पृच्छति"** इति सूत्रम्। पितॄनावाहिष्ये इत्यस्य स्थाने नान्दीमुखान् पितॄनावाहयिष्ये इति पृच्छेदित्यर्थः। अत्र पितृग्रहणाद्देवानां नान्दीमुखविशेषणं न भवतीत्युक्तं भवति। वृद्धपराशरेण तु देवानामपि नान्दीमुखविशेषणमुक्तम्।

**नान्दीमुखेभ्यो देवेभ्यः प्रदक्षिणं कुशासनम् ॥** इति।

अतश्च विकल्पः। स च शाखाभेदेन व्यवस्थितो द्रष्टव्यः। अत्रावाहने विशेषो रुद्रकल्पद्रुमे ब्रह्मपुराणे—

**नान्दीमुखान् पितॄन् भक्त्या साञ्जलिश्च समाह्वयेत्।**
**पठेत्पवित्रं मन्त्रं तु विश्वे देवास आगत ॥** इति।

यद्यपि नान्दीमुखान् पितॄनित्युक्तेः पित्राद्यावाहन एवायं विशेषो न

देवावाहन इति प्रतिभाति । तथापि 'पठेत्पवित्रं मन्त्रन्तु विश्वे देवास आगते'त्युत्तरार्द्धे वैश्वदेविकावाहने विनियुक्तमन्त्रपाठविधानादुभयसाधारण्यमस्य बोध्यम् । यत्तु ब्रह्मपुराणे--

पिता पितामहश्चैव तथैव प्रपितामहः ।

त्रयो ह्यश्रुमुखा ह्येते पितरः सम्प्रकीर्तिताः ॥

तेभ्यः पूर्वे त्रयो ये तु ते तु नान्दीमुखाः स्मृताः ॥ इति ।

महालयप्रकरणपठितप्रौष्ठपदपौर्णमासीनिमित्तकश्राद्धविषयम् । तत्प्रकरणपाठादित्येवं हेमाद्र्यादय ऊचिरे ।

नान्दीमुखानां प्रत्यब्दं कन्याराशिगते रवौ ।

पौर्णमास्यां तु कर्तव्यं वराहवचनं यथा ॥ इति ।

अत्र मदनरत्ने दानखण्डे ढोंढूमिश्रपद्धतौ चाभ्युदयिकश्राद्धे सर्वत्र गोत्रशर्मशब्दनाम्नामुच्चारणं लिखितम् । यत्तु--

सम्बन्धनामरूपाणि वर्जयेदत्र कर्माणि ।

इदन्तु शाखान्तरविषयम् । आभ्युदयिके कर्तृनिर्णयः प्रयोगरत्ने सायणीये--

नान्दीश्राद्धं पिता कुर्यादाद्ये पाणिग्रहे पुनः ।

अत ऊर्ध्वं प्रकुर्वीत स्वयमेव तु नान्दिकम् ॥

स्मृत्यर्थसारे कात्यायनः--

स्वपितृभ्यः पिता दद्यात्सुतसंस्कारकर्मसु ।

तेषां सुतानामूहनात्प्रथमविवाहपर्यन्तं पिता स्वपितृभ्यः पिण्डान् तदुपलक्षितं वृद्धिश्राद्धं कुर्यात् । जीवत्पितृकस्तु पितुर्मात्रादिभ्यो वृद्धिश्राद्धं कुर्यात् । संग्रहे--

वृद्धौ तीर्थे च संन्यस्ते ताते च पतिते सति ।

येभ्य एव पिता दद्यात्तेभ्यो दद्यात्स्वयं सुतः ॥

एतत्साग्निविषयमित्येके, तन्न । विष्णुः "पितरि जीवति यः श्राद्धं कुर्यात्स येषां पिता कुर्यात्तेषां कुर्यात्पितरि पितामहे च येषां पितामहः पितरि पितामहे प्रपितामहे च नैव दद्यादिति" आश्वलायन-

गृह्यपरिशिष्टे तु जीवत्पिता सुतसंस्कारेषु मातृमातामहयोः कुर्यात्तस्यां जीवत्यां मातामहस्यैव कुर्यात् । यत्तु पितरि पितामहे प्रपितामहे च जीवति न कुर्यादिति विष्णुवचनम् , तज्जीवत्पित्रादित्रिककर्तृकतीर्थश्राद्धविषयम् । एवमेव रुद्रकल्पद्रुमे कल्पतरौ हलायुधभाष्ये च । वृद्धिश्राद्धे तु पितरि पितामहे प्रपितामहे च जीवति तदा वृद्धप्रपितामहादित्रिकेभ्यो देयम् ।

दद्यात्त्रिभ्यः परेभ्यस्तु जीवेच्चेत्त्रितयं यदि ।

इति निगमोक्तेः । जीवन्मातृकस्य न मातृपार्वणं जीवन्मातामहस्य न मातामहपार्वणं द्वारलोपात् । तस्य पितुरभावे तु तत्प्रतिनिधिः पितृव्यादिस्तत्पुत्रादेर्जातकर्मादिविवाहान्तसंस्कारेषु तेषां संस्कार्यस्य पित्रादीनामेव क्रमेण दद्यात् , इति विधानपारिजाते सम्यक् प्रतिपादितम् । अथाक्षय्योदकम् । हेमाद्रौ--

अक्षय्यं च ततः कुर्याद्देवपूर्वं विधानतः ॥ इति ।

कर्कभाष्ये तु अक्षय्योदकदाने अक्षय्योदकमन्त्रस्थाने नान्दीमुखाः पितरः प्रीयन्तामिति मन्त्रः स्यादित्यर्थः । यत्तु वृद्धिश्राद्धं प्रकृत्य---

अक्षय्योदकदानन्तु अर्घदानवदिष्यते ।
षष्ठ्यैव नित्यं तत्कुर्यान्न चतुर्थ्या कदाचन ॥

इति च्छन्दोगपरिशिष्टे कात्यायनेन अक्षय्योदकदानं षष्ठ्या विहितन्तच्छन्दोगविषयम् । "नान्दीमुखाः पितरः" इति मन्त्रे पितृशब्दस्य प्रथमान्तप्रयोगविधानादेव सङ्कल्पवाक्यमपि प्रथमान्तमेवात्र प्रयोज्यम् । तदुक्तं रुद्रकल्पद्रुमे सङ्ग्रहे--

शुभाय प्रथमान्तेन वृद्धौ सङ्कल्पमाचरेत् ।
न षष्ठ्या यदि वा कुर्यान्महादोषोऽभिजायते ॥

इति प्रकृतिप्राप्तषष्ठ्या अपवादोऽयम् । हलायुधविष्णुमिश्रभाष्यश्राद्धकाशिकाकारादयस्तु प्रकृतिश्राद्धे-

अर्घेऽक्षय्योदके चैव पिण्डदानेऽवनेजने ।
मन्त्रस्य तु निवृत्तिः स्यात्स्वधावाचिनके जपे ॥

इति च्छन्दोगपरिशिष्टे कात्यायनवचनादक्षय्योदकदाने तन्त्रताया

अभावः, आभ्युदयिके तु 'नान्दीमुखाः पितरः प्रीयन्तामित्यक्षय्यस्थाने' इति कात्यायनसूत्राच्च तन्त्रतेत्याहुः। स्वधावाचनेऽपि तन्त्रतैव भवति। 'पितृभ्यः पितामहेभ्यः प्रपितामहेभ्यो मातामहेभ्यः प्रमातामहेभ्यो वृद्धप्रमातामहेभ्यश्च स्वधोच्यताम्' इति मन्त्रप्रयोगं दर्शयता भगवताऽऽचार्य्येण तन्त्रतासूचनात्। अत्र क्षीरयवोदकैरक्षय्योदकदानं कार्यम्। तदुक्तं ब्रह्मपुराणे--

तथाऽक्षय्योदकस्थाने दद्यात्क्षीरयवोदकम् ॥ इति।

"युग्मानाशयेदत्र" इति सूत्रम्। अत्राभ्युदयिके युग्मान् बहुवचनोपदेशाच्चतुरादीन् ब्राह्मणानाशयेद्भोजयेदित्यर्थः। तेन पित्र्येऽपि युग्मानाशयेत्। तथा च च्छन्दोगपरिशिष्टे कात्यायनः--

प्रातरामन्त्रितान् विप्रान् युग्मानुभयतस्तथा ॥ इति।

आशयेदित्यर्थः। दक्षिणा ब्रह्मपुराणे--

द्राक्षामलकमूलानि यवांश्चाथ निवेदयेत्।
तान्येव दक्षिणां चैव दद्याद्विप्रेषु सर्वदा ॥

इति सपिण्डकं वृद्धिश्राद्धम्। अथापिण्डकवृद्धिश्राद्धमुच्यते।

सत्क्रियां देशकालौ च शौचं ब्राह्मणसम्पदम्।
पञ्चैतान्विस्तरो हन्ति तस्मान्नेतत्सविस्तरम् ॥

इत्यादिवाक्यदर्शनात्पूर्वाह्लादिषु मुहूर्तकर्तव्येऽनल्पकर्मकलापादिभयादसन्नफलमूलादिभिर्यथालाभं संक्षिप्तमपि श्राद्धमाचार्या मन्यन्ते। तच्च पिण्डादिवर्जितं कर्तव्यम्। यथा भविष्यपुराणे--

पिण्डनिर्वपणं कुर्यान्न वा कुर्याद्विचक्षणः।
वृद्धिश्राद्धे कुलाचारदेशकालाद्यवेक्ष्य हि ॥

अतश्चाग्नौकरणादीनामपि निषेधः। तथाहि--

अग्नौकरणमर्घ्यं चावाहनं चावनेजनम्।
पिण्डश्राद्धे प्रकुर्वीत पिण्डहीने निवर्तते ॥

तथा--

पिण्डनिर्वापरहितं यत्र श्राद्धं विधीयते।

स्वधावाचनलोपोऽस्ति विकिरस्तु न लुप्यते ॥
अक्षय्या दक्षिणा स्वस्ति सौमनस्यं यथास्थितम् ॥

इति दाक्षिणात्यानां विस्तृतवृद्धिश्राद्धाभावात् प्रयोगरत्ने काशदीक्षितैर्लिखितम्। विशेषमाह धर्मप्रवृत्तौ स्मृत्यर्थसारे—

पुंसवने च सीमन्ते तथा चौलोपनायने।
गोदाने स्नान उद्वाहे नान्दीश्राद्धं पुरोदिने ॥
एकविंशत्यहर्यज्ञे विवाहे दश वासराः।
त्रिषट् चौलोपनयने नान्दीश्राद्धं विधीयते ॥

इति श्रीप्रथमशाखीयरामकृष्णविरचिते पारस्करगृह्यसूत्रविवरणे संस्कारगणपतौ गणपतिपूजनपुण्याहवाचनमातृकापूजननान्दीश्राद्धं समाप्तम् ॥

अथास्य स्पष्टप्रयोगः।

आचम्य पवित्रपाणिः प्राणानायम्य।

विश्वेशम्माधवण्ढुण्ढिन्दण्डपाणिञ्च भैरवम्।
वन्दे काशीङ्गुहाङ्गङ्गाम्भवानीम्मणिकर्णिकाम् ॥
तीक्ष्णदंष्ट्र महाकाय कल्पान्तदहनोपम।
भैरवाय नमस्तुभ्यमनुज्ञान्दातुमर्हसि ॥
सुमुखश्चैकदन्तश्च कपिलो गजकर्णकः।
लम्बोदरश्च विकटो विघ्ननाशो गणाधिपः ॥
धूम्रकेतुर्गणाध्यक्षो भालचन्द्रो गजाननः।
द्वादशैतानि नामानि यः पठेच्छृणुयादपि ॥
विद्यारम्भे विवाहे च प्रवेशे निर्गमे तथा।
संग्रामे सङ्कटे चैव विघ्नस्तस्य न जायते ॥
शुक्लाम्बरधरन्देवं शशिवर्णं चतुर्भुजम्।
प्रसन्नवदनन्ध्यायेत्सर्वविघ्नोपशान्तये ॥

अभीप्सितार्थसिध्यर्थं पूजितो यः सुरासुरैः ।
सर्वविघ्नहरस्तस्मै श्रीगणाधिपतये नमः ॥
सर्वमङ्गलमाङ्गल्ये शिवे सर्वार्थसाधिके ।
शरण्ये त्र्यम्बके गौरि नारायणि नमोऽस्तुते ॥
सर्वदा सर्वकार्येषु नास्ति तेषाममङ्गलम् ।
येषां हृदिस्थो भगवान् मङ्गलायतनं हरिः ॥
तदेव लग्नं सुदिनन्तदेव ताराबलञ्चन्द्रबलन्तदेव ।
विद्याबलन्दैवबलन्तदेव लक्ष्मीपते तेऽङ्घ्रियुगं स्मरामि ॥

ॐ लक्ष्मीनारायणाभ्यान्नमः । उमामहेश्वराभ्यान्नमः । शचीपुरन्दराभ्यान्नमः । मातापितृभ्यान्नमः । कुलदेवताभ्यो नमः । श्रीष्टदेवताभ्यो नमः । सर्वेभ्यो ब्राह्मणेभ्यो नमः । विष्णुस्मरणपूर्वकं देशकालौ सङ्कीर्त्य अमुकफलसिध्यर्थे श्वोऽद्य वा अमुककर्म करिष्ये । तदङ्गतयाऽऽदौ गणपतिपूजनं स्वस्तिपुण्याहवाचनादि करिष्ये ।

ॐ गणानान्त्वा गणपतिꣳ हवामहे प्रियाणान्त्वा प्रियपतिꣳ हवामहे निधीनान्त्वा निधिपतिꣳ हवामहे व्वसो मम । आहमजानि गर्भधमात्वमजासि गर्भधम् ॥

इत्यनेन मन्त्रेण षोडशोपचारैः पञ्चोपचारैर्वा गणपतिं सम्पूज्य नारिकेलाद्यन्यतमं फलमर्घ्यपात्रे निधाय

रक्ष रक्ष गणाध्यक्ष त्र्यक्ष त्रैलोक्यरक्षक ।
भक्तानामभयङ्कर्त्ता त्राता भव भवार्णवात् ॥
द्वैमातुर कृपासिन्धो षाण्मातुराग्रज प्रभो ।
वरदस्त्वं वरन्देहि वाञ्छितं वाञ्छितार्थद ॥
अनेन सफलार्घेण फलदो भव मे सदा ।

इत्यर्घ्यन्दत्वा नमस्कारः—

विघ्नेश्वराय वरदाय सुरप्रियाय
लम्बोदराय सकलाय जगद्धिताय ॥

नागाननाय श्रुतियज्ञविभूषिताय
गौरीसुताय गणनाथ नमो नमस्ते ॥
भक्तार्तिनाशनपराय गणेश्वराय
सर्वेश्वराय शुभदाय सुरेश्वराय ।
विद्याधराय विकटाय च वामनाय
भक्तप्रसन्नवरदाय नमो नमस्ते ॥
नमस्ते ब्रह्मरूपाय विष्णुरूपाय ते नमः ।
नमस्ते रुद्ररूपाय करिरूपाय ते नमः ॥
विश्वरूपस्वरूपाय नमस्ते ब्रह्मचारिणे ।
भक्तप्रियाय देवाय नमस्तुभ्यं विनायक ॥
लम्बोदर नमस्तुभ्यं सततम्मोदकप्रिय ।
अविघ्नं कुरु मे देव सर्वकार्येषु सर्वदा ॥

इति नमस्कारः । अथ प्रार्थना--

त्वान्देव विघ्नदलनेति च सुन्दरेति
भक्तप्रियेति सुखदेति फलप्रदेति ॥
विद्याप्रदेत्यघहरेति च ये स्तुवन्ति
तेभ्यो गणेश वरदो भव नित्यमेव ॥

इति प्रार्थना ।

अथ पुण्याहवाचनम् ।

तच्च मातृका पूजनात् प्रागेव कार्यमिति । तद्यथा महीद्यौरिति भूमिं स्पृष्ट्वा

ॐ महीद्यौः पृथिवी च न इमं यज्ञम्मिमिक्षताम् ।
पिपृतान्नो भरीमभिः ॥

ॐ ओषधयः समवदन्त सोमेन सह राज्ञा ।
यस्मै कृणोति ब्राह्मणस्तꣳराजन्पारयामसि ॥

ति यवान्प्रक्षिप्य,

ॐ आजिंघ्र कलशम्मह्यात्वा विशन्त्विन्दवः ।
पुनरूर्ज्जा निवर्तस्व सा नः सहस्रन्धुक्ष्वोरुधारा
पयस्वती पुनर्म्माविशताद्रयिः ॥

इति कलशं निधाय,

ॐ वरुणस्योत्तम्भनमसि वरुणस्य स्कम्भसर्जनी स्थो वरुणस्य ऋतसदन्यसि वरुणस्य ऋतसदनमसि वरुणस्य ऋतसदनमासीद ॥

इति जलेनापूर्य,

ॐ त्वाङ्गन्धर्व्वा अखनँस्त्वामिन्द्रस्त्वाम्बृहस्पतिः ॥
त्वामोषधे सोमो राजा विद्वान्यक्ष्मादमुच्यत ॥

इति गन्धम् ,

ॐ या ओषधीः पूर्व्वा जाता देवेभ्यस्त्रियुगम्पुरा ।
मनै नु बभ्रूणामहꣳशतन्धामानि सप्त च ॥

इति सर्वौषधीः,

ॐ काण्डात्काण्डात्प्ररोहन्ती परुषः परुषस्परि ।
एवा नो दूर्व्वे प्रतनु सहस्रेण शतेन च ॥

इति दूर्वाः,

ॐ अश्वत्थे वो निषदनम्पर्ण्णे वो वसतिष्कृता ।
गोभाज इत्किलासथ यत्सनवथ पूरुषम् ॥

इति पञ्चपल्लवान् ,

ॐ स्योना पृथिवि नो भवाऽनृक्षरा निवेशनी ।
यच्छानः शर्म्म सप्रथाः ॥

इति पञ्च सप्त वा मृदः,

ॐ याः फलिनीर्य्या अफला अपुष्पा याश्च पुष्पिणीः ।

बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वꣳहसः ॥

इति फलम् ,

ॐ परि वाजपतिः कविरग्निर्हव्यान्यक्रमीत् ।

दधद्रत्नानि दाशुषे ॥

इति पञ्च रत्नानि,

ॐ हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीत् ।

स दाधार पृथिवीन्द्यामुतेमाङ्कस्मै देवाय हविषा विधेम ॥

इति हिरण्यम् ,

ॐ यदश्वाय व्वास उपस्तृणन्त्यधीवासं या हिरण्यान्यस्मै ।

सन्दानमर्व्वन्तम्पड्वीशम्प्रिया देवेष्वा यामयन्ति ॥

इति रक्तसूत्रेणावेष्ट्य,

ॐ पूर्ण्णा दर्व्वि परा पत सुपूर्ण्णा पुनरापत ।

व्वस्नेव व्विक्रीणावहा इषमूर्ज्जꣳशतक्रतो ॥

इति शरावं धान्यपूर्णं पूर्णपात्रमुपरि निधाय, तत्र 'तत्त्वा यामीति शुनःशेप ऋषिः वरुणो देवता त्रिष्टुप्छन्दः वरुणावाहने विनियोगः ।

ॐ तत्त्वा यामि ब्रह्मणा व्वन्दमानस्तदाशास्ते यजमानो हविर्भिः ।

अहेडमानो व्वरुणेह बोध्युरुशꣳसमान आयुः प्रमोषीः ॥

इति वरुणमावाह्य, आवाहनादिषोडशोपचारैः गन्धादिभिः पञ्चोपचारैर्वा सम्पूजयेत् । तीर्थान्यावाह्य यथा

ॐ सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः ।

आयान्तु यजमानस्य दुरितक्षयकारकाः ॥

ततः कलशाभिमन्त्रणम्—

कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः ।

मूले तस्य स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः ॥

कुक्षौ तु सागराः सप्त सप्तद्वीपा वसुन्धरा ।
ऋग्वेदोऽथ यजुर्वेदः सामवेदो ह्यथर्वणः ॥
अङ्गैस्तु सहिताः सर्वे कलशन्तु समाश्रिताः ।
अत्र गायत्री सावित्री शान्तिपुष्टिकरी तथा ॥
आयान्तु मम शान्त्यर्थं दुरितक्षयकारिकाः ।

ततः कलशप्रार्थना--

देवदानवसंवादे मथ्यमाने महोदधौ ।
उत्पन्नोऽसि यदा कुम्भ विधृतो विष्णुना स्वयम् ॥
त्वत्तोये सर्वतीर्थानि देवाः सर्वे त्वयि स्थिताः ।
त्वयि तिष्ठन्ति भूतानि त्वयि प्राणाः प्रतिष्ठिताः ॥
शिवः स्वयन्त्वमेवासि विष्णुस्त्वञ्च प्रजापतिः ।
आदित्या वसवो रुद्रा विश्वेदेवाः सपैतृकाः ॥
त्वयि तिष्ठन्ति सर्वेऽपि यतः कामफलप्रद ।
त्वत्प्रसादादिमं यज्ञङ्कर्तुमीहे जलोद्भव ॥
सान्निध्यङ्कुरु मे देव प्रसन्नो भव सर्वदा ॥ इति ।

ततो यजमानः अवनिकृतजानुमण्डलः कमलमुकुलसदृशमञ्जलिं शिरस्याधाय दक्षिणेन पाणिना सुवर्णपूर्णकलशं धृत्वा, दीर्घा नागा नद्यो गिरयस्त्रीणि विष्णुपदानि च,

ॐ त्रीणि पदा विचक्रमे विष्णुर्गोपा अदाभ्यः ।
अतो धर्माणि धारयन् ॥

"तेनायुः प्रमाणेन पुण्यं पुण्याहं दीर्घमायुरस्तु" इति त्रिः। "ॐशिवा आपः सन्तु" इति ब्राह्मणहस्ते जलदानम्। "ॐसन्तु शिवा आपः" इति प्रतिवचनम्। "ॐसौमनस्यमस्तु" इति पुष्पदानम्। "ॐअस्तु सौमनस्यम्" "ॐअक्षतं चारिष्टं चास्तु" "ॐअस्त्वक्षतमरिष्टं च "ॐगन्धाः पान्तु" इति गन्धेनार्चनम्। "ॐसुमङ्गल्यं चास्तु" इति प्रतिवचनम्। "ॐ अक्षताः पान्तु" "ॐआयुष्यमस्तु" "ॐ पुष्पाणि पान्तु" इति पुष्पाणि।

"ॐ सौश्रियमस्तु"। "ॐ फलं पातु" इति फलम् । "ॐ ऐश्वर्यमस्तु"। "ॐ दक्षिणाः पान्तु" इति दक्षिणादानम् । "ॐ बहुदेयं च वोऽस्तु" इति प्रतिवचनम्। 'ॐ दीर्घमायुः शान्तिः पुष्टिस्तुष्टिः श्रीर्यशो विद्या विनयो वित्तं बहुपुत्रत्वमायुष्यं चास्तु । यं कृत्वा सर्ववेदयज्ञक्रियाकरणकर्मारम्भाः शुभाः शोभनाः प्रवर्तन्ते । तमहमोंकारमादिं कृत्वा ऋग्यजु(१)राशीर्वचनं बह्वृषिमतं समनुज्ञातं भवद्भिरनुज्ञातः पुण्यं पुण्याहं वाचयिष्ये" इति पृच्छेत् । "ॐ वाच्यताम्" इत्यनुज्ञातः ।

ॐ भद्रङ्कर्णेभिः शृणुयाम देवा भद्रम्पश्येमाक्षभिर्यजत्राः ।
स्थिरैरङ्गैस्तुष्टुवाᳬसस्तनूभिर्व्यशेमहि देवहितं यदायुः ॥
देवानाम्भद्रा सुमतिर्ऋजूयतान्देवानाᳬरातिरभि नो नि वर्तताम् ।
देवानाᳬसख्यमुप सेदिमा वयन्देवा न आयुः प्र तिरन्तु जीवसे ॥
दीर्घायुस्त ओषधे खनिता यस्मै च त्वा खनाम्यहम् ।
अथो त्वन्दीर्घायुर्भूत्वा शतवल्शा वि रोहतात् ॥
न तद्रक्षाᳬसि न पिशाचास्तरन्ति देवानामोजः प्रथमजᳬह्येतत् ।
यो बिभर्त्ति दाक्षायणᳬहिरण्यᳬस देवेषु कृणुते
दीर्घमायुᳬस मनुष्येषु कृणुते दीर्घमायुः ॥
द्रविणोदा द्रविणसस्तुरस्य द्रविणोदाः सनरस्य प्र यंसत् ।
द्रविणोदा वीरवतीमिषन्नो द्रविणोदा रासते दीर्घमायुः॥(ऋक्)
सविता पश्चातात्सविता पुरस्तात्सवितोत्तरात्तात्सविताऽधरात्तात् ।
सवितानः सुवतु सर्वतातिं सविता नो रासतां दीर्घमायुः ॥(ऋक्)
नवो नवो भवति जायमानोऽह्नाङ्केतुरुषसामेत्यग्रम् ।

---

(१) केवलयजुर्मन्त्रपाठपक्षे यजुराशीर्वचनम् । यावद्वेदमन्त्रपाठेच्छा तादृश ऊहो योज्यः । सर्वत्राप्यादौ स्वशास्त्रीयमन्त्रपाठस्ततोऽन्येषाम् ।

भागन्देवेभ्यो वि दधात्यायं प्र चन्द्रमास्तिरते दीर्घमायुः॥(ऋक्)
उच्चा दिवि दक्षिणावन्तो अस्थुर्ये अश्वदाः सह ते सूर्येण ।
हिरण्यदा अमृतत्वं भजन्ते वासोदाः सोम प्र तिरन्त आयुः ॥ (ऋक्)

"व्रतजपनियमतपःस्वाध्यायक्रतुशमदमदयादानविशिष्टानां ब्राह्मणानां मनः समाधीयताम् । समाहितमनसः स्मः" इति ब्राह्मणाः । "प्रसीदन्तु भवन्तः" इति कर्त्ता "प्रसन्नाः स्मः" । इति ब्राह्मणाः । ततः कलशं वामहस्ते धृत्वा दक्षिणहस्तं तन्मुखोपरि दत्त्वा देशाचारात्सुवर्णादिपात्रे जलं प्रसिञ्चेत् । ॐ शान्तिरस्तु । पुष्टिरस्तु । तुष्टिरस्तु । वृद्धिरस्तु । अविघ्नमस्तु । आयुष्यमस्तु । आरोग्यमस्तु । शिवङ्कर्मास्तु । कर्मसमृद्धिरस्तु । वेदसमृद्धिरस्तु । शास्त्रसमृद्धिरस्तु । धर्मसमृद्धिरस्तु । पुत्रसमृद्धिरस्तु । धनधान्यसमृद्धिरस्तु । इष्टसम्पदस्तु" । पात्राद्बहिः । "अरिष्टनिरसनमस्तु । यत्पापं रोगमशुभमकल्याणं दूरे तत्प्रतिहतमस्तु" पुनर्मध्येपात्रम् । "यच्छ्रेयस्तदस्तु । उत्तरे कर्मण्यविघ्नमस्तु । उत्तरोत्तरमहरहरभिवृद्धिरस्तु । उत्तरोत्तराः क्रियाः शुभाः शोभनाः सम्पद्यन्ताम् । तिथिकरणमूहूर्त्तनक्षत्रग्रहलग्नसम्पदस्तु । तिथिकरणमूहूर्त्तनक्षत्रग्रहलग्नाधिदेवताः प्रीयन्ताम् । तिथिकरणे समुहूर्त्ते सनक्षत्रे सग्रहे सदैवते प्रीयेताम् । दुर्गापाञ्चाल्यौ प्रीयेताम् । अग्निपुरोगा विश्वे देवाः प्रीयन्ताम् । इन्द्रपुरोगा मरुद्गणाः प्रीयन्ताम् । वशिष्ठपुरोगा ऋषिगणाः प्रीयन्ताम् । माहेश्वरीपुरोगा उमामातरः प्रीयन्ताम् । अरुन्धतीपुरोगा एकपत्न्यः प्रीयन्ताम् । विष्णुपुरोगाः सर्वे देवाः प्रीयन्ताम् । ब्रह्मपुरोगाः सर्वे वेदाः प्रीयन्ताम् । ब्रह्म च ब्राह्मणाश्च प्रीयन्ताम् । श्रीसरस्वत्यौ प्रीयेताम् । श्रद्धामेधे प्रीयेताम् । भगवती कात्यायनी प्रीयताम् । भगवती माहेश्वरी प्रीयताम् । भगवती वृद्धिकरी प्रीयताम् । भगवती पुष्टिकरी प्रीयताम् । भगवती तुष्टिकरी प्रीयताम् । भगवान्विनायकः प्रीयताम् । सर्वाः कुलदेवताः प्रीयन्ताम् । सर्वा ग्रामदेव-

ताः प्रीयन्ताम्" । पुनः पात्राद्बहिः । "हताश्च ब्रह्मद्विषः । हताश्च परिपन्थिनः । हताश्च विघ्नकर्तारः । शत्रवः पराभवं यान्तु । शाम्यन्तु घोराणि । शाम्यन्तु पापानि । शाम्यन्त्वीतयः" । अन्तः । "शुभानि वर्द्धन्ताम् । शिवा आपः सन्तु । शिवा ऋतवः सन्तु । शिवा ओषधयः सन्तु । शिवा अग्नयः सन्तु । शिवा आहुतयः सन्तु । शिवा वनस्पतयः सन्तु । शिवा अतिथयः सन्तु । अहोरात्रे शिवे स्याताम् ।

निकामे निकामे नः पर्जन्यो वर्षतु फलवत्यो
न ओषधयः पच्यन्तां योगक्षेमो नः कल्पताम् ॥

शुक्राङ्गारकबुधबृहस्पतिशनैश्चरराहुकेतुसोमसहिता आदित्यपुरोगाः सर्वे ग्रहाः प्रीयन्ताम् । भगवान्नारायणः प्रीयताम् । भगवान्पर्जन्यः प्रीयताम् । भगवान् स्वामी महासेनः प्रीयताम् । पुण्याहकालं वाचयिष्ये । "ॐ वाच्यताम्" इत्यनुज्ञातः ।

ब्राह्मं पुण्यमहर्यच्च सृष्ट्युत्पादनकारकम् ।
वेदवृक्षोद्भवं नित्यं तत्पुण्याहं ब्रुवन्तु नः ॥

भो ब्राह्मणाः मम गृहेऽस्य कर्मणः पुण्याहं भवन्तो ब्रुवन्तु । "ॐपुण्याहम्" एतदुभयं मन्द्रस्वरेण । एवं पुनर्मध्यस्वरेण । एवं पुनरुच्चस्वरेण । तथैव प्रैषप्रतिवचने ।

ॐ पुनन्तु मा देवजनाः पुनन्तु मनसा धियः ।
पुनन्तु विश्वा भूतानि जातवेदः पुनीहि मा ॥

स्वस्तिरस्तु या विनाशाख्या पुण्यकल्याणवृद्धिदा ।
विनायकप्रिया नित्यं तां स्वस्ति प्र ब्रुवन्तु नः ॥

भो ब्राह्मणाः मम गृहे अस्मै कर्मणे स्वस्ति भवन्तो ब्रुवन्तु । "ॐ आयुष्मते स्वस्ति" इति प्रैषप्रतिवचने मन्द्रमध्योच्चस्वरैस्त्रिवारम् ॥

ॐ स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः ।
स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥

सागरस्य यथा वृद्धिर्महालक्ष्म्यादिभिः कृता ।
सम्पूर्णा सुप्रभावा च तामृद्धिं प्र ब्रुवन्तु नः ॥

भो ब्राह्मणाः मम गृहेऽस्य कर्मण ऋद्धिं भवन्तो ब्रुवन्तु । "ॐ ऋध्यताम्" । पूर्ववत्त्रिवारम् ।

ॐ सत्रस्य ऋद्धिरस्यगन्म ज्योतिरमृता अभूम ।
दिवम्पृथिव्या अध्या रुहामा विदाम देवान्त्स्वर्ज्योतिः ॥

पृथिव्यामुद्धृतायान्तु यत्कल्याणम्पुरा कृतम् ।
ऋषिभिः सिद्धगन्धर्वैस्तत्कल्याणं ब्रुवन्तु नः ॥

भो ब्राह्मणाः मम गृहेऽस्यकर्मणः कल्याणं भवन्तो ब्रुवन्तु । "ॐ कल्याणम्" इति त्रिः ।

ॐ यथेमां व्वाचङ्कल्याणीमावदानि जनेभ्यः ।
ब्रह्मराजन्याभ्यां शूद्राय चार्याय च स्वाय चारणाय च ॥
प्रियो देवानान्दक्षिणायै दातुरिह भूयासमयं
म्मे कामः समृध्यतामुप मादो नमतु ॥

समुद्रमथनाज्जाता जगदानन्दकारिका ।
हरिप्रिया च माङ्गल्या तां श्रियं प्र ब्रुवन्तु नः ॥

भो ब्राह्मणाः मम गृहेऽस्य कर्मणः श्रीरस्त्विति भवन्तो ब्रुवन्तु । "ॐ अस्तु श्रीः" त्रिवारम् ।

ॐ श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे
पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् ।
इष्णन्निषाणामुम्म इषाण सर्व्वलोकम्म इषाण ॥

पुण्याहसमृद्धिरस्तु । श्रीभगवान् प्रजापतिः प्रीयताम् । ततः कुशाग्रैः सपल्लवैर्विप्रा अभिषिञ्चेयुः । ततः सुवासिनीभिर्नीराजनं कार्य्यम् । अत्र वस्त्रादिदानमाचरेत् ॥

इति पुण्याहवाचनप्रयोगः ।

अथ मातृकापूजनम् ।

ताश्च पटे लिखितप्रतिमादिषु अक्षतपुञ्जेषु वा । यथा—

गौरी पद्मा शची मेधा सावित्री विजया जया ।
देवसेना स्वधा स्वाहा मातरो लोकमातरः ॥
धृतिः पुष्टिस्तथा तुष्टिरात्मनः कुलदेवता ।
गणेशेनाधिका ह्येता वृद्धौ पूज्यास्तु षोडश ॥

पूजोपाकरणान्युपकल्प्य प्राङ्मुख उपविश्य कुशयवजलान्यादाय । अद्येत्यादि विवाहकर्माङ्गभूतं गौर्यादिषोडशमातृकापूजनमहं करिष्ये । इति सङ्कल्प्य पुष्पाक्षतैः पृथक् पृथगावाहनम् । ॐ भूर्भुवः स्वः गणपते इहागच्छ इह तिष्ठ । ॐ भूर्भुवः स्वः गौरि इहागच्छ इह तिष्ठ । एवं "पद्मे शचि मेधे सावित्रि विजये जये देवसेने स्वधे स्वाहे मातरो लोकमातरो धृते पुष्टे तुष्टे आत्मकुलदेवते" इति प्रत्येकमावाह्य "मनो जूतिः" इति प्रतिष्ठाप्य प्रणवादिनमोन्तचतुर्थ्यन्तस्वस्वनाममन्त्रेण षोडशोपचारैः पूजयेत् । तत्र प्रयोगः "गौर्यै नमः एषोऽर्घः । इदमनुलेपनम् । इमानि पुष्पाणि । अयं धूपः । अयं दीपः । इदं नैवेद्यम् । इदं ताम्बूलम् । इदं वासः । इयं दक्षिणा" । एवमेव सर्वासां पृथक् २ पूजनम् । मातॄणां गणदेवतात्वपक्षे तु "गौर्यादिमातृभ्यो नमः" इति पूर्ववदुपचारैः पूजयेत् ।

अथ वसोर्द्धारा । तत्र पञ्च सप्त वा नातिनीचा न चोच्छ्रिताः कुड्यादिषु "ॐ वसोः पवित्रमसि शतधारं० कामधुक्षः" इत्यन्तं मन्त्रं पठित्वा घृतधारा उत्तरसंस्थाः कार्याः । ता यथा—

श्रीश्च लक्ष्मीर्धृतिर्मेधा स्वाहा पद्मा सरस्वती ।
माङ्गल्येषु तु पूज्यन्ते सप्तैता घृतमातरः ॥

ततो "वसोर्धारा देवताभ्यो नमः" इति पूर्ववत् षोडशोपचारैः पञ्चोपचारैर्वा पूजयेत् । वसोर्धाराकरणं च कातीयानामेव नान्येषाम् । तत आयुष्यमन्त्रजपः । "ॐ आयुष्यं वर्चस्यꣳ रायस्पोष मित्यादि दीर्घमायुः"

इत्यन्तम् । यस्मिन्कर्मणि मण्डपकरणं तत्र मण्डपसम्बन्धिदेवताः स्थापयेत् । तद्यथा । **अथाविघ्नमातृपूजा** । तण्डुलपूर्णहरिद्राखण्डक्रमुकफलयुक्ते न्युब्जशरावपिहिते हरिद्रादिमण्डिते शरावे सूत्रवेष्टिते सूक्ष्मकलशे अविघ्नसंज्ञं गणपतिमावाह्य पूजयेत् ।

**मोदश्चैव प्रमोदश्च सुमुखो दुर्मुखस्तथा ।**
**अविघ्नो विघ्नहर्ता च षडेते विघ्नमातरः ।**

"**मनो जूतिः**" इति मन्त्रेण प्रतिष्ठाप्य षोडशोपचारैः पञ्चोपचारैर्वा पूजयेत । आदिशब्दादुद्वर्तनोष्णोदकैरभ्यङ्गस्नानादिना । **ततो मण्डपमातरः पूज्याः** । दूर्वाशमीपल्लवकुशदेववृक्षपल्लवानाम्रादिप्रशस्तपत्रवेष्टितान् सूत्रेण षोढा वेष्टयेत । तत्रैकत्र मुसलं एकत्र च्छुरिकां शस्त्रं वा सर्वाणि वंशपात्रे निधाय तन्मध्ये उदक्संस्थेषु चतुर्षु क्रमेण । **नन्दिनीं १ नलिनीं २ मैत्रां ३ उमां ४** च तदुत्तरे मुसलगर्भे **पशुवर्द्धनीं ५** तदुत्तरशस्त्रगर्भे **भगवतीम् ६**। आग्नेयकोणस्तम्भात्प्रादक्षिण्येन आग्नेयकोणस्तम्भोपरि नन्दिनीनामकं वेष्टितं "**मनो जूतिः**" इति प्रतिष्ठाप्य । "**स्थिरो भव**" इति तत्र नन्दिनीं पूजयेत् । "**निकामे निकामे नः**" इति मन्त्रेण प्रोक्ष्य पूर्ववद्गन्धादिना पूजयेत् । स्तम्भमालभ्य 'ऊर्ध्व ऊषुणः" इति जपः । एवं सर्वेषु स्तम्भेषु ज्ञेयम् । ततो नैऋत्यस्तम्भे नलिनीं वायव्यस्तम्भे मैत्रां ईशानस्तम्भे उमां मण्डपमध्ये पशुवर्द्धिनीं भगवतीं च उक्तवत्स्थापयित्वा पूजयेत् । केचित्तु शूर्पे एव कुङ्कुमादिना षोडशमातृः सप्तमातृः अविघ्नमातृः षट् लिखित्वा पूजयन्ति । ततो वंशपात्रेण सह गौर्यादिमातृकास्थापनम् । वंशपात्रं च स्वयं गृहीत्वा अविघ्नकलशं च पत्न्या ग्राहयित्वा सब्राह्मणः '**आ नो भद्राः । स्वस्ति न इन्द्रः**' सुमङ्गलसूक्ता(१)नि पठन्मङ्गलवाद्यघोषेण गृहद्वारसमीपे गत्वा तत्र द्वारमातृकाः पूजयेत ।

**जयन्ती विजया नाम पिङ्गला च सुशोभना ।**
**भद्रकाली प्रपूज्यन्ते पञ्चैता द्वारमातृकाः ॥**

(१) **सुमङ्गलन्तु** "कनिक्रदज्जनुषम्" इत्यादि **ऋग्वेदीयम्** ।

अथ वा—

जया च विजया चैव भद्रकाली च पिङ्गला।
सुभगा चैव विज्ञेया द्वारमातॄः प्रपूजयेत्॥

"मनो जूतिः"। इति प्रतिष्ठाप्य पूर्ववत्पूजयेत्। ततो वसोर्द्धाराकरणं शान्तिसूक्तपाठञ्च कुर्य्यात्। ततो जलमातृकापूजनम्। ताश्च—

मत्सी कूर्मी च वाराही कुक्कुटी दुर्दुरी तथा।
जलूकी सोमपा चैव सप्तैता जलमातरः॥

पूर्ववत्प्रतिष्ठाप्य पूजयेत्(१)॥

इति मातृकापूजा समाप्ता।

---

अथाभ्युदयिकम्।

अक्रोधनैरिति नियमश्रावणम्। ततो निमन्त्रणक्रमेणैव "नान्दीमुखाः अस्मत्पित्रादित्रयमातामहादित्रयश्राद्धसम्बन्धिनः सत्यवसुसंज्ञकविश्वेदेवाः एष वः पादार्घः"। गन्धपुष्पादियुतं पाद्यं दद्यात्। "अमुकगोत्रा अस्मत्पितृपितामहप्रपितामहाः अमुकामुकशर्माणः सपत्नीकाः एष वः पादार्घः"। ब्राह्मणचरणयोर्दद्यात्। एवं मातामहयोर्विप्रयोः। विप्रानाचाम्य स्वयं चाचम्य "इदमासनमास्यताम्"। इति सकुशेष्वासनेषूपवेशयेत्। कर्मपात्रं जलेनापूर्य प्राणानायम्य विष्णुं स्मृत्वा तज्जलेनोपकरणानि प्रोक्ष्य। "अद्यामुकगोत्राणां पितृपितामहप्रपितामहानां सपत्नीकानां नान्दीमुखानां तथा च मातामहप्रमातामहवृद्धप्रमातामहानां सपत्नीकानां नान्दीमुखानां अमुककर्मनिमित्तं सत्यवसुसंज्ञकविश्वेदेवपूर्वकं अपिण्डकमाभ्युदयिकं श्राद्धमहं करिष्ये। ॐ कुरुष्व" इति प्रतिवचनम्। प्रणवव्याहृतिपूर्विकां गायत्रीं त्रिर्जपेत्। "पित्रादित्रयमातामहादित्रयश्राद्धसम्बन्धिनां सत्यवसुसंज्ञकानां विश्वेषान्देवानामिदमासनं नमः"।

---

(१) मातृपूजने यथाकुलदेशाचारं क्रम आदरणीयः। क्रमभेदस्य प्रत्यक्षदर्शनात्।

इत्यासनं दद्यात् । "अमुकगोत्राणां पितृपितामहप्रपितामहानाममुकामुकशर्मणां सपत्नीकानामिदमासनं नमः" । एवं मातामहानामपि । "सत्यवसुसंज्ञकाः विश्वेदेवाः एष गन्धः । इमानि पुष्पाणि । एष धूपः । एष दीपः । इदमाच्छादनार्थे हिरण्यम्" । जलयवकुशान्यादाय । "पित्रादित्रयमातामहादित्रयश्राद्धसम्बन्धिनो विश्वे देवाः इमानि पुष्पगन्धधूपदीपवासांसि युष्मभ्यन्नमः" । एवमेव पित्रादीनामपि । "गोत्राः पितृपितामहप्रपितामहाः अमुकामुकशर्माणः सपत्नीकाः नान्दीमुखाः इमानि गन्धपुष्पधूपदीपवासांसि वो नमः" । एवं मातामहानामपि । अन्नपरिवेषणाग्नौकरणाभावात्पात्रालम्भाभावः । कुशयवजलान्यादाय । "पित्रादित्रयमातामहादित्रयश्राद्धसम्बन्धिसत्यवसुसंज्ञकेभ्यो विश्वेभ्यो देवेभ्यः इदं युग्मब्राह्मणभोजनपर्याप्तमन्नन्दातुमहमुत्सृजे" । गोत्रेभ्यः पितृपितामहप्रपितामहेभ्यः अमुकामुकशर्मभ्यः नान्दीमुखेभ्यः युग्मब्राह्मणभोजनपर्याप्तमन्नमहमुत्सृजे" । एवं मातामहादिभ्यः । ततोऽश्नत्सु पित्र्यमन्त्रवर्ज्यं जपः । तृप्तान् ज्ञात्वा अन्नं विकीर्य सकृत्सकृदपो दत्वा पूर्ववद्गायत्रीं जपित्वा मधुमतीर्मधिवति च "सम्पन्नम्" इति पृष्ट्वा "सुसम्पन्नम्" इति प्रत्युक्तिः । "शेषमन्नं किं क्रियताम्" इति पृष्ट्वा "इष्टैः सह भुज्यताम्" इति तैरुक्ते ब्राह्मणानाचामयेत् । "सुप्रोक्षितमस्तु । शिवाऽआपः सन्तु । सौमनस्यमस्तु । अक्षतं चारिष्टं चास्तु । नान्दीमुखाः पितरः प्रीयन्ताम् । नान्दीमुखाः पितामहाः प्रीयन्ताम् । नान्दीमुखाः प्रपितामहाः प्रीयन्ताम् । नान्दीमुखा मातामहाः प्रीयन्ताम् । नान्दीमुखाः प्रमातामहाः प्रीयन्ताम् । नान्दीमुखा वृद्धप्रमातामहाः प्रीयन्ताम्" । इति यवोदकं दद्यात् । प्राञ्जलिः । "ॐअघोराः पितरः सन्तु । ॐसन्तु" इति प्रतिवचनम् । "गोत्रन्नो वर्द्धताम् । वर्द्धतां वो गोत्रम् । दातारो नोऽभिवर्द्धन्ताम् । वेदाः सन्ततिरेवच श्रद्धा च नो मा व्यगमद्बहुदेयं च नोऽस्तु । ॐअस्तु" इति प्रतिवचनम् । कृतैतन्नान्दीश्राद्धम-

तिष्ठासिद्ध्यर्थं द्राक्षामलकयवमूलनिष्क्रयिणीं दक्षिणां दातुमह-मुत्सृजे"। इति सङ्कल्पं कुर्यात्। यदि दद्यात्तदा दक्षिणा दत्तेति ब्रूयात्। पितृब्राह्मणे तु हरीतक्यामलकयवमूलनिष्क्रयिणीं दक्षिणां दद्यात्। ततः "विश्वे देवाः प्रीयन्ताम्" इति देवे वाचयित्वा। "प्रीयन्तां वो विश्वे-देवाः। स्वति भवन्तो ब्रुवन्तु। ॐस्वस्ति" इति सर्वैरुक्ते। "नान्दी-श्राद्धं सम्पन्नम्"इति तेनोक्ते। "ॐसुसम्पन्नम्"इति ते ब्रूयुः। "स्व-स्ति नः" इति पठेत्। ब्राह्मणान् प्रणिपत्य प्रसाद्य "व्वाजेवाजेऽवत"इति पित्रादित्रयमातामहादित्रयपूर्वकं देवद्विजौ विसृज्य 'आ मा व्वाजस्य' इति विप्राननुव्रज्य प्रदक्षिणीकृत्य आचामेत्।

इति श्री प्रथमशारवीयरामकृष्णविरचिते पारस्करगृह्यसू-त्रविवरणे संस्कारगणपतौ गणपतिपूजनपुण्याहवाच-नमातृकापूजननान्दीश्राद्धप्रयोगः।

---

अथ ग्रहयज्ञस्वरूपमभिधीयते। स च नित्यनैमित्तिककाम्यभे-देन त्रिधा। तत्र अयनविषुवोपरागादिषु नित्यः। गर्भाधानादिसंस्कार-कर्मसु नैमित्तिकः। विपदपगमसम्पदादिकामेषु काम्यः। तत्र नित्यनै-मित्तिकयोः प्रतिपदोक्तवस्त्वभावेऽनुकल्पानि ग्राह्याणि। काम्ये तु प्रति-निध्यभावात्प्रतिपदोक्तान्येव वस्तूनि। तथा च शौनकः——

ग्रहशान्तिं प्रवक्ष्यामि शौनकोऽहं द्विजन्मनाम्।
पुण्येऽहनि शुभे वारे कुर्याद्वा च त्रिजन्मसु॥
अयने विषुवे चैव सोमसूर्योपरागयोः।
ग्रहाणामुग्रचेष्टानामेतां शान्तिं समाचरेत्॥
नित्योऽयं ग्रहयज्ञः स्यान्नैमित्तिक इतः परम्।
गर्भाधानादिसंस्कारकर्मस्वपि विशेषतः॥
कार्यारम्भेषु सर्वेषु नववेश्मप्रवेशने।

अत्र कार्यारम्भेष्वित्यादौ सर्वत्र निमित्तसप्तमी ज्ञेया।

आरोग्यज्ञानसमये संक्रान्तौ रोगसम्भवे ।
अतिचारे च यः कुर्याद्ग्रहपूजां विधानतः ॥
सोऽभीष्टफलमाप्नोति" इति ।

तथाचोक्तं रुद्रपद्धतौ —

आदौ विनायकं पूज्य ग्रहांश्चैव विधानतः ।
कर्मणां सिद्धिमाप्नोति श्रेयश्चाप्नोत्यनुत्तमम् ॥

कर्मतत्त्वदीपिकायां च —

विवाहोत्सवयज्ञेषु प्रतिष्ठादिषु कर्मसु ।
निर्विघ्नार्थं मुनिश्रेष्ठ तथोद्वेगोद्भवेषु च ॥
वश्यकर्माभिचारेषु तथैवोच्चाटनादिषु ।
नवग्रहमखं कृत्वा ततः काम्यं समाचरेत् ॥

स्कन्दपुराणे —

सुखासीनममुं गार्ग्यं कौशिकः परिपृच्छति ।
निखिलां ग्रहशान्तिं मे भगवन्वक्तुमर्हसि ॥

गार्ग्य उवाच —

देवदानवगन्धर्वा यक्षराक्षसपन्नगाः ।
पीड्यन्ते ग्रहपीडाभिः किं पुनर्भुवि मानवाः ॥
शनैश्चरेण सौदासो नरमांसेन योजितः ।
राहुणा पीडितो राजा नलो भ्रान्तो महीतले ।
अङ्गारकविरोधेन रामो राष्ट्राद्विवासितः ।
अष्टमेन शशाङ्केन हिरण्यकशिपुर्हतः ॥
रविणा चाष्टमस्थेन रावणो विनिपातितः ।
गुरुणा जन्मसंस्थेन हतो राजा सुयोधनः ॥
पाण्डवा बुधपीडायां विकर्मणि नियोजिताः ।
षष्ठेनोशनसा युद्धे हिरण्याक्षो निपातितः ॥
एते चान्ये च बहवो ग्रहदोषैस्तु पीडिताः ।

यतः —

ग्रहाधीना नरेन्द्राणामुच्छ्रायः पतनानि च ।

भावाभावौ च जगतस्तस्मात्पूज्यतमा ग्रहाः ॥

इति याज्ञवल्क्यवचनम्। अत्र नरेन्द्रग्रहणमुपलक्षणम्। गर्गः——

सुरार्चनेन दानेन साधूनां सङ्गमेन च।
शुश्रूषया च विप्राणां ग्रहारिष्टं विनश्यति ॥

याज्ञवल्क्यः——

श्रीकामः शान्तिकामो वा ग्रहयज्ञं समारभेत्।
वृष्टयायुः पुष्टिकामो वा तथैवाभिचरन्नपि ॥

मत्स्यपुराणेऽप्येवमेव। अपि च——

यश्च यस्य यदा तुष्टः स तं यत्नेन पूजयेत्।
ब्रह्मणैषां वरो दत्तः पूजिताः पूजयिष्यथ ॥

ग्रहानाह——

सूर्यः सोमो महीपुत्रः सोमपुत्रो बृहस्पतिः।
शुक्रः शनैश्चरो राहुः केतुश्चेति ग्रहाः स्मृताः ॥
गृहस्योत्तरपूर्वेण मण्डपं कारयेद्बुधः।
रुद्रायतनभूमौ वा चतुरस्रमुदक्प्लवम् ॥
दशहस्तमथाष्टौ वा हस्तान्कुर्याद्विधानतः।
तस्य द्वाराणि चत्वारि कर्तव्यानि विचक्षणैः ॥

स्कान्दे——

नवग्रहमखे कुण्डं हस्तमात्रं समं भवेत्।
चतुरस्रमधोहस्तं योनिवक्त्रं स मेखलम् ॥
चतुरङ्गुलविस्तारा मेखलास्तद्वदुच्छ्रिताः।
मानहीनाधिकं कुण्डमनेकभयदं भवेत् ॥

मात्स्ये——

वितस्तिमात्रा योनिः स्यात्षट्सप्ताङ्गुलविस्तृता।
गजोष्ठसदृशी तद्वदायता च्छिद्रसंयुता ॥
मेखलोपरि सर्वत्र अश्वत्थदलसन्निभा।
सा च पश्चिमतो ज्ञेया योनिस्त्वादिति केचन ॥

विधानपारिजाते--

मानहीनाधिकं कुण्डमनेकभयदं भवेत् ।

तस्माच्चोत्तरपूर्वेण स्थण्डिलं हस्तमात्रकम् ॥

त्रिवप्रं चतुरस्रं च वितस्त्युच्छ्रायसम्मितम् ।

स्थण्डिलं वेदिः । वप्रा मेखलाः । तदुक्तं विधानपारिजाते मात्स्ये-

द्व्यङ्गुलोच्छ्रितो वप्रः प्रथमः समुदाहृतः ।

अंगुलोच्छ्रायसंयुक्तं वप्रद्वयमथोपरि ॥

द्व्यङ्गुलस्तत्र विस्तारः सर्वेषां कथितो बुधैः" इति ।

अथ ऋत्विग्वरणं स्कन्दपुराणे—

नवग्रहमखे कुर्यादृत्विजश्चतुरः शुभान् ।

अथवा चैकमभ्यर्च्य विधिना ब्रह्मणा सह ॥

ग्रहदीपिकायाम्--

ऋत्विजोऽष्टौ च चत्वारो द्वावप्येकस्तथैव च ।

नवग्रहमखे कुर्यादृत्विजश्चतुरः शुभान् ॥

एतच्चोपलक्षणम् । बहवोऽपि कर्तव्याः । होमसंख्याकान् ऋत्विजो वृणीत । सर्वत्राचार्यब्रह्माणौ नियतौ । वरणं विनाऽनॄर्त्विजत्वापत्तेः । तथाचोक्तं श्री अनन्तभाष्ये---

होतृत्वप्रापणायैतद्वरणं त्विष्टसाधनम् ।

यजमानेन कर्तव्यमानन्त्यार्थमिहापि तत् ॥

वरणानन्तरं ऋत्विजे ज्वरादियुक्ते मृते वा तदा यजमानस्तत्स्थानेऽन्यं वृत्वा कर्मणि योजयेत् । तथा च श्रौतसूत्रभाष्ये ब्रह्मवरणप्रकरणे श्रीअनन्तेन लिखितम् । तद्यथा--

यावन्न योज्यतेऽन्यस्तु वरणेन स्वकर्मणि ।

न तावत्तत्समाख्यानं लभते कर्तृहेतुकम् ॥

अथ रक्षाबन्धनम् । रक्षाकङ्कणबन्धनमिति मत्स्यपुराणात् । तच्च प्रयोगे वक्ष्यामि । अथ जपस्थानानि नारदीये—

शिवस्य सन्निधाने च सूर्याग्न्योर्वा गुरोरपि ।

दीपस्य ज्वलितस्यापि जपकर्म प्रशस्यते ॥

तथा च शिवः—

गृहे जपं समं विद्याद्गोष्ठे शतगुणं भवेत् ।
नद्यां शतसहस्रं स्यादनन्तं शिवसन्निधौ ॥
समुद्रतीरे च ह्रदे गिरौ देवालयेऽप्यथ ।
पुण्याश्रमेषु सर्वेषु जपं कोटिगुणं भवेत् ॥

अन्यच्च --

अग्रे पृष्ठे तथा वामे समीपे गर्भमन्दिरे ।
जपं प्रदक्षिणं होमं न कुर्याद्धि शिवालये ॥

अथासनविचारः । मन्त्रमुक्तावल्याम्--

वंशचर्मधरादारुतृणपल्लवनिर्मितम् ।
वर्जयेदासनं धीमान् दारिद्र्यव्याधिदुःखदम् ।
तूलकम्बलवस्त्राणि पट्टव्याघ्रमृगाजिनम् ॥
कल्पयेदासनं धीमान् सौभाग्यज्ञानऋद्धिदम् ॥

अथ जपमाला मन्त्रखण्डे--

स्फाटिकी मौक्तिकी वाऽपि प्रोतव्या सितसूत्रकैः ।
सर्वकर्मसमृद्ध्यर्थं जपेद्रुद्राक्षमालया ॥
अरिष्टपुत्रजीवैश्च शङ्खः पद्ममणिस्तथा ।
कुशग्रन्थिश्च रुद्राक्ष उत्तमं चोत्तरोत्तरम् ॥

अन्यत्रापि—

रुद्राक्षश्वेतपद्माक्षमाले तु ह्यखिले जपेत् ।
अतिस्थूलोऽतिसूक्ष्मश्च स्फुटितो भङ्गुरो लघुः ॥
भिन्नः पुरा धृतो जीर्णो रुद्राक्षो न वरः स्मृतः ।
अलाभे जपमालानां करशाखासु पर्वभिः ॥
अनामिकाया यो मध्यस्तस्मादधः क्रमेण तु ।
तर्जन्यादौ जपान्तश्च अक्षमाला करे स्थिता ॥
अङ्गुल्यग्रेषु यज्जप्तं यज्जप्तं मेरुलङ्घने ।

असंख्येन तु यज्जप्तं तत् सर्वं निष्फलं भवेत् ॥

कामनायां विशेषः—

त्रिषड्भिः स्याद्धनं पुष्टिः सप्तविंशतिभिर्भवेत् ।
पञ्चविंशतिभिर्मोक्षो पञ्चदश्याभिचारके ॥
पञ्चाशद्भिः कुले शान्तिः सर्वसिद्धिरुदीरिता ।

अन्यच्च—

कम्पनात्सिद्धिहानिः स्याद्धननं बहुदुःखदम् ।
शब्दे जाते भवेद्रोगो करभ्रष्टा विनाशकृत् ॥
छिन्ने सूत्रे भवेत्मृत्युस्तस्माद्यत्नपरो भवेत् ।
अनुलोमविलोमाभ्यां गणयेन्मन्त्रवित्तमः ॥

अथ मालासंस्कारः—

प्रक्षाल्य पञ्चगव्येन तथा पञ्चामृतेन च ।
संस्नाप्य पञ्चगव्येन शिवकुम्भस्थितेन च ॥
सर्वं वै मूलमन्त्रेण गन्धपुष्पाक्षतादिभिः ।
धूपदीपनैवेद्यादि दत्वा चाष्टशतं स्पृशेत् ॥
मूलमन्त्रं जपेत्पश्चाद्दण्डवत्प्रणमेत् पुनः ।
एवं या संस्कृता माला जपकर्मणि सिद्धिदा ॥

गोभिलः—

नार्द्रवासा जपं कुर्याद्धोमं दानं प्रतिग्रहम् ।
सर्वन्तद्राक्षसं विद्याद्बहिर्जानु च यत्कृतम् ॥

मौनेन जपं कुर्यात् । तदुक्तमङ्गिरसा—

सन्ध्ययोरुभयोर्जाप्ये भोजने दन्तधावने ।
पितृकार्ये च दैवे च तथा मूत्रपुरीषयोः ॥
गुरूणां सन्निधौ दाने योगे चैव विशेषतः ।
एषु मौनं समातिष्ठन्स्वर्गं प्राप्नोति मानवः ॥

योगियाज्ञवल्क्यः—

यदि वाग्यमलोपः स्याज्जपादिषु कथं च न ।
व्याहरेद्वैष्णवं मन्त्रं स्मरेद्वा विष्णुमव्ययम् ॥

शाकटायनोऽपि—

क्षुते निष्ठीवने चैव उच्छिष्टे च तथाऽनृते।
पतितानां च सम्भाषे दक्षिणं श्रवणं स्पृशेत् ॥
अग्निरापश्च वेदाश्च सोमसूर्यानिलस्तथा ।
सर्व एव हि विप्रस्य कर्णे तिष्ठन्ति दक्षिणे ॥

अथ पुरश्चरणम् । कुलार्णवे—

पञ्चाङ्गानि महादेवि जपो होमश्च तर्पणम् ।
स्वाभिषेकश्च विप्राणामाराधनमपीश्वरि ॥

सनत्कुमारोपि—

तर्पयेत्तद्दशांशेन सघृतेन फलाम्भसा ।
कुर्यात्तद्दशांशहोमस्ततः सिद्धो भवन्मनुः" इति ।
स्वाहाऽन्तेनैव मन्त्रेण होमः कार्यो विधानतः ।
नमोऽन्तेन नमस्कारो मकारान्तेन वै जपः ॥
संन्यासिनां न होमोऽस्ति न च ब्राह्मणतर्पणम् ।
जपमात्रेण सिद्धिः स्यात्तर्पणाद्यं विकल्पितम् ॥

गौतमीये—

होमकर्मण्यसक्तानां विप्राणां द्विगुणो जपः ।
इतरेषां तु वर्णानां त्रिगुणादि विधीयते ॥

कश्चित्तु प्रत्यहं जपदशांशतर्पणं करोति । कश्चित्तु लक्षे पूर्णे करोति ।

उक्तं च नारदीये—

स्वजपस्य दशांशेन होमं कुर्याद्दिने दिने ।
अथ वा लक्षपर्यन्ते होमः कार्यो विपश्चिता ॥

वैशम्पायनः—

तर्पणस्य दशांशेन नमोऽन्तं मन्त्रमुच्चरेत् ।
अभिषिञ्चेत्स्वमूर्धानं जलैः कुम्भाख्यमुद्रया ॥

होमे मुद्राः—

होमे मुद्राः स्मृतास्तिस्रो मृगी हंसी च शूकरी ।

शान्तिके तु मृगी ज्ञेया हंसी पौष्टिककर्मणि ॥
शूकरी त्वभिचारेषु कार्या तन्त्रविदुत्तमैः ।

मुद्रालक्षणमाह—

शूकरी करसङ्कोची हंसी मुक्तकनिष्ठिका ।
कनिष्ठातर्जनीहीना मृगी मुद्रा प्रकीर्तिता ॥
अभिचारादिहोमेषु शूकरी कथिता बुधैः ।
शूकरी पुत्रकामाय धनकामाय हंसिनी ॥
मृगी मोक्षे प्रकर्तव्या आहुतिः सर्वकामिका ।
हुतं यन्मुद्रया हीनं तत्सर्वं निष्फलं भवेत् ॥

अग्निकर्णादिहोमे फलमाह—

बधिरत्वं कर्णहोमे नेत्रे त्वन्धत्वमाप्नुयात् ।
नासिकायां मनः पीडा शिरोहोमो हि मृत्युदः ॥
यतः काष्ठं ततः श्रोत्रं यतो धूमोऽपि नासिका ।
यतोऽल्पज्वलनं नेत्रं यतो भस्म ततः शिरः ॥
यतः प्रज्वलितो वह्निस्तन्मुखं जातवेदसः ।

अथ जपविधिः । ऋष्यादिस्मरणम् । उक्तं च सर्वानुक्रमे कात्यायनेन "एतान्यविदित्वा योऽधीतेऽनुब्रूते जपति जुहोति यजते याजयते तस्य ब्रह्म निर्वीर्यं भवतीति" ।

तथा च गोविन्दभट्टकारिकायाम्—

ऋष्यादीन्यविदित्वा योऽनुब्रूते यजते तथा ॥
याजयेद्वा तस्य कर्म निर्वीर्यं जायते स्फुटम् ।
न्यासः कार्यो ग्रहेन्द्राणां देवताभिः सहानघ" इति ।

न्यास उपलक्षणमेव शिरःपल्लवासनादीन्यपि । उक्तं च—

न्यासहीनो भवेन्मूको मृतः स्याच्छिरसा विना ।
अपल्लवस्तु नग्नः स्यात्सुप्तः स्यादासनं विना ॥
गुरुं विना वृथा मन्त्रः श्रव्यजापस्तु शून्यकः ।
निर्वीर्यो दुष्टदत्तः स्यात्सोऽन्यबीजस्तु कीलितः ॥

दुष्टदत्तः दुष्टाय दत्त इत्यर्थः ।

देवच्छन्दर्षिहीनो यः स तु सुप्तो भुजङ्गमः ।

मूकादयो मन्त्रवर्ज्याः । वैदिके मन्त्रे न पल्लवादिविचारः । एवं जपं कृत्वा होममारभेत् । अथ स्वगृह्योक्तविधिना अग्निस्थापनं कृत्वा ग्रहादीन् देवान् स्थापयेत् । तथा चोक्तं मत्स्यपुराणे—

अग्निप्रणयनं कृत्वा तस्यामावाहयेत्सुरान् ।
देवतास्तत्र संस्थाप्य विंशतिर्द्वादशाधिकाः ॥

तस्यां वेदिकायाम् ।

जन्मभूर्गोत्रमग्निश्च वर्णस्थानमुखानि च ।
योऽज्ञात्वा कुरुते शान्तिं ग्रहास्तेनावमानिताः ॥

अथ ग्रहभूमयः—

उत्पन्नोऽर्कः कलिङ्गेषु यमुनायां च चन्द्रमाः ।
अङ्गारकस्त्ववन्त्यां वै मगधायां हिमांशुजः ॥
सैन्धवेषु गुरुर्जातः शुक्रो भोजकटे तथा ।
शनैश्चरस्तु सौराष्ट्रे राहुर्वै राठिने पुरे ॥
अन्तर्वेद्यां तथा केतुरित्येता ग्रहभूमयः ॥

अथ ग्रहाणां गोत्राणि—

आदित्यः काश्यपो गोत्र आत्रेयश्चन्द्रमा भवेत् ।
भारद्वाजो भवेद्भौमस्तथाऽत्रेयश्च चन्द्रजः ॥
शक्रपूज्योऽङ्गिरागोत्रः शुक्रो वै भार्गवस्तथा ।
शनिः काश्यप एवाथ राहुः पैठीनसिस्तथा ॥
केतवो जैमिनीयाश्च ग्रहाग्निस्तदनन्तरम् ।
आदित्ये कपिलो नाम पिङ्गलः सोम उच्यते ॥
धूमकेतुस्तथा भौमे जाठरोऽग्निर्बुधे स्मृतः ।
गुरौ चैव शिखी नाम शुक्रे भवति हाटकः ॥
शनैश्चरे महातेजा राहुकेत्वोर्हुताशनः ॥

अथ वर्णाः—

भास्कराङ्गारकौ रक्तौ शुक्लौ शुक्रनिशाकरौ ।

सोमपुत्रो गुरुश्चैव तावुभौ पीतकौ स्मृतौ ॥
कृष्णं शनैश्चरं विद्याच्चित्रा राहुश्च केतवः ॥

अथ स्थानानि—

मध्ये तु भास्करं विद्याच्छशिनं पूर्वदक्षिणे ।
दक्षिणे लोहितं विद्याद्बुधं पूर्वोत्तरेण तु ॥
उत्तरे तु गुरुं विद्यात्पूर्वतो भार्गवं न्यसेत् ।
पश्चिमेन शनिं विद्याद्राहुं दक्षिणपश्चिमे ॥
पश्चिमोत्तरतः केतुः स्थाप्यो वै शुक्लतण्डुलैः ॥

अथ ग्रहाणां प्रतिमाद्रव्याणि ग्रहदीपिकायां याज्ञवल्क्यः—

ताम्रकात्स्फटिकाद्रक्तचन्दनात्स्वर्णकादुभौ ।
राजतादयसः सीसात्कांस्यात्कार्या ग्रहाः क्रमात् ॥
स्ववर्णैर्वा पटे लेख्या गन्धैर्मण्डलकेषु वा ॥

स्कन्दपुराणे—

शुक्रार्कौ प्राङ्मुखौ ज्ञेयौ गुरुसौम्यावुदङ्मुखौ ।
प्रत्यङ्मुखः शनिः सोमः शेषा दक्षिणतोमुखाः ॥

तथा च चिन्तामणौ—

आदित्याभिमुखाः सर्वे साधिप्रत्यधिदेवताः ।
स्थापनीया मुनिश्रेष्ठ ! नान्तरेण पराङ्मुखाः ॥

नान्तरेणेति आदित्यस्यान्यस्य च स्थापितस्य ग्रहस्य मध्ये अन्यो ग्रहो न स्थापनीय इत्यर्थः । न च पराङ्मुखाः स्थापनीयाः । पीठानामाकृतिनियमनमाह वशिष्ठः—

वृत्तमण्डलमादित्ये चतुरस्रं निशाकरे ।
भूमिपुत्रे त्रिकोणं स्याद्बुधे वै बाणसन्निभम् ॥
गुरौ तु पट्टिशाकारं पञ्चकोणं च भार्गवे ।
शनौ स्याद्धनुषाकारं शूर्पाकारं तु राहवे ॥
केतोश्चैव ध्वजाकारं मण्डलानि यथाक्रमम् ॥

प्रकारान्तरेण ग्रहमण्डलान्युच्यन्ते—

पद्ममध्ये रविं रक्तं प्राङ्मुखं वर्तुलं सदा ।

अग्निकोणे मितं चन्द्रं चन्द्रार्धसदृशं विधुम् ॥
दक्षिणे मङ्गलं विद्यात्त्रिकोणं लोहितं शुभम् ।
ईशान्ये धनुषाकारं पीतवर्णन्तु सोमजम् ॥
उत्तरे पीतवर्णं च पद्माकारं बृहस्पतिम् ।
चतुरस्रं तु पूर्वस्यां शुक्लवर्णं तु भार्गवम् ॥
पश्चिमे कृष्णवर्णन्तु दण्डाकारं शनैश्चरम् ।
नैर्ऋत्यां मकराकारं कृष्णाङ्गं रविमर्दनम् ॥
धूम्रवर्णास्तु वायव्ये केतवः खड्गसन्निभाः ॥

अङ्गुलसंख्यानियममाह वशिष्ठः—

द्वादशाङ्गुलमादित्ये सोमे तु द्विगुणं भवेत् ।
वेदाङ्गुलं भूमिपुत्रे तदेव बुधमालिखेत् ॥
षडङ्गुलं गुरौ चैव भृगौ चैव नवाङ्गुलम् ।
सौरौ रसाङ्गुलं चैव राहौ स्याच्छ्रुतिनेत्रकम् ॥
केतौ गजाङ्गुलं प्रोक्तं मण्डलानि यथाक्रमम् ॥

द्वादशाङ्गुलमादित्ये इत्यत्र सूर्यपीठस्य द्वादशाङ्गुलं क्षेत्रफलं ग्राह्य-मित्यर्थः । अत्र केचिद्भुजप्रमाणमिच्छन्ति । तदतीव मन्दम् , हस्तमित-वेद्याः नवभागे कृतेऽष्टाङ्गुलदीर्घमष्टाङ्गुलविस्तारात्मकमेकं कोष्ठं भवति । तत्र चतुर्विंशत्यङ्गुलभुजस्य चन्द्रमसो निवेशाभावादतो क्षेत्रफलं ग्राह्यम् । मण्डलं पीठमिति पर्यायशब्दः । अत्र विशेषमाह वशिष्ठः—

ग्रहशान्तिं प्रवक्ष्यामि पुराणश्रुतिचोदिताम् ।
पुण्येऽह्नि विप्रकथिते कृत्वा ब्राह्मणवाचनम् ॥
ग्रहान् ग्रहाधिदेवांश्च स्थाप्य होमं समाचरेत् ।
ग्रहयज्ञस्त्रिधा प्रोक्तः पुराणश्रुतिकोविदैः ॥
प्रथमोऽयुतहोमः स्याल्लक्षहोमस्ततः परम् ।
तृतीयः कोटिहोमस्तु सर्वकामफलप्रदः ॥
अयुते आहुतीनां च नवग्रहमखः स्मृतः ।
तावत्तस्य विधिं वक्ष्ये पुराणश्रुतिभाषितम् ॥

गर्त्तस्योत्तरपूर्वेण वितस्तिद्वयविस्तृताम् ।
वप्रद्वयवृतां वेदीं वितस्त्युच्छ्रायसंमिताम् ॥
संस्थापनाय देवानां चतुरस्रामुदक्प्लवाम् ॥

वितस्तिद्वयमेकहस्तमानं तन्मिता वेदी अयुतहोमग्रहमखे ज्ञेया ।

लक्षहोमे ग्रहमखे वितस्तित्रयसंमिता ।
कोटिहोमे ग्रहमखे सा चतुष्टयसंमिता ॥

वितस्तिचतुष्टयसम्मितेत्यर्थः । होमपरत्वेन ग्रहवेदीमानं भिन्नं भिन्नम्, अतस्तत्तद्धोमे तत्तन्मानयुतां ग्रहवेदीं विधाय तामेकहस्तमितां प्रकल्प्य तच्चतुर्विंशांशोऽङ्गुलमित्यादि कृत्वोक्तवद्ग्रहपीठानि कार्याणि । एतदाशयेनैव करमितां ग्रहवेदीमित्युक्तमापादेवकृतग्रहपीठमालायाम्—

मुनिवाक्यतः करमितां ग्रहवेदीं
नवधा विधाय खगपाठनिवेशान् । इति ॥

ग्रहपीठक्षेत्रफलसाधनान्याह स एव । अथ सूर्यपीठसाधनमाह—

एका १ ङ्गुलाचल ७ यवाऽहित ६ संख्ययूका
व्यासार्द्धकेन मिहिरस्य विधेहि वृत्तम् ।
स्याद्द्वादशाङ्गुलफलं १२ खलु काश्यपाख्य-
गोत्रस्य रक्तवपुषो हरिदिङ्मुखस्य ॥ १ ॥

अङ्गुल १ यव ७ यूका ६ एतत्प्रमाणेन कर्कटेन वृत्तं कुर्यादित्यर्थः ॥१॥

अथ चन्द्रपीठसाधनमाह—

वेदाङ्गुलाद्रियवपक्ष ४।७।२। समान यूकै-
र्वेदैर्भुजैः कुरु कृतास्रमतुष्णरश्मेः ।
सिद्धाङ्गुलं २४ क्षितिफलं परदिङ्मुखस्य
चात्रेयगोत्रजनुषो धवलाङ्गभासः ॥ २ ॥

अङ्गुल४ यव७ यूका२ एतत्प्रमाणाश्चतुरो भुजाः कर्तव्या इत्यर्थः॥२।

अथ भौमपीठसाधनमाह—

त्र्यङ्गुलखयवांबुधियूकं ३।०।४
त्रिभुजकृतत्रिकोणमिदमारस्य ।

भारद्वाजसगोत्रस्या—

ऽवाग्वदनस्य श्रुति४फलमनलभासः॥ ३ ॥

अङ्गुल ३ यव० यूका ४ एतत्प्रमाणं भुजत्रयं कर्तव्यमित्यर्थः॥३॥

अथ बुधपीठसाधनमाह—

तिर्यग्वेदयवान्तरौ ४ कुरु भुजौ वेदाङ्गुलौ ४ ये तयो-
रग्रे चोर्ध्वमधः पृथक् त्रियवकैः ३ संवर्ध्य ताभ्यां पुनः।
देहि द्व्यङ्गुलषड्यवोन्मित२।६गुणद्वन्द्वं मिथः सम्मिल-
द्वक्रं नेत्रयवैश्च ३ चापसहितं वेदाङ्गुलं वै विदः॥ ४ ॥

दक्षिणोत्तरभुजौ चतुरङ्गुलौ कर्तव्यौ। कोटिश्चतुर्यवात्मकः। तदुत्तरभागे संलग्नं पूर्वापरं सूत्रं यवद्वयाधिकमेकाङ्गुलात्मकम्। अंगुल २ यव ६ एतत्प्रमितं गुणद्वयं देयं त्रिकोणम्॥ ४ ॥

अथ बुधस्य गोत्रादि—

कुङ्कुमसङ्काशरुचेः श्रेष्ठतरात्रेयगोत्रजातस्य।
उदगाशाभिमुखस्य प्रोक्तं पीठं बुधस्योक्तम्॥

अथ गुरुपीठसाधनमाह—

दास्रा२ङ्गुलानल३मिताङ्गुलबाहुकोटी-
जातं च दीर्घचतुरस्रमिदं गुरोः स्यात्।
तर्काङ्गुल६क्षितिफलं खलु पीतभासः
सौम्याननस्य परमाङ्गिरसान्वयस्य॥ ५ ॥

द्व्यङ्गुलो२याम्योत्तरो भुजः। त्र्यङ्गुल३मिता पूर्वापरा कोटिरित्यर्थः॥५॥

अथ शुक्रपीठसाधनम्। तत्रादौ समकलमाह—

व्यासार्धतः कुनगबाण १।७।५ मिताङ्गुलाद्या-
द्वृत्ते कृतेऽश्वियमराम २।२।३मिताङ्गुलाद्याः।
ज्याः पञ्च शक्रहरितः कुरु तत्र मृद्धि-
वृत्तं नवाङ्गुल९फलं हि कवेः शरास्रम्॥ ६ ॥

प्रकारान्तरेणोत्कालिकं शुक्रपीठसाधनमाह—

वृत्तं द्व्यग्निरसाङ्गुलादिक २।३।६ विततत्यर्धेन कृत्वाङ्कय

प्राच्यास्त्रि ३ द्वि २ रसा ६ गुलादिभिरमुष्मिन्पञ्च बाहून्तनु ।
पश्चाग्निद्विमितां ५।३।२ स्तृतीयमिलितान्वृत्तं च कोणाधरान्
बाहून् मृड्ढि भृगोर्नवाङ्गुलफलं पीठं शरास्युत्कलम् ॥
भार्गवगोत्राप्तजनेर्वासवकाष्ठाकृतास्येन्दोः ।
शुक्लतरदेहभासः पीठं शुक्रस्य साधु स्यात् ॥
अथ शनिपीठसाधनमाह—
वेदाब्धिवेदाब्धिमिताङ्गुलादिना ४।४।४।४
व्यासार्धकेन भ्रमणाङ्घ्रिकाग्रयोः ।
ज्यामङ्गरामेषुमिताङ्गुलादिकां ६।३।५
देह्यङ्कुः स्याद्धि शनेर्धनुर्निभम् ॥ ७ ॥
अञ्जननीकाशरुचेः काश्यपगोत्रस्य सूर्यपुत्रस्य ।
वरुणाशाभिमुखस्य पीठं श्रेष्ठं च निर्दिष्टम् ॥
अथ राहुपीठसाधनमाह—
कृत्वा वेदास्रि ४ वेदाङ्गुलमित ४ भुजजं वर्धयेदङ्गुलाद्यैः
पक्षाग्न्यम्भोधिसंख्यै २।३।४ रुभयत इह तिर्यक्च कोणौ पुरोजौ ।
ताभ्यां प्रत्यक्स्थकोणद्वयगगुणयुते सत्कृतेऽधोभुजार्धा-
द्वृत्तार्द्धे द्वे लिखाब्ध्यास्रि गमय तमसोऽर्हत्फलं २४ शूर्परूपम् ॥
कालजलदनीलतनोर्यमहरिदास्यस्य सैंहिकेयस्य ।
पैठीनसिगोत्रभवस्य पीठमिति सम्यग्जिना२४ङ्गुलं हि ॥८॥
केतुपीठसाधनमाह—
कुर्याः पूर्वपरौ गजाङ्गुल८भुजौ तत्कोटिमर्धाङ्गुला-
मत्रार्वाक्स्थभुजं शराङ्गुलमधो हित्वाऽर्धमेकाङ्गुलम् ॥
शेषं मृड्ढि ततो गुणौ श्रुतिधरातुल्याङ्गुलाढ्यौ४।१मिथो
लग्नास्यौ कुरु साचिगोगज८फलं केतोर्ध्वजाभं फलम् ॥ ९ ॥
जैमिनिसगोत्राप्तजनेर्याम्यादिशावक्त्रविधोः ।
धूम्रसवर्णाङ्गरुचेः पीठमिदं स्याच्छिखिनः ॥ इति ॥
रूपनारायणस्तु प्रकारान्तरेणाह—
वर्तुलं भास्करं विद्यादर्धचन्द्रं निशाकरम् ।

त्रिकोणं तु कुजं विद्याद्बुधं च धनुषाकृतिम् ।
पद्माकृतिं गुरुं विद्याच्चतुःकोणं तु भार्गवम् ॥
नराकृतिं शनिं विद्याद्राहुं च मकराकृतिम् ।
खड्गाकृतिं च केतुं च एवमाकृतिमालिखेत् ॥
द्वादशाङ्गुलं सूर्यस्य सोमस्य द्विगुणं तथा ।
चतुरङ्गुलकं भौमं बुधस्य तु षडङ्गुलम् ॥
नवाङ्गुलं गुरुं विद्याच्छुक्रं कुर्याद्दशाङ्गुलम् ।
द्वाविंशतिं शनिं विद्याद्राहुः स्यात्पञ्चविंशतिः ॥
पञ्चविंशतिमानं च केतुं च कथितं नृप ! ॥

अथैषां क्षेत्रफलानयनम् ॥ एकाङ्गुलसप्तयवषड्यूका १।७।६ प्रमितेन कर्काटकेन वृत्तं विधाय द्वादशाङ्गुलात्मकं सूर्यस्य क्षेत्रफलं भवति॥१। अथ चन्द्रबिम्बानयनम्। त्र्यङ्गुलसप्तयवद्वियूका चतुर्लिक्षा ३।७।२।४ प्रमितेन कर्काटकेन वृत्तं कृत्वा तन्मध्ये याम्योत्तरा ज्या सप्ताङ्गुलषड्यवपंचयूका ७।६।५ प्रमिता देया । तत्र जाते द्वे वृत्तार्द्धे । तत्र पश्चिमवृत्तार्द्धसंमार्जनेन चतुर्विंशाङ्गुलात्मकं चन्द्रबिम्बं भवति ॥ २ ॥ अथ भौममण्डलानयनम् । अङ्गुलत्रयवेदयूकात्मक ३।०।४ भुजत्रयं परस्परं संलग्नं कृतम् चतुरङ्गुलात्मकं भौममण्डलं भवति ॥ ३ ॥ अथ बुधमण्डलानयनम् । एकाङ्गुलसप्तयवषड्यूका १।७।६ प्रमितेन वृत्तं विधाय तन्मध्ये ज्या देया । जाते द्वे वृत्तार्द्धे । एकं सम्मार्जयेत् । षडङ्गुलक्षेत्रफलात्मकं बुधमण्डलं भवति ॥ ४ ॥ अथ गुरोर्मण्डलानयनम् । अङ्गुलद्वययवचतुष्टययूकाद्वय २।४।२ प्रमितेन कर्काटकेन प्रथमं वृत्तं विधाय तथैव वेदाङ्गुलवेदयूकालिक्षाद्वय ४।०।४।२ प्रमितेन द्वितीयं वृत्तं षोडशचिह्नात्मकं कृत्वा विदिक्स्थचिन्हस्थितकर्काटकेन पञ्चमचिह्नमारभ्य अष्टौ पत्राणि कुर्यात् । एवं कृते सति नवाङ्गुलक्षेत्रात्मकं पद्माकृति गुरुमण्डलं भवति ॥५॥ अत्र शुक्रमण्डलम् ॥ अङ्गुलत्रय एकयव यूकाद्वयलीक्षाप्रचतुष्टय: ३।१।२।४ प्रमितभुजैश्चतुर्भिर्निबद्धं क्षेत्रं चतुरस्रदशाङ्गुलक्षेत्रफ-

लात्मकं शुक्रमण्डलं भवति ॥ ६ ॥ अथ शनिमण्डलम् । सार्धत्र्याङ्गुलमिता ३।४ पूर्वभागे भूः । तत्पश्चिमभागे सार्द्धाङ्गुलद्वयमितं २।४ मुखम् । मध्ये त्र्यङ्गुलमितो लम्बः । तत्पश्चिमभागे चरणौ कार्यौ । सपादमेकाङ्गुला भूः १।२ षड्यवोन्मितं ६ मुखम् । त्र्यङ्गुलमितो लम्बः ३ । एतादृशो दक्षिणचरणः । तथैव वामः । सपादमेकाङ्गुला १।२ भूः, षड्यवोन्मितं मुखं, सार्द्धद्वयमिताङ्गुलो लम्बः । एतादृशो दक्षिणहस्तः । तथैव वामः । तत्पूर्वभागे षड्यवयूकात्रय ६।३ मितेन कर्कटेन वृत्तं तच्छिरः । [ एवङ्कृते सति द्वाविंशत्यङ्गुलक्षेत्रफलात्मकं २२ नराकृति शनिमण्डलं भवति ॥ ७ ॥ अथ राहुमण्डलम् । तत्र उदरे अङ्गुलत्रयमितो भुजः । अङ्गुलचतुष्टयमिता कोटिः । ऊर्द्ध्वभागे पार्श्वयोः सार्द्धाङ्गुलदीर्घौ एकाङ्गुलविस्तृतौ द्वौ करौ । तावन्मितावधोभागे पार्श्वयोर्द्वौ चरणौ । यवाधिकैकाङ्गुलव्यासार्द्धेन कृतं मण्डलं मुखम् । मुखोदरयोर्मध्ये यवद्वयमितश्चतुरस्रो गलः । मुखादग्रे यवद्वयेनोष्ठौ । पुच्छे त्रिभुजे अङ्गुलत्रयमिता भूमिः । सार्द्धाङ्गुलो लम्बः । एवङ्कृते पंचविंशत्यङ्गुलक्षेत्रफलात्मकं मकराकृति राहुमण्डलं भवति ॥ ८ ॥ अथ केतुमण्डलम् । तत्र खड्गाकृतौ फलकस्य चतुरङ्गुलो भुजः । पंचाङ्गुला कोटिः । खड्गाग्रत्रिकोणे अङ्गुलद्वयमितो लम्बः । चतुरङ्गुला भूमिः । उपरि समचतुरस्रा अङ्गुलैका मुष्टिका । एवङ्कृते पंचविंशत्यङ्गुलक्षेत्रफलात्मकं खड्गाकृति केतुमण्डलं भवति ॥ ९ ॥ ](१)

एवं सूर्यादीनावाह्य संस्थाप्य अधिदेवताःप्रत्यधिदेवताः स्थापयेत् ।

---

(१) अत्र उपलब्धेषु पञ्चसु पुरातनादर्शपुस्तकेषु रूपनारायणमतेन द्वितीयरीत्या ग्रन्थकृता साधितानि ग्रहमण्डलानि शनिपर्यन्तं सर्वत्रैवोपलब्धानि । राहुकेत्वोर्मण्डलेऽनवेक्ष्य श्राम्यन्तं मां वीक्ष्य सदयमलब्धराहुकेत्वोर्मण्डले संसाध्य गणितपरिपाट्या पाठमापूर्य गुरुवर्य श्री ५ यागेश्वर पाठक ज्यौतिषिमहोदयाः सर्वानुपचक्रुः । तदिदं साधितमण्डलद्वयम् [ ] एवं चिह्नितस्थलमध्ये निवेश्य पाठमपूरयामिति ज्ञेयम् । श्रीमद्भिश्चन्द्रमण्डले च महानर्थकरः पाठः संशोध्य योजितः ।

अधिदेवान् दक्षिणतो वामे प्रत्यधिदेवताः ।
स्थापनीयाः प्रयत्नेन व्याहृतीभिः पृथक् पृथक् ॥

इति संग्रहकारः । अन्यत्रापि--

शिवोमास्कन्दगोविन्दब्रह्मेन्द्रयमकालभाः ।
चित्रगुप्तश्च सर्वेषां दक्षिणे त्वधिदेवताः ॥

चिन्तामणौ तु अधिदेवतास्थापनप्रदेशः प्रकारान्तरेण दर्शितः—

सूर्यस्यैवोत्तरे शम्भुमुमां सोमस्य दक्षिणे ।
स्कन्दमङ्गारकस्यैव दक्षिणस्यां निवेशयेत् ॥
सौम्यात्पश्चिमतो विष्णुं ब्रह्मा जीवस्य पूर्वतः ।
इन्द्रमैन्द्र्यां सिताद्विद्धिमन्दादाग्नेयतो यमम् ॥
राहोः पूर्वोत्तरे कालं सर्वभूतभयावहम् ।
केतोर्नैर्ऋतिदिग्भागे चित्रगुप्तं निधापयेत् ॥

ततः प्रत्यधिदेवताः स्थापयेत् ।

अग्निरापस्तथा भूमिर्विष्णुरिन्द्रस्तथा शची ।
प्रजापतिस्तथा सर्पा ब्रह्मा प्रत्यधिदेवताः ॥
ग्रहाणामुत्तरे स्थाप्या एताः प्रत्यधिदेवताः ।

एवं ग्रहाणामधिदेवताप्रत्यधिदेवतास्थापनानन्तरं विनायकादीन् पञ्चलोकपालान् स्थापयेत् । मत्स्यपुराणे—

विनायकन्तथा दुर्गां वायुमाकाशमेव च ।
आवाहयेद्व्याहृतिभिस्तथैवाश्विकुमारकौ ॥
राहुमन्ददिनेशानामुत्तरस्यां यथाक्रमम् ।
गणेशदुर्गावायूंश्च राहुकेत्वोस्तु दक्षिणे ॥
आकाशमश्विनौ चेति पञ्चैताः स्थापयेद्बुधः ।

इति सङ्ग्रहकारः । अथ सर्वानुत्तरतः स्थापयेदिति साम्प्रदायिकाः । एवं द्वात्रिंशद्देवता आवाह्य स्थापयित्वा इन्द्रादिलोकपालान् सूर्याभिमुखानावाह्य स्थापयेत् । शिष्टसमाचारान्महाव्याहृतिभिरावाहनं तत्प्रकाशकमन्त्रैर्वा । पौराणिकमन्त्रैरित्येके । समुच्चयेन वेति केचित् ।

स्मृत्यन्तरे ग्रहदीपिकायां च—

इन्द्रं पूर्वे तु संस्थाप्य प्रेतेशं दक्षिणे तथा ।
वरुणं पश्चिमे भागे कुबेरं चोत्तरे तथा ॥
अग्न्यादिलोकपालांश्च कोणभागेषु विन्यसेत् ।

एवं ग्रहादीन् संस्थाप्य तद्वर्णान् रक्तचन्दनादीन् गन्धान् तद्वर्णानि पुष्पाणि च यथोपपन्नानि चन्दनानि कुसुमानि समर्पयेत् । उक्तं च ग्रहदीपिकायाम्—

यथावर्णं प्रदेयानि वासांसि कुसुमानि च ।
गन्धाश्च बलयश्चैव धूपो देयश्च गुग्गुलुः ॥

अथ चन्दनानि चिन्तामणौ तु—

दिनकरकुजाभ्यां हि दापयेद्रक्तचन्दनम् ।
चन्द्रे तु भार्गवे चैव सितवर्णं प्रदापयेत् ॥
कुङ्कुमेन तु संयुक्तं चन्दनं जीवसौम्ययोः ।
अगरुं चन्दनं दद्याद्राहुकेत्वर्कजेषु च ॥
ग्रहवर्णानि पुष्पाणि गायत्र्या धूपमाहरेत् ।

अथ धूपः—

रवेः कुन्दुरुकं धूपं शशिनस्तु घृताक्षताः ।
भौमे सर्जरसं चैवं अगरुं च बुधे स्मृतः ॥
सिल्हकं गुरवे दद्याच्छुक्रे बिल्वागरुस्तथा ।
गुग्गुलुं मन्दचारे तु लाक्षा राहोश्च केतवे ॥

कुन्दुरुकं सल्लकीरसः । सिल्हकः पिण्डकः । बिल्वागरुः बिल्वफलमज्जासहितः अगरुः । पूर्वोक्तकुन्दुरुकादिधूपाभावे सर्वेषां गुग्गुलुरेव धूपः । तथा च याज्ञवल्क्यः—

"धूपो देयश्च गुग्गुलुः" इति ।

आदित्यादीनां कुन्दुरुकादिधूपदाने तत्तदधिदेवताप्रत्यधिदेवतयोरपि त एव धूपाः । विनायकादीनां तु गुग्गुलुरेव तेषां सर्वसाधारणत्वात् ।

अथ दीपः —

उद्दीप्यस्येति मन्त्रेण दीपं दद्यादतन्द्रितः।

अथ नैवेद्यम्। ग्रहदीपिकायां चिन्तामणौ —

गुडौदनं रवेर्दद्यात्सोमाय घृतपायसम्।
लोहिताय हविष्यान्नं बुधाय क्षीरषाष्ठिकम्॥
दध्योदनं गुरोर्दद्याच्छुक्राय च घृतौदनम्।
मिश्रितं तिलमाषैश्च नैवेद्यं तु शनैश्चरे॥
राहोर्मांसौदनं दद्यात्केतोश्चित्रौदनं तथा।

हविष्यान्नं नीवारादि। क्षीरषाष्ठिकः क्षीरमिश्रः षाष्ठिकौदनः।

चित्रौदनन्तु—

अजाक्षीरेण संसिद्धा विमलाः सिततण्डुलाः।
यवचूर्णेन संयुक्ताश्चित्रौदनमुदाहृताः॥

पूर्वोक्तनैवेद्याभावे यथालाभोपपन्नमोदनादि निवेदयेत्।

यथाह याज्ञवल्क्यः—

शक्तितो वा यथालाभं सत्कृत्य विधिपूर्वकम्॥ इति॥

एवमधिदेवतादीनां तत्तद्ग्रहनैवेद्यं यथालाभौदनादि वा समर्पयेत्। विनायकस्य तु मोदकसहितं ओदनादि सर्वनैवेद्यं दद्यात्। मत्स्यपुराणे-

धूपो देयोऽत्र सुरभिरुपरिष्टाद्विनायकम्।
शोभनं स्थापयेत्प्राज्ञः फलपुष्पसमन्वितम्॥ इति।

ततो ग्रहवेद्या ईशान्यामव्रणं कलशं निदध्यादित्युक्तं मत्स्यपुराणे-

प्रागुत्तरेण तस्माच्च दध्यक्षतविभूषितम्।
चूतपल्लवसञ्छन्नं फलवस्त्रशुभान्वितम्॥
पञ्चरत्नसमायुक्तं पञ्चभङ्गयुतं तथा।
स्थापयेदव्रणं कुम्भं वरुणं तत्र विन्यसेत्॥
गङ्गाद्याः सरितः सर्वाः समुद्राश्च सरांसि च।

पञ्चभङ्गाः पञ्चपल्लव-सप्तमृत्तिका-सप्तधान्य पञ्चगव्य-पञ्चामृतादयः।

सप्तमृत्तिकाः—

अश्वस्थानाद्गजस्थानाद्वल्मीकात्सङ्गमाद्ध्रदात् ।
राजद्वाराच्च गोष्ठाच्च विज्ञेयाः सप्तमृत्तिकाः ॥

पञ्चगव्यम्—

पलमेकं दुग्धभागं गोमूत्रं तावदिष्यते ।
घृतं च पलमात्रं तु गोमयं तोलकद्वयम् ॥
दधिप्रसृतमात्रं स्यात्पञ्चगव्यमिदं स्मृतम् ।
अथवा पञ्चभागानां समानो भाग इष्यते ॥

सर्वौषधीः—

कुष्ठं मासं हरिद्रे द्वे वचाचन्दनशैलजम् ।
कर्पूररोचनामुस्ताः सर्वौषध्यो दश स्मृताः ॥

इदं च सेतिकर्तव्यताकमुक्तं मानवसंहितायाम्—

गोमयालेपिते देशे धात्वाद्यैरुपशोभिते ।
पङ्कजं कारयेत्तत्र चतुर्विंशद्दलान्वितम् ॥
तण्डुलैः कारयेद्वापी रक्तपीतसितासितैः ।
कर्णिकायां न्यसेद्व्रीहीन्स्थापयेत्तेषु कुम्भकम् ॥

ततोऽस्मिन्वरुणमावाह्य स्थापयेत् तत्प्रकाशकमन्त्रैः "तत्त्वा यामी"त्यादिभिः । "ॐ भूर्भुवः स्वः वरुण इहागच्छ इह तिष्ठे"ति संस्थाप्य गङ्गाद्यावाहनं कुर्यात् ।

कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः ।

इत्याद्या अपि । एवं कर्म समाप्य होमः कार्यः ।

उक्तं च विधानपारिजाते—

निवेदयित्वाऽऽहुतिभिर्होमं कुर्यादतन्द्रितः ।

तत्र प्रतिदैवतं निर्वापः कार्यः । ग्रहेभ्यः "सूर्याय त्वा जुष्टं निर्वपामि । सोमाय त्वा जुष्टं निर्वपामि" इत्यादिप्रकारेण चतुरश्चतुरो मुष्टीन्निरुप्य इतरासां देवतानां सकृदेव "देवेभ्यो जुष्टं निर्वपामी"ति चतुरो मुष्टीन्निर्वपेत् । यदा तु प्रतिग्रहमष्टोत्तरशतं सहस्रं वा

होमं कर्तुमिच्छति तदा मुष्टिचतुष्टयनिर्वापसम्पादितद्रव्यस्य होमस्यापर्याप्त-त्वेन पूर्वोक्तनिर्वापानन्तरं होमपर्याप्तं द्रव्यं तूष्णीं निर्वपेत् । एवं निरुप्य देवतार्थत्वात्त्रिः प्रक्षाल्य चरुं श्रपयित्वाऽभिघार्योदगुद्वासयेत् । याज्ञवल्क्यः-

**कर्तव्या अम्बुवन्तश्च चरवः प्रतिदैवतम् ।** इति ।

ततो यजमानेन द्रव्यत्यागः कार्यः । एवं त्यागे कृते आघारावा-ज्यभागौ हुत्वा सूर्यादिग्रहानुद्दिश्य होमार्थसम्पादितेन समिदादिद्रव्येण प्रतिग्रहद्रव्यं दश दशाहुतीर्हुत्वाऽधिदेवतादीनुद्दिश्य प्रत्येकं तिस्रस्तिस्र एकैका वा आहुतीर्हुत्वा चतसृभिर्व्याहृतिभिश्चतस्र आहुतीर्हुत्वा पश्चा-त्प्रतिग्रहमष्टाविंशतिरष्टोत्तरशतमष्टोत्तरसहस्रं वाऽऽवाहितक्रमेण होमः कार्यः।

तदाह याज्ञवल्क्यः—

**एकैकस्याष्टशतमष्टाविंशतिरेव वा ।**
**होतव्या मधुसर्पिर्भ्यां दध्ना चैव समन्विताः ॥**

मात्स्ये तु--

**देवानामपि सर्वेषामुपांशु परमार्थवित् ।**
**स्वेन स्वेनैव मन्त्रेण होतव्याः समिधः पृथक् ॥**
**होतव्यं च घृताद्यत्र चरुभक्तादिकं पुनः ।**
**मन्त्रैर्दशाहुतीर्दद्याद्धोमं व्याहृतिभिः पुनः ॥**

अथैषां ग्रहाणां समिध आह याज्ञवल्क्यः—

**अर्कः पलाशः खदिरस्त्वपामार्गोऽथ पिप्पलः ।**
**उदुम्बरः शमी दूर्वाः कुशाश्च समिधः क्रमात् ॥**

अधिदेवतादीनामप्रधानदेवतात्वाद्धोमे न्यूनसंख्यास्वीकरणम् । आसां च समिधः पालाश्य एव मत्स्यपुराणोक्तवचनात् । समिधां लक्षणमाह विधानपारिजाते चिन्तामणौ--

**समिधां लक्षणं वक्ष्ये संख्या तासां तथैव च ।**
**विशीर्णा विदला ह्रस्वा वक्राः ससुषिराः कृशाः ॥**
**अतिस्थूलातिदीर्घाश्च समिधः कार्यनाशनाः ।**
**विशीर्णाऽऽयुःक्षयं कुर्याद्विदला पुत्रनाशिनी ॥**

सुषिरा व्याधिजननी कृशा च रिपुवर्द्धिनी ।
दीर्घा विदेशगमनी स्थूला चात्मविनाशिनी ॥
अकृशा सुसमाऽस्थूला सार्द्रा च सुपलाशिनी ।
प्रादेशान्नाधिका न्यूनाः समिधः सर्वकर्मणि ॥
अर्को नाशयते व्याधिं पलाशः सर्वकामदः ।
खादिरश्चार्थलाभश्च अपामार्गः सुदर्शनः ॥
अश्वत्थः सर्वकर्मार्थः सौभाग्येदुम्बरस्तथा ।
शमी शमयते पापं दूर्वायुःसुविवर्द्धनी ॥
कुशा धर्मार्थकामानां रक्षणं रक्षसां विदुः ।

इत्युक्तप्रकारेण होमं हुत्वा तदुत्तरकर्त्तव्यतामाह—

पूजां कृत्वा ग्रहाणां च हुते स्विष्टकृदाहुतिः ।
नवाहुतिं ततो हुत्वा बलिदानमथाचरेत् ॥
मूर्द्धानमिति मन्त्रेण दद्यात्पूर्णाहुतिं ततः ।
होमशेषं समाप्याथ आचार्योऽथ द्विजैः सह ॥
अथाभिषेकमन्त्रेण वाद्यमङ्गलगीतकैः ।

सहार्थे तृतीया ।

पूर्णकुम्भेन तेनैव होमान्ते प्रागुदङ्मुखैः ॥
अव्यङ्गावयवैर्ब्रह्मन् ! हेमस्रग्दामभूषितैः ।
यजमानस्य कर्तव्यं चतुर्भिः स्नपनं द्विजैः ॥

अभिषेकमन्त्राः स्वस्वशाखोक्ताः "सुरास्त्वामभिषिञ्चन्त्वि"-त्यादिपौराणिकाश्च ग्राह्याः ।

ततः शुक्लाम्बरधरः शुक्लगन्धानुलेपनः ।
सर्वौषधैः सर्वगन्धैः स्नातव्यो विप्रपुङ्गवैः ॥
यजमानः सपत्नीक ऋत्विजस्तान्समाहितः ।
दक्षिणाभिः प्रयत्नेन पूजयेद्गतविस्मयः ॥
होमान्ते दक्षिणां दद्याच्छान्त्यर्थपुष्टिवार्द्धिनीम् ।
आदित्याय शुभां धेनुं शङ्खं सोमाय दापयेत् ॥

भौमाय रक्तवृषभं सोमपुत्राय काञ्चनम् ॥
गुरवे पीतवासांसि शुक्रायाश्वं तु दापयेत् ।
कृष्णा गौर्मन्दचाराय राहवे त्वायसं शुभम् ॥
केतवे च्छागमांसानि सर्वेषामेव काञ्चनम् ।
एवं समग्रं निष्पाद्य देवान्सर्वान्विसर्जयेत् ॥ इति ।

अथास्य स्पष्टप्रयोगः। सुमुखश्चेत्यादि पठित्वा देशकालौ सङ्कीर्त्य "अमुकगोत्रस्यामुकशर्मणो ममामुकराशिस्थितामुकग्रहसूचितारिष्टनिवृत्तिपूर्वकदीर्घायुष्ट्वनैरुज्यफलावाप्तिकामो ब्राह्मणद्वारा नवग्रहयागमहं करिष्ये" इति सङ्कल्पः। "तत्र निर्विघ्नार्थं गणपतिपूजनमहं करिष्ये"। अत्र पूर्ववद्गणपतिपूजनस्वस्तिपुण्याहवाचनमातृकापूजननान्दीश्राद्धानि कृत्वा आचार्यादीनां वरणं कुर्यात्। तद्यथा तत्र यजमानः श्रीपर्ण्याद्यासने प्राङ्मुख उपविश्य यथोक्तलक्षणं आचार्यं उदङ्मुखं उपवेश्य एक ऋत्विग्देयद्विगुणवस्त्रमुद्रिकाकुण्डलादिभिरभ्यर्च्य "अमुकप्रवरान्वितममुकगोत्रोत्पन्नं अमुकवेदान्तर्गतामुकशाखाध्यायिनं अमुकप्रवरान्वितामुकगोत्रोत्पन्नोऽहं नवग्रहयागं कर्तुं आचार्यत्वेन त्वामहं वृणे। वृतोस्मी"ति प्रतिवचनम्।

आचार्य ! त्वं यथा स्वर्गे शक्रादीनां बृहस्पतिः ।
तथा त्वं मम यज्ञेऽस्मिन्नाचार्यो भव सुव्रत ॥

इति प्रार्थयेत्। पुनरन्यं ब्राह्मणमुपवेश्य गन्धादिभिरभ्यर्च्य पूर्ववद्गोत्राद्युच्चार्य "नवग्रहशान्तिकर्मणि कृताकृतावेक्षणार्थं ब्रह्माणं त्वामहं वृणे। वृतोस्मी"ति प्रतिवचनम्।

यथा चतुर्मुखो ब्रह्मा सर्ववेदविशारदः ।
तथा त्वं मम यज्ञेऽस्मिन्ब्रह्मा भव द्विजोत्तम ! ॥

इति प्रार्थयेत्। पुनरन्यं ब्राह्मणं उदङ्मुखमुपवेश्य पूर्ववत्पूजादिकं विधाय गोत्राद्युच्चारणं कृत्वा "नवग्रहजपार्थं ऋत्विजं त्वामहं वृणे। वृतोस्मीति" प्रतिवचनम्। अनेनैव प्रकारेणान्येषामपि ऋत्विजां वरणं कार्यम्।

ऋग्वेदः पद्मपत्राक्षो गायत्रः सोमदैवतः ।
अग्निगोत्रस्तु विप्रेन्द ! ऋत्विक् त्वं मे मखे भव ॥

इति ऋग्वेदिनं ऋत्विजं प्रार्थयेत् ।

कातराक्षो यजुर्वेदस्त्रैष्टुभो ब्रह्मदैवतः ।
भारद्वाजस्तु विप्रेन्द्र ! ऋत्विक् त्वं मे मखे भव ॥

इति यजुर्वेदिनं प्रार्थयेत् ।

सामवेदस्तु पिङ्गाक्षो जागतः शक्रदैवतः ।
काश्यपः स तु विप्रेन्द्र ! ऋत्विक् त्वं मे मखे भव ॥

इति सामवेदिनं प्रार्थयेत् ।

बृहन्नेत्रोऽथर्ववेदस्त्रैष्टुभो रुद्रदैवतः ।
वैखानगोत्रो विप्रेन्द्र ! ऋत्विक् त्वं मे मखे भव ॥

इति अथर्ववेदिनं प्रार्थयेत् ।

अस्य यागस्य निष्पत्तौ भवन्तोऽभ्यर्थिता मया ।
सुप्रसन्नाः प्रकुर्वन्तु शान्तिकं विधिपूर्वकम् ॥

इति वा सर्वान् प्रार्थयेत् । आचार्यादीनां हस्ते कङ्कणबन्धनं कुर्यात् ।

व्रतेनं दीक्षामाप्नोति दीक्षयाऽऽप्नोति दक्षिणाम् ।
दक्षिणा श्रद्धामाप्नोति श्रद्धया सत्यमाप्यते ॥
यदाबन्धन्दाक्षायणा हिरण्यꣳशतानीकाय सुमनस्यमानाः ।
तन्म आबध्नामि शतशारदायायुष्माञ्जरदष्टिर्यथासम् ॥

इति मन्त्रेण । तत ऋत्विजो नवग्रहजपं कुर्युः । तत्रादौ जपसंख्यामाह—

रवेः सप्त सहस्राणि चन्द्रस्यैकादशैव तु ।
कुजे दशसहस्राणि बुधे चतुःसहस्रकम् ॥
एकोनविंशतिर्जीवे शुक्रे षोडशमेव च ।
त्रयोविंशतिर्मन्दस्य राहोरष्टादशैव तु ॥

केतोः सप्तदश ह्येवं संख्या च ग्रहजापके ।
एवं सङ्ख्याविधिं कृत्वा ग्रहदुष्टे त्वयं विधिः ॥

आचम्य प्राणानायम्य देशकालौ स्मृत्वा "एवं गुणविशेषणविशिष्टायां पुण्यतिथौ अमुकगोत्रोत्पन्नस्य अमुकशर्मणः यजमानस्य जन्मराशेः यथास्थानस्थितामुकग्रहसूचितारिष्टनिवृत्तिपूर्वकरोगपीडादिनिरसनार्थं एकादशस्थानस्थितवच्छुभफलप्राप्त्यर्थं अमुकग्रहजपमहं करिष्ये" इति संकल्प्य दीपं दत्वा भूतशुद्धिं कुर्यात् ।

अपसर्पन्तु ते भूता ये भूता भुवि संस्थिताः ।
ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया ॥

इति दिग्बन्धः । 'ॐयँ' इति वायुबीजं द्वादशवारं जपित्वा तेन पापपुरुषरूपं देहं ध्यानद्वारा शोषयेत् । 'ॐरँ' १२ इत्यग्निबीजेन दहेत् । 'ॐलँ' १२ इति पृथ्वीबीजेन प्लावयेत् । एतत्सर्वं भावनया कार्यम् । अथ सूर्यस्य । करसंपुटं कृत्वा "आकृष्णेने"ति हिरण्यस्तूप ऋषिः त्रिष्टुप्छन्दः सविता देवता सूर्यप्रीत्यर्थे जपे विनियोगः । ॐ भूर्भुवः स्वः ॐ आकृष्णेन अङ्गुष्ठाभ्यान्नमः । रजसा तर्जनीभ्यान्नमः । व्वर्तमानो निवेशयन् मध्यमाभ्यान्नमः । अमृतं मर्त्यं च अनामिकाभ्यान्नमः । हिरण्ययेन सविता रथेन कनिष्ठिकाभ्यान्नमः । आ देवो याति भुवनानि पश्यन् करतलकरपृष्ठाभ्यान्नमः । एवं हृदयादि । ॐ आकृष्णेन हृदयाय नमः । रजसा शिरसे स्वाहा । व्वर्तमानो निवेशयन् शिखायै वषट् । अमृतं मर्त्यं च कवचाय हुम् । हिरण्ययेन सविता रथेन नेत्रत्रयाय वौषट् । आ देवो याति भुवनानि पश्यन् अस्त्राय फट् । अथाङ्गन्यासः । आकृष्णेन शिरसि । रजसा ललाटे । व्वर्तमानो मुखे । निवेशयन् हृदि । अमृतं नाभौ । मर्त्यं च कट्याम् । हिरण्ययेन सविता जङ्घयोः । रथेन ऊर्वोः । आ देवो याति जान्वोः । भुवनानि पश्यन्पादयोः । अथ ध्यानम्—

पद्मासनः पद्मकरो द्विबाहुः पद्मद्युतिः सप्ततुरङ्गवाहनः ।
दिवाकरो लोकगुरुः किरीटी मयि प्रसादं विदधातु देवः ॥

अथ रवेर्मन्त्रः ।

"ॐ ह्रां ह्रीं ह्रूं सः ॐ भूर्भुवः स्वः ॐ आकृष्णेन रजसा व्वर्तमानो निवेशयन्नमृतं मर्त्यं च । हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन् ॐ स्वः भुवः भूः ॐ सः ह्रूं ह्रीं ह्रां ॐ" ।

एवं मन्त्रजपः । अथ चन्द्रस्य । "इमन्देवे"ति मन्त्रस्य गौतम ऋषिः द्विपदा विराट् छन्दः सोमो देवता सोमप्रीत्यर्थे जपे विनियोगः । ॐ भूर्भुवः स्वः ॐ इमन्देवा असपत्न॰ँ सुवध्वं अङ्गुष्ठाभ्यान्नमः । महते क्षत्राय महते ज्यैष्ठ्याय तर्जनीभ्यान्नमः । महते जानराज्यायेन्द्रस्येन्द्रियाय मध्यमाभ्यान्नमः । इमममुष्य पुत्रममुष्यै पुत्रं अनामिकाभ्यान्नमः । अस्यै व्विश एष वोऽमी राजा कनिष्ठिकाभ्यान्नमः । सोमोऽस्माकं ब्राह्मणानाँ राजा करतलकरपृष्ठाभ्यान्नमः । एवं हृदयादि । अथाङ्गन्यासः । ॐ इमन्देवा इति शिरसि । असपत्न ँ सुवध्वमिति ललाटे । महते क्षत्रायेति मुखे । महते ज्यैष्ठ्यायेति हृदये । महते जानराज्यायेति नाभौ । इन्द्रस्येन्द्रियायेति कट्याम् । इमममुष्य पुत्रमिति जङ्घयोः । अमुष्यै पुत्रमित्यूर्वोः । अस्यै व्विश इति जान्वोः । एष वोऽमी राजेति गुल्फयोः । सोमोऽस्माकं ब्राह्मणानाँराजेति पादयोः । अथ ध्यानम्—

श्वेताम्बरः श्वेतविभूषणश्च श्वेतद्युतिर्दण्डधरो द्विबाहुः ।
चन्द्रोऽमृतात्मा वरदः किरीटी मयि प्रसादं विदधातु तेजः ॥

अथ मन्त्रः ।

"ॐ श्रां श्रीं श्रौं सः ॐ भूर्भुवः स्वः ॐ इमन्देवा॰ राजा ॐ स्वः भुवः भूः ॐ सः श्रौं श्रीं श्रां ॐ" । एवं जपः । अथ कुजस्य । "अग्निर्मूर्द्धे"ति विरूपाक्ष ऋषिर्गायत्रीच्छन्दः अङ्गारको देवता भौमप्रीत्यर्थे जपे विनियोगः । ॐ भूर्भुवः स्वः अग्निर्मूर्द्धा अङ्गुष्ठाभ्यान्नमः । दिवः ककुत्तर्जनीभ्यान्नमः । पतिः पृथिव्या अयं मध्यमाभ्यान्नमः । अपां अनामिकाभ्यान्नमः । रेताँसि

कनिष्ठिकाभ्यान्नमः। जिन्वतीति करतलकरपृष्ठाभ्यान्नमः। एवं हृदयादि। अग्निर्मूर्द्धा हृदयाय नमः। ककुदिति शिरसे स्वाहा। पतिः पृथिव्या अयं शिखायै वषट्। अपामिति कवचाय हुम्। रेताꣳसि नेत्रत्रयाय वौषट्। जिन्वति अस्त्राय फट्। अथाङ्गन्यासः। अग्निरिति शिरसि। मूर्द्धेति ललाटे। दिव इति मुखे। ककुदिति हृदये। पतिरिति नाभौ। पृथिव्या इति कट्याम्। अयमित्यूर्वोः। अपामिति जान्वोः। रेताꣳसि इति गुल्फयोः। जिन्वति इति पादयोः।

अथ ध्यानम्—

रक्ताम्बरो रक्तवपुः किरीटी चतुर्भुजो मेषगतो गदाधरः।
धरासुतः शक्तिधरश्च शूली सदा मम स्याद्वरदः प्रशान्तः॥

अथ मन्त्रः।

"ॐ क्राँ क्रीँ क्रौँ सः ॐ भूर्भुवः स्वः ॐ अग्निमूर्द्धादिवः० ति ॐ स्वः भुवः भूः ॐ सः क्रौँ क्रीँ क्राँ ॐ"। एवं जपः। अथ बुधस्य। "उद्बुध्यस्वे"ति परमेष्ठी ऋषिः त्रिष्टुप्छन्दः बुधो देवता बुधप्रीत्यर्थे जपे विनियोगः। ॐ भूर्भुवः स्वः उद्बुध्यस्वाग्ने प्रतिजागृहीति अङ्गुष्ठाभ्यान्नमः। त्वमिष्टापूर्ते सामिति तर्जनीभ्यान्नमः। सꣳसृजेथामयश्चेति मध्यमाभ्यान्नमः। अस्मिन्त्सधस्थे इत्यनामिकाभ्यान्नमः। अध्युत्तरस्मिन्विश्वे देवाः कनिष्ठिकाभ्यान्नमः। यजमानश्च सीदत इति करतलकरपृष्ठाभ्यान्नमः। एवं हृदयादि। अथाङ्गन्यासः। उद्बुध्यस्वेति शिरसि। अग्ने प्रति ललाटे। जागृहि त्वं मुखे। इष्टापूर्ते सं हृदि। सृजेथामयं चेति नाभौ। अस्मिन्त्सधस्थे इति कट्याम्। अध्युत्तरस्मिन्नूर्वोः। विश्वे देवा इति जान्वोः। यजमानश्चेति पादयोः। सीदतेति दिग्बन्धः।

अथ ध्यानम्—

पीताम्बरः पीतवपुः किरीटी चतुर्भुजो दण्डधरश्च हारी।
चर्माक्षधृक् सोमसुतः सदा मे सिंहाधिरूढो वरदो बुधश्च॥

अथ मन्त्रः । "ॐ ब्राँ ब्रीँ ब्रौँ सः ॐ भूर्भुवः स्वः ॐ उद्बुध्यस्वाग्ने० त ॐ स्वः भुवः भूः ॐ सः ब्रौँ ब्रीँ ब्राँ ॐ" । एवम् । अथ गुरोः । "बृहस्पते अतीति मन्त्रस्य गृत्समद ऋषिः त्रिष्टुप्छन्दः बृहस्पतिर्देवता बृहस्पतिप्रीत्यर्थे जपे विनियोगः । ॐ भूर्भुवः स्वः बृहस्पते अति यदर्यो ऽङ्गुष्ठाभ्यान्नमः । अर्हाद्युमद्विभाति तर्जनीभ्यान्नमः क्रतुमज्जनेषु मध्यमाभ्यान्नमः । यद्दीदयच्छवसाऽनामिकाभ्यानमः । ऋतप्रजात कनिष्ठिकाभ्यान्नमः । तदस्मासु द्रविणं धेहि चित्रं करतलकरपृष्ठाभ्यान्नमः । एवं हृदयादि । अथाङ्गन्यासः । बृहस्पते इति शिरसि । अति यदर्य इति ललाटे । अर्हाद्युमदिति मुखे । विभाति क्रतुमादिति हृदि । जनेष्विति नाभौ । यद्दीदयदिति कट्याम् । शवस ऋत प्रजात ऊर्वोः । तदस्मासु द्रविणं जान्वोः । धेहि चित्रं पादयोः । अथ ध्यानम्—

पीताम्बरः पीतवपुः किरीटी चतुर्भुजो देवगुरुः प्रशान्तः ।
तथाऽक्षसूत्रं च कमण्डलुं च दण्डं च बिभ्रद्वरदोऽस्तु मह्यम् ॥

अथ मन्त्रः ।

"ॐ ज्राँ ज्रीँ ज्रौँ सः ॐ भूर्भुवः स्वः ॐ बृहस्पते अति०त्रम् ॐ स्वः भुवः भूः ॐ सः ज्रौँ ज्रीँ ज्राँ ॐ" एवं जपः । अथ शुक्रस्य । "अन्नात्परिस्रुत" इत्यस्य अश्विसरस्वतीन्द्रा ऋषयः अतिजगतीच्छन्दः शुक्रो देवता शुक्रप्रीत्यर्थे जपे विनियोगः। ॐ भूर्भुवः स्वः अन्नात्परिस्रुतो रसं अङ्गुष्ठाभ्यान्नमः । ब्रह्मणा व्यपिबत्क्षत्रं तर्जनीभ्यान्नमः । पयः सोमं प्रजापतिः मध्यमाभ्यान्नमः । ऋतेन सत्यमिन्द्रियं विपानं अनामिकाभ्यान्नमः। शुक्रमन्धस इन्द्रस्येन्द्रियं कनिष्ठिकाभ्यान्नमः । इदं पयोऽमृतं मधु करतलकरपृष्ठाभ्यान्नमः । एवं हृदयादि । अथाङ्गन्यासः । अन्नात्परिस्रुत इति शिरसि । रसं ब्रह्मणा ललाटे । व्यपिबत् क्षत्रं मुखे । पयः सोमं हृदि । प्रजापतिः नाभौ । ऋतेन सत्यमिति कट्याम् । इन्द्रियं विपानमिति गुदे । शुक्र-

मिति वृषणयोः । अन्धस इत्यूर्वोः । इन्द्रस्येन्द्रियमिदं पय इति जान्वोः । अमृतं मधु पादयोः । अथ ध्यानम्—

श्वेताम्बरः श्वेतवपुः किरीटी चतुर्भुजो दैत्यगुरुः प्रशान्तः ।
तथाऽक्षसूत्रं च कमण्डलुं च दण्डं च बिभ्रद्वरदोऽस्तु मह्यम् ॥

अथ मन्त्रः ।

"ॐ ह्राँ ह्रीँ ह्रौँ सः ॐ भूर्भुवः स्वः ॐ अन्नात्परि० धु ॐ स्वः भुवः भूः ॐ सः ह्रौँ ह्रीँ ह्राँ ॐ" एवं जपः । अथ शनैश्चरस्य । "शन्नो देवीरि"ति दध्याङ्ङाथर्वण ऋषिः गायत्रीच्छन्दः शनिर्देवता शनिप्रीत्यर्थे जपे विनियोगः । ॐ भूर्भुवः स्वः शन्नो देवीरिति अङ्गुष्ठाभ्यान्नमः । अभिष्टये तर्जनीभ्यान्नमः । आपो भवन्तु मध्यमाभ्यान्नमः । पीतये अनामिकाभ्यान्नमः । शंयोरिति कनिष्ठिकाभ्यान्नमः । स्रवन्तु नः करतलकरपृष्ठाभ्यान्नमः । एवं हृदयादि । अथाङ्गन्यासः । शन्नः शिरसि । देवीः ललाटे । अभिष्टये मुखे । आपो भवन्तु नाभौ । पीतये कट्याम् । शं योः ऊर्वोः । अभि जान्वोः । स्रवन्तु नः पादयोः । अथ ध्यानम्—

नीलाम्बरः शूलधरः किरीटी गृध्रस्थितस्त्रासकरो धनुष्मान ।
चतुर्भुजः सूर्यसुतः प्रशान्तः सदाऽस्तु मह्यं वरदोऽस्तु नित्यम् ॥

अथ मन्त्रः ।

"ॐ खाँ खीँ खौँ सः ॐ भूर्भुवः स्वः ॐ शन्नोदेवी० नः ॐ स्वः भुवः भूः ॐ सः खौँ खीँ खाँ ॐ" एवं जपः। अथ राहोः। "कया न" इति मन्त्रस्य वामदेव ऋषिर्गायत्रीच्छन्दो राहुर्देवता राहुप्रीत्यर्थे जपे विनियोगः । ॐ भूर्भुवः स्वः कया न इति अङ्गुष्ठाभ्यान्नमः। चित्र आ भुवत् तर्जनीभ्यान्नमः। ऊती सदावृधः मध्यमाभ्यान्नमः । सखा अनामिकाभ्यान्नमः । कया कनिष्ठिकाभ्यान्नमः। शचिष्ठया वृता करतलकरपृष्ठाभ्यान्नमः । एवं हृदयादिन्यासः । अथाङ्गन्यासः । कयेति शिरसि । न इति ललाटे । चित्र

इति मुखे । आभुवत् हृदि । ऊती नाभौ । सदावृधः कट्याम् । सखा ऊर्वोः । कया जान्वोः । शचिष्ठया गुल्फयोः । वृतेति पादयोः । अथ ध्यानम्-

नीलाम्बरो नीलवपुः किरीटी करालवक्त्रः करवालशूली ॥
चतुर्भुजश्चक्रधरश्च राहुः सिंहासनस्थो वरदोऽस्तु मह्यम् ।

अथ मन्त्रः ।

"ॐ भ्राँ भ्रीँ भ्रौँ सः ॐभूर्भुवः स्वः कयान० वृता ॐस्वः भुवः भूः ॐ सः भ्रौँ भ्रीँ भ्राँ ॐ" एवं जपः । अथ केतोः । "केतुं कृण्वन्नि"ति मन्त्रस्य मधुच्छन्द ऋषिर्गायत्रीच्छन्दः केतुर्देवता केतुप्रीत्यर्थे जपे विनियोगः । केतुं कृण्वन् अङ्गुष्ठाभ्यां० । अकेतवे तर्जनीभ्यां० । पेशो मर्याः मध्यमा० । अपेशसे अनामिका० । समुषद्भिः कनिष्ठिकाभ्यां० । अजायथाः करतलकरपृष्ठाभ्यां० । एवं हृदयादि । अथाङ्गन्यासः । केतुमिति शिरसि । कृण्वन् ललाटे । अकेतवे मुखे । पेशो हृदि । मर्या नाभौ । अपेशसे कट्याम् । समुर्वोः । उषद्भिर्जान्वोः । अजायथाः पादयोः ।

अथ ध्यानम्-

धूम्रो द्विबाहुर्वरदो गदाधरो गृध्रासनस्थो विकृताननश्च ।
किरीटकेयूरविभूषितो यः स चास्तु मे केतुगणः प्रशान्त्यै ॥

अथ मन्त्रः ।

"ॐ प्राँ प्रीँ प्रौँ सः ॐ भूर्भुवः स्वः ॐ केतुं कृण्वन्० थाः ॐ स्वः भुवः भूः ॐ सः प्रौँ प्रीँ प्राँ ॐ" । एवं जपः । जपानन्तरं पुनर्न्यासं विधाय ।

गुह्यातिगुह्यगोप्ता त्वं गृहाणास्मत्कृतं जपम् ।
सिद्धिर्भवतु मे देव ! त्वत्प्रसादात्त्वयि स्थिते ॥

इत्यनेन देवहस्ते जपं समर्पयेत् । इति नवग्रहजपविधिः ।

ततो यथासम्भवं जपं कृत्वा तदन्ते यथासम्भवप्रकारेण

शुभदिवसे होमं कुर्यात् । तत्रादौ होमानुसारं कुण्डं स्थण्डिलं वा कुर्यात् । ततः शुक्लाम्बरधरः शुक्लमाल्यानुलेपनः साचार्यब्रह्मऋत्विग्यजमानो मङ्गलघोषसम्पूर्णकलशहस्तो "भद्रंकर्णेभि"रिति मण्डपं प्रदक्षिणीकृत्य पश्चिमद्वारेण प्रविशेत् । ततो मण्डपान्तः कुण्डपश्चिमदेशे उपविश्याचम्य प्राणानायम्य देशकालौ स्मृत्वा "अद्यैवंविधे देशकाले ब्राह्मणद्वारा कृतस्य ग्रहजपस्य दशांशेन अमुकद्रव्येण यथाशक्ति ब्राह्मणद्वारा होममहं करिष्ये । तदङ्गतया निर्विघ्नार्थं गणपतिपूजनमहं करिष्ये" इति सङ्कल्प्य, षोडशोपचारैर्गणाधिपं सम्पूजयेत् । ततो गौरसर्षपैः सर्वतो मण्डपान्तरं विकिरेत् ।

तत्र मन्त्रः—

यदत्र संस्थितं भूतं स्थानमाश्रित्य सर्वदा ।
स्थानं त्यक्त्वा तु तत्सर्वं यत्रस्थं तत्र गच्छतु ॥
अपक्रामन्तु भूतानि पिशाचाः सर्वतो दिशम् ।
सर्वेषामविरोधेन ब्रह्मकर्म समारभेत् ॥

ततः पञ्चगव्येन कुशैः सर्वत्र प्रोक्षणम् । "आपोहिष्ठे"ति तिसृभिः । ततः कृताञ्जलिः "स्वस्तिन इन्द्र" इति मन्त्रं पठेत् । ततो वेद्यां सर्वतोभद्रमण्डलं विलिख्य यजमानोऽग्न्यायतनाद्दक्षिणत उपविशेत् । आचार्यस्तु कुण्डस्य पश्चिमे देशे उपविश्य आचम्य प्राणानायम्य देशकालौ स्मृत्वा "ग्रहहोमकर्मणि अग्निस्थापनमहं करिष्ये" । कुण्डे स्थण्डिले वा पञ्चभूसंस्कारान् कुर्यात् । तत्र लौकिकाग्निं कांस्यादिपात्रेण आत्माभिमुखं प्रणयेत् । तत "श्चत्वारिशृङ्गे"त्यावाहनम् । "मनो जूति"रिति प्रतिष्ठाप्य । अथाग्निध्यानम्—

रुद्रतेजःसमुद्भूतं द्विमूर्द्धानं द्विनासिकम् ।
षण्नेत्रं च चतुःश्रोत्रं त्रिपादं सप्तहस्तकम् ॥
याम्यभागे चतुर्हस्तं सव्यभागे त्रिहस्तकम् ।
स्रुवं स्रुचं च शक्तिं च अक्षमालां च दक्षिणे ॥

तोमरं व्यजनं चैव घृतपात्रं तु वामके ।
बिभ्रतं सप्तभिर्हस्तैर्द्विमुखं सप्तजिह्वकम् ॥
दक्षिणं च चतुर्जिह्वं त्रिजिह्वमुत्तरं मुखम् ।
द्वादशकोटिमूर्त्याख्यं द्विपञ्चाशत्कलान्वितम् ॥
स्वाहास्वधावषट्कारैरङ्कितं मेषवाहनम् ।
रक्तमाल्याम्बरधरं रक्तपद्मासनस्थितम् ॥
रौद्रं त्वां वह्निनामानं वह्निमावाहयाम्यहम् ।
त्वं मुखं सर्वदेवानां सप्तार्चिरमितद्युते ॥
आगच्छ भगवन्देव ? यज्ञेऽस्मिन्सान्निधो भव ॥

एवं कुण्डे अग्निप्रणयनं विधाय ग्रहवेद्यां ग्रहदेवतास्थापनं कुर्यात् । तत्रायं प्रयोगः । 'अद्येत्यादि ग्रहपीठदेवतास्थापनमहं करिष्ये' । तत्र ग्रहपीठमध्ये वर्तुले द्वादशांगुले मण्डले प्राङ्मुखं सूर्यं रक्तपुष्पाक्षतैः "ॐ आकृष्णेने"ति हिरण्यस्तूप ऋषिः त्रिष्टुप्छन्दः सविता देवता सूर्यावाहने विनियोगः । 'ॐ आकृष्णेन० भूर्भुवः स्वः कलिङ्गदेशोद्भव काश्यपसगोत्र सूर्य इहागच्छे'त्यावाह्य 'इह तिष्ठेति" स्थापयेत् । तत आग्नेये चतुरस्रे चतुर्विंशत्यङ्गुले मण्डले प्रत्यङ्मुखं सोमं श्वेतपुष्पाक्षतैः "इमन्देवा" इत्यस्य वरुण ऋषिः यजुः सोमो देवता सोमावाहने विनियोगः । 'ॐ इमन्देवा० ॐ भूर्भुवः स्वः यमुनातीरोद्भव आत्रेय सगोत्र सोम इहागच्छे'त्यावाह्य 'इह तिष्ठेति' स्थापयेत् । ततो दक्षिणे त्रिकोणे चतुरङ्गुले मण्डले दक्षिणाभिमुखं भौमं रक्तपुष्पाक्षतैः "अग्निर्मूर्धे"ति विरूपाक्ष ऋषिः गायत्रीच्छन्दः अङ्गारको देवता भौमावाहने विनियोगः । 'ॐ अग्निर्मूर्द्धा० ॐ भूर्भुवः स्वः अवन्तिदेशोद्भव भारद्वाजसगोत्र भौम इहागच्छे'त्यावाह्य 'इहातिष्ठेति' स्थापयेत् । तत ईशान्ये बाणाकारे चतुरङ्गुले उदङ्मुखं बुधं पीतपुष्पाक्षतैः "उद्बुध्यस्वे"ति परमेष्ठी ऋषिः त्रिष्टुप्छन्दः बुधो देवता बुधावाहने विनियोगः । 'ॐ उद्बुध्यस्वाग्ने० ॐ भूर्भुवः स्वः मगधदेशोद्भव

आत्रेयसगोत्र बुध इहागच्छे'त्यावाह्य 'इह तिष्ठे'ति स्थापयेत्। तत उत्तरे दीर्घचतुरस्रे मण्डले उदङ्मुखं बृहस्पतिं पीतपुष्पाक्षतैः बृहस्पत इति गृत्समद ऋषिः त्रिष्टुप्छन्दः बृहस्पतिर्देवता बृहस्पत्यावाहने विनियोगः। 'ॐ बृहस्पते॰ ॐ भूर्भुवः स्वः सिन्धुदेशोद्भव आङ्गिरसगोत्र बृहस्पते इहागच्छे'त्यावाह्य 'इह तिष्ठेति' स्थापयेत। ततः पूर्वे पञ्चकोणे नवाङ्गुलमण्डले प्राङ्मुखं शुक्रं शुक्लपुष्पाक्षतैः अन्नात्परिस्रुत इत्यस्य अश्विसरस्वतीन्द्रा ऋषयः अतिजगतीच्छन्दः शुक्रो देवता शुक्रावाहने विनियोगः। 'ॐ अन्नात्परिस्रुतो॰ ॐ भूर्भुवः स्वः भोजकटदेशोद्भव भार्गवसगोत्र शुक्र इहागच्छे'त्यावाह्य 'इह तिष्ठेति' स्थापयेत्। ततः पश्चिमे धनुषि षडङ्गुले मण्डले प्रत्यङ्मुखं शनिं कृष्णपुष्पाक्षतैः शन्नोदेवीरिति दध्यङ्ङाथर्वण ऋषिः गायत्रीच्छन्दः शनिर्देवता शनेरावाहने विनियोगः। 'ॐ शन्नोदेवी॰ ॐ भूर्भुवः स्वः सौराष्ट्रदेशोद्भव काश्यपसगोत्र शनैश्चर इहागच्छे'त्यावाह्य 'इह तिष्ठेति' स्थापयेत्। ततो नैर्ऋत्ये शूर्पाकारे चतुर्विंशाङ्गुलमण्डले दक्षिणाभिमुखं राहुं कृष्णपुष्पाक्षतैः कयान इति वामदेव ऋषिः गायत्रीच्छन्दः राहुर्देवता राह्वावाहने विनियोगः। 'ॐ कयानश्चित्र॰ ॐ भूर्भुवः स्वः राठीनापुरोद्भव पैठीनसगोत्र राहो इहागच्छे'त्यावाह्य 'इह तिष्ठेति' स्थापयेत्। ततो वायव्ये ध्वजाकारे अष्टाङ्गुले मण्डले दक्षिणाभिमुखं केतुं धूम्रपुष्पाक्षतैः केतुं कृण्वन्निति मधुच्छन्द ऋषिर्गायत्रीच्छन्दः केतुर्देवता केत्वावाहने विनियोगः। 'ॐ केतुं कृण्वन्॰ ॐ भूर्भुवः स्वः अन्तर्वेदिसमुद्भव जैमिनिसगोत्र केतो इहागच्छे'त्यावाह्य 'इह तिष्ठेति' स्थापयेत्। यथोक्तकुसुमतण्डुलाभावे यथालाभोपपन्नैः कुसुमतण्डुलैः स्थापयेत्। अथाधिदेवताः सर्वाः श्वेतपुष्पतण्डुलैः स्थापयेत्। त्र्यम्बकमिति वशिष्ठ ऋषिः अनुष्टुप्छन्दः रुद्रो देवता रुद्रस्थापने विनियोगः। 'ॐ त्र्यम्बकं यजामहे॰ ॐ भूर्भुवः स्वः ईश्वर इहागच्छे'त्यावाह्य 'इह तिष्ठेति' सूर्यस्य दक्षिणपार्श्वे ईश्वरं स्थापयेत्। श्रीश्चत इति नारायण ऋषिस्त्रिष्टुप्छन्दः उमा देवता उमा-

स्थापने विनियोगः। 'ॐ श्रीश्च ते० ॐ भूर्भुवः स्वः उमे इहागच्छे'त्यावाह्य 'इह तिष्ठेति' सोमदक्षिणपार्श्वे उमां स्थापयेत्। यदक्रन्द इति भार्गवजमदग्निदीर्घतमा ऋषयः त्रिष्टुप्छन्दः स्कन्दो देवता स्कन्दावाहने विनियोगः। 'ॐ यदक्रन्दः प्रथमं० ॐ भूर्भुवः स्वः स्कन्द इहागच्छे'त्यावाह्य 'इह तिष्ठेति' भौमस्य दक्षिणपार्श्वे स्कन्दं स्थापयेत्। विष्णोररराटमित्यस्य प्रजापतिर्ऋषिः यजुर्विष्णुर्देवता विष्ण्वावाहने विनियोगः। 'ॐ विष्णोरराट० ॐ भूर्भुवः स्वः विष्णो इहागच्छे'त्यावाह्य 'इह तिष्ठेति' बुधस्य दक्षिणपार्श्वे विष्णुं स्थापयेत्। आ ब्रह्मन्निति प्रजापतिर्ऋषिः यजुःब्रह्मा देवता ब्रह्मस्थापने विनियोगः। 'ॐ आब्रह्मन्ब्राह्मणो० ॐ भूर्भुवः स्वः ब्रह्मन्निहागच्छे'त्यावाह्य इह तिष्ठेति' बृहस्पतेर्दक्षिणपार्श्वे ब्रह्माणं स्थापयेत। सजोषा इन्द्रेति विश्वामित्र ऋषिः त्रिष्टुप्छन्दः इन्द्रो देवता इन्द्रस्थापने विनियोगः। 'ॐ सजोषा इन्द्र० ॐ भूर्भुवः स्वः इन्द्रेहागच्छे'त्यावाह्य 'इह तिष्ठेति' शुक्रस्य दक्षिणपार्श्वे इन्द्रं स्थापयेत्। यमाय त्वेति दध्यङ्ङाथर्वण ऋषिर्यजुःयमो देवता यमस्थापने विनियोगः। 'ॐ यमाय त्वाऽङ्गिर० ॐ भूर्भुवः स्वः यम इहागच्छे'त्यावाह्य 'इह तिष्ठेति' शनेर्दक्षिणपार्श्वे यमं स्थापयेत्। कार्षिरसीति प्रजापतिर्ऋषिरनुष्टुप्छन्दः कालो देवता कालावाहने बिनियोगः। 'ॐ कार्षिरसि० ॐ भूर्भुवः स्वः काल इहागच्छे'त्यावाह्य 'इह तिष्ठेति' राहोर्दक्षिणपार्श्वे कालं स्थापयेत्। चित्रावसो इति ऋषय ऋषयः यजुर्जगतीच्छन्दः चित्रगुप्तो देवता चित्रगुप्तस्थापने विनियोगः। 'ॐ चित्रावसो० शीय ॐ भूर्भुवः स्वः चित्रगुप्तेहागच्छे'त्यावाह्य 'इह तिष्ठेति' केतोर्दक्षिणपार्श्वे चित्रगुप्तं स्थापयेत्। अथ प्रत्यधिदेवताः। ततः शुक्लतण्डुलैरेव सर्वाः प्रत्यधिदेवताः स्थापयेत्। अग्निन्दूतमित्यस्य विरूपाक्ष ऋषिर्गायत्रीच्छन्दः अग्निर्देवता अग्निस्थापने विनियोगः। 'ॐ अग्निन्दूतं० ॐ भूर्भुवःस्वः अग्ने इहागच्छे'त्यावाह्य 'इह तिष्ठेति' सूर्यस्य वामपार्श्वेऽग्निं स्थापयेत्। आपो हिष्ठेति सिन्धु-

द्वीप ऋषिर्गायत्रीच्छन्दः आपो देवता अपां स्थापने विनियोगः। 'ॐ आपोहिष्ठा० से ॐ भूर्भुवः स्वः आपः इहागच्छते'त्यावाह्य 'इह तिष्ठतेति' सोमस्य वामपार्श्वे अपः स्थापयेत्। स्योना पृथिवीति मेधातिथिर्ऋषिः गायत्रीच्छन्दः पृथ्वी देवता पृथ्वीस्थापने विनियोगः। 'ॐ स्योना पृथिवि० ॐ भूर्भुवः स्वः पृथ्वि इहागच्छे'त्यावाह्य 'इह तिष्ठेति' भौमस्य वामपार्श्वे भूमिं स्थापयेत्। इदं विष्णुरिति मेधातिथिर्ऋषिः गायत्रीच्छन्दः विष्णुर्देवता विष्णुस्थापने विनियोगः। 'ॐ इदं विष्णु० ॐ भूर्भुवः स्वः विष्णो इहागच्छे'त्यावाह्य 'इह तिष्ठेति' बुधवामपार्श्वे विष्णुं स्थापयेत्। त्रातारमित्यस्य गर्ग ऋषिस्त्रिष्टुप्छन्दः इन्द्रो देवता इन्द्रस्थापने विनियोगः। 'ॐ त्रातारमिन्द्र० ॐ भूर्भुवः स्वः इन्द्रेहागच्छे'त्यावाह्य 'इह तिष्ठेति' गुरोर्वामपार्श्वे इन्द्रं स्थापयेत्। अदित्यै रास्नेति दध्यङ्ङाथर्वण ऋषिः यजुस्त्रिष्टुप्छन्दः प्रजापतिर्देवता प्रजापतिस्थापने विनियोगः। 'ॐ आदित्यै रास्ना० ॐ भूर्भुवः स्वः इन्द्राणि इहागच्छे'त्यावाह्य 'इह तिष्ठेति' शुक्रस्य वामपार्श्वे इन्द्राणीं स्थापयेत्। प्रजापते नेति हिरण्यगर्भ ऋषिस्त्रिष्टुप्छन्दः प्रजापतिर्देवता प्रजापतिस्थापने विनियोगः। 'ॐ प्रजापते० ॐ भूर्भुवः स्वः प्रजापते इहागच्छे'त्यावाह्य 'इह तिष्ठेति' शनिवामपार्श्वे प्रजापतिं स्थापयेत्। नमोऽस्तु सर्पेभ्य इति मन्त्रस्य प्रजापतिर्ऋषिरनुष्टुप्छन्दः सर्पो देवता सर्पस्थापने विनियोगः। 'ॐ नमोऽस्तु सर्पेभ्यो० ॐ भूर्भुवः स्वः सर्पाः इहागच्छते'त्यावाह्य 'इह तिष्ठतेति' राहोर्वामपार्श्वे सर्पान् स्थापयेत्। ब्रह्म यज्ञानमित्यस्य प्रजापतिर्ऋषिस्त्रिष्टुप्छन्दः ब्रह्मा देवता ब्रह्मस्थापने विनियोगः। 'ॐ ब्रह्म यज्ञानं० ॐ भूर्भुवः स्वः ब्रह्मन्निहागच्छे'त्यावाह्य 'इह तिष्ठेति' केतोर्वामपार्श्वे ब्रह्माणं स्थापयेत्। अथ पञ्चलोकपालपूजनम्। ततः शुक्लपुष्पाक्षतैर्विनायकादिपञ्चदेवताः स्थापयेत्। गणानान्त्वेत्यस्य प्रजापतिर्ऋषिः यजुश्छन्दः गणपतिर्देवता गणपतिस्थापने विनियोगः। 'ॐ गणानान्त्वा० ॐ भूर्भुवः स्वः गण-

पते इहागच्छे'त्यावाह्य 'इह तिष्ठेति' राहोरुत्तरभागे गणपतिं स्थापयेत् । अम्बे अम्बिके इत्यस्य प्रजापतिर्ऋषिरनुष्टुप्छन्दः दुर्गा देवता दुर्गास्थापने विनियोगः। 'ॐ अम्बे अम्बिके० ॐ भूर्भुवः स्वः दुर्गे इहागच्छे'त्यावाह्य 'इह तिष्ठेति' शनेरुत्तरतो दुर्गां स्थापयेत् । आनो नियुद्भिरित्यस्य वाशिष्ठ ऋषिः त्रिष्टुप्छन्दः वायुर्देवता वायुस्थापने विनियोगः । 'ॐ आ नो नियुद्भिः० ॐ भूर्भुवः स्वः वायो इहागच्छे'त्यावाह्य 'इह तिष्ठेति' रवेरुत्तरतो वायुं स्थापयेत् । घृतं घृतपावान इति प्रजापतिर्ऋषिः ऋचां पङ्क्तिश्छन्दः आकाशो देवता आकाशस्थापने विनियोगः । 'ॐ घृतं घृतपावानः० ॐ भूर्भुवः स्वः आकाशेहागच्छे'त्यावाह्य 'इह तिष्ठेति' राहोर्दक्षिणत आकाशं स्थापयेत् । या वाङ्कशेति मेधातिथिर्ऋषिर्गायत्रीच्छन्दः अश्विनौ देवते अश्विनोः स्थापने विनियोगः । 'ॐ या वाङ्कशा० ॐ भूर्भुवः स्वः अश्विनाविहागच्छतम्' इत्यावाह्य 'इह तिष्ठतमिति' केतोर्दक्षिणे अश्विनौ स्थापयेत् । यद्वा विनायकादीन्पञ्चोत्तर एव स्थापयेत् । उत्तरे क्षेत्राधिपतिं वास्तोस्पतिं चावाहयेदित्येके । न हि स्पशमित्यस्य विश्वामित्र ऋषिस्त्रिष्टुप्छन्दः क्षेत्राधिपतिर्देवता क्षेत्रपालस्थापने विनियोगः । 'ॐ न हि स्पश० ॐ भूर्भुवः स्वः क्षेत्राधिपते इहागच्छे'त्यावाह्य 'इह तिष्ठेति' स्थापयेत्। वास्तोष्पत इत्यस्य वाशिष्ठ ऋषिः वास्तोष्पतिर्देवता वास्तुस्थापने विनियोगः ।

'ॐ वास्तोष्पते प्रतिजानीह्यस्मान्स्वावेशो अनमीवो भवा नः ।
यत्त्वेमहे प्रति तन्नो जुषस्व शन्नो भव द्विपदे शं चतुष्पदे ॥

ॐ भूर्भुवः स्वः वास्तोष्पते इहागच्छे'त्यावाह्य 'इह तिष्ठेति' वास्तोष्पतिं स्थापयेत्। तत इन्द्रादिलोकपालस्थापनम् । त्रातारमिन्द्रमित्यस्य गर्ग ऋषिस्त्रिष्टुप्छन्दः इन्द्रो देवता इन्द्रस्थापने विनियोगः। 'ॐ त्रातारमिन्द्र० ॐ भूर्भुवः स्वः इन्द्रेहागच्छे'त्यावाह्य 'इह तिष्ठेति' पूर्वे इन्द्रं स्थापयेत्। त्वन्नो अग्न इत्यस्य हिरण्यस्तूप ऋषिस्त्रिष्टुप्छन्दः अग्निर्देवता अग्न्यावाहने विनियोगः। 'ॐ त्वन्नो अग्ने० ॐ भूर्भुवः स्वः अग्ने

इहागच्छे'त्यावाह्य 'इह तिष्ठे'त्यग्निं स्थापयेत् । सुगन्नु पन्थामित्यस्य प्रजापतिर्ऋषिस्त्रिष्टुप्छन्दः यमो देवता आवाहने विनियोगः । 'ॐ सुगन्नु पन्थां ॐ भूर्भुवः स्वः' इत्यादि पूर्ववत्सर्वत्र ज्ञेयम् । असुन्वन्तमित्यस्य विवस्वानृषिस्त्रिष्टुप्छन्दः निर्ऋतिर्देवता आवाहने विनियोगः । 'ॐ असुन्वन्त० स्तु' । तत्त्वायामीति शुनःशेप ऋषिस्त्रिष्टुप्छन्दः वरुणो देवता आवाहने वि० । 'ॐ तत्त्वा यामि० षीः' । आनो नियुद्भिरित्यस्य वशिष्ठ ऋषिस्त्रिष्टुप्छन्दः वायुर्देवता आवाहने विनियोगः । 'ॐ आनो नियुद्भिः०नः' । वयꣳसोमेत्यस्य बन्धुर्ऋषिस्त्रिष्टुप्छन्दः सोमो देवता आवाहने वि० । 'ॐ वयꣳसोम०हि' । तमीशानमित्यस्य गौतम ऋषिर्जगतीच्छन्दः ईशानो देवता आवाहने विनियोगः । 'ॐ तमीशानं०ये' । अस्मे रुद्रा इत्यस्य प्रगाथ ऋषिस्त्रिष्टुप्छन्दः ब्रह्मा देवता ब्रह्मावाहने विनियोगः । 'ॐ अस्मे रुद्रा०वाः' । ईशानपूर्वयोर्मध्ये स्योना पृथिवीत्यस्य मेधातिथिऋषिर्गायत्रीच्छन्दः अनन्तो देवता अनन्तावाहने विनियोगः । 'ॐ स्योना पृथिवि०थाः' । ततः शेषाणाम् । ततो रवेः पूर्वे शेषं नाममन्त्रेण, सोमस्याग्रे वासुकिं, भौमस्याग्रे तक्षकं, बुधोत्तरे कर्कोटकं, बृहस्पतेरग्रे पद्मं, शुक्रोत्तरे महापद्मं, शनिपश्चिमे शंखपालं, राहोः पुरतः कम्बलं, केतोः पुरतः कुलिकम् । ततो बहिर्भूगृहे पूर्वतः अश्विन्यादिसप्त नक्षत्राणि । विष्कुंभादिसप्त योगाः । बवबालवे करणे । सप्त द्वीपानि । ऋग्वेदश्च । दक्षिणे पुष्यादिसप्त नक्षत्राणि । धृत्यादि योगाः । कौलवतैतिले करणे । सप्त सागराः यजुर्वेदश्च । पश्चिमे स्वात्यादिसप्त नक्षत्राणि । वज्रादिसप्त योगाः । गरवणिजे करणे । सप्तपातालानि । सामवेदश्च । उत्तरे अभिजिदादि सप्त नक्षत्राणि । साध्यादि षड् योगाः । विष्टिकरणं । सप्त कुलाचलाः । अष्टौ वसवः । द्वादशादित्याः । एकादश रुद्राः । एकोनपञ्चाशन्मरुतः । षोडश मातरः । षड् ऋतवः । द्वादश मासाः । द्वे अयने । पञ्चदश तिथयः । षष्ठिसंवत्सराः । सुपर्णाः । नागाः ।

सर्पाः । यक्षाः । गन्धर्वाः । विद्याधराः । अप्सरसः । रक्षांसि । भूतानि । मनुष्याः । इत्येते स्थाप्याः । मनोजूतिरिति प्रतिष्ठां विधाय पूजयेत् । तत्रादौ ग्रहध्यानं मत्स्यपुराणे—

पद्मासनः पद्मकरः पद्मगर्भसमद्युतिः ।
सप्ताश्वरथसंस्थश्च द्विभुजः स्यात्सदा रविः ॥
श्वेतः श्वेताम्बरधरो दशाश्वः श्वेतवाहनः ।
गदापाणिर्द्विबाहुश्च कर्तव्यो वरदः शशी ॥
रक्तमाल्याम्बरधरः शक्तिशूलगदाधरः ।
चतुर्भुजो मेषगमो वरदः स्याद्धरासुतः ॥
पीतमाल्याम्बरधरः कर्णिकारसमद्युतिः ।
खड्गचर्मगदापाणिः सिंहस्थो वरदो बुधः ॥
देवदैत्यगुरू तद्वत्पीतश्वेतौ चतुर्भुजौ ।
दण्डिनौ वरदौ कार्यौ साक्षसूत्रकमण्डलू ॥
इन्द्रनीलद्युतिः शूली वरदो गृध्रवाहनः ।
बाणबाणासनधरः कर्तव्योऽर्कसुतः सदा ॥
करालवदनः खड्गचर्मशूली वरप्रदः ।
नीलः सिंहासनस्थश्च राहुरत्र प्रशस्यते ॥
धूम्रादि वा रुचः सर्वे गदिनो विकृताननाः ।
गृध्रासनगता नित्यं केतवः स्युर्वरप्रदाः ॥
सर्वे किरीटिनः कार्या ग्रहा लोकहितावहाः ।
अङ्गुलेनोच्छ्रिताः सर्वे शतमष्टोत्तरं शतम् ॥

एवं ध्यात्वा ततः षोडशोपचारैः पूजा कार्या । 'ॐ आकृष्णेने'ति पाठित्वा ॐ सूर्याय नमः सूर्यमावाहयामि । सूर्याय नमः इदमासनम् । इदं पाद्यम् । एष वोऽर्घः । इदमाचमनीयं सूर्याय नमः । पयसा सूर्यं स्नपयामि । दध्ना सूर्यं स्नपयामि । आज्येन सूर्यं स्नपयामि । मधुना सूर्यं स्नपयामि । शर्करया सूर्यं स्नपयामि । शुद्धोदकेन सूर्यं

स्नपयामि। इदमाचमनीयम्। इदं रक्तवस्त्रम्। इदं रक्तचन्दनम्। इमानि रक्तपुष्पाणि। एष धूपः। एष दीपः। इदं नैवेद्यम्। इदं ताम्बूलम्। अयं नमस्कारः' इति सूर्यं सम्पूजयेत्। एवमेव सर्वान्स्थापितदेवान् पूजयेत्। ततो ग्रहवेद्या ईशानभागे गोमयोपलिप्ते रक्तपीतसितैस्तण्डुलैर्वा चतुर्विंशतिदलान्वितं सकर्णिकं कमलं विधाय तस्य कर्णिकायां व्रीहीन्विन्यस्य तदुपरि अव्रणं बहिर्दध्यक्षतभूषितं चन्दनमालाचार्चितं पूर्ववत्कलशं निदध्यात्। ततः कलशे गङ्गाद्यावाहनादि कुर्यात्। तस्मिन्कलशे 'ॐ तत्वा यामी'ति वरुणमावाहयेत्पूजयेच्च। तत आचार्यः अग्नेः पश्चादुपविश्य प्राणानायम्य देशकालौ स्मृत्वा अस्मिन्नवग्रहमखारब्धे कर्मणि होममहं करिष्ये। तत्र वैकल्पिकस्मरणम्—पूर्वेण ब्रह्मणो गमनम्, उत्तरेण पात्रासादनम्, द्वे पवित्रे, ताम्रमयी आज्यस्थाली, ताम्रमयी चरुस्थाली, पालाश्यः समिधः, प्राञ्चावाघारौ, समिद्धतमे आज्यभागौ, पूर्णपात्रं दक्षिणा, एतान्वैकल्पिकपदार्थानहं करिष्ये। अथदेवताऽभिधानम्—अत्र 'प्रजापतिं इन्द्रम् अग्निं सोमम्' एता आज्येन। अथ प्रधानदेवताः। आदित्यादिकेत्वन्तान् ग्रहान् अर्कादिसमिद्भिः। ईश्वरम् उमां स्कन्दं विष्णुं ब्रह्माणम् इन्द्रं यमं कालं चित्रगुप्तम्। इत्यधिदेवताः। अग्निम् आपः धरां विष्णुम् इन्द्रम् इन्द्राणीं प्रजापतिं सर्पान् ब्रह्माणम्। इति प्रत्यधिदेवताः। विनायकं दुर्गां वायुम् आकाशम् अश्विनौ। इति पञ्चलोकपालान्। 'अमुकसंख्याभिः पलाशसमिद्भिः एकैकयाऽऽज्याहुत्या एकैकया चर्वाऽहुत्या तिलाज्याद्युपकल्पितद्रव्येण दशाहुतिभिः महाव्याहृतिभिश्चतस्र आहुतिभिर्जपदशांशेन तिलाज्याद्युपकल्पितद्रव्येण होममहं करिष्ये' इति सङ्कल्पः। शेषेणाग्निं स्विष्टकृतम् अग्निं वायुं सूर्यम् अग्नीवरुणौ२ अग्निं वरुणं सवितारं विष्णुं विश्वान्देवान्मरुतः स्वर्कान् वरुणम् आदित्यमदितिं प्रजापतिम् अग्निं स्विष्टकृतम् एता अङ्गप्रधानार्थदेवता अस्मिकर्मण्यहं यक्ष्ये। ब्रह्मोपवेशनादिपर्युक्षणान्तं कृत्वा आघारावाज्यभागौ हुत्वा ततो यजमानेन द्रव्यत्यागः कार्यः। स च बहुकर्तृके यथा-

कालं प्रत्याहुतित्यागस्य कर्तुमशक्यत्वात्सर्वमेव होमजातं मनसा ध्यात्वा देवताश्च 'इदं यथा दैवतमस्तु नमम' इत्येवं रूपः। अथवा 'आदित्यादि अश्विनीकुमारान्तेभ्य इदं सम्पादितं समिच्चर्वाज्यतिलादिद्रव्यं मया त्यक्तं नमम' इति द्रव्यत्यागः। अथाग्निं पञ्चोपचारैः सम्पूज्य ततः सूर्याद्युद्देशेन अर्कादिसामिधो मधुसर्पिर्दध्यक्ताः सूर्यादिमन्त्रैः प्रतिग्रहमष्टोत्तरसहस्रमष्टोत्तरशतमष्टाविंशतिरष्टसंख्यया वाऽऽवाहितक्रमेण होमः कार्यः। तत्रापि समिच्चर्वाज्यतिलादय इति क्रमः। समिदाज्यचरुतिलादय इति वा। अधिदेवतादीनामप्रधानदेवतात्वाद्धोमे न्यूनसंख्यास्वीकरणम्। आसां च समिधः पालाश्य एव ॥

अथ नवग्रहहोमः। आकृष्णेन०। इमन्देवा०। अग्निर्मूर्द्धा०। उद्बुध्यस्व०। बृहस्पते०। अन्नात्परिस्रुतो०। शन्नो देवी०। कयानश्चित्र०। केतुं कृण्वन्०। अथाधिदेवतानाम्—त्र्यम्बकं०। श्रीश्चते०। यदक्रन्दः०। विष्णो रराटमसि०। आ ब्रह्मन्०। सजोषा०। यमाय त्वा०। कार्षिरसि०। चित्रावसो०। अथ प्रत्यधिदेवतानाम्—अग्निन्दूतं०। आपो हिष्ठा०। स्योना पृथिवि०। इदं विष्णु०। त्रातारमिन्द्र०। आदित्यैरास्नासी०। प्रजापतेन०। नमोस्तु सर्पेभ्यो०। ब्रह्मयज्ञानं०। अथ पञ्चलोकपालानाम्—गणानान्त्वा०। अंबे अंबिके०। आ नो नियाद्भिः०। घृतं घृतपावानः०। पावांकशा०। तत 'आकृष्णेने' त्यादि स्वेन स्वेन मंत्रेण देवतां मनसा ध्यात्वैकैकामाज्याहुतिं जुहुयात्। ततः साधितचरोः स्रुवेणावदाय 'आकृष्णेने'त्यादि स्वेन स्वेन मंत्रेणैकैकामाहुतिं जुहुयात्। एतावदाचार्य एव कुर्यात्। ततो जपदशांशेन तिलयवव्रीह्यादि यजमानेनोपकल्पितद्रव्येण ऋत्विग्भिस्तत्तद्देवतां मनसा ध्यायद्भिरुपांशु प्राङ्मुखैरुदङ्मुखैश्च होमः कार्यः। होमसंख्या च सावधानैः कार्या। ततः शुभे मुहुर्त्ते होमसंख्यां संपूर्णां कुर्यात्। एवं होमं परिसमाप्य चन्दनाद्युपचारैः 'अग्ने नये'ति मंत्रेण संकल्पपूर्वकं स्वहास्वधायुतमग्निं पूजयेत्। अग्नये गंधादि बहिरेव दद्यात्। ततो ग्रहपीठदेवतानां च उत्तरपूजां केचिदाहुः। पूजासंपूर्णतां वाचयित्वा। यस्य स्मृत्या०, आवाहनं न

जानामि० । प्रार्थयित्वा ततश्चरुशेषादवदाय 'अग्नये स्विष्टकृते स्वाहा' इति जुहोति । इदमग्नये स्विष्टकृते नमम । ततो नवाहुतिः । एवं नवाहुतिहोमं कृत्वा बलिदानं कुर्यात् । तच्चैवम्—अग्न्यायतनस्य समन्ताद्दिक्षु विदिक्षु च माषभक्तबलिं दिक्पालेभ्यो दद्यात । 'ॐत्रातारमिन्द्र०' । इन्द्राय साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय एष माषभक्तबलिर्न मम । भो इन्द्र दिशं रक्ष बलिं भक्ष मम (यजमानस्य वा) सकुटुम्बस्य आयुःकर्ता क्षेमकर्ता शुभकर्ता शान्तिकर्ता पुष्टिकर्ता तुष्टिकर्त्ता वरदो भवेति । पुष्पाक्षतजलानि पूर्वाभिमुखस्त्यजेत् । 'त्वन्नो अग्ने०' अग्नये० भो अग्ने० । 'सुगन्नु पन्थां०' । यमाय साङ्गायेत्यादि । भो यम इत्यादि । ततो नैर्ऋते 'असुन्वन्त०' निर्ऋतये इत्यादि । भो निर्ऋते साङ्गायेत्यादि० । ततः पश्चिमे 'तत्त्वायामि०' वरुणायेत्यादि । भो वरुण इत्यादि । ततो वायव्ये 'आनो नियुद्भिः०' । वायवे साङ्गायेत्यादि । भो वायो इत्यादि । तत उत्तरे 'वय१ँसोम०' । सोमायेत्यादि । भो सोमेत्यादि । तत ईशान्ये 'तमीशानं०' । ईशानायेत्यादि । तत ईशानपूर्वयोर्मध्ये 'अस्मे रुद्रा०' । ब्रह्मणे इत्यादि । भो ब्रह्मन् इत्यादि । ततः पश्चिमनैर्ऋतयोर्मध्ये 'स्योना पृथिवि०' । अनन्तायेत्यादि । भो अनन्तेत्यादि । ततो ग्रहवेद्याः समन्ताद्ग्रहबलयो देयाः । तत्र पूर्वे 'आकृष्णेन०' । आदित्याय साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय ईश्वराग्निरूपाधिदेवताप्रत्यधिदेवतासहिताय इमं सदीपदधिमाषभक्तबलिं समर्पयामीति पुष्पाक्षतजलं क्षिपेत् । भो रवे इत्यादि पूर्ववत् । एवमुत्तरत्रापि । ततो वेद्या आग्नेये 'इमन्देवा०' । सोमायोमाम्बुरूपाधिदेवताप्रत्यधिदेवतासहितायेत्यादि । ततो दक्षिणे 'अग्निर्मूर्धा०' । भौमाय स्कन्दभूमिरूपाधिदेवताप्रत्यधिदेवतासहिताय । तत ईशान्याम् 'उद्बुध्यस्व०' । बुधाय नारायणविष्णुरूपाधिदेवताप्रत्यधिदेवतासहिताय । तत उत्तरे 'बृहस्पते अति०' । बृहस्पतये ब्रह्मेन्द्ररूपाधिदेवताप्रत्यधिदेवतासहिताय । ततः पूर्वे 'अन्नात्परि०' । शुक्रायेन्द्रेन्द्राणीरूपाधिदेवताप्रत्यधिदेवतास-

हिताय। ततः पश्चिमे 'शन्नो देवी०'। शनये यमप्रजापतिरूपाधिदेवताप्रत्यधिदेवतासहिताय। ततो नैर्ऋत्ये 'कया न०'। राहवे कालसर्परूपाधिदेवताप्रत्यधिदेवतासहिताय। ततो वायव्ये 'केतुं कृण्वन्०'। केतवे चित्रगुप्तब्रह्मरूपाधिदेवताप्रत्यधिदेवतासहिताय। अथ वेद्युत्तरतो गणपत्यादिपञ्चकस्य 'गणानान्त्वा०' गणेशाय०। 'अम्बे अम्बिके०' दुर्गायै०। 'आनो नियुद्भिः०' वायवे०। 'घृतं घृतपावानः०' आकाशाय०। 'यावाङ्कशा०' अश्विभ्यां०। ततो वास्तोष्पतिबलिः—

'वास्तोष्पते ! प्रतिजानीह्यस्मान्स्वावेशो अनमीवो भवा नः।
यत्त्वेमहे प्रति तन्नो जुषस्व शन्नो भव द्विपदे शञ्चतुष्पदे ॥

वास्तोष्पते० इत्यादि। ततो महाबलिं कुङ्कुमादिरक्तपुष्पादियुतं सदीपं सदक्षिणं क्षेत्रपालाय दद्यात्। 'नहि स्पशम० देवाः'। क्षेत्रपालाय भूतप्रेतपिशाचराक्षसशाकिनीडाकिनीवेतालादिपरिवारयुताय इमं बलिं समर्पयामि। भो भो क्षेत्रपाल इमं बलिं गृहाण मम (यजमानस्य वा) आयुः कर्ता क्षेमकर्ता शान्तिकर्ता शुभकर्ता पुष्टिदस्तुष्टिदो भव। इमं बलिं शूद्रेण दुर्ब्राह्मणेन वा चतुष्पथे क्षिपेत्। ततः प्रक्षालितपाणिपाद आचम्य देशकालौ स्मृत्वा, 'कृतस्य नवग्रहहोमस्य सम्पूर्णतासिध्यर्थं पूर्णाहुतिहोममहं करिष्ये' इति सङ्कल्प्य स्रुचि चतुर्गृहीतं द्वादशगृहीतमाज्यं गृहीत्वा वस्त्रयुतं नारिकेलादिफलं चन्दनमालादियुतं तदुपरि निधाय पूर्णाहुतिं यजमानान्वारब्ध आचार्यो जुहुयात्। तत्र मन्त्राः—समुद्रादूर्मिरित्यष्टर्चस्य वामदेव ऋषिस्त्रिष्टुप्छन्दः यज्ञपुरुषो देवता पूर्णाहुतिहोमे विनियोगः। ॐ 'समुद्रादूर्मिः०' ८। पुनस्त्वेति प्रजापतिर्ऋषिस्त्रिष्टुप्छन्दः अग्निर्देवता पूर्णाहुतिहोमे विनियोगः। ॐ 'पुनस्त्वा० १'। पूर्णादर्वीत्यौर्णवाभऋषिरनुष्टुप्छन्द इन्द्रो देवता पूर्णाहुतिहोमे विनियोगः। ॐ 'पूर्णा दर्वि०' १। सप्त ते अग्न इत्यस्य सप्तर्षय ऋषयः त्रिष्टुप्छन्दः अग्निर्देवता पूर्णाहुतिहोमे विनियोगः। 'ॐ सप्त ते अग्ने०'। धामन्त इति वामदेव-

ऋषिः जगतीच्छन्दः आपो देवता पूर्णाहुतिहोमे विनियोगः 'ॐ धामन्ते०' १। स्वाहाकारेणाग्नौ प्रक्षिपेत्। इदमग्नये वैश्वानराय वसुरुद्रादित्येभ्यः शतक्रतवे अग्नये अद्भ्यश्च न ममेति त्यागं कुर्यात्। ततो वसोर्धारामपि केचिदाहुः। तत्र क्रमः। वह्नेरुपरि स्तम्भद्वयविधृतामौदुम्बरीं ऋज्वीमकोटरां बाहुप्रमाणामार्द्रां स्रुचं पूर्वाग्रां निधाय तदुपरि शृङ्खलावधृतेन निर्मलघृतपूरितेन ताम्रमृदादिकुम्भेनाधो यवमात्रच्छिद्रेणाज्यं विमुञ्चताऽग्नेरुपरि वसोर्धारां पातयेत्। तस्यां च घृतधारायां स्रुक्प्रणालिकयाऽग्नौ पतन्त्यां चमकाग्नयादीनि सूक्तानि श्रावयेत्। आज्यं संस्कृत्य वसोर्धारार्थं स्रुचि पञ्चगृहीतग्रहणम्। तत्र वसोर्धारायां मन्त्राश्चमकानुवाकाः। मन्त्रान्तराण्यपि श्रूयन्ते।

श्रावयेत्सूक्तमाग्नेयं वैष्णवं रौद्रमैन्दवम्।
महावैश्वानरं चैव ज्येष्ठसाम च पाठयेत्॥

ॐ व्वाजश्च मे प्र० व्वेट् स्वाहा। अनुवाकाः ८। समास्त्वा०। व्विष्णोर्नुकं व्वीर्याणि०। ६। नमस्ते रुद्र०।१६। अषाढं युत्सु०। ४। आप्यायस्व समे० ३। महावैश्वानरं ज्येष्ठसाम च पठेत्। एवं वसोर्धारां निधाय अग्निं प्रदक्षिणीकृत्य पश्चात्प्राङ्मुख उपविशेत्। ततस्त्र्यायुषाणि करोति भस्मना ललाटे ग्रीवायां दक्षिणेंऽसे हृदि च त्र्यायुषमिति प्रतिमन्त्रम्। ततः संस्रवप्राशनम्। पवित्राभ्यां मार्जनम्। पवित्रप्रतिपत्तिः। प्रणीताविमोकः। ब्रह्मणे पूर्णपात्रदानम्। 'कृतस्य नवग्रहहोमस्य साङ्गतासिद्ध्यर्थं ब्रह्मणे इदं पूर्णपात्रदानं तुभ्यमहं संप्रददे' इति दद्यात्। अथ श्रेयःसम्पादनम्। तदनन्तरं वरणक्रमेण ऋत्विज उदङ्मुखाः प्राङ्मुखयजमानहस्ते श्रेयःसम्पादनं कुर्वन्ति तच्चैवम्—'शिवा आपः सन्त्वि'ति यजमानहस्ते जलं क्षिपेत्। 'सौमनस्यमस्त्वि'ति पुष्पम्। 'अक्षतं चारिष्टं चास्त्वि'त्यक्षताः। 'दीर्घमायुः शान्तिः पुष्टिस्तुष्टिश्चास्त्वि'ति पुनर्जलम्। मया भवन्नियोगेन ग्रहमखप्रीत्यर्थं यः कृतो जपः तद्दशांशेन यः कृतो होमः तस्माज्जपाद्धोमाच्च यज्जातं श्रेयः तत्तुभ्यमहं सम्प्रददे।

अथाभिषेकः । तदनन्तरं ग्रहवेदीस्थापितवरुणकलशमादाय तदुदकेन दूर्वापञ्चपल्लवैरुदङ्मुख आचार्य ऋत्विजस्तिष्ठन्तः प्राङ्मुखं सकुटुम्बमुपविष्टं यजमानं वक्ष्यमाणमन्त्रैरभिषिंचेयुः । अभिषेकसमये वामभागे पत्नी। अभिषेकसमये गीतवादित्रमङ्गलघोषाः कार्याः । तत्र मन्त्राः। "आपोहिष्ठा०। त्रिभिः ३ । त्रातारमिन्द्रम०। पञ्चभिः ५। इमम्मे व्वरुण०। पञ्चभिः ५। भग प्रणेत०।१। इमा आपः० ।१। समुद्राय त्वा०।१। पुनन्तु मा०। नवभिः९। आप्यायस्व०।१। पञ्च नद्यः० ।१। शिरोमे०।चतसृभिः४। देवस्यत्वा० । त्रिभिः ३ । सोमस्य त्वा० । १ । "पालाशं भवति तेन ब्राह्मणोऽभिषिञ्चति ब्रह्म वै पलाशो ब्रह्मणैवैनमेतदभिषिञ्चति । १ । औदुम्बरं भवति तेन स्वोऽभिषिञ्चत्यन्नं वा ऊर्गुदुम्बर ऊर्ग्वै स्वं यावद्वै पुरुषस्य स्वं भवति नैव तावदशनायति तेनोऽर्क्यस्तस्मादौदुम्बरे स्वोऽभिषिञ्चति । २ । नैयग्रोधपादं भवति तेन मित्र्यो राजन्योऽभिषिञ्चति पद्भिर्वै न्यग्रोधः प्रतिष्ठितो मित्रेण वै राजन्यः प्रतिष्ठितस्तस्मान्नैयग्रोधपादेन मित्र्यो राजन्योऽभिषिञ्चति । ३ । आश्वत्थं भवति तेन व्वैश्योऽभिषिञ्चति स यदेवादोऽश्वत्थे तिष्ठतीन्द्रो मरुत उपामन्त्रयत तस्मादाश्वत्थेन व्वैश्योऽभिषिञ्चति । ४ । सर्वसुरभ्युन्मर्दनं भवति परमो वा एष गन्धो यत्सर्वसुरभ्युन्मर्दनं गन्धेनैवैनमेतदभिषिञ्चति ।५। यद्वेव कल्यां जुहोति प्राणा वै कल्या अमृतमु वै प्राणा अमृतेनैवैनमेतदभिषिञ्चति । ६ । सर्व्वेषां वा एष व्वेदानाᳪं रसो यत्साम सर्वेषामेवैनमेतद्वेदानाᳪं रसेनाभिषिञ्चति ।७। अन्येऽपि स्वशाखोक्ता मन्त्रा ग्राह्याः ।

पौराणास्तु—

सुरास्त्वामभिषिञ्चन्तु ब्रह्मविष्णुमहेश्वराः ।
वासुदेवो जगन्नाथस्तथा सङ्कर्षणो विभुः ॥
प्रद्युम्नश्चानिरुद्धश्च भवन्तु विजयाय ते ।
आखण्डलोऽग्निर्भगवान्यमो वै निर्ऋतिस्तथा ॥
वरुणः पवनश्चैव धनाध्यक्षस्तथा शिवः ।

ब्रह्मणा सहिताः सर्वे दिक्पालाः पान्तु ते सदा ॥
कीर्तिर्लक्ष्मीर्धृतिर्मेधा पुष्टिः श्रद्धा क्रिया मतिः ।
बुद्धिर्लज्जा वपुः शान्तिः पुष्टिः कान्तिश्च मातरः ॥
एतास्त्वामभिषिञ्चन्तु देवपत्न्यः समागताः ।
आदित्यश्चन्द्रमा भौमो बुधजीवसितार्कजाः ॥
ग्रहास्त्वामभिषिञ्चन्तु राहुः केतुश्च तर्पिताः ।
देवदानवगन्धर्वा यक्षराक्षसपन्नगाः ॥
ऋषयो मनवो गावो देवमातर एव च ।
देवपत्न्यो द्रुमा नागा दैत्याश्चाप्सरसां गणाः ॥
अस्त्राणि सर्वशस्त्राणि राजानो वाहनानि च ।
औषधानि च रत्नानि कालस्यावयवाश्च ये ॥
सरितः सागराः शैलास्तीर्थानि जलदा नदाः ।
एते त्वामभिषिञ्चन्तु सर्वकामार्थसिद्धये ॥

एवमभिषेकानन्तरं सर्वौषधिभिरनुलिप्य शुद्धोदकेन स्नात्वा शुक्लमाल्यानुलेपनधरः सपत्नीको यजमानोऽग्नेः पश्चिमभागे प्राङ्मुखोपविष्ट उदङ्मुखानाचार्यादीन्पूजयित्वा दक्षिणां दद्यात् । तद्यथा तत्र सूर्याय कपिलां दद्यात् । ततः पूजादिकं विधाय कुशयवजलान्यादाय—

ॐकपिले सर्वभूतानां पूजनीयाऽसि रोहिणी ।
तीर्थदेवमयी यस्मादतः शान्तिं प्रयच्छ मे ॥

इति मन्त्रं पठित्वा अद्येत्यादिसमयमुच्चार्य '**कृतैतद्ग्रहयज्ञप्रतिष्ठार्थं इमां कपिलां धेनुं रुद्रदैवतां अमुकगोत्रायामुकशाखाध्यायिने अमुकशर्मणे ब्राह्मणाय दक्षिणां सम्प्रददे । तेन श्रीसूर्यः प्रीयताम्**' इति वदन् ऋत्विक्करे जलं क्षिपेत् । ब्राह्मणस्तु '**स्वस्ती**'त्युक्त्वा '**कोदात्कस्मा अदादि**'ति पठेत् । ततः सोमाय शङ्खम् । ततः पूजादिकं विधाय कुशादीनादाय—

ॐपुण्यस्त्वं शङ्ख ! पुण्यानां मङ्गलानां च मङ्गलम् ।
विष्णुना च धृतो नित्यमतः शान्तिं प्रयच्छ मे ॥

इति पठित्वा अद्येत्यादि 'इमं विष्णुदैवतं अमुकगोत्राये'त्यादि 'सम्प्रददे' इत्यन्तमुक्त्वा 'सोमः प्रीयतामि'ति ऋत्विक्करे जलं क्षिपेत् । ब्राह्मणस्तु 'देवस्य त्वा० हस्ताभ्यां प्रतिगृह्णामी,त्युक्त्वा 'कोदात्कस्मा० ॐ स्वस्ती'ति वदेत् । ततो भौमाय वृषभम् । ततो वृषभ सम्पूज्य कुशादीनादाय—

ॐ धर्मस्त्वं वृषरूपेण जगदानन्दकारकः ।
अष्टमूर्त्तेरधिष्ठानमतः शान्तिम्प्रयच्छ मे ॥

इति पठित्वा, अद्येत्यादि 'इमं रक्तवृषभं ककुदान्वितं अमुकगोत्राये'त्यादि 'सम्प्रददे भौमः प्रीयता'मिति ऋत्विक्करे जलं क्षिपेत् । ब्राह्मणस्तु 'देवस्य० प्रतिगृह्णामी'त्युक्त्वा 'कोदादिति ॐ स्वस्तीति' वदेत् । बुधाय सुवर्णम् । हिरण्यपूजादिकं विधाय—

ॐ हिरण्यगर्भगर्भस्त्वं हेम ! बीजं विभावसोः ।
अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे ॥

इति पठित्वा, अद्येत्यादि 'इमं सुवर्णं अग्निदैवतं०' । शेषं पूर्ववत । गुरवे पीतवस्त्रम् । पूजादिकं विधाय—

ॐ पीतवस्त्रयुगं यस्माद्वासुदेवस्य वल्लभम् ।
प्रदानात्तस्य मे विष्णो ! अतः शान्तिं प्रयच्छ मे ॥

अद्येत्यादि 'इदं वस्त्रयुगं बृहस्पतिदैवतं०' । शेषं पूर्ववत् । शुक्राय श्वेताश्वम् । अश्वपूजादिकं विधाय—

ॐ विष्णुस्त्वमश्वरूपेण यस्मादमृतसम्भवः ।
चन्द्रार्कवाहनो नित्यमतः शान्तिं प्रयच्छ मे ॥

इति पठित्वा 'इदं श्वेताश्वं वरुणदैवतं गोत्राये'ति पूर्ववत् । शनैश्चराय कृष्णा गौः । पूजादिकं विधाय—

ॐ यस्मात्त्वं पृथिवी सर्वा धेनुः केशववल्लभा ।
सर्वपापहरा नित्यमतः शान्तिं प्रयच्छ मे ॥

इति पठित्वा, अद्येत्यादि 'इमां गां रुद्रदैवतां अमुकगोत्राये'ति पूर्ववत् । राहवे आयसम् । ततो लोहपूजादि ।

ॐ यस्मादायस ! कर्माणि तवाधीनानि सर्वदा ।
हलाङ्गलायुधादीनि अतः शान्तिं प्रयच्छ मे ।

इति पठित्वा, अद्येत्यादि 'इदमायसं विष्णुदैवतं' शेषं पूर्ववत् । केतवे च्छागम् । ततः पूजादिकं विधाय—

ॐ यस्मात्त्वं सर्वयज्ञानामङ्गत्वेन व्यवस्थितः ।
यानं विभावसोर्नित्यमतः शान्तिं प्रयच्छ मे ॥

इति पठित्वा, अद्येत्यादि 'इमं छागं अग्निदैवतं०' शेषं पूर्ववत् । एता दक्षिणा आदित्यदक्षिणाधेनोर्यावता मूल्येन न्यूना भवन्ति तावन्मात्रैयसौवर्णन्तस्यास्तस्याः पूरणीयम् । तत्तन्मन्त्रेणैव दातव्यम् । न च सुवर्णस्य मन्त्रः पठनीयः । अयं मुख्यो दक्षिणाकल्पः । अनुकल्पन्तु अदित्यादिभ्यो दक्षिणां ऐकैकां गां सुवर्णभूषितां दद्यात् । तद्दानमन्त्रः—

गवामङ्गेषु तिष्ठन्ति भुवनानि चतुर्दश ।
यस्मात्तस्माच्छिवं मे स्यादिह लोके परत्र च ॥

अद्येत्यादि 'एकां गां रुद्रदैवतां सुवर्णभूषितामसुकगोत्रायामुकशाखाध्यायिने अमुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे । श्रीसूर्यः प्रीयताम्' । अथ वा सर्वेभ्यः सुवर्णं दद्यात् । ततो यजमानोऽग्निं प्रदक्षिणीकृत्य वेदिसमीपे गत्वा ग्रहपीठदेवतानां गन्धाद्युपचारैः उत्तरपूजां प्रदक्षिणां नमस्कारं निर्वर्त्य पुष्पाञ्जलिं दत्वा—

विरञ्चिनारायणशङ्करेभ्यः
शचीपतिस्कन्दविनायकेभ्यः ॥
लक्ष्मीभवानीकुलदेवताभ्यो
नमोऽस्तु दिक्पालनवग्रहेभ्यः ॥
आदित्यसोमौ बुधभार्गवौ च
शनैश्चरो वा गुरुलोहिताङ्गौ ॥
प्रीणन्तु सर्वे सहराहुकेतुभिः
सर्वे ग्रहाः शान्तिकरा भवन्तु ॥

आवाहनं न जानामि० । अपराधसहस्राणि० यस्य स्मृत्या च० ।

मन्त्रहीनं 'क्रियाहीनमिति पठित्वा क्षमाप्य,

यान्तु देवगणाः सर्वे पूजामादाय पार्थिवीम् ।
इष्टकामप्रसिद्ध्यर्थं पुनरागमनाय च ॥
न्यूनातिरिक्तान्यपरिस्फुटानि
यानीह कर्माणि मया कृतानि ॥
क्षम्याणि चैतानि मम क्षमस्व
प्रयाहि तुष्टः पुनरागमाय ॥

आचार्यः पुष्पाञ्जलिं दत्वा 'उत्तिष्ठ ब्रह्मणस्पते०'। पुष्पाक्षतप्रक्षेपेण ग्रहपीठदेवता विसृज्य ग्रहपीठं चोपस्कारयुतमाचार्याय दत्त्वा अग्निं सम्पूज्य 'स्वयꣳ हि त्वा प्र०। अनु वीरै०। यज्ञ यज्ञं गच्छ०।

गच्छ त्वं भगवन्नग्ने ! स्वस्थानं कुण्डमध्यतः ।
हव्यमादाय देवेभ्यः शीघ्रं देहि प्रसीद मे ॥
गच्छ गच्छ सुरश्रेष्ठ ? स्वस्थाने परमेश्वर ? ।
यत्र ब्रह्मादयो देवास्तत्र गच्छ हुताशन ? ॥

अग्निं विसृज्य, ततः 'कृतस्य नवग्रहमखस्य कर्मणः सम्पूर्णतासिध्यर्थं यथोपपन्नेनान्नेन यथाकालं नानानामगोत्रान् नानाशर्मणः द्वात्रिंशत्संख्याकान् ब्राह्मणान् भोजयिष्ये' इति संकल्पयेत्। भूरिदक्षिणासङ्कल्पानन्तरं वा ब्राह्मणभोजनसङ्कल्पः । ततो 'ब्रह्मार्पणं ब्रह्म हविः०। चतुर्भिश्चतुर्भिश्चे'त्युक्त्वा 'मया यत्कृतं यथाकालं यथादेशं यथाज्ञानं यथाशक्ति नवग्रहमखाख्यं कर्म तेन श्रीपरमेश्वरः प्रीयताम्, तत्सद्ब्रह्मार्पणमस्त्वि'ति कुशजलं क्षिपेत। ततः सदस्यांश्चन्दनाक्षतवस्त्रताम्बूलदक्षिणाभिः पूजयित्वा अञ्जलिं बध्वा 'मया यत्कृतं नवग्रहशान्तिकर्म तत्कालहीनं भक्तिहीनं श्रद्धाहीनं भवतां ब्राह्मणानां प्रसादात्सर्वं परिपूर्णमच्छिद्रं चास्तु' इति प्रार्थयेत्। ततः 'सम्पूर्णमस्त्वि'ति वदेयुः सर्वे ।

जपच्छिद्रं तपश्छिद्रं यच्छिद्रं व्रतकर्मणि ।
सर्वं भवतु मेऽच्छिद्रं ब्राह्मणानां प्रसादतः ॥

ततस्तेषां मन्त्राशिषो गृहीत्वा तांस्तान्सानुनयं विसर्ज्य ब्राह्मणान्भोजयित्वा दीनानाथांश्चान्नादिना सन्तोष्य स्वयं सुहृन्मित्रादियुतः सोत्साहः सन्तुष्टो हविष्यं भुञ्जीतेति । प्रतिकूलग्रहपूजा तत्तद्वासरे कर्तव्या राहुकेत्वोः पृथग्वासराभावान्मन्दवारो ग्राह्यः ।

शन्यादीन्मन्दवारे तु पूजयेत्प्रयतो नरः ॥ इति ।

एवं कुर्वतः फलं मात्स्ये—

अनेन विधिना यस्तु ग्रहपूजां समाचरेत् ।
सर्वान्कामानवाप्नोति प्रेत्य स्वर्गे महीयते ॥
अन्नहीनो दहेद्राष्ट्रं मन्त्रहीनस्तु ऋत्विजः ।
यजमानमदक्षिण्यो नास्ति यज्ञसमो रिपुः ॥

इति श्री प्रथमशाखीयरामकृष्णविरचिते पारस्करगृह्यसूत्रविवरणे संस्कारगणपतौ ग्रहमखः समाप्तः ।



अत्र क्रमप्राप्तसर्वसाधारणमधुपर्कविधिमाह ।

## तृतीयाकण्डिका

**षडर्घ्या भवन्त्याचार्य ऋत्विग्वैवाह्यो राजा प्रियः स्नातक इति प्रतिसंवत्सरानर्हयेयुर्यक्ष्यमाणास्त्वृत्विज आसनमाहार्याह साधु भवानास्तामर्चयिष्यामो भवन्तमित्याहरन्ति विष्टरं पद्यं पादार्थमुदकमर्घमाचमनीयं मधुपर्कं दधिमधुघृतमपिहितं काꣳस्ये काꣳस्येनान्यस्त्रिस्त्रिः प्राह विष्टरादीनि विष्टरं प्रतिगृह्णाति वर्ष्मोऽस्मि समानानामुद्यतामिव सूर्यः । इमन्तमभितिष्ठामि यो मा कश्चाभिदासतीत्येनमभ्युपविशति पादयोरन्यं विष्टर आसीनाय सव्यं पादं प्रक्षाल्य दक्षिणं प्रक्षालयति ब्राह्मणश्चेद्दक्षिणं प्रथमं विराजो दोहोऽसि विराजो दोहमशीय मयि पाद्यायै विराजो दोह इत्यर्घं**

प्रतिगृह्णात्यापः स्थ युष्माभिः सर्वान्कामानवाप्नवानीति निनयन्नभिमन्त्रयते समुद्रं वः प्रहिणोमि स्वां योनिमभिगच्छत । अरिष्टा अस्माकं वीरा मा परासेचि मत्पय इत्याचामत्यामागन्यशसा सᳪंसृज वर्चसा । तम्मा कुरु प्रियं प्रजानामधिपतिं पशूनामरिष्टिन्तनूनामिति मित्रस्यत्वेति मधुपर्कं प्रतीक्षते देवस्य त्वेति प्रतिगृह्णाति सव्ये पाणौ कृत्वा दक्षिणस्यानामिकया त्रिः प्रयौति नमः श्यावास्यायान्नशने यत्त आविद्धन्तत्ते निष्कृन्तामीत्यनामिकाङ्गुष्ठेन च त्रिर्निरुक्षयति तस्य त्रिः प्राश्नाति यन्मधुनो मधव्यं परमᳪं रूपमन्नाद्यम् । तेनाहम्मधुनो मधव्येन परमेण रूपेणान्नाद्येन परमो मधव्योऽन्नादोऽसानीति मधुमतीभिर्वा प्रत्यृचं पुत्रायान्तेवासिने वोत्तरत आसीनायोच्छिष्टं दद्यात्सर्वं वा प्राश्नीयात्प्राग्वाऽसञ्चरे निनयेदाचम्य प्राणान्त्संम्मृशति वाङ्म आस्ये नसोः प्राणोऽक्ष्णोश्चक्षुः कर्णयोः श्रोत्रं बाह्वोर्बलमूर्वोरोजोऽरिष्टानि मेऽङ्गानि तनूस्तन्वा मे सहेत्याचान्तोदकाय शासमादाय गौरिति त्रिः प्राह प्रत्याह माता रुद्राणां दुहिता वसूनाᳪं स्वसाऽदित्यानाममृतस्य नाभिः । प्रनुवोचञ्चिकितुषे जनाय मा गामनागामदितिं वधिष्ट । मम चामुष्य च पाप्मानᳪं हनोमीति यद्यालभेताथ यद्युत्सिसृक्षेन्मम चामुष्य च पाप्मा हत ॐ मुत्सृजत तृणान्यत्त्विति ब्रूयान्न त्वेवामाᳪंसोऽर्घः स्यादधियज्ञमाधिविवाहं कुरुतेत्येव ब्रूयाद्यद्यप्यसकृत्संवत्सरस्य सोमेन यजेत कृतार्घ्या एवैनं याजयेयुर्नाकृतार्घ्या इति श्रुतेः ॥३॥

"षडर्घ्या भवन्ति" इति सूत्रम् । अर्ह पूजायामिति धातोर्भावे घञ् प्रत्ययः। न्यङ्क्वादित्वात्कुत्त्वम् । दण्डादिभ्यो यदिति यत्प्रत्ययः। अर्घमर्हन्तीत्यर्घ्याः षट्

पुरुषा अर्घार्हा भवन्तीत्यर्थः। तानाह "आचार्य ऋत्विक् वैवाह्यो राजा प्रियः स्नातक" इति सूत्रम्। उपनयनपूर्वककृत्स्नवेदाध्यापयिता आचार्यः। ऋत्विक् यो दक्षिणया परिक्रीतः कर्माणि करोति। वैवाह्यो जामाता। राजा दण्डपूर्वकं परिपालनकर्ता। प्रियो य इष्ट उत्कृष्टजातिः समानजातिर्वा। स्नातको ब्रह्मचर्यात्समावृत्तः। तस्य चार्हणमाचार्यकर्तृकं स्मृतम्। उक्तं च मनुना—

तं प्रतीतं स्वधर्मेण ब्रह्मदायहरं पितुः।
स्रग्विणं तल्पमासीनमर्हयेत्प्रथमं गवा॥ इति॥

सूत्रे षट्ग्रहणं प्रियस्नातकयोः पृथक्करणार्थम्। "प्रतिसंवत्सरानर्हयेयुः" इति सूत्रम्। प्रतिसंवत्सरे गृहे आगतानाचार्यादीन् अर्घेणार्चयेयुः। न संवत्सरादर्वाक्। प्रतिसंवत्सरानर्हयेयुरित्यविशेषेणोक्तत्वादृत्विजोऽपि संवत्सरान्तेऽर्हयितव्या इति प्राप्ते आह—"यक्ष्यमाणास्त्वृत्विजः" इति सूत्रम्। 'ऋत्विजस्तु यक्ष्यमाणा यागकाल एव पूजनीयाः न ततोऽन्यत्र' एवं गदाधरेण व्याख्यातम्। इदमेव सूत्रं हरिहरमिश्रेणान्यथा व्याख्यातम्—'यज्ञं करिष्यन्तो यजमानाः ऋत्विजो याजकानि'ति। पूजनीया उक्ताः कालश्च। आश्वलायनोऽपि "ऋत्विजो वृत्वा मधुपर्कमाहरेत्स्नातकायोपस्थिताय राज्ञे चाऽऽचार्याय श्वशुरपितृव्यमातुलानां चेति"। इदानीमर्हणप्रकारमाह—"आसनमाहार्याह साधु भवानास्तामर्चयिष्यामो भवन्तम्"इति सूत्रम्। अर्घ्यायासनं पीठादि आसनमाहरेति प्रैषपूर्वकं अनुचरद्वाराऽऽनाय्य साधुभवानित्यर्घयिता अर्घ्यं प्रतिवदति। अर्घ्यं प्रत्यर्घ्येषणमेतत। "आहरन्ति विष्टरं पद्यं पादार्थमुदकमर्घमाचमनीयं मधुपर्कं दधि मधु घृतमपिहितं कांस्ये कांस्येने"ति सूत्रम्। बहुवचनादर्घयितुः पुरुषा विष्टरादीनि आहरन्ति। तत्र विष्टरलक्षणं वीरमित्रोदये—

कतिभिस्तु भवेद्ब्रह्मा कतिभिर्विष्टरो मतः।

परिशिष्टे—

पञ्चाशता भवेद्ब्रह्मा तदर्धेन तु विष्टरः॥

ऊर्ध्वकेशो भवेद्ब्रह्मा लम्बकेशस्तु विष्टरः ।
दक्षिणावर्त्तको ब्रह्मा वामावर्तस्तु विष्टरः ॥

ऊर्ध्वकेशः ऊर्ध्वाग्रः । लम्बकेशः तिर्यगग्रः । दक्षिणावर्तको ग्रन्थिरिति विशेषः । परिशिष्टान्तरेऽपि—

पञ्चविंशतिदर्भाणां वेण्यग्रे ग्रन्थिभूषितम् ।
विष्टरं सर्वयज्ञेषु लक्षणं परिकीर्त्तितम् ॥ इति ।

विष्टरस्त्रिवृदरालिमात्र इति गदाधरः । कौशो रज्जुविशेष इति भर्तृयज्ञः ।

प्रादेशमात्रं त्रिवृतं कौशं वा काशनिर्मितम् ।
विष्टरं सूरयः प्राहुरलाभे वल्वजादिकम् ॥

इति रेणुः । पञ्चविंशतिदर्भतरुणमयं कूर्चमिति हरिहरः ।

गृह्यकारिकायाम्—

यज्ञवास्तुनि मुष्टौ च स्तम्भे दर्भवटौ तथा ।
दर्भसंख्या न विहिता विस्तरास्तरणेषु च ॥ इति ।

पादयोरन्यमिति वचनादत्र द्वयोराहरणमिति भर्तृयज्ञः । पद्यं पादयोरधस्तान्निधानार्थे विष्टरमिति गदाधरः । भर्तृयज्ञमते तु पादप्रक्षालनार्थमुदकं पद्यशब्देन । पादार्थमुदकं पादप्रक्षालनार्थं जलं सुखोष्णम् । अर्घम् । अर्घशब्देनोदपात्रमेवोच्यते । अर्घं हस्तप्रक्षालनार्थजलमिति वीरमित्रोदयकारः । उदकगन्धपुष्पाण्यक्षतबदराणीति भर्तृयज्ञः । गन्धपुष्पाक्षतकुशतिलशुभ्रसर्षपदधिदूर्वान्वितं सुवर्णादिपात्रस्थमुदकमिति हरिहरः । आचमनीयम्—आचमनार्थमुदकमेव । दधिमधुघृतमेकस्मिन्कांस्यपात्रे कृतमपरेण कांस्यपात्रेणापिहितं मधुपर्कशब्देनोच्यते । मधुपर्के दध्यलाभे पयो जलं वा प्रतिनिधिरिति गदाधरः । मध्वलाभे घृतं गुडो वेत्याश्वलायनः । त्रितयमपि समुचितमिति हिरण्यकेशिनः । तथा च तत्सूत्रम्—“अथास्मा आवसथं कल्पयित्वाऽर्घं इति प्राह कुरुतेति प्रत्याह कुर्वन्त्यस्मै त्रिवृतं पाङ्क्तं वा दधि मधु घृतमिति त्रिवृद्दधि मधु घृतमापः सक्तव

इति पाङ्क्तः" । अथैषां तौल्यमाह--

आज्यमेकं पलं ग्राह्यं दध्नस्त्रिपलमेव च ।
मधुनः पलमेकन्तु मधुपर्कः स उच्यते ॥

वासोयुगलं चन्दनपुष्पाणि यज्ञोपवीतमलङ्काराणि एतान्युपकल्प्य । मनुः—

द्विराचम्य समासीनः कर्ता प्रत्यङ्मुखो वरम् ।
प्राङ्मुखन्तु समासीनं मधुपर्केण पूजयेत् ॥

"अन्यस्त्रिस्त्रिः प्राह विष्टरादीनि" इति सूत्रम् । अर्चयितुर्व्यतिरिक्तोऽन्यो विष्टरादीनि द्रव्याणि त्रिस्त्रिर्वारत्रयं वदति । "विष्टरो विष्टरो विष्टरः प्रतिगृह्यतामि"ति सकृत् । ततो वरः अर्घयितुः सकाशात् विष्टरं प्रतिगृह्णाति । "वर्ष्मोऽस्मि समानानामुद्यतामिव सूर्यः । इमन्तमभितिष्ठामि यो मा कश्चाभिदासती"त्येनमभ्युपविशति । ततोऽर्चयितुः सकाशाद्विष्टरं तूष्णीमेव प्रतिगृह्य तं विष्टरमासने निधाय "वर्ष्मोऽस्मि"इति मन्त्रेणोपविशति । ग्रहणोपवेशनयोर्मध्ये पठितोऽपि मन्त्र इमन्तमभितिष्ठामीति लिङ्गादुपवेशने विनियुज्यते । उक्तं च गृह्यकारिकायाम्—

अर्घ्यायार्घयिता तस्मै विष्टरं तं प्रयच्छति ।
तूष्णीं स प्रतिगृह्णीयादुदगग्रं तमासने ॥
निधायोपविशेत्तस्मिन्वर्ष्मोस्मीत्यादिमन्त्रतः ।
अन्तरा पठितो मन्त्र उपादानोपवेशने ॥
अपि चेन्मत्रलिङ्गात्स नियोज्य उपवेशने ॥

'पाणिभ्यां विष्टरप्रतिग्रहः' इति हरिहरमिश्रः । तत्र प्रमाणमन्वेषणीयम् । **मन्त्रार्थः**–अर्घ्य आत्मानं स्तौति अर्घत्वाय कुलाचारवपुर्वयोगुणैरहं समानानां सजातीयानां मध्ये वर्ष्मः श्रेष्ठः अस्मि भवामि । उद्यतांउदयं प्रकाशं कुर्वतां ग्रहनक्षत्रादीनां मध्ये सूर्य इव । किं च इमं विष्टरं पुरुषमुद्दिश्य विष्टराद्बाह्यमभिलक्ष्यीकृत्य तिष्ठाम्यधः कृत्वा पर्युपविशामि । यः कश्चन मा मां अभिदासति उपक्षीणं कर्तुमिच्छति । दसु उपक्षये । "पादयोरन्यं विष्टर आसीनाय" इति सूत्रम् । विष्टरे आसीनायोप-

विष्टायार्घ्याय पादयोरधस्तान्निधानार्थमन्यं विष्टरं ददाति । एतच्च पाद-प्रक्षालनोत्तरं द्रष्टव्यम् । तथा सति दृष्टार्थः स्यात् । प्रक्षाल्य हि पादौ विष्टरे क्रियेत इति । तेनार्थेन पाठो बाधितः । पाठक्रमादर्थक्रमो बलीति न्यायात् । "सव्यं पादं प्रक्षाल्य दक्षिणं प्रक्षालयति ब्राह्मणश्चेद्दक्षिणं प्रथमं व्विराजो दोहोऽसि व्विराजो दोहमशीय मयि पाद्यायै व्विराजो दोहः" इति सूत्रम् । ततः पाद्यं प्रतिगृह्य विराजो दोहोऽसीति मन्त्रेण सव्यं पादं प्रक्षाल्य दक्षिणं प्रक्षालयति क्षत्रियादिरर्घ्योऽथेद्ब्राह्मणोऽर्घ्यः स्यात्तदा दक्षिणं पादं प्रथमं प्रक्षाल्य ततः सव्यं प्रक्षालयति । तेन च पादौ प्रक्षालयेद्वरस्य कन्यादाता । स्वयं प्रक्षालयेदिति रेणुः । तदुक्तं गृह्यकारिकायाम्—

एवं पादार्थमुदकं त्रिः सकृत्प्रतिगृह्यताम् ।
विराज इति मन्त्रेण तद्गृहीत्वोदकं वरः ॥
पादौ प्रक्षालयेत्तूष्णीं स तेन स्वयमात्मनः ।

मन्त्रार्थः—प्राणधारणादिगुणैः सकलसाहित्येन विविधतया राजत इति विराट् अन्नं तस्या विराजो दोहः परिणामः सारो रसः स त्वं असि भवसि । हे उदक तत्त्वं विराजो दोहं अशीय अश्नुवै व्याप्नुयाः । किंच मयि विषये या पाद्या पादयोः साध्वी सपर्या तस्यै तदर्थं विराजो दोहः मन्त्रसंस्कृतं जलं भवेति शेषः । "अर्घं प्रतिगृह्णात्यापः स्थ युष्माभिः सर्वान्कामानवाप्नवानीति" सूत्रम् । अर्घ्यः समर्पितं अर्घं प्रतिगृह्णाति "आपः स्थ युष्माभि"रिति मन्त्रेण । उक्तं च गृह्यकारिकायाम्—

अभूमयाऽर्घपात्रस्थमर्घं तस्मै प्रयच्छति ।
तं गृह्णाति स पश्चादापः स्थ युष्माभिमन्त्रतः ॥

हे आपः! आपःस्थ आशिहेतवो भवथ । युष्माभिः कृत्वा सर्वान् कामान् अभीष्टार्थान् आप्नवानि लभेयम् । "निनयन्नभिमन्त्रयते समुद्रं वः प्रहिणोमि स्वां योनिमभिगच्छथ । अरिष्टा अस्माकं वीरा मा परासेचि मत्पय"इति सूत्रम् । तमर्घं भूमौ निनयन् प्रापयन्नभिमन्त्रयते

समुद्रं व इति मन्त्रेण। ननु मन्त्रान्ते अर्घं शिरसाऽभिवन्द्य प्रागुदग्वा निनयनमिति वासुदेवः। तथा च रेणुः—

मूर्द्ध्ना तमभिवन्द्यार्घं निनयन्नभिमन्त्रयेत्।
प्रागुदग्वा समुद्रं वः प्रहिणोमीति मन्त्रतः॥
जलं तदर्घशब्देन लिङ्गादेवावगम्यते।

मन्त्रार्थः—हे आपः ! वो युष्मान् समुद्रं प्रहिणोमि गमयामि। अतः स्वां योनिं स्वकारणभूतं समुद्रं अभिलक्षीकृत्य गच्छत। किञ्च युष्मत्प्रसादाच्चास्माकं वीराः पुत्राः भ्रातरः अरिष्टाः अहताः सन्तु। मत्तः पयः अर्घादिमङ्गलजलं मा परासेचि अपगतं माऽस्तु। सदैवाहमर्घ्यो भवानीत्यर्थः। "आचामत्यामागन्यशसासꣳसृज वर्चसा। तं मा कुरु प्रियं प्रजानामधिपतिं पशूनामरिष्टिं तनूनामि"ति सूत्रम। ततो दत्तमाचमनीयं प्रतिगृह्य"आमागन्नि"ति आचामति सकृद्भक्षयति। ततः स्मार्ताचमनम्। मन्त्रार्थः-हे वरुण जलेश ! तमेवंरूपेण त्वामाश्रितं मा मां यशसा सहभावं सामीप्यं वा आगन् आगमय। आङुपसर्गो अगन्निति क्रियापदेन सम्बध्यते। तथा वर्चसा ब्रह्मवर्चसेन संसृज संसृष्टं कुरु। किञ्च प्रजानां पुत्रपौत्रादीनां प्रियं पशूनां गोऽश्वादीनां अधिपतिं स्वामित्वेन च तथा तनूनां देहावयवानां शरीराणां चारिष्टं अहिंसकं कुरु। हिंसाऽत्र—

अनभ्यासेन वेदानामाचारस्य च लङ्घनात्।
आलस्यादन्नदोषाच्च मृत्युर्विप्रान् जिघांसति॥

इत्यादि दर्शिता। "मित्रस्य त्वेति मधुपर्कं प्रतीक्षते" इति सूत्रम्। ततोऽर्घ्योऽर्घयितुर्हस्तस्थितमुद्घाटितं मधुपर्कं मित्रस्य त्वेति प्राशित्रमन्त्रेण प्रतीक्षते पश्यतीत्यर्थः। "देवस्य त्वेति प्रतिगृह्णातीति" सूत्रम्। ततो देवस्य त्वेति प्राशित्रप्रतिग्रहणमन्त्रेण मधुपर्कं प्रतिगृह्णाति। "सव्ये पाणौ कृत्वा दक्षिणस्यानामिकया त्रिः प्रयौति नमः श्यावास्यायान्नशने यत्त आविद्धं तत्ते निष्कृन्तामीति"सूत्रम्। अत्र सव्यहस्तस्थितस्यैव दक्षिणस्यानामिकया त्रिर्लोडनं यथा स्यादित्येतदर्थं दक्षिणग्रहणम्।

मन्त्रार्थः–हे अग्ने ? तुभ्यं नमः। किंभूताय श्यावास्याय कपिशमुखाय ते तव अन्नशने अद्यत इत्यन्नं तस्याशने अदनीये मधुपर्के ह्रस्वश्छान्दसः। यद्द्रव्यं आविद्धं संश्लिष्टं अनदनीयं तन्निष्कृन्तामि निरस्यामि। "अनामिकाङ्गुष्ठेन च त्रिर्निरुक्षयति" सूत्रम्। अनामिका च अङ्गुष्ठश्च इत्यनामिकाङ्गुष्ठं तेनानामिकाङ्गुष्ठेन वारत्रयं निरुक्षयति मधुपर्कैकदेशं पात्राद्बहिः प्रक्षिपति इति। च शब्दात्प्रतिसंयवनं निरुक्षणम्। एवं च निरुक्षणव्यवधानात्प्रतिसंयवनं मन्त्रावृत्तिः। तथा च गृह्यकारिकायाम्—

त्रिरेवानामिकाङ्गुष्ठेन तत्स्थस्य निरुक्षयति।
निरुक्षेत्प्रत्युत्पवनं च शब्दकरणादिह॥
मन्त्रावृत्तिर्भवेत्प्रत्युच्चाळनव्यवधानतः॥ इति।

"तस्य त्रिः प्राश्नाति यन्मधुनो मधव्यं परमꣳरूपमन्नाद्यम्। तेनाहं मधुनो मधव्येन परमेण रूपेणान्नाद्येन परमो मधव्योऽन्नादोऽसानीति" इति सूत्रम्। मधुपर्कपात्रं भूमौ निधाय। तस्येत्यवयवलक्षणा षष्ठी। तस्य मधुपर्कस्य त्रिः प्राश्नीया'द्यन्मधुनोमधव्य'मित्यनेन मन्त्रेण। प्राशनत्रयेऽपि हविर्ग्रहणन्यायेन मन्त्रावृत्तिः। उच्छिष्टस्यैव मन्त्रोच्चारणम्।

तथाचोक्तं गृह्यकारिकायाम्—

भूमौ निधाय तत्पात्रं सर्वं मधुन इत्यतः।
आवृत्तिः प्रतिभक्षं स्यान्मन्त्रस्य द्रव्यभेदतः॥
उच्छिष्टस्य भवेन्मन्त्रोच्चारणं मनुरब्रवीत्।

गदाधरभाष्येप्युक्तम्—

ताम्बूलेक्षुफले चैव भुक्तस्नेहानुलेपने।
मधुपर्के च सोमे च नोच्छिष्टं मनुरब्रवीत्॥

ननु 'एकद्रव्ये कर्मावृत्तौ सकृन्मन्त्रपाठ' इति कात्यायनपरिभाषाऽतो द्रव्यत्रयं दधिमधुघृतं तेनादोषः। मन्त्रार्थः–हे देवाः ? मधुनः मकरन्दस्य यत् मधव्यं मधुनि साधु परमं उत्कृष्टं रूपयति प्रकाशयति देहसङ्घातमिति रूपम्, अन्नाद्यं व्रीह्यादिवत्प्राणधारकं च, तेन सर्वरूपोपपन्नरसेनोक्तविशेषणविशिष्टेनाहं परमः सर्वेभ्यो गुणाधिकः मधव्यः मधुपर्कार्हः

अन्नादः सदन्नभोक्ता च असानि भवानि। "मधुमतीभिर्वा प्रत्यृचं" इति सूत्रम् । वा विकल्पेन "मधु व्वाता ऋतायते मधु क्षरन्ती"त्येताभिर्ऋग्भिः प्रत्यृचं प्राश्नाति । ततश्चैवम् । 'मधु व्वाते'ति प्रथमम्! 'मधु नक्त' मिति द्वितीयम् । 'मधुमान्न' इति तृतीयम् । "पुत्रायान्तेवासिने वोत्तरत आसीनायोच्छिष्टं दद्यात्" इति सूत्रम् । अवशिष्टं मधुपर्कस्योच्छिष्टं पुत्रायान्तेवासिने शिष्यायोत्तरत उपविष्टाय दद्यात् । तथा च कारिकायाम्—

दद्यात्पुत्राय तच्छेषमस्ति चेत्स समीपतः ।
आसीनायोत्तरे यद्वा शिष्याय तदभावतः ॥

"सर्व्वं वा प्राश्नीयादिति" सूत्रम् । अथ वा सर्वं प्राश्नाति । "प्राग्वाऽसञ्चरे निनयेदिति" सूत्रम् । प्राक् प्राच्यां दिशि यत्र जना न सञ्चरन्ति तस्मिन्नसञ्चरे मधुपर्कशेषं प्रक्षिपेत् । तथाचोक्तं कारिकायाम् -

सर्वं वा द्रव्यमश्नीयात्क्षिपेद्वा प्रागसञ्चरे ।

"आचम्य प्राणान् संमृशति वाङ्म आस्ये नसोः प्राणोऽक्ष्णोश्चक्षुः कर्णयोः श्रोत्रं बाह्वोर्बलमूर्वोरोजोऽरिष्टानि मेऽङ्गानि तनूस्तन्वा मे सहेति"सूत्रम् । आचम्य-

"द्विराचमेत्समृद्ध्यर्थं प्राणसम्मर्शनं क्रमात्" इति रेणुः ।

स्मार्तमाचमनं कृत्वा वाङ्म आस्य इत्येतैर्मन्त्रैः प्रतिमन्त्रं यथालिङ्गं प्राणायतनानि सम्मृशति । सर्वत्र साकाङ्क्षत्वादस्त्वित्यध्याहारः । अरिष्टानि मेऽङ्गानि सन्तु । सन्त्वित्यध्याहारः । मे पदस्य सर्वत्रानुषङ्गः । नन्वध्याहारानुषङ्गयोः को विशेषः ? उच्यते--अनुषङ्गः श्रुतपदानयनम् । अध्याहारः अश्रुतपदस्य लौकिकस्यानयनम् । वाक्यनिराकाङ्क्षार्थं प्रयोजनम् । नन्वध्याहृतपदस्य संहितावत्प्रयोगो न भवति सावसानं प्रयोग इत्यर्थः । अत्रैवं 'वाङ्म आस्येऽस्त्वि'ति मुखम् । 'नसोर्मे प्राणोऽस्त्वि'ति नासिकाच्छिद्रद्वयं युगपत् । 'अक्ष्णोर्मे चक्षुरस्तु'इत्यक्षिणी युगपत् । 'कर्णयोर्मे श्रोत्रमस्त्वि'ति दक्षिणकर्णमभिमृश्य ततो वाममनेनैव मन्त्रेण । 'बाह्वोर्मे बलमस्तु' दक्षिणबाहुं ततो वाममनेनैव मन्त्रेण । 'ऊर्वोर्मे ओजोऽस्त्वि'ति ऊरूद्वयं

युगपदेव। 'अरिष्टानि मेऽङ्गानि तनूस्तन्वा मे सह सन्त्वि'ति शिरःप्रभृति सर्वाङ्गानां युगपद्। हरिहरेण प्राणायतनस्पर्शः सजलहस्तेन कर्तव्य इत्युक्तम्। नह्यत्र सूत्रे जलग्रहणमस्ति। तत्र प्रमाणमन्वेषणीयम्। सर्वाङ्गालम्भे उभाभ्यां हस्ताभ्यामालम्भ उक्तः। सोऽपि नोक्तः। आचम्येति ग्रहणं आचान्तोदकायेति वक्ष्यमाणत्वादनाचान्तस्यैव प्राणायतनसम्मर्शनं माभूदित्येतदर्थम्। **मन्त्रार्थः**—मे मम वागिन्द्रियं आस्येऽस्तु। नसोर्नासिकयोः प्राणः प्राणवायुः, अक्ष्णोः नेत्रगोलयोः चक्षुरिन्द्रियं, श्रोत्रं श्रवणेन्द्रियं, बलं शक्तिः, ओजस्तेजः, मे मम तनूर्देहः तन्वा देहस्याङ्गानि च सह युगपत् अरिष्टानि अनुपहतानि सन्तु। **"आचान्तोदकाय शासमादाय गौरिति त्रिःप्राहेति"** सूत्रम्। आचान्तमुदकं येनासौ आचान्तोदकः तदर्थं शासमसिं आदाय गामानीय गौरित्यर्घयिता त्रिः प्राह आलभ्यतामित्यध्याहारः। आचान्तोदकग्रहणात्पुनराचमनमिति केचित्। आचान्तोदकायेति तादर्थ्ये चतुर्थी। शासदानस्य तादर्थ्यं तु तदर्थं पश्वालम्भनद्वारकम्। **"प्रत्याह माता रुद्राणां दुहिता वसूना२ँ स्वसाऽऽदित्यानाममृतस्य नाभिः। प्रनु वोचं चिकितुषे जनाय मा गामनागामदितिं वधिष्ट। मम चामुष्य च पाप्मान२ँ हनोमीति यद्यालभेत।** अर्घ्यो यजमानं प्रत्याह मातेत्यमुं मन्त्रं यदि गामालभेत तदा मम चामुष्य च पाप्मान२ँ हनोमीति तदन्ते प्रयोगः। अत्रामुष्यशब्दमुद्धृत्यार्घयितुर्नामग्रहणं कार्यम्। **मन्त्रार्थः**—अमृतस्य क्षीरस्य नाभिराश्रयः। नु वितर्के, **'छन्दसि व्यवहिताश्चे'**तिप्रोपसर्गस्य वोचमित्यत्रान्वयः। प्रवोचं ब्रवीति चिकितुषे चेतनावते जनाय। यूयमिमां गां मा वधीष्ट मा घ्नन्तु, किन्तु गोपशुं विधातुं घ्नन्तेति तात्पर्यार्थः। किंभूतां गाम्? अनागामनपराधां अदितिं देवमातरं पयोदानात्। अहं ममामुष्यार्घयितुश्च पाप्मानं गोस्थाने हनोमि हन्मीति। अथ **"यद्युतिसस्रक्षेन्मम चामुष्य च पाप्मा हत ॐ उत्सृजत तृणान्यत्त्विति ब्रूयात्"** इति सूत्रम्। यदि अर्घ्यो गामुत्स्रष्टुमिच्छेत्तदैवं प्रयोगः। मातारुद्राणामित्युक्त्वा मम चामुष्य च पाप्मा हतः। अत्राप्यमुष्य स्थाने अर्घयितुर्नामग्रहणम्। ॐ उत्सृजत तृणान्यत्त्वित्युच्चै-

ब्रूयात्। शेषमुपांशु। एवं गवालम्भनस्य सर्वत्र विकल्पे प्राप्ते क्वचिन्नियममाह "नत्वेवामाꣳसोऽर्घः स्यादधियज्ञमधिविवाहं कुरुतेत्येव ब्रूयात्" इति सूत्रम्। यज्ञविवाहयोरमांसोऽर्घो न भवति। यज्ञमधिकृत्य विवाहमधिकृत्य कुरुतेत्येव प्रयोगः। अतश्चालम्भनियमो यज्ञविवाहयोः। तदुक्तं गृह्यकारिकायाम्—

आलम्भनं गोरधिकृत्य यज्ञमावश्यकं स्याच्च तथा विवाहम्।
न स्यादमांसोऽर्घ इति ब्रवीति पारस्करो यज्ञविवाहकृत्ये॥ १॥

गोलक्षणं वीरमित्रोदये हिरण्यकेशिसूत्रम् "अथास्मै गौरिति प्राह तस्याः कर्मोत्सर्गो वा गौर्धेनुर्भव्येति"। अनेन च 'आन्तोदकाय गां वेदयन्त' इत्याश्वलायनादिसूत्रस्थमपि गोपदं धेनुपरतया व्याख्यातम्। स्त्रीत्वस्य तस्या इत्युदाहृतसूत्रान्मातारुद्राणामित्यादिलिङ्गाच्च स्वत एव सिद्धत्वात्तस्याश्चालम्भनमुत्सर्गो वा। गोरालम्भनं तु कलौ निषिद्धम्। तदुक्तं गदाधरभाष्ये पाराशरः—

यज्ञाधानं गवालम्भं सन्न्यासं पलपैतृकम्।
देवराच्च सुतोत्पत्तिः कलौ पञ्च विवर्जयेत्॥

आदित्यपुराणेऽपि—

कन्यायाः पुनरुद्वाहं ज्येष्ठांशं गोवधन्तथा।
कलौ पञ्च न कुर्वीत भ्रातृजायां कमण्डलुम्॥ इति॥

अतश्च गवालम्भनस्य कलौ निषिद्धत्वादुत्सर्गस्य च यज्ञविवाहयोरप्राप्तत्वाद्गौरित्युच्चारणादि यज्ञविवाहयोः कलौ न प्रवर्तते। यज्ञविवाहयोरन्यत्र तूत्सर्गपक्ष एव कलौ। तदुक्तं गृह्यकारिकायाम्—

क्रतोर्विवाहादन्यत्रालम्भनं पाक्षिकं भवेत्।
गोरालम्भनिषेधः स्यात्सर्वत्रोत्सर्जनं कलौ॥
अनेन विधिना विद्वानाचार्यादीन्समर्पयेत्॥ इति।

कलौ गोपशोर्निषिध्य तत्स्थाने अजालम्भ इति गदाधरः। पायसं चेति जयरामः। परिगतसंवत्सरा अर्घ्या भवन्तीत्युक्तन्तदपवादमाह—"यद्यप्यसकृत्संवत्सरस्य सोमेन यजेत कृतार्घ्या एवैनं याजयेयुर्ना

कृताघ्यां इति श्रुतेः" इति सूत्रम् । यद्यपि संवत्सरस्य मध्ये असकृत्पुनः पुनः सोमेन यजेत तथाप्येनं यजमानं कृतार्घ्या एव ऋत्विजो याजयेयुः, नाकृतार्घ्याः, कुतः ? श्रुतेः । एतत्सूत्रादेवं ज्ञायते सोमयागार्थमेव वृता ऋत्विजोऽर्घ्या नेतरयागार्थमिति यक्ष्यमाणास्त्वृत्विज इत्येनेनैव यागार्थत्वात्सोमेन यक्ष्यमाणा एवार्घ्या इति नियमविधानार्थं पृथगारम्भः । ननु "वसन्ते ज्योतिषा यजेत"इत्येकस्मिन्संवत्सर एक एव सोमयागः प्राप्तस्तत्कथमुच्यते असकृत्संवत्सरस्य सोमेन यजतेति ? सत्यम्, उच्यते—यद्यपि नित्यः सोमयागः सकृदेवानुष्ठातव्यस्तथापि कामनया चोदितानां पुनः पुनरनुष्ठानानि सम्भवन्त्येव द्वादशाहादीनाम् । यद्वा नित्यो वाजपेयस्तस्यानुष्ठानं तदङ्गभूतानां यज्ञानामनुष्ठानं भवति । तस्मात्साधूक्तमसकृत्संवत्सरस्य सोमेन यजेतेति । अत्र वराय गन्धमाल्यादिकमपि देयमित्युक्तं भगवता शौनकेन—

दाताऽथ गन्धमाल्याद्यैर्विधितोऽभ्यर्चयेद्वरम् ।
पश्चात्तेन सहायांस्तद्बन्धूनपि पूजयेत् ॥ इति ॥

आदिशब्दाद्भूषणमपि, तथा च कारिकायाम्—

गन्धमाल्याम्बरैस्तद्वद्भूषणैः पूजयेद्वरम् । इति ।

भूषणैः कुण्डलमुद्रिकादिभिर्यज्ञोपवीतमपि शिष्टाचाराद्देयम् । रेणुकारिकायामपि—

उत्सर्जनान्ते स वराय वाससी दद्यात्सुगन्धः कुसुमानि चेष्टकौ ॥
धत्ते स सर्वं विधिवत्क्रमाद्वरः संस्थापयेल्लौकिकमग्निमुद्धतः ॥ इति ॥

अयञ्च मधुपर्को वरशाखानुसारेण कर्तव्यः । तथा च वीरमित्रोदये गृह्यपरिशिष्टान्तरम्—

वरस्य या भवेच्छाखा तच्छाखागृह्यचोदितः ।
मधुपर्कः प्रदातव्योऽप्यन्यशाखेऽपि दातरि ॥ इति ।

वर इत्यर्हणीयमात्रोपलक्षणं मधुपर्काम्नानात् । स चर्त्विजां यच्छाखीयमार्त्विज्यं तच्छाखीयगृह्यानुसारेण कार्य्यः, आर्त्विज्यशाखीयमधुपर्कसंस्कृतस्यैव तत्तदार्त्विज्याधिकारात् तत्तच्छाखीयोपनयनसंस्कृतस्यैव

तत्तच्छाखाध्ययनाधिकारवत् । याज्ञिकास्तु अर्च्यस्य यच्छाखीयं कर्म तच्छाखीयो मधुपर्क इति वदन्ति । तथा गदाधरभाष्ये जगन्नाथकारिका—

तत्तद्गृह्योक्तविधिना विष्टराद्यर्हणं ततः ॥ इति ।

यजमानशाखयैव मधुपर्क इति जयन्तः । धर्मप्रवृत्तौ अन्यशाखिने कन्यादानविषयेऽपि—

स्वशाखी चेद्वरो न स्यात्कस्मै देया तु कन्यका ।
स्वगृह्योक्तविधानेन दद्यात्तां परशाखिने ॥
पूजयेन्मधुपर्केण स्वशाखाविधिना वरम् ।
आकन्यादानपर्यन्तं पिता कुर्यात्स्वशाखतः ॥ इति ।

तत्तु कैरपि नादृतम् ।

इति श्री प्रथमशाखीयरामकृष्णविरचिते पारस्करगृह्यसूत्रविवरणे संस्कारगणपतौ तृतीया कण्डिका ॥



## चतुर्थी कण्डिका

चत्वारः पाकयज्ञा हुतोऽहुतः प्रहुतः प्राशित इति पञ्चसु बहिःशालायां विवाहे चूडाकरण उपनयने केशान्ते सीमन्तोन्नयन इत्युपलिप्त उद्धतावोक्षितेऽग्निमुपसमाधाय निर्मन्थ्यमेके विवाहे उदगयन आपूर्यमाणपक्षे पुण्याहे कुमार्याः पाणिङ्गृह्णीयात्त्रिषु त्रिषूत्तरादिषु स्वातौ मृगशिरसि रोहिण्यां वा तिस्रो ब्राह्मणस्य वर्णानुपूर्व्येण द्वे राजन्यस्यैका वैश्यस्य सर्व्वेषाᳬंशूद्राणामप्येके मन्त्रवर्जमथैनां वासः परिधापयति "जरां गच्छ परिधत्स्व वासो भवाकृष्टीनामभिशस्तिपावा ॥ शतञ्च जीव शरदः सुवर्चा रयिञ्च पुत्राननु संव्ययस्वायुष्मतीदं परिधत्स्व वास" इति, अथोत्तरीयं 'या अकृन्तन्नवयं या अतन्वत ॥ याश्च देवीस्तन्तूनभितो ततन्थ तास्त्वा देवी-

जरसे संव्ययस्वायुष्मतीदं परिधत्स्व वास' इति, अथैनौ समञ्जयति 'समञ्जन्तु विश्वे देवाः समापो हृदयानि नौ ॥ सम्मातरिश्वा सन्धाता समुदेष्ट्री दधातु नावि'ति, पित्रा प्रत्तामादाय गृहीत्वा निष्क्रामति 'यदैषि मनसा दूरं दिशोऽनु पवमानो वा ॥ हिरण्यपर्णो वैकर्णः स त्वा मन्मनसां करोत्वि'ति, अथैनौ समीक्षय'त्यघोरचक्षुरपति-घ्न्येधि शिवा पशुभ्यः सुमनाः सुवर्चाः ॥ वीरसूर्देवकामा स्योना शन्नो भव द्विपदे शञ्चतुष्पदे ॥ सोमः प्रथमो विविदे गन्धर्वो विविद उत्तरः ॥ तृतीयोऽग्निष्टे पतिस्तुरीयस्ते मनुष्यजाः ॥ सोमोऽददद्गन्धर्वाय गन्धर्वो ददद-ग्नये ॥ रयिञ्च पुत्रांश्चादादग्निर्मह्यमथो इमाम् ॥ सा नः पूषा शिवतमामैरय सा न ऊरू उशती विहर ॥ यस्यामुशन्तः प्रहराम शेपं यस्यामु कामा बहवो निविष्ट्या' इति ॥४॥

"चत्वारः पाकयज्ञाः" इति सूत्रम् । पच्यते श्रप्यते ओदनादिकं यस्मिन्निति पाको गृह्याग्निः तस्मिन्पाके नान्यत्रेति भावः । पाके यज्ञाः पाकयज्ञाः । यतः—

वैवाहिकेऽग्नौ कुर्वीत गार्ह्यं कर्म यथाविधि ।
पञ्चयज्ञविधानं च पक्तिं चान्वाहिकीं गृही ॥

इति मनुना दैनन्दिनपाको गृह्येऽग्नौ स्मर्यते । ते चत्वारः चतुर्विधा भवन्ति । कथं ? "हुतोऽहुतः प्रहुतः प्राशित" इति सूत्रम् । तत्र हुतः होममात्रं यथा सायम्प्रातर्होमः । अहुतः होमबलिरहितं कर्म यथा स्रस्तररोहणम् । प्रहुतो यत्र होमो बलिकर्म भक्षणं च यथा पक्षादिकर्म । प्राशितः यत्र प्राशनमात्रं न होमो न बलिः यथा सर्वासां पयसि पायस-श्रपणानन्तरं ब्राह्मणभोजनम् । इत्थं चतुर्विधाः पाकयज्ञाः । अथ मण्डपे कानि कर्माणि कार्याणि तान्याह—"पञ्चसु बहिःशालायां विवाहे चूडाकरण उपनयने केशान्ते सीमन्तोन्नयने" इति सूत्रम् । विवाहादिषु पञ्चसु कर्मसु गृहाद्बहिः शालायां कर्म भवति । बहिःशाला मण्डप इति

यावत् । तस्यां कर्म भवति । अन्यत्र कर्मणि गृहाभ्यन्तरे मुख्यशालाया-मेव । विवाह इति कर्मणो नामधेयम् । स च सर्वाश्रमाणामुपकारक-त्वान्मुख्यः । तदुक्तं नारदेन—

सर्वाश्रमाणामाश्रेयं गृहस्थाश्रममुत्तमम् ।
यतस्तदपि योषायां शीलवत्यां स्थितं ततः ॥

तथा च दक्षः—

जपे होमे तथा दाने स्वाध्याये च रतः सदा ।
नासौ तत्फलमाप्नोति ह्याश्रमेण बहिष्कृतः ॥
समावर्तनपूर्वन्तु लक्षण्यां स्त्रियमुद्वहेत् ॥ इति ।

ज्योतिस्तिलके—

रत्नहेमाद्यलङ्कारा भोगा मृगमदादयः ।
व्यर्थाः सर्वे न राजन्ते हर्म्याणि स्त्रियमन्तरा ॥

विवाहस्तु पञ्चाङ्गः—

वाग्दानं च प्रदानं च वरणं पाणिपीडनम् ।
सप्तपदीति पञ्चाङ्गो विवाहः परिकीर्त्तितः ॥

तत्र वाग्दानात्पूर्वकर्तव्यतामाह ज्योतिर्निबन्धे—

सापिण्ड्यं गोत्रशुद्धिं च शीलसामुद्रिकाणि च ।
जातकादिभमेलं च वीक्ष्यं वाग्दानतः पुरा ॥

याज्ञवल्क्यः—

अनन्यपूर्विकां कान्तामसपिण्डां यवीयसीम् ।
अरोगिणीं भ्रातृमतीमसमानार्षगोत्रजाम् ॥ इति ।

अस्यार्थः—या दानेनोपभोगेन वा पुरुषान्तरपूर्विका न भवति साऽनन्य-पूर्विका भवति । अनेन पुनर्भ्वो व्यावर्त्तन्ते । ताश्चोक्ताः काश्यपेन—

सप्त पौनर्भवाः कन्या वर्जयित्वा कुलाधमाः ।
वाचा दत्ता मनोदत्ता कृतकौतुकमङ्गला ॥
उदकस्पर्शिता या च या च पाणिगृहीतका ।
अग्निं परिगता या च पुनर्भूः प्रसवाय च ॥

इत्येताः काश्यपेनोक्ता दहन्ति कुलमग्निवत् ॥

बौधायनसूत्रेऽपि "वाचा दत्ता मनोदत्ताऽग्निं परिगता सप्तमं पदं नीता भुक्ता गृहीतगर्भा प्रसूता चेति सप्तविधा पुनर्भूस्तां गृहीत्वा न प्रजां न धर्मं विन्देते"ति । वरचक्षुर्मनसोराह्लादकरी कान्ता । समान एकः पिण्डो यस्याः सा सपिण्डा तादृशी न भवतीत्यसपिण्डा । सपिण्डता च सप्तपुरुषावसायिनी । तत्रैकः पिण्डदाता, त्रयः पिण्डभाजः पितृपितामहप्रपितामहाः, त्रयो लेपभाजः वृद्धप्रपितामहादयस्त्रयः । तथा च विधानपारिजातके मात्स्यः--

लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः ।
पिण्डदः सप्तमस्तेषां सापिण्ड्यं साप्तपौरुषम् ॥

सप्तपुरुषमभिव्याप्येत्यर्थः । अपरे पुनरवयवसापिण्ड्यमाहुः । तथा हि समान एकः पिण्डो देहावयवो येषान्ते सपिण्डाः । तत्र पुत्रस्य साक्षात्पितृदेहावयवान्वयेन पित्रा सह सापिण्ड्यम् । तथाऽपि पितामहादिभिरपि पितृद्वारेण तच्छरीरावयवान्वयात् । तथा मातृष्वसृमातुलादिभिरपि मातामहदेहान्वयात् । तथा पितृव्यपितृष्वस्रादिभिरपि पितामहदेहान्वयात् । तथा पत्या सह एकशरीरारम्भकतया स्त्रियाः । एवं भ्रातृभार्याणामप्येकशरीरावयवारब्धैः स्वपतिभिः सहैकशरीरारम्भकत्वेन । एवं च साक्षात्परम्परया वा एकशरीरावयवान्वयेन सापिण्ड्यं योजनीयम् । उक्तद्विविधसापिण्ड्यं यस्यां नास्ति सेयमसपिण्डा । नन्वेवं सति न क्वाप्युद्वाहः सम्भवति । सर्वत्र सापिण्ड्यस्य कथञ्चिद्योजयितुं शक्यत्वात् विधातृशरीरावयवानुवृत्तेर्दुष्परिहरत्वात् । "बहु स्यां प्रजायेये"ति श्रुतेरिति चेत्? सत्यम् । अविशेषेण प्राप्तस्य सापिण्ड्यस्य सप्तसु पुरुषेषु सङ्कुचितत्वेन तत ऊर्ध्वं सापिण्ड्यनिवृत्तिः । तथाहि याज्ञवल्क्यः--

पञ्चमात्सप्तमादूर्ध्वं मातृतः पितृतस्तथा । इति ।

मातृपक्षे पञ्चमात्पुरुषात् पितृपक्षे सप्तमात्पुरुषादूर्ध्वं सापिण्ड्यं निवर्तत इति शेषः । तथा च देवलः--

पञ्चमात्सप्तमादूर्ध्वं मातृतः पितृतः क्रमात् ।

सपिण्डता निवर्त्तेत सर्ववर्णेष्वयं विधिः ॥ इति ।

कूटस्थमारभ्य गणना । तदुक्तं प्रयोगरत्ने—

वध्वा वरस्य वा तातः कूटस्थाद्यदि सप्तमः ।

पञ्चमी च तयोर्माता तत्सापिण्ड्यं निवर्तते ॥

कूटस्थो मूलपुरुषो यतः सन्तानभेदकः । इति ।

एवं च मातृपितृद्वारकसापिण्ड्यवर्तीनां कन्यानामियं सङ्कलना । बृहद्विष्णुः—

सप्तमात्पञ्चमाद्वा यः कन्यकामुद्वहेद्द्विजः ।

गुरुतल्पी स विज्ञेयः सगोत्रामपि चोद्वहन् ॥ इति ।

विधानपरिजातके मरीचिः—

पञ्चमे सप्तमे चैव येषां वैवाहिकी क्रिया ।

क्रियापरा अपि हि ते विज्ञेयाः शूद्रतां गताः ॥ इति ।

धर्मप्रवृत्तावाचार्यः—

सापिण्ड्यं मुनिभिः प्रोक्तं मातृतः पितृतः क्रमात् ।

तत्सापिण्ड्यं विजानीयान्नर्मदोत्तरवासिनाम् ॥ इति ।

चतुर्विंशतिमते—

दशभिः पुरुषैः ख्याताच्छ्रोत्रियाणां महाकुलात् ।

उद्वहेत्सप्तमादूर्ध्वं तदभावे तु सप्तमीम् ॥

पञ्चमीं तदभावे तु पितृपक्षे त्वयं विधिः ।

सप्तमी च तथा षष्ठी पञ्चमी च तथैव च ॥

एवमुद्वाहयेत्कन्यां न दोषः शाकटायनः ।

स्मृतिचन्द्रिकायाम्—

मूलगोत्रादन्यगोत्रामुद्वहेदष्टमोऽष्टमीम् ।

अन्यगोत्रादन्यगोत्रात्षष्ठः षष्ठीं समुद्वहेत् ॥

तृतीयां वा चतुर्थीं वा पक्षयोरुभयोरपि ।

उद्वहेत्सर्वथाऽलाभ इति कैश्चिदुदीरितम् ॥

असपिण्डा च या मातुरसगोत्रा च या पितुः ।

सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने ॥

अथ विजातीयसपिण्ड्यनिर्णयः । तत्र शङ्खः—

यद्येकजाता बहवः पृथक्क्षेत्राः पृथक्जनाः ।
एकपिण्डाः पृथक्शौचाः पिण्डस्त्वावर्त्तते त्रिषु ॥ इति ।

अस्यार्थः । एकजाता एकस्माद्ब्राह्मणादेर्जाताः पृथक्क्षेत्राः परस्परं भिन्नजातीयासु ब्राह्मणीक्षत्रियावैश्याशूद्रासु स्त्रीषु जाताः पृथक्जनाः, भर्त्रपेक्षया भिन्नजातीयासु परस्परं समानजातीयासु स्त्रीषु जातास्त एकपिण्डाः सपिण्डाः, पृथक्शौचाः पितृजात्यपेक्षया विजातीयाशौचाः । पिण्डस्त्वावर्तते त्रिषु तेषां सापिण्ड्यं त्रिपुरुषमेवेत्यर्थः । ब्रह्मपुराणेऽपि—

सपिण्डता तु पुरुषे सप्तमे विनिवर्तते ।
सजातीयेषु वर्णेषु चतुर्थे भिन्नजातिषु ॥

अथ मातुलकन्यापरिणयननिर्णयः । तत्र तदनुष्ठातारः श्रुतिस्मृतिपुराणेतिहासशिष्टाचारान् प्रमाणानि प्रदर्शयन्ति । तत्र ऋग्वेदश्रुतिः—"आयाहीन्द्र? पथिभिरीळितेभिर्यज्ञमिमन्नो भागधेयं जुषस्व । तृप्तां जहुर्मातुलस्येव योषा भागस्ते पैतृष्वसेयी वपामिवे"ति । अस्यार्थः—हे इन्द्र ईळितेभिः पथिभिः स्तुतैर्मार्गैर्नोऽस्माकं अस्माभिरनुष्ठीयमानमिमं यज्ञमायाहि आगच्छ । आगत्य च स्वीयं भागधेयं जुषस्व 'जुषी प्रीतिसेवनयोः' प्रीतिपूर्वकं गृह्णीष्व । कोऽसौ भागधेय इत्यत आह वपाम् । तृप्तामाज्यादिभिः संस्कृतां वपां यजमानाध्वर्युप्रभृतयो जहुस्त्यक्तवन्तः । तत्र दृष्टान्तद्वयमवतारयति—मातुलस्येव योषेति पैतृष्वसेयी वेति च । अत्र मातुलशब्दस्य सम्बन्धिशब्दत्वात्सम्बन्धी भागिनेय उपतिष्ठते । ततश्च मातुलस्य योषा मातुलकन्या, न पत्नी, पैतृष्वसेय्या अनन्वयापत्तेः । यथा भागिनेयस्य भागः भजनीया परिणेतुं योग्येति यावत् । यथा च पैतृष्वसेयी योषा पितृष्वसुर्दुहिता । अर्थान्मातुलपुत्रस्य भागस्तथेयं च, या तव भागधेयम् । तथा श्रुत्यन्तरमपि—"गर्भे तु नौ जनिता दम्पती कर्देवस्त्वष्टा सविता विश्वरूपः । न किरस्य प्रमिनन्ति व्रतानि वेद नावस्य पृथिवी उत द्यौरिति" अस्यार्थः—त्वष्टा रूपाणां कर्ता

सविता सर्वेषां शुभाशुभस्य प्रेरकः विश्वरूपः सर्वात्मकः देवो दानादिगु- णयुक्तः नौ आवयोः भ्रातृभगिन्योर्गर्भे जनितारौ कन्यापुत्रौ दम्पती जा- यापती कः करिष्यतीत्यर्थः । अत्र हेतुमाह-अस्य प्रजापतेः व्रतानि कर्माणि न किः प्रमिनन्ति न केचित्प्रहिंसन्ति न लोपयन्तीत्यर्थः । अपि च नौ आवयोः अस्य प्रजापतेः कर्तव्यदम्पतीजनकत्वं पृथिवी भूलोकः द्यौः स्वर्लोकश्च न वेद न जानातीत्यर्थः । एतेनापि भ्रातृभगिन्यपत्ययो- र्विवाहयोग्यता सिद्ध्यति । वाजसनेयकेऽपि शतपथब्राह्मणे "तस्मात्स- मानादेव पुरुषादत्ता चाद्यश्च जायते तृतीये पुरुषे सङ्गच्छावहै चतुर्थे सङ्गच्छावहा इति" हवनकाण्डे अष्टमाध्याये समाम्नातम् । अ- स्यार्थः--तस्मादित्युक्तमर्थं दृष्टान्तेनोपसंहरति--समानादेकस्मात्पुरुषात् कूटस्थात् अत्ता भोक्ता आद्यो भोग्यश्च जायते । 'अद भक्षण' इति धातुः । तौ द्वावुत्पद्येते उत्पद्य चैव मिथः सङ्कल्पयतः कूटस्थमारभ्य तृतीये पुरुषे आवां सङ्गच्छावहै विवहावहै ? उत चतुर्थपुरुषे सङ्गच्छावहा इति। यद्यप्येते मन्त्रार्थवादाः । तथापि मानान्तरविरोधाभावात्स्वार्थे प्रमाणम् । विरुद्धवचनानां मातृसपिण्डविषयत्वस्योपवर्णितत्वात् । तस्माच्छ्रुत्यनु- गृहीतोऽयं विवाहः । अत एव एतच्छ्रुतिमूलका स्मृतिरिति षट्त्रिंशन्मते प्रत्यक्षमेव विधिर्दर्शयति--

तृतीयां मातृतः कन्यां तृतीयां पितृतस्तथा ।
उद्वाहयेन्मनुः प्राह पाराशर्योऽङ्गिरा यमः ॥ इति ।

पुराणे श्रीमहाभागवते--

यद्यप्यनुस्मरन्वैरं रुक्मी कृष्णावमानितः ।
व्यतरद्भागिनेयाय सुतां कुर्वन्स्वसुः प्रियम् ॥
वृतः स्वयंवरे साक्षादनङ्गोऽङ्गयुतस्तथा ।
राज्ञः समेतान्निर्जित्य जहारैकरथो युधि ॥ इति ।

तथा तत्रैव--

दौहित्रायानुरुद्धाय गौरीं रुक्मी ददद्धरेः ।
रोचनां बद्धवैरोऽपि स्वसुः प्रियचिकीर्षया ॥

जानन्नधर्मन्तं यौनं स्नेहपाशानुबन्धतः ।

रोचनां रोचनामिवेति उत्प्रेक्षा । तं यौनं दौहित्राय पौत्रीदानलक्षणः सम्बन्धः । इतिहासेऽपि महाभारते—

अर्जुनस्तीर्थयात्रायां पर्यटन्नवनीं प्रभुः ।
गतः प्रभासमशृणोन्मातुलेयीं स आत्मनः ॥
तत्र च क्रममाणौ तौ वसुदेवसुतां शुभाम् ।
स्वलङ्कृतां सखीमध्ये भद्रां ददृशतुस्तदा ॥
ममैषा भगिनी पार्थ ? सारणस्य सहोदरा ।
सुभद्रा नाम भद्रं ते पितुर्मे दयिता शुभा ॥
दुहिता वसुदेवस्य वासुदेवस्य च स्वसा ।
रूपेण चैव सम्पन्ना कमिवैषा न मोहयेत् ॥
कृतमेव तु कल्याणं सर्वं मम भवेद्ध्रुवम् ।
यदि स्यान्मम वार्ष्णेयी महिषीयं स्वसा तव ॥
अतः प्रचिन्त्य कल्याणीं प्रसह्य भगिनीं मम ।
हर स्वयंवरे ह्यस्याः को वै वेद चिकीर्षितम् ॥
ततः सुभद्रा सौभद्रं केशवस्य स्वसा प्रिया ।
जयन्तमिव पौलोमी द्युतिमन्तमजीजनत् ॥ इत्यादि ।

शातातपोऽपि—

मातृष्वसृसुतां केचित्पितृष्वसृसुतां तथा ।
विवाहन्ति क्वचिद्देशे सङ्कोच्यापि सपिण्डताम् ॥ इति ।

धर्मप्रवृत्तौ—

दक्षिणे तूद्वहेत्कन्यां स्वसारं मातरं विना ।

बृहस्पतिः—

उद्वह्यते दाक्षिणात्यैर्मातुलस्य सुता द्विजैः ।
सापिण्ड्यमपि सङ्कोच्य प्रत्यक्षश्रुतिदर्शनात् ॥ इति ।

श्रुति'रायाहीन्द्रे'त्यादिरुक्तैव । व्याघ्रपादः—

उद्वहेद्दक्षिणे विद्वान्मातुलस्य तु वै सुताम् ।

उत्तरे नोद्वहेद्विप्रो ह्येष धर्मः सनातनः ॥

तस्मात्सिद्धं मातुलकन्या-पितृष्वसृकन्या-परिणयनम् । इदं च यस्मिन्देशेऽविगीतं तद्देशीयैरेव कार्यम् । तदुक्तं नृसिंहसपर्यायां बौधायनेन-पञ्चधा विप्रतिपत्तिर्दक्षिणतस्तथोत्तरतो या दक्षिणतस्तानि व्याख्यास्यामो यथैतदनुपनीतेन सह भोजनं स्त्रिया सह भोजनं पर्युषितभोजनं मातुलपितृष्वसृदुहितृगमनमिति, अथोत्तरत ऊर्णाविक्रयः सिन्धुपारमुभयतो दद्भिर्व्यवहार आयुधीयकं समुद्रयान"मिति । देशाचारो यथा दक्षिणे देशेऽनुपनीतेन भार्यया च सह भोजनं पर्युषितभोजनं मातुलकन्यापितृस्वसृकन्यापरिणयनम् । तथोत्तरदेशे सिन्धुपारगमनमुभयतो दद्भिर्व्यवहार ऊर्णाविक्रय आयुधविक्रयः समुद्रयानम् । मध्यदेशे द्विजाः कर्मकराः शिल्पिनः । पूर्वदेशे मत्स्यादाः स्त्रियो व्यभिचारिण्यः रजस्वलाः स्पृश्या इत्यादयः । स्वदेशे धर्मा अन्यत्राधर्माः । दाक्षिणदेशीयं कर्म उत्तरदेश उत्तरदेशीयं कर्म दाक्षिणदेशे कुर्वन्दुष्यति न स्वदेशे । तथा च मनुः —

येनास्य पितरो याता येन याताः पितामहाः ।
तेन यायात्सतां मार्गं तेन गच्छन्न दुष्यति ॥

केचिन्मातुलकन्यापरिणयनं कलौ निषिद्धम्—

गोत्रान्मातृसापिण्डात्तु विवाहो गोवधस्तथा ॥

इति विधानपरिजातके माधवोदाहृतब्रह्मपुराणवचनादित्याहुः । तदेतदपरे न क्षमन्ते, तस्य माध्यन्दिनीयविषयत्वात् । तथा च सत्याषाढीवचनम्-"मातृगोत्रसापिण्ड्यवर्जनं मध्यन्दिनीयाना"मिति । अन्यत्रापि—

मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च ।
समानप्रवरामूढ्वा परित्याज्य प्रपालयेत् ॥

उपभोगादिना त्याज्या न तु अन्नवस्त्रादिना । अथ विरुद्धसम्बन्धाः । तत्र गृह्यपरिशिष्टम्-"अविरुद्धसम्बन्धामुपगच्छेते'त्युपक्रम्य' दम्पत्योर्मिथः पितृमातृसाम्ये विरुद्धसम्बन्धः" । यथा भार्यास्वसुर्दु-

हिता पितृव्यपत्नीस्वसा चेति । पितृमातृसाम्यमित्युपलक्षणम् , तेन भ्रातृभगिनीसाम्ये स्नुषाश्वशुरादिसाम्येऽपि नोद्वाहः, विरुद्धसम्बन्धाऽविशेषात् । तद्यथा पितृव्यपत्नीस्वसुः सुता भगिनीसमा भवति, पितृव्यशालिकायां मातृस्वसृतुल्यत्वात् । तथा स्नुषाभगिन्यपि श्वशुरेण नोद्वाह्या, स्नुषातुल्यत्वात् । एवमन्यत्राप्यूह्यम् ।

अत एव बौधायनः—

मातुः सपत्न्या भगिनीं तत्सुतां चापि वर्जयेत् ।
पितृव्यपत्न्या भगिनीं तत्सुतां चापि वर्जयेत् ॥

धर्मप्रवृत्तावपि—

पितृव्यभार्याभगिनीं च तत्सुतां सापत्नमातुर्भगिनीं च तत्सुताम् ।
नैवोद्वहेत्तां यदि चेत्प्रमादाच्चाण्डालयोनेरपि कारणं भवेत् ॥

प्रयोगपरिजाते नारदः—

प्रत्युद्वाहो नैव कार्यो नैकस्मै दुहितृद्वयम् ।
न चैकजन्ययोः पुंसोर्नैकजन्ये तु कन्यके ॥

तथा च पराशरः—

एकजन्ये तु कन्ये द्वे पुत्रयोर्नैकजन्ययोः ।
न पुत्रीद्वयमेकस्मै प्रदद्यात्तु कथञ्चन ॥

प्रत्युद्वाहः यत्पुत्राय स्वकन्या दीयते तत्कन्या स्वपुत्राय न कार्येत्यर्थः । अथ सापत्नमातृसम्बन्धविचारः—

सापत्नमातृभगिनीं तत्सुतां चापि नोद्वहेत् ।

इति बौधायनोक्तत्वान्न कार्या । तथा च सुमन्तुः—"पितृपत्न्यः सर्वा मातरस्तद्भ्रातरो मातुलास्तद्भगिन्यो मातृष्वसारस्तद्दुहितरश्च भगिन्यस्तदपत्यानि भागिनेयान्यन्यथा सङ्करकारिणः स्यु"रिति । तच्छब्देन द्वितीयमातृपरामर्शः । अत्र परिगणितेष्वेव सापिण्ड्यं न सप्तमादिपर्यन्तम् । एतत्सर्वमेकेन श्लोकेनाह संस्कारनृसिंहे—

भार्यास्वसृसुतां तथैव भगिनीं मातुः सपत्न्यास्तथा
तत्पुत्रीं च पितृव्यदारभगिनीं तत्पुत्रिकां नोद्वहेत् ।

मातृष्वसृसपत्नपुत्रकसुता ज्येष्ठस्य भार्यास्वसा-
नोद्वाह्याऽथ सपत्नमातृविषये त्रैपुरुषं नोद्वहेत् ॥

अथ दत्तके निर्णयमाह--

माता पिता वा दद्यातां यमद्भिः पुत्रमापदि ।
सदृशं प्रीतिसंयुक्तं विज्ञेयो दत्रिमः सुतः ॥

इति पुंस्त्वविशिष्टानुवादेन संज्ञाकरणात्कन्यायाश्च दत्रिमसंज्ञाऽभावात् दत्रिमानुवादेन विधीयमानाऽपि सापिण्ड्यनिवृत्तिर्न कन्याया भवति । नन्वेवं दत्रिमस्य सापिण्ड्यनिवृत्तौ जनककन्यादिपरिणयनं स्यात् ? स्यादेव "यद्यूर्ध्वं सप्तमात्पितृबन्धुभ्यो मातृभ्यः पञ्चमात् बीजिनश्च सप्तमा"दिति वाक्यं न स्यात् । अत्र हि बीजिनो ग्रहणेन दत्रिमस्य च जननकुले सापिण्ड्यमस्त्येवेति ज्ञायते । तथा च गौतमः--

दत्तक्रीतादिपुत्राणां बीजवप्तुः सपिण्डता ।
पञ्चमी सप्तमी मातुर्गोत्रत्वं पालकस्य च ॥ इति ॥

जननीपक्षे पञ्चमी जनकपक्षे सप्तमीत्यर्थः। पालकपक्षे पैठीनसिः "त्रीन्मातृतः पञ्च पितृतः पुरुषानतीत्योद्वहेत्" इति । स्वगोत्रनिवृत्तिस्तु—

स्वगोत्राद्भ्रश्यते नारी विवाहात्सप्तमे पदे ।

इत्यनेन वचनेन न त्वनेनेति । इति दत्तकविचारः । यवीयसीं वयसा वपुषा च न्यूनाम् । वीरमित्रोदये ब्रह्मपुराणे--

यद्यष्टवर्षा कन्या स्यात्तदा तत्त्रिगुणः पुमान् ।
यदि द्वादशवर्षा स्यात्कन्या रूपगुणान्विता ॥
द्वात्रिंशद्वर्षपूर्णेन यदि षोडशवार्षिकी ।
षट्त्रिंशद्वर्षपूर्णेन विवाह्या ह्यन्यथा न हि ॥

अरोगिणीमिति अचिकित्स्यराजयक्ष्मादिरोगरहिताम् । भ्रातृमतीमिति ज्येष्ठः कनिष्ठो वा भ्राता यस्याः सा भ्रातृमती । अनेन पुत्रिकाकरणशङ्का व्युदस्यते । अत एव मनुः--

यस्यास्तु न भवेद्भ्राता न विज्ञायेत वा पिता ।
नोपगच्छेत्तु तां प्राज्ञः पुत्रिकाधर्मशङ्कया ॥ इति ।

यत्र तु नैवाशङ्का तामभ्रातृकामुपगच्छेत्। "अधिरथꣳशतं दुहितृमते दत्त्वोपयच्छेदिति" वक्ष्यमाणगृह्यसूत्रात्। तस्याः परिक्रयाय रथाधिकं गवां शतं ददाति। मनुः—

अपुत्रोऽनेन विधिना सुतां कुर्वीत पुत्रिकाम्।
यदपत्यं भवेदस्यां तन्मम स्यात्स्वधाकरम्॥ इति।

अस्याश्च पुत्रिकाया गान्धर्वादिविवाह इव पित्रादिभि सह सापिण्ड्यसगोत्रत्वनिवृत्तिः।

मातामहस्य गोत्रेण मातुः पिण्डोदकक्रियाम्।
कुर्वीत पुत्रिकापुत्र एवमाह प्रजापतिः॥

इति विधानपरिजाते लौगाक्षिस्मरणात्। अतः कारणाद्भ्रातृमतीमुपगच्छेदिति। अथ क्रमप्राप्तगोत्रनिर्णयो व्याख्यायते—"असमानार्षगोत्रजा"मिति। ऋषेरिदमार्षम्। प्रवरः प्रव्रियन्ते होत्रध्वर्युभ्यां उत्कीर्त्यन्ते इति प्रवराः। उक्तं च गोत्रनिर्णये—

याज्ञिकार्षेयवरणमध्वर्योर्होतुरेव च।
प्रोक्तं तत्कियता कार्यं क्रमेण केन वेति च॥
आकाङ्क्षायां क्रमेणात्र निर्णयः स्पष्ट उच्यते।
एकस्याथ द्वयोर्वाऽपि त्रयाणां वा वृत्तिं चरेत्॥
चतुर्णां च षडादीनां वरणं न समाचरेत्।
सर्वशाखीयहोतृपितृपुत्रादिकाः क्रमात्॥

यत्र गोत्रकृता एकस्य वरणं कृतं तत्र एक एव प्रवरः। द्वयोर्वरणं कृतं तत्र द्वौ प्रवरौ भवतः। त्रयाणां वरणं कृतं त्रिप्रवराः। एवं पञ्च प्रवराः। गोत्रप्रवर्तकस्य मुनेर्व्यावर्तको मुनिगण इत्यर्थः। तद्यथा गोत्रप्रवर्तकस्य भारद्वाजस्य व्यावर्तकावङ्गिराबृहस्पती। अत एव आङ्गिरसबार्हस्पत्यभारद्वाजगोत्रमिति प्रयुञ्जते। एवमन्यत्राप्युदाहार्यम्। गोत्रं तु वंशपरम्पराप्रसिद्धम्। यस्या वध्वा येन वरेण सह प्रवरैक्यं वा नास्ति सा तेन विवाह्या। क्वचिद्गोत्रभेदेऽपि प्रवरैक्यमस्ति। तद्यथा वाधूलमौनमौकानां भिन्नगोत्राणां भार्गव-वैतहव्य-सावेदसेति प्रवरैक्यस्योक्तत्वात्। अतस्तत्र

विवाहप्रसक्तौ तद्व्यवच्छेदायासमानार्षजामित्युक्तम् । क्वचित्तु प्रवरभेदेऽपि गोत्रैक्यमस्ति। तद्यथा आङ्गिरसाम्बरीषयौवनाश्वेति मान्धात्रम्बरीषयौवनाश्वेत्यत्राङ्गिरसमान्धात्रेति प्रवरभेदेऽपि यौवनाश्वगोत्रमेकम् । अतस्तत्र विवाहो माभूदित्यर्थं समानगोत्रग्रहणम् । अत्र विशेषमाह प्रवरसूत्रकारः—

एक एव ऋषिर्यत्र प्रवरेष्वनुवर्तते ।
तावत्समानगोत्रत्वं भृगुमङ्गिरसं विना ॥

तत्र विशेषः स्मृत्यन्तरे—

पञ्चानां त्रिषु सामान्यादविवाहस्त्रिषु द्वयोः ।
भृग्वङ्गिरोगणेष्वेवं शेषेष्वेकोऽपि वारयेत् ॥
भृग्वङ्गिरोगणस्थेऽपि जमदग्नौ च गौतमे ।
भरद्वाजे मिथो ह्येकः पाणिग्राहं निवारयेत् ॥

यथा—

वसिष्ठौ द्वौ च विज्ञेयौ ब्रह्मपुत्रोऽथ शापतः ।
मैत्रावरुणिरित्येव वसिष्ठो विग्रहान्तरात् ॥
ब्रह्मात्मजाच्छक्तिपराशरव्यासशुकादयः ।
ज्ञेयो विवेकस्त्वनयोर्द्वितीयात्कुण्डिनादयः ॥

अत एव भिन्नगोत्रत्वाद्भिन्नशरीरत्वाच्च वसिष्ठवासिष्ठगणयोर्विवाहो भवति । जामदग्न्याविश्वामित्राणां देवरातवर्जं सर्वत्र विवाहः । अत्रिविश्वामित्राणां धनञ्जयवर्जं सर्वत्र विवाह इति । गोत्रप्रवर्तकाश्च प्राधान्येनाष्टौ मुनयः । अगस्त्योऽष्टमः सप्तर्षयः । तथा च बौधायनः—

विश्वामित्रो जमदग्निर्भरद्वाजोऽथ गौतमः ।
अत्रिर्वसिष्ठः कश्यप इत्येते सप्त ऋषयः ॥

सप्तानामृषीणामगस्त्याष्टमानां यदपत्यं तद्गोत्रमित्याचक्षत इति । अत्र प्रवरसंग्रहकारस्त्वष्टादश गणानाह—

जामदग्न्यो१ वीतहव्यो२ वैन्यो३ गृत्समदाह्वयः४ ।
वाध्र्यश्वो ५गौतमाख्यश्च ६भरद्वाजाह्वयः ७कपिः८ ॥
हारीतो ९मौद्गलः काण्वो १०विरूपो ११विष्णुवृद्धकः १२ ।

अत्रि १३विश्वामित्रः १४क्रौंचो १५वसिष्ठः १६कश्यपाह्वयः।१७॥
अगस्त्यश्चेति१८ मुनयो ह्यष्टादश गणाः स्मृताः ।

तत्र जामदग्न्यो विविच्यते—

जामदग्न्यश्च वत्सश्च श्रीवत्सश्च्यवनाह्वयः ।
आप्नवानौर्वसावर्णिर्जीवन्तो देवरातकः ॥
वीतशायनशाखाख्यो वैरोहित्यो वटाह्वयः ।
मण्डः प्राचीनयोग्यः स्यादार्ष्टिषेणस्त्वनूपकः ॥
एतानि भार्गवाख्यानि दश सप्तोत्तराणि च ।
जामदग्न्यगणे तस्मिन्न विवाहः परस्परम् ॥

वीतहव्यः—

वीतहव्यो यास्कमौनमौकवाधूलसंज्ञकाः ।
सावेतसः षडेतानि भार्गवाख्यान्वये गणः ॥
वीतहव्यस्य चान्योन्यं न कार्यं पाणिपीडनम् ॥

वैन्यः—

वैन्यः पार्थश्च गोत्रे द्वे भवतो भार्गवाह्वयः ।
एष वैन्यगणस्तत्र नान्योन्यं च करग्रहः ॥

गृत्समदः—

उभगो वै गृत्समदः शौनको भार्गवाह्वयः ।
गणे गृत्समदे तस्मिन्नान्योन्यं पाणिपीडनम् ॥

वाध्न्यश्वः—

वाध्न्यश्वो मित्रयुक्चैव उभौ भार्गवनामकौ ।
वाध्न्यश्वस्य गणे तस्मिन्नुद्वाहो न परस्परम् ॥
जामदग्न्यादयः पञ्च गणा भृगुगणाः स्मृताः ।
तथाऽप्येषां गणानान्तु विवाहः स्यात्परस्परम् ॥

गौतमः—

गौतमो यास्क औतथ्यः कक्षीवानौशिजस्तथा ।
बृहदुक्थो वामदेवो गोत्रनामानि सप्त च ॥

गौतमस्य गणस्तस्मिन्विवाहो न परस्परम् ॥

भरद्वाजः—

भरद्वाजः कुशङ्काग्निवेश्यौज्जेयमतः कतः ।
शैशिरः पक्षिशुङ्गौ च वन्दनश्च बृहस्पतिः ॥
सर्वस्तम्बः कपिर्मातिर्वचसो गार्ग्यसैन्यकौ ।
भरद्वाजगणः सप्तदश गोत्रमिति स्मृतम् ॥
अस्मिन्परस्परं कार्यं न कन्यापाणिपीडनम् ॥

कपिः—

कपिश्च महदुक्षीय उदीयस्त्रीणि केवलम् ।
अयं कपिगणोऽन्योन्यमस्मिन्न हि करग्रहः ॥

हारीतः—

हारीतो यौवनाश्वश्च मान्धाता कुत्सनामकः ।
पिङ्गलः शङ्खदक्षौ च भौमश्च गजनामकः ॥
अम्बरीषो दशैतानि हारीतस्य गणः स्मृतः ।
तस्मिन्परस्परं पाणिग्रहणं न शुभं मतम् ॥

मौद्गल्यः—

मौद्गल्यतार्क्ष्यभाम्यश्वास्त्रीणि गोत्राण्यमूनि हि ।
मौद्गल्यस्य गणस्तस्मिन्न मिथः पाणिपीडनम् ॥

कण्वः—

कण्वोऽजमीढ इत्येते गोत्रे कण्वगणः स्मृतः ।
तस्मिन्परस्परं पाणिग्रहणं न हि शोभनम् ॥

विरूपः—

विरूपोऽष्टादँष्ट्रिनामा पृषदश्वश्च मौद्गणः ।
चत्वारीमानि गोत्राणि विरूपस्य गणः स्मृतः ॥
परस्परं विवाहोऽस्मिन्न विधेय इतीरितः ॥

विष्णुवृद्धः—

विष्णुवृद्धः पौरकुत्सस्त्रसदस्युः कतस्तथा ।

मद्रणो मद्रणाख्यश्च बादरायणसंज्ञकः ॥
सत्यकाम्यौपमित्यौ च गविः सात्यकितालुकौ ।
नितुन्दश्चेति गोत्राणि त्रयोदश मितानि च ॥
विष्णुवृद्धगणस्तस्मिन्न विवाहः परस्परम् ॥
गौतमादिगणा अष्टौ ये तथाऽङ्गिरसो गणाः ॥
तथाऽप्येषां गणानान्तु विवाहः स्यात्परस्परम् ॥

अत्रिः—

तदेतद्गोत्रनवकमत्रिस्वाप्यर्चनानसः ।
श्यावाश्वो वापरन्ध्रश्च गविष्ठिरधनञ्जयौ ॥
सुमङ्गलोऽतिथिर्बीजवापश्चात्रिगणो ह्ययम् ।
आत्रेयाख्यो विवाहोऽस्मिन्न विधेयो मिथोऽशुभः ॥

विश्वामित्रः—

विश्वामित्रो देवरातो मनुस्तन्तुश्च औलिकिः ।
बालकिश्चकितोलूकौ याज्ञवल्क्यश्च नारदः ॥
बृहदाग्निः कालयवौ शबलीबहुलोहितौ ।
शालङ्कायनचापर्ण्यौ कामकायनपूरणौ ॥
शिलोदनोऽग्निदेवश्च दमनः कौशिकोऽष्टकः ।
आज्यामाधुच्छन्दस्यश्च देवश्रवधनञ्जयौ ॥
शुङ्गः कतः शैशिरश्च वारिधापोऽघमर्षणः ।
सूनुः पनश्च धूम्राख्यो जठरश्चैव हव्यकः ॥
अष्टात्रिंशच्च गोत्राणि विश्वामित्रगणः स्मृतः ।
एतस्मिन्नपि चान्योन्यन्न कुर्यात्पाणिपीडनम् ॥

वासिष्ठः—

वसिष्ठ इन्द्रप्रमदो भरद्वाजस्तु सङ्कृतिः ।
कौण्डिन्यः पूतिमाषश्च गोरीवी तु पराशरः ॥
मैत्रावरुणशक्ती द्वावुपमन्योर्गणः स्मृतः ।
एकादश वशिष्ठस्य गोत्राण्यस्मिन्न दोग्रहः ॥

कश्यपः—

कश्यपो रेभरेभौ च शाण्डिल्यो देवलोऽसितः ।
सङ्कृतिः पूतिमाषश्चावत्सारो नैध्रुवो दश ॥
गोत्राणि काश्यपगणस्तत्रान्योन्यं न दोषहः ॥

अगस्त्यः—

त्रीण्यगस्त्यो वीतवहो दार्ढ्यच्युत इति स्मृतः ।
एषोऽगस्त्यगणस्तस्मिन्न विवाहः परस्परम् ॥
जमदग्निगणस्यापि विश्वामित्रगणस्य च ।
सङ्कृतिपूतिमाषाभ्यां नान्योन्यं पाणिपीडनम् ॥
आत्रेयस्य गणस्यापि विश्वामित्रगणस्य च ।
धनञ्जयाख्यगोत्रेण नान्योन्यं पाणिपीडनम् ॥
भारद्वाजगणस्यापि तथा कपिगणस्य च ।
विवाहो न विधेयः स्यादन्योन्यं च कदाचन ॥
मौद्गलस्य गणस्यापि विरूपस्य गणस्य च ।
परस्परं न कुर्वीत पाणिग्रहणसत्क्रियाम् ॥
आनष्टपो राकुक्षपः स्वानपो राजवारपः ।
सराश्वाहीनजाश्चैव बाहवस्तदनन्तरम् ॥
तथाशा मुनयः प्रोक्ताः सौरन्ध्रो राजसेवकाः ।
खापुंल्लिङ्गाश्च लौगाक्षिस्तथैव शरदम्बकाः ॥
एते त्रयोदश प्रातर्वशिष्ठा निशि कश्यपाः ।
गायत्रीयोनिसम्बन्धावङ्गीकृत्य प्रवर्तकाः ।
अहर्वसिष्ठतां रात्रौ कश्यपत्वमपि स्वयम् ॥
तेषां गोत्रद्वयं मुक्त्वा वसिष्ठं काश्यपं तथा ।
सर्वत्रापि विवाह्याः स्युरिति वेदविदो विदुः ॥

यत्तु स्मृत्यन्तरे—

सावित्रीं यस्य यो दद्यात्तत्कन्यां न विवाहयेत् ।
तद्गोत्रे तत्कुले वाऽपि विवाहो नैव दोषकृत् ॥ इति ।

तत्स्वगोत्राज्ञातृविषयम् । यतः--

गुरोः सगोत्रप्रवरा नोद्वाह्या क्षत्रवैश्ययोः ।
स्वगोत्राद्यनभिज्ञैश्च विप्रैराचार्यगोत्रजा ॥

इति विशेषस्मरणात् । तथा--

द्व्यामुष्यायणका ये स्युर्दत्तकक्रीतकादयः ।
गोत्रद्वयेऽप्यनुद्वाहः शुङ्गशैशिरयोस्तथा ॥
असम्प्रज्ञातबन्धूनामाचार्यप्रवराः स्मृताः ।
पक्षे चास्मिन्विवाहोऽपि सगोत्रैः सह नेष्यते ॥ इति ।

अथ ये सप्रवरां कन्यामुद्वहेयुः तेषां निष्कृतिमाह प्रयोगपारिजाते- "सगोत्रां सप्रवरां कामतः परिणीय प्रजामुत्पाद्य गुरुतल्पव्रतं चरेत् । प्रजां चण्डालेषु निक्षिपेत् । अकामतस्तप्तकृच्छ्रं प्रजाऽनुत्पादे चान्द्रायणं विवाहमात्रे कृच्छ्रं चरेत् । सर्वत्र व्रतान्तेऽष्टोत्तरशतसमिदा होमः । परित्यक्तां जननीवद्रक्षेदिति" । अत्र विश्वादर्शे विशेष उक्तः--

अज्ञानाद्यदि चोद्वाहः प्रायश्चित्तं तथैव च ।
सगोत्रप्रवरायाश्च ततः सङ्ग्रहणे विधिः ॥

विधानपारिजाते--

मोहादुद्वाहे दम्पत्योरेकं चान्द्रायणं स्मृतम् ।
द्विगुणं ज्ञानतस्तत्र परिणीतौ विधीयते ॥
कन्यादातुर्भवेत्कृच्छ्रं ज्ञानतो द्विगुणं भवेत् ।
व्रतस्याकरणासक्तौ प्रत्याम्नायं समाचरेत् ॥
चीर्णव्रतां दुहितरं पिता चीर्णव्रतः शुचिः ।
भारद्वाजेषु विप्रेषु काश्यपेष्वथ वा क्षिपेत् ॥
दुहितृत्वेन संगृह्य भरद्वाजोऽथ कश्यपः ।
घृतकुम्भस्य मार्गे तु तामादध्याद्विधानतः ॥
जातकर्मादियावन्नप्राशनं चौलमेव च ।
विधाय मधुपर्कं च मन्त्रमात्रेण मन्त्रवित् ॥

मुहूर्त्ते विप्रकथिते शुचिन्तामप्यलङ्कृताम् ।
संस्कृतायार्थमानाय पत्ये तु प्रतिपादयेत् ॥
वैवाहिकानथो मन्त्रविशेषानप्यतन्द्रितः ।
स्वगृह्योक्तक्रमेणैव पठेद्धृतवधूकरः ॥
चतुर्थीकर्मपर्यन्तं विधिमेवं समाप्य तु ।
कृताशीर्वचनो विप्रैर्दक्षिणाभिः सुतोषयेत् ॥
प्रणम्य विसृजेदेनान्पश्चाद्भोजयते तथा ।
कृत्वेत्थं पुनरुद्वाहं न किल्बिषमवाप्नुयात् ॥
अन्यथा कुरुते यस्तु सङ्कहं स नराधमः ।
व्रजेत्स्वपितृभिः सार्द्धं नरकानेकविंशतिम् ॥

इति गोत्रप्रवरनिर्णयः ।

अथ क्रमप्राप्तशीलविचारो लिख्यते । यजुर्वल्लभायाम्—

कुलं शीलं वपुर्विद्या वयो वित्तं सनाथता ।
गुणाः सप्त वरे यस्मिँस्तस्मै कन्या प्रदीयते ॥

अथ कुलपरीक्षा ।

यस्य शीलं न जानीयात्स्थानं त्रिपुरुषं कुलम् ।
कन्यादाने तथा श्राद्धे न वृणीयात्कदाचन ॥
ब्राह्मणस्य कुलं ग्राह्यं न वेदाः सपदक्रमाः ।
कन्यादाने तथा श्राद्धे न विद्यात्तत्र कारणम् ॥

वपुः शरीरं तस्य परीक्षा । कात्यायनः—

उन्मत्तः पतितः कुष्ठी षण्ढश्चैव स गोत्रजः ।
चक्षुःश्रोत्रविहीनश्च तथाऽपस्मारदूषितः ॥

कारिकानिबन्धे—

अन्धो मूकः क्रियाहीनश्चापस्मारी नपुंसकः ।
दूरस्थः पतितः कुष्ठी दीर्घरोगी वरो न सन् ॥
नात्यासन्ने नातिदूरे नात्याढ्ये नातिदुर्बले ।

वृत्तिहीने च मूर्खे च षट्सु कन्या न दीयते ॥
मूर्खनिर्धनदुर्गन्धशूरमोक्षाभिलाषिणाम् ।
त्रिगुणाधिकवर्षाणां न देया जातु कन्यका ॥

अथ नपुंसकलक्षणम् ।

यस्याप्सु प्लवते बीजं ह्रादि मूत्रं च फेनिलम् ।
पुमान्स्याल्लक्षणैरेतैर्विपरीतैस्तु षण्ढकः ॥
अपत्यार्थं स्त्रियः सृष्टाः स्त्री क्षेत्रं बीजिनो नराः ।
क्षेत्रं बीजवते देयं नाबीजे क्षेत्रमर्हति ॥
अपरीक्ष्य वरं कन्यां निर्गुणाय ददाति यः ।
कुलं तस्यैव तच्छोकसन्तप्तो विनिकृन्तति ॥

अथ वरगुणाः । अनन्तपाठककारिकायाम्—

विद्याचारविचारवानुपकृतिव्यासक्तचित्तः सदा ।
धैर्योदार्यगभीरतादिगुणवान्सद्वंशजो धर्मकृत् ।
सल्लक्ष्मातिसमृद्धिमान् क्षितितले ख्यातः सतां सम्मतः ।
श्रेयस्तोषकरः शिरोनतिकरः सन्दर्शनीयो वरः ॥
युवा विलासी प्रबलः सुगात्र आजानबाहुश्च कपाटवक्षाः ।
विशालनेत्रो बहुसौकुमार्यः कार्यः कुमारीहृदयप्रभेत्ता ॥
प्रभाणि च—

कन्या वरयते रूपं माता वित्तं पिता श्रुतम् ।
बान्धवाः कुलमिच्छन्ति मिष्टान्नमितरे जनाः ॥
एतैरेव गुणैर्युक्तः सवर्णः श्रोत्रियो वरः ॥ इति ।

अथ कन्याया दूषणानि तत्रैव—

नो कार्या सुमषीमुखी पृथुललज्जिह्वोच्चनासा वधू-
र्लम्बोष्ठी विकटोन्नतद्विजधरी पिङ्गाल्पनेत्राञ्चला ॥
नित्यं निष्ठुरघर्घराऽनृतरवा मालिन्यदैर्घ्यालसा ।
दृष्टा मन्मथपीडितस्य तरसा त्याज्याऽपि थूत्कृत्पणा ॥
शुष्काङ्गी पुरुषाकृतिर्गदपरिक्लिष्टा सरोमा परं

ह्रस्वाऽभ्रातृमती वराधिकसमा व्यङ्गाऽधिकाङ्गा शठा ।
दानाद्वा पुरुषान्तरेण बलतो भुक्ता सगोत्रा तथा
स्यात्तुल्यप्रवरा च या तु जननीगोत्रा सपिण्डा तथा ॥
हीने कुले समुत्पन्ना गुणरूपवती परम् ।
उत्तमेऽपि न कर्तव्या कन्या रोगादिदूषिते ॥

अथ कन्यागुणाः । अनन्तपाठककारिकायाम्—

कार्या पूर्णकचा कलानिधिमुखी स्यात्सूक्ष्मबालाऽबला
बिम्बोष्ठी नवपुण्डरीकनयना हीनार्द्धदन्तावलिः ॥
पुष्टा मञ्जुलभाषिणी कृशकटिस्थाना सुचिह्नाङ्कितै-
र्युक्ता पाणिपदैर्विरागिपुरुस्यान्तःप्रभेत्त्री क्षणात् ॥

विद्यासदाचारविचारकीर्तिमत्कुलप्रसूता चतुरा सुधर्मिणी ।
विलासिनी दर्शनमात्रतो हृदि द्रष्टुश्चमत्कारकरीक्षणैः परम् ॥

ज्योतिर्निबन्धे—

वधूं सुलक्षणोपेतां प्रसन्नास्यां कुलोद्भवाम् ।
कन्यकां वृणुयाद्भूप ! वेणीमध्यगविग्रहाम् ॥

अथ स्त्रीलग्नविचारः । लग्नचन्द्रिकायाम्—

लग्ने च सप्तमे पापं सप्तमे वत्सरे पतिः ।
म्रियते चाष्टमे वर्षे चन्द्रः षष्ठाष्टमो यदि ॥

जातकाभरणे—

सप्तमे दिनपतौ पतिमुक्ता क्षोणिजे च विधवा खलु बाल्ये ।
पापखेचरविलोकनयाते मन्दगे च युवती जरती स्यात् ॥
खलैः कलत्रे च गतालका स्यात्कान्ता विमिश्रैश्च भवेत्पुनर्भूः ।
कलत्रसंस्थेऽविबले कलाख्ये सौम्यैरदृष्टेऽविभुनुर्वियुक्ता ॥

लग्नचन्द्रिकायाम्—

लग्नस्थे सिंहिकापुत्रे रण्डा भवति कन्यका ।
सप्तमे भार्गवे जाता कुलदोषकरी भवेत् ॥

कर्कराशिस्थिते भौमे स्वैरं भ्रमति वेश्मसु ।
लग्नात्सप्तमगः पापश्चन्द्रात्सप्तमगोऽपि वा ॥
सद्यो निहन्ति दम्पत्योरेवं नास्त्यत्र संशयः ।
लग्ने व्यये चतुर्थे च पञ्चमे सप्तमे ग्रहाः ॥
पतिवन्ध्या भवेन्नारी नारीवन्ध्यो भवेत्पतिः ॥

वराहः—

क्रूरेऽष्टमे विधवता निधनेश्वरोंऽशे
यस्य स्थितो वयसि तस्य समे प्रदिष्टा ।
सत्स्वर्थगेषु मरणं स्वयमेव तज्ज्ञाः
कन्यालिगोहरिषु चाल्पसुतत्वमिन्दौ ॥
पापेऽस्ते नवमगतग्रहस्य तुल्यां
प्रव्रज्यां युवतिरुपैत्यसंशयेन ।
उद्वाधे वरणविधौ प्रदानकाले
चिन्तायामपि सकलं विधेयमेतत् ॥

अन्यत्रापि—

लग्ने व्यये च पाताले सप्तमे चाष्टमे कुजे ।
कन्या हरति भर्तारं भर्त्ता हरति कन्यकाम् ॥

चन्द्रिकायाम्—

द्वादशे चाष्टशे भौमे क्रूरे तत्रैव संस्थिते ।
लग्नस्थे सिंहिकापुत्रे रण्डा भवति कन्यका ॥
पापयोरन्तरे लग्ने चन्द्रे वा यदि कन्यका ।
जायते च सदा हन्ति पितृश्वशुरयोः कुलम् ॥
सूर्येऽस्तगे पतित्यक्ता भौमे बाल्येऽधवा भवेत् ।
सर्वैः पापैः स्मृता रण्डा पुनर्भूः शुभमिश्रितैः ॥
शरीरं लग्नचन्द्राभ्यां अष्टमाद्भर्तृनाशनम् ।
स्वामिसौभाग्यते द्यूनात्प्रवासो नवपञ्चमे ॥

अथ बालवैधव्ययोगपरिहारमाह। सप्तमस्थानं स्वस्वामिसौम्यग्रहेक्षितं चेद्भवति तदा भर्तृसुखं भवतीति। तदुक्तं षट्पञ्चाशिकायाम्—

यो यो भावः स्वामिदृष्टो युतो वा
सौम्यैर्वा स्यात्तस्य तस्याभिवृद्धिः॥ इति।

होरामकरन्देऽपि—

मूर्त्तौ तुर्ये४ऽष्टमे भौमे सप्तमेऽन्त्ये च १२ जन्मनि।
भर्तुर्योषिद्विनाशः स्यात्स्त्रियां भर्तुर्विनाशनम्॥
एवं विधे कुजे संस्थे विवाहो न कदा चन।
कार्यो वा गुणबाहुल्ये कुजे वा तादृशे द्वयोः॥

ज्योतिर्निबन्धे—

भौमदुष्टा तु या कन्या भौमदुष्टवराय च।
तत्तद्ग्रहजदोषोत्था तत्तद्ग्रहवराय वै॥

अन्ये स्त्रीणां महत्त्वारिष्टयोगे भर्तुश्च स्वल्पेऽरिष्टयोगे तत्तत्परिहार-माहुः। पुराणान्तरे—

बालवैधव्ययोगेऽपि कुम्भद्रुप्रतिमादिभिः।
कृत्वा लग्नं रहः पश्चात्कन्योद्वाह्येति चापरे॥

प्रभासखण्डे—

सावित्र्यादिव्रतानीह भक्त्या कुर्वन्ति याः स्त्रियः।
सौभाग्यं सुभगत्वं च भवेत्तासां सुसन्ततिः॥

व्रतग्रहणप्रकारस्तु व्रतप्रकाशे ज्ञानभास्करे—

बलवद्विधवायोगे बाल्ये सति मृगीदृशाम्।
पिता रहसि कुर्वीत तद्भङ्गं शास्त्रसम्मतम्॥
सुदिने शुभनक्षत्रे चन्द्रताराबलान्विते।
व्रतारम्भं प्रकुर्वीत बालवैधव्यनाशकम्॥
सुस्नातां चित्रवस्त्राढ्यां कन्यां पितृगृहाद्बहिः।
नीत्वाऽश्वत्थं शमीस्थाने यद्वा बदरिकाश्रमे॥

आलवालं प्रकुर्वीत विपुलं मृदुकर्षितम् ।
कुमार्याचार्यनिर्दिष्टं कृतसङ्कल्पमादरात् ॥
करकाम्बुप्रकीर्णेन सिञ्चनं प्रतिवासरम् ।
चैत्रे चाश्विनमासे च तृतीयासितपक्षतः ॥
यावत्कृष्णतृतीयायां मासमेकं यथाविधि ।
ब्राह्मणानां यथा स्त्रीणां पूजनन्तु समाचरेत् ॥
तदाशिषाऽप्नुयात्कन्या सौभाग्यं च सुखान्वितम् ।
प्रतिमां पार्वतीशार्ङ्गी वैष्णवे भाजनेऽर्चयेत् ॥
चन्दनाक्षतदूर्वाद्यैर्बिल्वपत्रैर्यथाविधि ।
उपचारैर्यथाशक्त्या नैवेद्यैः प्रतिवासरम् ॥
एवं व्रतप्रभावेण बालवैधव्यनिष्कृतिः ।
जायते कन्यकानां च ततः पाणिग्रहक्रिया ॥

इत्यश्वत्थव्रतम् । अन्यमपि वैधव्ययोगपरिहारमाह मार्कण्डेयः--

बालवैधव्ययोगेऽपि कुम्भद्रुप्रतिमादिभिः ।
कृत्वा लग्नं रहः पश्चात्कन्योद्वाह्येऽतिचारके ॥

कुम्भ इति मन्थन्या अपि उपलक्षणम् । द्रुर्वृक्षोऽश्वत्थ एव । प्रतिमा विष्णोः सौवर्णी करशिरोवयवादिसाहिता न शालिग्रामादिरूपा । तत्र कुम्भविवाहः सूर्यारुणसंवादे--

विवाहात्पूर्वकाले तु चन्द्रताराबले शुभे ।
विवाहोक्ते च मन्थन्या कुम्भेन सह चोद्वहेत् ॥
पिता सङ्कल्प्य ब्राह्मं च विवाहं विधिपूर्वकम् ।
सूत्रेणावेष्टयेत्पश्चाद्दशतन्तुं विधानतः ॥
कुम्भमालङ्कृतं देहे तयोरेकान्तमन्दिरे ।
ततः कुम्भं च निःसार्य प्रभञ्ज्य सलिलाशये ॥
ततोऽभिषेचनं कुर्यात्पञ्चपल्लववारिभिः ।
तत्सर्वं वस्त्रपूजाद्यं ब्राह्मणाय निवेद्य च ॥
अन्यालङ्कारवस्त्राद्यं ब्राह्मणाय निवेदयेत् ॥

अथ कुम्भप्रार्थना--

वरुणाङ्गस्वरूप? त्वं जीवनानां समाश्रय? ।
पतिं जीवय कन्यायाश्चिरं पुत्रान् सुखं वरम् ॥
देहि विष्णुवरादेव ? कन्यां पालय दुःखतः ॥

इति कुम्भविवाहः । अथाश्वत्थविवाहोऽपि तत्रैव--

द्विजान् गुरून् सुहृन्नारीमङ्गलोच्चारणैः सह ।
आहूयोद्वाहकाले च रम्यभूमौ सुमण्डपे ॥
गत्वा प्रणम्य गौरीं च गणनाथं च भूरुहम् ।
भवानीं चैव मन्थानीं पिता मन्त्रमुदीरयेत् ॥
उद्वाहयिष्ये विधिवदश्वत्थञ्च मनोहरम् ।
कन्यासौभाग्यसौख्यार्थहेतवेऽहं द्विजोत्तमाः ! ॥

नमस्ते विष्णुरूपाय जगदानन्दहेतवे ।
पितृदेवमनुष्याणामाश्रयाय नमो नमः ॥
वनानां पतये तुभ्यं विष्णुरूपाय भूरुह ! ।
नमो निखिलपापौघनाशनाय नमो नमः ॥
पूर्वजन्मभवं पापं बालवैधव्यकारकम् ।
नाशयाशु सुखं देहि कन्याया मम भूरुह ! ॥

इत्यश्वत्थविवाहसङ्कल्पप्रार्थने । विवाहस्तु कुम्भविवाहवद्विधेयः । एवमेव सौवर्ण्या विष्णुप्रतिमया सह विवाहं विधाय प्रतिमां ब्राह्मणाय दद्यात् । दानप्रकारस्तु तत्रैव —

शुभे मासे सिते पक्षे सानुकूलग्रहे दिने ।
ब्राह्मणं साधुमामन्त्र्य संपूज्य विविधार्हणैः ॥
तस्मै दद्याद्विधानेन विष्णुमूर्त्तिं चतुर्भुजाम् ।
शुद्धवर्णसुवर्णेन वित्तशक्त्याऽथवा पुनः ॥
निर्मितां रुचिरां शङ्खगदाचक्राब्जसंयुताम् ।
दधानां वाससी पीते कुमुदोत्पलशालिनीम् ॥

सदक्षिणां च तां दद्यान्मन्त्रमेतमुदीरयेत् ।
यन्मया पूर्वजनुषि घ्नन्त्या पतिसमागमम् ॥
विषोपविषशस्त्राद्यैर्हतो वाऽतिविरक्तया ।
प्राप्यमाणं महाघोरं यशःसौख्यधनापहम् ॥
वैधव्याद्यतिदुःखौघनाशाय सुखलब्धये ।
बहुसौभाग्यलब्ध्यै च महाविष्णोरिमां तनुम् ।
सौवर्णनिर्मितां शक्त्या तुभ्यं संप्रददे द्विज ! ।
अनघाऽद्याहमस्मीति त्रिवारं प्रवदेदिति ॥
एवमस्त्विति विप्राशीर्गृहीत्वा स्वगृहे विशेत् ।
ततो वैवाहिकं दाता विधिं कुर्यान्मृगीदृशः ॥

इति प्रतिमादानविधिः । पूर्वं घटादिभिः सह विवाहमेकान्ते विधाय पश्चाद्वादित्रघोषपुरःसरं पित्रादिः कन्यामायुष्मते वराय दद्यात् । अत्र पुनर्विवाहात्पुनर्भूदोषो न भवति । तदाह विधानखण्डे—

स्वर्णाम्बुपिप्पलाभां च प्रतिमां विष्णुरूपिणीम् ।
तया सह विवाहे च पुनर्भूत्वं न जायते ॥

अत्राम्बुशब्देन जलपूर्णो घटो लक्ष्यते । चकारात् घटस्यापि ।

लक्ष्मीरूपा सदा कन्या हरिरूपं सदा जलम् ।
हरेर्दत्तं च यद्दानं दातुः पापहरं सदा ॥
लक्ष्मीनारायणप्रीत्यै या दत्ता कन्यका बुधैः ।
तारयेत्सकलं दातुः कुलं पूर्वापरं सदा ॥
चन्द्रवह्न्यम्बुगन्धर्वशिवसोमस्मरा इमे ।
पतयः कन्यकानां च बाल्यात्सन्ति सदैव ते ॥
तदुद्वाहविधिर्यत्नात्कृतो नो जनयेदघम् ।
यथानिर्भुक्तमानानां देवानां पूजनाय वै ॥
अर्हं भवति सर्वत्र तथा कन्या नृणां भवेत् ।

अतो दैवते भोग्यानां कन्यानां पुरुषविवाहे न दोषः । अत एव—

मन्थन्या भास्करो यत्नात्कृतवान् दुहितुर्विधिम् ।

रेणुकोऽपि स्वयं कन्यातद्वाहं चकार सः ॥ इति ।

प्रयोगः । स्नानाचमने कृत्वा कन्या देशकालौ संकीर्त्य मम जन्मसमये ग्रहयोगसूचितं बालवैधव्यनाशककरकाम्बुसेचनमश्वत्थे प्रत्यहमहं करिष्ये । एवं सङ्कल्पं कृत्वा प्रत्यहं मासपर्यन्तं कार्यम् । ततस्ताम्रपात्रे भवानीशङ्करप्रतिमायाः चन्दनाक्षतदूर्वाद्यैर्बिल्वपत्रैर्धूपदीपनैवेद्यैरुपचारैः पूजनं कर्तव्यम् । अनेन बालवैधव्यनिष्कृतिः । इत्यश्वत्थव्रतम् । अथ सुवर्णप्रतिमादानविधिः । सुवर्णशब्दोऽत्र जातिवाची । परिमाणं तु पलं तदर्धमर्धार्धान्यतररूपं दानपरिभाषोक्तं ग्राह्यम् । अथ प्रयोगः । स्नानाचमने कृत्वा कन्या देशकालौ सङ्कीर्त्य "वैधव्यहरं प्रतिमादानमहं करिष्ये" । इति सङ्कल्प्य गणेशपूजनं स्वस्तिवाचनं कृत्वाऽऽचार्यवरणं च कृत्वा यथाशक्ति तं संपूज्य तद्धस्तेन "हिमस्य त्वे" ति मन्त्रेण घृतादिना स्नापयित्वा प्राणप्रतिष्ठां षोडशोपचारैः पूजनं च कारयेत् । वस्त्रार्पणसमये पीते वाससी दापनीये कुसुमार्पणे कुमुदोत्पलमाला । पूजान्ते देवं कन्या प्रणम्य मन्त्रं पठित्वा ब्राह्मणाय दद्यात् । ततः सुवर्णपरिमितं यथाशक्ति वा हेम दक्षिणां दत्वा "अनघाऽद्याहमस्मी"ति त्रिर्वदेत् । "एवमस्त्व"ति ब्राह्मणोऽपि त्रिः । ततो यथाशक्ति ब्राह्मणान् भोजयित्वा विवाहयोग्या भवति । इति वैधव्यहर प्रतिमादानविधिः । अथ कुम्भविवाहविधिः । आसमन्ताच्चन्दनपुष्पादिभिरलङ्कृतं कुम्भं कन्यादेहं च तदुभयसम्बन्धिनि मन्दिरे इति । अथ विवाहकर्ता पित्रादिराचम्य प्राणानायम्य देशकालौ संकीर्त्य "अस्याः मम कन्यायाः अमुकनाम्न्याः वैधव्यहरं कुम्भविवाहं करिष्ये" इति सङ्कल्प्य गणेशपूजापुण्याहवाचनं मातृकापूजनं नान्दीश्राद्धं च कृत्वा वरुणविष्णुप्रतिमयोः प्राणप्रतिष्ठादिसर्वं कृत्वा 'महीद्यौ'रिति भूमिस्पर्शनम् । 'धान्यमसी'ति धान्यम् । 'आजिघ्र'ेति धान्योपरिकलशं निधाय 'वरुणस्योत्तम्भन'मिति जलेनापूर्य 'त्वां गन्धर्वे'ति गन्धप्रक्षेपः । "अक्षन्नमीमदन्ते"ति अक्षताः । "या ओषधी"रिति सर्वौषधीः । काण्डात्काण्डा"दिति दूर्वाः । "स्योना पृथिवीति"-

सप्तमृदः । "परि वाजपति"रिति पञ्च रत्नानि । "याः फलिनी"रिति फलम् । "हिरण्यगर्भ" इति हिरण्यम् । "पयः पृथिव्या"मिति पयः । "दधिक्राव्णे"ति दधि । "घृतम्मिमिक्ष" इति घृतम । "मधु व्वाते"ति मधु । "अपाᳪँरस"मिति शर्कराम् । "युवा सुवासा" इति मन्त्रेण सूत्रेणावेष्ट्य वरुणपूजां विधाय कलशोपरि ताम्रपात्रे स्थापितविष्णुप्रतिमायां विष्णोरावाहनादिषोडशोपचारैः पूजां विधाय प्रार्थयेत् ।

वरुणाङ्गस्वरूप ! त्वं जीवनानां समाश्रय ! ।
पतिं जीवय कन्यायाश्चिरं पुत्रान्सुखं वरम् ॥
देहि विष्णुवरादेव ! कन्यां पालय दुखतः ॥

ततो 'विष्णुरूपिणे कुम्भाय इमां कन्यां श्रीरुपिणीं समर्पयामी'ति समर्प्य "परि त्वा गिर्व्वण" इति मन्त्रेण अधस्तादुपरिष्टाच्च मन्त्रावृत्या कुम्भं कन्यां परिवेष्ट्य ततः कुम्भं निःसार्य सलिलाशये प्रभञ्ज्य पञ्चपल्लवैः शुद्धजलेन "समुद्रज्येष्ठा" इत्यादिमन्त्रैः कन्यामभिषिच्य ब्राह्मणान्भोजयेदिति । इति कुम्भविवाहः ।

यथैव वरसंस्काराचाम्रं काञ्चनतां व्रजेत् ।
तथा दुष्टफला कन्या विमला स्याद्विधानतः ॥

इति श्रीप्रथमशाखीयरामकृष्णविरचिते पारस्करगृह्यसूत्रविवरणे संस्कारगणपतौ वैधव्ययोगपरिहारः ।

**अथ मूलजादीनां फलम्** । ज्योतिर्निबन्धे—

मूलजा श्वशुरं हन्ति सार्पजा च तदङ्गनाम् ।
ज्येष्ठजा तु पतिज्येष्ठं देवरं तु द्विदैवजा ॥
मूलान्त्यपादजौ श्रेष्ठौ तथाऽश्लेषाद्यपादजौ ।
तदन्यपादजौ दुष्टौ तद्वज्ज्येष्ठान्त्यपादजौ ॥
न हन्ति देवरं कन्या तुलामिश्राद्विदैवजा ॥

कश्यपपटले—

प्रत्यग्रजामग्रजं वा हन्ति ज्येष्ठर्क्षजः पुमान् ।
तथा भार्यास्वसारं च श्यालकं वा द्विदैवजः ॥

ज्योतिर्निबन्धे--

मूलव्यालभवो दोषस्तथा हेय उदाहृतः ।
स मौञ्जीबन्धनादूर्ध्वं पुंसां नैवेति केचन ॥
मूले सार्पे विशाखायामैन्द्रभे चोद्भवः पुमान् ।
न दोषकृद्विवाहेषु स्त्रियः सर्वत्र गर्हिताः ॥
भवे भवाधिपं चैव चन्द्रे च वक्षशालिनि ।
उक्तदोषा विनश्यन्ति शुभग्रहयुतेक्षिते ॥

इति मूलजादीनां फलम् । अथ विषकन्यालक्षणं यवनः--

भद्रा २।७।१२ तिथिर्यदाऽश्लेषा विशाखा शततारका ।
मन्दाररविवारेषु विषकन्या प्रजायते ॥
द्वादशी वारुणं सूर्य्ये विशाखा सप्तमी कुजे ।
मन्देऽश्लेषा द्वितीया च विषकन्या प्रजायते ॥

त्रैलोक्यप्रकाशे--

रिपुक्षेत्रस्थितौ द्वौ तु लग्ने यत्र शुभग्रहौ ।
अस्मिन्योगे तु जाता स्त्री सा भवेद्विषकन्यका ॥

इति विषकन्यालक्षणम् ॥ अथ क्रमप्राप्तमेलमाह । उक्तं च--

ज्योतिर्विदं समभ्यर्च्य नक्षत्रे वाऽथ नामनी ।
निवेद्य कन्यावरयोः परिपृच्छेत योग्यताम् ॥
विवाहे सर्वमाङ्गल्ये यात्रादौ ग्रहगोचरे ।
जन्मराशेः प्रधानत्वं नामराशिं न चिन्तयेत् ॥
देशे ग्रामे ग्रहे युद्धे सेवायां व्यवहारके ।
नामराशेः प्रधानत्वं जन्मराशिं न चिन्तयेत् ॥

स्वरशास्त्रे--

प्रसुप्तो येन जागर्ति येनागच्छति शाब्दितः ।
तत्र नामादिमो वर्णो ग्राह्यस्तस्माद्भनिर्णयः ॥
न प्रोक्ता ङञणा वर्णा नामादौ सन्ति ते न हि ।
चेद्भवन्ति तदा ज्ञेया गजडास्ते यथाक्रमम् ॥

ज्योतिःप्रकाशे—

जन्मलग्नात्फलं सर्वमायुर्दायदशादिकम् ।
कीर्त्तितं मुनिभिस्तत्तु समेले नामभं कथम् ॥

विवाहवृन्दावने भमेलमाह—

जन्मलग्नमिदमङ्गमङ्गिनामेति रे मन ! इतीन्दुमन्दिरम् ।
सौहृदं हि मनसोर्न देहयोर्मेलकस्त्वदयमिन्दुगोलयोः ॥
वर्णो वश्यं मिथस्तारा योनिर्ग्रहगणेष्टता ।
राशिकुटं नाड़िकाः स्युरेकाधिकगुणा अमी ॥
कर्कालिमीना विप्राः स्युः क्षत्रियाः सिंहधन्वजाः ।
कन्यागोमकरा वैश्याः शूद्रा युग्मतुलाघटाः ॥
सवर्णोऽधिकवर्णो वा वरः श्रेष्ठः स्त्रियो भवेत् ॥

वर्णैक्यं वरोत्तममुभयत्राप्येको गुणः । हीनवरे गुणाभावः ।

उक्तं च ज्योतिर्निबन्धे-

एको गुणः सदृग्वर्णे तथा वर्णोत्तमे वरे ।
हीनवर्णे वरे शून्ये केऽप्याहुः सदृशे दलम् ॥
नृराशेर्जलजा भक्षा वश्याः सिंहं विनाऽखिलाः ।
सिंहस्य सकला वश्या वर्ज्जयित्वा तु वृश्चिकम् ॥
लोकादन्यद्विदित्वा तु वश्यावश्यं वदेद्बुधः ।
वैरिभक्ष्ये गुणाभावो द्वयोः सख्ये गुणद्वयम् ॥
वश्यवैरे गुणश्चैको वशवश्ये गुणाधिकम् ।
वधूवरर्क्षाद्गणयेदन्योऽन्यर्क्षं ग्रहैर्भजेत् ॥
त्रिपञ्चसप्तशेषे स्यात्तारा दुष्टाऽन्यथा शुभा ।
एकतो लभ्यते तारा शुभा चैवान्यतोऽशुभा ॥
तदा सार्द्धगुणश्चैव ताराशुद्धौ मिथस्त्रयः ॥

नारदः—

अश्वौ शतभिषाऽश्विन्यौ रेवती भरणी गजौ ।
अग्निपुष्यावजौ प्रोक्तौ सर्पौ च मृगरोहिणी ॥

आर्द्रामूले तथा श्वानौ मूषकौ भगपैतृके ।
आदित्याही च मार्जारौ आपो विष्णुश्च मर्कटौ ॥
अहिर्बुध्न्यार्यमे गावौ मित्रज्येष्ठे मृगे तथा ।
वसुप्रोष्ठपदौ सिंहौ हस्तस्वाती च माहिषौ ॥
चित्राविशाखा व्याघ्राख्येऽभिजिद्विश्वे च बभ्रुवौ ॥

अनयोर्वैरम् ।

वैरं स्यादश्वमहिषं श्वमृगं कपिमेषकम् ।
गोव्याघ्रं सर्पनकुलं मूषोतुं मृगराड्गजम् ॥

गजयोः श्वानयोः मार्जारयोः व्याघ्रयोः सिंहयोः एकयोनित्वेऽपि न मित्रत्वम् । शत्रुत्वमेव कलहकारणात् । बृहस्पतिः—

एकयोनिषु सम्पत्त्यै दम्पत्योः सङ्गमः सदा ।
भिन्नयोनिषु मध्यं स्यादरिभावो न चेत्तयोः ॥

गर्गसंहितायाम्—

एकयोनिषु कलहो गजयोः सिंहयोः शुनोः ।
महद्वैरेऽपि समता माहिषस्य कपेस्तथा ॥

इति योनिः ।

अथ ग्रहमैत्री—

सूर्याग्निमित्रं कुजेन्द्वीज्या ज्ञार्कौ सूर्येन्दुसूरयः ।
शुक्रार्कौ कुजचन्द्रार्का ज्ञशनी बुधभार्गवौ ॥
शत्रवः शनिशुक्रौ नो बुधश्चन्द्रो ज्ञभार्गवौ ।
सूर्येन्दू कुजचन्द्रार्काः सूर्याच्छेषाः समा मताः ॥

बृहस्पतिः—

दम्पत्योर्जन्मलग्नाभ्यां यौ ग्रहावधिपौ मतौ ।
तयोः परस्परं मैत्र्ये सर्वसम्पदुपस्थिता ॥
औदासीने मध्यमं स्यादरिभावे न शोभनम् ॥

ज्योतिःप्रकाशे--

राशीशौ सुहृदौ स्यातां जन्मकाले यदा तदा ।
ग्रहवैरेऽपि कर्तव्यं भकूटं मुनयो जगुः ॥

तात्कालिकमैत्रीत्यर्थः । तत्कालमैत्रीप्रकारमाह—

"अन्योन्यस्य धनव्ययाय सहजव्यायार बन्धुस्थि २।१२।११।३।१०।४ ता । तत्काले सुहृदो भवन्ति" इति । एकाधिपतित्वे परस्परमैत्रत्वे पञ्च गुणाः । सममित्रत्वे चत्वारः । उभयसमत्वे त्रयः । मित्रवैरे गुणद्वयम् । समवैरे एको गुणः । परस्परवैरे गुणाभावः ।

इति ग्रहमैत्री । तच्चक्रं प्रदर्श्यते ।

| सू. | चं. | मं. | बु | बृ. | शु. | श. |
|---|---|---|---|---|---|---|
| चं. मं. बृ. | बु. र. | र. चं. बृ. | शु. र. | मं. चं. र. | बु. श. | बु. शु. |
| बु. | मं. बृ. शु. श. | शु. श. | मं. बृ. श. | श. | मं. बृ. | बृ. |
| श. शु. | ० | बु. | चं. | बु. शु. | र. चं. | मं. चं. सू. |

अथ गणमैत्रीविचारः ।

अश्विनीमृगरेवत्यो हस्तपुष्यौ पुनर्वसू ।
अनुराधा श्रुतिः स्वाती कथितो देवतागणः ॥
तिस्रः पूर्वा उत्तराश्च तिस्रोऽप्यार्द्रा च रोहिणी ।
भरणी च मनुष्याख्यो गणश्च कथितो बुधैः ॥
कृत्तिका च मघाऽश्लेषा विशाखा शततारका ।
चित्रा ज्येष्ठा धनिष्ठा च मूलं रक्षोगणः स्मृतः ॥
स्वगणे परमा प्रीतिर्मध्यमा नरदेवयोः ।

नरराक्षसयोर्मृत्युः कलहो देवरक्षसोः ॥

अस्यापवादमाह मनुः--

ग्रहमैत्री च रज्जुश्च यदि नाडी पृथक्तयोः ।
विवाहः शुभदः कन्या राक्षसी वा वरो नरः ॥

वराहः--

सद्भकूटं योनिशुद्धिर्ग्रहमैत्री गुणत्रयम् ।
एष्वेकतमसद्भावे कन्या रक्षोगणा शुभा ॥

गणसादृश्ये सुरमानुषे तत्र षड्गुणाः । देवराक्षसयोर्नरराक्षसयोश्च शून्यम् । स्त्री देवः पुरुषो नरस्तत्र पञ्च गुणाः । पुरुषे रक्षोगणो नारी देवोऽथ वा नरः तत्र एको गुणः । इति गणप्रीतिः ॥ अथ भकूटमाह ।

द्विर्द्वादशं दरिद्रार्थं मृत्यवे च षडष्टकम् ।
नवपञ्चमकं राश्योर्वैपुत्र्याय परं शुभम् ॥

बृहस्पतिः--

पञ्चमनवमे शुभदौ मेषहरी कर्किवृश्चिकौ प्रोक्तौ ।
समसप्तमेऽप्यशुभदौ घटसिंहौ पाणिपीडने कथितौ ॥

दुष्टकूटे परिहारमाह चिन्तामणिटीकायाम्—

विषमात्कन्यकाराशेः षष्ठं षष्ठाष्टकं न सत् ।
समात्षष्ठं शुभं ज्ञेयमष्टषष्ठं शुभं द्वयात् ॥

वसिष्ठः—

द्विर्द्वादशे वा नवपञ्चमे वा षडष्टके राक्षसयोषिता वा ।
एकाधिपत्ये भवनेशमैत्रे शुभाय पाणिग्रहणं विधेयम् ॥

मित्रत्वभावेऽपि विवाहयोग्यषडष्टकमुच्यते । श्रीधरीये—

मेषेण कन्या धनुषा ककुद्मी तौल्यान्तिभिः कुम्भभृता कुलीरः ।
सिंहेन नक्रो नृयुगेन कौर्पिः षष्ठाष्टमे चापि शुभाय योगः ॥

सद्भकूटे सप्त गुणाः । भकूटदोषापवादे चत्वारः । दुष्टभकूटे गुणाभावः ॥ इति राशिकूटम् ॥ अथ नाडीविचारः ।

अश्विन्यार्द्राहस्तमूलज्येष्ठाश्चोत्तरफाल्गुनी ।

पूर्वाभाद्रपदादित्यं शततारार्द्यनाडिका ॥
भरणी मृगपुष्याऽनुराधा चित्रा धनिष्ठिका ।
पूर्वाऽऽषाढोत्तरा भाद्रमध्यमा पूर्वफाल्गुनी ॥
कृत्तिका श्रवणस्वाती विशाखा रेवती मघा ।
अश्लेषा रोहिणी चान्त्योत्तराऽऽषाढासु चेतरा ॥

सा मध्यनाडी पुरुषं निहन्ति तत्पार्श्वनाडी खलु कन्यकान्तु ।
आसन्नपर्यायसमागता चेद्वर्षेण साऽप्यन्तरिता त्रिवर्षैः ॥

नारदः—

चतुस्त्रिद्व्यङ्घ्रिभोत्थायाः कन्यायाः क्रमशोऽश्विभात् ।
वह्निभादिन्दुभान्नाडी त्रिचतुःपञ्चपर्वसु ॥
गणयेत्संख्यया मध्यनाड्यां मृत्युर्न पार्श्वयोः ॥

पारिजाते—

त्रिरेखपक्षे गणयेदुडूनि चत्वारि पक्षे अभिजिद्युतानि ।
उभे समारोह्य च रोहिणी तथाऽवरोहपञ्चाङ्गुलिवर्जितं च ॥

नारदः—

चतुर्नाडी त्वहल्यायां पाञ्चाले पञ्च नाडिकाः ।
त्रिनाडी सर्वदेशेषु वर्जनीया प्रयत्नतः ॥

अस्यापवादः—

नक्षत्रभेदे राश्यैक्ये भैक्ये राशिद्वये सति ।
नक्षत्रैक्ये पादभेदे नाडीदोषादिकं न हि ॥

एकराशौ द्विनक्षत्रे वर्ज्यनक्षत्राण्याह गर्गः—

एकराशौ द्विनक्षत्रे कृत्तिका यस्य तारका ।
धनिष्ठा शततारा च पुष्याऽश्लेषा च वर्जयेत् ॥

एकनक्षत्रयोगे भृगुः—

रोहिण्यार्द्रामघेन्द्राग्नितिष्यश्रवणपौष्णभम् ।
अहिर्बुन्ध्यस्तथाष्टौ च शुभं भवति नान्यथा ॥

एवं द्वितीयविवाहादौ सङ्कीर्णविषयं शौनकः—

वर्गवैरं योनिवैरं गणवैरं नृदूरकम् ।

दुष्टकूटफलं सर्वं ग्रहमैत्र्या विनश्यति ॥

चूडामणौ--

दोषापनुत्तये नाड्या मृत्युञ्जयजपादिकम् ।
विधाय ब्राह्मणांश्चैव तर्पयेत्काञ्चनादिना ॥
हिरण्मयीं दक्षिणां च दद्याद्वर्णादिकूटकैः ।
गावोऽन्नं वसनं हेम सर्वदोषापकारकम् ॥

इति नाडीदोषविचारः समाप्तः ।

अथ पुञ्जी रत्नमालायाम्--

षट् पौष्णतो द्वादश १२ शङ्कराच्च पौरन्दराद्भानि नव क्रमेण ।
पूर्वार्द्धमध्यापरभागयुञ्जि चिरन्तनज्योतिषिकैः स्मृतानि ॥
पूर्वभागयुजि भे पतिः प्रियो योषितामपरभागयोगिनि ।
स्त्री नृणां भवति मध्ययोगिनि प्रेम नूनमुभयोः परस्परम् ॥

अथ वर्गविचारः--

वर्गेशास्तार्क्ष्यमार्ज्जारसिंहश्वसर्पमूषकाः ।
मृगश्च शशकस्तत्र स्ववर्गात्पञ्चमो रिपुः ॥

अथ नृदूरविचारः--

स्त्रीराशेर्वरभं दूरं कन्यादूरं शुभावहम् ।
व्यस्तं नृदूरमशुभमवश्यत्त्वान्नहीष्टदम् ॥
कन्यादूरं शुभं प्रोक्तं वरदूरं न कारयेत् ।
मिथ्यैतद्भाषितं पूर्वैर्ग्रहमैत्र्याऽथ नोऽशुभम् ॥

डामरतन्त्रे--

भामिनीजन्मनक्षत्राद्द्वितीयं पतिजन्मभम् ।
न शुभं कर्तृनाशाय कथितं ब्रह्मयामले ॥

इति भमेलविचारः समाप्तः ॥

अथ कन्याया विवाहकालः । ज्योतिर्निबन्धे--

षडब्दमध्ये नोद्वाह्या कन्या वर्षद्वयं यतः ।

सोमो भुङ्क्ते ततस्तद्वद्गन्धर्वश्च तथाऽनलः ॥

यमः--

सप्तसंवत्सरादूर्ध्वं विवाहः सार्ववर्णिकः ।
कन्यायाः शस्यते राजन्नान्यथा धर्मगर्हितः ॥

ब्रह्माण्डपुराणे--

चतुर्थाद्वत्सरादूर्ध्वं यावन्न दशमात्ययः ।
तावद्विवाहः कन्यायाः पित्रा कार्यः प्रयत्नतः ॥

विवाहपटलेऽपि--

पञ्चमे सुतसुखाऽधिकभाग्या भर्तृभोगरहिता खलु षष्ठे ।
सप्तमे पतिसुतान्विताऽष्टमे रूपशीलसहिता मृगनेत्रा ॥

व्यासः--

अष्टवर्षा भवेद्गौरी नववर्षा च रोहिणी ।
दशवर्षा भवेत्कन्या अत ऊर्ध्वं रजस्वला ॥
गौरीं ददद्ब्रह्मलोकं वैकुण्ठं रोहिणीं ददत् ।
कन्यां ददत् स्वर्गलोकं रौरवं तु रजस्वलाम् ॥

अत्रिबृहस्पती--

व्यञ्जने तु कुलं हन्यात्पितॄन्हन्यात्पयोधरे ।
हन्यादिष्टं च पूर्तं च प्राप्ते रजसि कन्यका ॥
अव्यञ्जनकुचा कन्या कुचहीना तु नग्निका ॥

तथा च संवर्तः--

रोमकाले तु सम्प्राप्ते सोमो भुङ्क्ते तु कन्यकाम् ।
रजःकाले तु गन्धर्वो वह्निस्तु कुचदर्शने ।
तस्मादुद्वाहयेत्कन्यां यावन्नर्तुमती भवेत् ॥

यमपराशरापस्तम्बाः--

प्राप्ते द्वादशमे वर्षे यः कन्यां न प्रयच्छति ।
मासि मासि रजस्तस्याः पिबेत्स ऋतुशोणितम् ॥

अथ ऋतुमतीप्रतिग्रहे दोषमाहतुरत्रिकश्यपौ--

यस्तु तां वरयेत्कन्यां ब्राह्मणो ज्ञानदुर्बलः ।

अश्राद्धेयमपाङ्क्तेयं तं विद्याद्वृषलीपतिम् ॥

बृहस्पतिः--

वृषलीसंगृहीता यो ब्राह्मणो मदमोहितः ।
सूतकं तस्य विज्ञेयं ब्रह्महत्या दिने दिने ॥
पितुर्गृहे तु या कन्या रजः पश्यत्यसंस्कृता ।
सा कन्या वृषली ज्ञेया तत्पतिर्वृषलीपतिः ॥ इति ।

अत्र ब्राह्मणपदोपादानाद्ब्राह्मणस्यैवायं रजस्वलापरिणयननिषेधो न क्षत्रियादीनां कुन्त्यादिषु तथा दर्शनात् । अथ स्वयम्वरः । तत्र नारदः--

यदा तु नैव कश्चित्स्यात्कन्या राजानमाव्रजेत् ।
अनुज्ञया तस्य वरं परीक्ष्य वरयेत्स्वयम् ॥
सवर्णमनुरूपं च कुलरूपवयःश्रुतैः ।
सहधर्मं चरेत्तेन पुत्रांश्चोत्पादयेत्ततः ॥

ततस्तस्माद्वरात् । याज्ञवल्क्यः--

गम्यन्त्वभावे दातॄणां कन्या कुर्यात्स्वयं वरम् ॥

गम्यं कुलशीलादिभिर्गमनार्हम् । मनुरपि--

त्रीणि वर्षाण्युपासीत कुमार्य्यृतुमती सती ।
ऊर्ध्वन्तु कालादेतस्माद्विन्देत सदृशं पतिम् ॥
अदीयमाना भर्त्तारमधिगच्छेत्स्वयं यदा ।
नैनः किञ्चिदवाप्नोति न वा यं साऽधिगच्छति ॥
एवं चोपनता पत्नी नावमान्या कदा चन ।
न च तां बन्धकीं कुर्यान्मनुः स्वायम्भुवोऽब्रवीत् ॥

अथ गुर्वर्कयोर्बलविचारो मुहूर्त्तमुक्तावल्याम्--

विवाहोऽर्केज्यशुद्ध्या स्याद्व्रतं चैवाखिलं विधोः ॥ इति ।

नारदः--

विवाहे बलमावश्यं दम्पत्योर्गुरुसूर्ययोः ।
तत्पूजा बलतः कार्या दुर्बलप्रदयोस्तयोः ॥

गर्गः—

स्त्रीणां गुरुबलं श्रेष्ठं पुरुषाणां रवेर्बलम् ।
द्वयोश्चन्द्रबलं ग्राह्यमिति गर्गेण निश्चितम् ॥

ज्योतिर्निबन्धे—

अर्कगुर्वोबलं गौर्या रोहिण्यर्कबला स्मृता ।
कन्या चन्द्रबला प्रोक्ता वृषली लग्नतो बलात् ॥
रजस्वला यदा कन्या गुरुशुद्धिं न चिन्तयेत् ।
अष्टमेऽपि प्रकर्तव्यो विवाहस्त्रिगुणार्चनात् ॥
जन्मत्रिदशमारिस्थः पूजया शुभदो गुरुः ।
विवाहे च चतुर्थाष्टद्वादशस्थो मृतिप्रदः ॥
द्विपञ्चसप्तनवमे गुरुः श्रेष्ठफलप्रदः ॥

देवलः—

१ नष्टात्मजा २ धनवती ३ विधवा ४ कुशीला
५ पुत्रान्विता ६ हृतधवा ७ सुभगा ८ विपुत्रा ॥
९ स्वामिप्रिया १० विगतपुत्रधवा ११ धनाढ्या
१२ वन्ध्या भवेत्सुरगुरौ क्रमशोऽभिजन्मा ॥

अत्र केचिद्वक्रातिचारेण राश्यन्तरे गुरौ तत्रस्थं फलं न ग्राह्यमिति, तदतीव मन्दम् । तथा चोक्तं चूडारत्ने—

चारातिचारवक्रे च राशौ याति बृहस्पतिः ।
शुद्धिं दद्यात्स तत्रैव विवाहे योषितामपि ॥

अस्यापवादमाह बृहस्पतिः—

झषचापकुलीरस्थो जीवोऽप्यशुभगोचरः ।
अतिशोभनतां दद्याद्विवाहेऽपि नरादिषु ॥

व्यासः—

ग्रहशुद्धिश्चाब्दशुद्धिर्दशवर्षावधिः स्मृता ।
दशवर्षव्यतिक्रान्ता कन्या शुद्धिविवर्जिता ॥

तस्यास्तारेन्दुलग्नाभ्यां शुद्धौ पाणिग्रहो मतः।

अन्यच्च—

सर्वत्रापि शुभं दद्याद्द्वादशाब्दात्परं गुरुः।
शुद्धिर्गोचरणाभिहिता गोचरबलाभावे अष्टवर्गादिबलं ग्राह्यम्।

नारदः—

गोचरं वेधजं चाष्टवर्गजं रूपजं बलम्।
यथोत्तरं बलाधिक्यं स्थूलं गोचरमार्गजम्॥

राजमार्तण्डः—

अष्टवर्गविशुद्धेषु गुरुशीतांशुभानुषु।
व्रतोद्वाहौ तु कर्तव्यौ गोचरेण कदाचन॥

अन्यच्च—

अष्टवर्गेण ये शुद्धास्ते शुद्धाः सर्वकर्मसु।
सूक्ष्माऽष्टवर्गसंशुद्धिः स्थूला शुद्धिस्तु गोचरे॥

चूडारत्ने—

कन्योद्वाहे गुरुदिने गुरुः पूज्यो द्विजातिभिः।
पुत्रोद्वाहे व्रतत्वाच्च शूद्रादिः पूजयेत्क्वचित्॥
केचिदाहुर्गुरोः शुद्धिर्नान्येषां गणकोत्तमाः।
विवाहे ह्यन्त्यजातीनां चण्डालानां च पौल्कसाम्॥
रजकश्चर्मकश्चैव नटो बुरड एव च।
कैवर्त्तभेदाभिल्लाश्च सप्तैते ह्यन्त्यजाः स्मृताः॥

अथ बृहस्पतिशान्तिविधानम्।

कन्योद्वहनकाले तु सानुकूल्यं गुरोर्न चेत्।
ब्राह्मणस्योपनयने गुरोर्विधिरुदाहृतः॥
सौवर्णेन गुरुं कृत्वा पीतवस्त्रेण वेष्टयेत्।
ऐशान्ये धान्यराशौ च कुम्भं तत्र निधापयेत्॥
कृत्वाऽऽज्यभागपर्यन्तं तत्स्वशाखोक्तमार्गतः।

ग्रहोक्तमण्डलेऽभ्यर्च्य पीतपुष्पाक्षतादिभिः ॥
देवपूजोत्तरे काले ततः कुम्भाभिमन्त्रणम् ।
अश्वत्थसमिधाऽभ्यक्य पायसं सर्पिरन्वितम् ॥
यवव्रीहितिलाः साज्यं मन्त्रेणैव बृहस्पतेः ।
अष्टोत्तरशतं सर्वं हुत्वा शेषं समापयेत् ॥
दारपुत्रसमेतस्य त्वभिषेकं समाचरेत् ।
कुम्भाभिमन्त्रेणोक्तैश्च समुद्रज्येष्ठमन्त्रतः ॥
प्रतिमां कुम्भवस्त्रं च आचार्याय प्रदापयेत् ।
ब्राह्मणान्भोजयेत् पश्चाच्छुभदः स्याद्बृहस्पतिः ॥

अथास्य स्पष्टप्रयोगः—

कर्त्ता सुस्नातः सुप्रक्षालितपाणिपादः स्वाचान्तो मण्डपस्थले स्थण्डिलं नवग्रहवेदिकां च निर्माय गन्धाद्युपचारादिसम्भारान् कृत्वा प्राणानायम्य कालज्ञानं कृत्वा "एवङ्गुणविशेषणविशिष्टायां पुण्यतिथौ मम कन्यायाः पुत्रस्य वा अमुकनामधेयस्य अमुकस्थानस्थितस्य गुरोः दुष्टफलनिरसनार्थं एकादशस्थानस्थितफलप्राप्त्यर्थं पुत्राद्यभिवृद्धिपूर्वकं जीवत्पतित्वप्राप्त्यर्थं विवाहाधिकारासिध्यर्थं च बृहस्पतिशान्तिं करिष्ये । तदङ्गतया गणेशपूजनपूर्वकं आचार्यब्रह्माद्यृत्विग्वरणमग्निस्थापनं कलशस्थापनं मूर्तिपूजनं नवग्रहपूजनं चाहं करिष्ये" इति सङ्कल्पं कृत्वा अत्र ग्रहमखवद्गणेशपूजनादिकं ऋत्विग्वरणं स्थण्डिले पञ्चभूसंस्कारपूर्वकमग्निस्थापनं च कुर्यात् । अथ कलशस्थापनम् । भूमौ अष्टदलकमलमुकुलाकारं कार्य्यम् । "भूरसी"ति भूमिस्पर्शनम् । "आजिघ्र"ति कलशनिधानम् । "वरुणस्योत्तम्भन"मिति उदकेनापूर्य "अꣳशुना ते"इति गन्धप्रक्षेपः । "या ओषधी"रिति सर्वौषधीप्रक्षेपः । "काण्डात्काण्डा"दिति दूर्वाः । "अश्वत्थे व"इति पञ्च पल्लवान् । "पयः पृथिव्यामि"ति पयः । "दधिक्राव्ण" इति दधि । "मधु वाते"ति मधु । "घृतं मिमिक्षे"

इति घृतम् । "अपाँरसमि"ति शर्करा । "स्योना पृथिवी"ति सप्त मृत्तिकाः । "याः फलिनी"रिति पूगीफलम् । "परि वाजपति"रिति पञ्च रत्नानि । "हिरण्यगर्भ" इति हिरण्यम् । "यदश्वाय वास" इति वस्त्रयुग्मेन वेष्टनम् ।

गङ्गे ? च यमुने ? चैव गोदावरि ? सरस्वति ? ।
नर्मदे ? सिन्धु ? कावेरि ? जलेऽस्मिन्सान्निधिं कुरु ॥
सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः ।
आयान्तु यजमानस्य दुरितक्षयकारकाः ॥
वृषारूढा सखञाक्षी यमहस्ता शशिप्रिया ।
आगच्छतु सरिच्छ्रेष्ठा गङ्गा पापप्रणाशनी ॥
नीलोत्पलदलश्यामा पद्महस्ताऽम्बुजेक्षणा ।
आयातु यमुना देवी कूर्मवाहनगा सदा ॥
प्राची सरस्वती पुण्या तथा मन्दाकिनी परा ।
एता नद्यश्च तीर्थानि गुह्यक्षेत्राणि सर्वशः ॥
तानि सर्वाणि कुम्भेऽस्मिन्विशन्तु ब्रह्मशासनात् ॥

इति गङ्गाद्यावाहनम् । "पञ्च नद्य" इति मन्त्रः । "समुद्रादूर्मि"रित्यावाह्य । "पवित्रे स्थ" इति वंशपात्रोपरि निधानम् । अथ मूर्त्तिपूजनम् । ततो मूर्त्तिं ताम्रपात्रे (सं)स्थाप्य "हिमस्य त्वा"ऽऽदिससभिर्मन्त्रैः स्नानं च कारयेत् । पुरुषसूक्तेन शुद्धोदकस्नानम् । ततः कलशोपरि मूर्त्तिं (सं)स्थाप्य आवाह्य पूजयेत् ।

एह्येहि पीताश्वरथाधिरूढ? प्रतप्तजाम्बूनदतुल्यरूप ? ।
वाचस्पते ? देवगुरो ? मदीयां पूजां गृहीतुं भगवन्नमस्ते॥

ॐनमो भगवन् बृहस्पते पीतवर्ण सिन्धुदेशोद्भव आङ्गिरसगोत्र एकादश्यां तिथौ पूर्वाफाल्गुनीनक्षत्रोत्पन्न ब्रह्मवर्ण बृहस्पते एह्येहि महाकलशमलङ्कुरु प्रसीद२ पूजां गृहाण ते नमः । 'बृहस्पते अति यदर्यो' इति मन्त्रस्य गृत्समद ऋषिः बृहस्पति-

देवता त्रिष्टुप्छन्दः बृहस्पतिस्थापने विनियोगः । ॐबृहस्पते०" इति मन्त्रेण बृहस्पतये नमः वस्त्रं समर्पयामि । एवं सर्वत्र । उत्तरीयवस्त्रम् । यज्ञोपवीतम् । आचमनीयम् । इदमनुलेपनम् । इमे अक्षताः । इमानि पुष्पाणि । अयं धूपः । अयं दीपः । इदं नैवेद्यम् । इदं नारिकेलम् । इदं ताम्बूलम् । दक्षिणा नीराजनम्मन्त्रपुष्पाञ्जलिः । एतानि गन्धादिपूजाद्रव्याणि न मम । अथ नमस्कारः ।

नमो नमस्ते सुरपूजिताय गोरोचनाभास ! चतुर्भुजाय ।
रथाधिरूढाय वरप्रदाय गदाऽक्षसूत्राय सुदण्डपाणे ! ॥
ब्रह्मपुत्र ! नमस्तेऽस्तु पीतध्वज ! नमोऽस्तु ते ।
पीतरूप ! नमस्तेऽस्तु सिन्धूद्भव ! नमोऽस्तु ते ॥

अथ क्षमापनम्—

नमोऽस्तु ते देवगुरो ! महात्मने रथाधिरूढोद्धृतदण्डपाणे! ।
प्रतप्तजाम्बूनदतुल्यरूप ! सर्वार्थसिद्धिं कुरु मे दयालो ! ॥
पूजितोऽसि यथाशक्त्या दण्डहस्त ! बृहस्पते ! ।
क्रूरग्रहाभिभूतानां शान्तिं देवगुरो ! कुरु ॥

इति बृहस्पतिपूजनम् ।

अथ नवग्रहपूजां यथाशक्तिविधिना कुर्यात् ॥ 'बृहस्पते' इति मन्त्रस्य गृत्समद ऋषिः बृहस्पतिर्देवता त्रिष्टुप्छन्दः अङ्गन्यासे विनियोगः । ॐबृहस्पते अति यदर्यो इति हृदयाय नमः । अर्हाद्युमद्विभाति शिरसे स्वाहा । क्रतुमज्जनेषु शिखायै वषट् । यद्दीदयच्छवसा कवचाय हुम् । ऋतप्रजात तन्नेत्रत्रयाय वौषट् । अस्मासु द्रविणं धेहि चित्रं अस्त्राय फट् । ॐबृहस्पते इति पादाङ्गुष्ठयोः । अति गुल्फयोः । यदर्यो जङ्घयोः । अर्हाज्जान्वोः । द्युमदूर्वोः । विभाति गुदे । क्रतुमाल्लिङ्गे । जनेषु कट्याम् । यन्नाभौ । दीदयदुदरे । शवसा स्तनयोः । ऋत हृदि । प्रजात कण्ठे । तन्मुखे ।

अ तालुदेशे। स्मासु नासिकयोः। द्रवि नेत्रयोः। णं भ्रुवोर्मध्ये। धे ललाटे। हि शिरसि। चित्रं शिखायाम्" इत्यादि स्मृत्वा अयुतं सहस्रं अष्टोत्तरशतं वा ऋत्विजो जपं समापयेत्। ततो ब्रह्मवरणादि पर्युक्षणान्तं कर्म कृत्वा, आघारावाज्यभागौ हुत्वा, तत्र मन्त्रैः अश्वत्थसमिद्भिरष्टोत्तरशतमष्टाविंशति अष्टभिर्वा अग्नावावपति। तिलाज्यद्रव्येण चरुणा चाष्टभिस्त्रिभिर्वा गणेशादिनवग्रहाणां होमं कृत्वा जपदशांशेन "बृहस्पते अति यदर्यो" इति मन्त्रेण होमं विधाय "अग्नये स्विष्टकृते स्वाहा। इदमग्नये स्विष्टकृते न मम"। ततो नवाहुतिं जुहुयात्। ततः "प्रजापतये स्वाहा। इदं प्रजापतये न मम"। ततो बलिदानम्। "मूर्द्धानन्दिव" इति मन्त्रेण पूर्णाहुतिं कृत्वा ततः श्रेयः सम्पादनम्, आचार्यपूजनं, संस्रवप्राशनं, पवित्राभ्यां मार्जनं, पवित्रप्रतिपत्तिः, ब्रह्मणे पूर्णपात्रदानं, प्रणिताविमोकः, ऋत्विग्भ्यो दक्षिणादानं कृत्वा ततः कलशोदकेन शान्त्युदकेन अभिषेकं कुर्यात्। तत्र मन्त्राः। "आपो हि ष्ठे"ति तिसृभिर्मन्त्रैः। स्वस्ति न इन्द्रः, व्वरुणस्योत्तम्भनं, भग प्रणेतः, इदमापः, समुद्राय त्वा, पुनन्तु मा, आप्यायस्व, पञ्च नद्यः, शिरो मे, इति पञ्च मन्त्राः। देवस्य त्वा, त्रिभिः। इमम्मे व्वरुण, चतुर्भिर्मन्त्रैः। या ओषधी,रिति। तच्चक्षु,रिति। अᳩशुना, आयुष्यं वर्चस्यं, सप्त ऋषयः" इति वैदिकमन्त्रैरभिषिञ्चेयुः। "सुरास्त्वामभिषिञ्च"न्त्वित्यादयश्च। एवमाभिषिक्तो यजमानो पूजान्ते अर्घ्यं दद्यात्। तत्र मन्त्रः—

गम्भीर ! जीवरूपाङ्ग ! देवेज्य ! सुमते ! प्रभो !।
नमस्ते वाक्पते ! शान्त ! गृहाणार्घ्यं बृहस्पते ! ॥

ततः प्रार्थना कार्य्या बृहस्पतेः—

नमस्तेऽङ्गिरसां नाथ ! वाक्पतेऽर्थे बृहस्पते !।
क्रूरग्रहैः पीड्यमानानमृताय भजस्व नः ॥
जीवो बृहस्पतिः सूरिराचार्यो गुरुरङ्गिराः।

बृहस्पतिर्देवमन्त्री शुभं कुर्यात्सदा मम ॥ इति ।

अथ प्रतिमादानम् । देशकालादि सङ्कीर्त्य "मया कृतया अनया बृहस्पतिशान्त्या सकलमनोरथसिद्ध्यै कृतं बृहस्पतिपूजनं होमः अभिषेकश्च तस्य श्रेयसो यथावन्मयि प्रतिष्ठासिद्ध्यर्थमिमां प्रतिमां सुवर्णदक्षिणासहितां सोपस्करां तुभ्यमहं सम्प्रददे नमम" इति अभिषेयाचार्याय प्रयच्छेत् । एतत्कर्माङ्गत्वेनापरान् ब्राह्मणान् भोजयति । यथाशक्ति तेभ्यो दक्षिणां दद्यात् । तदाशिषो गृह्णीयात् । एवं कृते सर्वारिष्टशान्तिर्भवतीत्याह शौनकः ॥

इति बृहस्पतिशान्तिः ॥

चूडारत्ने— अथादित्यशान्तिमाह ।

पुमांसोऽर्कात्मकाः प्रोक्ताः स्त्रियः सोमात्मिका यतः ।
तस्मात्पुंसां शुभो भानुर्भवत्विक्रमखारि ११।३।१०।३।गः ॥

शौनकः—

ब्राह्मणस्योपनयने नानुकूलो भवेद्रविः ।
तस्य शान्तिं प्रवक्ष्यामि उक्तां चैव महर्षिभिः ॥
उपनयनात्पूर्वेद्युः कृत्वा पुण्याहवाचनम् ।
गृहस्येशानदिग्भागे गोमयेनोपलेपयेत् ॥
कुम्भमेकं तथा वस्त्रे पद्ममष्टदलं लिखेत् ।
सुवर्णेन रविं कृत्वा द्विभुजं पद्मधारितम् ॥
कृत्वाऽऽज्यभागपर्यन्तं तन्त्रं कृत्वाऽनु पूर्ववत् ।
स्वशाखोक्तविधानेन आचार्यो होममाचरेत् ॥
आ कृष्णेनेति मन्त्रेण समिदाज्यचरुं हुनेत् ।
अष्टोत्तरसहस्रं वा शतमष्टोत्तरं तु वा ॥
तिलव्रीहींश्च हुत्वाऽथ होमशेषं समापयेत् ।
दारपुत्रसमेतन्तु ऋत्विक्तमभिषिञ्चयेत् ॥
कुम्भाभिमन्त्रणोक्तैश्च समुद्रज्येष्ठमन्त्रकैः ।

ऋत्विग्भ्यो दक्षिणां दद्यादन्येभ्यश्च स्वशक्तितः ॥
प्रतिमां वस्त्रकुम्भं च आचार्याय प्रदापयेत् ।
एवं यः कुरुते शान्तिं सर्वदोषो विनाश्यति ॥

अथास्य स्पष्टप्रयोगः । कर्ताऽऽचमनं कृत्वा प्राणानायम्य देशकालौ स्मृत्वा "एवंगुणविशेषणविशिष्टायां पुण्यतिथौ मम पुत्रस्य अमुकनामधेयस्य अमुकराशिस्थितस्य रवेः दुष्टफलनिरसनार्थं एकादशस्थानस्थितफलप्राप्त्यर्थं परमश्रीपरमायुष्यपरमसुखफलप्राप्त्यर्थं पुत्राद्यभिवृद्धिपूर्वकं विवाहाधिकारसिद्ध्यर्थं आदित्यशान्तिं करिष्ये । तदङ्गतया गणेशपूजनपूर्वकस्वस्तिवाचनं मातृकापूजनं नान्दीश्राद्धं च करिष्ये" सर्वं पूर्ववत्सम्पाद्य ततः पूर्ववत्कलशस्थापनम् । तस्योपरि ताम्रपात्रं प्रतिमां स्थाप्य "हिमस्य त्वा" आदिमन्त्रैः स्नानं कारयेत् । पुरुषसूक्तेन शुद्धोदकस्नानम् । पूर्ववत्षोडशोपचारैः पूजयेत् । ततो नवग्रहस्थापनम् । होमादि अभिषेकपर्यन्तं सर्वं समापयेत् ।

इत्यादित्यशान्तिः ।

अथ चन्द्रबलमाह

जन्मत्रिरसकामायदशमस्थः १।३।६।७।११।१० । शुभः सदा ।
चन्द्रमाः शुक्लपक्षे च द्विपञ्चनवगः शुभः ॥

अथ घातचन्द्रः ।

भू १ बाण५ नन्दा ९ हस्ताश्च २ रस६ दिग्१० वह्नि३ शैलजाः ७ ।
वेदा ४ वसु ८ शिवा ११ दित्या १२ घातचन्द्रो यथाक्रमम् ॥

घातचन्द्रस्यापवादमाह—

यात्रायां युद्धकार्येषु घातचन्द्रं विवर्जयेत् ।
विवाहे सर्वमाङ्गल्ये चौलादौ व्रतबन्धने ॥
घातचन्द्रो नैव चिन्त्य इति पाराशरोऽब्रवीत् ॥

चूडारत्ने—

तीर्थयात्राविवाहान्नप्राशनोपनयादिषु ॥
माङ्गल्ये सर्वकार्येषु घातचन्द्रं न चिन्तयेत् ॥

अथ जन्मचन्द्रविचारो रत्नसङ्ग्रहे—

प्रयाणे प्राणसन्देहो भैषज्ये मरणं ध्रुवम् ।
विवाहे विधवा नारी जन्मेन्दुफलमीदृशम् ॥

वराहः—

कृषिभवनविवाहे पट्टबन्धाभिषेके
प्रथमयुवतिशय्याऽऽभूषणे वाऽऽधिपत्ये ।
नगरगृहप्रवेशे जन्मचन्द्रः प्रशस्त
इति वदति वराहः क्षौरयात्रां विहाय ॥

ज्योति प्रकाशे—

जन्मभं कृषिनृपाभिषेचनं भूषणे नगरगेहकर्मणि ।
आद्यपत्यभुजि मौञ्जिबन्धने पुंविवाह उदितं शुभं बुधैः ॥
विवाहे जन्मभं स्त्रीणां वर्जनीयं प्रयत्नतः ।
नैव पुंसामिति प्राहुर्ज्योतिर्नयविदो बुधाः ॥

नारदः—

पट्टबन्धनचौलान्नप्राशने चोपनायने ।
शुभदं जन्मनक्षत्रमशुभं त्वन्यकर्मणि ॥

चूड़ाशब्देन केशबन्धो न तु क्षौरकर्म । द्वादशचन्द्रमसः प्राशस्त्यमाह ज्योतिर्निबन्धे—

अभिषेके प्रवेशे च चौलान्नव्रतबन्धने ।
पाणिग्रहे प्रयाणे च चन्द्रो द्वादशगः शुभः ॥

चूड़ारत्ने—

करणभगणदोषं वारयोगादिदोषं
तिथिकुलिकयमार्द्धं राहुकेत्वोश्च दोषम् ।
रविशशिकुजदोषं सौम्यशुक्रेज्यदोषं
हरति सकलदोषं रोहिणीयुक्तचन्द्रः ॥

शुक्ले पक्षे शीतरश्मिप्रधानं न प्राधान्यं तारकायाश्च तत्र ।
शक्त्या युक्ते विद्यमानेऽपि पत्यौ न स्वातन्त्र्यं योषितः क्वापि दृष्टम् ॥

न खलु बहुलपक्षे शीतरश्मिप्रभावः
कथितमिह हि तारावीर्यमाद्यैः प्रधानम् ॥
अतिविकलशरीरे प्रेयसी प्रोषिते वा
प्रभवति खलु भर्त्तुः सर्वकार्येषु योषा ॥ इति ।

अथ ताराबलमाह--

कुद्विवेदाङ्गनागाङ्क १।२।४।६।८।९ मिता तारा शुभावहा ।
शुक्ले च पञ्चमीं यावच्चन्द्रताराबलं शुभम् ॥

अन्यत्रापि--

जन्म १ संप २ द्विप ३ त्क्षेमा ४ प्रत्यरिः ५ साधिका ६ मृतिः ७ ।
मैत्रा ८ ऽतिमैत्रा ९ ताराः स्युर्नव त्रिर्जन्मभात्क्रमात् ॥

अथावश्यककृत्ये दुष्टताराणां प्रकारद्वयेन परिहारमाह मुहूर्त्तचिन्तामणौ-

मृत्यौ स्वर्णतिलान्विपद्यपि गुडं शाकं त्रिजन्मस्वथो
दद्यात्प्रत्यरितारकासु लवणं सर्वो विपत्प्रत्यरिः ॥
मृत्युश्चादिमपर्यये न शुभदोऽथैषां द्वितीयेंशकाः
नादिप्रान्त्यतृतीयका अथ शुभाः सर्वे तृतीये स्मृताः ॥

पूर्वार्द्धं स्पष्टम्। द्वितीयपरिहार उत्तरार्द्धे व्याख्यायते । आदिमपर्यये प्रथमावृत्तौ विपत्प्रत्यरिर्मृत्युश्च सर्वो न शुभदः। अथ द्वितीयावृत्तौ विपत्तारायां प्रथमः, प्रत्यरितारायां द्वितीयः, मृत्युतारायां तृतीयश्चरणस्त्याज्यः । तृतीयावृत्तौ विपत्प्रत्यरिर्मृत्युश्चैते सर्वे शुभाः । अथ प्रसङ्गतो विवाहादिके त्याज्यमाह शौनकः—

गुर्वादित्यव्यतीपाते वक्रातिचारगे गुरौ ।
नष्टे शशिनि शुक्रे वा बाले वृद्धेऽथवा गुरौ ॥
पौषे चैत्रेऽथ वर्षासु शरद्यधिकमासके ।
केतूद्गमे निरंशेऽर्के सिंहस्थेऽमरमन्त्रिणि ॥
विवाहव्रतयात्रादि पुनर्हर्म्यगृहादिकम् ।
क्षौरं विद्योपविद्यां च यत्नतः परिवर्जयेत् ॥

अथ गुर्वादित्यमाह रत्नसंग्रहे--

रविक्षेत्रगते जीवे जीवक्षेत्रगते रवौ ।

गुर्वादित्यः स विज्ञेयः सर्वकर्मसु गर्हितः ॥
रविक्षेत्रं तु पैत्र्यर्क्ष्यं गुरुक्षेत्रं च रेवती ।
मिथः क्षेत्रगतौ तौ चेन्नश्येत किल मङ्गलम् ॥

गर्गः--

एकराशिगतौ सूर्यजीवौ स्यातां यदा तदा ।
गुर्वादित्याख्यदोषोऽयं गर्हितः सर्वकर्मसु ॥

मुहूर्त्तकल्पद्रुमे--

गुरुदिवाकरयोर्युजि मङ्गलं न शुभकृद्धिषणेऽपि च नीचगे ।
मगध-नीवृति-कोङ्कण-गौडके परमनीचलवात्स बहिः शुभः ॥

अथ वक्रातिचारविचारः चूडामणौ--

वक्रातिचारगे जीवे वर्जयेत्तदन्तरम् ।
व्रतोद्वाहादि चूडायामष्टाविंशतिवासरान् ॥

त्रिकोण ५।९ जाया ७ धन २ लाभ ११ राशौ
वक्रातिचारेण गुरुः प्रयातः ।
यदा तदा प्राह शुभं विलग्नं
हिताय पाणिग्रहणं वसिष्ठः ॥

अथ सिंहस्थगुरुविचारः ।

शान्तिके पौष्टिके यात्रा प्रतिष्ठोद्वाहपूर्वकम् ।
न कुर्यात्सर्वमाङ्गल्यं सिंहे याते बृहस्पतौ ॥

शान्तिकं सिंहस्थात्पूर्वं प्राप्तं तत्र कर्त्तव्यम् । गौतमीं विनाऽन्यत्र न कर्तव्यम् । तथा--

इष्टं पूर्त्तं च चौलादिसंस्कारान्वास्तुकर्म च ।
न कुर्यात्सिंहयाते तु गुरौ देवपुरोहिते ॥
सिंहस्थं मकरस्थं च गुरुं यत्नेन वर्जयेत् ॥

अस्यापवादमाह वसिष्ठः--

विवाहो दक्षिणे तीरे गौतम्या नेतरेऽत्र तु ।

रत्नसङ्ग्रहे--

भागीरथ्युत्तरे कूले गौतम्या दक्षिणे तथा ।
विवाहो व्रतबन्धश्च सिंहस्थेज्ये न दुष्यति ॥

अत्र विवाहव्रतबन्धावेव न निषिद्धौ, आभ्यामन्यानि शुभकर्माणि निषिद्धान्येव, अपवादस्य सङ्कोचाश्रयत्वादुपलक्षणयोगात् । चिन्तामणौ-

मेषेऽर्के सन्व्रतोद्वाहौ गङ्गागोदान्तरेऽपि च ।
सर्वः सिंहगुरुर्वर्ज्यः कलिङ्गे गौडगुर्जरे ॥

ज्योतिर्निबन्धे—

मङ्गलानीह कुर्वीत सिंहस्थो वाक्पतिर्यदा ।
भानौ मेषगते सम्यगित्याहुः शौनकादयः ॥ इति ।

मङ्गलशब्देन व्रतोद्वाहौ । तदुक्तं शार्ङ्गीये—

मुण्डनं चौलमित्युक्तं व्रतोद्वाहौ तु मङ्गलम् ॥ इति ।

गर्गः—

वृत्तशत्रुसचिवेऽपि सिंहगे मेषगे च तपने करग्रहः ।
यो लभेत भवतीह साऽचला सौख्यमेति सुभगत्वमक्षयम् ॥

सप्तर्षिपटले—

मघां त्यक्त्वा यदा गच्छेत्फाल्गुनीं च बृहस्पतिः ।
पुत्रिणी धनिनी कन्या सौभाग्यं सुखमेधते ॥

ज्योतिःसारे-

सिंहस्थेऽपि मघासंस्थं गुरुं यत्नेन वर्जयेत् ।
अन्यत्र सिंहभागेऽपि विवाहादि विधीयते ॥

कर्त्तव्यानाह-

गर्भाधानादिकाः सर्वाः प्राशनान्ताः क्रियाश्च याः ।
कर्तव्याः सर्वदेशेषु सिंहस्थे च बृहस्पतौ ॥
क्रियमाणं हि प्रत्यब्दे कुलधर्मादिकं च यत् ।
सर्वदेशेषु कर्त्तव्यमित्याहुः सिंहगे गुरौ ॥
माघमासे पौर्णमासी मघायुक्ता यदा भवेत् ।

सिंहस्थस्य गुरोर्दोषस्तस्मिन्वर्षे न चान्यथा ॥

अथ मकरस्थगुरोरपवादमाह लल्लः—

नर्मदापूर्वभागे तु शोणस्योत्तरदक्षिणे ।
कालिन्द्या दक्षिणे तीरे मकरस्थो न दोषभाक् ॥

रत्नसंग्रहे–

मृगराशिगते जीवे दिनषष्टिं परित्यजेत् ॥

चूडामणौ–

नर्मदापूर्वभागे तु शोणस्योत्तरदक्षिणे ।
गण्डक्याः पश्चिमे तीरे नक्रस्थेज्यो न दोषकृत् ॥
मागधे गौड़देशे च सिन्धुदेशे च कोङ्कणे ।
व्रतचूडाविवाहं च वर्जयेन्मकरे गुरौ ॥

अथ गुरुशुक्रमौढ्यादिविचारः वृत्तशते–

बालः शुक्रो दिवसदशकं पञ्चकं चैव वृद्धः
पश्चादह्नां त्रितयमुदितः पक्षमैन्द्र्यां क्रमेण ॥
जीवो वृद्धः शिशुरपि सदा पक्षमन्यैः शिशू तौ
वृद्धौ प्रोक्तौ दिवसदशकं चापरैः सप्तरात्रम् ॥

तथा—

चौलोपनयने चैव विवाहोद्यापनादिकम् ।
वेदारम्भं गृहारम्भं महारुद्रं तथैव च ॥
देवतानां प्रतिष्ठां च गोदानं स्नातकं च यत् ।
व्रतप्रारम्भणं चैव नववध्वाः प्रवेशनम् ॥
वास्तुकर्म महायज्ञमुपाकरणमेव च ।
विलम्बितप्रेतकार्यं महादानादिकं च यत् ॥
बाले वा यदि वा वृद्धे शुक्रे चास्तमिते गुरौ ।
मलमासेऽपि चैतानि वर्जयेद्देवदर्शनम् ॥ इति ।

सङ्ग्रहे–

गोदावर्यां गयायां च श्रीशैले मलकार्जुने ।
अयने विषुवे चैव चातुर्मास्यव्रतेषु च ॥

उत्सवेषु च सर्वेषु सीमन्त ऋतुकर्मसु।
सुरासुरेज्ययोश्चैव मौढ्यदोषो न विद्यते ॥

प्रतिदिनास्तनिषेधमाह रत्नमालाटीकायाम्—

अस्तदोषस्तु न ग्राह्यः प्रतिदैवासिको बुधैः।
नास्तदोषः सदा भानोर्मैत्रे चेन्दोर्न नीचता ॥

प्रतिदैवासिको—भचक्रवशात्प्रतिदिनजोऽस्तः—

विशाखायाश्चतुर्थेऽशे यावत्तिष्ठति शीतगुः।
तावन्नीचगतो ज्ञेयः परतो नैव दोषभाक् ॥

अथ लुप्तसंवत्सरलक्षणमाह। लल्लः—

पूर्वराशिं यदा त्यक्त्वा अपूर्णे वत्सरे गुरुः।
लुप्तः संवत्सरो ज्ञेयः परगेहगतो यदा ॥

तथा—

अतिचारगतो जीवस्तं राशिं नैति चेत्पुनः।
लुप्तः संवत्सरो ज्ञेयः सर्वकर्मबहिष्कृतः ॥

अस्य सर्वराशिसाधारण्येन प्राप्तौ क्वचिदपवादमाह च्यवनः—

मासान्दशैकादश वा प्रभुज्य राशेर्यदा राशिमुपैति जीवः।
भुङ्क्ते न पूर्वं च पुनस्तथा हि न लुप्तसंवत्सरमाहुरार्याः ॥

तथा—

वृषे मेषे झषे कुम्भे यद्यतीचारगो गुरुः।
न तत्र काललोपः स्यादित्याह गालवो मुनिः ॥

अथाधिसंवत्सरविचारः उत्तरसौरे—

गुरोर्मध्यमसंक्रान्तिहीनो यश्चान्द्रवत्सरः।
अधिसंवत्सरस्तस्मिन्कारयेन्न सवत्रयम् ॥
वर्जनीया प्रयत्नेन प्रतिष्ठा सर्वनाकिनाम्।
स्फुटसंक्रान्तिहीनश्चेत्केऽप्याहुरधिमासवत् ॥

मध्यमगणनया गुरुसंक्रान्तिरहितश्चान्द्रवत्सरोऽधिवत्सरः। तत्र बृहस्पतिसवादि न कार्यम्। स्फुटगणनया गुरुसंक्रान्तिरहितो यश्चान्द्रो वत्स-

रस्तास्मिन्नधिमासवत्काम्यादिकं वर्ज्यमिति केचिन्मन्यन्ते । कल्पद्रुमे—

चेत्स्पष्टया वाऽप्यथ मध्यगत्या राश्यन्तरं यत्र च चान्द्रवर्षे ।
गुरुर्न यायादधिवत्सरोऽधिमासेन तुल्यः स शुभेषु वर्ज्यः ॥

अथ ग्रहणात्पूर्वं परं त्याज्यमाह हेमाद्रौ—

त्रयोदश्यादिकं वर्ज्यं दिनानां नवकं ध्रुवम् ।
माङ्गल्येषु समस्तेषु ग्रहणे चन्द्रसूर्ययोः ॥
द्वादश्यादितृतीयान्तो वेध इन्दुग्रहे स्मृतः ।
एकादश्यादिकः सौरे चतुर्थ्यन्तः प्रकीर्तितः ॥
खण्डग्रहे तयोः प्रोक्तमुभयत्र दिनद्वयम् ॥

ग्रहणात्पूर्वोत्तरदिनमित्यर्थः । मदनरत्ने नारदः -

उत्पातग्रहणादूर्ध्वं सप्ताहमखिलग्रहे ।
निखिले त्रिदिनं नेष्टं नेष्टं तद्भमृतुत्रयम् ॥

मुहूर्त्तचिन्तामणिटीकायाम्—

चन्द्रसूर्योपरागेषु त्र्यहं पूर्वं शुभं त्यजेत् ।
सप्ताहमशुभं पश्चात्स्मृतं ग्रहणसूतकम् ॥

आङ्गिराः—

सर्वग्रासे तु सप्ताहमर्द्धग्रासे दिनत्रयम् ।
त्रिद्व्येकाङ्गुलतो ग्रासे दिनमेकं विवर्जयेत् ॥

गुरुः—

ग्रस्तास्ते त्रिदिनं पूर्वं पश्चाद्ग्रस्तोदये तथा ॥

कश्यपः—

ग्रस्तोदये परो दोषो ग्रस्तास्तेऽर्वाक्शशीनयः ॥

यस्मिन्नक्षत्रे ग्रहणं तन्नक्षत्रं त्याज्यमाह नारदः—

ग्रहणोत्पातभं त्याज्यं मङ्गलेषु ऋतुत्रयम् ॥ इति ।

गुरुः—

नित्ये नैमित्तिके काम्ये जपहोमक्रियादिषु ।
उपाकर्माणि चोत्सर्गे ग्रहवेधो न विद्यते ॥

शुभदोत्पाता वराहसंहितायाम्—

चण्डीशनिमहीकम्पसन्ध्यानिर्घातनिःस्वनाः।
परिवेषरजोधूमरक्तार्कास्तमनोदयाः॥
द्रुमे स्यान्न रसस्नेहमधुपुष्पफलोद्गमः।
गोपक्षिमदवृद्धिश्च शुभाय मधुमाधवे॥

एते यद्दिने जायन्ते तद्दिनमेकमेव त्यजेत्। अथाशुभोत्पाता, नारदः—

देवता यत्र नृत्यन्ति पतन्ति प्रज्ज्वलन्ति वा।
मुहू रुदन्ति गायन्ति प्रस्विद्यन्ति हसन्ति च॥
वमन्त्यग्निं तथा धूमं स्नेहं रक्तं पयो जलम्।
अधोमुखाश्च तिष्ठन्ति स्थानात्स्थानं व्रजन्ति वा॥
एवमाद्याश्च दृश्यन्ते विकाराः प्रतिमासु च।
गन्धर्वनगरं चैव दिवा नक्षत्रमण्डलम्॥
महोल्कापतनं काष्ठतृणरक्तप्रवर्षणम्।
गन्धर्वगेहं दिग्दाहं भूमिकम्पं दिवा निशि॥
अनग्नौ च स्फुलिङ्गाः स्युर्ज्वलनं च विनेन्धनम्।
निशीन्द्रचापमण्डूकशिखरं श्वेतवायसम्॥
दृश्यन्ते विस्फुलिङ्गाश्च गोगजाश्वोष्ट्रगास्ततः।
जन्तवो द्वित्रिशिरसो जायन्ते वाऽपि योनिषु॥

एते यद्दिने जायन्ते तद्दिनादारभ्य सप्त दिनानि वर्ज्यानि। उक्तं च—

त्रिविधोत्पाततश्चोर्ध्वं सिंहिकासुतदर्शने।
सप्तरात्रं न कुर्वीत यात्रोद्वाहादि मङ्गलम्॥ इति।

अथ वाग्दानम्। धर्मप्रवृत्तौ—

कुर्याद्वैवाहिके मासि वाग्दानं द्विजसत्तम!।
कलशेन समायुक्तं सम्पूज्य गणनायकम्॥

चूडारत्ने—

वाग्दानं फलदानं च मासे वैवाहिके तथा।
मधोः पौषस्य चोर्जस्य कर्तव्यं बहुले दले॥

ज्योतिर्निबन्धे—

पुण्याहे च विवाहर्क्षे चित्रावस्वश्विविष्णुभे ।
लब्ध्वा चन्द्रबलं कुर्यान्निश्चयं सत्यया गिरा ॥

धर्मप्रवृत्तौ—

कर्मणा मनसा वाचा सम्प्रीत्या धर्मवृद्धये ।
दायापत्यसुहृद्वर्गैः समवेतेन निश्चितम् ॥
सम्बन्धगोत्रमुच्चार्य दद्याद्वै कन्यकापिता ।
हस्ते पितुर्वरस्याथ ताम्बूलं साक्षतं फलम् ॥
दास्येऽहं तेऽद्य पुत्राय ममाद्य तव पुत्रिका ।
सफलं साक्षतं दद्याद्यथा च नः परस्परम् ॥

अथास्य प्रयोगः । देशकालौ स्मृत्वा "एवंगुणविशेषणविशिष्टायां पुण्यतिथौ करिष्यमाणविवाहाङ्गभूतं वाग्दानमहं करिष्ये । तदङ्गगणपतिपूजनमहं करिष्ये" गणपतिं पूजयित्वा कलशस्थापनं च कृत्वा, अमुकगोत्रस्य अमुकशर्मणः प्रपौत्राय अमुकशर्मणः पौत्राय अमुकशर्मणः पुत्राय अमुकनाम्ने वराय, तथैव कन्यापक्षे, अमुकगोत्रस्य अमुकप्रवरान्वितस्य अमुकशर्मणः प्रपौत्रीं अमुकशर्मणः पौत्रीं अमुकशर्मणः पुत्रीं अमुकीनाम्नीं कन्यां ज्योतिर्विदादिष्टे मुहूर्त्ते दास्ये" इति सङ्कल्प्य, वाचा सम्प्रदद्द ।

अव्यङ्गेऽपतितेऽक्लीबे दशदोषविवर्जिते ।
इमां कन्यां प्रदास्यामि देवाग्निद्विजसन्निधौ ॥

इत्युक्त्वा वस्त्रप्रान्ते तानि पूगीफलानि प्रक्षिप्य प्रतिष्ठामन्त्रेण 'मनो जूति'रित्यादिना वस्त्रं बध्वा ग्रन्थिं चन्दनेनार्चयेदित्याचारप्राप्तम् । इति परस्परम् । ततो दाता—

वाचा दत्ता मया कन्या पुत्रार्थे स्वीकृता त्वया ।
कन्याऽवलोकनविधौ निश्चितस्त्वं सुखी भव ॥

ततो वरपिता—

वाचा दत्ता त्वया कन्या पुत्रार्थं स्वीकृता मया ।

वरावलोकनविधौ निश्चितस्त्वं सुखी भव ॥

इति परस्परं मन्त्रं पठेत्। भ्रात्रादौ स्वीकर्तरि भ्रात्रर्थं मित्रार्थमित्यूहः कार्यः। इति वाग्दानम्। अथ कन्यावरणम्। चूडारत्ने—

विश्वर्क्षपूर्वात्रयकर्णयुग्यस्वात्याग्निमैत्रैश्च विवाहभैर्वा ।
प्रत्यङ्मुखः सन्वरयेत्कुमारीं फलादिभिः प्राग्वदनां सुवेशाम् ॥
धीधर्मकेन्द्रगैः ५।९।१।४।७।१० सौम्यैः
पापैः शत्रुत्रिलाभगैः ६।३।११ ॥
कन्याया वरणं कार्यं जीवे
चोपचयस्थिते ६।३।१०।११ ॥

द्वौ चत्वारोऽष्टौ वा प्रशस्तवेशाः तावतीभिः पुरन्ध्रीभिर्मङ्गलगीतवाद्यैः कन्यागृहमेत्य शुभे वस्त्रपीठे प्राङ्मुखीं सालङ्कारां सुवेशां कन्यामुपवेश्य तद्धस्ते फलताम्बूलादि दद्यात्। ज्योतिर्निबन्धे नारदः—

भूषणैर्वस्त्रताम्बूलैः फलगन्धाक्षतादिभिः ।
शुक्लाम्बरैर्गीतवाद्यैर्विप्राशीर्वचनैः सह ॥
कन्यासमीपमागत्य ब्राह्मणैः सह वा पिता ॥

धर्मप्रवृत्तौ—

द्वावष्टावथ चत्वारो ब्राह्मणा वेदपारगाः ।
इत्युक्त्वा भो द्विजा! ऊचुर्वृणध्वं कन्यकामिमाम् ॥
प्रत्यूचुस्ते द्विजाः सर्वे वयं चेमां वृणीमहे ।
उभे वा युगपत्कार्ये तत्र तद्वस्त्रमण्डले ॥
आदौ सम्पादयेत्पश्चाद्विन्यसेत्फलमञ्जलौ ।
श्वेताम्बरं नारिकेलं भक्षाद्यं फलमर्पयेत् ॥
प्रदानं यद्दुकूलादि कर्णकण्ठादिभूषणम् ॥

कन्यापिता पात्रस्थतण्डुलेषु शचीं सम्पूज्य प्रार्थयेत्। चूडारत्ने—

घटकारमृदा देवि ? निर्मिता वसुभे ? शचि ? ।
वरणानन्तरं पूज्या यावत्पाणिग्रहो भवेत् ॥

"ॐ अदित्यै रास्नाऽसी"ति मन्त्रेणावाह्य पूजयेत् । ततस्तां कन्या प्रार्थयेत् ।

सम्पूज्य प्रार्थयित्वा तां शचीं देवीं गुणाश्रयाम् ।
त्रैलोक्यसुन्दरीं दिव्यां गन्धमाल्यवरान्विताम् ॥
सर्वलक्षणसंयुक्तां सर्वाभरणभूषिताम् ॥
अनर्घ्यमणिमालाभिर्भासयन्तीं दिगम्बराम् ॥
विलासिनीसहस्रौघैः सेव्यमानामहर्निशम् ।
एवंविधां कुमारी तां पूजान्ते प्रार्थयेदिति ॥
देवीन्द्राणि ! नमस्तुभ्यं देवेन्द्रप्रियभामिनि ! ।
विवाहे भाग्यमारोग्यं पुत्रलाभं च देहि मे ॥
धान्यन्देहि धनन्देहि पशून्देहीन्द्रभामिनि ! ।
यशो देहि सुखन्देहि सर्वकार्यकरी भव ॥

इति प्रार्थयेत् । ततः पतिपुत्रवतीभिर्नीराजनं कार्यम् । ताम्बूलदक्षिणाभिः सन्तोषिता विप्राः 'श्रीश्चते लक्ष्मीश्चे'ति । "मनोजूति" रित्याद्याशिषः पठेयुः । इति कन्यावरणम् । अथ वरवरणम् । चिन्तामणौ--

धरणिदेवोऽथ वा कन्याकासोदरः
शुभदिने गीतवाद्यादिभिः संयुतः ।
वरवृतिं वस्त्रयज्ञोपवीतादिना
ध्रुवयुतैर्वह्निपूर्वात्रयैराचरेत् ॥

ग्रन्थान्तरे चण्डेश्वरः—

उपवीतं फलं पुष्पं वासांसि विविधानि च ।
देयं वराय वरणे कन्याभ्रात्रा द्विजेन च ॥

इति वरवरणम् ॥ अथ मृदाहरणम् ॥ ज्योतिर्निबन्धे—

कर्तव्यं मङ्गलेष्वादौ मङ्गलायाङ्कुरार्पणम् ।
नवमे सप्तमे वाऽपि पञ्चमे दिवसेऽपि वा ॥

तृतीये बीजनक्षत्रे शुभे वारे शुभोदये ।
सम्यग्गृहाण्यलङ्कृत्य वितानध्वजतोरणैः ॥
सहवादित्रनृत्याद्यैर्गत्वा प्रागुत्तरां दिशम् ।
तत्र मृत्सिकतां श्लक्ष्णां गृहीत्वा पुनरागतः ॥
मृण्मयेष्वथ वा वैणवेषु पात्रेषु योजयेत् ।
अनेकबीजसंयुक्तां ततः पुष्पोपशोभिताम् ॥

बीजनक्षत्रे–बीजवापननक्षत्रे,

लघुध्रुवचरं मैत्रविशाखामूलभं मघा ।
कृषिकर्मणि शस्ता स्याद्रविषष्ठ्यष्टमीं विना ॥
राहुभादष्टपर्यन्तं द्वादशं षोडशोन्मितम् ।
विंशं चतुर्विंशतितो बीजवापे न शोभनम् ॥

राहुनक्षत्रा (१।२।३।४।५।६।७।८।१२।१६।२०।२४।२५।२६।२७)
दशुभान्येतानि । शौनकः––

आधानं गर्भसंस्कारं जातकर्म च नाम च ।
हित्वाऽन्यत्र विधातव्यं मङ्गलेऽङ्कुरवापनम् ॥

बृहस्पतिः––

आत्यन्तिकेषु कार्येषु कार्यं सद्योऽङ्कुरार्पणम् ॥

इति मृदाहरणम् । अथ विवाहात् प्राक्कर्तव्यमाह । चूडारत्ने—

दलनं कण्डनं चैव व्यञ्जनं मोदकानि च ।
यवारमण्डपं वेदी कुङ्कुमं वर्णकस्तथा ॥
चुल्ल्यादिकर्म शच्यार्चा गृहसम्मार्जनादिकम् ।
सर्वं विवाहभैः कार्यं विवाहङ्गतयाऽऽगतम् ॥

दैवज्ञमनोहरे—

मूलेन्द्ररुद्रश्रवणार्कपौष्णविश्वेशचित्राऽनलरेवतीषु ।
संस्थापनं काञ्जिककुण्डिकाया वारे रवेर्भूमिसुतस्य शस्तम् ॥

ततो विवाहादिषु मण्डपप्रकारमाह । वसिष्ठः––

षोडशारत्निकं कुर्याच्चतुर्द्वारोपशोभितम् ।

मण्डपं तोरणैर्युक्तं तत्र वेदीं प्रकल्पयेत् ॥
अष्टहस्तन्तु रचयेन्मण्डपं वा द्विषट्करम् ॥

नारदः--

हस्तोच्छ्रितां चतुर्हस्तैश्चतुरस्रां समन्ततः ।
स्तम्भैश्चतुर्भिः सुश्लक्ष्णैर्वामभागे स्वसद्मनः ॥

अन्यः पक्षो धर्मप्रवृत्तौ—

कन्याहस्तैः पञ्चभिः सप्तभिर्वा
वेदीं कुर्यात्कूर्मपृष्ठोन्नताङ्गीम् ॥
रम्ये हर्म्ये निर्गमाद्वामभागे
जायापत्योराशिषो वाचयित्वा ॥

अथ वा--

सप्तवर्षा यदा कन्या पञ्चहस्ता च वेदिका ।
पञ्चवर्षा यदा कन्या सप्तहस्ता च वेदिका ॥
वामे गृहस्य वेदी स्याद्विवाहे चोपनायने ।
सर्वेषामेव शाखीनां विना वाजसनेयिनाम् ॥

अथ व्रतबन्धवेदी—

प्राक्प्रत्यगर्द्धपदषट्कयुक्तामुदीच्ययाम्यानि पदानि पञ्च ।
एवंविधा ज्योतिषरत्ननिर्मिता बटोः शतायुर्भवतीह वेदिका ॥

अन्यः पक्षो धर्मप्रवृत्तौ—

आचार्यस्य पदैः षड्भिश्चतुर्भिरथ वा करैः ।
विस्तृता चतुरस्रा च बटोर्वेदी करोन्नता ॥

अथ वेद्याः पश्चिमभागे भित्तिलक्षणमाह । धर्मप्रवृत्तौ--

लम्बा भित्तिर्द्विहस्ता च द्वात्रिंशदङ्गुलोन्नता ।
प्राग्वद्वेद्या विवाहे च विस्तृता द्वादशाङ्गुला ॥
अष्टावष्टौ प्रकुर्वीत सोपानान्यथ पार्श्वयोः ।
तदग्रे कुण्डलाकारमिति यज्ञविदां मतम् ॥

सोपानकरणं पश्चिमभागे । वेद्याश्चतुर्हस्तपरिमितत्वं सोपानव्यतिरेकेण द्रष्टव्यम् । अथ प्राच्यशिष्टसम्मतं मण्डपादौ स्तम्भनिवेशनमाह—

सूर्येऽङ्गनासिंहघटेषु ६।६।७ शैवे
स्तम्भोऽलिकोदण्डमृगेषु ८।९।१० वायौ ॥
मीनाजकुम्भे ११।१२।१ निर्ऋतौ विवाहे
स्थाप्योऽग्निकोणे वृषयुग्मकर्के २।३।४। ॥

चूड़ारत्ने —

षष्ठे तृतीये नवमेऽह्नि लग्नतः पूर्वं न वर्णो न यवारमण्डपौ ॥ इति ।
तस्मादर्वाङ्मासमध्ये कार्यो यो राजमण्डपः ॥

ततस्तैलवन्दनं चूड़ारत्ने—

व्रते देवप्रतिष्ठायां विवाहे पुरुषस्त्रियोः ।
तैलं तन्मन्त्रतो धार्यं विमलं प्राङ्मुखस्थयोः ॥
रजकी तैलमादाय कन्यकामभिषिञ्चति ।
निशायाः प्रथमे यामे नागवल्लीदलेन तु ॥
शचीं सम्पूज्य विधिवत्ततस्तैलाभिषेचनम् ।
कन्यायाश्च तदुच्छिष्टतैलेनाभि(१) वरस्य च ॥
आदौ स्त्रीवरणं दानं तैलं वेदी च मण्डपम् ।
तस्माल्लग्नदिने सर्वं वरणाद्यन्तु कारयेत् ॥

एतत्सर्वमादौ कन्यागृहे कार्यं पश्चाद्वरगृहे कुर्यादित्यर्थः । कन्यापिता विवाहात्पूर्वदिने गणपतिपूजनादिनान्दीश्राद्धान्तं कुर्यात् । एवं वरपिताऽपि स्वगृहे कुर्यात् । तथा च शौनकः—

पुण्ये मूहूर्त्ते कुर्वीत विवाहं विधिवद्विजः ।
तदाभ्युदयिकं श्राद्धं कुर्यात्स्वस्ति च वाचयेत् ॥

विवाहात्पूर्वमिति शेषः । वरानयनमाह । ततः कन्यापिता सपत्नीकः स बान्धवो वरानयनार्थं वाहनं गृहीत्वा वरगृहमेत्य वरं यथाविभवं वस्त्रा-

(१) अभिषेचनमित्यर्थः ।

दिना पूजयेत् । ततो वरः कृतकौतुकमङ्गलश्चारुभूषणवेशो यथाविभवमश्वादियानेन श्रुतिवाद्यघोषैर्वधूगृहमागच्छेत् । उक्तं च विधानपारिजातके—

अपरेद्युः कृतस्नानो धृतधौताम्बरद्वयः ।
भूषितो गन्धमाल्याद्यैः शकुनेन समन्वितः ॥
कृतकौतुकवेशश्च मित्रबान्धवसंयुतः ।
यानं यथार्हमारुह्य यातव्यं च वधूगृहम् ॥

वरयानमाह हिरण्यकेशीये—"आनयत्यस्मै रथमश्वं हस्तिनं वेति" । अत्र विशेषमाह अध्यात्मरामायणे विश्वामित्रं प्रति जनकवचनम्—

ततोऽब्रवीन्मुनिं राजा सर्वशास्त्रविशारदः ।
भोः कौशिक मुनिश्रेष्ठ ! पत्रं प्रेषय सत्वरम् ॥
राजा दशरथः शीघ्रमागच्छतु सपुत्रकः ।
विवाहार्थं कुमाराणां सदारः सह मन्त्रिभिः ॥
तथेति प्रेषयामास दूतांस्त्वरित विक्रमान् ।
ते गत्वा राजशार्दूलं रामश्रेयो न्यवेदयन ॥
श्रुत्वा रामकृतं राजा हर्षेण महता वृतः ।
मिथिलागमनार्थाय त्वरयामास मन्त्रिणः ॥
गच्छन्तु मिथिलां सर्वे गजाश्वरथपत्तयः ।
रथमानय मे शीघ्रं गच्छाम्यद्यैव मा चिरम् ॥
वसिष्ठस्त्वग्रतो यातु सदारः सहितोऽग्निभिः ।
राममातॄः समादाय मुनिर्मे भगवान्गुरुः ॥
एवं प्रस्थाप्य सकलं राजर्षिर्विपुलं रथम् ।
महत्या सेनया सार्द्धमारुह्य त्वरितो ययौ ॥
आगतं राघवं श्रुत्वा राजा हर्षसमाकुलः ।
प्रत्युज्जगाम जनकः शन्तानन्दपुरोधसा ॥
यथोक्तपूजया पूज्यं पूजयामास सत्कृतम् ॥ इति ।

तद्द्वारि यथाचारं पतिपुत्रवतीभिर्वधूमात्रा च नीराजनाक्षतारोपणादिभिः

संस्कृतोऽन्तः प्रविश्य, तथा च विधानपारिजातके--

तस्य द्वाराद्बहिः स्थित्वा प्राङ्मुखोऽभिमुखागतैः ।
गृहीतपूर्णकुम्भादिपाणिभिर्वनिताजनैः ॥
कृताऽभ्युद्गमनो गेहं प्रविशेत्सह बन्धुभिः ॥ इति ।

देशान्तरे वधूगृहं चेत्तदाऽऽह चूडामणौ--

देशान्तरे विवाहश्चेन्मध्येऽद्रिर्वा महानदी ।
गव्यूतित्रयपर्यन्तं स्वगृहे देवतार्चनम् ॥

तथा च रेणुः--

देशान्तरे विवाहश्चेत्तत्र गत्वा भवेदिदम् ।
व्यवधानं महानद्यो गिरेर्वा व्यवधानतः ॥

"गव्यूतिः स्त्री क्रोशयुग"मित्यमरः । वधूवरयोर्भोजनविषये निर्णयमाह व्यासः—

भुक्त्वा समुद्वहेत्कन्यां सावित्रीग्रहणं तथा ।
उपोषितः सुतां दद्यादर्चिताय द्विजाय तु ॥

चूडामणौ--

भुक्त्वैव सुतामुपोषितनरो दद्याच्च सावित्रिकाम् ॥ इति ।

विधानपारिजाते बौधायनोऽपि--

"स्रग्वी भुक्तवान् प्रतोदपाणिरपदातिर्गत्वा बन्धुज्ञातिभिरतिथिवदर्चितः स्नातामहतवाससं गन्धानुलिप्तां स्रग्विणीं भुक्तवतीमिषुहस्तां वधूं समीक्षते" इति ॥

रात्रौ कन्यादानं ( चेत् ) तत्र भोजने निर्णयमाह—

कन्यादानं निशीथे चेद्दिवा भोजनमाचरेत् ।
उपोषितः सुतां दद्याद्ब्राह्मादिषु चतुर्ष्वपि ॥

स्मृत्यन्तरे—

कन्यादानं निशीथे चेद्दिवा भोजनमाचरेत् ।
पुनः स्नात्वा जपेद्देवीं पिता कन्यां प्रयच्छति ॥

अत्र रात्रौ स्नानं न निषिद्धं ज्योतिर्निबन्धे—

राहुपर्वणि विवाहकर्मणि स्थापने दिविषदां सुतोत्सवे ।
संक्रमे व्रतविधौ न निन्दिता स्नानदानविषये विभावरी ॥

वसिष्ठः—

पुत्रजन्मनि यज्ञे च तथा संक्रमणे रवेः ।
राहोश्च दर्शने स्नानं प्रशस्तं नान्यथा निशि ॥

इदानीं पूर्वोक्तो मधुपर्कः कार्यः । ततो वेद्यामग्निस्थापनम् । "उपलिप्त उद्धृतावोक्षितेऽग्निमुपसमाधाय" इति सूत्रम् । यत्राग्निस्थापनं तत्रोपालिप्ते उद्धृते अवोक्षिते उदकेनाभ्युक्षिते देशेऽग्निस्थापनम् । अत्रानेन पञ्चाग्निसंस्कारा लक्ष्यन्ते । ननु परिसमूहनादिरुक्तत्वात्किमर्थमुपलेपनादिकमुच्यते ! सत्यम् उच्यते "यत्र क्वचिद्धोम" इत्यनेनाप्राप्तिः–परिसमूहनादेरग्न्यर्थत्वाद्यत्र यत्राग्निस्थापनं तत्र तत्रैते भवन्ति, यथालिप्ते उपलिप्ते उद्धृते वा अवोक्षितेऽग्निमादधाति इति, "एष एवविधिर्यत्र क्वचिद्धोम" इत्यनेन च होमार्थमग्निस्थापने स्युः, अन्यत्र गृहान्तरेऽग्निगमने मथित्वाऽग्निस्थापने च न स्युः । किञ्च 'एष एव' इत्यनेन यत्र स्वस्थाने स्थितेऽग्नौ स्थालीपाकादिकं क्रियते तत्रापि पञ्चैते स्युः, तन्माभूदित्यनेन सूत्रेण ज्ञाप्यते । उक्तं च गृह्यकारिकायाम्—

उपलिप्ताद्युपादानात्केचित्परिसमूहनम् ।
वर्जयेयुरगृह्यार्थमारम्भोऽयमथापरे ॥
विवाहाद्या अगृह्याग्निविषया इत्युदाहृतम् ।
अपि यत्र क्वचिद्धोमः सूत्राच्च प्राप्तिरुच्यते ॥
समूहनादिपञ्चानां स्थालीपाकादिषु स्फुटम् ।
अप्राप्त्यै तस्य तेषामित्युपलिप्तादि सूत्रितम् ॥
स्थापनं मथिताग्नेः स्याद्रोहिण्यां पाणिपीडने ॥

उपलिप्तादिसूत्रेण स्थालीपाकादिषु परिसमूहनादेरप्राप्तिप्रज्ञप्त्यर्थमिदमिति कर्कः । उपलिप्त उद्धृतावोक्षिते देशेऽग्निमुपसमाधाय विवाहे

भवतीति भर्तृयज्ञेन सूत्रं योजितम्। "निर्मन्थ्यमेके विवाहे" सूत्रम्। एके आचार्याः विवाहे पाणिग्रहणे निर्मन्थ्यमारणेयमग्निमिच्छन्ति। "उदगयने" सूत्रम्। उदगयने उत्तरायणे विवाहो भवति। तथा च श्रीपतिः—

गृहप्रवेशत्रिदशप्रतिष्ठाविवाहचौलव्रतबन्धपूर्वम्।
सौम्यायने कर्म शुभं विधेयं यद्गर्हितं तत्खलु दक्षिणेऽपि॥

श्रीधरीयेऽपि—

शरद्वसन्तश्च शुभोऽग्रजानां ग्रीष्मश्च राजन्यविशोः प्रशस्तः।
शूद्रस्य वर्षाः शिशिरोऽखिलस्य लोकस्य पाणिग्रहणे प्रदिष्टः॥

यत्तु सार्वकालमेके विवाहमिति तद्गन्धर्वादिचतुष्टयविषयम्। तथा च गृह्यपरिशिष्टे "धर्म्येष्वेव विवाहेषु कालपरीक्षणं नाधर्म्येष्विति"। श्रीपतिरपि—

प्राजापत्यब्राह्मदैवार्षसंज्ञाः कालेषूक्तेष्वेव कार्या विवाहाः।
गान्धर्वाख्यश्चासुरो राक्षसश्च पैशाचो वा सर्वकालं विधेयः॥ इति।

अथ मासाः। तत्र नारदः—

माघफाल्गुनवैशाखज्येष्ठमासाः शुभावहाः।
मध्यमः कार्त्तिको मार्गशीर्षको निन्दिताः परे॥
न कदाचिद्दशर्क्षेषु भानोरार्द्राप्रवेशनात्।
विवाहो देवतानां च प्रतिष्ठा चोपनायनम्॥

तथा च वसिष्ठः—

आर्द्रादिके स्वातिविरामकाले नक्षत्रवृन्दे दशके स्थितेऽर्के।
विवाहचौलव्रतबन्धदीक्षासुरप्रतिष्ठादि न कार्यमेतत्॥

रत्नमालायामपि—

नाषाढप्रभृतिचतुष्टये विवाहो
नो पौषे न च मधुसंज्ञके विधेयः॥ इति।

तथा च मुहूर्त्तसर्वस्वे—

सौम्यायने रवौ चैत्रहीने माघादिपञ्चके।
आषाढाद्यत्रिभागे स्यान्मार्गशीर्षे परिग्रहः॥

मासानां फलान्याह वीरमित्रोदये वात्स्यः--

माघमासे भवेत्पूज्या कन्या सौभाग्यसंयुता ।
फाल्गुने च भवेत्साध्वी वैशाखे मासि पुत्रिणी ॥
धर्मयुक्ता भवेज्ज्येष्ठे सम्पन्ना कार्तिके भवेत् ।
देवपूजारता नित्यं मासे स्यात्सौम्यदैवते ॥
उक्तवर्जेषु मासेषु विवाहं प्राप्नुयाद्यदि ।
तदानीं कन्यका सा स्यात्सुतशीलार्थवर्जिता ॥

सौम्यदैवते-मार्गशीर्षे । तथा च श्रीधरः--

प्रशस्ताः सदा ज्येष्ठवैशाखमाघा-
स्तथा शस्यते फाल्गुनो वै मुनीन्द्रैः ।
विहायाधिमासं सदा दाक्षिणात्याः
सदा मार्गशीर्षं च सोर्जं वदन्ति ॥

मासश्चतुर्विधः सौरचान्द्रनाक्षत्रसावनभेदात् । तदुक्तं कल्पद्रुमे--

त्रिंशद्दिनं सावन आर्क्ष इन्दोर्भभोगतः संक्रमतस्तु सौरः ।
दर्शावधिश्चैन्दव एष मासः कृष्णादिको विन्ध्यत उत्तरस्याम् ॥

वसिष्ठः--

उद्वाहयज्ञोपनयप्रतिष्ठातिथिव्रतक्षौरमहोत्सवाद्यम् ।
पर्वक्रिया वास्तुगृहप्रवेशः सर्वं हि चान्द्रेण विगृह्यमेतत् ॥

ऋषिशृङ्गः--

विवाहव्रतयज्ञेषु सौरमासः प्रशस्यते ॥

वृद्धगर्गः--

विवाहादौ स्मृतः सौरो व्रतादौ सावनः स्मृतः ॥

यत्र सौरचान्द्राभ्यां शुद्धिरुपलभ्यते स उत्तमो विवाहः । एकतरपक्षावलंबेन (स) मध्यमः । देशविशेषेण व्यवस्था । ज्योतिर्निबन्धे--

तपतीकृष्णयोर्मध्ये मासश्चान्द्रः प्रशस्यते ।
अन्येषु सर्वदेशेषु सौरो व्रतविवाहयोः ॥

तथा—

विन्ध्याद्रेर्दक्षिणे भागे चान्द्रो मासः प्रशस्यते ।
उदग्भागे तु विन्ध्यस्य सौरमानं विधीयते ॥

अथ ज्येष्ठमासे ज्येष्ठस्य पुत्रस्य दुहितुर्वा निषेधमाह भारद्वाजः—

मार्गशीर्षे तथा ज्येष्ठे क्षौरं परिणयव्रतम् ।
आद्यपुत्रदुहित्रोश्च यत्नेन परिवर्जयेत् ॥

ज्येष्ठायाः कन्याया ज्येष्ठपुत्रेण सह विवाहो नैव स्यात् । तत्र गर्गः—

ज्येष्ठायाः कन्यकायाश्च ज्येष्ठपुत्रस्य वै मिथः ।
विवाहो नैव कर्तव्यो यदि स्यान्निधनन्तयोः ॥

मिहिरोऽपि—

ज्येष्ठस्य ज्येष्ठकन्याया विवाहो न प्रशस्यते ।
तयोरन्यतरे ज्येष्ठे ज्येष्ठमासो न शस्यते ॥

अनेनाद्यगर्भोत्पन्नयोर्वधूवरयोः सदा निषेध इत्युक्तम् । ज्योतिःसागरे—

कन्यावरौ यदि स्यातामाद्यगर्भसमुद्भवौ ।
तयोरेव भवेज्ज्येष्ठानक्षत्रं चापि वै यदि ॥
ज्येष्ठमासि भवेद्वाऽपि ज्येष्ठापञ्चकमित्यथ ।
कुर्याद्यस्तु नरो मोहादाशु मृत्युर्भवेत्तयोः ॥

वराहः—

द्वौ ज्येष्ठौ मध्यमौ प्रोक्तौ एकज्येष्ठः शुभावहः ।
ज्येष्ठत्रयं न कुर्वीत विवाहे सर्वसम्मतम् ॥

अस्यापवादमाह बृहस्पतिः—

मिथुने संस्थिते भानौ ज्येष्ठमासो न दोषकृत ॥

चण्डेश्वरः—

कृतिकास्थं रविं त्यक्त्वा ज्येष्ठे ज्येष्ठस्य कारयेत् ।
उत्सवादिषु कार्येषु दिनानि दश वर्जयेत ॥
दशाहं चैव गर्गस्तु त्रिदशाहं बृहस्पतिः ।
अवलोक्याग्निभं यावन्मुनिः प्राह पराशरः ॥ इति ।

इति ज्येष्ठमासविचारः ।

अथ जन्ममासादिविचारः ।

रत्नमालायाम्--

जन्मराशि न च जन्मभे तिथौ नैव जन्मदिवसेऽपि कारयेत् ।
आद्यगर्भदुहितुः सुतस्य वा ज्येष्ठमासि न च जातु मङ्गलम् ॥

शार्ङ्गधरः--

जन्मर्क्षे सति दारिद्र्यं वैरं जन्मतिथावपि ।
जन्ममासेऽपि दौर्भाग्यं जन्मलग्नं शुभावहम् ॥

जन्ममासप्रवृत्तिमाह ग्रहकौमुद्याम्--

आरभ्य जन्मदिवसाद्यावत्त्रिंशद्दिनं भवेत् ।
जन्ममासः स विज्ञेयः सर्वकर्मसु गर्हितः ॥

अथ व्यवस्थापवादः--

तपतीकृष्णयोर्मध्ये मासश्चान्द्रः प्रकीर्त्तितः ।
कृष्णाया दक्षिणे तीरे जन्मतो जन्ममासकः ॥
अन्येषु सर्वदेशेषु सौरो व्रतविवाहयोः ।

राजमार्त्तण्डः--

जन्ममासे तिथौ भे च विपरीतदले सति ।
कार्यं मङ्गलमित्याहुर्गर्गभार्गवशौनकाः ॥
जन्ममासनिषेधेऽपि दिनानि दश वर्जयेत् ।
आरभ्य जन्मदिवसाच्छुभाः स्युस्तिथयोऽपरे ॥

जातं दिनं दूषयते वसिष्ठो ह्यष्टौ च गर्गो नियतं दशात्रिः ।
जातस्य पक्षं किल भागुरिश्च शेषाः प्रशस्ता खलु जन्ममासे ॥

चण्डेश्वरः—

जन्मोदये जन्मसु तारकासु मासेऽथ वा जन्मनि जन्मभे वा ।
ऊढाङ्गनाऽनेकविधानि धत्ते सौख्यानि भोगं खलु बान्धवानाम् ॥

इदं द्वितीयगर्भोत्पन्नविषयम् । "आपूर्यमाणपक्षे" सूत्रम् । आपूर्यमाणपक्षः शुक्लपक्षः । अत्र विशेषमाह वसिष्ठः—

आपूर्यमाणपक्षे तु विवाहो ब्राह्मणस्य तु ।

इतरेषान्तु वर्णानां कृष्णपक्षे विधीयते ॥

"पुण्याहे" इति सूत्रम् । पुण्याहे ज्योतिःशास्त्रोपदिष्टे काले । अथ पञ्चाङ्गशुद्धिर्वीरमित्रोदये—

तिथिवारर्क्षकरणयोगाः पचाङ्गसंज्ञिताः ।
पञ्चाङ्गस्य च या शुद्धिः पञ्चशुद्धिरुदाहृता ॥
तच्छुद्धिहीने यत्कर्म तन्निरर्थकमीरितम् ।
त्यजेत्पञ्चाष्टिकं वाऽपि विषसंयुक्तदुग्धवत् ॥

पञ्च अष्टयो यस्मिन्निति पञ्चाष्टिः, अष्टिर्हानिः दोष इति यावत् ।

अथ तिथयः । वसिष्ठः—

एकादशी द्वितीया च पञ्चमी सप्तमी तथा ।
त्रयोदशी तृतीया च विवाहे तु शुभावहाः ॥

गर्गः—

फलं बहुविधं नित्यं पञ्चदश्यां विशेषतः ।
अमायां चैव रिक्तायां करणे विष्टिसंज्ञके ॥
यः करोति विवाहं स शीघ्रं याति यमालयम् ॥

शौनकः—

प्रीतिजननी द्वितीया प्रतिपत्कल्याणमङ्गली कथिता ॥ इति ।

अथ वाराः । व्यासः—

बुधजीवेन्दुशुक्राणां दिनैरेतैर्विवाहिता ।
कन्या सुखमवाप्नोति पुत्रारोग्यधनान्विता ॥

वृद्धगर्गः—

अर्कार्किभौमवाराणां दिनेषु कलहप्रिया ।
सापत्न्यं समवाप्नोति तुषारकरवासरे ॥

अथ नक्षत्राणि । वसिष्ठः—

तिस्रोत्तरा मूलमघान्त्यमैत्रप्राजेशचन्द्रार्कसमीरभेषु ।
सदा प्रशस्तः खलु कन्यकानां पाणिग्रहोऽन्येषु विवर्जितस्तु ॥

अत्र विशेषश्चतुर्वर्गचिन्तामणौ कालखण्डे—

आद्ये मघाचतुर्भागे नैर्ऋतस्याद्य एव च ।
रेवत्यन्तचतुर्भागे विवाहः प्राणनाशनः ॥

अथ योगाः । शौनकः—

व्यतीपातवैधृतिपरिघे शूले च वित्तहानिः स्यात् ।
सौभाग्यसुखानि स्युः प्रीत्यादिषु शेषयोगेषु ॥

अथ करणानि । बृहस्पतिः—

शकुन्यादिचतुष्केषु करणेष्वपि विष्टिषु ।
कुलिकेषु शुभं वर्ज्यमशुभान्येव कारयेत् ॥

अथ लग्नानि । श्रीधरीये—

श्रेष्ठास्तौलियमाङ्गनाघटधनुर्गोकर्किकण्ठीरवाः ।
मध्याः सौम्ययुतास्तथोर्ध्ववदनाः सर्वे विवाहे हिताः ॥

अथ नवांशफलम् । वसिष्ठः—

द्विभर्तृका मेषनवांशके स्याद्वृषांशके स्यात्पशुशीलयुक्ता ।
धनान्विता पुत्रवती तृतीये कुलीरकांशे कुलटाऽतिहिंस्रा ॥
सिंहांशके सा पितृमन्दिरस्था कन्यांशके वित्तयुता सुशीला ।
तुलांशके सर्वगुणास्पदा सा कीटांशके निःस्वतरा कुशीला ॥
चापांशकाद्ये धनिनी द्वितीयभागेऽन्यसक्ता मलिना गदात्मा ।
निःस्वा मृगांशे विगुणा घटांशे विभर्तृका योगरता विशीर्णा ॥
मीनांशके भर्तृसुखार्थहीना शुभग्रहैर्युक्तनिरीक्षितेऽपि ।
तस्मात्सदैवोक्तनवांशकेषु कुर्याद्विवाहं गुणसम्पवृद्ध्यै ॥
अन्त्यांशकश्चेद्विशुभांशकानां मध्ये य एको न शुभप्रदः सः ।
स एव वर्गोत्तमसंज्ञकश्चेच्छुभप्रदश्चाखिलमङ्गलेषु ॥
वर्गोत्तमं विनाऽन्त्यांशे विवाहो न शुभप्रदः ॥

अथ संक्रान्तिदोषः । चिन्तामणौ—

अयने विषुवे पूर्वं परं मध्यादिनं त्यजेत् ।
अन्यसंक्रमणे पूर्वाः पराः षोडशनाडिकाः ॥

अन्यच्च--

रव्यादीनां सङ्क्रमे राम३रामा ३
द्वौ २ नन्दाः ९ स्युस्तर्क६नाड्योऽष्ट ८ नागाः ८ ॥
नाड्योऽङ्काः स्युः ९ खाङ्कचन्द्राः १९० क्रमेण
वर्ज्याः प्रायोऽर्कस्य दुष्टाः प्रदिष्टाः ॥

अथ युतिदोषो, नारदः--

सूर्येण संयुते चन्द्रे दारिद्र्यं भवति ध्रुवम् ।
कुजेन मरणं व्याधिः सौम्येन त्वनपत्यता ॥
दौर्भाग्यं गुरुणा युक्ते सापत्न्यं भार्गवेण च ।
प्रकृत्या सूर्यपुत्रेण राहुणा कलहं सदा ॥
केतुना संयुते चन्द्रे नित्यं कष्टं दरिद्रता ।
पापग्रहयुते चन्द्रे दम्पत्योर्मरणं भवेत् ॥
शुभग्रहयुते चन्द्रे स्वोच्चस्थे मित्रराशिगे ।
दोषाय न भवेल्लग्नं दम्पत्योः श्रेयसे सदा ॥
स्वक्षेत्रगः स्वोच्चगो वा मित्रक्षेत्रगतो यदि ।
पापग्रहयुतश्चन्द्रः करोति मरणन्तयोः ॥

अथ विषघटिकादोषः । नारदीये--

खमार्गणा५० वेदपक्षाः२४ खरामा३० व्योमसागराः४० ।
अब्धिचन्द्रा४० रूपदस्राः२० खरामा३० व्योमबाहवः२० ॥
द्विरामाः३२ खाग्नयः३० शून्यदस्राः२० कुञ्जरभूमयः१८ ।
रूपपक्षा २१ व्योमदस्रा२० वेदचन्द्रा१४श्चतुर्दश१४ ॥
शून्यचन्द्रा१० वेदचन्द्राः१४ षडक्षा५६ वेदबाहवः२४ ।
शून्यदस्राः२० शून्यचन्द्राः१० पूर्णचन्द्रा१० गजेन्दवः१८ ॥
तर्कचन्द्रा१६ वेदपक्षाः२४ खरामा३०श्चाश्विभात्क्रमात् ।
आभ्यः पराः स्युर्घटिकाश्चतस्रो विषसंज्ञिकाः ॥

दैवज्ञमनोहरः—

तिथी१५षु५ नागा८ द्रि७ गिरी ७ षु५ वारिधि४
गजा८ द्रि७ दिक्१० पावक३ विश्व१३ वासवाः१४ ।
मुनि७ भसंख्या२७ प्रथमातिथेः क्रमात्
परं विषं स्याद्घटिकाचतुष्टयम् ॥
नख२० द्वयं२ द्वादश१२ दिक्१० च शैला७
बाणा५ श्च तत्त्वानि२५ यथाक्रमेण ॥
सूर्यादिवारेषु परं चतस्रो
नाड्यो विषं स्यात्खलु वर्जनीयम् ॥
विवाहादिषु कार्येषु विषनाडीश्च वर्जयेत् ॥
केन्द्रकोणेऽङ्गहीने चेदिन्दुर्विषविनाशकृत् ॥

अथ खार्ज्जूरिकदोषः । तल्लक्षणमाह श्रीपतिः—

एकामूर्ध्वगतान्त्रयोदश तथा तिर्यग्गताः स्थापये-
द्रेखाचक्रमिदं बुधैरभिहितं खार्ज्जूरिकं तत्र तु ॥
व्याघातादिषु मूर्ध्नि भं तु कथितं तत्रैकरेखास्थयोः
सूर्याचन्द्रमसोर्मिथो निगदितो दृक्पात एकार्गलः ॥ इति ।

अस्यार्थमाह स एव—

व्याघातशूलपरिघव्यतिपातपूर्वगण्डातिगण्डकुलिशेषु सवैधृतेषु ।
आदित्यचान्द्रपितृसार्पभदस्रमूलमैत्राख्यतिष्यसुरवर्द्धकिभानि मूर्द्धिन ।

पूर्वो विष्कुभः, कुलिशं वज्रः, सुरवर्द्धकिः चित्रा, शेषाः प्रसिद्धाः । एतेषु पूर्वार्द्धोक्तेषु व्याघातादिषु नवसु योगेष्वन्यतमेन योगेन यथाक्रममपरार्द्धगतेषु पुनर्वस्वादिषु नक्षत्रेषु अन्यतमं नक्षत्रं योजयित्वा तन्नक्षत्रं मूर्ध्नि लेखनीयम् । तदारभ्य प्रादक्षिण्येन सर्वाणि नक्षत्राणि सर्वेषु रेखाग्रेषु लेखनीयानि । तत्र सूर्याचन्द्रमसौ एकरेखास्थौ यदा भवेतां तदा मिथस्तद्दृष्टिपातजनित एकार्गलदोषो भवेदिति । एकार्गल इति तस्यैव संज्ञान्तरम् ।

( एकार्गल चक्रम् )

| | १ | |
|---|---|---|
| २८ | | २ |
| २७ | | ३ |
| २६ | | ४ |
| २५ | | ५ |
| २४ | | ६ |
| २३ | | ७ |
| २२ | | ८ |
| २१ | | ९ |
| २० | | १० |
| १९ | | ११ |
| १८ | | १२ |
| १७ | | १३ |
| १६ | | १४ |
| | १५ | |

अथ दशयोगचक्रम् । व्यवहारोच्चये—

शून्यै० क१ वेद४ ऋतवो६ दश१० रुद्र११ युक्ता
पञ्चैक१५ नागशिशिराश्च१८ नवैक१९ खाश्वि२० ।
सोऽप्यर्क्षमिन्दुयुतभानुसमन्वितं च
भागश्च देय उडुभि२७र्दशयोगचक्रम् ॥

लल्लः—

मरुन्मेघाग्निभूपाला मृत्युश्चौरो रुजोऽशनिः ।
कलिर्हानिर्दशोद्वाहे सन्त्याज्यास्ते सदा बुधैः ॥

अस्यापवादः—

लग्नेशवागीशसुरारिवन्द्यैर्बलान्वितैः संयुतवीक्षिताश्च ।
कार्पाससङ्घा इव वह्निमध्ये दशाख्ययोगा विलयं प्रयान्ति ॥

व्यासः—

गुरुणा भृगुणा वाऽपि संयुक्तं दृष्टमेव च ।

दशयोगसमायुक्तमपि लग्नं शुभावहम् ॥

अथ महापातदोषः । नारदीये---

यस्मिन्दिने महापातस्तद्दिनं वर्जयेच्छुभे ।
अपि सर्वगुणोपेतं दम्पत्योर्मृत्युदं यतः ॥

सङ्ग्रहे तु--

महापातस्य वैधृत्या यावत्कालं स्थितिर्भवेत् ।
तावत्कालं त्यजेत्पूर्वं तावत्कालं त्यजेत्परम् ॥

महापातवैधृतिलक्षणन्तु सूर्यसिद्धान्ते---

एकायनगतौ स्यातां सूर्याचन्द्रमसौ यदा ।
तद्युतौ मण्डले क्रान्त्योस्तुल्यत्वे वैधृताभिधः ॥
विपरीतायनगतौ चन्द्रार्कौ क्रान्तिलिप्तिकाः ।
समास्तदा व्यतीपातो भगणार्द्धे तयोर्युतौ ॥
तुल्यांशजालसम्पर्कात्तयोस्तु प्रवहाहतः ।
तादृक्क्रोधोद्भवो वह्निर्लोकाभावाय जायते ॥

सिद्धान्तशिरोमणौ---

पातस्थितिकालान्तर्मङ्गलकृत्यं न शस्यते तज्ज्ञैः ।
स्नानजपहोमदानादिकमत्रोपैति खलु वृद्धिम् ॥

अथ वेधविचारः । स तु पञ्चशलाकासप्तशलाकादिषु ज्ञेयः ।

तत्र पञ्चशलाकावेधमाह--

अश्विनी पूर्वफाल्गुन्या भरणी चानुराधया ।
अभिजिच्चैव रोहिण्या कृत्तिका च विशाखया ॥
मृगश्चोत्तरषाढेन पूर्वाषाढा तथाऽऽर्द्रया ।
पुनर्वसुश्च मूलेन तथा पुष्यो हि ज्येष्ठया ॥
धनिष्ठया तथाऽश्लेषा मघाऽपि श्रवणेन च ।
रेवत्युत्तरफाल्गुन्या हस्तेनोत्तरभाद्रपत् ॥
स्वात्या शतभिषा विद्धा चित्रया पूर्वभाद्रपत् ।

विद्धान्येतानि वर्ज्यानि विवाहे भानि कोविदैः ॥
रविवेधे च वैधव्यं कुजवेधे कुलक्षयम् ।
बुधवेधे भवेद्वन्ध्या प्रव्रज्या गुरुवेधतः ॥
अपुत्रा शुक्रवेधेन सौरे चन्द्रे च दुःखिता ।
राहौ पररता नारी केतौ स्वच्छन्दचारिणी ॥

अथ चरणवेधमाह—

वेधमाद्यन्तयोरङ्घ्र्योरन्योन्यद्वितृतीययोः ।
पादमेव शुभैर्विद्धे पापविद्धेऽखिलं त्यजेत् ॥
क्रूरैरपि त्यजेत्पादं केचिदूचुर्महर्षयः ।
उपान्त्यपादो ह्यभिजिच्छ्रवणाद्यघटीयुगम् ॥

( पञ्चशलाकाचक्रम् )




अथ सप्तशलाकावेधः—

पूर्वापराः सप्त रेखास्तथा याम्योत्तराः कुरु ।
ईशानकृत्तिकादीनि साभिजित्सहितं लिख ॥
एकरेखास्थयोर्वेधं सर्वकार्ये विलोकयेत् ।
वधूप्रवेशने दाने वरणे पाणिपीडने ॥
वेधः पञ्चशलाकाख्योऽन्यत्र सप्तशलाककः ॥

( सप्तशलाकाचक्रम् )

| | कृ. | रो. | मृ. | आ. | पु. | पु. | अ. | |
|---|---|---|---|---|---|---|---|---|
| भ. | | | | | | | | म. |
| अ. | | | | | | | | पू. |
| रे. | | | | | | | | उ. |
| उ. | | | | | | | | ह. |
| पू. | | | | | | | | चि. |
| श. | | | | | | | | स्वा. |
| ध. | | | | | | | | वि. |
| | श्र. | अ. | उ. | पू. | मू. | ज्ये. | अ. | |

अस्यापवादः । वशिष्ठः—

लग्ने गुरुः सौम्ययुतेक्षितो वा लग्नाधिनाथो भवगस्तथा वा ।
कालाख्यहोरा तु यदा शुभस्य भवेद्यदोषस्य तदा हि भङ्गः ॥

उद्वाहतत्त्वेऽपि—

सद्दग्युक्तनुगे शुभे व्यथभयं नो वाऽऽयगे लग्नपे ।
होरायां च शुभेऽथ वा शशिनि सद्दृष्टेऽपि कार्यैरुडोः ॥इति॥

कश्यपः—

क्रूरविद्धं युतं धिष्ण्यं क्रूराक्रान्तं च कृत्स्नभम् ।
मणिहेममयं हर्म्यं भूताक्रान्तमिव त्यजेत् ॥

अन्यच्च—

क्रूरैर्विमुक्तं भोग्यर्क्षं क्रूराक्रान्तं च विद्धभम् ।
मुक्ता यावन्न शशिना मुक्तं तावन्न शोभनम् ॥

अथ लत्ता । श्रीपतिः—

ऋक्षं द्वादशमुष्णरश्मिरवनीसूनुस्तृतीयं गुरुः
षष्ठं चाष्टममर्कजः स्वपुरतो हन्ति स्फुटं लत्तया ।
पश्चात्सप्तममिन्दुजः स्वनवमं राहुः सितः पञ्चमं
द्वाविंशं परिपूर्णमूर्त्तिरुडुपः सन्ताडयेन्नेतरः ॥

पुरः प्रेरिता लत्ता अग्रस्थस्य पृष्ठे लगति । पश्चात्प्रेरिता अग्रे लगति । उक्तं च विवाहवृन्दावने—

इति सति द्युसदामभिलत्तने यदनुलत्तनमुक्तमृषिव्रजैः।
तदुडुपश्चिमपूर्वविभागयोरनधिकाधिकदोषविवक्षया॥

वराहः—

रविलत्ता वित्तहरी कौजी विनिर्दिशेन्मरणम्।
चान्द्री नाशं कुर्याद्बौधी नाशं वदत्येवम्॥
सौरी मरणं कथयति बन्धुविनाशं बृहस्पतेर्लत्ता।
मरणं लत्ता राहोः कार्यविनाशं भृगोर्वदन्ति बुधाः॥

अथोपग्रहाः—

सूर्यभात्पंच ५ सप्त ७ ष्ट ८ दि १०-
गिन्द्र १४ तिथयो १५ धृतिः १८।
नवेन्दवः१९ स्वर्गतः२१ स्युः पञ्च
२१।२२।२३।२४।२५ नो भान्युपग्रहाः॥

अथ पातः—

हर्षणवैधृतिसाध्यव्यतीपातगण्डशूलयोगानाम्।
अन्ते यन्नक्षत्रं पातेन निपातितं तत्स्यात्॥

पातो नाम चण्डीशचण्डायुधम्। अथ बाणः—

रस ६ गुण ३ शशि १ नागा ८ ब्ध्या ४ ढ्यसंक्रान्तियातांशकमितिरथ तष्टाङ्कैः९र्यदा पञ्च शेषः॥
रुगनलनृपचौरं मृत्युसंज्ञश्च बाणो
नवहृत९शरशेषे५शेषकैक्ये सशल्यः॥

द्वितीयप्रकारः—

लग्नेनाढ्यायाततिथ्यङ्क ९ तष्टाः
शेषे नाग८ब्ध्य४ब्धि४तर्के६न्दु १ संख्ये।
रोगो वन्ही राजचौरौ च मृत्यु-
र्बाणश्चायं दाक्षिणात्ये प्रसिद्धः॥
नृपाख्यं नृपसेवायां गृहगोपेऽग्निपञ्चकम्।
याने चौरं व्रते रोगं त्यजेन्मृत्युं करग्रहे॥

अथ वज्रः--

तिथिं वारं च नक्षत्रं नवभिश्च समन्वितम् ।
सप्तभि७स्तु हरेद्भागं शेषाङ्के फलमादिशेत् ॥
त्रि३शेषे तु जलं विद्यात्पञ्च५शेषे प्रभञ्जनम् ।
सप्त७शेषे वज्रपातं ज्ञेयं वज्रस्य लक्षणम् ॥

एषामपवादः—

उपग्रहेषु लत्तायां तथा चण्डायुधाह्वये ।
ग्रहोऽस्ति यत्प्रमाणेंऽशे विद्धोंऽशस्तत्प्रमाणकः ॥

अयं परिहारः खार्ज्जूरकेऽपि द्रष्टव्यः । ज्योतिर्निबन्धे--

एकार्गलोपग्रहपातलत्ताजामित्रकर्तर्युदयास्तदोषाः ।
नश्यन्ति चन्द्रार्कबलोपपन्ने लग्ने यथार्काभ्युदयेऽतिदोषाः ॥
उपग्रहर्क्षं कुरुबाल्हिकेषु कलिङ्गवङ्गेषु च पातितं भम् ।
सौराष्ट्रसाल्वेषु च लत्तितं भं त्यजेत्तु विद्धं किल सर्वदेशे ॥

अथाकालवृष्टिदोषः । मुहूर्त्तचिन्तामणौ--

पौषादिमासेषु चतुर्षु वृष्टिर्भवेद्यदाऽकालभवा हि वृष्टिः ।
पदाङ्किता स्यात्पशुमर्त्यपादैर्धरा तदा वृष्टिजदोषमाहुः ॥
अकालवृष्टिप्रभवः स दोषः करोति मृत्युं वरकन्ययोश्च ।
सीतावियोगप्रभवः सुदीर्घः कोपो यथा दाशरथेर्दशास्यम् ॥

अथ गण्डान्तदोषः । नारदीये--

पूर्णानन्दाख्ययोस्तिथ्योः सन्धिर्नाडीद्वयं तथा ।
गण्डान्तं मृत्युदं जन्मयात्रोद्वाहे व्रतादिषु ॥

अथ नक्षत्रगण्डान्तः--

सार्पेन्द्रपौष्णभेष्वन्त्यषोडशांषा भसन्धयः ।
तदग्रभेष्वाद्यपादा भानां गण्डान्तसंज्ञकाः ॥
उक्तं च सन्धित्रितयं गण्डान्ते त्रितयं महत् ।
मृत्युप्रदं जन्मयानविवाहस्थापनादिषु ॥

अथ लग्नगण्डान्तम्—

कुलीरसिंहयोः कीटचापयोर्मीनमेषयोः ।
गण्डान्तमन्तरालं स्याद्घटिकार्द्धं मृतिप्रदम् ॥

अथ दुर्मुहूर्त्तदोषः । वीरमित्रोदये—

भास्करादिषु वारेषु ये मुहूर्त्ताश्च निन्दिताः ।
विवाहादिषु ते वर्ज्या अपि लक्षगुणैर्युताः ॥

मुहूर्त्तलक्षणमाह कश्यपः—

अह्नः पञ्चदशो भागो मुहूर्त्तोऽथ तथा निशि ।

तांश्चाह श्रीपतिः—

रुद्राहिमित्रपितरो वसुवारिविश्वे
वेधा विधिः शतमखः पुरुहूतवह्नी ॥
नक्तश्चरेशवरुणार्यमणो भगश्च
प्रोक्ता दिने दश च पञ्च तथा मुहूर्त्ताः ।

निशामुहूर्त्ता गिरिशाजपादाहिर्बुध्न्यपूषाऽश्वियमाग्नयश्च ।
विधातृचन्द्रादितिजीवविष्णुतिग्मद्युतित्वष्टृसमीरणाश्च ॥
रवावर्यमा ब्रह्म रक्षश्च सोमे कुजे वह्निपित्र्यं बुधे चाभिजित्स्यात्।
गुरौ तापरक्षौ भृगौ ब्राह्मपित्र्ये शनावीशसर्पौ मुहूर्त्ता निषिद्धाः ॥

अथ वारदोषाः । नारदः—

न हिता वारदोषा ये सूर्यवारादिषु क्रमात् ।
अपि सर्वगुणोपेतास्ते वर्ज्याः सर्वमङ्गले ॥

मुहूर्त्तसर्वस्वे—

अर्कवारे चतुर्थश्च सोमे सप्तमितस्तथा ।
द्वितीयो भौमवारे तु बुधवारे तु पञ्चमः ॥
अष्टमो गुरुवारे स्यात्तृतीयः शुक्रवासरे ।
शनौ षष्ठो ह्यर्धयामः शुभे त्याज्यो मनीषिभिः ॥
प्रहरस्य चतुर्थांशं रविवारे चतुर्दशम् ।
सोमे तु द्वादशं भौमे दशमं च बुधेऽष्टमम् ॥

षष्ठार्कं वेदनवममेकनेत्रं रवेर्दिनात् ।
दुर्मुहूर्त्तं दिवा रात्रावष्टमं भृगुसोमयोः ॥
भौमवारे सप्तमं च सर्वकार्ये विलोकयेत् ।

चिन्तामणावपि—

कुलिकः कालवेला च यमघण्टश्च कण्टकः ।
वाराद्द्विघ्ने क्रमान्मन्दे बुधे जीवे कुजे क्षणः ॥

( स्पष्टबोधार्थमेतेषां चक्रम् )

| वासराः सूर्यादिकाः | सू. | चं. | मं. | बु. | गु. | शु. | श. |
|---|---|---|---|---|---|---|---|
| कुलिकः | १४ | १२ | १० | ८ | ६ | ४ | २ |
| कालवेला | ८ | ६ | ४ | २ | १४ | १२ | १० |
| यमघण्टः | १० | ८ | ६ | ४ | २ | १४ | १२ |
| कण्टकः | ६ | ४ | २ | १४ | १२ | १० | ८ |
| अर्द्धयामघटिकाः | ४ | ७ | २ | ५ | ८ | ३ | ६ |

अस्यापवादमाह गर्गः—

विन्ध्यस्योत्तरकूले तु यावदा तु हिमालयम् ।
यमघण्टकदोषोऽस्ति नान्यदेशेषु विद्यते ॥
मत्स्याङ्गमगधान्ध्रेषु यमघण्टस्तु दोषकृत् ।
काश्मीरे कुलिकं दुष्टमर्धयामस्तु सर्वतः ॥

नारदः—

बृहस्पतिः केन्द्रगो वा शुक्रो वा यदि वा बुधः ।
एतेषां दोषसङ्घानां करोत्येव न संशयः ॥
गुरुरेकोऽपि लग्नस्थः सकलं दोषसञ्चयम् ।
विनाशयति घर्मांशुरुदितस्तिमिरं यथा ॥ इति ।

चिन्तामणिटीकायामपि--

वारेशे सबले वापि बलाढ्ये लग्नगे शुभे ।
कुलिको दिनदोषस्तु विनश्यति न संशयः ॥

अथ लग्नानामन्धादिदोषाः । वशिष्ठः—

मेषो वृषो मृगेन्द्रश्च दिवसेऽन्धाः प्रकीर्त्तिताः ।
नृयुक्कर्कटकन्याश्च रात्रावन्धाः प्रकीर्त्तिताः ॥
तुला च वृश्चिकश्चैव दिवसे बधिरौ तथा ।
धनुश्च मकरश्चैव बधिरौ निशि कीर्त्तितौ ॥
कुम्भमीनौ च पङ्गू द्वौ दिवा रात्रौ यथाक्रमम् ॥

अनेन तस्मिन्कालेऽन्धादिलग्नानि वर्ज्यानीत्यर्थः ।

दारिद्र्यं बधिरतनौ दिवाऽन्धलग्ने
वैधव्यं शिशुमरणं निशान्धलग्ने ।
पङ्ग्वङ्गे निखिलधनानि नाशमीयुः
सर्वत्राधिपगुरुदृष्टिभिर्न दोषः ॥

एषामपवादमाह कश्यपः--

काणपङ्ग्वन्धबधिरमासशून्याश्च राशयः ।
गौडमालवयोस्त्याज्या अन्यदेशे न गर्हिताः ॥

अथोदयास्तशुद्धिः । तत्र नारदः--

लग्नलग्नांशकौ स्वस्वपतिना वीक्षितौ युतौ ।
न चेद्वाऽन्योन्यपतिना शुद्धमित्रेण वा तथा ॥
वरस्य मृत्युः स्यात्ताभ्यां सप्तसप्तोदयांशकौ ।
एवं तौ न युतौ दृष्टौ मृत्युर्वध्वाः करग्रहे ॥

अथाष्टमलग्नदोषः--

दम्पत्योरष्टमं लग्नमष्टमो राशिरेव च ।
यदि लग्नगतः सोऽपि दम्पत्योर्मरणप्रदः ॥
स राशिः शुभसंयुक्तो लग्नं वा शुभसंयुतम् ।
लग्नं विवर्जयेद्यत्नात्तदंशांश्च तदीश्वरान् ॥

दम्पत्योर्द्वादशं लग्नं राशिर्वा यदि लग्नगः ।
अर्थहानिस्तयोर्यस्मात्तदंशस्वामिनं त्यजेत् ॥
जन्मराश्युद्गमं चैव जन्मलग्नोदयं शुभम् ।
तयोरुपचयस्थानं यदि लग्नगतं शुभम् ॥

अस्यापवादमाहतुः कश्यपबृहस्पती--

जन्मेशाष्टमलग्नेशौ मिथो मित्रे व्यवस्थितौ ।
जन्मराश्यष्टमर्क्षोत्थो दोषो नश्यति भावतः ॥

कालप्रदीपे--

कर्तुः षष्ठं त्यजेल्लग्नं क्षौरोद्वाहगतीर्विना ।
मृतिं व्ययं च सर्वत्र एकमित्राधिपादतः ॥ इति ।

गुरुः—

लग्नादष्टमराशीशः केन्द्रगः शुभवीक्षितः ।
यद्यप्यष्टमलग्नोत्थं दोषमाशु व्यपोहति ॥
मीनोक्षकर्कालिमृगस्त्रियोऽष्टमं
लग्नं यदा नाष्टमदोषकृद्भवेत् ॥

अथ षड्वर्गबलम् । नारदीये--

त्रिंशद्भागात्मकं लग्नं होरा तस्यार्द्धमुच्यते ।
लग्नत्रिभागो द्रेष्काणो नवांशोऽपि नवांशकः ॥
द्वादशांशो द्वादशांशस्त्रिंशांशस्त्रिंशदंशकः ।
षड्वर्गाः कथिता ह्येते तेषामीशा इमे स्मृताः ॥
मेषवृश्चिकयोर्भौमस्तुलावृषभयोः सितः ।
कन्यामिथुनयोर्बौधः कर्कटस्य पतिः शशी ॥
चापान्त्ययोर्गुरुः स्वामी शनिर्मकरकुम्भयोः ।
रविः सिंहस्य वै तेषामंशानामाधिपा इमे ॥
शुक्रचन्द्रज्ञगुरवः शुभा ह्यन्ये शुभेतराः ।
क्षीणः शशी तथाऽन्ये च पापयुक्तो बुधोऽशुभः ॥
होरयोरोजराशौ तु रवीन्दू क्रमतः पती ।

समराशौ तु चन्द्राकौं होरेशौ क्रमतो वदेत् ॥
स्युर्द्रेष्काणेषु चाद्येषु नव राशीश्वराः क्रमात् ।
नवमांशा मेषसिंहचापेष्वजादयः क्रमात् ॥
क्रमाद्गोमृगकन्यासु ज्ञेयाः स्युर्मकरादयः ।
तुलामिथुनकुम्भेषु स्युः क्रमेण तुलादयः ॥
अलिकर्कटमीनेषु क्रमात्स्युः कर्कटादयः ।
लग्नराशिं समारभ्य द्वादशांशेश्वराः क्रमात् ॥
कुजार्कीज्यज्ञशुक्राणां बाणेष्वष्टाद्रिमार्गणाः ।
भागाः स्युर्विषमे ते तु समराशौ विपर्ययात् ॥
सौम्यः स्वमित्रजः श्रेष्ठो रिपुक्रूरभवोऽशुभः ।
क्रूरमित्रभवो मध्यो मिश्रैर्मिश्रफलं च तैः ॥

षड्वर्गापवादः । चूडामणौ—

मुहूर्त्तलग्नषड्वर्गकुनवांशग्रहोद्भवाः ।
ये दोषास्तान्निहन्त्येको यत्रैकादशगः शशी ॥

अथ कर्तरीदोषः । नारदीये—

लग्नस्य पृष्ठाग्रगयोरसाध्वोः सा कर्तरी स्यादृजुवक्रयोश्च ।
तावेव शीघ्रौ यदि वक्रचारौ न कर्तरी चेति पितामहोक्तिः ॥

लग्नाद्व्रिरिःफगौ क्रूरौ त्रयमेव समांशकम् ।
तदा कर्तरिदोषोऽयं नान्यथा भावजं फलम् ॥
क्रूरग्रहमध्यगते लग्ने चन्द्रेऽथवा क्रग्रहणम् ।
ते यमसदनाभिमुखं गमनं वाञ्छन्ति कन्यायाः ॥

कर्तरीदोषापवादः । वशिष्ठः—

पापयोः कर्तरीकर्त्रोर्नीचशत्रुगृहस्थयोः ।
यदा चास्तगयोर्वाऽपि कर्तरी नैव दोषदा ॥
विधोर्धनायगे शुभग्रहेऽथ वाऽन्त्यगे गुरौ ।
न कर्तरी भवत्यहो जगाद बादरायणः ॥

अथ जामित्रदोषविचारः--

जामित्रं द्विविधं प्रोक्तं गर्गगालवगौतमैः ।
तस्माल्लग्नाच्च चन्द्राच्च जामित्रं परिवर्जयेत् ॥
लग्नस्थाः शुभखचराः कुर्वन्ति विवाहिताम् ।
सप्तभिरब्दैः क्रूराश्च विलग्नगा विधवाम् ॥
सप्तमगाः सकलखगाः सप्तभिरब्धैः सप्तमासैश्च ।
दम्पत्योः सह मरणं यमरक्षितमपि कुर्वन्ति ॥
शशिलग्ननवांशकात्खलो यदि खेटः शरसायकां२५शके ।
अयन्मन्यगुणैर्न हन्यते निबिडैरत्युपसर्गडम्बरः ॥

अथ जामित्रापवादः--

स्वोच्चेऽथ वा स्वभवने स्फुरदंशुजालः
सौम्यालये हितगृहे शुभवर्गगो वा ।
जामित्रकारिपरिचिन्तितदोषराशिं
हत्वा ददाति बहुशः सुखमेव चन्द्रः ॥

ज्ञानमञ्जर्याम्--

लग्नाधिपः सप्तमराशिसंस्थः क्रूरोऽपि सौम्यो यदि वा विवाहे ।
तदा महादोषशतं निहन्ति पुत्रादिसौख्यं सुभगां करोति ॥

जामित्रगो यदि भवेदुशना बुधश्च
गीर्वाणवन्द्यसचिवः सितपक्षचन्द्रः ।
कन्याविवाहसमये परिहृत्य दोषा-
न्सौभाग्यदाः शुभगदाः खलु काव्यमुख्याः ॥

अथ रिःफषडष्टेन्दुदोषः । वीरमित्रोदये--

षडष्टरिःफगे चन्द्रे लग्नादोषः स्वसंज्ञकः ।
तल्लग्नं वर्जयेद्यत्नाज्जीवशुक्रसमन्वितम् ॥
उच्चगे नीचगे वाऽपि मित्रगे शत्रुराशिगे ।
अपि सर्वगुणोपेतं दम्पत्योर्निधनप्रदम् ॥

अस्यापवादमाह वशिष्ठः--

जन्मेशमृत्यू राशीशौ मिथो मित्रे यदा तदा।
जन्माष्टमर्क्षे चन्द्रश्च दोषो भङ्गमवाप्नुयात् ॥

अथ भृगुषष्ठदोषः। नारदीये—

भृगुषष्ठाख्ययोगो दोषो लग्नात्षष्ठगते सिते।
उच्चगेऽशुभसंयुक्ते तल्लग्नं सर्वथा त्यजेत् ॥

अस्यापवादमाह--

नीचगते तुरीये वा शत्रुक्षेत्रगतेऽपि वा।
भृगुषट्कस्थितो दोषो नास्ति तत्र न संशयः ॥

अथ कुजाष्टमदोषः। नारदीये--

कुजाष्टमो महादोषो लग्नादष्टमगे कुजे।
शुभत्रययुतं लग्नं त्यजेत्तत्तुङ्गगे यदि ॥ इति।

अस्यापवादः--

अस्तगे नीचगे भौमे शत्रुक्षेत्रगतेऽपि वा।
कुजाष्टमोद्भवो दोषो न किञ्चिदपि विद्यते ॥

अथ भावफलान्युच्यन्ते। तत्र वराहः--

मूर्त्तौ करोति विधवां दिनकृत्कुजश्च
राहुर्विपन्नतनयां रविजो दरिद्राम्।
शुक्रः शशाङ्कतनयश्च गुरुश्च साध्वी-
मायुःक्षयं च कुरुतेऽथ विभावरीशः ॥
कुर्वन्ति भास्करशनैश्चरराहुभौमा
दारिद्र्यदुःखमतुलं नियतं द्वितीये।
वित्तेश्वरीमविधवां गुरुशुक्रसौम्या
नारीं प्रभूततनयां कुरुते शशाङ्कः ॥
सूर्येन्दुभौमगुरुशुक्रबुधास्तृतीये
कुर्युः सदा बहुसुतां धनभागिनीं च।

व्यक्तं दिवाकरसुतः सुभगां करोति
मृत्युर्ददाति नियतं खलु सैंहिकेयः ॥
स्वल्पं पयःस्रवति सर्वसुते चतुर्थे
दौर्भाग्यमुष्णकिरणः कुरुते शशी च ।
राहुः सपत्नमपि च क्षितिजोऽल्पवित्तां
दद्याद्भृगुः सुरगुरुश्च बुधश्च सौख्यम् ॥
नष्टात्मजां रविकुजौ खलु पञ्चमस्थौ
चन्द्रात्मजो बहुसुतां गुरुभार्गवौ च ।
राहुर्ददाति मरणं शनिरुग्ररोगान्
कन्याविनाशमचिरात्कुरुते शशाङ्कः ॥
षष्ठाश्रिताः शनिदिवाकरराहुजीवाः
कुर्युः कुजश्च सुभगां श्वशुरेषु भक्ताम् ।
चन्द्रः करोति विधवामुशना दरिद्रा-
मर्घां शशाङ्कतनयः कलहप्रियां च ॥
सौर्यारजीवबुधराहुरवीन्दुशुक्रा
दद्युः प्रसह्य खलु सप्तमराशिसंस्थाः ।
वैधव्यबन्धनकुलक्षयवित्तनाशं
व्याधिप्रवासमरणानि यथाक्रमेण ॥
स्थानेऽष्टमे गुरुबुधौ नियतं वियोगं
मृत्युं शशी भृगुसुतश्च तथैव राहुः ।
सूर्यः करोत्यविधवां सुरुजां महीजः
सूर्यात्मजो धनवतीं पतिवल्लभां च ॥
धर्मे स्थितां भृगुदिवाकरभूमिपुत्रा
जीवश्च धर्मनिरतां शशिजः सरोगाम् ।
राहुश्च सूर्यतनयश्च करोति वन्ध्यां
कन्याप्रसूतिजठरां कुरुते शशाङ्कः ॥

राहुर्नभस्थलगतो विधवां करोति
पापे रतिं दिनकरश्च शनैश्चरश्च।
मृत्युं कुजोऽर्थरहितां कुलटां च चन्द्रः
शेषा ग्रहा धनवतीं सुभगां च कुर्युः॥
आये रविर्बहुसुतां सधनां च चन्द्रः
पुत्रान्वितां क्षितिसुतो रविजो धनाढ्याम्।
आयुष्मतीं सुरगुरुः शशिजः समृद्धां
राहुः करोत्यविधवां भृगुजोऽर्थयुक्ताम्॥
अन्ते गुरुर्धनवतीं दिनकृद्दरिद्रां
चन्द्रो धनक्षयकरीं कुलटां च राहुः।
साध्वीं भृगुः शशिसुतो बहुपुत्रपौत्रां
यां च प्रशस्तहृदयां रविजः कुजश्च॥ इति।

अथ गोधूलिकं लग्नमाह—

घटीलग्नं यदा नास्ति तदा गोधूलिकं स्मृतम्।
शूद्रादीनां बुधाः प्राहुर्न द्विजानां कदाचन॥

भूपालवल्लभे—

विप्रस्य घटिकाऽलाभे दातव्यं गोरजो बुधैः।
सङ्कीर्णे गोरजः शस्तं पदेषु द्वितयं शुभम्॥

नारदः—

प्राच्यानां च कलिङ्गानां मुख्यं गोधूलिकं स्मृतम्।
गान्धर्वादिविवाहेषु वैश्योद्वाहेषु योजयेत्॥

अथ गोधूलिकसमयज्ञानमाह—

पिण्डीभूते दिनकृति हेमन्तर्तौ स्यादर्धास्ते तत्समये गोधूलिः।
सम्पूर्णास्ते जलधरमालाकाले त्रेधा योज्याः सकलशुभकर्मादौ॥

मार्गादिचतुष्टये गोलसदृशे रवौ यदा तदा गोधूलिकं ज्ञातव्यम्। उष्णकाले अर्धास्ते सूर्ये जाते सति तदा गोधूलिकम्। वर्षाकाले सम्पू-

र्णास्ते रवौ जाते तदा । अथ गोधूलीप्रशंसा मुहूर्तमालायाम्--

लग्नाष्टषष्ठगं चन्द्रं कुजं लग्नमदाष्टगम् ।१।७।८।
क्रान्तिसाम्यं च कुलिकं गोधूल्यां यत्नतस्त्यजेत् ॥

वीरमित्रोदये--

गोपैर्यष्टया हतानां खुरपुटदलिता या च भूमिर्दिनान्ते
सोद्वाहे सुन्दरीणां विपुलधनसुतारोग्यसौभाग्यकर्त्री ।
तस्मिन्काले न ऋक्षं न च तिथिकरणं नैव लग्नं न योगः
ख्यातः पुंसां सुखार्थं शमयति दुरितान्युच्छ्रितं गोरजस्तु ॥

अथ लग्नसाधनाय घटीयन्त्रप्रकारमाह । वामनः--

दशपलशुल्बकपाले षडङ्गुलोच्छ्राये ।
द्वादशाङ्गुलपरिणाहे षष्ट्यम्बुपलपरिमिता घटिका ॥
चतुरङ्गुलशलाकया वृत्तं कुर्यात्सुवर्णपादेन ।
तत्परिमितया छिद्रे तल्ल्स्थिते शोभना घटिका ॥

सुवर्णप्रमाणमाह लीलावत्याम्--

दशार्धगुञ्जं प्रवदन्ति माषं माषाह्वयैः षोडशभिश्च कर्षम् ।
कर्षैश्चतुर्भिश्च पलं तुलाज्ञाः कर्षं सुवर्णस्य सुवर्णसंज्ञम् ॥

अत्र अशीति ८० गुञ्जातुल्यः कर्षः । एतत्परिमाणं सुवर्णं सुवर्णसंज्ञकं भवति । तत्पादश्चतुर्थांशः २० विंशतिगुञ्जात्मकः । तत्तुल्यया शलाकया च्छिद्रं कुर्यात् । शेषं स्पष्टम् । अथ घटीयन्त्रस्थापनप्रकारमाह वीरमित्रोदये--

प्रागुदक्प्रवणे देशे गोमयेनोपलेपिते ।
मृण्मयं कुण्डिकायुग्मं स्थापयेदव्रणं शुभम् ॥
कुङ्कुमाक्तेन सूत्रेण परिवेष्ट्य परस्परम् ।
स्थले च वारिणा पूर्णं तण्डुलानामथोपरि ॥
निश्चले सलिले स्थाप्य कुण्डिकायां जलोपरि ।
स्थापयेद्घटिकायन्त्रं सूर्यबिम्बानुदर्शनात् ॥

तत्र मन्त्रः—

यन्त्राणां मुख्ययन्त्रं त्वमिति धात्रा पुरा कृतम्।
दम्पत्योरायुरारोग्यसुपुत्रधनहेतवे॥
जलयन्त्र त्वमेतस्मादिष्टसिद्धिप्रदं भव।
अथ वा साधयेत्कालं द्वादशाङ्गुलशङ्कुना॥

अथ घटीयन्त्रभ्रमणफलमाह—

यद्रूपं प्रथमं करोति घटिका पूर्वादिदिक्षु क्रमा-
त्सौभाग्यं निधनं यशो विरहितं युक्तं च रोगैः क्रमात्।
कन्या वल्लभतामुपैति नियतं या निश्चला सर्वदा
स्यात्साध्वी सुतवित्तबन्धुसहिता नन्दत्यलं भूतले॥

अथ लग्नपत्रलेखनम्—

सुदिने गणकः स्वस्थो विलिख्य लग्नपत्रिकाम्।
पात्रे तण्डुलसम्पूर्णे गणेशं पूजितं न्यसेत्॥
तदग्रे धारयेत्पात्रीं तन्मन्त्रेण प्रतिष्ठयेत्।
ततो मन्त्राक्षता देया वध्वाः पित्रे वरस्य च॥
आदौ सन्तोष्य दैवज्ञं गृह्णीयाल्लग्नपत्रिकाम्।
ततो ग्रहार्चनं कुर्यान्नान्दीश्राद्धादिकं तथा॥
यस्य नास्ति विवाहादौ विश्वासो दैवविद्द्विजे।
तस्यावश्यं महाविघ्नं जायते मुनिशासनात्॥
मन्त्रे तीर्थे द्विजे देवे दैवज्ञे गुरुभेषजे।
यादृशी भावना यस्य सिद्धिर्भवति तादृशी॥

"कुमार्याः पाणिं गृह्णीया"दिति सूत्रम्। कुमार्याः अक्षतयोन्याः पाणिं गृह्णीयात्। वक्ष्यमाणेन विधिना विवाहं कुर्यात्। विंशतिप्रसूताव्युदासार्थं कुमारीग्रहणम्। स्मर्यते हि तस्याः पुनर्विवाहः। उक्तं च गृह्यकारिकायाम्—

उद्वाहः स्मर्यते तस्या नारी या विंशतिप्रसूः॥ इति।

"त्रिषु त्रिषूत्तरादिषु" इति सूत्रम्। उत्तरा आदिर्येषान्तानि उत्तरा-

दीनि तेषु त्रिषु त्रिषु । अयमर्थः- उत्तराफाल्गुन्यां हस्ते चित्रायां च एवमुत्तराषाढायां श्रवणे धनिष्ठायां च । एवमुत्तराभाद्रपदायां रेवत्यामश्विन्यां च । चित्रा श्रवणं धनिष्ठा अश्विन्येतानि नक्षत्राणि कातीयानामेव नान्येषां स्वसूत्रोक्तत्वात् । "स्वातौ मृगशिरसि रोहिण्यां वा" सूत्रम् । एतेषामन्यतमे नक्षत्रे विवाहो भवतीत्यर्थः । "उदगयन आपूर्यमाणपक्षे पुण्याहे" इत्युक्तत्वात्कालप्रसङ्गाच्च स्मृत्यन्तरोक्तसंवत्सरादिकन्याविवाहकालोऽत्र निरूप्यते । "तिस्रो ब्राह्मणस्य वर्णानुपूर्व्येण" इति सूत्रम् । वर्णक्रमेण ब्राह्मणी क्षत्रिया वैश्या तिस्रो भार्या ब्राह्मणस्य भवन्ति । वर्णानुपूर्व्यग्रहणान्न व्युत्क्रमो विवाहः । प्रथमा ब्राह्मणी द्वितीया क्षत्रिया तृतीया वैश्या । "द्वे राजन्यस्य" इति सूत्रम् । वर्णानुपूर्व्येण क्षत्रिया वैश्या द्वे राजन्यस्य भार्ये भवतः । "एका वैश्यस्ये" ति सूत्रम् । सवर्णैका वैश्यस्य भार्या भवति । "सर्वेषां शूद्रामप्येके मन्त्रवर्जम्" इति सूत्रम् । सर्वेषां ब्राह्मणादीनां शूद्रामप्येके आचार्या भार्यामिच्छन्ति । तस्यास्तु मन्त्रवर्जं विवाहकर्म भवति । एके पुनः शूद्रापरिणयनं नेच्छन्ति । तथा च वीरमित्रोदये याज्ञवल्क्यः—

यदुच्यते द्विजातीनां शूद्राद्दारोपसङ्ग्रहः ।
नैतन्मम मतं यस्मात्तत्रात्मा जायते स्वयम् ॥ इति ।

विष्णुः—

द्विजस्य भार्या शूद्रा तु धर्मार्थे न भवेत्क्वचित् ।
रत्यर्थमेव सा तस्य रागान्धस्य प्रकीर्त्तिता ॥

शङ्खः —

आपद्यपि न कर्तव्या शूद्रा भार्या द्विजेन तु ।
तस्यां तस्य प्रसूतस्य निष्कृतिर्न विधीयते ॥
तपस्वी कर्मशीलश्च सर्वधर्मभृतां वरः ।
ध्रुवं शूद्रत्वमाप्नोति शूद्रश्राद्धे त्रयोदशे ॥
नीयते तु सपिण्डत्वं येषां शूद्रः कुलोद्भवः ।
सर्वे ते शूद्रतां यान्ति यदि स्वर्गगतास्तु ते ॥

सपिण्डीकरणं कार्यं कुलजस्य तथा ध्रुवम् ।
श्राद्धं द्वादशकं कृत्वा प्राप्ते श्राद्धे त्रयोदशे ॥
सपिण्डीकरणानर्हो न च शूद्रस्तथा ध्रुवः ।
तस्मात्सर्वप्रयत्नेन शूद्रां भार्यां विवर्जयेत् ॥

मनुः--

शूद्रां शयनमारोप्य ब्राह्मणो यात्यधोगतिम् ।
जनयित्वा सुतं तस्यां ब्राह्मण्यादेव हीयते ॥

उशनाः--

निष्कृतिः स्यात्सुरापस्य हत्वा वा ब्रह्मवादिनः ।
वृषल्यभिप्रजातस्य निष्कृतिर्नोपपद्यते ॥

अथोद्वाहे मुख्यदाराः । तत्र मनुः--

गुरुणाऽनुमतः स्नात्वा समावृत्तो यथाविधि ।
उद्वहेत द्विजो भार्यां सवर्णां लक्षणान्विताम् ॥

दारकर्मणि पुत्रधर्मलक्षणे वीरमित्रोदये यमः--

भार्याः सजात्याः सर्वेषां धर्मः प्राथमकल्पिकः ॥ इति ।

सर्वेषां प्रथमविवाहे सवर्णैव । अथ विवाहभेदाः । तत्र मनुः--

चतुर्णामपि वर्णानां प्रेत्येह च हिताहितान् ।
अष्टाविमान्समासेन स्त्रीविवाहान्निबोधत ॥
ब्राह्मो दैवस्तथाचाऽऽर्षः प्राजापत्यस्तथाऽऽसुरः ।
गान्धर्वो राक्षसश्चैव पैशाचस्त्वष्टमोऽधमः ॥ इति ।

अथ ब्राह्मादिलक्षणानि । वीरमित्रोदये मनुः---

आच्छाद्य चार्हयित्वा च कुलशीलव्रते स्वयम् ।
आहूय दानं कन्याया ब्राह्मो धर्मः प्रकीर्त्तितः ॥

आछाद्य वाससा, अर्हयित्वा स्रक्चन्दनादिभिः, वरमिति शेषः न कन्यामिति । अथ दैवलक्षणम्--

यज्ञे तु वितते सम्यगृत्विजे कर्म कुर्वते ॥
अलङ्कृत्वा सुतादानं दैवं धर्मं प्रचक्षते ॥

यमः--

ऋत्विजं समलङ्कृत्य विवाहो दैव उच्यते ॥

हारीतः "वेद्यन्ते मैथुनं दत्वा स दैवः"। वेद्यन्ते वेदिमध्ये गोमिथुनं दत्वा, वरायेति शेषः। अथार्षलक्षणम्-

एकं गोमिथुनं द्वे वा वरादादाय धर्मतः।
कन्याप्रदानं विधिवदार्षो धर्मोऽयमुच्यते ॥

अथ प्राजापत्यलक्षणम्। मनुः--

सहोभौ चरतां धर्ममिति वा चानुभाष्य च।
कन्याप्रदानमभ्यर्च्य प्राजापत्यो विधिः स्मृतः ॥

यत्तु धर्मशब्दोऽर्थकामयोरुपलक्षणम्। "धर्मे चार्थे च कामे च नातिचरितव्या त्वया त्वियम्" इति स्मृत्यन्तरादिति, तन्न। तस्य वाक्यस्य काठकगृह्यपरिशिष्टे ब्राह्मविवाहोपक्रमपठितत्वेन तन्मात्रविषयत्वात्। "सह धर्मश्चर्यता"मिति प्राजापत्ये गौतमेन मन्त्राभिधानाच्च। अथासुरलक्षणम्। मनुः-

ज्ञातिभ्यो द्रविणं दत्वा कन्यायै चैव शक्तितः।
कन्याप्रदानं स्वीकुर्यादासुरो धर्म उच्यते ॥

आसुरनिन्दामाह कश्यपः--

क्रीता द्रव्येण या नारी न सा पत्नी विधीयते।
न सा दैवे न सा पित्र्ये दासीं तां कश्यपोऽब्रवीत् ॥
दानं विक्रयधर्मश्चापत्यस्य न विधीयते।
न कन्यायाः पिता विद्वान् गृह्णीयाच्छुल्कमण्वपि ॥

यमः-

स्त्रीधनानि तु ये मोहादुपजीवन्ति बान्धवाः।
नारी यानानि वस्त्रं वा ते पापा यान्त्यधोगतिम् ॥

कश्यपः-

शुल्केन ये प्रयच्छन्ति स्वसुतां लोभमोहिताः।
आत्मविक्रयिणः पापा महाकिल्बिषकारकाः ॥

पतन्ति निरये घोरे घ्नन्ति चासप्तमं कुलम्।
गमनागमने चैव सर्वं शुल्कोऽभिधीयते ॥

पराशरः —

कन्यां यच्छति वृद्धाय नीचाय धनलिप्सया।
कुरूपाय कुशीलाय स प्रेतो जायते नरः ॥

अत्र प्रायश्चित्तमुक्तमृग्विधाने —

महत्तरोस्तु वर्गं च लक्षं चेद्विष्णुमन्दिरे।
कन्याविक्रयदोषस्तु प्रणश्यति न संशयः ॥

इदं दोषाभिधानं लोभेनात्मार्थं धनग्रहणे। कन्यार्थं धनग्रहणे तु न दोषस्तस्यार्हणरूपत्वादित्युक्तं प्राक्। अथ गान्धर्वलक्षणम्। मनुः —

इच्छयाऽन्योन्यसंयोगः कन्यायाश्च वरस्य च।
गान्धर्वः स तु विज्ञेयो मैथुन्यः कामसम्भवः ॥

गौतमः — "इच्छया स्वयं संयोगो गान्धर्वः"। स्वयमिच्छन्त्या वध्वा इच्छतो वरस्य संयोगो गान्धर्वः। हारीतः — "स्वयं कन्या वरयते स गान्धर्वः"। अथ राक्षसलक्षणम् —

हत्वा छित्त्वा च भित्त्वा च क्रोशन्तीं रुदतीं गृहात्।
प्रसह्य कन्याहरणं राक्षसो विधिरुच्यते ॥

प्रसह्य बलात्कारेण। अथ पैशाचलक्षणम्। मनुः —

सुप्तां मत्तां प्रमत्तां च रहो यत्रोपगच्छति।
स पापिष्ठो विवाहानां पैशाचः कथितोऽष्टमः ॥

सुप्ता निद्रिता। प्रमत्ताऽतिशयेन नष्टचेतना। तस्यामभिगमनं मैथुनं तस्मात्पैशाचः। अथैषां वर्णविशेषेण व्यवस्था। तत्र मनुः —

चतुरो ब्राह्मणस्याद्यान्प्रशस्तान्कवयो विदुः।
तत्रापि द्वौ मुख्यतरौ —

महाभारते —

ब्राह्मणानां सतामेष ब्राह्मो धर्मो युधिष्ठिर ? ॥

दैवोऽपि ब्राह्मणस्यैव ऋत्विक्सम्प्रदानकत्वात्, न क्षत्रियादेः।

आर्त्विज्याभावात् । नारदोऽपि —

चत्वारो ब्राह्मणस्याद्याः शस्ता गान्धर्वराक्षसौ ।
राज्ञस्तथाऽऽसुरो वैश्ये शूद्रे चान्त्यस्तु गर्हितः ॥

अन्त्यः पैशाचः, स गर्हितो न कस्यापि योग्य इत्यर्थः । न चासुरादिषु विवाहेषु सप्तपद्यभिक्रमणाभावात्पतित्वभार्यात्वयोरनुपपत्तिरित्याशङ्कनीयम् । तत्रापि स्वीकारानन्तरं संस्कारविधानात् । तथा च वीरमित्रोदये देवलः —

गान्धर्वादिविवाहेषु पुनर्वैवाहिको विधिः ।
कर्तव्यश्च त्रिभिर्वर्णैः समयेनाग्निसाक्षिकः ॥

समयेन संवादेन । गृह्यपरिशिष्टेऽपि —

गान्धर्वासुरपैशाचविवाहा राक्षसाश्च ये ।
पूर्वं परिणयस्तेषां पश्चाद्धोमो विधीयते ॥

परिणयः स्वीकारः । अकृते तु होमे न भार्यापतिभावः । तदुक्तं वशिष्ठबौधायनाभ्यां वीरमित्रोदये —

बलादपहृता कन्या यदि मन्त्रैर्न संस्कृता ।
अन्यस्मै विधिवद्देया यथा कन्या तथैव सा ॥ इति ।

संस्कारावश्यकत्वमाह यमः—

नोदकेन विना चार्थं कन्यायाः पतिरुच्यते ।
पाणिग्रहणसंस्कारात्पतित्वं सप्तमे पदे ॥ इति ।

आसुरादिविवाहेषु प्रायश्चित्तमप्युक्तं त्रिकाण्डमण्डनेन —

अधर्मेषु विवाहेषु ताम्बूलमनुमोदनम् ।
वाहनं भोजनं चैव वर्जयेत्सर्वथा द्विजः ॥
आसुरे तूपवासः स्याद्गान्धर्वे तु त्रिरात्रकम् ।
राक्षसे चैव पैशाचे कार्यं चान्द्रायणं तथा ॥ इति ।

विष्णुः “ब्राह्मेण विवाहेन कन्यां ददद् ब्रह्मलोकं गमयति दैवेन स्वर्गमार्षेण वैष्णवं प्राजापत्येन देवलोकं गान्धर्वेण गन्धर्वलोकं गच्छतीति” । इदं विवाहफलं स्वस्वजातीयवरसम्प्रदानके कन्या-

दाने। ब्राह्मणसम्प्रदानके दाने तु तस्मिन्नेव फलातिशयः कल्पनीयः।

सममब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे।
अधीते शतसाहस्रं प्राधीतेऽनन्तमुच्यते॥

इति दक्षस्मरणात्।

अथ कन्यादानविधिः। ब्राह्मणाः स्वलङ्कृते वेश्मनि मङ्गलगीत-तूर्यनिर्घोषे क्रियमाणे पूर्वापरभागयोर्हस्तान्तरालं विधाय प्रत्येकं प्रस्थमिततण्डुलैर्द्वौ राशी कृत्वा मध्ये कुङ्कुमादिकृतस्वस्तिकाङ्कितमन्तःपटं राश्यो-र्मध्ये उत्तरदशं धारयेयुः। तण्डुलप्रमाणमुक्तं विधानपारिजाते मनुना--

आरुह्य तण्डुलप्रस्थमीक्षेत्प्रत्यङ्मुखो वधूम्॥ इति।

अथ पूर्वराशौ प्रत्यङ्मुखं वरं पश्चिमराशौ च प्राङ्मुखीं कन्यां तण्डुलगुडजीरकयुताञ्जली उभाववस्थाप्य द्विजाः "स्वस्ति न इन्द्राग्नी"-ति सूक्तं पठेयुः। पुरन्ध्रयो मङ्गलगीतिं कुर्युः। एतदुक्तं विधानपारिजाते आश्वलायनेन--

स्नातालङ्कृतकन्यायाः प्राङ्मुख्याः प्रत्यगाननः।
ईक्षते तण्डुलस्थाया वरस्तस्य मुखं च सा॥ १॥
मुहूर्त्ते शोभने सम्यक् क्षिपेतां मुखयोर्मिथः।
सगुडां जीरकां कन्यां वरयेदथ तां वरः॥ इति।

धर्मप्रवृत्तावपि—

सन्तिष्ठेत्प्राङ्मुखी कन्या तिष्ठेत्प्रत्यङ्मुखो वरः।
मुहूर्त्ते शोभने काले त्वन्तर्धार्याम्बरं तयोः॥
स्वक्षतां सुमुहूर्त्ते तु क्षिपेतां शिरसोर्मिथः।
क्षिपेत्कन्याऽक्षतान्पूर्वं पश्चाच्चैव क्षिपेद्वरः॥

वधूर्वरपादोपरि स्थाप्य, ततो वध्वाः शिरोपरि वरः स्थाप्येति प्रयोगरत्नकारः। "अथैनां वासः परिधापयति जरां गच्छ परिधत्स्व वासो भवाकृष्टीनामभिशस्तिपावा। शतं च जीव शरदः सुवर्चा रयिं च पुत्राननु संव्ययस्वायुष्मतीदं परिधत्स्व वास" इति सूत्रम्। अथैनां वासः परिधापयतीति। परिधापयतीति मन्त्रस्यापि तदर्थत्वात्

परिधापयिता अन्य इत्यवगम्यते । स किं वरः अध्वर्युर्वा ? श्रौतेषु अध्वर्योः कर्तृत्वम् । अतो वर एव परिधापयिता । भर्तृयज्ञमते तु आचार्यकर्तृकं परिधापनम् । आचारादहतं वासो ग्राह्यम् । अहतलक्षणं कश्यपेनोक्तम्—

अहतं यन्त्रनिर्मुक्तं वासः प्रोक्तं स्वयम्भुवा ।

शस्तं तन्मङ्गले नूनं तावत्कालं न सर्वदा ॥ इति ।

वस्त्रं कन्यापित्रा दत्तम् । 'अस्मिन्नेव समये कन्यापिता वस्त्रद्वयं वराय प्रयच्छति, तन्मध्ये एकं वरः कुमारीं परिधापयति' इति प्रयोगरत्ने । "जराङ्गच्छेति" मन्त्रेण । हरिहरमते तु मधुपर्कपूजनसमये कन्यापिता वराय वस्त्रचतुष्टयं प्रयच्छति, तन्मध्ये वस्त्रद्वयं स्वयं परिधत्ते, उर्वरितं वस्त्रद्वयं कन्यायै परिधापयति । **मन्त्रार्थः**—हे कन्ये ! त्वं जरां निर्दुष्टवृद्धत्वं मया सह गच्छ प्राप्नुहि । वासश्च मया सम्पादितं परिधेहि । आक्रुष्यन्ते कामादिभिरित्याकृष्टयो मनुष्यास्तेषां मध्ये अभिशस्तिरभिशापः, शमु प्रमादे, तस्मात्पातीत्यभिशस्तिपावा भव । शतं च शरदो वर्षाणि जीव प्राणिहि । सुवर्चाः तेजास्विनी रयिं धनं च पुत्रांश्च अनु पश्चात्संव्ययस्व अतिसुसंवृणीष्व, उत्पाद्य राशिं कुरु । हे आयुष्मति! इदं वासः परिधत्स्वेत्यनुवादः । मन्त्र एवात्र कारितार्थे । "अथोत्तरीयं या अकृतन्नवयं या अतन्वत । याश्च देवीस्तन्तूनभितो ततन्थ तास्त्वा देवीर्जरसे संव्ययस्वायुष्मतीदं परिधत्स्व वासः" इति सूत्रम् । या अकृन्तन्नित्यनेन मन्त्रेणोत्तरीयं परिधापयति वर एतदप्यहतमेव । अत्रापि कारितार्थे मन्त्रः । **मन्त्रार्थः**—या देवी देव्यः इदं वासः अकृन्तन्कर्तितवत्यः । या अवयन्वीतवत्यः । वेञ् तन्तुसन्ताने, ओतवत्य इत्यर्थः । यास्तन्तून्सूत्राणि अतन्वत प्रोतवत्यस्तिर्यक् तन्तून्विस्तारितवत्य इत्यर्थः । चकाराद्या ओतान्प्रोतांश्च तन्तूनभित उभयपार्श्वयोरपि ततन्थ तेनुः । तुरीवेमादिव्यापारेणाऽपि ग्रथितवत्यः । तास्तत्तत्सामर्थ्यदात्र्यो देव्यः स्वकार्यरूपवदिदं वासः त्वां जरसे दीर्घकालनिर्दुष्टजीवनाय संव्ययस्व परिधापयन्तु । पुरुषादिव्यत्ययश्छान्दसः । अतो हे आयुष्मति ! इदं एतादृशं वासः परिधत्स्व

उत्तरीयत्वेन वृणीष्व। "अथैनौ समञ्जयति" इति सूत्रम्। कन्यापिता "परस्परं समञ्जेथा"मिति प्रैषेण एनौ वधूवरौ समञ्जयति। समञ्जनं नाम सम्मुखीकरणम्। परस्परं गात्रविश्लेष इति भर्तृयज्ञः। परस्परानुलेपनमिति केचित्। सत्यपि कारितत्वे वरस्यैव मन्त्रो मन्त्रलिङ्गात्। कारयितृत्वं च सन्निधानात्कन्यापितुः। सन्निहितो ह्यसौ प्रदातृत्वात्। उभयोर्मन्त्रपाठ इति भर्तृयज्ञः। मन्त्रार्थः—हे कन्यके! नौ आवयोः हृदयानि मनांसि तन्निष्ठव्यापारात्सङ्कल्पात्मकात् विश्वे देवाः आपश्च समञ्जन्तु गुणातिशयाधानेन संस्कुर्वन्तु। तथा सम्यग्भूतो मातरिश्वा अनुकूलो वायुः तथा अनुकूलः प्रजापतिः देष्ट्री धर्मोपदेष्ट्री देवता आवयोः हृदयानि सन्दधातु। उ अप्यर्थे। अथ कन्यादातृनिर्णयः। वीरमित्रोदये नारदः—

पिता दद्यात्स्वयं कन्यां भ्राता वाऽनुमते पितुः।
मातामहो मातुलश्च सकुल्यो बान्धवस्तथा॥
माता त्वभावे सर्वेषां प्रकृतौ यदि वर्तते।
तस्यामप्रकृतिस्थायां कन्यां दद्युः स्वजातयः॥
यदा तु नैव कश्चित्स्यात्कन्या राजानमाव्रजेत्॥

याज्ञवल्क्योऽपि—

पिता पितामहो भ्राता सकुल्यो जननी तथा।
कन्याप्रदः पूर्वनाशे प्रकृतिस्थः परः परः॥
अप्रयच्छन्समाप्नोति भ्रूणहत्यामृतावृतौ॥ इति।

प्रकृतिस्थोऽविक्षिप्तचित्तः। सकुल्यः प्रत्यासत्तिक्रमेणादौ पितृकुलस्थस्तदभावे मातामहकुलस्थः सर्वाभावे जननी। इति समीपस्थविषयम्। देशान्तरस्थे न दोषाय। तदुक्तं वीरमित्रोदये नारदेन—

दीर्घप्रवासयुक्तेषु पौगण्डेषु च बन्धुषु।
माता च समये दद्यादौरसीमपि कन्यकाम्॥ इति।

पौगण्डो व्यवहारासमर्थः। समये कन्यादानोचितकाले। अथ कन्यादानविधिः। वधूवरावुपविशतः। तत्र प्राङ्मुखो वर उपविशेत्। प्रत्यङ्मुखी कन्या। दाता वधूवरयोर्दक्षिणतः सपत्नीक उदङ्मुखो

बद्धशिखः । धर्मप्रवृत्तौ--

प्रत्यङ्मुखीं प्राङ्मुखस्तां स्थितामात्मसमीपतः ।
ततश्चोदङ्मुखस्तिष्ठेत्सभार्यः कन्यकापिता ॥

विधानपारिजातेऽपि--

सर्वत्र प्राङ्मुखो दाता गृहीता च ह्युदङ्मुखः ।
एष एव विधिर्दाने कन्यादाने विपर्ययः ॥

देशकालौ सङ्कीर्त्य 'कन्यादानं करिष्ये' अत्र महासङ्कल्पः पठनीयः समाचारात् । ततो वधूवरयोः पुरतः कांस्यपात्रं स्थापयित्वा, तत्र कन्याहस्तोपरि वरहस्तं कृत्वा तत्र "शिवाऽऽपः सन्तु" इत्यादि पठेत् । उक्तं विधानपारिजातके--

कांस्येऽविच्छिन्नया वारिधारया स्त्रीप्रदत्तया ।
ॐस्वस्तीति वरो ब्रूयाद्धर्मे चेति वधूपिता ॥

कन्यादाने पुरुषोच्चारणक्रमः । तत्र वृद्धवशिष्ठः--

नान्दीश्राद्धे विवाहे च प्रपितामहपूर्वकम् ।
नाम सङ्कीर्तयेद्विद्वानन्यत्र पितृपूर्वकम् ॥

ऋष्यशृङ्गोऽपि--

वरगोत्रं समुच्चार्य प्रपितामहपूर्वकम् ।
नाम सङ्कीर्तयेद्विद्वान्कन्यायाश्चैवमेव हि ॥ इति ।
परिशिष्टेऽप्येवमेव क्रमः पूर्वमुदाहृतः ।

गदाधरभाष्येऽपि--

गोत्रोद्भवस्य गोत्रस्य सम्बन्धस्यामुकस्य च ।
नप्त्रे पौत्राय पुत्राय ह्यमुकाय वराय वै ॥
कन्याया अपि गोत्रस्य यथापूर्ववदुच्चरेत् ।
नप्त्रीमथ च पौत्रीं च पुत्रीं कन्यां यथाविधि ॥ इति ।

अथ वधूवरयोर्गोत्रप्रवरपूर्वकं प्रपितामहपितामहपितॄणां त्रिस्त्रिर्नामग्रहणं कार्यमिति वासुदेवहरिहरौ । सकृदिति गङ्गाधरः । स्पष्टप्रयोगः "वशिष्ठगोत्रोद्भवायामुष्य प्रपौत्रायामुष्य पौत्रायामुष्य पुत्राय

सुशीलनाम्नेऽमुकस्मै वराय 'कन्यापक्षे' वत्सगोत्रोद्भवाममुष्य प्रपौत्रीममुष्य पौत्रीममुष्य पुत्रीं सुशीलानाम्नीमिमां कन्यां सम्प्रददे" । हरिहरेण तु प्रतिपुरुषं गोत्रोच्चारणम् । तद्यथा "वशिष्ठगोत्रस्य वशिष्ठशक्तिपराशरेतित्रिप्रवरस्यामुकशर्मणः प्रपौत्राय 'पुनरपि' वशिष्ठगोत्रस्य वशिष्ठशक्तिपराशरेतित्रिप्रवरस्यामुकशर्मणः पौत्राय 'पुनरपि पूर्ववदेव गोत्राद्युच्चारणम्' अमुकशर्मणः पुत्राय । एवमेव कन्यापक्षेऽपि । यत्तु--

पुत्रायास्य च पौत्राय नप्त्रेऽस्यामुकशर्मणे ।
अस्मा अमुकगोत्राय पुत्री पौत्र्यथ नप्त्रिका ॥

इति कारिकायामानुलोम्यक्रमोऽभिहितः स पूर्वोक्तवशिष्ठादिवाक्यविरुद्धत्वान्मूलानुपलब्धेश्च चिन्त्यः । प्रयोगरत्नेऽपि प्रतिपुरुषं गोत्राद्युच्चारणं लिखितम् । एवमेव पुनरपि वारद्वयम् । कन्यापिता कुशजलाक्षतपाणिः 'अमुकगोत्राममुकप्रवराममुकनाम्नीं कन्यां यथाशक्त्यलङ्कृतां प्रजापतिदैवताममुकगोत्रायामुकप्रवरायामुकवेदाध्यायिनेऽमुकशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे" ।

ॐ स्वस्तीति वरो ब्रूयाद्धर्मे चेति वधूपिता ।
धर्मे चार्थे च कामे च नातिचरितव्या त्वया ॥

"नातिचरामीति" वरः । अथ वरः पुण्याहाशिषो वाचयित्वा दक्षिणेंऽसे कन्यामभिमृश्य कामस्तुतिं पठेत् । "कोऽदादि"ति कामस्तुतिमन्त्रः । अन्यदपि पात्रादि देयम् । लिङ्गपुराणे—

दासीदासासनाद्यं च भूषणानि गृहं ततः ।
क्षेत्राणि च धनं चापि तथाऽन्यानि प्रदापयेत् ॥

ऋष्यशृङ्गोऽपि—

भूमिं गाश्चैव दासीश्च वसनानि स्वशक्तितः ।
महिषीर्वाजिनश्चैव दद्यात्स्वर्णमणीनपि ॥

अत्र "कोऽदादि"ति कामस्तुतिपाठ इति गङ्गाधरहरिहरौ । तिष्ठ-

न्कन्यादानम् । तदुक्तं विधानपारिजाते बृहस्पतिना—

चतुष्पादं गृहं कन्यां दासीं छत्रं रथं तरुम् ।
तिष्ठन्नेतान्द्विजो दद्याद्भूम्यादीनुपविश्य च ॥

अथाक्षतारोपणविधिः । अथ दाता सभार्यो वृद्धाः पुरन्ध्रयो ज्ञातिबान्धवाश्च क्रमादाशीर्भिरार्द्राक्षतारोपणं कुर्युरिति । मन्त्रानाह वीरमित्रोदये सङ्ग्रहकृत्—

श्रियो भगो यशश्चैव यज्ञो धर्मः प्रजाश्च षट् ।
समृद्ध्यतामिति वधूर्वरश्चैतान्क्रमाद्वदेत् ॥ इति ।

श्रिय इति वधूः । भग इति वरः । यश इति वधूः । यज्ञ इति वरः । धर्म इति वधूः । प्रजा इति वरः । समृध्यतामित्यन्तान् षण्मन्त्रान्पठेदित्यर्थः । अथ कन्यादानफलं ब्रह्मपुराणे—

कन्यां तु परया भक्त्या ह्यलङ्कृत्य प्रयत्नतः ।
कुलीनाय सुरूपाय गुणजाय विशेषतः ॥
कन्यां वरयमाणाय दद्यादेष विधिः स्मृतः ।

लैङ्गे—

कन्यादानं प्रवक्ष्यामि सर्वदानोत्तमोत्तमम् ।
यद्दत्वा सर्वदानानां फलं प्राप्नोति मानवः ॥

ऋष्यशृङ्गः—

महीदातुश्च गोदातुः कन्यादातुश्च ये तथा ।
कन्यादानानुगाः पश्चात्समं यान्ति त्रयो रथाः ॥

लैङ्गे—

यावन्ति सन्ति रोमाणि कन्यायाश्च तनौ पुनः ।
तावद्वर्षसहस्राणि ब्रह्मलोके महीयते ॥

वीरमित्रोदये बृहस्पतिः—

सहस्रमेव धेनूनां शतं वाऽनडुहां समम् ।
दशानडुत्समं यानं दशयानसमो हयः ॥
दशवाजिसमा कन्या भूमिदानं च तत्समम् ।

तस्मात्सर्वेषु दानेषु कन्यादानं विशिष्यते ॥

आदित्यपुराणे—

श्रुत्वा कन्याप्रदानं तु पितरः सपितामहाः।
मुक्ता वै सर्वपापेभ्यो ब्रह्मलोकं व्रजन्ति ते ॥

अथ विशेषेण दातुः फलम्, वीरमित्रोदये मरीचिः—

गौरीं ददन्नाकपृष्ठं वैकुण्ठं रोहिणीं ददत्।
कन्यां ददद्ब्रह्मलोकं रौरवन्तु रजस्वलाम् ॥
अष्टवर्षा भवेद्गौरी नववर्षा च रोहिणी।
दशवर्षा भवेत्कन्या अत ऊर्ध्वं रजस्वला ॥

अथ कङ्कणकरणम्। ततो दुग्धाक्तेन द्विगुणशुक्लसूत्रेण दम्पती कण्ठदेशे कटिदेशे चैशानीमारभ्य चतुर्वारं पञ्चवारं वा प्रदक्षिणं वेष्टयेत् पुरोधा अनेन मन्त्रेण—"ॐ परि त्वा गिर्व० जुष्टयः।" ततः कण्ठदेशस्थसूत्रमधो निष्कास्य कुङ्कुमाक्तमूर्णायुतं च कृत्वा तेन हरिद्राखण्डं बध्वा तद्वधूवामहस्तप्रकोष्ठे वरो बध्नीयात् "यदाबध्नन्" इति मन्त्रेण। कटिदेशस्थं सूत्रमुपरि निष्कास्य तादृशं कृत्वा वरदक्षिणहस्त-प्रकोष्ठे वधूर्बध्नीयात् तेनैव मन्त्रेण। धर्मप्रवृत्तौ शौनकः—

द्विगुणेनैव सूत्रेण पञ्चधाऽऽवेष्टितं तयोः।
ततोऽप्यधोर्ध्वतोत्तार्य प्रकोष्ठे बन्धनं तयोः ॥
रक्षणार्थं दक्षहस्ते बध्नीयात्कङ्कणं तयोः।
बन्धनं कन्यकापूर्वं वरपूर्वं विमोचनम् ॥
विश्वेताते ऋचा पुंसां बध्नीयाद्दक्षिणे करे।
अथ वामकरे स्त्रीणां बृहत्सामेति मन्त्रतः ॥

इत्यनेन केचित्कन्यावामकरे बध्नन्ति स केषां चिद्देशाचारः। समाचारादत्रैव याज्ञवल्क्यपूजनम्। ततो गौरीहरौ प्रपूज्य प्रार्थयेत्। पूजाप्रकारस्तु वरणसमयोक्तो ग्राह्यः। कात्यायनः—

सवर्णायास्तथा पाणिं गृहीत्वा विधिवद्वरः।
सम्पूज्य प्रार्थयित्वा तां शचीं देवीं गुणाश्रयाम् ॥

त्रैलोक्यवल्लभां दिव्यगन्धमाल्याम्बराङ्किताम् ।
सर्वलक्षणसंयुक्तां सर्वाभरणभूषिताम् ॥
विलासिनीसहस्रौघैः सेव्यमानामहर्निशम् ।
एवंविधां कुमारीं तु पूजान्ते प्रार्थयेत्ततः ॥
कात्यायनीं पद्मजां च गौरीमेवं प्रपूजयेत् ॥

मङ्गलसूत्रम् । एवं गौरीं सम्पूज्य वरो मङ्गलसूत्रं सूक्ष्मकाचमणिसूत्रयुक्तं वधूकण्ठे स्वेष्टदेवतां ध्यायन्बध्नीयात् । तत्र मन्त्रः स्मृतिरत्ने—

माङ्गल्यतन्तुनाऽनेन भर्तृजीवनहेतुना ।
कण्ठे बध्नामि सुभगे ! सञ्जीव शरदः शतम् ॥

अस्मिन्समये वरो वधूं स्वकीयवस्त्रालङ्कारभूषणैर्भूषयित्वा, विधानपारिजाते—

ततो मङ्गलसूत्रं च ध्यायन्निष्टां च देवताम् ।
बध्वाः कण्ठप्रदेशेऽस्या भूषणानि च शक्तितः ॥

आम्रसेचनं दुग्धेन कार्यम् "शतं वो अम्ब धामानी"ति मन्त्रेण । प्रार्थयेत्—

चूतोऽसि त्वं महाभागः सर्वकल्याणदायक ? ।
देहि मे सर्वतः सौख्यं सिञ्च त्वं तरुनायक ? ॥

अथ दीपप्रार्थना—

दीपत्वं देहि कल्याणं देहि सर्वान्मनोरथान् ।
यावद्व्रतं समाप्येत तावत्त्वं च स्थिरो भव ॥ इति ॥

"पित्रा प्रत्तामादाय गृहीत्वा निष्क्रामति यदैषि मनसा दूरं दिशोऽनु पवमानो वा । हिरण्यपर्णो वैकर्णः स त्वा मन्मनसां करोत्वित्यसाविति" इति सूत्रम् । कन्यायाः पित्रा जनकेन प्रत्तां सङ्कल्प्य दत्तामादाय प्रतिग्रहविधिना गृहीत्वा हस्ते धृत्वा निष्क्रामति गृहमध्यादग्निसमीपं गच्छति । तथा च रेणुः—

वामहस्ते गृहीत्वा तां प्रत्तामेव वधूं वरः ।
यदैषि मनसेत्युक्त्वा निष्क्रामति गृहात्ततः ॥ इति ।

वस्त्रान्ते गृहीत्वेति गदाधरः । असावित्यत्र सम्बुद्ध्यन्तं कन्याया नामग्रहणम् ।

"लक्ष्मीनाम्नीं त्वमौ स्थाने वधूनामादिशेद्वर" इति रेणुः । अत्र कर्कभाष्यम् । आदाय गृहीत्वेति चोभयं न वक्तव्यम् । उच्यते च, तत्किमर्थम् ? अप्रतिग्रहस्यापि प्रतिग्रहविधिनाऽऽदानं यथा स्यादिति । अयमर्थः—अप्रतिग्रहस्यापि कन्याद्रव्यस्य प्रतिग्रहविधिना आदानं प्रतिग्रहो यथा स्यादित्येतदर्थमुभयग्रहणम् । ननु कन्यां दद्यात् कन्यां प्रतिगृह्णाति स्मरणात्कथमप्रतिग्रहयोग्यं कन्याद्रव्यमित्युच्यते ? सत्यमुच्यते । स्वस्वत्यागपूर्वकं परस्वत्वोत्पादनं दानम् । न च कन्या कथञ्चिदपि अस्वकन्या कर्तुं शक्यते । नापि परस्परकन्या भवति । विवाहोत्तरमपि ममेयं कन्येत्यभिधानादत्र गौणो ददातिः । यत्तु स्मृतिषु पुत्रदानं चोद्यते तत्रापि गौणो ददातिः । पितुरिव वरस्यापि पिण्डदानं रिक्थभाक्त्वं च भवतीत्यर्थः । षष्ठाध्यायस्य सप्तमपादे अधिकरणेऽयमर्थस्तन्त्ररत्ने । यद्वा—

अप्रतिग्रहयोग्यस्य प्रतिग्रहविधानतः ।
क्षत्रियादेर्यथाऽऽदानं स्यादादायेतिसूत्रितम् ॥ इति रेणुः ।

**मन्त्रार्थः**—हे कन्यक ? यत् एष गच्छसि । मनसा चित्तेन दूरं दूरदेशं दिशः ककुभः अनु लक्षीकृत्य पवमान इव वायुवत् चित्तस्य वायुत्वं चञ्चलत्वात् । ततः पवमानो वायुः हिरण्यपर्णः सुवर्णपक्षः विकर्णापत्यं गरुत्मान् त्वा त्वां मन्मनसां मद्गतचित्तां करोतु । ममायत्तां मय्यनुरागिणीं विदधातु । निष्क्रमणप्रभृत्येकः पुरुष उदकुम्भं स्कन्धे कृत्वा दक्षिणतोऽग्नेर्वाग्यतः स्थितो भवत्युत्तरतो वा अभिषेकपर्यन्तम् । तदुक्तं गृह्यकारिकायाम्—

कृत्वांऽसे दक्षिणे कुम्भं चूतस्य प्रवलान्वितम् ।
वारिपूर्णं द्विजोऽन्योऽपि निष्क्रामेदनु दम्पती ॥
सोऽग्नेरुत्तरतो वाऽऽस्ते वाग्यतो दक्षिणेऽथ वा ॥ इति ।

"अथैनौ समीक्षयत्यघोरचक्षुरपतिघ्न्येधि शिवा पशुभ्यः सु-

मनाः सुवर्चाः । वीरसूर्देवकामा स्योना शन्नो भव द्विपदे शं चतुष्पदे । सोमः प्रथमो विविदे गन्धर्वो विविद उत्तरः । तृतीयोऽग्निष्टे पतिस्तुरीयस्ते मनुष्यजाः । सोमोऽददद्गन्धर्वाय गन्धर्वो दददग्नये । रयिं च पुत्रांश्चादादग्निर्मह्यमथो इमाम् । सा नः पूषा शिवतमामेरय सा न ऊरू उशती विहर । यस्यामुशन्तः प्रहराम शेपं यस्यामु कामा बहवो निविष्ट्या इति" इति सूत्रम् । अथ निष्क्रमणोत्तरं कारितोपदेशात्कन्यापिता परस्परं समञ्जेथामिति प्रैषेण समीक्षणं कारयति । ततस्तौ वधूवरौ परस्परं समीक्षणं कुरुतः । लिङ्गाद्वरः समीक्षमाणां कन्यां समीक्षमाणो "अघोरचक्षु"रित्येतांश्चतुरो मन्त्रान्पठति । मन्त्रार्थः-हे कन्ये त्वं अघोरचक्षुः सौम्यदृष्टिः, अपापदृष्टिर्वा भवेति । तथा अपतिघ्नी अकार्यकरणेन पत्यर्थघातिनी तथा मा भव । तथा पशुभ्यः पशुवदाश्रितेभ्यः शिवा हितैषिणी च भव । सुमनाः प्रसन्नचित्ता सुवर्चाः सुप्रभावयुक्ता वीरसूः सत्पुत्रजननी देवकामा देवानग्न्यादीन्कामयते स्योना सुखवती नोऽस्माकं शं सुखहेतुः द्विपदे मनुष्यवर्गाय चतुष्पदे पशुवर्गाय शं सुखहेतुर्भव । हे कन्ये ! त्वां सोमश्चन्द्रः ते तव प्रथमः आद्यः पतिः विविदे जन्मदिने लब्धवान् । "विद्लृ लाभे"ततः सार्धद्वयवर्षानन्तरं गन्धर्वः सूर्यो विविदे । अत उत्तरस्तद्द्वितीयोऽयं पतिः । ततोऽग्निरपि तावता कालेन विविदे । अतोऽयं तव तृतीयः पतिः । यथाऽऽहुः—

पूर्वं स्त्रियः स्युर्भुक्ताश्च सोमगन्धर्ववह्निभिः ॥ इति ।

तथा ते तव तुरीयश्चतुर्थो मनुष्यजा मनुष्योऽहमेवेत्यर्थः । किमिदानीं चतुर्णामपीयं पत्नी ? नेत्याह । सोमश्चन्द्रस्त्रिंशन्मासान्भुक्त्वा गन्धर्वः सूर्यस्तस्मै अददद्ददौ । सोऽपि तावत् कालं भुक्त्वा अग्नयेऽददत् । स चाग्निर्मह्यमिमां अदात् । न केवलमिमाम् किन्तु पुत्रान्सुतान् रयिं धनं च । चकाराद्धर्मादि चादादिति सम्बन्धः । या सर्वलोककर्मसाक्षिणी पूषा देवता सा इमां शिवतमां कल्याणगुणशीलां कृत्वा नोऽस्मान्प्रत्यैरय ईरयतु ।

आटो दर्शनं विभक्तेरदर्शनं छान्दसम् । अस्माननुरक्तान्करोत्वित्यर्थः । सा चास्मत्तः सुखं पुत्रांश्च कामयमाना ऊरू सक्थिनी जान्वोरूर्द्ध्वभागदण्डौ विहर विहरतु विवृणोतु प्रसारयत्वित्यर्थः । मध्यमपुरुषश्छान्दसः । प्रयोजनमाह यस्यां स्त्रीयोनौ उशन्तः सुखमिच्छन्तः शेपं शिश्नं प्रहराम प्रवेशयाम वयम् । यस्यां कन्यकायाम् उ एवार्थे । यस्यामेव बहवः कामा धर्मपुत्रा रतिसुखरूपाः सन्तु । किमर्थं निविष्ट्यै अग्निहोत्राद्युपासनायान्तःकरणशुद्धिद्वारा सायुज्यमुक्तये ।

इति श्रीप्रथमशाखीयरामकृष्णविरचितगृह्यसूत्रविवरणे संस्कारगणपतौ प्रथमकाण्डे चतुर्थी कण्डिका ।



## अथ पञ्चमी कण्डिका ।

प्रदक्षिणमग्निं पर्य्याणीयैके पश्चादग्नेस्तेजनीं कटं वा दक्षिणपादेन प्रवृत्योपविशत्यन्वारब्ध आघारावाज्यभागौ महाव्याहृतयः सर्व्वप्रायश्चित्तꣳस्विष्टकृच्चैतन्नित्यꣳसर्व्वत्र प्राङ्महाव्याहृतिभ्यः स्विष्टकृदन्यच्चेदाज्याद्धविः सर्वप्रायश्चित्तप्राजापत्यान्तरमेतदावापस्थानं विवाहे राष्ट्रभृत इच्छन्नयाऽभ्यातानांश्च जानन्येन कर्मणेत्सेंदिति वचनाच्चित्तं च चित्तिश्चाकूतं चाकूतिश्च विज्ञातं च विज्ञातिश्च मनश्च शक्करीश्च दर्शश्च पौर्णमासश्च बृहच्च रथन्तरञ्च । प्रजापतिर्जयानिन्द्राय वृष्णे प्रायच्छदुग्रः पृतनाजयेषु । तस्मै विशः समनमन्त सर्व्वाः स उग्रः स इ हव्यो बभूव स्वाहेत्यग्निर्भूतानामधिपतिः समाऽवत्विन्द्रो ज्येष्ठानां यमः पृथिव्या वायुरन्तरिक्षस्य सूर्यो दिवश्चन्द्रमा नक्षत्राणां बृहस्पतिर्ब्रह्मणो मित्रः सत्यानां वरुणोऽपाꣳसमुद्रः स्रोत्यानाम-

त्रङ्माज्ज्यानामधिपति तन्माऽवतु सोम ओषधीनाᳪंसविता प्रसवानाᳪंरुद्रः पशूनां त्वष्टा रूपाणां विष्णुः पर्वतानां मरुतो गणानामधिपतयस्ते माऽवन्तु पितरः पितामहाः परेऽवरे ततास्ततामहाः। इहमाऽवन्त्वस्मिन्ब्रह्मण्यस्मिन्क्षत्रऽस्यामाशिष्यस्यां पुरोधायामस्मिन्कर्मण्यस्यान्देवहूत्याᳪंस्वाहेति सर्वत्रानुषजत्यग्निरैतु प्रथमो देवतानाᳪंसोऽस्यै प्रजां मुञ्चतु मृत्युपाशात्। तदयᳪंराजा वरुणोऽनुमन्यतां यथेयᳪंस्त्री पौत्रमघन्न रोदात्स्वाहा। इमामग्निस्त्रायतां गार्हपत्यः प्रजामस्यै नयतु दीर्घमायुः। अशून्योपस्था जीवतामस्तु माता पौत्रमानन्दमभिविबुध्यतामियᳪंस्वाहा। स्वस्ति नोऽअग्ने! दिव आ पृथिव्या विश्वानि धेह्ययथा यजत्र। यदस्यां महि दिवि जातं प्रशस्तं तदस्मासु द्रविणन्धेहि चित्रᳪंस्वाहा। सुगन्नु पन्थां प्रदिशन्न एहि ज्योतिष्मध्येह्यजरन्न आयुः। अपैतु मृत्युरमृतन्न आगाद्वैवस्वतो नो अभयं कृणोतु स्वाहेति परम्मृत्याविति चैके प्राशनान्ते॥ ९॥

"प्रदक्षिणमग्निं पर्याणीयैके" इति सूत्रम्। एक आचार्या अग्नेः प्रदक्षिणं कारयित्वा कन्याया वासःपरिधानादि कर्तव्यमिति वदन्ति। अपरे तु समीक्षणान्ते अग्नेः प्रदक्षिणकरणं वदन्ति। अतश्च विकल्पः। "पश्चादग्नेस्तेजनीं कटं वा दक्षिणपादेन प्रवृत्योपविशति" इति सूत्रम्। ततो वरः अग्नेः पश्चात्स्थापितां तेजनीं कटं वा दक्षिणपादेन प्रवृत्य आक्रम्य उल्लङ्घ्य अग्नेः पश्चादुपविशति। तेजनी तृणपूलिकोच्यते। यद्वा—

मधुपर्के तु यां गान्तु नोत्सृजन्ति(१) मनीषिणः।
तस्याश्च रुधिरं चर्म तेजनीं तां विनिर्दिशेत॥

(१) नोत्सृजन्ति उत्सर्गं न कुर्वन्ति आलभन्तीत्यर्थः।

इति विधानपारिजातात् । कटः प्रसिद्धः । अत्र पश्चादुपवेशनं वचनात् । वचनाभावे तु सर्वत्र "उत्तरत उपचारो यज्ञ" इत्यनेनोपवेशनम् । स्मृत्यन्तराद्वरस्य दक्षिणतः कन्योपविशति । तेजन्युपरि कटस्योपरि वोपवेशनमिति गदाधरः । तया सहाक्रमणं कर्तव्यमिति भर्तृयज्ञहरिहरौ । तथा च रेणुः—

अथोपविशतः पश्चादग्निं सव्येतराङ्घ्रिणा ।
कटं वा तृणपूलं वा प्रवृत्य च कुशास्तृते ॥
एकस्मिन्नासने तत्र वधूस्तस्य तु दक्षिणे ॥

शौनकोऽपि—

कन्यकां प्रतिगृह्यैवं वरः पूर्ववदासने ।
तत्रैवोपविशेत्पश्चात्तां वधूं मातुलादिकः ॥
स्वजनः परिगृह्याग्नेरुत्तरेण वरस्य तु ।
पश्चिमेन यथा नीत्वा तस्मिन्नेव वरासने ॥
वरस्य दक्षिणे पार्श्वे प्राङ्मुखीमुपवेशयेत् ॥ इति ।

"अन्वारब्ध आघारावाज्यभागौ महाव्याहृतयः सर्वप्रायश्चित्तं प्राजापत्यꣳ स्विष्टकृच्च" इति सूत्रम् । आघारावाज्यभागौ च विधीयेते । आघारः पूर्व उत्तरश्च । तत्र तूष्णीं पूर्व इति गदाधरः । "प्रजापतये स्वाहे"ति हरिहरः । प्रयोगरत्नेऽप्येवमेव । ननु आघारादिपृष्ठभावेन वेद्यादिकं कुतो नायाति ? उच्यते । "गृह्यस्थालीपाकानां कर्मे"'त्युपक्रम्य' "एष एव विधिर्यत्र क्वचिद्धोम" इत्यनेनैव ज्ञायते यावन्तोऽत्र पदार्था उक्तास्तावन्त एव भवन्ति नान्ये । उत्तराघारे प्रतिनिगद्य होमत्वं न ह्यत्र मन्त्रोऽस्ति । एवमाज्यभागयोरपि । महाव्याहृतयो महाव्याहृतिका मन्त्रास्त्रयः । "भूर्भुवः स्वरितित्रो महाव्याहृतय" इत्युक्तत्वात् । सर्वप्रायश्चित्तं च 'त्वन्नो अग्न' इत्यादिभिर्मन्त्रैः पञ्चाहुतयो हूयन्ते तासां संज्ञा । प्राजापत्यं प्रजापतिदेवताको होमः । स्विष्टकृत्स्विष्टकृद्धोमः । यजमानो ब्रह्मणा अन्वारब्ध आघारादि स्विष्टकृदन्तं करोति । अन्वारम्भश्च कुत्र न निगमपरिशिष्टात् । "एतन्नित्य-

ध्सर्वत्रे"ति सूत्रम् । एतदावारादि स्विष्टकृदन्तं कर्म सर्वत्र । यत्र यत्र होमात्मकं कर्म तत्र सर्वत्र भवति । यत्र पुनर्होम एव नास्ति यथा स्र-स्तरारोहणे लाङ्गलयोजने च तत्रैतन्न भवति । "प्राङ्महाव्याहृतिभ्यः स्विष्टकृदन्यच्चेदाज्याद्धविः" इति सूत्रम् । चेद्यदि आज्यद्रव्यादन्य-द्द्रव्यं चर्वादिकमपि भवति तदा महाव्याहृतिहोमात्प्राक् पूर्वं स्विष्टकृ-द्धोमो भवति, चर्वादिद्रव्यशेषादेव । केवलाज्यहोमे तु सर्वहोमान्ते आज्येनैव स्विष्टकृत् । "सर्वप्रायश्चित्तप्राजापत्यान्तरमेतदावापस्था-नं विवाहे" इति सूत्रम् । सर्वप्रायश्चित्तं च 'त्वन्नो अग्न' इत्यादिमन्त्रैः पञ्च होमाः । प्राजापत्यं प्रजापतिदेवताको होमः । एतयोरन्तरं मध्यं सर्वप्रायश्चित्तप्राजापत्यान्तरं एतद्विवाहे विवाहकर्मणि आवापस्थानं वक्ष्य-माणानां राष्ट्रभृदादीनामनुष्ठानकाल इत्यर्थः । "राष्ट्रभृत इच्छन्" अस्मिन्विवाहकर्मणीच्छन् इच्छया राष्ट्रभृत्संज्ञकहोमाः स्युः "ऋता-षाड्ऋतधामाऽग्निर्गन्धर्वः" इत्यादिभिर्मन्त्रैराग्निका द्वादश होमा राष्ट्रभृतः । "जयाभ्यातानांश्च जानन्येन कर्मणेर्त्सेदिति वचनात्" इति सूत्रम् । जयाश्चाभ्यातानाश्च जयाभ्यातानास्तान् जानन्निच्छन् जुहोति । अतश्च विकल्पः । च शब्दो राष्ट्रभृद्भिः सन्नियोगार्थः । इच्छया जुहोतीति कुत इति चेत् ? "येन कर्मणेर्त्सेदिति वचनात्" येन कर्मणा ऋद्धिमि-च्छेत्तत्र जयाञ्जुहोतीति वचनं भवति । अतश्चान्यत्रापि ऋद्धिमि-च्छता जयाहोमः कार्य इति ज्ञायते । जैमिनिस्तु जयादीनामनारभ्या-धीतानां येन कर्मणेर्त्सेत्तत्र जयां जुहुयात् । इत्यादिभिर्वाक्यैरेव सामान्यतो लौकिकवैदिककर्माङ्गत्वे प्राप्ते जयादयस्तु वैदिकास्तेन यत्राहवनीयोऽस्ति तत्रैते स्युरिति सिद्धान्तितवान्(१) । अथ जयाहोमानां मन्त्रानाह–"चित्तं च चित्तिश्चाकूतं चाकूतिश्च विज्ञातं च विज्ञातिश्च मनश्च शक्वरीश्च दर्शश्च पौर्णमासं च बृहच्च रथन्तरं च । प्रजापतिर्जयानिन्द्राय वृष्णे प्राय-च्छदुग्रः पृतना जयेषु । तस्मै विशः समनमन्त सर्वाः स उग्रः स

(१) एतेन विवाहप्रकरणाम्नानादत्रैव स्मार्ते जयादयः स्युर्नान्यत्रेति फलितम् ।

इ हव्यो बभूव स्वाहा" इति सूत्रम्। चित्तमित्यादि त्रयोदश मन्त्रा जया इत्युच्यन्ते। एता घृतेनैव होतव्याः। उक्तं च रेणुकारिकायाम्—

चित्तं चित्तिमथाकूतमाकूतिं तदनन्तरम्।
विज्ञातं च ततो विज्ञातिं मनः शक्करीस्तथा॥
दर्शं च पौर्णमासं च बृहतं च रथन्तरम्।
प्रजापतिं घृतेनैता जयाख्यास्तु त्रयोदश॥

चित्तादिद्वादश प्रजापतिर्जयानित्येकेनापि जयालिङ्गेन छत्रिन्यायेन त्रयोदश मन्त्राः। इमानि शाखान्तरोपदिष्टानि देवतापदानि। तथा च गदाधरभाष्ये तैत्तिरीया श्रुतिः—"देवाऽसुराः संयत्ता आसन्स इन्द्रः प्रजापतिमुपाधावत्स तस्मा एतान् जयान्प्रायच्छत्तानजुहोत्ततो देवा असुरानजयँस्तज्जयानां जयात्वमिति" एषां प्रयोगकाले सम्प्रदानलक्षणेन चतुर्थ्यन्तप्रयोगेन होमः, "नमः स्वस्तिस्वाहास्वधाऽलंवषड्योगाच्च" इति पाणिनीयसूत्रात्। चित्ताय स्वाहेत्यादीति भर्तृयज्ञः। नेति कर्कादयः। न ह्येतानि देवतापदानि। किं तर्हि? मन्त्राश्चैते। ते च यथाम्नाता एव प्रयोक्तव्याः। तथा च गृह्यकारिकायाम्—

तेनैवाज्येन चित्तं च स्वाहेत्याद्या जुहोत्यथ।
अत्र प्रयोगमिच्छन्ति चतुर्थ्यन्तेन के चन॥
न देवतापदानि स्युर्मन्त्रा ह्येते यतः स्मृतेः॥ इति।

**मन्त्रार्थः**—चित्तं चेति। प्रजापतिर्यथेन्द्राय जयान्प्रायच्छत्। तथा चित्तादि च मह्यमपि प्रयच्छत्विति क्रियां विपरिणम्योत्तरसम्बन्धः। तस्मै सुहुतमस्तु। तच्च चित्तं ज्ञानाधारं हृदयं चितिस्तत्रत्या चेतना आकूतं चाभिमतं आकूतिश्चाभिमानः। अथवा चित्तं ज्ञानेन्द्रियम्। जातावेकवचनम्। चित्तिस्तद्देवता। आकूतं कर्मेन्द्रियं आकूतिस्तद्देवता। विज्ञातं शिल्पादिज्ञानमपरोक्षम्। विज्ञातिस्तद्देवता। मनः प्रसिद्धम्। शक्करीः शक्वर्यस्तच्छक्तयः। दर्शपौर्णमासौ तद्देवते। बृहद्रथन्तरे सामनी तद्देवते वा। सर्वत्र प्रथममन्त्रोक्तवाक्यार्थः सम्बध्यते। प्रजापतिः परमेश्वरः जयन्ति शत्रू-

निति जयास्तान् जयान्मन्त्रानिन्द्राय प्रायच्छत् ददौ । किमर्थं वृष्णे अभिमतमनोरथवर्षणाय । इदं विशेषणं वा । ततः स इन्द्रः पृतनाजयेषु असुरसेनाविजयाख्यकर्मसु उग्रः प्रचण्डो बभूव । किं च ततस्तस्मै इन्द्राय विशः प्रजाः समनमन्त सम्यङ् नेमुः । इ एवार्थे । स एवेन्द्रः हव्यः हवनीयः इज्यः बभूव । स्वाहा तस्मै सुहुतमस्तु । अभ्यातानसंज्ञकान्मन्त्रानाह—"अग्निर्भूतानामधिपतिः स माऽवत्विन्द्रो ज्येष्ठानां यमः पृथिव्या वायुरन्तरिक्षस्य सूर्यो दिवश्चन्द्रमा नक्षत्राणां बृहस्पतिर्ब्रह्मणो मित्रः सत्यानां वरुणोऽपाᳬं समुद्रः स्रोत्यानामन्नᳬं साम्राज्यानामधिपति तन्मावतु सोम ओषधीनाᳬं सविता प्रसवानाᳬं रुद्रः पशूनां त्वष्टा रूपाणां विष्णुः पर्वतानां मरुतो गणानामधिपतयस्ते माऽवन्तु पितरः पितामहाः परेऽवरे ततास्ततामहाः । इह माऽवन्त्वस्मिन्ब्रह्मण्यस्मिन्क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन्कर्मण्यस्यां देवहूत्याᳬं स्वाहा।" इह माऽवन्त्वस्मिन्नित्यारभ्य स्वाहान्तोऽयं वाक्यार्थ उपरिष्टादपि सप्तदशसु सम्बध्यते । शेषं स्पष्टम् । एतेऽष्टादश मन्त्रा अभ्यातानाः । 'अग्निर्भूतानामि'त्यादि 'सुगन्नु पन्थामि'त्यन्ता द्वाविंशतिरभ्यतानाः इति कर्कका रिकाकारौ । "इति सर्वत्रानुषजति" इति सूत्रम् । एतेषु मन्त्रेषु प्रतिमन्त्रं यथालिंगं यथावचनं 'समावात्वि'त्यादि 'देवहूत्यां स्वाहे'त्यन्तं वाक्यैकदेशमनुवक्तव्यम् । तच्चास्माभिः प्रयोगलेखने दर्शितव्यम् । मन्त्रार्थः—अग्निः प्रजापतिः भूतानां स्थावरादीनामधिपतिरीश्वरः स मा मामवतु । कस्मिन्नस्मिन्ब्रह्मणि अस्मिन्ब्रह्मकर्माणि होमादौ पुनरस्मिन् क्षत्रे क्षत्रकर्माणि प्रजापालनादौ पुनरस्यामाशिषि ब्राह्मणैः सम्पादितेष्टाशंसने पुत्रादिसुखकामनायां वा । कुत्र अस्यां कन्यायां किम्भूतायां पुरोधायां पुरः स्थितायामस्मिन्कर्मणि विवाहे अस्यां देवहूत्यां देवताह्वाने देवतोद्देशेन होमे वा । स्वाहा सुहुतमस्तु । "अग्निरैतु प्रथमो देवतानाᳬं सोऽस्यै प्रजां मुञ्चतु मृत्युपाशात् । तदयᳬं राजा वरुणोऽनुमन्यतां यथेयᳬं स्त्री पौ-

त्रमघं न रोदात्स्वाहा । इदमग्निस्त्रायतां गार्हपत्यः प्रजामस्यै नयतु दीर्घमायुः । अशून्योपस्था जीवतामस्तु माता पौत्रमानन्दमभिविबुध्यतामियꣳस्वाहा । स्वस्ति नो अग्ने दिवा पृथिव्या विश्वानि धेह्ययथा यजत्र । यदस्यां महि दिवि जातं प्रशस्तं तदस्मासु द्रविणं धेहि चित्रꣳस्वाहा । सुगन्नु पन्थां प्रदिशन्न एहि ज्योतिष्मध्ये ह्यजरन्न आयुः । अपैतु मृत्युरमृतं म आगाद्वैवस्वतो नो अभयं कृणोतु स्वाहा" इतिसूत्रम । मन्त्रार्थः । अग्निः एतु आगच्छतु । किम्भूतः देवतानां यज्ञभुजां प्रथमः आद्यः, प्रधानत्वात् । स चाग्निः । अस्यै अस्याः कन्यायाः प्रजां भाविपुत्रादिरूपां मुञ्चतु मोचयतु । कुतो? मृत्युपाशात् । यद्वा मृत्युपाशादग्निः अस्यै कन्यायै प्रजां मुञ्चतु । तच्च प्रजामोचनं राजा वरुणोऽनुमन्यतामनुजानातु । यथा येनानुज्ञानेन प्रकारेण वा इयं कन्या पौत्रं पुत्रभवं अघं दुःखं न रोदात् । शोकं प्राप्य न रोदिष्यति । कदाचिदपि अपत्यवियोगो मा भवतु इत्यर्थः । इमां कन्यां गार्हपत्योऽग्निस्त्रायतां रक्षतु । गार्हपत्याभिधो भाव्यग्निः पालयतु । इमां पत्नीं अग्निहोत्रिणीं कृत्वा रक्षतु । अस्यै अस्याः प्रजां दीर्घमायुः निर्दुष्टबहुकालजीवनं नयतु प्रापयतु । इयं चाशून्योपस्था सफलप्रसवा । अवन्ध्यतयेति यावत् । यद्वा नित्यं भर्तृसङ्गतोत्सङ्गाऽस्तु भवतु । जीवतामेव दीर्घायुषां माता चास्तु । जीवपुत्रा भवत्वित्यर्थः । किं च पौत्रं पुत्रसम्बन्धजमानन्दं सुखं अभ्यधिगम्य आभिमुख्येन सर्वभावेन वा प्राप्य विविधं बुध्यतां जानातु । सर्वज्ञाऽस्त्वित्यर्थः । यद्वा पौत्रमानन्दं विशिष्टतया बुध्यतां निशासुखापेक्षां त्यक्त्वा जागर्त्विति । हे अग्ने यजन् त्रायत इति यजत्रः । हे यजत्र यस्मात्त्वं सर्वप्रत्यक् अतो नोऽस्माकं विश्वानि सर्वकर्माणि अयथाऽन्यथाकृतानि कर्माणि स्वस्ति सम्पूर्णानि यथा स्युस्तथा धेहि । अनुकूलानि कृत्वा स्थापय । किं च दिव आ स्वर्गमभिव्याप्य आपृथिव्याः पृथिवीमभिव्याप्य च यत् महि महिमानमस्मासु धेहि स्थापय । किं च अस्यां पृथिव्यां जातं यद्द्रविणं वसु चित्रं ना-

नारूपं स्वर्णरत्नादिभेदेन प्रशस्तं प्रशस्यं श्रेष्ठं यच्च दिवि स्वर्गे जातं तद-प्यस्मासु धेहि। हे अग्ने नोऽस्मान् एहि आगच्छ। अस्मद्गृहानागत्य नोऽस्माकं सुगं सुगम्यं पन्थां पन्थानं अर्चिरादिमार्गं प्रदिशन्नुपदिशन् सम्पादयन्निति यावत्। आयुर्निर्दुष्टजीवनं धेहि देहि। किम्भूतं अजरं जरारोगादिपराभवविरहितम्। अजरं इत्यग्निविशेषणं वा विभक्तिव्यत्ययेन। पुनः किंभूतं ज्योतिष्मत्प्रकाशकम्। तत्प्रतिबन्धको मृत्युरपि नोऽस्माकं भवत्प्रसादादपैतु अपगच्छतु। अमृतं आनन्दं च नोऽस्मानागात्। आगच्छतु। वैवस्वतो यमश्च नोऽस्माकं अभयं त्वत्सम्बन्धेन कषायाभावाद्दुःखहेतुभयाभावं कृणोतु करोतु। "परं मृत्यविति चे"ति सूत्रम्। चकारादाहुतिं जुहोति परं मृत्यवित्यनेन मन्त्रेण। मन्त्रस्य पैत्रत्वादुदकस्पर्शः। उक्तं च गृह्यकारिकायां रेणुदीक्षितेन—

रौद्रीं पैत्रीं हुतिं कृत्वा स्पृशेत्प्राणीतकं जलम्।

प्राणीतकं प्रणीतासम्बन्धि जलम्। तथा च कात्यायनपरिभाषासूत्रम्—"रौद्रंराक्षसमासुरमाभिचारणिकं मन्त्रमुक्त्वा पित्रियमात्मानं वाऽऽलभ्यापऽउपस्पृशेदपऽउपस्पृशेदपः"। अस्यार्थः—रुद्रदेवादीन्मत्रानुच्चार्य पित्रियान् पितृदैवत्यान् आसुरान् असुरदैवत्यांश्च अप उपस्पृशेत्। चशब्दः कर्मसमुच्चये। कर्मकौमुद्यामपि—

यमरुद्रपितॄणां च मृतेश्चापि तथैव च।
आहुत्यन्ते च कर्तव्यो जलस्पर्शः सदा बुधैः॥

विधानपरिजाते—

अधोवायुसमुत्सर्गे प्रवासेऽनृतभाषणे।
मार्जारमूषकस्पर्शे आकुष्टे क्रोधसम्भवे॥
तेषु तेषु निमित्तेषु कर्म कुर्वन्नपः स्पृशेत्॥

अङ्गिराः—

चाण्डालादींश्च होमे दृष्ट्वाऽऽचम्य विशुध्यति।
श्वादीन्स्पृष्ट्वाऽपि वाऽऽचामेत्कर्णं वा दक्षिणं स्पृशेत्॥

बृहस्पतिः—

पितृमन्त्रोच्चाररौद्र आत्मालम्भेऽवमर्षणे।
अधोवायुसमुत्सर्ग आक्रन्दे क्रोधसम्भवे॥
मार्जारमूषिकास्पर्शे प्रवासेऽनृतभाषणे।
निमित्तेष्वेषु सर्वेषु दक्षिणं श्रवणं स्पृशेत्॥

साङ्कृत्यायनः—

क्षुते निष्ठीवने चैव दन्तोच्छिष्टे तथाऽनृते।
पतितानां च सम्भाषे दक्षिणं श्रवणं स्पृशेत्॥
आदित्या वसवो रुद्रा वायुरग्निश्च धर्मराट्।
विप्रस्य दक्षिणे कर्णे नित्यं तिष्ठन्ति सर्वदा॥

"एके प्राशनान्ते" इति सूत्रम्। एके आचार्याः संस्रवप्राशनान्ते इमामाहुतिमिच्छन्ति। तथा च गृह्यकारिकायाम्—

परम्मृत्यु तथाऽऽज्येन प्राशनान्तेऽथ वाऽऽहुतिः।
संस्रवप्राशनन्तत्र स्याद्ब्रभाणेति भाष्यकृत्॥

अस्मिन्पक्षे परं मृत्यविति होमान्ते पुनरेतस्य संस्रवप्राशनम्॥

इति श्रीप्रथमशाखीयरामकृष्णविरचिते पारस्करगृह्यसूत्रविवरणे संस्कारगणपतौ पञ्चमी कण्डिका॥

---

## (अथ षष्ठी कण्डिका)

कुमार्या भ्राता शमीपलाशमिश्राँल्लाजानञ्जलिनाऽञ्जलावावपति ताञ्जुहोति स꣡ꣳहतेन तिष्ठत्यर्यमणन्देवं कन्या अग्निमयक्षत। स नो अर्यमा देवः प्रेतो मुञ्चतु मा पतेः स्वाहा। इयन्नार्युपब्रूते लाजानावपन्तिका। आ-आयुष्मानस्तु मे पतिरेधन्तां ज्ञातयो मम स्वाहा। इमाँल्लाजानावपाम्यग्नौ समृद्धिकरणन्तव। मम तुभ्य च संवननं तदग्निरनुमन्यतामियꣳस्वाहेत्यथास्यै दक्षिणꣳ हस्तं गृह्णाति साङ्गुष्ठं गृभ्णामि ते सौभगत्वाय हस्तं

मया पत्या जरदष्टिर्यथासः । भगो अर्यमा सविता पुरन्धिर्मह्यं त्वाऽदुर्गार्हपत्याय देवाः । अमोऽहमस्मि सा त्वꣳसा त्वमस्यमो अहम् । सामाहमस्मि ऋक्त्वं द्यौरहं पृथिवी त्वम्। तावेहि विवहावहै सह रेतो दधावहै । प्रजां प्रजनयावहै पुत्रान्विन्द्यावहै बहून् । ते सन्तु जरदष्टयः सम्प्रियौ रोचिष्णू सुमनस्यमानौ । पश्येम शरदः शतꣳजीवेम शरदः शतꣳशृणुयाम शरदः शतमिति ॥ ६ ॥

अथ लाजाहोमः । "कुमार्या भ्राता शमीपलाशमिश्रांल्लाजानञ्जलिनाञ्जलावावपति" इति सूत्रम् । कुमार्याः कन्यकायाः भ्राता बन्धुः शमीपलाशैः शमीपत्रैर्मिश्रितान् लाजान् अञ्जलिना कन्याया अञ्जलौ आवपति । लाजाशब्देन भ्राष्ट्रा व्रीहय उच्यन्ते । तथा च गङ्गाधरः—

लाजाः स्युर्व्रीहयो भ्राष्ट्रा जुहुयान्मुष्टिसम्मितान् ।

भ्राष्ट्रेषु अम्बरीषेषु संस्कृताः भ्राष्ट्राः । "तान् जुहोति सꣳहतेन तिष्ठत्यर्यमणं देवं कन्या अग्निमयक्षत । स नो अर्यमा देवः प्रेतो मुञ्चतु मा पतेः स्वाहा । इयं नार्युपब्रूते लाजानावपन्तिका । आयुष्मानस्तु मे पतिरेधन्तां ज्ञातयो मम स्वाहा । इमाँल्लाजानावपाम्यग्नौ समृद्धिकरणं तव । मम तुभ्य च संवननं तदग्निरनुमन्यतामियꣳस्वाहा"इति सूत्रम् । ततः कुमारी तिष्ठती उर्ध्वा तान् स्वाञ्जलौ स्थितान् सꣳहतेन अविरलेनाञ्जलिना अर्यमणमित्यादिमन्त्रैर्जुहोति । "अविच्छिन्नस्यञ्जलिं स्रुवेव जुहुया"दित्याश्वलायनः । तत्रैकैकेन मन्त्रेण प्रक्षिप्तलाजानां तृतीयांशं जुहोति । एवं मन्त्रत्रयं भवति । सङ्ग्रहेऽपि—

एकाहुतिं त्रिधा कृत्वा आपोशाने तथाऽनले ।
लाजाहोमे प्रकुर्वन्तीति च शातातपोऽब्रवीत् ।

तथा च कारिकाकारः—

तिष्ठन्त्यातिष्ठता पत्या गृहीताञ्जलिनैव सा ।
अञ्जलिस्थान्त्रिधा सर्वान्प्राङ्मुखी प्रतिमन्त्रतः ॥

प्राजापत्येन तीर्थेन दैवेनैवेति बह्वृचाः ।

अङ्गुल्यग्रे देवतीर्थम् । कनिष्ठिकामूले प्रजापतितीर्थम् । तर्जनीमूले पितृतीर्थम् ।

अन्यो भ्रातुरभावे स्याद्बान्धवो ज्ञातिरेव च ॥ इति ।

"भ्राता भ्रातृस्थानो वे"त्याश्वलायनगृह्ये ।

भ्रातृस्थाने पितृव्यस्य मातुलस्य च यः सुतः ।
मातृष्वसृसुतस्तद्वत्सुतस्तद्वत्पितृष्वसुः ॥

इति बह्वृचकारिकायाम् । द्रव्यत्यागे तु वरस्य कर्तृत्वम् , 'प्रधानःस्वामी फलयोगादि'त्युक्तत्वात् । 'एतन्मन्त्रत्रयं कन्यैव पठति' इति प्रयोगरत्नकारः । मन्त्रार्थः-कन्याः पूर्वाः प्रथमं अर्यमणं सूर्यं देवं कान्तं अग्निं अग्निस्वरूपं वरलाभाय अयक्षत अयजन् । लिङि छान्दसं रूपम् । स चार्यमा देवस्ताभिरिष्टो यतोऽतो नोऽस्मानिदानीं परिणीताः कन्या इतः पितृकुलात्प्रमुञ्चतु प्रमोचयतु । मा पतेः पत्युः कुलात्सहचरीत्वाद्वा मा प्रमोचयतु । यद्वा वरो ब्रूते-कन्याः यं अर्यमणमग्निरूपेणायजन् । सोऽर्यमादेवः पतेः पत्युर्मत्तः सकाशादिर्मां नो प्रमुञ्चतु मा प्रमोयचतु । इतः अस्याः कन्यायाः सकाशात् मा मां नो प्रमुञ्चतु । अत्रेदं मन्त्रत्रयं कन्यैव वरपाठिता पठति । इयं नारी वधूः उप पत्युः समीपे ब्रूते । किं कुर्वती लाजान् भृष्टव्रीहीन् आवपन्तिका अग्नौ विभागशः प्रक्षिपन्ती । स्वार्थे कप्रत्ययः । किं ब्रूते ? तदाह-मे मम पतिरायुष्मान् सकलदीर्घायुरस्तु भवतु । मम ज्ञातय एधन्तामिति । किं च हे पते इमानग्नौ आवपामि प्रक्षिपामि । किम्भूतान् तव समृद्धिकरणं समृद्धिहेतवे । अतो मम कन्यायाः तुभ्यं च तव च भर्तुः, मलोपश्छान्दसः । संवननं वशीकरणमन्योन्यमनुरागः । तदयमग्निरर्यमा अनुमन्यतामनुमोदनं कुरुतात् । इयं च स्वाहा तत्पत्नी अनुमन्यताम् । अथ पाणिग्रहणम् । "अथास्यै दक्षिणःहस्तं गृह्णाति साङ्गुष्ठं गृभ्णामि ते सौभगत्वाय हस्तं मया पत्या जरदष्टिर्यथाऽऽसः । भगो अर्यमा सविता पुरन्धिर्मह्यं त्वाऽदुर्गार्हपत्याय देवाः । अमोऽहमस्मि सा त्वःसा त्वमस्यमो अहम् ।

सामाहमस्मि ऋक्त्वं द्यौरहं पृथिवी त्वम्। तावेव विवहावहै सह रेतो दधावहै। प्रजां प्रजनयावहै पुत्रान्विद्यावहै बहून्। ते सन्तु जरदष्टयः सम्प्रियौ रोचिष्णू सुमनस्यमानौ। पश्येम शरदः शतं जीवेम शरदः शतꣳशृणुयाम शरदः शत''मिति सूत्रम्। अस्यै इति चतुर्थी षष्ठ्यर्थे। अस्याः कुमार्याः दक्षिणं साङ्गुष्ठं अङ्गुष्ठसहितं हस्तं गृह्णाति वरः स्वहस्तेनादत्ते गृभ्णामि त इति मन्त्रेण। अथ शब्दोऽनन्तरं स्वस्थानं तिष्ठता कर्तव्यमिति द्योतनार्थम्। तथा च गृह्यकारिकायाम्—

साङ्गुष्ठं हस्तमुत्तानं गृह्णात्यस्याः पतिस्ततः।
गृभ्णामि ते सौभगत्वायेति मन्त्रेण दक्षिणम्॥

वीरमित्रोदयेऽपि मनुः—

पाणिग्रहणसंस्कारः सवर्णासूपदिश्यते।
असवर्णास्वयं ज्ञेयो विधिरुद्वाहकर्मणि॥
शरः क्षत्रियया ग्राह्यः प्रतोदो वैश्यकन्यया।
वसनस्य दशा ग्राह्या शूद्रयोत्कृष्टवेदने॥

क्षत्रियया ग्राह्य इति वदता पूर्वं वरेण गृहीतं शरं क्षत्रिया गृह्णीयात्, इत्युक्तं भवति। एवमुत्तरत्रापि। याज्ञवल्क्यः—

पाणिर्ग्राह्यः सवर्णासु गृह्णीयात्क्षत्रिया शरम्।
वैश्या प्रतोदमादद्याद्वेदने त्वग्रजन्मनः॥ इति।

मन्त्रार्थः—हे कन्ये ते तव हस्तं करं गृभ्णामि गृह्णामि। 'हृग्रहोर्भश्छन्दसी''ति भत्वम्। यथा येन गृहीतहस्तेन मया पत्या भर्त्रा सह जरदष्टिर्जरच्छरीरा बहुवर्षाऽऽयुष्मती आसः, भवसीत्यर्थे निपातः। भगादयस्त्रयो देवास्त्वा त्वां मह्यं अदुः दत्तवन्तः। किमर्थं गार्हपत्याय स्वामिनीत्वाय भार्यात्वाय वा गार्हपत्यं सेवितुं वा। किं च सौभगत्वाय सुभगानां समूहः सौभगं तस्य भावः सौभगत्वं तस्मै तदर्थं निरतिशयानन्दावाप्तये इत्यर्थः। किम्भूतां त्वां पुरन्धिः। पुरन्धिर्द्वितीयार्थे प्रथमा। श्रेष्ठां सुरूपवतीं वा। तथा च श्रुतिः ''पुरन्धिर्योषेति योषित्त्वेव रूपं दधातीति''। हे कन्ये यत् अमो विष्णुरहमस्मि। अमति सर्वत्र ग-

च्छति सर्वं जानाति वेत्ति न मिनोति हि नोऽस्तीति वा अमः। तथा सौवति सुवति सूते वा विश्वमिति सा लक्ष्मीस्त्वमसि। किं च सा देवी त्रयीरूपा त्वमसि। अमो देवत्रयरूपोऽहमस्मि। किं च अहं सामास्मि। ऋक्त्वमसि। अहं द्यौरस्मि। त्वं पृथिव्यसि। तावेवावां विवहावहै। विवाहं करवावहै। सह संयुक्तौ भूत्वा रेतः पुत्रदेहरूपं दधावहै धारयावहै। तत्प्रजां स्त्रीरूपां सन्ततिं प्रजनयावहै पुत्रान्पुत्रपौत्रादीन् बहून्विन्दावहै लभावहै। ते च पुत्रा जरदष्टयः शतायुषः सन्तु। आवामपि संप्रियौ सम्यक्प्रीतौ परस्परं प्रेमशालिनौ रोचिष्णू सुदीप्तौ शोभमानौ वा सुमनस्यमानौ शोभनमनोवृत्तिं कुर्वाणौ सुमनसो भावः सौमनस्यं तत्कुर्वाणावित्यर्थः। सन्त्विति स्तामिति च विपरिणमय्य योज्यम्। इन्द्रियपाटवमाशास्ते। वयं च पुत्रादिसहिताः शतं शरदो वत्सरान् पश्येम। रूपग्रहणसमर्थाः स्याम। तथा शतं शरदो जीवेम। निरुपद्रवाः प्राणान् धारयाम। तथैव शरदः शतं शृणुयाम। निर्दुष्टं शब्दग्रहणसमर्थमस्माकं श्रवणेन्द्रियं भवत्वित्यर्थः॥

इति श्रीप्रथमशाखीयरामकृष्णविरचिते पारस्करगृह्यसूत्रविवरणे संस्कारगणपतौ षष्ठी कण्डिका समाप्ता॥

---

## ( सप्तमी कण्डिका )

**अथैनामश्मानमारोहयत्युत्तरतोऽग्नेर्दक्षिणपादेनारोहेममश्मानमश्मेव त्वꣳस्थिरा भव। अभितिष्ठ पृतन्यतोऽवबाधस्व पृतनायत इत्यथ गाथां गायति सरस्वति प्रेदमव सुभगे वाजिनीवती। यान्त्वा विश्वस्य भूतस्य प्रजायामस्याग्रतः। यस्यां भूतꣳसमभवद्यस्यां विश्वमिदं जगत्। तामद्य गाथां गास्यामि या स्त्रीणामुत्तमं यश इत्यथ परिक्रामतस्तुभ्यमग्रे पर्यवहन्सूर्यां वहतुना सह।**

**पुनः पतिभ्यो जायां दाग्ने प्रजया सहेत्येवं द्विरपरं लाजादि चतुर्थः शूर्पकुष्ठया सर्वांल्लाजानावपति भगाय स्वाहेति त्रिः परिणीतां प्राजापत्यः हुत्वा ॥ ७ ॥**

**"अथैनामश्मानमारोहयत्युत्तरतोऽग्नेर्दक्षिणपादेनारोहेममश्मानमश्मेव त्वःस्थिरा भव । अभितिष्ठ पृतन्यतोऽवबाधस्व पृतनायत"**इति सूत्रम् । अथ घृतकर एव वर एनां वधूमुत्तरतोऽग्नेः स्थापितमश्मानं पाषाणं दक्षिणपादेन कृत्वा आरोहयति **"आरोहेममश्मान"** मित्यनेन मन्त्रेण । मन्त्र एव कारितार्थे । वासुदेवेन कुमार्या दक्षिणपादं हस्तेन गृहीत्वा अश्मानमुपरि वरः करोतीत्युक्तम् । तथा च गृह्यकारिकायाम्—

**गत्वोभावुत्तरेणाग्निं तस्याः सव्येतरं करम् ।**
**सव्येनादाय हस्तेन वधूपादं तु दक्षिणम् ॥**
**शिलामारोहयेत्प्रागायतां दक्षिणपाणिना ॥** इति ।

अग्नेरुत्तरतो गत्वा तस्याः कन्याया दक्षिणकरं वामहस्तेन गृहीत्वा कन्याया दक्षिणपादं दक्षिणहस्तेन धृत्वा पाषाणोपरि वरः करोतीत्यर्थः । मन्त्रपाठो वरस्य न कुमार्याः । **मन्त्रार्थः**—हे कन्ये इमं पुरोवर्तिनमश्मानं प्रस्तरं आरोह आक्राम । अधितिष्ठेति यावत् । आरोहणेन संस्कृता त्वमश्मेव पाषाणवत्स्थिरा भव । किं च अभि आविकृत्य आक्रम्य तिष्ठ । कान् पृतनां सङ्ग्राममिच्छन्ति पृतन्यन्ति त एव पृतन्यतः तान्पृतन्यतः कलहकारिण इत्यर्थः । ततश्च पृतनाभिः सेनाभिर्यतन्ते तान्पृतनायतः अव अवाचीनान्कृत्वा बाधस्व भग्नाधमान्कुरु । **"अथ गाथां गायति सरस्वति प्रेदमव सुभगे वाजिनीवति । यां त्वा विश्वस्य भूतस्य प्रजायामस्याग्रतः । यस्यां भूतःसमभवद्यस्यां विश्वमिदं जगत् । तामद्य गाथां गास्यामि या स्त्रीणामुत्तमं यश"** इति सूत्रम् । अथ कन्याया दक्षिणपादेऽश्मनि निहित एव वरः तिष्ठन् **"सरस्वति प्रेदमवे"**त्यादि **"स्त्रीणामुत्तमं यश"**इति इमां गाथां गायति । अथाश्मनि आरूढायां कुमार्यां वरो गाथां गायति, इति प्रयोगरत्नकारः ।

एवमेव यजुर्वल्लभकारोऽपि । तथा च रेणुः—

सरस्वत्यादिकाँस्त्रिष्टुन्वर एवाधिकारतः ॥ इति ।

**मन्त्रार्थः**—हे स्वरस्वति वाग्देवते सुभगे कल्याणि, वाजिनीवति अन्नवति । यद्वा वाजाः पक्षाः सन्त्यस्या इति वाजिनी हंसी तद्वति. इदं युग्मं कर्म प्राव प्रकृष्टतयाऽव रक्ष । त्वा त्वां अस्य विश्वस्य भूतस्य जातस्य पृथिव्यादेर्वा, प्रजायां प्रकृष्टां जनित्रीमाहुः । किम्भूतां अग्रतः प्रथमाम् । तदेव प्रपञ्चयति—यस्यां प्रकृतरूपायां त्वयि इदं सर्वं विश्वं तथाभूतं पृथिव्यादि सर्वं जगत् अस्तं गच्छत् आस, प्रलये लीनमित्यर्थः । पुनः सृष्ट्यादौ च यस्याः सकाशात्सममभवत् जातं तस्याः सरस्वत्याः सम्बन्धिनीं तां गाथां गुणप्रभावस्तुतिप्रकाशिकां अद्य गास्यामि । या श्रुता सती स्त्रीणामुत्तमं श्रेष्ठं यशः कीर्तिं ददाति । "अथ परिक्रामतस्तुभ्यमग्ने पर्यवहन्त्सूर्यां वहतु ना सह । पुनः पतिभ्यो जायां दाऽग्ने प्रजया सहे"ति सूत्रम् । अथ धृतकरावेव वधूवरावग्नेः परिक्रमणं कुरुतः 'तुभ्यमग्ने' इत्यनेन मन्त्रेण । मन्त्रश्च लिङ्गाद्वरस्यैव । तथा च गृह्यकारिकायाम्—

पुनर्हस्तं समादाय दक्षिणेनैव दक्षिणम् ।
तौ परिक्रामतस्तुभ्यमग्ने पर्यवहन्निति ॥

स च लिङ्गाद्वरस्यैव मन्त्रपाठो भवेदिति । प्रदक्षिणाप्रकारस्तु कर्मकौमुद्याम्—

चतुर्थीमाहुतिं दद्यादग्नेः कन्या भ्रमन्त्यपि ।
यदि चाग्रे वरो गच्छेद्रोगशोकधनक्षयः ॥

चतुर्थ्यामाहुतावेव अग्रे कन्या आहुतित्रयपर्यन्तं वरस्य पश्चादित्यर्थः । **मन्त्रार्थः**—हे अग्ने ! तुभ्यं त्वदर्थमेव सोमादयः अग्रे पूर्वं जन्मदिनादारभ्य पर्यवहन् पाणिं गृहीतवन्तः । ततः सूर्यां सूर्यसम्बन्धिनीं भार्यां इमां भवान्वहतु । किं भूतः ना पुरुषः परमपुरुषार्थहेतुरित्यर्थः । तां जायां जायात्वेन पुनः पश्चात्स्वभागानन्तरं प्रजया पुत्रैः सह मह्यमदा देहि । सन्धिरार्षः । "एवं द्विरपरं लाजादी"ति सूत्रम् । एवमनेन

प्रकारेण लाजादिकुमार्या भ्रातेत्यारभ्य परिक्रमणान्तं यावत्कर्मोक्तं तावद्‌द्विर्वारद्वयमपरं पुनर्भवति। तथा च गृह्यकारिका—

एवं द्विरपरं कर्म लाजाहोमादिकं भवेत् ॥ इति।

"चतुर्थं शूर्पकुष्ठया सर्वान् लाजानावपति भगाय स्वाहे"-ति सूत्रम्। तृतीये परिक्रमणे समाप्ते चतुर्थं लाजाहोमं जुहुयात्। तत्रायं विशेषः—कुमार्या भ्राता शूर्पकुष्ठया शूर्पकोणेन शूर्पेऽवशिष्टान् लाजान् सर्वान् कुमार्या अञ्जलावावपति।

अग्रे च विधवा नारी कोणे चैव विपत्स्यतः।
न चाग्रेण न कोणेन जुहुयाच्छूर्पकुष्ठयोः॥

शूर्पकुष्ठया अञ्जलावावपेदित्यर्थः। तान् कुमारी "भगाय स्वाहे"-त्यनेन मन्त्रेण जुहोति। तथा च कारिकायाम्—

आवपत्यखिलान् लाजान चतुर्थं शूर्पकुष्ठया।
तान् जुहोति भगायेति सर्वान्सैव सकृत्ततः॥

ततः समाचारात्तूष्णीं चतुर्थपरिक्रमणं वधूवरौ कुरुत इति वासुदेव-गङ्गाधरहरिहररेणुदीक्षिताः। तथा च गृह्यकारिका—

हस्तग्रहणतस्तूष्णीं भवेदत्र परिक्रमः॥

"त्रि परिणीतां प्राजापत्यं हुत्वा" इति सूत्रम्। त्रिः परिणीतां सतीं कुमारीं प्राजापत्यं प्रजापतिदेवताकं होमं कृत्वा। त्रिर्ग्रहणं इतरथा-वृत्तिव्युदासार्थम्। इतरथावृत्तिः कर्तव्या सर्वत्र। तथा च परिभाषासू-त्रम्—"विवृत्यावृत्य वेतरथावृत्ति"रिति। अस्यार्थः—विवृत्य अ-प्रदक्षिणमावर्तनं कृत्वा, आवृत्य प्रदक्षिणमावर्तनं कृत्वा इतरथावृत्तिः कर्तव्येति। यत्र शास्त्रतः प्रदक्षिणावृत्तिः कृता तत्र तदानीमेव, अप्रदक्षि-णावृत्तिरविहिताऽपि सर्वत्र कर्तव्या। यत्र च अप्रदक्षिणावृत्तिः कृता तत्र तदानीमेव प्रदक्षिणावृत्तिरविहितापि सर्वत्र कर्तव्येत्यर्थः। अत्र लाजाहोमे नेतरथावृतिः। तथा च रेणुः—

दम्पत्योर्गच्छतस्तत्र ब्रह्माग्नी अन्तरागतिः।

दक्षिणेनोदकुम्भः स्यादुत्तरो तात उत्तरा ॥
न स्यादितरथाऽऽवृत्तीति त्रिः प्रणीत्यादि सूत्रणात् ॥

कर्मकौमुद्यामपि—

लाजानाज्यं स्रुवं कुम्भं द्विजमश्मानमेव च।
एतांश्च बाह्यतः कृत्वा शेषस्यैव प्रदक्षिणम् ॥

तथा च परिभाषासूत्रम्—"हविष्पात्रस्वाम्यृत्विजां पूर्वं पूर्वम् अन्तरमृत्विजां च यथापूर्व"मिति। अस्यार्थः-हविर्व्रीह्यादि पात्राणि शूर्पादीनि स्वामी कर्मजन्यफलभोक्ता यजमानः पत्नी च ऋत्विजो ब्रह्माद्याः, एतेषामेकत्र समावेशे सति अन्तरङ्गबहिरङ्गभावो ज्ञेयः। हविरन्तरङ्गं पात्राणि बहिरङ्गानि। यत्र पात्रमन्तरङ्गं तत्र यजमानो बहिरङ्गम्। यत्र यजमानोऽन्तरङ्गं तत्र ऋत्विग्बहिरङ्गम। तथा हि—"यत्रान्तरङ्गे कार्ये कर्तव्ये बहिरङ्गमसिद्धं स्यात्" इत्यनेनापि यजमानस्य ब्रह्माग्न्योर्मध्ये गमनं स्यात्। 'चतुर्थपरिक्रमणवर्जं ब्रह्माग्नी अन्तरा गतिर्भवेदे'ति प्रयोगरत्ने। ततः "प्रजापतये स्वाहे"ति प्राजापत्यहोमः। "इदं प्रजापतये" इति त्यागः।

**इति श्रीप्रथमशाखीयरामकृष्णविरचिते पारस्करगृह्यसूत्रविवरणे संस्कारगणपतौ सप्तमी कण्डिका समाप्ता ॥**

---

## ( अष्टमी कण्डिका )

**अथैनामुदीचीꣳसप्तपदानि प्रक्रामयत्येकमिषे द्वे ऊर्ज्जे त्रीणि रायस्पोषाय चत्वारि मायोभवाय पञ्च पशुभ्यः षडृतुभ्यः सखे सप्तपदा भव सा मामनुव्रता भव विष्णुस्त्वानयत्विति सर्वत्रानुषजति निष्क्रमणप्रभृत्युदकुम्भꣳस्कन्धे कृत्वा दक्षिणतोऽग्नेर्वाग्यतः स्थितो भवत्युत्तरत एकेषान्तत एनां मूर्द्धन्यभिषिञ्चत्यापः**

शिवाः शिवतमाः शान्ताः शान्ततमास्तास्ते कृण्वन्तु भेषजमित्यापोहिष्ठेति तिसृभिरथैनाꣳ सूर्यमुदीक्षयति तच्चक्षुरित्यथास्यै दक्षिणाꣳसमधिहृदयमालभते मम व्रते ते हृदयं दधामि मम चित्तमनुचित्तं ते अस्तु । मम वाचमेकमना जुषस्व प्रजापतिष्ट्वा नियुनक्तु मह्यमित्यथैनामभिमन्त्रयते 'सुमङ्गलीरियं वधूरिमाꣳसमेत पश्यत । सौभाग्यमस्यै दत्त्वा याथास्तं विपरेतने'ति तां दृढपुरुष उन्मथ्य प्राग्वोदग्वाऽनुगुप्तागार आनडुहे रोहिते चर्मण्युपवेशयतीह गावो निषीदन्त्विहाश्वा इह पूरुषाः । इहो सहस्रदक्षिणो यज्ञ इह पूषा निषीदन्त्विति ग्रामवचनं च कुर्युर्विवाहश्मशानयोर्ग्रामं प्रविशतादिति वचनात्तस्मात्तयोर्ग्रामः प्रमाणमिति श्रुतेराचार्याय वरं ददाति गौर्ब्राह्मणस्य वरो ग्रामो राजन्यस्याश्वो वैश्यस्याधिरथꣳशतन्दुहितृमतेऽस्तमिते ध्रुवं दर्शयति 'ध्रुवमसि ध्रुवन्त्वा पश्यामि ध्रुवैधि पोष्ये मयि मह्यन्त्वाऽदात् । बृहस्पतिर्मया पत्या प्रजावती सञ्जीव शरदः शतमि'ति सा यदि न पश्येत्पश्यामीत्येव ब्रूयात्त्रिरात्रमक्षारालवणाशिनौ स्यातामधः शयीयाताꣳसंवत्सरन्न मिथुनमुपेयातां द्वादशरात्रꣳषड्रात्रन्त्रिरात्रमन्ततः ॥ ८ ॥

अथ सप्तपदी । "अथैनामुदीचीꣳसप्तपदानि प्रक्रामयत्येकमिषे द्वे ऊर्ज्जे त्रीणि रायस्पोषाय चत्वारि मायोभवाय पञ्च पशुभ्यः षडृतुभ्यः सखे सप्तपदा भव सा मामनुव्रता भव विष्णुस्त्वानयत्विति सर्वत्रानुषजति" इति सूत्रम्। अथ वर एनां कुमारीं अग्नेरुत्तरतः उदीचीं उदङ्मुखीं "एकमिष" इत्येतैः सप्तमन्त्रैः सप्तपदानि प्रक्रामयति प्रक्रमणं कारयति । कारितत्वात्सप्तपदानि प्रक्रमस्वेत्यध्येषणेति । कुमार्या दक्षिणपादं गृहीत्वा अग्रे अग्रे स्थापयति । अन्ये 'विष्णुस्त्वा नयत्वि'-

ति सर्वत्र षण्मन्त्रेषु अनुषङ्गः, न तु सप्तमे मन्त्रे तुल्ययोगित्वात्साकाङ्क्षत्वाच्च । पूर्वमन्त्रमिति कर्काचार्यः । अन्येषां भाष्यकाराणां पद्धतिकाराणां च मते सर्वमन्त्रेष्वनुषङ्गः । तथा च वीरमित्रोदये हरिण्यकेशिसूत्रम् "अपरेणाग्निं प्राचीमुदीचीं वा विष्णुक्रमान्कारयति । अथैनां संशास्ति दक्षिणेन प्रक्रम्य सव्येनानुप्रक्रामसव्येन दक्षिणमतिक्रामीरिति" । अग्नेरीशानभागे आश्वलायनः । तद्यथा "अथैनामपराजितायां दिशि सप्तपदान्युत्क्रामयती"ति । अपराजिता-ईशानी । तथा च शौनकः—

अग्नेः पूर्वोत्तरं देशं नीत्वा तस्याः पुरो व्रजेत् ।
इष एक पदीत्याद्यमुक्त्वा मन्त्रं च सर्वकम् ॥
भवादिपदसंख्यानं प्रत्येकं योजयेत्पदम् । इति ।

इदन्तु तच्छाखीयानामेव । अस्यावश्यकत्वमाह मनुः—

पाणिग्रहणमन्त्रास्तु नियतं दारलक्षणम् ।
तेषां निष्ठा तु विज्ञेया विद्वद्भिः सप्तमे पदे ॥ इति ।

दारलक्षणं भार्यात्वोत्पत्तौ प्रमाणं विद्वद्भिर्नियतं तेषां मन्त्राणां निष्ठा समाप्तिः सम्पूर्णसंस्कारोत्पादकत्वं सप्तमे पदे अतिक्रान्ते भवति ।

पाणिगृहीता भार्या स्यादितरा सहधर्मिणी ॥

इति त्रिकाण्डस्मरणात् । भार्यात्वं पतित्वस्याप्युपलक्षणम् । तथा च यमः—

नोदकेन न वाचा वा कन्यायाः पतिरुच्यते ।
पाणिग्रहणसंस्कारात्पतित्वं सप्तमे पदे ॥ इति ।

पतिगोत्रप्राप्तिरपि सप्तमपदातिक्रमे भवति । तथा च मनुः—

तावद्विवाहो नैव स्याद्यावत्सप्तपदी भवेत् ।
तस्मात्सप्तपदी कार्या विवाहे मुनिभिः स्मृता ॥
एकत्वे सा गता भर्तुः पिण्डगोत्रे च सूतके ।
स्वगोत्राद्भ्रश्यते नारी विवाहात्सप्तमे पदे ॥ इति ।

मन्त्रार्थः—इषे अन्नाय ऊर्जे बलाय रायस्पोषाय धनपुष्ट्यै मयः

सुखं तस्य भव उत्पत्तिः पश्वादिभ्यः तत्तत्सुखाय सखे इह पुत्रमिव सा त्वं सप्तपदा भूरादिसप्तलोकप्रख्याता भव । मां अनुवर्तिनी च भव । "निष्क्रमणप्रभृत्युदकुम्भꣳस्कन्धे कृत्वा दक्षिणतोऽग्नेर्वाग्यतः स्थितो भवती"ति सूत्रम् । निष्क्रमणं पित्रा प्रत्तामादाय गृहीत्वा निष्क्रामतीत्येतावदुच्यते । तदारभ्य कश्चित्पुरुष उदकपूर्णं कुंभं स्कन्धे गृहीत्वा विवाहाग्नेर्दक्षिणतो वाग्यतस्तूष्णीं तिष्ठेत् । "उत्तरत एकेषा"मिति सूत्रम् । एकेषामाचार्याणां मते अग्नेरुत्तरतस्तिष्ठति, अतश्च विकल्पः । "तत एनां मूर्धन्यभिषिञ्चत्यापः शिवाः शिवतमाः शान्ताः शान्ततमास्तास्ते कृण्वन्तु भेषजमिति" सूत्रम् । ततस्तस्मादुदकुम्भाद्धस्तेन जलमादाय एनां वधूं मूर्धनि शिरसि वर एव "आपः शिवा" इत्यनेन मन्त्रेणाभिषिञ्चति । मन्त्रार्थः—या आपः शिवाः कल्याणहेतवः शिवतमाः अतिशयाभ्युदयकारिण्यः शान्ताः सुखकर्त्र्यः शान्ततमाः परमानन्ददात्र्यस्ता आपस्ते तव भेषजं आरोग्यं कृण्वन्तु कुर्वन्तु । "आपोहिष्ठेति च तिसृभिः" इति सूत्रम् । चशब्दात्तस्मादुदकादापोहिष्ठेति त्रिभिर्मन्त्रैरभिषेकः कार्यः । "अथैनाꣳसूर्यमुदीक्षयति तच्चक्षुरिति" इति सूत्रम् । सूर्यावेक्षणं कारयति उदीक्षयतीति, कारितत्वादध्येषणा सूर्यमुदीक्षस्वेति । सा च वरेण प्रेषिता सूर्यं पश्यति । "तच्चक्षु"रित्यनेन मन्त्रेण । दिवा विवाहपक्ष एतदिति रेणुदीक्षितहरिहरौ । तथा च गृह्यकारिकायाम्—

ततः सूर्यमुदीक्षस्वेत्याह तां स नितम्बिनीम् ।
ब्रूश्चेत्सोदीक्षते सूर्यं तच्चक्षुरिति मन्त्रतः ॥

गदाधरादिभिस्तु सूर्यावेक्षणान्यथाऽनुपपत्त्या अस्तमितीत्यत्रास्तमिति ग्रहणाच्च एतद्गृह्यानुसारिणां दिवैव विवाह इत्यूह्यते । "अथास्यै दक्षिणाꣳसमधिहृदयमालभते मम व्रते ते हृदयं दधामि मम चित्तमनु चित्तं ते अस्तु । मम वाचमेकमना जुषस्व प्रजापतिष्ट्वा नियुनक्तु मह्यमिति" सूत्रम् । अस्यै इति चतुर्थी षष्ठ्यर्थे । अस्याः वध्वाः दक्षिणांसमधि दक्षिणस्य अंसस्य स्कंधस्य अधि उपरि हस्तं नीत्वा "मम

व्रते त" इत्यनेन मन्त्रेण तस्या हृदयमालभते वरः । **मन्त्रार्थः**—हे कन्ये इत्यध्याहारः । मम व्रते शास्त्रविहितनियमादौ ते तव हृदयं मनः दधामि स्थापयामि । किं च मम चित्तमनु मम चित्तानुकूलं ते तव चित्तमस्तु । त्वं च मम वाचं वचनं एकमना अव्यभिचारिमनोवृत्तिर्जुषस्व दृष्टचित्तादरेण कुरुष्व । त्वा त्वां च स एव बृहस्पतिर्मह्यं मदर्थं मां प्रसादयितुमित्यर्थः नियुनक्तु नियोजयतु । **"अथैनामभिमन्त्रयते सुमङ्गलीरियं वधूरिमा ँ्समेत पश्यत । सौभाग्यमस्यै दत्त्वा याथास्तं विपरेतने"**ति सूत्रम् । अथ वर एनां वधूं "सुमङ्गली"रित्यनेन मन्त्रेणाभिमन्त्रयते । अत्राचाराच्चतस्रः स्त्रियो मङ्गलं कुर्वन्ति । तथा च गृह्यकारिकायाम्—

पाणिभ्यां संहताभ्यां च स तामेवाभिमन्त्रयेत् ।
सुमङ्गलीरियमिति मन्त्रेणाथ वरं स्त्रियः ॥
पतिपुत्रान्विता भव्याश्चतस्रः सुभगा अपि ।
सौभाग्यमस्यै दद्युस्ता मङ्गलाचारपूर्वकम् ॥ इति ।

अत्र समाचाराद्वधूं वरस्य वामभागे उपवेशयन्ति । वध्वाः सीमन्ते वरः सिन्दूरं ददातीति प्रयोगरत्ने । स्मृत्यन्तरे—

वामे सिन्दूरदाने च वामे चैव द्विरागमे ।
वामेऽशनैकशय्यायामासीज्जाया प्रियार्थिनी ॥

**मन्त्रार्थः**—हे विवाहदेवताः इयं वधूः सुमङ्गलीः शोभनमङ्गलरूपा, विसर्गश्छान्दसः, अतः इमां कन्यां समेत सङ्गच्छत । सङ्गत्य च इमां पश्यत दृष्ट्या विलोकयत । किञ्च पुनरपि पुत्रादिमङ्गलमाशास्य पुनरागमनाय व्रजत इत्यर्थः । यद्वा यद्यस्तं याथ तर्हि न विपरेतनेति । "अस्तं गृहा" इति श्रुतेः । **"तां दृढपुरुष उन्मथ्य प्राग्वोदग्वाऽनुगुप्त आगार आनडुहे रोहिते चर्मण्युपवेशयति इह गावो निषीदन्त्विहाश्वा इह पूरुषाः । इहो सहस्रदक्षिणो यज्ञ इह पुरुषा निषीदन्त्विति"** सूत्रम् । ततो वरस्तां वधूं उन्मथ्य उत्क्षिप्य प्राक् प्राच्यामुदक्

उदीच्यां वा अनुगुप्त आगारे परिवृते रोहिते रक्तवर्णे आनडुहे चर्मणि उपवेशयति "इह गावः" इति मन्त्रेण। चर्म च प्राग्ग्रीवमुपरिलोमास्तीर्णं भवति। "चर्माण्युत्तरलोमानि प्राग्ग्रीवाणीति" परिभाषासूत्रात्। तथा च गृह्यकारिका—

ततः प्राच्यामुदीच्यां वाऽनुगुप्ते निलये वरः।
चर्मण्यानडुहे रक्ते तामुत्क्षिप्योपवेशयेत्॥

दृढपुरुषः कश्चिद्बलवान् पुरुष इति हरिहरः। दृढपुरुषो जितेन्द्रिय इति भर्तृयज्ञः। जामातैव दृढपुरुष इति रेणुदीक्षितगङ्गाधरौ। गदाधरमतेऽपि वर एव। मन्त्रार्थः—इह कन्यानिवेशने गावः अश्वाः पुरुषाश्च निषीदन्तु वसन्तु। इह पदावृत्तिः कर्तृभेदापेक्षया। किञ्च उ एवार्थे। इहैव सहस्रं गावो दक्षिणा यस्य स यज्ञः पूषा पुष्टिकरो निषीदतु। "पूषा वै सहस्रदक्षिण आसेति" श्रुतेः। ततः संस्रवप्राशनं मार्जनं पवित्रप्रतिपत्तिः प्रणीताविमोकः। एते पदार्थाः कर्तव्या इति गदाधररेणुदीक्षितादयः। नेति हरिहरादयः। "ग्रामवचनं च कुर्युर्विवाहश्मशानयो"रिति सूत्रम्। विवाहे श्मशाने च वृद्धानां स्त्रीणां वचनं वाक्यं कुर्युः। सूत्रे अनुपनिबद्धमपि वधूवरयोर्गले सूत्रमालाया धारणम्, उभयोर्वस्त्रान्ते ग्रन्थिकरणम्, करग्रहणे न्यग्रोधपुटिकाधारणम्, वरागमने नासिकाधारणम्, वरहृदये दध्यादिलापनादि ताश्च यत्स्मरन्ति तदपि कर्तव्यम्। चशब्दाद्देशाचारोऽपि। तथा चाश्वलायनः—"अथ खलूच्चावचा जनपदधर्मा ग्रामधर्माश्च तान्विवाहे प्रतीयात् यत्तु मानं तद्वक्ष्याम इति"। उच्चावचधर्मानाह शौनकः—

नानाविधा जनपदा ग्राम्याश्चोद्वाहकर्मणि।
क्रियन्ते लौकिका धर्मास्तेषु तत्कुलपूरुषैः॥
पूर्वैरनुष्ठितान्कृत्वा कुर्याद्दारपरिग्रहम्॥

ग्रामशब्देन स्वकुलवृद्धास्त्रियोऽभिधीयन्ते। ता हि पूर्वपुरुषैरनुष्ठीयमानं सदाचारं स्मरन्ति। ग्रामवचनं लोकवचनमिति भर्तृयज्ञः। वृद्धानां स्त्रीणां वचनं कार्यमिति कुतः? इत्यत आह "ग्रामं प्राविशतादिति

वचनात्तस्मात्तयोर्ग्रामः प्रमाणमिति श्रुतेः" इति सूत्रम् । 'ग्रामवृद्धानां स्त्रीणामाचारं प्राविशतादि'ति स्मृतिवचनात् । विधानपारिजातेऽपि--

कारयन्ति स्त्रियो वृद्धा यत्कर्तव्यमिहैव तत् ।
प्रमाणवचनं तासां वचनाच्च श्रुतेरिह ॥

ननु ग्रामं प्राविशतादिति स्मृतिवचनात् हरिद्रालेपनादावस्तु प्रामाण्यम्, यत्र तु अथैनामश्मानमारोहयतीत्येतदनन्तरं तूष्णीं वरस्य पाषाणारोहणं कारयित्वा कुमार्या भ्राता वराङ्गुष्ठोपरि उपलं निधाय वराद्रूप्यादि गृह्णातीति ताः स्मरन्ति, तदप्रमाणम् । लोभमूलत्वेन वैसर्जनीयवस्त्रवदित्यत आह—तयोर्विवाहश्मशानयोर्ग्रामः प्रमाणमिति श्रुतिवचनात्ताभिर्यत्स्मर्यते तस्य ग्रहणादि तदपि प्रमाणमिति, प्रत्यक्षश्रुतिमूलत्वात् । "आचार्याय वरं ददाति गौर्ब्राह्मणस्य वरो ग्रामो राजन्यस्याश्वो वैश्यस्ये"ति सूत्रम् । ततो वर आचार्याय स्वकीयवरं ददाति । यदि ब्राह्मणो वरस्तदाऽऽचार्याय गां ददाति, क्षत्रियश्चेद्ग्रामम्, वैश्यश्चेदश्वम्, अन्यच्च यथाशक्ति सुवर्णादिद्रव्यं दशब्राह्मणभोजनसङ्कल्पः । "अधिरथꣳशतं दुहितृमते" इति सूत्रम् । ददातीत्यनुवर्तते । दुहितृमांश्च यस्य दुहितर एव न पुत्रास्तस्मै दुहितृमते रथाधिकं गवां शतं दत्वा तस्य कन्यामुद्वहेत् । प्रतिषिद्धा ह्यसौ । तथा च मनुः—

यस्यास्तु न भवेद्भ्राता न विज्ञायेत वा पिता ।
नोपयच्छेत तां कन्यां पुत्रिकाधर्मशङ्कया ॥

तस्याः परिक्रयाय रथाधिकं गवां शतं ददाति । "अस्तमिते ध्रुवं दर्शयति ध्रुवमसि ध्रुवं त्वा पश्यामि ध्रुवैधि पोष्ये मयि मह्यं त्वाऽदात् । बृहस्पतिर्मया पत्या प्रजावती सञ्जीव शरदः शत"मिति सूत्रम् । अस्तमिते रात्रौ विवाहश्चेद्वरदानानन्तरं ध्रुवसंज्ञकं नक्षत्रं वरो वधूं दर्शयति ध्रुवमसीत्यनेन मन्त्रेण । 'ध्रुवमुदीक्षस्वे'ति वरो वधूं प्रेषयति, इति प्रयोगरत्ने । यजुर्वल्लभायामपि । तथा च रेणुः—

ध्रुवं पश्येति तां ब्रूयादित्यवोचत्त्रिविक्रमः ॥ इति ।

नात्र ध्रुवमुदीक्षस्वेति प्रैष इति गदाधरः। कर्कभाष्येऽप्येवम्। वध्वा चानक्षत्रदर्शनं वाङ्नियमः कार्यः। तथा चाश्वलायनः—"ब्राह्मण्याश्च वृद्धाया जीवपत्न्या जीवप्रजाया अगार एतां रात्रिं वसेदेवमरुन्धतीं सप्त ऋषीनिति दृष्ट्वा वाचं विसृजेत् जीवपत्नी प्रजां विन्देयेती"ति। अस्यार्थः—समाप्ते होमे रात्रौ ध्रुवादीन् दृष्ट्वा वाचं विसृजेन्मन्त्रेण। हरदत्तस्तु सप्त ऋषीनितीत्यत्रेतिशब्दः प्रकारार्थः। तेन शुक्रादीनामपि यथासम्भवं दर्शनं भवतीति। इदानीं वाग्विसर्गविधानाद्धोमादारभ्यैतावन्तं कालं वाचो नियम इति गम्यते। कस्यायं वाग्विसर्गः? वध्वाः। कुतो? मन्त्रलिङ्गात्। शौनकोऽपि—

यस्मिन्काले विवाहः स्याद्रजन्यां यदि वा दिवा।
तत्र होममुपक्रम्य प्राग्विवाहसमापनात्॥
वधूर्वाङ्नियमं कृत्वा वर्तेतावहिता सती।
निवृत्ते तु विवाहे तां वधूं ध्रुवमरुन्धतीम्॥
सप्तर्षींश्चेक्षयेत्पश्चाद्वध्वा वक्तुमशक्तितः।
वध्वर्थं जीवपत्न्यादि वाक्यं च व्याहरेद्वरः॥ इति।

अत्र पारस्करेण वाग्विसर्गो न लिखितः। तथाऽपि "पारक्यमविरोधि यत्" इति वचनाद्वाग्विसर्गः कर्तव्य? इति चेन्न पश्यामीति प्रतिवचनात्। वध्वैव मन्त्रं पाठयति। मन्त्रार्थः—हे ध्रुव? ध्रुवमसि ध्रुवा शाश्वती असि भवसि। यतः त्वा त्वां ध्रुवं तारकाविशेषं पश्यामि दर्शयामि। अत्रान्तर्भूतो णिज्ज्ञेयः। अतस्त्वमपि ध्रुवा शाश्वती पोष्या पोषणीया मत्प्रजापोष्ट्री वा एधि भव वर्धयेति वा। एतदर्थमेव बृहस्पतिर्ब्रह्मा त्वा त्वां मह्यमदात् दत्तवान्। अतो मया पत्या भर्त्रा सह प्रजावती पुत्रपौत्रादियुक्ता शतं शरदो वर्षाणि जीव प्राणिहि। "सा यदि न पश्येत्पश्यामीत्येव ब्रूयात्" इति सूत्रम्। स्पष्टार्थः। "त्रिरात्रमक्षारालवणाशिनौ स्याता"मिति सूत्रम्। लग्नदिनादारभ्य त्रिरात्रं यावद्वधूवरौ अक्षारं क्षारवर्जितमलवणं लवणवर्जितञ्चाश्नीत इत्यवंशीलौ स्याताम्। क्षारं साजिक्षारादि, लवणं सैन्धवादि। अक्षारमिति लवणविशे-

षमाह मेधातिथिः—"खारी लवणमिति लोके प्रसिद्धेः"। विवाहादारभ्यैते नियमास्सन्त्युभयोः। "अधः शयीयाता"मिति सूत्रम्। अधः भूमौ स्वपेताम्। खट्वाव्युदासार्थोऽधःशब्दः, नास्तरणव्युदासार्थः। "संवत्सरं न मिथुनमुपेयातां द्वादशरात्रꣳषड्रात्रन्त्रिरात्रमन्तत" इति सूत्रम्। विवाहदिनादारभ्य संवत्सरं यावन्न मिथुनमुपेयातां ब्रह्मचारिणौ स्याताम्। द्वादशरात्रं वा षड्रात्रं वा त्रिरात्रं वा। तथा च शौनकः—

अत ऊर्ध्वं त्रिरात्रं तौ द्वादशाहमथापि वा।
शक्तिं वीक्ष्य तथाऽब्दं वा चरतां दम्पती व्रतम्॥
अक्षारालवणाहारौ भवेतां भूतले तथा।
शयीयातां समावेशं न कुर्यातां वधूवरौ॥

समावेशं मैथुनम्। तथा च हिरण्यकेशिसूत्रम्—"त्रिरात्रमक्षारालवणाशिनावधःशायिनावलङ्कुर्वाणौ ब्रह्मचारिणौ वसत" इति।
स्मृतिः—

विवाहे दम्पती स्यातां त्रिरात्रं ब्रह्मचारिणौ।
अलङ्कृतावधश्चैकसहशय्यासनासनौ॥

एषां पक्षाणां व्यवस्थोक्ता ब्रह्मपुराणे—

कृते विवाहे वर्षन्तु वस्तव्यं ब्रह्मचारिणा।
यद्यष्टवर्षा कन्या स्यात्तदा तत्त्रिगुणः पुमान्॥

त्रिगुणश्चतुर्विंशतिवार्षिकः। तथा—

अथ तद्द्वादशाहानि त्रिंशद्वर्षेण सर्वदा।
यदि द्वादशवर्षा स्यात्कन्या रूपगुणान्विता॥
द्वात्रिंशद्वर्षपूर्णेन यदि षोडशवार्षिकी।
लब्धा तदा तु षड्रात्रं वस्तव्यं संयमेन तु॥
विंशत्यब्दा यदा कन्या वस्तव्यं तत्र वै त्र्यहम्।
अत ऊर्ध्वमहोरात्रं वस्तव्यमतिसंयतैः॥ इति।

धर्मप्रवृत्तौ—

वध्वा सहैव कर्तव्यो निवासः श्वशुरालये।

चतुर्थरात्रमन्ते च केचिदेवं वदन्ति हि ॥

अथ दम्पतीसहभोजनं विधानपारिजाते सङ्ग्रहकारः—

मात्रा सहोपनीतैः स्याद्विवाहे भार्यया सह ।
अन्यत्र सह भुञ्जीत पातित्यं प्राप्नुयान्नरः ॥

तथा च रेणुः—

एकपात्रे सहाश्नीतः केचित्तु प्रथमेऽहनि ।
पयोवर्ज्यं हविष्यान्नमित्यवोचत्त्रिविक्रमः ॥

भोजनसमये वरो घृतेनापोशनं कुर्यात् । उक्तं च—

दामो नाम महादैत्यो दम्पत्योर्हृदि संस्थितः ।
तस्य नाशार्थमुद्वाहे घृतमापोशनं कुरु ॥

'ग्रामवचनं च कुर्युरि'त्यनेन यथाकुलाचारं तिलककरणाक्षतचन्दनादिविप्राशीर्वचनमन्त्रपाठादिकं संगृह्यते । तथा च वीरमित्रोदये—

आशीर्वादैर्बहुविधैश्चतुर्वेदोदितैर्द्विजाः ॥ इति ।

तौ वर्धयेयुरिति शेषः । शतपथब्राह्मणेऽपि "एता आशिष आशास्ते यजमानाये"ति । प्रथमशाखारम्भविचारभाष्यारम्भेऽपि सङ्ग्रहकारः—

सर्वत्र कर्मणामन्ते मन्त्राशिषमनुत्तमाम् ।
दद्युर्विप्राः स्वशाखोक्तामादौ तत्कर्मशाखिनः ॥

अत्र चतुर्षु दिवसेषु कर्तव्यताविशेषमाह शौनकः—

दम्पती रोहिणीसोमौ भूत्वा प्रथमकेऽहनि ।
दाक्षायणीं यजेयातां द्वितीयदिवसेऽपि तौ ॥
पूजयेतां महादेवीं गन्धर्वाप्सरसौ च तौ ।
अग्निस्वाहे तृतीयेऽह्नि पूजयेतां च कालिकाम् ॥
चतुर्थ्यां तौ यजेयातां शाङ्करीं मानवस्त्रियौ ।
एवं प्रतिदिनं कर्तुं पूजां तौ दम्पती तदा ॥
चतुर्थ्यन्तेषु दिवसेष्वर्चयेद्ब्राह्मणान्बहून् ।
वस्त्रहेमादिमिष्टान्नताम्बूलादिप्रयत्नतः ॥

इति श्रीप्रथमशाखीयरामकृष्णविरचिते पारस्करगृह्यसूत्रविवरणे अष्टमी कण्डिका ॥

अथास्य स्पष्टप्रयोगो लिख्यते । वधूपिता वरपिता वा विवाहदिनात्पूर्वेद्युः पूर्वाह्णे सपत्नीकः कृताभ्यङ्गो धृतमाङ्गलिकवेशः कृतलेपनरङ्गमालिके प्राङ्गणे शुभासने प्राङ्मुख उपविश्य दक्षिणतः पत्नीं तद्दक्षिणतः कन्यां वरं चोपवेश्याचम्य प्राणानायम्य इष्टदेवतागुर्वादीन्नमस्कृत्य देशकालौ सङ्कीर्त्य "अस्याः कन्यायाः ( पुत्रस्य वा ) करिष्यमाणविवाहाङ्गभूतं स्वस्तिवाचनपूर्वकमविघ्नपूजनं मण्डपप्रतिष्ठां मातृणां पूजनं वसोर्धारां नान्दीश्राद्धं च करिष्ये" इति सङ्कल्प्य उक्तरीत्या स्वस्तिवाचनादीनि कुर्यात् । मण्डपद्वारगतं वरमभ्युत्थानादिभिः प्रतीतं मधुपर्केणार्चयेत् । तद्यथा—अर्चयिता आसनमानीय तस्यासनस्य पश्चात्तिष्ठन्तं अर्घ्यं प्रति "साधु भवानास्तामर्चयिष्यामो भवन्तम्" इति ब्रवीति । "अर्चय" इति प्रतिवचनम् । ततोऽर्चकपुरुषाः विष्टरं पद्यं पादार्थमुदकमर्घमाचमनीयं मधुपर्कं तत्समीपमानयन्ति । आचम्य प्राणानायम्य देशकालौ स्मृत्वा "कन्यार्थिनं गृहागतं वरं मधुपर्केणाहमर्चयिष्ये" । अर्चयिता एकं विष्टरमादाय तिष्ठति । अन्यः कश्चिद्ब्राह्मणः "विष्टरो विष्टरो विष्टरः" इति श्रावयति । "प्रतिगृह्यता"मित्यर्घ्यहस्तयोर्ददाति । अर्घ्यश्च "व्वर्ष्मोऽस्मि समानानामुद्यतामिव सूर्यः । इमन्तमभितिष्ठामि यो मा कश्चाभिदासती"त्यनेन मन्त्रेण विष्टरमासने निधाय तदुपर्युपविशति । ततोऽन्येन "पाद्यं पाद्यं पाद्यं" इति श्राविते अर्चयिता "प्रतिगृह्यताम्"इत्युक्त्वा समर्पयति । अथार्घ्यस्तत्पात्रं भूमौ निधायाञ्जलिना जलमादाय "व्विराजो दोहोऽसि व्विराजो दोहमशीय मयि पाद्यायै व्विराजो दोहः" इति मन्त्रेण ब्राह्मणो दक्षिणपादं प्रक्ष्याल्य तथैव वामं प्रक्षालयति । क्षत्रियादयस्त्वर्घ्याः सव्यं प्रक्षाल्यानेनैव विधिना दक्षिणं प्रक्षालयन्ति । पुनः "विष्टरो विष्टरो विष्टरः" इत्यन्येन श्राविते "प्रतिगृह्यता"मिति यजमानदत्तं विष्टरं प्रतिगृह्य "वर्ष्मोऽस्मी"ति मन्त्रेण पादयोरधस्तान्निदधाति । ततो "अर्घोऽर्घोऽर्घः"इत्यन्येन श्राविते अर्चयिता "प्रतिगृह्यता"मित्युक्त्वा अर्घ्यायार्घं "आपः स्थ युष्माभिः सर्वान्कामानवाप्नवानी"ति मन्त्रं पाठितवते

प्रयच्छति । अर्घ्यश्चार्घं प्रतिगृह्य मूर्द्धन्पर्यन्तमानीय "समुद्रं वः प्रहिणोमि स्वां योनिमभिगच्छत । अरिष्टाऽस्माकं वीरा मा परासेचि मत्पय" इत्यनेन मन्त्रेण शिरसाऽभिवन्द्य भूमौ प्रवाहयेत । "आचमनीयमाचमनीयमाचमनीयम्" इत्यन्येन श्राविते ऽर्चयिताऽर्घ्याय "प्रतिगृह्यता"मित्युक्त्वा आचमनीयं प्रयच्छति । अर्घ्यश्च प्रतिगृह्य "आमाऽगन्यशसा सꣳसृज वर्चसा । तम्मा कुरु प्रियं प्रजानामधिपतिं पशूनामरिष्टिं तनूनाम्" इति मन्त्रेण सकृदाचम्य स्मार्तमाचमनं करोति । "मधुपर्को मधुपर्को मधुपर्कः" इत्यन्येन श्राविते अर्चयिता "प्रतिगृह्यता"मित्युक्त्वा यजमानहस्तस्थितं मधुपर्कं "मित्रस्य त्वा चक्षुषा प्रतीक्षे" इत्यनेन मन्त्रेण प्रतीक्ष्य "देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामि" इत्यनेन मन्त्रेण अञ्जलिना प्रतिगृह्य सव्ये पाणौ निधाय दक्षिणस्यानामिकया मधुपर्कं प्रदक्षिणमालोडयति । "नमः श्यावास्यायान्नशने यत्त आविद्धं तत्ते निष्कृन्तामि" इति तूष्णीं सकृत अनामिकाङ्गुष्ठाभ्यामादाय बहिर्निक्षिपति । पुनरेवं द्विवारमालोडनं द्विर्निरूक्षणं च करोति । ततो भूमौ मधुपर्कपात्रं निधाय "यन्मधुनो मधव्यं परमꣳरूपमन्नाद्यम् । तेनाहं मधुनो मधव्येन परमेण रूपेणान्नाद्येन परमो मधव्योऽन्नादोऽसानी"ति मन्त्रेण अनामिकाङ्गुष्ठाभ्यामादाय मधुपर्कैकदेशं प्राश्नाति । वा प्राशितशेषं पुत्राय शिष्याय वा दद्यात् । सर्वं वा भक्षयेत् । पूर्वस्यां दिशि असञ्चरे प्रदेशे प्रक्षिपेदुच्छिष्टम् । ततः स्मार्तविधिना द्विराचम्य प्राणान्सम्मृशति । तद्यथा "वाङ्म आस्येऽस्तु" इति कराग्रेण मुखं स्पृशति, "नसोर्मे प्राणोऽस्त्वि"ति दक्षिणवामे नासारन्ध्रे, "अक्ष्णोर्मे चक्षुरस्त्वि"ति चक्षुषी, "कर्णयोर्मे श्रोत्रमस्त्वि"ति दक्षिणं श्रोत्रं संस्पृश्य पुनः "कर्णयोर्मे श्रोत्रमस्त्वि"ति वामम् , "बाह्वोर्मे बलमस्त्वि"ति दक्षिणोत्तरौ बाहू, "ऊर्वोर्मे ओजोऽस्त्वि"ति युगपदूरू, "अरिष्टानि मेऽङ्गानि तनूस्तन्वा मे सह सन्त्वि"ति शिरःप्रभृतिपादान्तानि सर्वाण्यङ्गानि उभाभ्यां हस्ताभ्यां लभेत । ततो यजमानः खड्गहस्तो वराय गां निवेदयति ।

"गौर्गौर्गौः आलभ्यता"मिति ब्रूयात् । ततो वरः "माता रुद्राणां दुहिता वसूनाꣳस्वसाऽऽदित्यानाममृतस्य नाभिः । प्र नु वोचं चिकितुषे जनाय मा गामनागामदितिं वधिष्ट । मम चामुकशर्मणो यजमानस्य च पाप्मानꣳहनोमीति" गवालम्भपक्षे प्रति ब्रूयात् । उत्सर्गपक्षे तु "माता रुद्राणा ( मित्यादि ) पाप्मा हत ॐउत्सृजत तृणान्यत्तु" ॐकारमुपांशु उक्त्वा "उत्सृजत"त्युच्चैः प्रतिब्रूयात् । ततः कन्यापिता वराय वस्त्रचतुष्टयं प्रयच्छति । वरश्च तेषु मध्ये वस्त्रद्वयं स्वयं परिधत्ते । "परिधास्यै यशोधास्यै दीर्घायुत्वाय जरदष्टिरस्मि । शतं च जीवामि शरदः पुरूची रायस्पोषमभिसंव्ययिष्ये" इति मन्त्रेण । "यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् । आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः" इत्यनेन यज्ञोपवीतम् । "यशसा मा द्यावापृथिवी यशसेन्द्राबृहस्पती । यशो भगश्च मा विदद्यशो मा प्रति पद्यता"मिति मन्त्रेण उत्तरीयवस्त्रम् । ततो द्विराचमनम् । कन्यापित्रा दत्तं चन्दनं भालेऽनुलिप्य "सुचक्षा अहमक्षीभ्याम्भूयासꣳसुवर्चा मुखेन । सुश्रुत्कर्णाभ्याम्भूयासम्" इति जपेत् । "या आहरज्जमदग्निः श्रद्धायै कामायेन्द्रियाय । ता अहं प्रतिगृह्णामि यशसा च भगेन च"इति मन्त्रेण पुष्पग्रहणम् । "यद्यशोऽप्सरसामिन्द्रश्चकार विपुलं पृथु । तेन सङ्ग्रथिताः सुमनस आबध्नामि यशो मयी"ति मन्त्रेण पुष्पमालाबन्धनम् । "अलङ्करणमसि भूयोऽलङ्करणं भूयादि"ति मन्त्रेण कर्णयोरलङ्करणधारणम् ।

इति मधुपर्कः ।

अथ कन्याऽपि स्नातोपहिताहतवस्त्रा गृहान्तः सूत्रवेष्टितोपलसहितदृषदुपरि हरिद्रानिर्मितगौरीहरौ सौभाग्यादिकामनया पूजयित्वा इन्द्राणीं च तत्रैवाक्षतपुञ्जेषु पूजयित्वा प्रार्थयेत् ।

देवेन्द्राणि ? नमस्तुभ्यं देवेन्द्रप्रियभामिनि ? ।
विवाहे भाग्यमारोग्यं पुत्रलाभं च देहि मे ॥ इति ।

ततो गौरीं सौभाग्यादि प्रार्थयमाना तत्रैव तिष्ठेत् । ततो वरः प्राणा-

नाथम्य देशकालौ स्मृत्वा "धर्मप्रजासम्पत्यर्थं दाराप्रतिग्रहणमहं करिष्ये। तदङ्गतया विहितं अग्निप्रतिष्ठापनमहं करिष्ये"। ततो मण्डपमध्ये वेद्युपरि ईशान्यां दिशि पञ्चभूसंस्कारान् कृत्वा लौकिकं निर्मन्थ्य वाऽग्निं स्थापयित्वा, वरः वैकल्पिकावधारणं कुर्यात्। "लौकिकाग्निस्थापनम्। गौरीपरिणयनम्। कुमार्या वासःपरिधानादि गृहमध्ये। अग्नेर्दक्षिणतः कुम्भधृक्। तेजन्या दक्षिणपादेन परिवर्तनम्। पूर्वेण ब्रह्मणो गमनम्। उत्तरेण पात्रासादनम्। द्वे पवित्रे। ताम्रमयी आज्यस्थाली। पालाश्यः समिधः। प्राञ्चावाघारौ। समिद्धतमे आज्यभागौ। पूर्णपात्रम्। राष्ट्रभृद्धोमः। जयाहोमः। अभ्यातानहोमः। सुगन्नु पन्थामित्याहुत्यन्ते परमृत्यो इत्याहुतिः। वध्वा आनडुहचर्मोपवेशनं प्राच्याम्। त्रिरात्रं ब्रह्मचर्यमुभयोः। एतान्वैकल्पिकान्पदार्थानहं करिष्ये"। ततः अग्नेः पश्चात्तृणपूलकं स्थापयेत्। अथ कन्यादानादि। ब्राह्मणाः स्वलङ्कृते वेश्मनि मङ्गलगीततूर्यनिर्घोषे क्रियमाणे पूर्वापरभागयोर्हस्तान्तरालं विहाय प्रत्येकं प्रस्थमिततण्डुलैर्द्वौ राशी कृत्वा मध्ये कुङ्कुमादिकृतस्वस्तिकाङ्कितमन्तःपटं राश्योर्मध्ये उत्तरदशं धारयेयुः। "स्वस्ति न इन्द्राग्नी"तिसूक्तं पठेयुः। पुरन्ध्र्यो मङ्गलगीतिं कुर्युः। वधूवरौ च मनसेष्टदेवतां ध्यायन्तौ समाहितौ तिष्ठेताम्। अथ ज्योतिषिकेन मङ्गलपद्यपाठपूर्वकं "सुमुहूर्तोऽस्तु तदेव लग्न"मिति पठिते प्रदिष्टे काले सद्योऽन्तःपटमुदगपसार्य, कन्यावराभ्यां परस्परस्मिन् अञ्जलिस्थतण्डुलगुडजीरकविकिरणं करणीयम्। "मनो जूति"रिति मन्त्रेण मङ्गलाक्षता वधूवराभ्यां परस्परं क्षिप्येताम्। वधूर्वरपादोपरि स्थाप्य, वरो वध्वाः शिरोपरि। ततो वरं प्राङ्मुखं वधूं प्रत्यङ्मुखीं कारयित्वा, ततः पूर्वं कन्यापित्रा दत्तं वस्त्रं कुमारीं परिधापयति "जरां गच्छ परिधस्त्व वासो भवाकृष्टीनामभिशस्तिपावा। शतं च जीव शरदः सुवर्चा रयिं च पुत्राननुसंव्ययस्वायुष्मतीदं परिधत्स्व वासः" इत्यनेन मन्त्रेण। अथोत्तरीयम् "या अकृतन्नवयं या अतन्वत। याश्च देवीस्तन्तूनभितो ततन्थ तास्त्वा देवीर्जरसे संव्ययस्वा-

युष्मतीदं परिधत्स्व वासः" इत्यनेन मन्त्रेण । अथ कन्यापिता वरकुमार्यौ समञ्जयति "परस्परं समञ्जेथा"मिति प्रैषेण । समञ्जनं सन्मुखीकरणम् । ततो वरः कन्यासन्मुखीभूतः "समञ्जन्तु विश्वे देवाः समापो हृदयानि नौ । सम्मातरिश्वा सन्धाता समुदेष्ट्री दधातु नौ" इति मन्त्रं पठति । ततो वधूवरावुपविशतः । प्राङ्मुखो वर उपविशेत् । प्रत्यङ्मुखी कन्या । दातोदङ्मुखः ।

अथ कन्यादानम् । तत्र वाक्यम्–बद्धशिखः कुशपाणिः प्राणानायम्य देशकालौ सङ्कीर्त्य "मम समस्तपितॄणां निरतिशयसानन्दब्रह्मलोकावाप्त्यादिकन्यादानकल्पोक्तफलावाप्तये अनेन वरेणास्यां कन्यायामुत्पादयिष्यमाणसन्तत्या द्वादशावरान् द्वादशापरान् पुरुषांश्च पवित्रीकर्तुमात्मनश्च श्रीलक्ष्मीनारायणप्रीतये ब्राह्मविवाहविधिना कन्यादानमहं करिष्ये" इति कुशाक्षतजलेन सङ्कल्पः । ततो वधूवरयोः पुरतः कांस्यपात्रं स्थापयित्वा तत्र कन्याहस्तोपरि वरहस्तं कृत्वा तत्र "शिवा आपः सन्तु । सन्तु शिवा आपः । सौमनस्यमस्तु । अस्तु सौमनस्यम् । अक्षतं चारिष्टं चास्तु । अस्त्वक्षतमरिष्टं च । यत्पापं रोगं दुरितं तत्प्रतिहतमस्तु । यच्छ्रेयस्तदस्तु । दीर्घमायुः श्रीः शान्तिः पुष्टिश्चास्तु" । तिष्ठन् कन्यादानम् । "अमुकगोत्रस्यामुकप्रवरस्यामुकशर्मणः प्रपौत्राय अमुकगोत्रस्यामुकामुकप्रवरस्यामुकशर्मणः पौत्राय अमुकगोत्रस्यामुकामुकप्रवरस्यामुकशर्मणः पुत्राय" इति वरपक्षे । अथ कन्यापक्षे । "अमुकगोत्रस्यामुकामुकप्रवरस्यामुकशर्मणः प्रपौत्रीं अमुकगोत्रस्यामुकामुकप्रवरस्यामुकशर्मणः पौत्रीं अमुकगोत्रस्यामुकामुकप्रवरस्यामुकशर्मणः पुत्रीम्" एवमेव पुनर्वारद्वयम् । अथ कन्यापिता कुशजलाक्षतपाणिः प्राङ्मुखोपविष्टाय वराय प्रत्यङ्मुखोपविष्टां कन्यां यथाशक्त्यलङ्कृतां "अमुकगोत्राय अमुकप्रवराय अमुकशाखाध्यायिने अमुकशर्मणे वराय अमुकगोत्रां अमुकप्रवरां अमुकनाम्नीं कन्यां यथाशक्त्यलङ्कृतां प्रजापतिदैवत्यां पुराणोक्तशतगुणीकृतज्योतिष्टोमातिरात्रफलप्राप्तिकामः कन्या-

दानफलप्राप्तिकामो वा भार्यात्वेन तुभ्यमहं सम्प्रददे" इत्युक्त्वा सकुशाक्षतजलं कन्यादक्षिणहस्तं वरदक्षिणहस्ते दद्यात्। वरस्तु "स्व-स्ती"त्युक्त्वा "द्यौस्त्वा ददातु पृथ्वी त्वा प्रतिगृह्णातु"इत्यनेन मन्त्रेण प्रतिगृह्णीयात्। कन्यापिता "यस्त्वया धर्मश्चरितव्यः सोऽनया सह। धर्मे चार्थे च कामे च त्वयेयं नातिचरितव्या" इति वरं प्रति ब्रूयात्। "नातिचरामी"ति वरः। अथ "कोदादि"ति कामस्तुतिं पठेत। अथ कन्यापिता "कृतैतत्कन्यादानप्रतिष्ठासिद्ध्यर्थं सुवर्णदक्षिणां तुभ्यमहं सम्प्रददे" इति दक्षिणां दद्यात्। ततो दाता जलभाजनं गोमहिष्यश्वगजदासीदासभूवाहनालङ्कारादि यथाविभवं सङ्कल्पपूर्वकं द-द्यात्। तत्र मन्त्राः—

यज्ञसाधनभूता या विश्वस्याघप्रणाशिनी।
विश्वरूपधरो देवः प्रीयतामनया गवा॥ गोः।
या सर्वस्याश्रया भूमिर्वराहेण समुद्धृता।
अनन्तसस्यफलदा अतः शान्तिं प्रयच्छ मे॥ भूम्याः।
इयं दासी मया तुभ्यं श्रीवत्सम्प्रतिपादिता।
सर्वकर्मकरी भोग्या यथेष्टं भद्रमस्तु मे॥ दास्याः।
अशून्ये शयनं नित्यमनूनां श्रियमुन्नतिम्।
सौभाग्यं देहि मे नित्यं शय्यादानेन केशव?॥ शय्यायाः।
हिरण्यगर्भसम्भूतं सौवर्णं चाङ्गुलीयकम्।
सर्वप्रदं प्रयच्छामि प्रीणातु कमलापतिः॥ अङ्गुलीयकस्य।
क्षीरोदमथने पूर्वमुद्धृतं कुण्डलद्वयम्।
श्रिया सह समुद्भूतं ददे श्रीः प्रीयतामिति॥ कुण्डलद्वययोः।
इदं गृहं गृहाण त्वं सर्वोपस्करसंयुतम्।
तव विप्र? प्रसादेन ममास्त्वभिमतं फलम्॥ गृहस्य।
इन्द्रादिलोकपालानां या राज्यमहिषी शुभा।
महिषासुरस्य जननी साऽस्तु मे सर्वकामदा॥ महिष्याः।
पाखण्डवादपैशुन्यादभक्षस्य च भक्षणात्।

उत्पन्नं ताम्रपात्रस्य दानेनैनो विनश्यतु ॥ ताम्रपात्रस्य ।
यानि पापान्यकामानि कामोत्थानि कृतानि च ।
कांस्यपात्रप्रदानेन तानि नश्यन्तु मे सदा॥ कांस्यपात्रस्य ।
विष्णुस्त्वमश्वरूपेण यस्मादमृतसम्भवः ।
चन्द्रार्कवाहनं नित्यमतः शान्तिं प्रयच्छ मे ॥ इत्यश्वस्य ।

अन्येऽपि बान्धवादयो यथासम्भवं प्रयच्छन्ति। केचन होमान्ते सर्वं प्रयच्छन्ति । अत्र देशाचारतो व्यवस्था। ततो दुग्धाक्तेन द्विगुणशुक्लसूत्रेण दम्पतीकण्ठदेशे चेशानीमारभ्य पञ्चवारं कटिदेशे चतुर्वारं प्रदक्षिणं वेष्टयेत् पुरोधा अनेन मन्त्रेण "परिं त्वा गिर्व्वणो गिरं इमा भंवन्तु विश्वतं॑॥ वृद्धायुमनु वृद्धंयो जुष्टां भवन्तु जुष्टंयः" इति। ततः कण्ठदेशस्थसूत्रमधो निःसार्य कुङ्कुमाक्तमूर्णायुक्तं च कृत्वा तेन हरिद्राखण्डं बध्वा तद्वधूवामहस्तप्रकोष्ठे वरो बध्नीयात् "यदाऽबध्न"-न्निति मन्त्रेण। कटिदेशस्थं सूत्रमुपरि निष्कास्य तादृशं कृत्वा वरदक्षिणहस्तप्रकोष्ठे वधूर्बध्नीयात्तेनैव मन्त्रेण । ततो गौरीहरौ सम्पूज्य प्रार्थयेत् ।

सर्वरूपधरे ! देवि ! गौरि ? शङ्करवल्लभे ! ।
नमस्करोमि देवेशि ? पुत्रं सौख्यं च देहि मे ॥
देवेन्द्राणि ! नमस्तुभ्यं देवेन्द्रप्रियभामिनि! ।
विवाहं भाग्यमारोग्यं पुत्रलाभं च देहि मे ॥

इति गौरीं संप्रार्थ्य ततो वरः सूक्ष्मकाचमणियुक्तं सूत्रं वधूकण्ठे बध्नीयात्। तत्र मन्त्रः—

माङ्गल्यतन्तुनाऽनेन भर्तृजीवनहेतुना ।
कण्ठे बध्नामि सुभगे ? त्वं जीव शरदः शतम् ॥

तत आम्रसेचनं दुग्धेन—

"शतं व्वो अम्ब धामानि सहस्रमुत वो रुहं॑।
अधां शतक्रत्वो यूयमिमम्मे अगदङ्कृत" ॥

चूतोऽसि त्वं महाभाग ? सर्वकल्याणदायक ? ।
देहि मे सर्वतः सौख्यं सिंच त्वं तरुनायक ? ॥

अथ दीपप्रार्थना—

दीप ? त्वं देहि कल्याणं देहि सर्वान्मनोरथान् ।
यावद्व्रतं समाप्येत तावत्त्वं च स्थिरो भव ॥

एवं पित्रा दत्तां कन्यां वामहस्ते गृहीत्वा पितृगृहान्निष्क्रामति "यदैषि मनसा दूरं दिशोऽनु पवमानो वा । हिरण्यपर्णो वैकर्णः स त्वा मन्मनसां करोतु, अमुकीदेवि" इत्यनेन मन्त्रेण । निष्क्रमणप्रभृत्येकः पुरुष उदकुम्भं स्कन्धे कृत्वा दक्षिणतोऽग्नेर्वाग्यतः स्थिरो भवत्युत्तरतो वाऽभिषेकपर्यन्तम् । अथैनौ वधूवरावग्निसमीपमागतौ । अथ कन्यापिता "परस्परं समीक्षेथा"मिति मन्त्रेण प्रैषं ददाति । ततस्तौ वधूवरौ परस्परं समीक्षणं कुरुतः । समीक्षमाणो वरो मन्त्रं पठति । "अघोरचक्षुरपतिघ्न्येधि शिवा पशुभ्यः सुमनाः सुवर्चाः। वीरसूर्देवकामा स्योना शन्नो भव द्विपदे शं चतुष्पदे । सोमः प्रथमो विविदे गन्धर्वो विविद उत्तरः । तृतीयोऽग्निष्टे पतिस्तुरीयस्ते मनुष्यजाः । सोमोऽददद्गन्धर्वाय गन्धर्वो ददग्नये । रयिं च पुत्रांश्चादादग्निर्मह्यमथो इमाम् । सा नः पूषा शिवतमामेरय सा न ऊरू उशती विहर । यस्यामुशन्तः प्रहराम शेपं यस्यामु कामा बहवो निविष्ट्यै" इत्यादिकाँश्चतुरो मन्त्रान् पठति । एक आचार्याः प्रदक्षिणमग्निमानीय कन्यावासःपरिधानादि कुर्वन्ति । ततो वधूवरावग्निं प्रदक्षिणीकृत्य अग्नेः पश्चात्पूर्वासादिते तृणपूलके वा उपविशताम् । तत्र दक्षिणपादेनाक्रम्योपविशति वरः । वरस्य दक्षिणतो वधूः । ततो वरो देवताऽभिध्यानं करोति । तद्यथा "विवाहकर्मणाऽहं यक्ष्ये । तत्र प्रजापतिं इन्द्रं अग्निं सोमं, अग्निं वायुं सूर्यं अग्नीवरुणौ अग्नीवरुणौ अग्निं वरुणं सवितारं विष्णुं विश्वान्देवान् मरुतः स्वर्कान् वरुणं, ऋतासाहं ऋतधामानं अग्निं गन्धर्वं ओषधीः अप्सरसः मुदः, संहितं विश्वसामानं सूर्यं गन्धर्वं मरीचीः अप्सरसः आयुवः, सुषु-

रणं सूर्यरश्मिं चन्द्रमसं गन्धर्वं नक्षत्राणि अप्सरसः भेकुरीः, इषिरं विश्वव्यचसं वातं गन्धर्वं अपः अप्सरसः ऊर्जः, भुज्युं सुपर्णं यज्ञं गन्धर्वं दक्षिणाः अप्सरसः तावाः, प्रजापतिं विश्वकर्माणं मनः गन्धर्वं ऋक्सामानि अप्सरसः एष्टीः, चित्तं चित्तिं आकूतं आकूतिं विज्ञातं विज्ञातिं मनः शक्करीः दर्शं पौर्णमासं बृहतं रथन्तरं, प्रजापतिं जयान् इन्द्रं, अग्निं भूतानामधिपतिं, इन्द्रं ज्येष्ठानामधिपतिं, यमं पृथिव्या अधिपतिं, वायुं अन्तरिक्षस्याधिपतिं, सूर्यं दिवोऽधिपतिं, चन्द्रमसं नक्षत्राणामधिपतिं, बृहस्पतिं ब्रह्मणोऽधिपतिं, मित्रं सत्यानामधिपतिं, वरुणं अपामधिपतिं, समुद्रं स्रोत्यानामधिपतिं, अन्नं साम्राज्यानामधिपति, सोमं ओषधीनामधिपतिं, सवितारं प्रसवानामधिपतिं, रुद्रं पशूनामधिपतिं, त्वष्टारं रूपाणामधिपतिं, विष्णुं पर्वतानामधिपतिं, मरुतो गणानामधिपतीन् , पितॄन पितामहान् परान् अवरान् ततान् ततामहान्, अग्नि अग्नि अग्नि वैवस्वतं, मृत्युं, एतान्सर्वानाज्येनाहं यक्ष्ये"। अथ कन्या देवताऽभिध्यानं करोति– "अग्निं अग्निं अग्निं त्रिर्भगं लाजैरहं यक्ष्ये"। अथ वरः– "प्रजापतिं, अग्निं स्विष्टकृतमाज्येनाहं यक्ष्ये"। ततो ब्रह्मोपवेशनादि चरुवर्जं पर्युक्षणान्तं कर्म कुर्यात। तत्र इयांस्तु विशेषः—आसादितपात्राणामुत्तरे शमीपत्रमिश्रलाजाः अश्मा अखण्डं लोहितमानडुहचर्म कुमार्या भ्राता तदभावे सकुल्यः शूर्पं दृढपुरुषः आचार्याय वरद्रव्यं पात्रासादनानन्तरं एतानि वस्तूनि उपकल्पयेत्। न प्रोक्षयेत्। पर्युक्षणान्ते स्रुवमादाय दक्षिणं जान्ववाच्य ब्रह्मणाऽन्वारब्धो जुहुयात। "ॐ प्रजापतये स्वाहा। इदं प्रजापतये नमम। ॐ इन्द्राय स्वाहा। इदमिन्द्राय० ॐ अग्नये स्वाहा। इदमग्नये०। ॐ सोमाय स्वाहा। इदं सोमाय०॥ ॐ भूः स्वाहा इदमग्नये०। ॐ भुवः स्वाहा। इदं वायवे० ॐ स्वः स्वाहा। इदं सूर्याय०। ॐ त्वन्नो अग्ने०समत्स्वाहा। इदमग्नीवरुणाभ्यां०। ॐ सत्वन्नो अग्ने० पृधि स्वाहा। इदमग्नी-

वरुणाभ्यां० । ॐ अयाश्चाग्ने० जᳪस्वाहा । इदमग्नये अयसे० । ॐ ये ते शतं० स्वर्काः स्वाहा । इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यश्च० । ॐ उदुत्तमं० स्याम स्वाहा । इदं वरुणायादित्यायादितये च०" । अथ ब्रह्माऽनन्वारब्धो राष्ट्रभृतो जुहोति । तद्यथा "ॐ ऋताषाडृतधामाऽग्निर्गन्धर्वः स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट् । इदमृतासाहे ऋतधाम्नेऽग्नये गन्धर्वाय० १ । ॐ ऋताषाडृतधामाग्निर्गन्धर्वस्तस्यौषधयोऽप्सरसो मुदो नाम ताभ्यः स्वाहा । इदमोषधीभ्योऽप्सरोभ्यो मुद्भ्यो० २ । ॐ सᳪहितो विश्वसामा सूर्यो गन्धर्वः स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट् । इदᳪ सᳪहिताय विश्वसाम्ने सूर्याय गन्धर्वाय० ३ । ॐ सᳪहितो विश्वसामा सूर्यो गन्धर्वस्तस्य मरीचयोऽप्सरस आयुवो नाम ताभ्यः स्वाहा । इदं मरीचिभ्योऽप्सरोभ्य आयुभ्यो० ४ । ॐ सुषुम्णः सूर्यरश्मिश्चन्द्रमा गन्धर्वः स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट् । इदं सुषुम्णाय सूर्यरश्मये चन्द्रमसे गन्धर्वाय० ५ । ॐ सुषुम्णः सूर्यरश्मिश्चन्द्रमा गन्धर्वस्तस्य नक्षत्राण्यप्सरसो भेकुरयो नाम ताभ्यः स्वाहा । इदं नक्षत्रेभ्योऽप्सरोभ्यो भेकुरिभ्यो० ६ । ॐ इषिरो विश्वव्यचा वातो गन्धर्वः स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट् । इदमिषिराय विश्वव्यचसे वाताय गन्धर्वाय० ७ । ॐ इषिरो विश्वव्यचा वातो गन्धर्वस्तस्यापो अप्सरस ऊर्ज्जो नाम ताभ्यः स्वाहा । इदमद्भ्योऽप्सरोभ्य ऊर्ग्भ्यो० ८। ॐ भुज्युः सुपर्णो यज्ञो गन्धर्वः स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट् । इदं भुज्यवे सुपर्णाय यज्ञाय गन्धर्वाय० ९ । ॐ भुज्युः सुपर्णो यज्ञो गन्धर्वस्तस्य दक्षिणा अप्सरसस्तावा नाम ताभ्यः स्वाहा । इदं दक्षिणाभ्योऽप्सरोभ्यस्तावाभ्यो० १० । ॐ प्रजापतिर्विश्वकर्मा मनो गन्धर्वः स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट् । इदं

प्रजापतये विश्वकर्मणे मनसे गन्धर्वाय० ११। ॐ प्रजापतिर्विश्वकर्मा मनो गन्धर्वस्तस्य ऋक्सामान्यप्सरस एष्टयो नाम ताभ्यः स्वाहा। इदमृक्सामेभ्योऽप्सरोभ्य एष्टिभ्यो० १२। अत्र केचित्तु अन्यथा मन्त्रप्रयोगं कुर्वन्ति तत्प्रदर्श्यते। "ऋताषाडृतधामाऽग्निर्गन्धर्वः स न इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा वाट्। इति प्रथमः। तस्यौषधयोऽप्सरसो मुदो नाम ताभ्यः स्वाहे"ति द्वितीयः। एवं सर्वत्र मन्त्रेषु। अस्मिन्नपि पक्षे त्यागस्तु स एव। अथ जयाहोमः। ॐ चित्तं च स्वाहा। इदं चित्ताय०। ॐ चित्तिश्च स्वाहा। इदं चित्त्यै०। ॐ आकूतं च स्वाहा। इदमाकूताय०। ॐ आकूतिश्च स्वाहा। इदमाकूत्यै०। ॐ विज्ञातं च स्वाहा। इदं विज्ञाताय० ॐ विज्ञातिश्च स्वाहा। इदं विज्ञात्यै०। ॐ मनश्च स्वाहा। इदं मनसे० ॐ शक्करीश्च स्वाहा। इदं शक्करीभ्यो०। ॐ दर्शश्च स्वाहा। इदं दर्शाय०। ॐ पौर्णमासं च स्वाहा। इदं पौर्णमासाय०। ॐ बृहच्च स्वाहा। इदं बृहते०। ॐ रथन्तरं च स्वाहा। इदं रथन्तराय०। ॐ प्रजापतिर्जयानिन्द्राय वृष्णे प्रायच्छदुग्रः पृतनाजयेषु। तस्मै विशः समनमन्त सर्व्वाः स उग्रः स इ हव्यो बभूव स्वाहा। इदं प्रजापतये जयायेन्द्राय०"। अथाभ्यातानहोमः। "ॐ अग्निर्भूतानामधिपतिः स माऽवत्वस्मिन्ब्रह्मण्यस्मिन्क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन्कर्मण्यस्यां देवहूत्या स्वाहा। इदमग्नये भूतानामधिपतये०। ॐ इन्द्रो ज्येष्ठानामधिपतिः स मा०। इदमिन्द्राय ज्येष्ठानामधिपतये०। ॐ यमः पृथिव्या अधिपतिः स मा०। इदं यमाय पृथिव्या अधिपतये०। प्रणीतोदकस्पर्शः। ॐ वायुरन्तरिक्षस्याधिपतिः स मा०। इदं वायवेऽन्तरिक्षस्याधिपतये०। ॐ सूर्यो दिवोऽधिपतिः स मा०। इदं सूर्याय दिवोऽधिपतये०। ॐ चन्द्रमा नक्षत्राणामधिपतिः स मा०। इदं चन्द्रमसे नक्षत्राणामधिपतये०। ॐ बृहस्पतिर्ब्रह्मणोऽधिपतिः स मा०। इदं बृहस्पतये

ब्रह्मणोऽधिपतये० । ॐ मित्रः सत्यानामधिपतिः स मा० । इदं मित्राय सत्यानामधिपतये० । ॐ वरुणोऽपामधिपतिः स मा० । इदं वरुणायापामधिपतये० । ॐ समुद्रः स्रोत्यानामधिपतिः स मा० । इदं समुद्राय स्रोत्यानामधिपतये० । ॐ अन्न ँ साम्राज्यानामधिपति तन्मा० । इदमन्नाय साम्राज्यानामधिपतये० । ॐ सोम ओषधीनामधिपतिः स मा० । इदं सोमायौषधीनामधिपतये० । ॐ सविता प्रसवानामधिपतिः स मा० । इदं सवित्रे प्रसवानामधिपतये० । ॐ रुद्रः पशूनामधिपतिः स मा० । इदं रुद्राय पशूनामधिपतये० । उदकस्पर्शनम् । ॐ त्वष्टा रूपाणामधिपतिः स मा० । इदं त्वष्ट्रे रूपाणामधिपतये० । ॐ विष्णुः पर्वतानामधिपतिः स मा० । इदं विष्णवे पर्वतानामधिपतये० । ॐ मरुतो गणानामधिपतयस्ते मावन्त्वस्मिन्० । इदं मरुद्भ्यो गणानामधिपतिभ्यो० । ॐ पितरः पितामहाः परेऽवरे ततास्ततामहाः । इह माऽवन्त्वस्मिन्० । इदं पितृभ्यः पितामहेभ्यः परेभ्योऽवरेभ्यस्ततेभ्यस्ततामहेभ्यश्च० । उदकस्पर्शनम्" । एते अष्टादश मन्त्रा अभ्यातानसंज्ञकाः। "ॐ अग्निरैतु प्रथमो देवतानाँ सोऽस्यै प्रजां मुञ्चतु मृत्युपाशात् । तदयँ राजा वरुणोऽनुमन्यतां यथेयँ स्त्री पौत्रमघन्न रोदात्स्वाहा । इदमग्नये० । ॐ इमामग्निस्त्रायतां गार्हपत्यः प्रजामस्यै नयतु दीर्घमायुः । अशून्योपस्था जीवतामस्तु माता पौत्रमानन्दमभिविबुध्यतामियँ स्वाहा । इदमग्नये० । ॐ स्वस्ति नो अग्ने दिव। पृथिव्या विश्वानि धेह्ययथा यजत्र । यदस्यां महि दिवि जातं प्रशस्तं तदस्मासु द्रविणं धेहि चित्रँ स्वाहा । इदमग्नये० । ॐ सुगन्नु पन्थां प्रदिशन्न एहि ज्योतिष्मध्ये ह्यजरन्न आयुः । अपैतु मृत्युरमृतं म आगाद्वैवस्वतो नो अभयं कृणोतु स्वाहा । इदं वैवस्वताय० । ॐ परं मृत्यो अनु परेहि पन्थां यस्ते अन्य इतरो देवयानात् । चक्षुष्मते शृण्वते ते ब्रवीमि मा नः प्रजाँ रीरिषो मोत वीरान्स्वाहा । इदं

मृत्यवे" । केचित्प्राशनादूर्ध्वं "परं मृत्यो अन्वि"ति मन्त्राहुतिमिच्छन्ति । उदकस्पर्शः । अथ कुमार्या भ्राता उपकल्पितान् शमीपत्रमिश्रान् लाजान् शूर्पकृतान् स्वेनाञ्जलिना गृहीत्वा कुमार्या अञ्जलावावपति । तान् लाजान् प्राङ्मुखी तिष्ठन्ती कुमारी अञ्जलिनाऽग्नौ जुहोति "ॐ अर्यमणन्देवं कन्या अग्निमयक्षत । स नो अर्यमा देवः प्रेतो मुञ्चतु मा पतेः स्वाहा" इति मन्त्रेणाञ्जलिस्थितलाजानां तृतीयांशं जुहोति । "इदमग्नये । अर्यम्णेवा । ॐ इयं नार्युपब्रूते लाजानावपन्तिका । आयुष्मानस्तु मे पतिरेधन्तां ज्ञातयो मम स्वाहा" इत्यनेनार्धं जुहोति । इदमग्नये । "ॐ इमाँल्लाजानावपाम्यग्नौ समृद्धिकरणं तव । मम तुभ्यं च संवननं तदग्निरनुमन्यतामियꣳस्वाहा" इत्यनेन मन्त्रेणाञ्जलिस्थान्सर्वान् लाजान् हुत्वा 'इदमग्नये' । मन्त्रत्रयं कन्यैव पठति । अथ वरः कन्याया हस्तं साङ्गुष्ठमुत्तानं गृह्णाति "ॐ गृभ्णामि ते सौभगत्वाय हस्तं मया पत्या जरदष्टिर्यथाऽसः । भगो अर्यमा सविता पुरन्धिर्मह्यं त्वाऽदुर्गार्हपत्याय देवाः । अमोऽहमस्मि सा त्वꣳसा त्वमस्यमो अहम् । सामाहमस्मि ऋक्त्वं द्यौरहं पृथिवी त्वम् । तावेहि विवाहावहै सह रेतो दधावहै । प्रजां प्रजनयावहै पुत्रान्विन्द्यावहै बहून् । ते सन्तु जरदष्टयः संप्रियौ रोचिष्णू सुमनस्यमानौ । पश्येम शरदः शतं जीवेम शरदः शतꣳ शृणुयाम शरदः शतम्" इत्यनेन मन्त्रसन्दर्भेण । अग्नेरुत्तरतो गत्वा ततो वरो वध्वा दक्षिणपादं सव्यहस्तेन गृहीत्वा दक्षिणेन वा पूर्वोपकल्पितदृढदृषदुपरि करोति "ॐ आरोहेममश्मानमश्मेव त्वꣳस्थिरा भव । अभितिष्ठ पृतन्यतोऽवबाधस्व पृतनायतः" इत्यनेन मन्त्रेण । अथाश्मन्यारूढायां कुमार्यां गाथां गायति वरः—"ॐ सरस्वति प्रेदमव सुभगे वाजिनीवति । यान्त्वा विश्वस्य भूतस्य प्रजायामस्याग्रतः । यस्यां भूतꣳसमभवद्यस्यां विश्वमिदं जगत् । तामद्य गाथां गास्यामि या स्त्रीणामुत्तमं यशः" । अथ वधूवरौ अग्निं प्रदक्षिणं कुरुतः—"ॐ तुभ्यमग्रे पर्यवहन्सूर्यां वहतु ना सह । पुनः पतिभ्यो जायां दाग्ने प्रजया

सह" इत्यनेन वरपठितेन मन्त्रेण । एवं लाजादि परिक्रमणान्तं पुनर्वारद्वयं कर्म कुर्यात् । ततस्तृतीयपरिक्रमणानन्तरं कुमार्या भ्राता शूर्पकोणप्रदेशेन सर्वाँल्लाजान् कुमार्यञ्जलावावपति तान् लाजान्कुमारी तिष्ठती "ॐ भगाय स्वाहा" इत्यनेन मन्त्रेण जुहोति । "इदं भगाय०" । ततः समाचारात्तूष्णीं चतुर्थं परिक्रमणं कुरुतः । नेतरथावृत्तिः । ब्रह्मणाऽन्वारब्धो वरः ॐ "प्रजापतये स्वाहा । इदं प्रजापतये०" । एनां वधूमुदङ्मुखीं सप्तपदानि प्रक्रामयति वरः । "ॐ एकमिषे विष्णुस्त्वा नयतु" इति वरेणोक्ते मन्त्रे वधूरेकं पादमुदग्ददाति । "द्वे ऊर्ज्जे विष्णुस्त्वा नयतु" द्वितीयम् । "त्रीणि रायस्पोषाय विष्णुस्त्वा नयतु" तृतीयम् । "चत्वारि मायोभवाय विष्णुस्त्वा नयतु" चतुर्थम् । "पञ्च पशुभ्यो विष्णुस्त्वा नयतु" पञ्चमम् । "षड्तुभ्यो विष्णुस्त्वा नयतु" षष्ठम् । "सखे सप्तपदा भव सा मामनुव्रता भव विष्णुस्त्वा नयतु" सप्तमम् । अथ वरः स्कन्धे कृतादुदकुम्भादुदकमादाय वधूमूर्द्धन्यभिषिञ्चति । "ॐ आपः शिवाः शिवतमाः शान्ताः शान्ततमास्तास्ते कृण्वन्तु भेषजम्" इत्यनेन मन्त्रेण । तथैव पुनरुदकमादाय "आपोहिष्ठेति" तृचं पठित्वा वधूमूर्धन्यभिषिञ्चति । अथ वरः "सूर्यमुदीक्षस्वे"ति वधूं प्रेषयति । सा प्रेषिता सती सूर्यमुदीक्षते "तच्चक्षुर्देवहितं पुरस्ताच्छुक्र"मिति मन्त्रं पठित्वा । बध्वा एव मन्त्रपाठः । दिवा विवाहश्चेत्सूर्योदीक्षणं भवेत् । ततो वरो वध्वाः स्कन्धोपरि दक्षिणहस्तं नीत्वा हृदयमालभते "मम व्रते ते हृदयं दधामि मम चित्तमनु चित्तन्ते अस्तु । मम वाचमेकमना जुषस्व प्रजापतिष्ट्वा नियुनक्तु मह्यम्" इत्यनेन मन्त्रेण हृदयमालभते । ततो वरो वधूमभिमन्त्रयते "ॐ सुमङ्गलीरियं वधूरिमाꣳसमेत पश्यत । सौभाग्यमस्यै दत्वा याथास्तं विपरेत न" इत्यनेन मन्त्रेण । अत्र समाचाराद्वधूं वरस्य वामभाग उपवेशयन्ति । तस्याः सीमन्ते वरः सिन्दूरं ददाति । ततोऽग्नेः प्राच्यां दिशि अनुगुप्त आगारे आनडुहे चर्मणि लोहिते प्राग्ग्रीवे उत्तरलोम्नि तां वधूं दृढपुरुषः उत्थाप्योपवेशय-

ति । "ॐ इह गावो निषीदन्त्विहाश्वा इह पूरुषाः । इहो सहस्रद-क्षिणो यज्ञ इह पूषा निषीदन्तु" । इति मन्त्रेण तत आगत्य पूर्वव-द्यथास्थानमुपाविश्य ब्रह्मणाऽन्वारब्धो वरः "ॐ अग्नये स्विष्टकृते स्वाहा । इदं स्विष्टकृते०" । ततः संस्रवप्राशनम् । ब्रह्मणे पूर्णपात्र-दानम् । आचार्याय वरदानम् । भूयसीदक्षिणां दद्यात् । देशाचारादक्षत-चन्दनादिविप्राशीर्वचनमन्त्रपाठादिकं गृहीत्वा, दिवा विवाहश्चेदस्तमिते ध्रुवन्दर्शयति रात्रौ चेद्वरदानानन्तरम् । "ॐ ध्रुवमसि ध्रुवं त्वा पश्यामि ध्रुवैधि पोष्ये मयि मह्यं त्वाऽदात् । बृहस्पतिर्मया पत्या प्रजावती सं जीव शरदः शतम्" । वध्वा एव मन्त्रपाठः । सा यदि ध्रुवं न पश्ये-त्तदाऽपि "पश्यामि" इत्येवं ब्रूयात् । नियमादिकं पूर्वोक्तमेवात्र ग्राह्यम् ।

इति श्रीप्रथमशाखीयरामकृष्णविरचिते संस्कारगणपतौ विवाहप्रयोगः ।

## ( नवमी कण्डिका )

**उपयमनप्रभृत्यौपासनस्य परिचरणमस्तमितानु-दितयोर्दध्ना तण्डुलैरक्षतैर्वाऽग्नयेस्वाहा प्रजापतये स्वा-हेति सायꣳ सूर्याय स्वाहा प्रजापतये स्वाहेति प्रातः पुमाꣳसौ मित्रावरुणौ पुमाꣳसावश्विनावुभौ । पुमानि-न्द्रश्च सूर्यश्च पुमाꣳसं वर्त्ततां मयि पुनः स्वाहेति पूर्वां गर्भकामा ॥ ९ ॥**

आवसथ्येऽग्नौ होममाह—"उपयमनप्रभृत्यौपासनस्य परिच-रणम्" इतिसूत्रम् । उपयमनकुशादानादि औपासनस्यावसथ्याग्नेः परिचरणं व्याख्यास्यते इति सूत्रशेषः । प्रभृतिग्रहणेन उपयमनान्कुशानादाय स-मिधोऽभ्याधाय पर्युक्ष्य जुहुयादेतावल्लभ्यते । होमश्चात्रोपदिष्टः । होमेऽपि च सति परिचरणग्रहणादितिकर्तव्यता न भवति । हस्तेनैवात्र होमः, इतिकर्तव्यताव्युदासात् । कथमितिकर्तव्यताव्युदास इति चेत् ? उपयम-

नप्रभृतीत्युक्तत्वात् । पर्युक्षणं च मणिकोदकेन । होमकालनियममाह "अस्तमितानुदितयोः" इतिसूत्रम् । अस्तमितश्च अनुदितश्च अस्तमितानुदितौ तयोः तत्कर्म कर्तव्यमिति शेषः । आवसथ्याधानानन्तरं अस्तमिते सूर्येऽनुदिते च सर्वदा होमः कार्यो न सकृत् । येनैवं सूत्रकार आह "ततोऽस्तमितेऽस्तमितेऽग्निं परिचर्य द्रव्योपघातं सक्तून्सर्पेभ्यो बलिं हरे"दिति बलिहरणविधिपरे वाक्ये होमस्य नित्यत्वं ज्ञापयति । अस्तमितलक्षणं कात्यायनेनोक्तम्—

यावत् सम्यङ्न भाव्यन्ते नभस्यृक्षाणि सर्वतः ।
लोहितत्वं च नोपैति तावत्सायं तु हूयते ॥

अनुदितस्तु द्विविधः—अनुदितश्च समयाध्युषितश्च । तथा च मनुः—

उदितेऽनुदिते चैव समयाध्युषिते तथे"ति ।

तत्रानुदितः । तत्रास्माकं सूत्रे अनुदित एव परिचरणमुक्तम् । मनुवचने उदितग्रहणं शाखान्तरगृह्याभिप्रायेण । मुख्यकाले यदा होमो न भवति तदा गौणकालेऽपि कार्यः । तथा च मण्डनः—

मुख्यकाले यदाऽवश्यं कर्म कर्तुं न शक्यते ।
गौणकालेऽपि कर्तव्यं गौणोऽप्यत्रेदृशो भवेत् ॥

गौणकालपरिमाणमपि तेनैवोक्तम्—

आसायमाहुतेः कालात्कालोऽस्ति प्रातराहुतेः ।
प्रातराहुतिकालात्प्राक्कालः स्यात्सायमाहुतेः ॥ इति ।

मुख्यकालातिक्रमे प्रायश्चित्तपूर्वकं गौणकालेऽनुष्ठानम् । गौणकालातिक्रमे तु लोप एव, प्रायश्चित्तद्वयमात्रम् । एकमविज्ञातम् ।

सन्ध्योपासनहानौ च नित्यस्नानं विलोप्य च ।
होमं च नैत्यकं शुद्ध्येत्सावित्र्यष्टसहस्रकृत् ॥

इति प्रजापत्युक्तं द्वितीयम् । होमे कर्तारः स्वयं स्वस्थासम्भवे पत्न्यादयः । प्रयोगरत्ने स्मृतौ—

पत्नी कुमारी पुत्रो वा शिष्यो वाऽपि यथाक्रमम्
पूर्वपूर्वस्य चाभावे विदध्यादुत्तरोत्तरः ॥

स्मृत्यर्थसारेऽपि—

यजमानः प्रधानं स्यात्पत्नी पुत्रश्च कन्यका ।
ऋत्विक् शिष्यो गुरुर्भ्राता भागिनेयः सुतापतिः ॥
एतैरेव हुतं यच्च तद्धुतं स्वयमेव तु ।
पत्नी कन्या च जुहुयाद्विना पर्युक्षणाक्रियाम् ॥

अत्र वचनात्पत्न्यादीनां मन्त्रपाठेऽधिकारः । केवलं पर्युक्षणेऽनधिकारः । अग्निहोत्रे तु—

न वा कन्या न युवती नाल्पविद्यो न बालिशः ।
होता स्यादग्निहोत्रस्य नार्तो नासंस्कृतस्तथा ॥ इति ।

पत्नी स्यादुद्देशत्यागे । कारिका—

असन्निधौ तु पत्न्याः स्यादध्वर्युस्तदनुज्ञया ।
उन्मादे च प्रसूतौ च कुर्वीतानुज्ञया विना ॥

मण्डनः—

त्यागं तु सर्वथा कुर्यात्तत्राप्यन्यतरस्तयोः ।
उभावप्यसमर्थौ चेन्नियुक्तः कश्चन त्यजेत् ॥

"दध्ना तण्डुलैरक्षतैर्वा" इति सूत्रम् । गव्येन दध्ना वा व्रीहितण्डुलैर्वाऽक्षतैर्यवैर्वा जुहुयादित्यर्थः । तेषामभावे शाखान्तरगृह्यपरिशिष्टोक्तानि द्रव्याणि ग्राह्याणि । तत्र प्रयोगरत्ने-"पयो दधिसर्पिर्यवागूरोदनं तण्डुलाः सोमस्तैलमाषा व्रीहयो यवास्तिला इति होम्यानि, तण्डुला नीवारश्यामाकयावनालानाम् । व्रीहिशालियवगोधूमप्रियङ्गवः स्वरूपेणापि होम्यास्तिलाः स्वरूपेणैव शतं चतुःषष्टिर्वाऽऽहुतिर्व्रीहितुल्यानां तदर्धा तिलानां तदर्धं सर्पिस्तिलयोस्तैलं च तिलजार्त्तिलातसीकुसुमम् । येन प्रथमां देवतां जुहुयात्तेनैव द्वितीयां जुहुयाद्येन च सायं जुहुयात्तेनैव प्रातरिति" । अत्र तेनैव प्रातरिति प्रतिनिधिवर्ज्जम् । बृहस्पतिस्त्वाहुतिप्रमाणमाह—

प्रस्थधान्यं चतुःषष्टेराहुतेः परिकीर्त्तितम् ।
तिलानां च तदर्धं तु तण्डुला व्रीहिभिः समाः ॥

प्रस्थः प्रसृतिद्वयं मानम्। "प्रस्थं मानचतुष्टय"मिति। बौधायनस्तु—

व्रीहीणां वा यवानां वा शतमाहुतिरिष्यते॥

अगस्त्यः—

द्रवद्रव्यस्य मानं स्याद्धारा गोकर्णदीर्घिका॥

सिद्धान्तशेखरे—

अन्नं ग्राससमं प्रोक्तं लाजा मुष्टिमिता मता॥ इति।

दधिपक्षे तण्डुलपक्षे च शेषप्राशनम्। अक्षतपक्षे त्वभावः। अनदनीयत्वादिति भर्तृयज्ञः। "अग्नये स्वाहा प्रजापतये स्वाहेति सायꣳ सूर्याय स्वाहा प्रजापतये स्वाहेति प्रातः" इति सूत्रम्। तत्र सायंकाले "अग्नये स्वाहे"ति पूर्वाहुतिं जुहोति "प्रजापतये स्वाहे"ति उत्तरां च जुहोति। प्रातःकाले "सूर्याय स्वाहे"ति पूर्वाहुतिं हुत्वा "प्रजापतये स्वाहे"त्युत्तरां च जुहुयात्। "पुमाꣳसौ मित्रावरुणौ पुमाꣳसावश्विनावुभौ। पुमानिन्द्रश्च सूर्यश्च पुमाꣳसं वर्ततां मयि पुनः स्वाहेति पूर्वां गर्भकामा" इति सूत्रम्। यदि गर्भकामा पत्नी भवति तदा सायं प्रातः पूर्वाहुतिं पत्न्येव "पुमाꣳसौ मित्रावरुणा"वित्यनेन मन्त्रेण जुहोति। उत्तरामाहुतिं यजमान एव जुहोति। सर्वत्र होमे प्रतिमन्त्रमोङ्कारः।

नोङ्कुर्याद्धोममन्त्राणां पृथगादिषु कुत्रचित्।
अन्येषां चाविकृष्टानां कालेनाचमनादिना॥

इतिवचनात्। अविकृष्टानामनन्तरितानां कालेन आचमनादिना वेति हरिहरः। मन्त्रार्थः—एतेषां देवानामेतौ युग्मौ ममाहुत्या मद्दत्तया परितुष्टौ सन्तौ मयि विषये पुमांसं पुंलक्षणं गर्भं वर्ततां उत्पादयतामिति।

इति श्रीप्रथमशाखीयरामकृष्णविरचिते पारस्करगृह्यसूत्रविवरणे संस्कारगणपतौ प्रथमकाण्डे नवमी कण्डिका।

अथास्य स्पष्टप्रयोगः। तत्रावसथ्याधानोत्तरकालं तस्मिन्नेव दिने हविर्भोजनात् प्राक् यजमानो होमारम्भनिमित्तं मातृपूजनपूर्वकं नान्दीश्राद्धं कुर्यात्। ततः कृतसन्ध्यावन्दनोऽग्नेरुत्तरत उपविश्य प्राणानायम्य देश-

कालौ संकीर्त्य "अग्निरूपपरमेश्वरप्रीत्यर्थं औपासनहोमं करिष्ये" इति संकल्प्य, वैकल्पिकं द्रव्यमवधार्योपयमनकुशानादाय सव्ये कृत्वा दक्षिणेन हस्तेन तिस्रः समिधोऽभ्यादाय मणिकोदकेन पर्युक्ष्य प्रदीप्तेऽग्नौ शतसंख्यान् प्रस्थस्य चतुःषष्ठितमभागमितान्वा तण्डुलानादाय अङ्गुल्युत्तर-पार्श्वेन समिन्मूलतो द्व्यङ्गुलप्रदेशे "ॐ अग्नये स्वाहे"ति जुहोति। "इदमग्नये नमम" इति त्यागं विधाय क्षिपेत। संस्रवरक्षणम्। पुनस्तण्डुला-नादाय "ॐ प्रजापतये स्वाहे"त्युपांशूक्त्वा "इदं प्रजापतये नम-मे"ति त्यागं विधाय क्षिपेत। संस्रवरक्षणम्। पत्नी "पुमाꣳसा"-वित्यनेन मन्त्रेण गर्भकामा चेत्पूर्वामाहुतिं जुहोति। इदं मित्रावरुणा-भ्यामश्विभ्यामिन्द्राय सूर्याय नममे"तित्यागो यजमानस्य। सं-स्रवप्राशनम्। पत्नीकर्तृकहोमशेषस्य पत्न्येवप्राशनं करोति। अत्र "समास्त्वा" सूक्तं नवकण्डिकात्मकं जपेत्। अन्याँश्चाप्यग्निस्ता-वकान्मन्त्रान् श्लोकाँश्च पठेत। इति सायं होमः।

अथ प्रातर्होमे विशेषः। उदयात्पूर्वं सायंद्रव्येणैव "ॐसूर्याय स्वा-हे"ति पूर्वाऽऽहुतिः "ॐप्रजापतये स्वाहे"ति उत्तराऽऽहुतिः। यथा दै-वतत्यागौ। गर्भकामा चेदत्रापि "पुमाꣳसा"विति होमः। अत्र "विभ्र-भ्राडि"त्यनुवाकेनोपस्थानमिति जयरामभाष्ये। इति प्रातर्होमे विशेषः। अन्यत्सर्वं सायंहोमवत्। एवमुपयमनकुशादानादि प्रत्यहमौपासनस्य परि-चरणम्। अथापत्काले कर्तव्यो होमद्वयसमासप्रयोगः। तत्र पूर्ववत्सा-यंकालीनाहुतिद्वयं हुत्वा कंचित्कालं निमील्य पुनः कुशादानादि पर्युक्ष-णान्तं कृत्वा श्वःकर्तव्यं प्रातराहुतिद्वयमपकृष्य जुहुयादिति प्रयोगरत्ने। हरिहरमिश्रैस्तु तन्त्रेण होमो लिखितः। स चैवं पर्युक्षणान्तं कृत्वा "अग्न-ये स्वाहे"ति हुत्वा तथैव "सूर्याय स्वाहे"ति हुत्वा आहुतिद्वयपर्याप्त होमद्रव्यमादाय "प्रजापतये स्वाहे"ति सकृज्जुहुयात्।

अथ गुर्वापदि पक्षहोमः। तत्र प्रतिपदि सायंकाले उपयमनानादाय पर्युक्षणान्तं कृत्वा आहुतिप्रमाणेन तण्डुलान्पात्रद्वये प्रतिपात्रं चतुर्दशवारं गृहीत्वा होमकाले प्रथमपात्रस्थान् "अग्नये स्वाहे"ति जुहुयात।

ततो द्वितीयपात्रस्थान् "प्रजापतये स्वाहे"ति जुहुयात् । एवं द्वितीयायां प्रातः पर्युक्षणान्तं कृत्वा पूर्ववत्पात्रद्वये तण्डुलान्कृत्वा "सूर्याय स्वाहे"ति प्रथमपात्रस्थान् हुत्वा "प्रजापतये स्वाहे"ति द्वितीयपात्रस्थान् तण्डुलान् जुहुयात् । पक्षमध्ये वा आपत्तावागामिचतुर्दशीसायंकालीयहोमे तान् शेषहोमान् सायं समस्येत् पर्वप्रातर्होमाँश्च । प्रातः शेषहोमान् समस्येत् । सर्वथा पर्ववत्सायंप्रातर्होमान् यथाकालं कुर्यात्, इति प्रयोगरत्ने । अनापदि पक्षहोमे प्रायश्चित्तमुक्तं देवयाज्ञिकपद्धतौ—

अनातुरोऽप्रवासी च निश्चिन्तो निरुपद्रवः ।
पक्षहोमं तु यः कुर्यात्स चरेत्पातितव्रतम् ॥

इति श्रीप्रथमशाखीयरामकृष्णविरचिते गृह्यसूत्रविवरणे संस्कारगणपतौ होमविधिः ।

---

( अथ दशमी कण्डिका )

**राज्ञोऽक्षभेदे नद्धविमोक्षे यानविपर्यासेऽन्यस्यां वा व्यापत्तौ स्त्रियाश्चोद्वहने तमेवाग्निमुपसमाधायाज्यꣳसंस्कृत्येह रतिरिति जुहोति नानामन्त्राभ्यामन्यद्यानमुपकल्प्य तत्रोपवेशयेद्राजानꣳस्त्रियं वा प्रतिक्षत्र इति यज्ञान्तेनात्वाहार्षमिति चैतया धुर्यौ दक्षिणा प्रायश्चित्तिस्ततो ब्राह्मणभोजनम् ॥ १० ॥**

अथ नैमित्तिकमुच्यते "राज्ञोऽक्षभेदे नद्धविमोक्षे यानविपर्यासेऽन्यस्यां वा व्यापत्तौ स्त्रियाश्चोद्वहने"इति सूत्रम् । राज्ञः प्रजापालनकर्तुर्देशान्तरे प्रस्थितस्य युद्धे वा प्रस्थितस्य अक्षभेदे रथावयवभङ्गे नद्धविमोक्षे नद्धस्य रथस्य विमोक्षे आकस्मिकबन्धविच्छेदे वा यानविपर्यासे हयरथादिके वा अधोभावापत्तौ अन्यस्यां वा कस्यां चिदापत्तौ अशुभसूचकोत्पाते स्त्रियाश्चोद्वहने स्त्रिया वध्वाः पितृगृहाद्भर्तृगृहं प्रति प्रथमागमने

चकाराद्रथक्षोभादिनिमित्ते नैमित्तकमिदमुच्यते । "तमेवाग्निमुपसमाधाये"ति सूत्रम् । राज्ञश्चेन्निमित्तं तदा सेनाग्निं स्त्रियश्चेत्तदा वैवाहिकाग्निमुपसमाधाय स्थापयित्वा, "आज्यꣳसँस्कृत्य"इति सूत्रम् । आज्यसंस्कारं निरुप्याज्यमित्यादिना कृत्वा, "इहरतिरिति जुहोति नानामन्त्राभ्या"मिति सूत्रम् । एष एव विधिस्त्वनेनैवाज्यसंस्कारस्य प्राप्तत्वादत्राज्यं संस्कृत्येति ग्रहणमिह रतिरित्याहुत्योराघारादिभ्योऽपि पूर्वकाऌत्वज्ञापनार्थम् । नानाग्रहणादत्र द्वे आहुती "इह रति"रित्येका"उपसृज"मिति द्वितीया । तत आघारादि "अन्यद्यानमुपकल्प्य तत्रोपवेशयेद्राजानꣳस्त्रियं वा प्रतिक्षत्र इति यज्ञान्तेनात्वाहार्षमिति चैतया" इति सूत्रम् । ततस्त्वन्यद्यानं वाहनं रथादिकमुपकल्प्य तत्र तस्मिन्याने वाहने राजानं स्त्रियं वा वधूमुपवेशयेत् "प्रतिक्षत्र"इति मन्त्रेण यज्ञ इत्यन्तेन । "आत्वाऽहार्ष"मिति चैतया ऋचोपवेशयेत् । एवं च मन्त्राभ्यामुपवेशनम् । अत्रोपवेशयेदिति ण्यन्तत्वादध्येषणं "याने उपविशस्वे"ति । तच्च राज्ञो ब्रह्मकर्तृकम् । वध्वा वरकर्तृकम् । अत्र "परादिना पूर्वान्त" इति न्यायाभावा"त्तेषां वाक्य"मित्यनेन च प्रतितिष्ठामित्येतदन्तमन्त्रप्राप्तौ यज्ञान्तग्रहणं वाक्यसमुच्चयविधानार्थम् । "आत्वार्ष"मिति ऋकृत्वात्सम्पूर्णायाः पाठः । "तेषां वाक्यम्"इत्यत्र तच्छब्देन यजुषां परामर्शात् । अतश्च यत्र ऋक्प्रतीकग्रहणं तत्र सम्पूर्णायाः पाठ"स्त्वन्नो अग्न" इत्यादौ । "धुर्यौ दक्षिणा प्रायश्चित्तिः" इति सूत्रम् । अत्र धुर्यावनड्वाहौ दक्षिणा भवतीति शेषः । दक्षिणान्तरस्य निवृत्तिर्दृष्टान्तरत्वात् । प्रायश्चित्तिरिति चास्यकर्मणः संज्ञा । ततो ब्राह्मणभोजनम् । ततः कर्मान्ते ब्राह्मणस्य एकस्य भोजनं कार्यम् ।

इति श्रीप्रथमशाखीयरामकृष्णविरचिते गृह्यसूत्रविवरणे
संस्कारगणपतौ प्रथमकाण्डे दशमी कण्डिका ॥

अथास्य प्रयोगः । तत्र निमित्ते जाते पञ्चभूसंस्कारपूर्वकमग्नेः स्थापनम् । ततो ब्रह्मोपवेशनादि पर्युक्षणान्तं कृत्वा । "इदमग्नये न म-

मे''ति द्वयोस्त्यागौ । तत आघारादि प्रणीताविमोकान्तं कृत्वा धुर्याविन ड्वाहौ दत्वा अन्ययानमानीय तत्र राजानं ''प्रति क्षत्रे प्रति तिष्ठामि । आत्वाहार्ष''मिति मन्त्राभ्यामुपविशस्वेति अध्येषणपूर्वकमुपवेशयेत । व धूमेताभ्यामेव मन्त्राभ्यामुपवेशयत् । ततो ब्राह्मणभोजनम् ॥

इति श्रीप्रथमशाखीयरामकृष्णविरचिते संस्कारगणपतौ प्रायश्चित्तिप्रयोगः ॥

अथ ऐरिणीपूजनं विवाहाच्चतुर्थदिने रात्रौ । तत्र भद्रादिसम्भवे दिन एव वा शिष्टाचारपरिप्राप्तं वरमात्रे तत्समाये वा ऐरिण्याख्यक्षुद्रवं· शषोडशशूर्पयुतमहावंशपात्रदानं कार्यं कन्यादात्रा । तथा चोक्तं धर्मप्रवृत्तौ—

उत्थायापररात्रे तु चतुर्थ्यां कन्यकापिता ।
कुर्वीत मङ्गलस्नानं भार्या चैव हि तस्य तु ॥
दम्पती मंगलस्नानं कृत्वा वस्त्रं च धारयेत् ।
ताभ्यां च वाससी दद्यादैरिणीं पूजयेदथ ॥
पित्रे वरस्य मात्रे च दद्याद्वस्त्राणि चैकतः ।
वरमातुः करे दद्याद्वंशपात्रं सुपूजितम् ॥

अकृते दोषमाह स एव—

वंशदानं विना यस्तु मण्डपोद्वासनं यदि ।
अज्ञानात्कुरुते मूढो दम्पत्योः क्षयमायुषः ॥

अथैरिणीस्वरूपम्—

सवस्त्रफलताम्बूलं दम्पत्योर्वंशवर्धनम् ।
ऐरिण्याख्यं वंशपात्रं पक्वान्नैः परिपूरितम् ॥
करकै रुद्रसंख्याकैः सुवर्णपरिपूरितैः ।
एतावदैरिणीरूपं कर्तव्यं किल सूरिभिः ॥

एवं सम्पाद्य कन्यादाता सभार्यो देशकालौ स्मृत्वा ''विवाहस्य सम्पूर्णफलप्राप्तये वरस्य तत्पितृमातृभ्रात्रादीनां च तत्पक्षीयाणां यथाविभवं वस्त्रादिभिः पूजनमहं करिष्ये'' । इति वरस्य तत्पितृमातृभ्रा- त्रादिभ्यः क्रमेण यथाविभवं वस्त्रादि दत्वा, पुनस्तिथ्यादि सङ्कीर्त्य ''ममो-

मामहेश्वरप्रीतिद्वारा कन्यादानफलसम्पूर्णतायै वंशाभिवृद्धये च ऐरिणीपूजनं वरमात्रे ऐरिणीदानं च करिष्ये" ।

ऐरिणी त्वमुमा देवी महेशो गिरिजापतिः ।
अतस्त्वां पूजयिष्यामि ऐरिणीं सर्वकामदाम् ॥
सवस्त्रां च सदीपां च शूर्पैः षोडशभिर्वृताम् ।
वरमात्रे प्रदास्यामि कन्यादानस्य सिद्धये ॥

इति संकल्प्य महावंशपात्रे उमामहेश्वरौ षोडशोपचारैः पूजयित्वा वंशपात्रं वरमात्रे दत्वा मन्त्रान्पठेत् ।

वंशो वंशकरः श्रेष्ठो वंशो वंशसमुद्भवः ।
अनेन वंशदानेन तुष्ट ऋद्धिं करोतु मे ॥
वंशपात्रमिदं पुण्यं वंशजातिसमुद्भवम् ।
वंशानामुत्तमं दानमतः शान्तिं प्रयच्छ मे ॥
वंशपात्राणि सर्वाणि मया संपादितानि वै ।
उमाकान्ताय दत्तानि मम गोत्राभिवृद्धये ॥
वंशवृद्धिकरं दानं सौभाग्यादिसमन्वितम् ।
वस्त्रेणाच्छादितं पूगफलहेमसमान्वितम् ॥
सर्वपापक्षयकरं नानाद्रव्यैश्च पूरितम् ।
दानानामुत्तमं दानमतः शान्तिं प्रयच्छ मे ॥

ततो वरपितृमात्रुत्सङ्गयोः पृथक् पृथगुपवेश्य पृथगुक्त्वा प्रार्थयेत्—

सप्तवर्षा त्वियं कन्या पुत्रवत्पालिता मया ।
इदानीं तव पुत्राय दत्ता स्नेहेन पाल्यताम् ॥

वरमात्रा वधूमात्रादितत्पक्षीयसुवासिनीभ्यः सकञ्चुकक्षुद्रवंशशूर्पवायनदानादि वध्वा कारणीयमित्याद्याचारप्राप्तं यथाचारं ज्ञेयम् । इदमैरिणीपूजादि वधूपितृभ्यामभुक्तवद्भ्यां कृत्वा भोजनं कार्यम् ।

इति श्रीप्रथमशाखीयरामकृष्णविरचिते पारस्करगृह्यसूत्रविवरणे संस्कारगणपतौ ऐरिणीपूजनम् ॥

## एकादशी कण्डिका

चतुर्थ्यामपररात्रेऽभ्यन्तरतोऽग्निमुपसमाधाय दक्षिणतो ब्रह्माणमुपवेश्योत्तरत उदपात्रं प्रतिष्ठाप्य स्थालीपाकꣳश्रपयित्वाऽऽज्यभागाविष्ट्वाऽऽज्याहुतीर्जुहोत्यग्ने प्रायश्चित्ते त्वन्देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि याऽस्यै पतिघ्नी तनूस्तामस्यै नाशय स्वाहा। वायो प्रायश्चित्ते त्वन्देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि याऽस्यै प्रजाघ्नी तनूस्तामस्यै नाशय स्वाहा। सूर्य प्रायश्चित्ते त्वन्देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि याऽस्यै पशुघ्नी तनूस्तामस्यै नाशय स्वाहा। चन्द्र प्रायश्चित्ते त्वन्देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि याऽस्यै गृहघ्नी तनूस्तामस्यै नाशय स्वाहा। गन्धर्व प्रायश्चित्ते त्वन्देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि याऽस्यै यशोघ्नी तनूस्तामस्यै नाशय स्वाहेति स्थालीपाकस्य जुहोति प्रजापतये स्वाहेति हुत्वा हुत्वैतासामाहुतीनामुदपात्रे सꣳस्रवान्समवनीय तत एनां मूर्द्धन्याभिषिञ्चति याते पतिघ्नी प्रजाघ्नी पशुघ्नी गृहघ्नी यशोघ्नी निन्दिता तनूर्जारघ्नीन्तत एनां करोमि सा जीर्य त्वं मया सहासावित्यथैनाꣳस्थालीपाकं प्राशयति प्राणैस्ते प्राणान्सन्दधाम्यस्थिभिरस्थीनि माꣳसैर्माꣳसानि त्वचा त्वचमिति तस्मादेवंविच्छ्रोत्रियस्य दारेण नोपहासमिच्छेदुत ह्येवंवित्परो भवति तामुदुह्य यथर्तुप्रवेशनं यथाकामी वा काममाविजनितोः सम्भवामेति वचनादथास्यै दक्षिणाꣳसमधिहृदयमालभते यत्ते सुशीमे हृदयन्दिवि चन्द्रमसि श्रितम्। वेदाहं

तन्मान्तच्छिद्यात्पश्येम शरदः शतञ्जीवेम शरदः शत१ शृणुयाम शरदः शतमित्येवमत ऊर्ध्वम् ॥ ११ ॥

"चतुर्थ्यामपररात्रेऽभ्यन्तरतोऽग्निमुपसमाधाय दक्षिणतो ब्रह्माणमुपवेश्योत्तरत उदपात्रं प्रतिष्ठाप्य स्थालीपाकᳪश्रपयित्वाऽऽज्यभागाविष्ट्वाऽऽज्याहुतीर्जुहोत्यग्ने प्रायश्चित्ते त्वन्देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि याऽस्यै पतिघ्नी तनूस्तामस्यै नाशय स्वाहा । वायो प्रायश्चित्ते त्वन्देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि याऽस्यै प्रजाघ्नी तनूस्तामस्यै नाशय स्वाहा । सूर्य प्रायश्चित्ते त्वन्देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि याऽस्यै पशुघ्नी तनूस्तामस्यै नाशय स्वाहा । चन्द्र प्रायश्चित्ते त्वन्देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि याऽस्यै गृहघ्नी तनूस्तामस्यै नाशय स्वाहा । गन्धर्व प्रायश्चित्ते त्वन्देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि याऽस्यै यशोघ्नी तनूस्तामस्यै नाशय स्वाहेति" इति सूत्रम् । विवाहाद्या चतुर्थी तिथिस्तस्यामपररात्रेऽन्तिमप्रहरेऽभ्यन्तरतो गृहमध्ये अग्निमुपसमाधाय वैवाहिकमग्निं स्थापयित्वा दक्षिणतो ब्रह्माणमुपवेश्य अग्नेर्दक्षिणतो ब्रह्मण उपवेशनार्थं कुशानास्तीर्य तत्र ब्रह्माणमुपवेश्योत्तरत उदपात्रं प्रतिष्ठाप्याग्नेरुत्तरतः प्रणीतास्थलं त्यक्त्वोदकयुक्तं पात्रं स्थापयित्वा स्थालीपाकᳪश्रपयित्वा स्थालीपाकं चरुं श्रपयित्वा आज्यभागाविष्ट्वा ऽऽज्याहुतीर्जुहोति । आज्येना"ग्ने प्रायश्चित्त" इत्येतैः पञ्चभिर्मन्त्रैः पञ्चाहुतीर्जुहोति । अत्रापररात्रग्रहणं पूर्वाह्णव्युदासार्थम् । चतुर्थीकर्मणो विवाहाङ्गत्वाद्बहिःशालायां मा भूदित्यभ्यन्तरग्रहणम् । अग्निमुपसमाधायेति ग्रहणमभ्यन्तरग्रहणविधानार्थम् । गृह्यकारिकायां च–

> ब्रवीम्यथ विवाहाङ्गं चतुर्थीकर्म विस्तरात् ।
> विवाहतश्चतुर्थेऽह्नि रात्रेरपरभागतः ॥
> गृहाभ्यन्तरतस्तत्स्यादप्यङ्गत्वान्न मण्डपे ।

स्नात्वैतदाचरेत्कर्म ह्यवं कात्यायनोऽब्रवीत् ॥
विवाहाग्नौ भवेत्कर्म दम्पतीजातवेदसः ॥

ब्रह्माणमुपवेश्येति च उदपात्रस्थापनावसरविधानायोक्तम् । ब्रह्माणमासन उपवेश्य प्रणीतास्थानादुत्तरतो वारिपूर्णमुदकपात्रं स्थापयेदित्यर्थः । अथोदपात्राग्न्योर्मध्ये प्रणीताप्रणयनम् । चरोर्भूतोपादानं मा भूदिति श्रपयित्वेत्युच्यते । आज्यभागाविष्ट्वेति ग्रहणमाहुतिकालविधानार्थम् । मन्त्रार्थः- हे अग्ने हे प्रायश्चित्ते सर्वदोषापाकरण ! यतस्त्वन्देवानामिन्द्रादीनां मध्ये प्रायश्चित्तिर्दोषापाकर्ताऽसि । अहं च ब्राह्मणः ब्रह्मण्यः वैदिको वा भूत्वा उपधावामि आराधयामि । किम्भूतोऽहं आशीष्काम ऐश्वर्यकामो वा प्रार्थयानो वा । उपधावनप्रयोजनमाह या अस्यै षष्ठ्यर्थे चतुर्थी । अस्या वध्वाः पतिघ्नी तनुस्तन्वा अवयवस्तामस्यै इमामुपकर्तुं नाशय अपनय तुभ्यं स्वाहा सुहुतमस्तु । समुदायवाचकोऽपि तनुशब्दोऽत्रावयववाचको ज्ञेयः । तेन यदस्याः पतिनाशकमलक्षणं हस्तरेखादि सामुद्रिकोक्तं तदपाकृत्य शोभनमङ्गं विधेहीति वाक्यार्थः । एवमुपर्यपि व्याख्येयम् । तनुविशेषणं देवता च भिद्यते । तद्यथा—हे वायो पवन ! प्रजाघ्नी अपत्यनाशिनी, एवमुत्तरत्रापि योज्यम् । "स्थालीपाकस्य जुहोति प्रजापतये स्वाहेति" इति सूत्रम् । आज्याहुत्यनन्तरं स्थालीपाकस्य चरोः प्रजापतये स्वाहेति मन्त्रेणोपांशुपठितेनैकामाहुतिं जुहोति । स्थालीपाकस्येत्यवयवलक्षणा षष्ठी । "हुत्वा हुत्वैतासामाहुतीनामुदपात्रे सꣳस्रवान्समवनीय तत एनां मूर्धन्यभिषिञ्चति । या ते पतिघ्नी प्रजाघ्नी पशुघ्नी गृहघ्नी यशोघ्नी निन्दिता तनूर्जारघ्नीं तत एनां करोमि सा जीर्य त्वं मया सहासाविति" इति सूत्रम् । एतासां षण्णामाहुतीनामेकैकामाहुतिं हुत्वोत्तरतः प्रतिष्ठापित उदपात्रे संस्रवान्समवनीय स्रुवलग्नाज्यचर्ववयवान्प्रक्षिप्य ततस्तस्मात्संस्रवमिश्रमुदकं गृहीत्वैनां वधूं मूर्धनि मस्तकेऽभिषिञ्चति "या ते पतिघ्नी"ति मन्त्रेण । षण्णामाहुतीनामत्र संस्रवभक्षलोपः, इतरासां तु भवत्येव । कारिकायान्तु—

अग्न इत्यादिषण्मन्त्रान्हुत्वा हुत्वैव संस्रवान् ।

वर्द्धिन्यां प्रक्षिपेदाहुः केचित्स्विष्टकृतोऽपि तु ॥
अन्यासां प्रोक्षिणीपात्रे प्राशनाद्याविमोकतः ।
अभिषिञ्चेद्वधूमूर्ध्नि प्रवालैर्वर्धिनीजलैः ॥ इति ।

हुत्वा हुत्वेति ग्रहणं सर्वाहुत्यन्ते संस्रवनिनयनं मा भूदित्येतदर्थम् । मूर्धाभिषेकश्चागन्तुकत्वाद्दक्षिणादानान्ते भवति । "असौ"स्थाने आमन्त्रणविभक्तियुक्तं वध्वा नामग्रहणं कार्यम् । मन्त्रार्थः—हे असौ कन्ये ! या ते तव पत्यादिघातिनी पञ्चधा दुष्टा तनूः अत एव निन्दिता, ततोऽनेनाभिषेचनेनैनां तनूं जारघ्नीं उत्पातादिदोषघातिनीं करोमि । सा त्वं मया पत्या भर्त्रा सह जीर्यं निर्दुष्टवृद्धत्वं गच्छ । "**अथैनाᳬं स्थालीपाकं प्राशयति प्राणैस्ते प्राणान्त्सन्दधाम्यस्थिभिरस्थीनि माᳬंसैर्माᳬंसानि त्वचा त्वचमिति**" इति सूत्रम । अथाभिषेकानन्तरमेनां वधूं स्थालीपाकं चरुं वरः प्राशयेत "प्राणैस्ते प्राणान्" इति मन्त्रेण । वधूसंस्कारोऽयं न तु द्रव्यप्रतिपत्तिः । अतो द्रव्यस्य नाशदोषादावन्यद्रव्येण प्राशनं कार्यम् । तदुक्तं कारिकायाम्—

वधूसंस्कार एवायं प्रतिपत्तिरियं न तु ।
अतो द्रव्यविनाशादौ द्रव्येणान्येन तद्भवेत् ॥
शेषद्रव्यविनाशादौ लुप्यन्ते प्रतिपत्तयः ॥

अत्र स्त्रिया सह वरोऽपि समाचाराद्भोजनं करोति । स्त्रिया सह भोजनेऽपि न दोष इत्याह हेमाद्रौ प्रायश्चित्तकाण्डे गालवः—

एकयानसमारोह एकपात्रे च भोजनम् ।
विवाहे पथि यात्रायां कृत्वा विप्रो न दोषभाक् ॥
अन्यथा दोषमाप्नोति पश्चाच्चान्द्रायणं चरेत् ॥

मिताक्षरायामप्येवम् । मन्त्रार्थः- हे कन्ये ! मे मम प्राणादिभिस्ते तव प्राणादीन्सन्दधामि संयोजयामि । "**तस्मादेवंविच्छ्रोत्रियस्य दारेण नोपहासमिच्छेदुत ह्येवंवित्परो भवति**" इति सूत्रम् । हि यस्मादस्या एतेन प्राशनाख्यसंस्कारेण भर्त्रा सहैक्यं वृत्तं तस्माच्छ्रोत्रियस्य दारेणोपहासम-

भिगमनं नेच्छेत्। स चैवंविदेवं कुर्वन् परो भवति पराभवं गच्छति। यद्वा एवंविच्छ्रोत्रियः परः शत्रुर्भवति। उत अप्यर्थे। निन्दार्थवादोऽयम्। परदाराभिगमनमतो न कार्यम्। उक्तं च काशीखण्डे—

एकतः सर्वमांसानि मत्स्यमांसं तथैकतः।
एकतः सर्वपापानि एकतः पारदारिकम्॥

इति श्रीप्रथमशाखीयरामकृष्णविरचिते पारस्करगृह्यसूत्रविवरणे संस्कारगणपतौ चतुर्थीकर्म समाप्तम्॥

---

अथ चतुर्थीकर्मणः स्पष्टप्रयोगो लिख्यते। अथ विवाहदिवसा-च्चतुर्थदिनस्यापररात्रे स्नानं कृत्वा गृहमध्ये पञ्चभूसंस्कारान् कृत्वा विवाहाग्नेः स्थापनं वरः कुर्यात्। ततो वधूवरौ पश्चादग्नेरुपविशतः। दक्षिणतो वधूरुत्तरतो वरः। ततः प्राणानायम्य देशकालौ स्मृत्वा "विवाहाङ्गचतुर्थीकर्माहं करिष्ये" इति संकल्पं कृत्वा वैकल्पिकावधारणं करोति। "पूर्वेण ब्रह्मणो गमनम्। उत्तरेण पात्रासादनम्। द्वे पवित्रे। ताम्रमयी आज्यस्थाली। ताम्रमयी चरुस्थाली। पालाश्यः समिधः। प्राञ्चावाघारौ। समिद्धतमे आज्यभागौ। पूर्णपात्रन्दक्षिणा। एतान् वैकल्पिकान्पदार्थानहं करिष्ये"। ततो देवताभिध्यानम्—"प्रजापतिं, इन्द्रं, अग्निं, सोमं, आज्येन। अग्निं, वायुं, सूर्यं, चन्द्रमसं, गन्धर्वं, आज्येनाहं यक्ष्ये। प्रजापतिं, चरुणा। शेषेण स्विष्टकृतं, अग्निं, वायुं, सूर्यं, अग्नीवरुणौ, अग्नीवरुणौ, अग्निं, वरुणं सवितारं विष्णुं विश्वान्देवान् मरुतः स्वर्कान्, वरुणं, प्रजापतिं, एताः पुनराज्येन, एता अङ्गप्रधानार्थदेवता अस्मिन्कर्मण्यहं यक्ष्ये"। ततो ब्रह्मवरणम्—"अमुकशर्मन् अस्मिन्कर्मणि त्वं ब्रह्मा भव। भवामी"त्युक्त्वा ब्रह्मासन उपवेशयेत्। ततः प्रणीतास्थानादुत्तरतो वारिपूर्णमुदकपात्रं न्यसेत्। तत उदपात्राग्न्योर्मध्ये प्रणीताप्रणयनम्। परिस्तरणाद्याज्यभागान्तं पूर्ववत्। ततो 'ऽग्ने प्रायश्चित्त'इत्यादि-

भिः पञ्चमन्त्रैः पञ्चाज्याहुतीर्हुत्वा "ॐ अग्ने प्रायश्चित्ते त्वन्देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि याऽस्यै पतिघ्नी तनूस्तामस्यै नाशय स्वाहा । इदमग्नये० । ॐ वायो प्रायश्चित्ते त्वन्देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि याऽस्यै प्रजाघ्नी तनूस्तामस्यै नाशय स्वाहा । इदं वायवे० । ॐ सूर्य प्रायश्चित्ते त्वन्देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि याऽस्यै पशुघ्नी तनूस्तामस्यै नाशय स्वाहा । इदं सूर्याय० । ॐ चन्द्र प्रायश्चित्ते त्वन्देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि याऽस्यै गृहघ्नी तनूस्तामस्यै नाशय स्वाहा । इदं चन्द्रमसे० । ॐ गन्धर्व प्रायश्चित्ते त्वन्देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकाम उपधावामि याऽस्यै यशोघ्नी तनूस्तामस्यै नाशय स्वाहा । इदं गन्धर्वाय० । ततः स्थालीपाकेन "ॐ प्रजापतये स्वाहा । इदं प्रजापतये०" । इति प्राजापत्यं हुत्वा, अग्ने प्रायश्चित्त इत्यादिप्राजापत्यान्तानां षडाहुतीनां संस्रवमुदपात्रे प्रक्षिपेत् । केषांचिन्मते स्विष्टकृतोऽपि संस्रवमुदपात्रे प्रक्षिपेत् । अन्यासामाहुतीनां पात्रान्तरे संस्रवं क्षिपेत् । ततः ॐ अग्नये स्विष्टकृते स्वाहा । इदमग्नये स्विष्टकृते० । ॐ भूः स्वाहा । इदमग्नये० । ॐ भुवः स्वाहा । इदं वायवे० । ॐ स्वः स्वाहा । इदं सूर्याय० । ॐ त्वन्नो अग्ने० । इदमग्नीवरुणाभ्यां० । ॐ सत्वन्नो अग्ने० । इदमग्नीवरुणाभ्यां० । ॐ अयाश्चाग्ने० । इदमग्नये० । ॐ ये ते शतं० । इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यश्च० । ॐ उदुत्तमं० । इदं वरुणायादित्यायादितये० । ॐ प्रजापतये स्वाहा । इदं प्रजापतये०" । ततः संस्रवप्राशनम् । ब्रह्मणे पूर्णपात्रदानम् । ततः उदपात्रादुदकमादाय वधूमूर्द्धन्यभिषिञ्चति । "ॐ या ते पतिघ्नी प्रजाघ्नी पशुघ्नी गृहघ्नी यशोघ्नी निन्दिता तनूर्जारघ्नीन्तत एनां करोमि सा जीर्य त्वं मया सहामुकीदेवि" इत्यनेन मन्त्रेण । अथ वरो वधूं स्थालीपाकं

हुतशेषं सकृत्प्राशयति । "ॐ प्राणैस्ते प्राणान्सन्दधाम्यस्थिभिरस्थीनि माᳫंसैर्माᳫंसानि त्वचा त्वच"मित्यनेन मन्त्रेण । सा च भर्तरि मन्त्रे पठिते प्राश्नाति । ततो वधूः शुद्ध्यर्थमाचामेत् । तत आवसथ्याधानं चेत्करोति तदा आवसथ्याधानं कुर्यात् ॥

इति श्रीप्रथमशाखीयरामकृष्णविरचिते पारस्करगृह्यसूत्रविवरणे संस्कारगणपतौ चतुर्थीकर्मप्रयोगः ॥

---

## अथ देवकोत्थापनमण्डपोद्वासनविधिः ॥

तत्र कालः—

समे च दिवसे कुर्याद्देवकोत्थापनं बुधः ।
षष्ठं च विषमे नेष्टं मुक्त्वा पञ्चमसप्तमौ ॥

धर्मप्रवृत्तौ—

प्रतिष्ठादिनमारभ्य षोडशाहाच्च मध्यतः ।
मण्डपोद्वासनं कार्यमुद्वाहे च व्रते दश ॥

विवाहे षोडशाहमध्ये उपनयने दशाहमध्ये इत्यर्थः । समे षष्ठं विषमे पञ्चमं सप्तमं नेष्टम्, अन्यत्र शुभमित्यर्थः । विवाहात्पञ्चसु चतुर्थेऽहनि मातृविसर्जनम्, अन्यत्र कर्मान्ते इति गङ्गाधरः । विसर्जनं यावत्पारम्पर्यागतनियमयुक्तैर्भाव्यम्, इति वासुदेवपद्धतौ । श्रीवत्सभट्टकृतवाक्यसङ्ग्रहेऽप्येवमेव ।

अथ प्रयोगः—उक्तकाले मण्डपान्तः सपत्नीकः स्वासने उपविश्याचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य "अद्य विवाहाङ्गत्वेन स्थापितदेवतानामुत्थापनं मण्डपोद्वासनं पुण्याहवाचनं च करिष्ये" इति सङ्कल्पं कृत्वा सर्वा देवताः प्रत्येकं पूजयित्वा, "ॐ उत्तिष्ठ ब्रह्मणस्पते० । उस्रावेतम्० ।

यान्तु देवगणाः सर्वे पूजामादाय भूतलात् ।
ऋद्धिं च विपुलां दत्त्वा पुनरागमनाय च ॥

इति विसृज्य भगवत्यादीनां मण्डपात् तैलाभ्यङ्गोद्वर्तनोष्णोदकस्नानानि कारयित्वा वेष्टनसूत्रमुन्मुच्य स्वस्तिवाचनं कुर्यात्। ततो द्विजैरभिषेकः कार्यः। अभिषेकान्ते पुरोधास्तच्छाखादि वंशपात्रे निधाय तदुपरि प्रदक्षिणाद्भिर्जलं सकुटुम्बयजमानशिरसि किञ्चित्स्रावयेत्। "ॐ देवस्य त्वा० ३। सोमस्य त्वा० १। पलाशं भवति०" ब्राह्मणं पठेत्। ततः कर्ता शिरसि बद्धाञ्जलि"रस्मद्गोत्रे षट्सु षट्सु मासेषु शोभनमस्त्वि"ति द्विजान्प्रार्थयेत्। ते च "तथास्त्वि"ति ब्रूयुः। ततः कङ्कणमोचनम्। तत्र मन्त्रः—

कङ्कणं मोचयाम्यद्य रक्षां तु न कदा चन।
मयि रक्षां विधायाशु देव! त्वं गच्छ कङ्कण!॥

प्रथमतो वरकङ्कणम्, ततः कन्याकङ्कणम्।

बन्धनं कन्यकापूर्वं वरपूर्वं विमोचनम्।

इति वचनात्। ततो द्विजांश्चन्दनताम्बूलदक्षणादिना पूजयित्वा तदाशिषो मन्त्रोक्ता गृह्णीयादित्यादि देशकुलाचारानुसारेण ज्ञेयम्।

**इति श्रीप्रथमशाखीयरामकृष्णविरचिते पारस्करगृह्यसूत्रविवरणे संस्कारगणपतौ देवकोत्थापनम्॥**

---

अथ नान्दीश्राद्धानन्तरं मण्डपोद्वासनपर्यन्तं नियममाह—

नान्दीश्राद्धे कृते चैव यावन्मातृविसर्जनम्।
दर्शश्राद्धं क्षयश्राद्धं स्नानं शीतोदकेन च॥
उपवासं स्वधाकारं नित्यश्राद्धं तथैव च।
ब्रह्मयज्ञं चाध्ययनं नदीसीमातिपातनम्॥
अपसव्यं व्रतं चैव तथैव श्राद्धभोजनम्।
सपिण्डा नैव कुर्वीरन्मण्डपोद्वासनावधि॥

तथा च वृद्धमनुः—

अपसव्यं स्वधां यात्रां शीताद्भिः स्नानमेव च।
सपिण्डा नैव कुर्वीरन्यावन्मातृविसर्जनम्॥

अथ प्रसङ्गतो विवाहादूर्ध्वं वर्ज्यानाह—

स्नानं सचैलं तिलमिश्रकर्म प्रेतानुयानं कलशप्रदानम् ।
अपूर्वतीर्थामरदर्शनं च विवर्जयेन्मङ्गलतोऽब्दमेकम् ॥

पितॄणामुद्देशेन कलशदानमित्यर्थः । गदाधरभाष्ये—

ऊर्ध्वं विवाहात्पुत्रस्य तथा च व्रतबन्धनात् ।
आत्मनो मुण्डनं नैव वर्षं वर्षार्धमेव च ॥
जीर्णभाण्डादि न त्याज्यं गृहसम्मार्जनं तथा ।

हेमाद्रौ—

विवाहव्रतचूडासु वर्षमर्धं तदर्धकम् ।
पिण्डदानं मृदा स्नानं न कुर्यात्तिलतर्पणम् ॥
महालये गयाश्राद्धे मातापित्रोः क्षयेऽहनि ।
कृतोद्वाहोऽपि कुर्वीत पिण्डनिर्वपणं सुतः ॥

धर्मप्रवृत्तौ—

वृद्धे पितरि कर्तव्यं मातापित्रोः क्षयेऽहनि ।
पिण्डनिर्वपणं कार्यं पितृव्यादेरपिण्डनम् ॥

अथ वधूप्रवेशो ज्योतिर्निबन्धे—

वधूप्रवेशनं कार्यं पञ्चमे सप्तमे दिने ।
नवमे च शुभे वारे सुलग्ने शशिनो बले ॥

गर्गः—

वधूप्रवेशः प्रथमस्तृतीये शुभप्रदः पञ्चमकेऽथ वाऽह्नि ।
द्वितीयके वाऽथ चतुर्थके वा षष्ठे वियोगामयदुःखदः स्यात् ॥

नारदः—

आरभ्योद्वाहदिवसात्षष्ठे वाऽप्यष्टमे दिने ।
वधूप्रवेशः सम्पत्त्यै दशमेऽथ समे दिने ॥

वृद्धवशिष्ठोऽपि—

षष्ठेऽष्टमे वा दशमे दिने वा विवाहमारभ्य वधूप्रवेशः ।
पञ्चाङ्गसंशुद्धिदिनं विनाऽपि विधावसद्गोचरगेऽपि कार्यः ॥

तथा चोक्तं सङ्ग्रहे—

विवाहमारभ्य वधूप्रवेशो युग्मे तिथौ षोडशवासरान्तात् ।
ऊर्ध्वं ततोऽब्देऽयुजि पञ्चमान्तादतः परस्तान्नियमो न चास्ति ॥

चिन्तामणौ—

समाद्रिपञ्चाङ्कदिने विवाहाद्वधूप्रवेशोऽष्टि१६दिनान्तराले ।
शुभः परस्ताद्विषमाब्दमासदिनेऽक्षवर्षात्परतो यथेच्छम् ॥

अथ मासनिर्णयः । जयतुङ्गे विवाहपटले—

मार्गशीर्षे तथा माघे माधवे ज्येष्ठसंज्ञके ।
सुप्रशस्तो भवेद्वेश्मप्रवेशो नवयोषिताम् ॥

नक्षत्राणि व्यवहारतत्त्वे—

पौष्णात्कभाच्च श्रवणाच्च युग्मे हस्तत्रये मूलमघोत्तरासु ।
पुष्ये च मैत्रे च वधूप्रवेशो रिक्तेतरे व्यर्ककुजे च शस्तः ॥

अन्यत्रापि—

ध्रुवक्षिप्रमृदुश्रोत्रवसुमूलमघानिले ।
वधूप्रवेशः सन्नेष्टो रिक्तारार्के बुधेऽपरैः ॥

अपरैर्बुधवारेऽपि नेष्टः ।

भर्तुः शोभनगोचरे हिमकरे नास्तङ्गते भार्गवे
सूर्ये कीटघटाजगे शुभदिने पक्षेऽपि कृष्णेतरे ॥
हित्वा दिक्प्रतिलोमगौ बुधसितौ लालाटिकं दिक्पतिम्
चानीता गुणशालिनी नववधूर्नित्योत्सवैर्मोदते ॥

अथ प्रतिशुक्रविचारः—

नवबालवती नारी नवोढा चैव गर्भिणी ।
न गच्छेत्पदमेकन्तु सन्मुखे भार्गवे सति ॥
पितृवेश्मगता नारी सूयते तत्र सा यदि ।
नैव गच्छेद्गृहं भर्तुः सार्भका सन्मुखे भृगौ ॥

ज्योतिःप्रकाशे—

वामे शुक्रे नवोढायाः सुखं हानिश्च दक्षिणे ।
धनं धान्यं च पृष्ठस्थे सर्वनाशः पुरःस्थिते ॥

वीरमित्रोदये—

पूर्वतोऽभ्युदिते शुक्रे प्रयायाद्दक्षिणेऽपरे ।
पश्चादभ्युदिते चैव यायात्पूर्वोत्तरे दिशौ ॥

तथा भाद्रपदमारभ्य पूर्वादिमुख्यादिक्षु प्रतिदिशं मासत्रयं कपाटं ज्ञेयम् । चैत्रमारभ्य पूर्वाद्यष्टदिक्षु मुख्यदिक्षु मासद्वयं विदिक्ष्वेकं मासं क्रमेण कण्टकं जानीयात् । इदं द्वयं ग्रामान्तरे वधूगमने वर्ज्यम् । प्रतिशुक्रापवादमाह लल्लः—

स्वभवनपुरप्रवेशे देशानां विप्लवे तथोद्वाहे ।
नववध्वा गृहगमने प्रतिशुक्रविचारणा नास्ति ॥

माण्डव्यः—

नित्ययाने गृहे जीर्णे प्राशनान्तेषु सप्तसु ।
वधूप्रवेशमाङ्गल्ये न मौढ्यं गुरुशुक्रयोः ॥

सङ्ग्रहे—

एकग्रामे पुरे वाऽपि दुर्भिक्षे राष्ट्रविप्लवे ।
विवाहे तीर्थयात्रायां प्रतिशुक्रो न दुष्यति ॥

चण्डेश्वरः—

पित्रागारे कुचकुसुमयोः सम्भवो वा यदि स्या-
त्पत्युः शुद्धिर्न भवति रवेः सन्मुखो वाऽथ शुक्रः ।
शस्ते लग्ने गुणवति तिथौ चन्द्रताराविशुद्धौ
स्त्रीणां यात्रा भवति सफला सेवितुं स्वामिसद्म ॥

ज्योतिर्निबन्धे—

नैकस्मिन्वत्सरे कार्यौ गृहोद्वाहौ कथञ्चन ।
नवीनमन्दिरे कन्यां नवोढां न प्रवेशयेत् ॥

तथा वधूप्रवेशो निश्येव कार्यो न दिवा ।

वधूप्रवेशो न दिवा प्रशस्तो राजप्रवेशो न निशि प्रशस्तः ।
दिवा च रात्रौ च गृहप्रवेशः प्रकीर्तितस्तु त्रिविधिः प्रवेशः ॥

अथ नववध्वाः प्रथमवर्षे कुत्र वासो निषिद्धः । ज्योतिर्निबन्धे—

विवाहात्प्रथमे पौषे आषाढे चाधिमासके ।

न सा भर्तृगृहे तिष्ठेच्चैत्रे तातगृहे तथा ॥

आषाढो ज्येष्ठोपलक्षकः, अधिकः क्षयोपलक्षकः ।

अथास्य स्पष्टप्रयोगः । सवधूको वरः मङ्गलतूर्यशब्दपूर्वको गृहं प्रविशेत् । "ॐ आनो भद्रा १ देवानां भद्रा २ तान्पूर्वया ३ तन्नो व्वातो ४ तमीशानं ५ स्वस्तिन इन्द्रो ६ पृषदश्वा ७ भद्रकर्णेभिः ८ शतमिन्नु शरदो ९ अदितिर्द्यौरदिति १० इतिमन्त्रैर्वधूं गृहं प्रवेश्य गणपतिं लक्ष्मीं च सम्पूज्य पुण्याहं वाचयित्वा विप्राशिषो गृह्णीयात् । तद्यथा–आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य "विवाहाङ्गभूतं लक्ष्मीपूजनमहं करिष्ये । तत्रादौ निर्विघ्नार्थं गणपतिपूजनं कलशस्थापनं च करिष्ये" सर्वं सम्पाद्य लक्ष्मीं पूजयेत् । अथावाहनम्––

महालक्ष्मि ! समागच्छ पद्मनाभपदादिह ।
यथोपपन्ना पूजेयं त्वदर्थं देवि ! सम्भृता ॥

अथासनम्––

आलयस्ते हि कल्पितः कमलं कमलालये ! ।
कमले ! कमले ह्यस्मिन्स्थितिं मत्कृपया कुरु ॥

अथ पाद्यम्––

गङ्गादिसलिलाधारं तीर्थमन्त्राभिमन्त्रितम् ।
दूरयात्राश्रमहरं पाद्यं तत्प्रतिगृह्यताम् ॥

अथार्घ्यम्––

अम्भुना संस्तुते!देवि!इष्टसिद्धिवरप्रदे ! ।
शङ्खचक्रगदे!देवि!गृहाणार्घ्यं नमोऽस्तु ते ॥

अथाचमनीयम्––

कर्पूरवासितं कृष्णावेण्या देवि!समागतम् ।
ददाम्याचमनं देवि!महालक्ष्मि!नमोऽस्तु ते ॥

अथ स्नानम्––

शिशिरं निर्मलं तोयं गङ्गादिभ्यो मयाऽऽहृतम् ।
स्नानार्थं ते महालक्ष्मि ! गृहाण सुरपूजिते ! ॥

पञ्चामृतैः स्नानम् । अथ वस्त्रम्--

तन्तुसन्तानसंसिद्धं कलाकौशलकल्पितम् ।
सर्वाङ्गाभरणं श्रेष्ठं वसनं परिधीयताम् ॥

अथ कञ्चुकी—

सरस्वतीप्रिये ! देवि ! सर्वालङ्कारभूषणे ! ।
सर्वसौभाग्यदे ! देवि ! उग्रशक्ते ! नमोऽस्तु ते ॥

अथालङ्काराणि--

रत्नमाणिक्यसंयुक्तं वैडूर्यं मौक्तिकं शुभम् ।
सुवर्णपुष्परागैश्च महालक्ष्मि ! नमोऽस्तु ते ॥

अथ हरिद्रा—

हरिद्रा पीतवर्णा च स्त्रियः सौभाग्यदायिनी ।
हरिद्रयाऽर्चिते ! देवि ! अतः शान्तिं प्रयच्छ मे ॥

अथ कुङ्कुमम्—

कुङ्कुमं कामनाद्रव्यं कामनाकामसम्भवम् ।
कुङ्कुमेनार्चिते!देवि!सर्वसौभाग्यदायिनि ! ॥

अथ कज्जलम्--

कालिके ! कृष्णवर्णे ! त्वं सुभगे ! शान्तिकारके ! ।
अक्षिभ्यां कज्जलं दत्तं गृहाण परमेश्वरि ! ॥

अथ सिन्दूरम्--

उग्रशक्ते ! नमस्तुभ्यं रक्तसर्वाङ्गभूषिते ! ।
रक्ततीक्ष्णस्वरूपेण भयङ्करि ! नमोऽस्तु ते ॥

अथ गन्धम्--

मलयाचलसम्भूतं नानापन्नगरक्षितम् ।
शीतलं बहुलामोदं चन्दनं प्रतिगृह्यताम् ॥

अथाक्षताः--

अक्षतास्तण्डुलाः शुद्धाः कुङ्कुमेन विराजिताः ।
प्रीयतां सर्वदेवेशि ! जगन्मातर्नमोऽस्तु ते ॥

अथ पुष्पम्--

मिलत्परिमलामोदमत्तालिकुलसङ्कुलम् ।

आनन्दि नन्दितोद्यानं पद्मायै कुसुमन्तव ॥

अथाङ्गपूजा--

"ॐ दुर्गायै नमः पादौ पूजयामि। जयन्त्यै न० गुल्फौ पू० । महाकाल्यै न० ऊरू पू० । भद्रकाल्यै न० कटिं पू० । कपालिन्यै न० नाभिं पू० । ब्राह्म्यै० कुक्षौ पू० । शिवायै० हृदयं पू० । धात्र्यै० हस्तौ० । स्वधायै० कण्ठं पू० । स्वाहायै० वक्त्रं पू० । शशिवाहिन्यै० ललाटं पू० । माहेश्वर्यै० नासिकां पू० । रौद्रमुख्यै० श्रोत्रे पू० । सिंहवाहिन्यै० नेत्रे पू० । कौमार्यै० शिरः पू० ।

अथ माला—

श्रीपत्रैर्बिल्वपत्रैश्च शतपत्रैर्विचित्रिताम् ।
पुष्पमालां प्रयच्छामि सङ्गृहाण सुरेश्वरि ! ॥

अथ दूर्वाङ्कुरान्—

विष्ण्वादिसर्वदेवानां प्रियपुष्पां सुशोभनाम् ।
क्षीरसागरसम्भूतां दूर्वां स्वीकुरु सर्वदा ॥

अथ धूपम्—

गन्धसम्भारसन्नद्धः कालागरुसमुद्भवः ।
सुरासुरनरानन्दधूपोऽयं प्रतिगृह्यताम् ॥

अथ दीपम्—

मार्तण्डमण्डलाखण्डचन्द्रबिम्बाग्नितेजसम् ।
निधानं देवि ! दीपोऽयं निर्मितस्तव भक्तितः ॥

अथ नैवेद्यम्—

देवतालयपातालभूतलाधारधान्यजम् ।
रसं षोडशसम्पन्नं नैवेद्यं ते नमः श्रिये ! ॥

मध्ये पानीयम् । अथ करोद्वर्तनम्—

सुगन्धपरिमलाढ्यं च गोरोचनसमन्वितम् ।
अगरु मृगनाभिं च करोद्वर्तनकं शुभम् ॥

अथ ताम्बूलम्—

पातालतलसम्भूतं वदनाम्भोजभूषणम् ।

नानागुणगणाकीर्णं ताम्बूलं प्रतिगृह्यताम् ॥

अथ दक्षिणा—

यत्रास्ति ते कृपालेशः स एव श्रीनिकेतनम् ।
तथापि ते मयोत्सृष्टा दक्षिणा प्रतिगृह्यताम् ॥

अथ नीराजनम्—

दिव्यहाटकपात्रस्थं रत्नदीपप्रभायुतम् ।
नीराजनं कृतं देवि ! नारायणि ! नमोऽस्तु ते ॥

मन्त्रपुष्पाञ्जलिः । अथ प्रार्थना—

विष्णोर्वक्षसि पद्मे च शङ्खे चक्रे तथाम्बरे ।
लक्ष्मि ! देवि ! यथाऽसि त्वं मम नित्या तथा भव ॥

अथ नमस्कारः—

नमः श्रियै रमे ! पद्मे ! कमले ! कमलालये ! ।
नमः क्षीरोदजे ! लक्ष्मि ! इन्दिरे ! हरिवल्लभे ! ।
क्षमाप्य दण्डवद्भक्त्या प्रणिपत्य पुनः पुनः ॥

"अस्य कर्मणः साङ्गतासिद्ध्यर्थं भूयसीं दक्षिणां नानागोत्रेभ्यो ब्राह्मणेभ्यो दातुमहमुत्सृजे" । ब्राह्मणेभ्यो मन्त्राशिषो गृहीत्वा कर्म समापयेत् ।

इति श्रीप्रथमशाखीयरामकृष्णविरचिते पारस्करगृह्यसूत्रविवरणे संस्कारगणपतौ लक्ष्मीपूजनम् ।

---

अथ प्रसङ्गात्पुनर्विवाह उच्यते । प्रयोगपारिजाते—इत्थं विवाहे कृते पश्चाल्लग्नाद्यशुद्धिज्ञानं चेत्तदा ज्योतिःशास्त्रोक्तकालविशेषे पुनर्विवाहं कुर्यात् । तदाह नृसिंहः श्रीधरीये—

पुनर्विवाहं वक्ष्यामि दम्पत्योः शुभवृद्धिदम् ।
लग्नेन्दुलग्नयोर्दोषे ग्रहताराद्यसम्भवे ॥
अन्येष्वशुभकालेषु दुष्टयोगादिसम्भवे ।
विवाहे त्वथ दम्पत्योराशौचादिसमुद्भवे ॥

अत्राशौचं वधूवरसम्बन्धि ज्ञेयम् । अन्यत्र "सद्यः शौचं विधीयत" इति तदभावस्योक्तत्वात् ।

विवाहसमये प्राप्ते यद्देहे मृतिजन्मनी ।
स्यातां तदा पुनश्चैव शुद्धे काले समाचरेत् ॥

इति वचनाच्च । केचित्तु वरेणाचरितव्यगुरुमृताशौचाविषयमेतत्, अन्यत्र सामान्याशौचे नान्दीश्राद्धादूर्ध्वमाशौचाभावादित्याहुः । तस्य दोषस्य शान्त्यर्थं पुनर्वैवाह्यमिष्यते ।

अयने चोत्तरे श्रेष्ठं वर्द्धयेत्तु विशेषतः ।
आषाढमार्गशीर्षौ द्वौ वर्ज्यौ शेषाः शुभावहाः ॥
विवाहोक्ततिथ्यंशराशिवारादिवर्गजाः ।
करणानि योगसंज्ञानि ग्रहगोचरयोगगाः ॥
तस्मिन्विवाहसमये शुभदाश्च तथैव वा ।
पूर्वाह्णे पूर्वरात्रे च विवाहः शुभदो भवेत् ॥

अत्रत्यान्यो विशेषः सगोत्रादिविवाहः प्रायश्चित्तविधाने द्रष्टव्यः । अथ द्वितीयविवाहविधानम् । तत्र श्रुतिः--"तस्मादेके बह्वीर्जाया विन्दत" इति । श्रुत्यन्तरमपि "तस्मादेकस्य बह्व्यो जाया भवन्ति नैकस्यै बहवः सहपतय" इति । तद्विषयमाहापस्तम्बः—"धर्मप्रजासम्पन्ने दारे नान्यां कुर्वीतान्यतराभावे कार्या प्रागग्न्याधेयादिति" । अस्यार्थः–यदि प्रागूढा स्त्री धर्मेण प्रजया च सम्पन्ना तदा नान्यां विवाहयेत् । अन्यतराभावेऽग्न्याधानात्प्राग्वोढव्येति । "त्रिभिर्ऋणवान् जायत इति नापुत्रस्य लोकोऽस्तीति" श्रुतेः । स्मृतिश्च–

अपुत्रः सन्पुनर्दारां परिणीय ततः पुनः ।
परिणीय समुत्पाद्य नोचेदापुत्रदर्शनात् ।
विरक्तश्चेद्वनं गच्छेत्संन्यासं वा समाश्रयेत् ॥

प्रयोगरत्ने याज्ञवल्क्यः–

सुरापी व्याधिता धूर्ता वन्ध्याऽर्थघ्न्यप्रियंवदा ।
स्त्रीप्रसूश्चाधिवेत्तव्या पुरुषद्वेषिणी तथा ।

अधिविन्ना तु भर्तव्या महदेनोऽन्यथा भवेत् ॥

अधिवेत्तव्या तदुपरि स्त्र्यन्तरं कर्तव्यमित्यर्थः। अधिवेदने प्रतीक्षा-कालमाह मनुः-

वन्ध्याऽष्टमेऽधिवेत्तव्या दशमे तु मृतप्रजा ।
एकादशे स्त्रीजननी सद्यस्त्वप्रियवादिनी ॥

सङ्ग्रहे तु—

अप्रजां दशमे वर्षे स्त्रीप्रजां द्वादशे त्यजेत् ।
मृतप्रजां पञ्चदशे सद्यस्त्वप्रियवादिनीम् ॥

विधानपारिजाते स्मृतिभास्करे-

व्याधिता स्त्रीप्रजा वन्ध्या उन्मत्ता विगतार्तवा ।
अदुष्टा लभते त्यागं तीर्थतो न तु धर्मतः ॥

तीर्थतो-योनितः। धर्मकार्ये सहायभूता भवत्येव। संहितायां विशेष-माह स एव-

या रोगिणी स्यात्तु हिता सम्पन्ना चैव शीलतः ।
सानुज्ञाप्याऽधिवेत्तव्या नावमान्या तु कर्हिचित् ॥

प्रयोगरत्ने-

एकामुत्क्रम्य कामार्थमन्यां लब्धुं य इच्छति ।
समर्थस्तोषयित्वाऽर्थैः पूर्वोढामपरां वहेत् ॥ इति ॥

याज्ञवल्क्यस्तु-

आज्ञासम्पादिनीं दक्षां वीरसूं प्रियवादिनीम् ।
त्यजन्दाप्यस्तृतीयांशमद्रव्यो भरणं स्त्रियाः ॥ इति ॥

सधनेन स्वद्रव्यतृतीयांशो देयः। निर्धनेनान्नाच्छादनादि देयमित्यर्थः। या तूक्तद्रव्यादिना परितोषिता गृहान्निर्गच्छेत्तां प्रत्याह मनुः-

अधिविन्ना तु या नारी निर्गच्छेद्रोषिता गृहात् ।
सा सद्यः सन्निरोद्धव्या त्याज्या स्वकुलसन्निधौ ॥ इति ॥

पत्नीबहुत्वे विशेषमाह कात्यायनः-

अग्निशिष्टादिशुश्रूषां बहुभार्यः सवर्णया ।
कारयेत्तद्बहुत्वं चेज्ज्येष्ठया गर्हिता नचेत् ॥ इति ।

अस्यार्थः—अग्निशुश्रूषा श्रौतस्मार्ताग्निसाध्यकर्म शिष्टशुश्रूषा अतिथिपूजनादि पत्नीसहायसंपाद्यं तत्तदेतत्सर्वं सवर्णासवर्णभार्यासमुदायवान् सवर्णभार्यया कारयेत् । अनेकसवर्णभार्यायुक्तस्तु ज्येष्ठया सवर्णभार्यया कारयेत् । "यदि सा गर्हिता न चेत्" । गर्हाशब्दोऽत्र धर्मायोग्यत्वोपपादकदोषोपलक्षकः । ते दोषा अन्धत्वकुष्ठित्वादयः । इदमप्याधाने सहाधिकृतानेकभार्याविषयम् । अनधिकृतायास्तु प्रसक्त्यभाव एव । तत्रापि केवलक्रत्वर्थमाज्यावेक्षणादि यजमानौदुम्बरीसमानवेदिकयैव सवर्णया ज्येष्ठया कारयेत् । पत्नीसन्नहनादिकर्तृसंस्कारकन्तु सहाधिकृताभिः सर्वाभिरित्यादि मीमांसासारवेदिनां सुज्ञानम् । स्मार्ताग्निसाध्ये तु कर्मणि सर्वासां सहाधिकारः । प्रथमविवाहाग्नेवेव होमविधानात् , तदसम्भवेऽग्निद्वयसंसर्गविधानाच्च । तथा च कात्यायनाश्वलायनौ—

सदारोऽन्यान्पुनर्दारानुद्वोढुं कारणान्तरात् ।
यदीच्छेदग्निमान्कुर्वन्क्व होमोऽस्य विधीयते ।
स्वाग्नावेव भवेद्धोमो लौकिके न कदाचन ॥ इति ॥

इदं तु सति सम्भवे ग्रामान्तरादावसम्भवे तु लौकिकेऽग्नौ विवाहहोमं कृत्वा तदनन्तरं मण्डनाद्युक्तप्रकारेण पुनराधानं कार्यम् । मृतपत्नीकस्य द्वितीयविवाहे कालविशेष उक्तः सङ्ग्रहे—

प्रमदामृतिवासरादितः पुनरुद्वाहविधिर्वरस्य च ।
विषमे परिवत्सरे शुभो युगले चापि मृतिप्रदो भवेत् ॥

जीवत्यां पूर्वपत्न्यां द्वितीयादिविवाहे नायं कालनियमः । अत्र द्वितीयादिविवाहे जीवत्पितृकोऽपि स्वयमेव नान्दीश्राद्धं कुर्यात् । उक्तं च—

नान्दीश्राद्धं पिता कुर्यादाद्ये पाणिग्रहे पुनः ।
अत ऊर्ध्वं प्रकुर्वीत स्वयमेव तु नान्दिकम् ॥ इति ॥

इति संस्कारगणपतौ द्वितीयविवाहविधानम् ॥

अथ तृतीयमानुषीविवाहस्य निषिद्धत्वात्तस्मिन्कर्तव्ये अर्कविवाहविधिः । तृतीयानिषेधमाह मात्स्ये कश्यपः—

तृतीयां मानुषीं नैव चतुर्थीं यः समुद्वहेत् ।
पुत्रपौत्रादिसम्पन्नः कुटुम्बी साग्निको वरः ॥
उद्वाहे सति सिद्ध्यर्थे तृतीया न कदाचन ।
मोहादज्ञानतो वाऽपि यदि गच्छेत्तु मानुषीम् ॥
नश्यत्येव न सन्देहो गार्ग्यस्य वचनं यथा ॥

विधानपारिजाते—

धर्मरागनिमित्तोऽपि नोद्वहेन्मानुषीं स्त्रियम् ।
तृतीयां यदि चोद्वाहेत्तर्हि सा विधवा भवेत् ॥
चतुर्थादिविवाहार्थं तृतीयेऽर्कं समुद्वहेत् ।
आदित्यदिवसे वाऽपि हस्तर्क्षे वा शनैश्चरे ॥
शुभे दिने वा पूर्वाह्ने कुर्यादर्कविवाहकम् ।

देशादि ब्रह्मपुराणे—

ग्रामात्प्राच्यामुदीच्यां वा सुपुष्पफलसंयुताम् ।
परीक्ष्य यत्नतोऽधस्तात्स्थण्डिलादि यथाविधि ॥

व्यासः—

स्नात्वालङ्कृतवासास्तु रक्तगन्धादिभूषितम् ।
सपुष्पफलशाखैकमेकगुल्मं समाश्रयेत् ॥
सुलक्षणेन संयुक्तमर्कं संस्थाप्य यत्नतः ।
अर्ककन्याप्रदानार्थमाचार्यं कल्पयेत्पुरा ॥
अर्कसन्निधिमागत्य तत्र स्वस्त्यादि वाचयेत् ।
नान्दीश्राद्धं हिरण्येन अष्टौ वर्गान्प्रपूजयेत् ॥
मण्डपं नात्र कुर्वीत अविघ्नं पूजनं तथा ।
पूजयेन्मधुपर्केण वरं विप्रस्य हस्ततः ॥
यज्ञोपवीतवस्त्रे च हस्तकर्णादिभूषणम् ।
उष्णीषगन्धमाल्यादि वरायास्मै प्रदापयेत् ॥
स्वशाखोक्तविधानेन मधुपर्कं समाचरेत् ।

ब्रह्मपुराणे—यथाविधि इत्यस्यानन्तरम्—

कृत्वाऽर्कं पुरतस्तिष्ठन्प्रार्थयेत्तु द्विजोत्तमः ।
त्रिलोकवासिन्सप्ताश्व ! च्छायया सहितो वरः ॥
तृतीयोद्वाहजं दोषं निवारय सुखं कुरु ।
तत्राध्यारोप्य देवेशं छायया सहितं रविम् ॥
वस्त्रैर्माल्यैस्तथा गन्धैस्तन्मन्त्रेणैव पूजयेत् ।

तन्मन्त्रेण "आकृष्णेने"त्यादिना । अन्यत्रापि—

श्वेतवस्त्रेण संवेष्ट्य तथा कार्पासतन्तुभिः ।
गन्धपुष्पैस्तथाभ्यर्च्य तल्लिङ्गैरभिषिञ्च्य च ॥
गुडौदनं तु नैवेद्यं ताम्बूलं च समर्पयेत् ।

व्यासः—

अर्कं प्रदक्षिणीकुर्वन् जपेन्मन्त्रमिमं बुधः ।
मम प्रीतिकरायेयं मया सृष्टा पुरातनी ॥
अर्कजा ब्रह्मणा सृष्टा अस्माकं परिरक्षतु ।
पुनः प्रदक्षिणीकुर्यान्मन्त्रेणानेन मन्त्रवित् ॥
नमस्ते मङ्गले ! देवि ! नमः सवितुरात्मजे ! ।
त्राहि मां कृपया देवि ! पत्नीत्वं म इहागता ॥
वृक्षाणामादिभूतस्त्वं देवानां प्रीतिवर्द्धनः ।
तृतीयोद्वाहजं पापं मृत्युं चाशु विनाशय ॥
ततश्च कन्यावरणं त्रिपुरुषं कुलमुद्धरेत् ।
आदित्यः सविता चार्कः पुत्री पौत्री च नप्त्रिका ॥
गोत्रं काश्यप इत्युक्तं लोके लौकिकमाचरेत् ।
मुहूर्तेऽर्कं निरीक्षेत स्वस्तिसूक्तमुदीरयेत् ॥
आशीर्भिः सहितैः कुर्यादाचार्यसहितैर्द्विजैः ।
अथाचार्यं समाहूय विधिना तन्मुखाच्च तम् ॥
प्रतिगृह्य ततो होमं गृह्योक्तविधिना चरेत् ।

आचार्यस्य दानमन्त्रमाह व्यासः—

अर्ककन्यामिमां विप्र ! यथाशक्तिविभूषिताम् ।

गोत्राथ शर्मणे तुभ्यं दत्तां विप्र ! समाश्रयेत् ॥
अजपन्पक्षकर्माणि कृत्वा कङ्कणपूर्वकम् ।
यावत्यं चावृतं सूत्रं तावदर्कं प्रवेष्टयेत् ॥
स्वशाखोक्तेन मन्त्रेण गायत्र्या चाथ वा यजेत् ।
पञ्चीकृत्य पुनः सूत्रं स्कन्धे बध्नाति मन्त्रतः ॥
बृहत्सामेतिमन्त्रेण सूत्ररक्षां प्रकल्पयेत् ।
अर्कस्य पुरतः पश्चाद्दक्षिणोत्तरयोस्तथा ॥
कुम्भांश्च निक्षिपेत्पश्चादाग्नेयादिचतुष्टये ।
सवस्त्रप्रतिकुम्भं च त्रिसूत्रेणैव वेष्टयेत् ॥
हरिद्रागन्धसंयुक्तं पूरयेच्छीतलं जलम् ।
प्रतिकुम्भं महाविष्णुं पूजयेत्परमेश्वरम् ॥
पाद्यार्घादिनैवेद्यान्तं कुर्यान्नाम्नैव मन्त्रवित् ॥

अत्र होमप्रकारश्च शौनकेन प्रदर्शितः—

तृतीयेऽत्र विवाहे तु सम्प्राप्ते पुरुषस्य तु ।
अर्कविवाहं वक्ष्यामि शौनकोऽहं विधानतः ॥
अर्कसन्निधिमागत्य तत्र स्वस्त्यादि वाचयेत् ।
नान्दीश्राद्धं प्रकुर्वीत स्थण्डिलं च प्रकल्पयेत् ॥
अर्कमभ्यर्च्य सौर्यया गन्धपुष्पाक्षतादिभिः ।

सौर्यया-सूर्यदैवत्यया "आकृष्णेने"त्यादृचा ।

स्वयं चालङ्कृतस्तद्वद्वस्त्रमाल्यादिभिः शुभैः ।
अर्कस्योत्तरदेशे तु समन्वारब्ध एतया ॥

एतयाऽर्ककन्यया ।

उल्लेखनादिकं कुर्यादाघारान्तमतः परम् ।
आज्याहुतीश्च जुहुयात्सङ्गोभिरनयैकया ।
यस्मै त्वा कामकामायेत्येतया च परस्परम् ॥
व्यस्ताभिश्च समस्ताभिस्ततश्च स्विष्टकृद्भवेत् ।
परिषेचनपर्यन्तमयाश्चेत्यादितः क्रमात् ॥

प्रार्थनादिविशेषमाह व्यासः—

पुनः प्रदक्षिणं कृत्वा मन्त्रमेतमुदीरयेत् ।
मया कृतमिदं कर्म स्थावरेण जरायुणा ॥
अर्कापत्यानि मे देहि तत्सर्वं क्षन्तुमर्हसि ।
इत्युक्त्वा शान्तिसूक्तानि जप्त्वा तं विसृजेत्पुनः ॥
गोयुग्मं दक्षिणां दद्यादाचार्याय च भक्तितः ।
इतरेभ्योऽपि विप्रेभ्यो दक्षिणां चापि भक्तितः ॥
तत्सर्वं गुरवे दद्यादन्ते पुण्याहवाचनम् ॥

अत्र पञ्चमदिनकृत्यमाह ब्रह्मपुराणे—

चतुर्थे दिवसेऽतीते पूर्ववत्तां प्रपूज्य च ।
विसृज्य होममग्निं च विधिना मानुषीं पराम् ॥
उद्वहेदन्यथा नैव पुत्रपौत्रादिवृद्धिमान् ।
न पशून्न च मित्राणि मण्डलं नैव गच्छति ॥
एवमेव द्विजश्रेष्ठ ? विधिना सम्यगुद्वहेत् ।
धनधान्यसमृद्धिश्च इच्छाशक्तिः परत्र च ॥ इति ।

इति मूलवाक्यानि ।

अथास्य स्पष्टप्रयोगः ।

तत्र ज्योतिर्विदादिष्टे शुभे दिने स्नानादिसम्पादितो वरो द्विजैः सह सुवासिनीभिर्वादित्रघोषैश्च सह पूर्वाह्णे पूर्वस्यामुत्तरस्यां वा दिशि गत्वा पुष्पफलयुतलक्षणोक्तमर्कं परीक्ष्य तत्र सर्वे उपविशेयुः । वरस्तु अर्कसमीपे स्त्रिया रङ्गमालिकया निर्मितस्थले वस्त्रादिमृद्वासने द्विजैः सह प्राङ्मुख उपविशेत् । आचमनप्राणायामत्रयं कृत्वा "श्रीलक्ष्मीनारायणाभ्यां नमः" इत्यादि देशकालौ सङ्कीर्त्य "एवंगुणविशेषणविशिष्टायां पुण्यतिथौ मम तृतीयमानुषीविवाहजदोषपरिहारद्वारा श्रीपरमेश्वरप्रीतये अर्कविवाहमहं करिष्ये" इति सङ्कल्प्य, तत्रादौ गन्धपुष्पादिभिः अर्ककन्याप्रदानार्थमाचार्यं वृणुयात् । "विवाहाङ्गत्वेन स्व-

स्तिपुण्याहवाचनमविघ्नपूजनं मण्डपदेवतापूजनं मातृकापूजनं वसो-र्द्धारापूजनं हिरण्येन नान्दीश्राद्धं चाहं करिष्ये। तत्रादौ निर्विघ्न-तासिद्ध्यर्थं गणेशपूजनमहं करिष्ये"। इति सङ्कल्प्य तान्यनुक्रमेण कुर्यात्। आचार्यं प्रार्थयेत्—

कन्यापिता यथा सूर्यो देवानां च प्रजापतिः।
तथा त्वर्कप्रदानार्थमाचार्यस्त्वं कुरु द्विज ?॥

इति प्रार्थना। तत आचार्यः स्वशाखोक्तविधिना विष्टरपाद्यार्घ्या-चमनमधुपर्कवस्त्रयज्ञोपवीतोत्तरीयगन्धपुष्पालङ्करणादिभिर्वरं प्रपूजयेत्। अथानन्तरं तिष्ठन् वरोऽर्कवृक्षं वस्त्रेण कार्पाससूत्रेण वा पञ्चवारं चतुर्वारं वेष्टयित्वा तस्मिन्सूर्यदेवतामारोप्य "ॐ आ कृष्णेन रजसा० पश्यन्"। अनेनावाहनादिदक्षिणान्तं सम्पूज्य प्रार्थयेत्।

त्रैलोक्यवासिन्सप्ताश्व ! च्छायया सहितो रवे !।
तृतीयोद्वाहजं दोषं निवारय सुखं कुरु॥

इति जलेन त्रिवारं सिञ्चेत्।

मम प्रीतिकरा येयं मया सृष्टा पुरातनी।
अर्कजा ब्रह्मणा सृष्टा ह्यस्मात्कर्माभिरक्षतु॥

इति प्रदक्षिणां कुर्वन् जपेत्।

नमस्ते मङ्गले ! देवि ! नमः सवितुरात्मजे !।
त्राहि मां कृपया देवि ! पत्नीत्वं म इहागता॥

अत्र कातीयानां वेद्यामग्निप्रतिष्ठापूर्वकोविवाह उच्यते। अतः का-रणादुत्तरदिग्भागे सम्पादिते स्थण्डिले पञ्चभूसंस्कारपूर्वकमग्निं संस्थाप्य, ततः पश्चिममुखः साक्षतवरस्तिष्ठन्नर्कं प्रार्थयेत्।

अर्क ? त्वं ब्रह्मणा सृष्टः सर्वप्राणिहिताय च।
वृक्षाणामादिभूतस्त्वं देवानां प्रीतिवर्द्धनः॥
तृतीयोद्वाहजं दोषं मृत्युं चाशु विनाशय॥

ततो द्विजैर्मङ्गलाष्टकानि पठितव्यानि। "तदेव लग्नान्ते ॐप्रतिष्ठे"

त्युक्ते अन्तःपटमुत्तरतो निःसार्य अर्कस्योपरि अक्षतानि क्षिपेत् । प्राङ्मुखोऽर्कसमीपे तिष्ठेत् । तत आचार्यः सूत्रेण वरार्कौ "परि त्वा गिर्व्वणो०" गायत्र्या वा चतुर्वारं पञ्चवारं वेष्टयित्वा सर्वैः सुलग्नं कार्यम् । "वरार्क्योः सुलग्नमस्तु, तृतीयविवाहजदोषपरिहारोऽस्तु" । ततश्च वरणं त्रिपुरुषं कुलमुच्चारयेत् । तद्यथा—आचार्यः आचमनं प्राणायामं च कृत्वा देशकालौ सङ्कीर्त्य "अस्य तृतीयोद्वाहजदोषपरिहारार्थं ब्राह्मविवाहविधिना अर्कीदानमहं करिष्ये" आर्कीशाखोपरि वरहस्ते "शिवाऽऽपः सन्तु । सौमनस्यमस्तु । तृतीयोद्वाहजदोषपरिहारोऽस्तु । दीर्घमायुः शान्तिः पुष्टिस्तुष्टिश्चास्तु । काश्यपगोत्रस्य काश्यपावत्सारनैध्रुवेतित्रिप्रवरस्य आदित्यस्य प्रपौत्रीं सवितुः पौत्रीं अर्कस्य पुत्रीं, अमुकगोत्रस्यामुकप्रवरस्यामुकशर्मणः प्रपौत्राय अमुकशर्मणः पौत्राय अमुकशर्मणः पुत्राय अमुकशर्मणे वराय तुभ्यमहं सम्प्रददे" इति सकृत्त्रिवारं वा । इति कन्यादानम् ।

अर्ककन्यामिमां विप्र ! यथाशक्तिविभूषिताम् ।
गोत्राय शर्मणे तुभ्यं दत्तां विप्र ! समाश्रय ॥

इति वधूं प्रति वदेत् । वरस्तु "स्वस्ती"त्युक्त्वा वेष्टितसूत्रमूर्द्ध्वं निष्काश्य तेन "बृहत्साम नक्षत्रमृद्धवृद्धवृष्ट्यं त्रिष्टुभो यः शुभितमुग्रवीरम् । इन्द्रस्तोमेन पञ्चदशेन मध्यमिदं वातेन सागरेण रक्ष" इति मन्त्रेण हस्ते कङ्कणं बध्नीयात् । ततोऽर्कास्थण्डिलाद्वा चतुःकोणेषु सवस्त्रं कुम्भचतुष्टयं संस्थाप्य त्रिः सूत्रेण वेष्टयेत् । जलहरिद्राकुङ्कुमगन्धपुष्पफलहिरण्यवस्त्रादिभिः पूरितेषु सुवर्णनिर्मितां पृथक् पृथक् प्रतिमामावाहनादिदक्षिणान्तं नाममन्त्रेण पुरुषसूक्तेन वा पूजयेत् । वेदविद्भिश्चतुर्भिर्ब्राह्मणैः शुभसूक्तानि पठितव्यानि । वरस्तु ततो होमं कुर्यात् । आचमनप्राणायामदेशकालकीर्तनान्ते "अर्कविवाहाङ्गभूतं होमं करिष्ये ।" इति सङ्कल्प्य, "पूर्वेण ब्रह्मणो गमन"मित्यादिपद्धत्युक्तप्रकारेणैव पूर्णपात्रान्तं विकल्पः । "तत्र प्रजापतिं, इन्द्रं, अग्निं, सोमं, अथ प्रधानं बृहस्पतिं, अग्निं, वायुं, सूर्यं, प्रजापतिं, एता आज्येन । अग्निं,

वायुं, सूर्यं, अग्नीवरुणौ, अग्नीवरुणौ, अग्निं, वरुणं, सवितारं, विष्णुं विश्वान्देवान् मरुतः स्वर्कान्, वरुणं, ऋतासाहं, ऋतधामान''मित्यादिपद्धत्युक्तं सर्वं स्विष्टकृदन्तं कुर्यात् । ततोब्रह्मवरणाद्याघाराज्यभागान्तं कृत्वा प्रधानहोमः । ''सङ्गोभिरित्यस्याङ्गिरा ऋषिः त्रिष्टुप्छन्दः बृहस्पतिर्देवता आज्यहोमे विनियोगः । ॐ सङ्गोभिराङ्गिरसो नक्षमाणो भग इवेदर्यमणन्निनाय। जने मित्रो न दम्पती अनक्ति बृहस्पते वाजया शूँरवाजौ स्वाहा । इदं बृहस्पतये नमम । यस्मै त्वेति वामदेव ऋषिः त्रिष्टुप्छन्दः अग्निर्देवता आज्यहोमे वि० । ॐ यस्मै त्वा काम कामाय वयं सम्राङ्यजामहे । तमस्मभ्यं कामं दत्वाऽथेदं त्वं घृतं पिब स्वाहा । इदमग्नये'' ततो व्यस्तसमस्ताभिर्व्याहृतिभिर्होमः कार्यः । यथा ''ॐभूः स्वाहा । इदमग्नये । ॐ भुवः स्वाहा । इदं वायवे० । ॐस्वः स्वाहा । इदं सूर्याय० ॐ भूर्भुवः स्वः स्वाहा । इदं प्रजापतये०'' । ततोऽष्टाहुतयः । ऋतासाहेत्यादिस्विष्टकृदन्तहोमः कार्यः । जयादि कृताकृतमेव कार्यं न कार्यम् । संस्रवप्राशनादिप्रणीताविमोकान्ते द्विजैः कुम्भस्थोदकप्रणीतोदकाभ्यां वराग्याभिषेकः कार्यः । यथा विप्राः कुशाग्रैः सपल्लवैः । तत्र ''देवस्य त्वा० ३ । सोमस्य त्वा० १ । स्वस्ति न इन्द्रो० १ । वरुणस्योत्तम्भन० १। पुरुषसूक्तेन । दश गायत्र्या । विभ्राट् । ऋचं वाचं'' सर्वत्र एताभिर्ऋग्भिर्वरभमिषिञ्चति । वरः —

पुनः प्रदक्षिणं कृत्वा मन्त्रमेतमुदीरयेत् ।
मयाकृतमिदं कर्म स्थावरेषु जरायुणा ॥
अर्कापत्यानि नो देहि तत्सर्वं क्षन्तुमर्हसि ।

इत्युक्त्वा शान्तिसूक्तानि जप्त्वा च विसृजेयुः ।

गोयुग्मं दक्षिणां दद्यादाचार्याय च भक्तितः ।
इतरेभ्योऽपि विप्रेभ्यो दक्षिणां चापि शक्तितः ॥
तत्सर्वं गुरवे दद्यादन्ते पुण्याहवाचनम् ।

चतुर्थे दिवसेऽतीते पूर्ववत्तां प्रपूज्य च ॥

इति ब्रह्मपुराणे ।

विसृज्य होममग्निं च विधिना मानुषीं पराम् ।
उद्वहेदन्यथा नैव पुत्रपौत्राभिवृद्धिमान् ॥
एवमेव द्विजश्रेष्ठ ? विधिना सम्यगुद्वहेत् ।
धनधान्यसमृद्धिं च इच्छाशक्तिं परां व्रजेत् ॥

इति श्रीप्रथमशाखीयरामकृष्णविरचिते पारस्करगृह्यसूत्रविवरणे संस्कारगणपतौ अर्कविवाहविधिः समाप्तः ॥

अत्र सङ्क्षेपतः प्रयोगः—उक्ते आदित्यवारादौ उक्तदेशे यथोक्तार्कसमीपे गत्वाऽऽचम्य प्रमाणानायम्य देशकालौ सङ्कीर्त्य मम तृतीयमानुषीविवाहजदोषाभावाय अर्कविवाहमहं करिष्ये । तदङ्गमन्वाधानं करिष्ये । अस्मिन्नन्वाहितेऽग्ना"वित्यादि आघारान्तमुक्त्वा, अत्र प्रधानम् "बृहस्पतिमग्निं वायुं सूर्यं प्रजापतिं चाज्येन शेषेण स्विष्टकृत"मित्याद्यन्वाधायाघारान्तं कृत्वा, "सङ्गोभिरित्यस्याङ्गिरा बृहस्पतिस्त्रिष्टुबर्कविवाहाङ्गभूताज्याहुतिहोमे विनियोगः । ॐसङ्गोभिराङ्गिरसो नक्षमाणो भग इवेदर्यमणन्निनाय । जने मित्रो न दम्पती अनक्ति बृहस्पते वाजया शूँरिवाजौ स्वाहा । इदं बृहस्पतये नमम । यस्मा इत्यस्य वामदेवोऽग्निस्त्रिष्टुप् विनियोगः" । स च पूर्ववत् । "ॐयस्मै त्वा काम कामाय वयं सम्राड्यजामहे । तमस्मभ्यं कामं दत्त्वाऽथेदं त्वं घृतं पिब स्वाहा । इदमग्नये नमम" । ततो व्यस्तसमस्ताभिर्व्याहृतिभिर्हुत्वा होमशेषं समापयेत् । ततः प्रदक्षिणा । प्रार्थनादि कर्मसमापनम् । इतिनारायणभट्टकृतप्रयोगः ।

अथैकोदरविवाहनिर्णयः । स्मृतिरत्न्यावस्थाम्—

एकोदरप्रसूतानामेकस्मिन्वासरे पुनः ।
विवाहं नैव कुर्वीत मण्डनोपरि मुण्डनम् ॥

संहितासारावल्याम्—

एकमातृप्रसूतानामेकस्मिन्वत्सरे यदि ।

विवाहं नैव कुर्वीत कुर्वन्ति मुनयोऽन्यथा ॥

अन्यथा मातृभेदे । तथा च गर्गः—

एकमातृजयोरेकवत्सरे पुरुषस्त्रियोः ।
न समानक्रियां कुर्यान्मातृभेदे विधीयते ॥

वत्सरपरिहाराशक्तौ षण्मासं वा परिहरेत् । तथा च वराहः—

विवाहस्त्वेकजातानां षण्मासाभ्यन्तरे यदि ।
असंशयस्त्रिभिर्वर्षैस्तत्रैका विधवा भवेत् ॥

मदनरत्नेऽपि—

एकोदरभ्रातृविवाहकृत्यं स्वसुर्न पाणिग्रहणं विधेयम् ।
षण्मासमध्ये मुनयः समूचुर्न मुण्डनं मण्डनतोऽपि कार्यम् ॥

अस्यापवादस्तत्रैव—

ऋतुत्रयस्य मध्ये चेदन्याब्दस्य प्रवेशनम् ।
तदा ह्येकोदरस्यापि विवाहस्तु प्रशस्यते ॥

संहितासारावल्याम्—

फाल्गुने चैत्रमासे तु पुत्रोद्वाहोपनायने ।
भेदादब्दस्य कुर्वन्ति नर्तुत्रयविलम्बनम् ॥

षण्मासस्यापि परिहाराशक्तौ दिनचतुष्टयं परिहरेत् । तथा च गर्गः—

पुत्रीपरिणयादूर्ध्वं यावद्दिनचतुष्टयम् ।
पुत्र्यन्तरस्य कुर्वीत नोद्वाहमिति सूरयः ॥

कपर्दिकारिकायामपि—

उद्वाह्य पुत्रीं न पिता विदध्यात्पुत्र्यन्तरस्योद्वहनं कदाऽपि ।
यावच्चतुर्थं दिनमत्र पूर्णं समाप्य चान्योद्वहनं विदध्यात् ॥

दिनचतुष्टयस्यापि परिहाराशक्तौ दिनमात्रं परिहरेत् । तथा च गर्गः—

भ्रातृयुगे स्वसृयुगे भ्रातृस्वसृयुगे तथा ।
न कुर्यान्मङ्गलं किञ्चिदेकस्मिन्मण्डपेऽहनि ॥

कपर्दिकारिकायामपि—

भ्रातृयुगे स्वसृयुगे भ्रातृस्वसृयुगे तथा ।

न कुर्यान्मङ्गलं किञ्चिदेकस्मिन्मण्डपेऽहनि ॥

दिनमात्रस्यापि परिहाराशक्तौ लग्नमात्रं परिहरेत् ।

तथा च पारिजाते स्मृत्यन्तरम्—

विवाहस्त्वेकजन्यानामेकस्मिन्नुदये कुले ।
नाशं करोत्येकवर्षे स्याद्वैका विधवा तयोः ॥

अस्यार्थः—एकजन्यानामेकस्मिन्नुदये लग्ने विवाहः एकवर्षमध्ये कुले नाशं करोति । तयोर्वा मध्ये एका विधवा भवति । लग्नस्यापि परिहाराशक्तौ मण्डपमात्रं परिहरेत् । तथा च स्मृतिरत्नावल्याम् —

भ्रातृयुगे स्वसृयुगे भ्रातृस्वसृयुगे तथा ।
एकस्मिन्मण्डपे चैव न कुर्यान्मङ्गलद्वयम् ॥

अस्यां च व्यवस्थायां प्रमाणमुक्तं ज्योतिर्विवरणे—

एकोदरयोर्द्वयोरेकदिनोद्वहने भवेन्नाशः ।
नद्यन्तर एकदिने केऽप्याहुः सङ्कटे च शुभम् ॥
न प्रतिषिद्धं लग्नं सम्प्राप्ते सङ्कटे महति ।
एकोदरसम्भवयोरेकाहे भिन्नमण्डपे काले ॥

अत्र दिनशब्दः पूर्वोक्तानां संवत्सरादीनां सर्वेषामुपलक्षणम्, सङ्कोचनिमित्तस्य सङ्कटस्य सर्वत्रापि तुल्यत्वात् । अत एव प्रवेशनिर्गमयोः षण्मासपरिहारासम्भवे वैपरीत्येनैकदिनविधानम् । तत्रैव—

ऊर्ध्वं विवाहाच्छुभदो नरस्य नारीविवाहो न ऋतुत्रयं स्यात् ।
नारीविवाहात्तदहेऽपि शस्तं नरस्य पाणिग्रहमाहुरार्याः ॥

भिन्नमातृकयोस्तु न पूर्वोक्तकालवर्जनमित्याह मेधातिथिः—

पृथङ्मातृजयोः कार्यो विवाहस्त्वेकवासरे ।
एकस्मिन्मण्डपे कार्यं पृथग्वेदिकयोस्तथा ॥
पुष्पपट्टिकयोः कार्यं दर्शनं न शिरस्थयोः ।
भगिनीभ्यामुभाभ्यां च यावत्सप्तपदी भवेत् ॥

वासरशब्दो वत्सरादीनामुपलक्षणम् । अथ यमलजातयोरपि पूर्वोक्त-

निषेधापवादः । भट्टकारिकायाम्—

एकस्मिन्वत्सरे चैकवासरे मण्डपे तथा ।
कर्तव्यं मङ्गलं स्वस्रोर्भ्रात्रोर्यमलजातयोः ॥

गार्ग्यः—

एकस्मिन्वासरे चैव कुर्याद्यमलजातयोः ।
क्षौरं चैव विवाहं च मौञ्जीबन्धनमेव च ॥

तत्रापि ज्येष्ठानुक्रमेण कार्यम् । ज्येष्ठानुक्रमस्तु गर्भोत्पत्तिक्रमेण श्रीभागवते —

प्रजापतिर्नाम तयोरकार्षी-
द्यः प्राक्स्वदेहाद्यमलौ ह्यजायत ।
तं वै हिरण्यकश्यपुं प्रविदुः प्रजातं
ततो हिरण्याक्षमसूत साऽऽग्रतः ॥

तथा च वैद्यके आत्रेयसंहितायाम्—

यदा विशेद्द्विधाभूतं बीजं पुष्पं परिक्षरत् ।
तदा भवेद्द्विधा गर्भसूतिर्वेशाविपर्ययात् ॥

तेन प्रथमं जातः कनिष्ठः । अनन्तरजातो ज्येष्ठः ।

जन्मज्येष्ठेन चाह्वानं सुब्रह्मण्येष्वपि स्मृतम् ॥

इति मनुवचनमेककोशजातयमलविषयम् । तथा च देवलः—“तदा एककोश एव युगपद्यमलजन्मे”ति ।

यस्मिञ्जातस्य यमयोः पश्यति प्रथमं मुखम् ।
सञ्जातः पितुरस्यैव तस्मिञ्ज्यैष्ठ्यं प्रतिष्ठितम् ॥

अथ द्विशोभनादिनिर्णयः । तत्र वसिष्ठः—

द्विशोभने त्वेकगृहेऽपि नेष्टे शुभं तु पश्चान्नवभिर्दिनैस्तु ।
आवश्यकं शोभनमुत्सुको वा द्वारेऽथ वाऽऽचार्यविभेदतो वा ॥

एकोदरप्रसूतानां नाग्निकार्यत्रयं भवेत् ।
भिन्नोदरप्रसूतानां नेति शातातपोऽब्रवीत् ॥

अस्यार्थः—

एकस्मिन्गृहे नवदिनमध्ये शोभनद्वयं न कार्यम् । किन्तु नवदिनानन्तरं कार्यम् । औत्सुक्येनावश्यकर्तव्ये द्वारभेदेन गृहभेदेनाचार्यभेदेन वा कार्यम् । तथैकस्मिन्गृहे सोदराणां होमवत्संस्कारत्रयं न कार्यम् । भिन्नोदरप्रसूतानान्तु न दोषः । सायणीयेऽपि—

एकस्मिन्शोभने वृत्ते द्विशुभं नैव कारयेत् ।
यदि कुर्यात्प्रमादेन तत्र स्यादशुभं ध्रुवम् ॥

कात्यायनोऽपि—न कुर्यान्मङ्गलत्रय"मिति । चौलोपनयनविवाहरूपं कार्यत्रयम् । उक्तञ्च—

आदौ चौलं तथा मौञ्जी विवाहश्च शुभप्रदः ।
मातृभेदे बुधैरुक्तो मातुरैक्ये न कर्हिचित् ॥

धर्मप्रवृत्तौ—

भिन्नोदराणामेकस्मिन्न कुर्यान्मण्डपेऽपि वा ।
समाप्य मङ्गलं चैकं पुनः कुर्याच्च नान्दिकम् ॥

अथ मण्डनमुण्डनादिनिर्णयः । तत्र गर्गः—

न मण्डनान्मुण्डनमूर्ध्वमिष्टं न पुत्रयोर्मुण्डनमेकवर्षे ।
न पुंविवाहोर्ध्वमृतुत्रयेऽपि विवाहकार्यं दुहितुश्च कुर्यात् ॥

वासिष्ठेऽपि—

न पुंविवाहोर्ध्वमृतुत्रयेऽपि विवाहकार्यं दुहितुः प्रकुर्यात् ।
न मण्डनाच्चापि हि मुण्डनञ्च गोत्रैकतायां यदि नाब्दभेदः ॥

गोत्रैकतायामिति त्रिपुरुषसापिण्ड्ये द्रष्टव्यम् । प्रवेशनिर्गमसहचरितमुण्डनमण्डनयोस्तथा दर्शनात् । तथा च मेधातिथिः—

पुरुषत्रयपर्यन्तं प्रतिकूलं स्वगोत्रिणाम् ।
प्रवेशान्निर्गमो नेष्टो न कुर्यान्मङ्गलत्रयम् ॥
कुर्वन्ति मुनयः केचिदन्यस्मिन्वासरे लघु ।
लघु वा गुरु वा कार्यं प्राप्तं नैमित्तिकं तु यत् ॥

लघुगुरुलक्षणमुक्तं ज्योतिःसागरे—

चूडाकेशान्तसीमन्तविवाहोपनयान्बुधाः ।

गुरुमङ्गलमित्याहुस्तदन्यल्लघु मङ्गलम् ॥ इति ।

प्रवेशनिर्गमलक्षणमुक्तं कात्यायनेन—

पुत्रोद्वाहः प्रवेशाख्यः कन्योद्वाहस्तु निर्गमः ।
मुण्डनं चौलमित्युक्तं व्रतोद्वाहौ तु मङ्गलम् ॥
चौलं मुण्डनमेवोक्तं वर्जयेद्वरणात्परम् ।
मौञ्जी चोभयतः कार्या यतो मौञ्जी न मुण्डनम् ॥
अभिन्ने वत्सरेऽपि स्यात्तदहस्तत्र भेदयेत् ।
अभेदेऽपि विवाहः स्यान्न कुर्यादेकमण्डपे ॥

नृसिंहप्रसादेऽपि—

न मुण्डनं स्याद्रशनानिबन्धो न चापि मोक्षो व्रतबन्धनस्य ।
वदन्ति गर्गप्रमुखा मुनीन्द्राश्चूडाकृतिं मुण्डनमेव नान्यत् ॥

नारदः—

पुत्रोद्वाहात्परं पुत्री विवाहो न ऋतुत्रये ।
न तयोर्व्रतमुद्वाहान्मण्डनादपि मुण्डनम् ॥

संहिताप्रदीपे—

ऊर्ध्वं विवाहात्तनयस्य नैव कार्यो विवाहो दुहितुः समार्धम् ।
अप्राप्य कन्यां श्वशुरालयन्तु वधूः प्रवेश्या स्वगृहं न चादौ ॥ इति ।

अथ परिवेत्रादिनिर्णयः स्मृत्यर्थसारे—

यज्ञदाराग्निहोत्रादि कुरुते योऽग्रजे स्थिते ।
परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्वजः ॥
पितृव्यपुत्रसापत्ने परदारासुतादिषु ।
विवाहाधानयज्ञादौ परिवेत्रादिदूषणम् ॥
षण्ढान्धबधिरस्तब्धजडगद्गदपङ्गुषु ।
कुब्जवामनरोगार्तशुष्काङ्गविकलादिषु ॥
स्तब्धे पुंस्त्वे च मत्ते च शयनस्थे निरिन्द्रिये ।
मूकोन्मत्तेषु सर्वेषु न दोषः परिवेदने ॥

कन्याविषयेऽपि, प्रयोगपारिजाते—

एकमातृप्रसूतानां पुत्रीणां परिवेदने ।
दोषः स्यात्सर्ववर्णेषु न दोषो भिन्नमातृषु ॥

अथ वाग्दानोत्तरं देशान्तरगमने विचारमाह कात्यायनः—

वरयित्वा तु यः कश्चित्प्रवासे पुरुषो यदा ॥
ऋत्वागमांस्त्रीनतीत्य कन्याऽन्यं वरयेत्पतिम् ॥

याज्ञवल्क्यः—

दत्तामपि हरेत्पूर्वाच्छ्रेयांश्चेद्वर आव्रजेत् ॥

वशिष्ठः—

कुलशीलविहीनस्य षण्ढादिपतितस्य च ।
अपस्मारविधर्मस्य रोगिणां वेषधारिणाम् ॥
दत्तामपि हरेत्कन्यां सगोत्रोढां तथैव च ।
बलादपहृता कन्या मन्त्रैर्यदि न संस्कृता ।
अन्यस्मै विधिवद्देया यथा कन्या तथैव सा ॥ इति ।

बलादुपलक्षणम् । अथ वाग्दानोत्तरं वरमरणे विशेषः—

अद्भिर्वाचा च दत्तायां म्रियेतोर्ध्वं वरो यदि ।
न च मन्त्रोपनीता स्यात्कुमारी पतिरेव सः ॥
अथ दोषे तु सम्प्राप्ते यावत्सप्तपदीविधेः ।
मरणादौ समुत्पन्ने देयाऽन्यस्मै न दोषभाक् ॥

हेमाद्रौ—

कलौ तु पुनरुद्वाहं वर्जयेदिति गालवः ॥

अथ प्रसङ्गात्प्रतिकूलनिर्णयः । तत्र वृद्धगार्ग्यः—

वधूवरार्थे घटिते सुनिश्चिते
वरस्य पक्षे त्वथ कन्यकायाः ।
मृतिर्यदि स्यान्मनुजस्य कस्य चित्
तदा न कार्यं खलु मङ्गलं बुधैः ॥

घटिते घटने कर्तव्यत्वे निश्चिते सतीत्यर्थः। तथा—

कृते वाङ्निश्चये पश्चान्मरणे यस्य कस्य चित्।
न तत्र मङ्गलं शस्तं नारीवैधव्यशङ्कया॥

अत्र यद्यपि यस्य कस्य चिदित्याविशेषेणोक्तन्तथापि—

वाङ्निश्चये कृते यत्र सपिण्डानां मृतिर्भवेत्।
प्रातिकूल्यं सपिण्डेषु नान्येषामिति गोभिलः॥

इति स्मरणेन सपिण्डमरणस्यैव प्रतिकूलत्वम्। अत्र वाङ्निश्चयग्रहणं मानसानिश्चयस्याप्युपलक्षणम्।

वाचया मनसा वाऽपि वरणं निश्चितं भवेत्।
कथं तत्र प्रकर्तव्यं वद सत्यवतीसुत ?॥

इति पृष्टे व्यासः—

साधु पृष्टं त्वया विप्र ! कर्तव्यं शान्तिकं नरैः।
त्रयोदशदिनादूर्ध्वं तद्भवेद्विधिपूर्वकम्॥

इति वाक्येन वाचिके मानसेऽपि वरणे शान्तिकर्मोपदेशात्। तद्विधिमाह व्यासः—

यमायेति च मन्त्रेण हवनं तिलसर्पिषोः।
प्रमाणं चायुतं तत्र कृष्णा गौर्दक्षिणा भवेत्॥
जयाहोमौ प्रकर्तव्यौ प्रीत्यै मृडगणेशयोः।
अयुतं वा तदर्धं वा शक्त्या च हवनं भवेत्॥
पूर्णाहुत्यभिषेकादि कृत्वा ब्राह्मणभोजनम्।
एवं यः कुरुते लोके पुत्रपौत्रयुतो भवेत्॥ इति।

वाग्दानानन्तरन्तु निषेधमाह माण्डव्यः—

वाग्दानानन्तरं माता पिता वाऽपि विपद्यते।
विवाहो नैव कर्तव्यः स्ववंशहितमिच्छता॥

वृद्धवशिष्ठोऽपि—

वरवध्वोः पिता माता पितृव्यश्च सहोदरः।
एतेषां प्रतिकूलं चेन्महाविघ्नप्रदं भवेत्॥

शौनकोऽपि—

पिता पितामहश्चैव माता चैव पितामही ।
पितृव्यः स्त्री सुतो भ्राता भगिनी चाविवाहिता ॥
एतैरेव विपन्नैस्तु प्रतिकूलं बुधैः स्मृतम् ।
अन्यैरपि विपन्नैस्तु केचिदूचुर्न तद्भवेत् ॥

भ्राताऽत्रैकोदर उपनीतश्च विवक्षितः । पितृव्यपुत्रस्य पृथङ्निर्देशात् ।

दम्पत्योः पितरौ भ्राता चोपनीतः सहोदरः ।

इति वाक्यान्तराच्च । उक्तस्यापि निषेधस्य कालविशेषेण व्यवस्थोक्ता । मेधातिथिः—

पितुरब्दं महाशौचं तदर्धं मातुरेव च ।
मासत्रयन्तु भार्यायास्तदर्धं भ्रातृपुत्रयोः ॥
अन्येषान्तु सपिण्डानामाशौचं माससम्मितम् ।
तदन्ते शान्तिकं कृत्वा ततो लग्नं विधीयते ॥

यत्तु ज्योतिःप्रकाशवचनम्—

प्रतिकूलोऽपि कर्तव्यो विवाहो मासतः परम् ।
शान्तिं विधाय गां दत्वा वाग्दानादि चरेत्पुनः ॥

इति तत्पित्रादिभिन्नसपिण्डमात्रप्रतिकूलविषयम् ।

प्रतिकूले सपिण्डस्य मासमेकं विवर्जयेत् ।
विवाहस्तु ततः पश्चात्तयोरेव विधीयते ॥

इति स्मृतिरत्नावल्यां मासानन्तरं विवाहविधानात् । "अन्येषान्तुसपिण्डाना"मिति वचनेन तेषां मासपरिमितमहाशौचविधानाच्च । यदपि वचनम्—

प्रतिकूले न कर्तव्यं लग्नं यावदृतुत्रयम् ।

इति तदपि मातृप्रतिकूलविषयम् । "तदर्धं मातुरेव च"त्यनेन तस्या एव ऋतुत्रयं महाऽऽशौचविधानात् । यदपि मेधातिथिवचनम्—

वाग्दानानन्तरं यस्य कुलयोः कस्य चिन्मृतिः ॥

तदा सम्वत्सरादूर्ध्वं विवाहः शुभदो भवेत् ॥

इति तत्पितृप्रतिकूलविषयम् । तस्यैव संवत्सरं महाशौचोक्तेः । तदेतत्प्रातिकूल्यं पुरुषत्रयपर्यन्तं चतुःपुरुषपर्यन्तं वा । तथा च मेधातिथिः—

पुरुषत्रयपर्यन्तं प्रतिकूलं स्वगोत्रिणाम् ।
प्रवेशान्निर्गमस्तद्वत्तथा मुण्डनमण्डने ।
प्रेतकर्माण्यनिर्वर्त्य चरेन्नाभ्युदयक्रियाम् ।
आचतुर्थं ततः पुंसि पञ्चमे शुभदं भवेत् ॥ इति ।

विशेषान्तरमाह गर्गः—

ज्वरस्योत्पादनं यस्य शुभं तस्य न कारयेत् ।
दोषनिर्गमनात्पश्चात्स्वस्थः कर्म समाचरेत् ॥
हर्म्यदाहे मृते चैव विवाहं यः करोति च ।
तयोरेकं विनश्येत मनुः स्वायम्भुवोऽब्रवीत् ॥
नान्दीमुखे कृते पश्चाद्गृहदाहो भवेद्यदि ।
पाणिग्रहो न कर्त्तव्यो नारीवैधव्यदो यतः ॥
केचिदूचुर्ग्रहस्थस्य दारुणः कस्य चिज्ज्वरः ।
तावन्मङ्गलकार्यं च न कार्यं निश्चितं बुधैः ॥ इति ।

पूर्वं "तदन्ते शान्तिकं कृत्वे"त्यनेन प्रतिकूले जाते शान्तिकं कार्यमित्युक्तम् । तद्विधानमाह शौनकः—

पुण्येऽह्नि विप्रैः कथिते कृत्वा पुण्याहवाचनम् ।
नान्दीश्राद्धे कृते पश्चाद्द्विजांश्चैव प्रपूजयेत् ॥
सौवर्णान्कारयेद्देवान्यथावयवनिर्मितान् ।
पूजयेत्प्रयत्तो देवान्क्षीरादिस्नपनं ततः ॥
श्रियं शक्तिं शिवं विष्णुं मृत्युं चैव विशेषतः ।
श्रीसूक्तेन श्रियं विष्णुमिदं विष्णुरृचेन च ॥
गौरीर्मिमायेति शिवां त्र्यम्बकेति महेश्वरम् ।
परम्मृत्योस्तु मन्त्रेण मृत्युं सम्पूजयेत्ततः ॥

शिवां शक्तिम् ।

गन्धमाल्यादिवस्त्रैश्च उपचारान्समर्पयेत् ।
अथाज्यभागपर्यन्तं कृत्वा चोल्लेखनादितः ॥
दूर्वातिलाज्यचरुभिः समिद्भिश्च शताष्टकम् ।
प्रत्येकं जुहुयात्तत्र कृत्वा पूर्णाहुतिं ततः ॥
होमान्ते दक्षिणां दद्याद्गां सवत्सां पयस्विनीम् ।
दक्षिणां च यथाशक्त्या अभिषेकं च कारयेत् ॥
शतानां पञ्च संख्यातमेकैकस्य यथाविधि ।
ब्राह्मणान्भोजयेत्पश्चात्स्वयं भुञ्जीत बन्धुभिः ॥
एवं यः कुरुते शान्तिं वंशस्तस्य विवर्धते ॥ इति ।

इयं च शान्तिः कन्यापित्रा कार्या । वरपित्रा तु—

उद्वहेद्यदि वाग्दत्तां प्रातिकूल्येऽपि यः पुमान् ।
स याति नरकं घोरं कुले वाऽप्यशुभं भवेत् ॥

इति संवर्त्तवचनेन परिणयने दोषश्रवणात् ।

अकृत्वा शान्तिकं यस्तु निषेधे सति दारुणे ।
यः करोति शुभं गर्वाद्विघ्नं तस्य पदे पदे ॥

दुर्भिक्षादावानुकूल्यप्रतीक्षा नास्ति । उक्तं च ज्योतिःसागरे—

दुर्भिक्षे राष्ट्रभङ्गेऽपि पित्रोर्वा प्राणसंशये ।
प्रौढायामपि कन्यायां नानुकूल्यं प्रतीक्षते ॥ इति ।

तथा दीर्घरोगाद्यभिभूतादिमरणे प्रातिकूल्यं नास्ति । तदुक्तं शौनकेन—

दीर्घरोगाभिभूतस्य दूरे देशे स्थितस्य च ।
उदासवर्तिनश्चैव प्रतिकूलं न विद्यते ॥

एतादृशे विषये प्रतिकूले जाते याज्ञवल्क्योक्तां शान्तिं कृत्वा विवाहादि कुर्यात् । तदुक्तं वीरमित्रोदये—

सङ्कटे समनुप्राप्ते याज्ञवल्क्येन योगिना ।
शान्तिरुक्ता गणेशस्य कृत्वा तां शुभमाचरेत् ॥

अथ पितरि मृते शुभकर्मनिषेधः । धर्मप्रवृत्तौ—

मृते ताते जनन्यां च वर्षं वर्षार्धमेव च ।
न कुर्याच्छुभकर्माणि कुलधर्मांस्तथैव च ॥

स्मृत्यन्तरे—

पितुरब्दमशौचं स्यात्षण्मासं मातुरेव च ।
मासत्रयन्तु भार्यायास्तदर्धं भ्रातृपुत्रयोः ॥
अन्येषान्तु सपिण्डानां मासमेकमुदाहृतम् ।
उक्तकालावधिर्यावत्तावन्नैव शुभक्रिया ॥
दशाहानन्तरं प्रोक्तमाशौचं यद्द्विजन्मनाम् ।
शुभार्थं एव जानीयात्कृतेऽपि हि सपिण्डने ॥
व्रतबन्धे विवाहे च न कुर्याद्भक्तिमान्सुतः ।
वर्षं वर्षार्धकं चैव कृतेऽपि हि सपिण्डने ॥
विवाहादि प्रकुर्वीत यदा महति सङ्कटे ।
सपिण्डीकरणादूर्ध्वं मासिकान्यपकर्ष्य च ॥

अथाशौचादिनिर्णयः । विवाहादावारम्भात् प्राक् सूतकादावुपस्थिते तदतीत्य शुद्धः सन्कुर्यात् । सन्निहितलग्नान्तरस्याभावे कन्यात्वस्याधार्यत्वे विष्णुराह—

अनारब्धविशुध्यर्थं कूष्माण्डैर्जुहुयाद्घृतम् ।
गां दद्यात्पञ्चगव्याशी ततः शुध्यति सूतकी ॥

तथा च वीरमित्रोदये—

सङ्कटे समनुप्राप्ते सूतके समुपागते ।
कूष्माण्डीभिर्घृतं हुत्वा गां दद्याच्च पयस्विनीम् ॥
चूडोपनयनोद्वाहप्रतिष्ठादिकमाचरेत् ॥ इति ।

कूष्माण्डैः कूष्माण्डसंज्ञकैर्मन्त्रैः "यद्देवा देवहेडन"मित्यादिभिः । आरम्भोत्तरन्तु आशौचपाते आरब्धत्वात्सद्यः शुद्धिरिति । तदुक्तं स्मृतिचन्द्रिकायां याज्ञवल्क्येन—

ऋत्विजां दीक्षितानां च यज्ञियं कर्म कुर्वताम् ।
सत्रिव्रतिब्रह्मचारिदातृब्रह्मविदां तथा ॥

दाने विवाहे यज्ञे च सङ्ग्रामे देशविप्लवे ।
आपद्यपि च कष्टायां सद्यः शौचं विधीयते ॥ इति ।

तथा—

विवाहयज्ञयोर्मध्ये अन्तरा मृतसूतके ।
पूर्वसङ्कल्पितं द्रव्यं दीयमानं न दुष्यति ॥

षट्त्रिंशन्मतेऽपि—

विवाहोत्सवयज्ञेषु चान्तरा मृतसूतके ।
परैरन्नं प्रदातव्यं भोक्तव्यं च द्विजोत्तमैः ॥

विष्णुः—

व्रतयज्ञविवाहेषु श्राद्धे होमेऽर्चने जपे ।
प्रारब्धे सूतकं न स्यादनारब्धे तु सूतकम् ॥

धर्मप्रवृत्तौ—

प्रारम्भादूर्ध्वमाशौचे विवाहः कार्य एव तु ।
व्रतादौ पूजने चैव प्रारम्भे नास्ति सूतकम् ॥

ब्राह्मे—

गृहीतमधुपर्कस्य यजमानाच्च ऋत्विजः ।
पश्चादाशौचपतिते न भवेदिति निश्चयः ॥

"मधुपर्कात्पूर्वं भवे वाऽऽशौच"मिति गादाधरे रामाण्डारभाष्ये, शुद्धिविवेकेऽप्येवमेव । आरम्भोऽत्र नान्दीश्राद्धमेव । सङ्ग्रहे—

प्रारम्भो वरणं यज्ञे सङ्कल्पो व्रतसत्रयोः ।
नान्दीश्राद्धं विवाहादौ श्राद्धे पाकपरिक्रिया ॥

यदि तु बलवत्यनुपपत्तिस्तदाऽऽशौचसम्भावनायां पूर्वमपि नान्दीमुखं कर्तव्यमित्युक्तन्तत्रैव—

भाव्यं तु सूतकं ज्ञात्वा मातॄणां पूजनं भवेत् ।
सूतकं न विशेत्तत्र मातरो यत्र पूजिताः ॥ इति ।

तस्य च कियद्दिनं पूर्वमनुष्ठानमित्यपेक्षायां तत्रैवोक्तम्—

एकविंशत्यहर्यज्ञे विवाहे दश वासराः ।

त्रिषट् चौलोपनयने नान्दीश्राद्धं पुरो दिने ॥

धर्मप्रवृत्तौ—

चौले चैवोपनयने विवाहे च महामखे ।
त्रिषड्दशैकविंशत्या प्रारम्भे नास्ति सूतकम् ॥

तथा च वीरमित्रोदये—

एकविंशत्यहर्यज्ञे विवाहे दश वासराः ।
पञ्चोपनयने चैव चौले चैव त्रिरात्रकम् ॥ इति ।

अथ वधूवरयोरन्यतरजनन्या रजोदर्शने निर्णयः । मनुः—

उद्वाहव्रतचूडासु माता यदि रजस्वला ।
तदा न तत्प्रकर्तव्यमायुःक्षयकरं यतः ॥

बृहस्पतिः—

वैधव्यं च विवाहे स्याज्जडत्वं व्रतबन्धने ।
चूडायां च शिशोर्मृत्युर्विघ्नं यात्राप्रवेशयोः ॥

कारिकानिबन्धे—

सूतकयोदक्ययोः शुद्धौ गां दद्याद्धोमपूर्विकाम् ।
प्राप्ते कर्मणि शुद्धा स्यादितरस्मिन्न शुद्ध्यति ॥
अलाभे सुमुहूर्त्तस्य रजोदोषे तु संस्थिते ।
श्रियं सम्पूज्य तत्कुर्याद्ब्रह्मत्याभयङ्करम् ॥
हैमीं माषमितां पापघ्नीं श्रीसूक्तविधिनाऽर्चयेत् ।
तद्धतुं पायसं हुत्वाऽभिषिंच्य शुभमाचरेत् ॥

अथ विवाहकाले कन्या ऋतुमती चेत्तत्राह । यज्ञपार्श्वः —

विवाहे वितते तत्र होमकाल उपस्थिते ।
कन्यामृतुमतीं दृष्ट्वा कथं कुर्वन्ति याज्ञिकाः ॥
स्थापयित्वा तु तां कन्यामर्चयित्वा यथाविधि ।
युञ्जान आहुतिं हुत्वा ततः कर्माणि योजयेत् ॥

यद्वा—

विवाहहोमे प्रक्रान्ते कन्या यदि रजस्वला ।
त्रिरात्रं दम्पती स्यातां पृथक्शय्यासनावुभौ ॥

चतुर्थेऽहनि संस्नातौ तस्मिन्नग्नौ यथाविधि ॥ इति ।

जुहुयातामिति शेषः। होममन्त्रास्तु पूर्वोक्ताः। अथ कन्यागृहे भोजननिषेधः। मदनरत्ने भाविष्यपुराणे —

अप्रजायां तु कन्यायां नाश्नीयात्तस्य वै गृहे ।
यदि भुञ्जीत मोहाद्वा पूयाशी नरकं व्रजेत् ॥

अपरार्के आदित्यपुराणे —

विष्णुं जामातरं मन्ये तस्य कोपं न कारयेत् ।
अप्रजायान्तु कन्यायान्नाश्नीयात्तस्य वै गृहे ॥
ब्रह्मदेयां न वै कन्यां दत्वाऽश्नीयात्कदाचन ।
अथ भुञ्जीत मोहाच्चेत्स पापी नरके वसेत् ॥

विधानपरिजातेऽपि —

अप्रजायान्तु कन्यायान्न भुञ्जीत कदाचन ।
दौहित्रस्य मुखं दृष्ट्वा किमर्थमनुशोचति ॥ इति ।

अप्रजायामिति विशेषणात् प्रजोत्पत्त्यनन्तरं भुक्तौ न दोष इति ध्वन्यते। अथ गर्भाधानं निरूप्यते। "तामुदुह्य यथर्तु प्रवेशन"मिति सूत्रम्। तां वधूं पूर्वोक्तविधिना उदुह्य विवाहयित्वा यथर्तु ऋतावृतौ प्रवेशनमभिगमनं कुर्यात्। तत्र बृहस्पतिः—"गर्भाधानमृतौ कुर्या"दिति। गर्भः आधीयते येन कर्मणा तद्गर्भाधानमित्यनुगतार्थं कर्मनामधेयम्।

तथा च शौनकः—

निषिक्तो यत्प्रयोगेण गर्भः सन्धार्यते स्त्रिया ।
तद्गर्भलम्भनं नाम कर्म प्रोक्तं मनीषिभिः ॥ इति ।

यस्य कर्मणः प्रयोगेणानुष्ठानेन। ऋतौ इयर्ति गर्भधारणं गच्छति इति ऋतुस्तत्र। ऋतुर्नाम नाभिकमलादुत्पन्नं शोणितं चेन्द्रकृतब्रह्महत्यायास्तृतीयोंशः। तदुक्तं वीरमित्रोदये स्मृतिमञ्जर्याम्—

देवतानां पुरोधास्तु त्वष्टा नाम द्विजोत्तमः ।
भगिनी पूर्वदेवानां तस्य भार्या तयोः सुतः ॥

विश्वरूप इति ख्यातः शिरोभिर्जायते त्रिभिः ।
एकस्मिन्सोमपानं च सुरापाणं च मध्यमे ॥
वामपार्श्वेऽन्नमद्याच्च स्वेच्छया चरते दिवि ।
देवताभ्यो हविर्भागानपिधाय ददात्यसौ ॥
अपिधाय सुरेभ्यस्तु मातुलप्रेमया सह ।
उत्पातादि विजायन्ते ह्येतद्व्यत्ययकर्मणा ॥
तस्मात्सुरपतिर्भीतः स्वराष्ट्रच्युतिशङ्कया ।
अच्छिनत्तस्य शीर्षाणि वज्रमादाय सत्वरः ॥
यत्सोमपानवदनमभवत्स कपिञ्जलः ।
अभवद्यत्सुरापाणं कलविङ्कः सशीर्षकम् ॥
यदन्नादनमास्यन्तु क्रमादासीत्स तित्तिरिः ।
ततस्तां ब्रह्महत्यां च वासवोऽञ्जलिनाऽग्रहीत् ॥
ब्रह्महत्यासमोपेतः प्रच्छन्नोऽब्दं चचार सः ।
स्वर्गे भूतानि चाक्रोशन्देवेन्द्रं ब्रह्महन्निति ॥
स धरित्रीमुपासीत पृथिवीमब्रवीद्वृषा ।
ब्रह्महत्यातृतीयांशं त्वं गृहाणेति मत्कृतम् ॥
खातात्पराभवो मा भूदितीन्द्रं प्रत्युवाच सा ।
सोऽब्रवीद्वत्सराद्वार्ग्गर्तः पूर्णो भविष्यति ॥
इन्द्राद्वरं प्रतिगृह्य हर्षयन्त्यभवद्धरा ।
तस्मात्संवत्सरादर्वाक्खातं च परिपूर्यते ॥
सेन्द्रस्य ब्रह्महत्यायास्तृतीयं भागमग्रहीत् ।
तत्पापमीरिणं भूमावभवत्स्वकृतं यतः ॥
ईरिणं न स्पृशेत्तस्माद्ब्रह्महत्यासवर्णकम् ।
ततस्तरूनुपासीत्त सोऽब्रवीद्यन्मया कृतम् ॥
भवन्तः प्रतिगृह्णन्तु ब्रह्महत्यातृतीयकम् ।
वासवं तरवोऽप्यूचुरस्माकं स्छेदनात्परम् ॥

प्रभवन्त्वङ्कुराश्चेति वरो देयस्त्वयाऽधुना ।
इन्द्रस्तथा करोमीति वृक्षाणामददद्वरम् ॥
तस्माद्वृक्षाश्च भूयांसं प्रभवन्ति लुनात्परम् ।
ब्रह्महत्यातृतीयांशं प्रत्यगृह्णन्महीरुहः ॥
सोऽभवद्रक्तनिर्यासो ब्रह्महत्यासवर्णकः ।
तस्माल्लोहितनिर्यासं न स्पृशेन्न च खादयेत् ॥
स भूयः स्त्रीसभां गत्वा ह्युपासिताऽब्रवीदिति ।
ब्रह्महत्यातृतीयांशं प्रतिगृह्णीत मत्कृतम् ॥
ता अब्रुवन्वरं शक्रमृत्वियाच्च प्रजोद्भवम् ।
वृणीष्व हे ! कामभोगमाप्रसूतेर्यथेप्सितम् ॥
ब्रह्महत्यातृतीयांशं प्रत्यगृह्णन्स्त्रियोऽपि च ।
तस्मात्स्त्रियः प्रजालाभमृतौ सुरतसङ्गमात् ॥
आप्रसूतेः प्रियैः सार्द्धं सम्भोगाः सम्भवन्ति हि ।
तथा च मलवद्वासा अभवन्योषितस्तथा ॥
नाभिमूले स्थितं पुष्पं चतुर्दलसमन्वितम् ।
तस्मिन्सर्वाश्च दधते गर्भसम्भवकारणम् ॥
अधोमुखं स्थितं स्त्रीणां तद्बाल्ये मुकुलीकृतम् ।
बाल्यात्परं वयः प्राप्ते मुकुलं विकसद्भवेत् ॥
उत्फुल्लं कुसुमं स्त्रीणां स्वभावेन स्रवेद्रजः ।
तदाप्रभृति सर्वासां मासि मासि ऋतुर्भवेत् ॥ इति ।

अथ तदुत्पत्तिकालः । तथा च सप्तर्षिमते विवाहपटले—

दशवर्षाधिका कन्या भवत्येव रजस्वला ।
बहिः पुष्पं स्फुटीभावादन्तः पुष्पं स्फुरत्यपि ॥ इति ।

बृहस्पतिरपि—

एकादशे द्वादशे वा नारीणामार्तवं भवेत् ।
वह्निदीपशिखायोगाद्भेदः कोशस्य दृश्यते ॥ इति ।

काश्यपसंहितायामपि—

वर्षद्वादशकादूर्ध्वं यदि पुष्पं बहिर्नहि ।
अन्तः पुष्पं भवत्येव पनसोदुम्बरादिवत् ॥
अतस्तत्र न कुर्वीत तत्सङ्गं बुद्धिमान्नरः ॥ इति ।

अथ प्रथमर्तौ शुभाशुभमासादिफलनिर्णयः । ज्योतिश्चन्द्रिकायाम्—

चैत्रे तु प्रथमर्तौ स्यान्नारी वैधव्यभागिनी ।
वैशाखे धनपुत्राढ्या ज्येष्ठे रोगान्विता तथा ॥
शुचौ मृतप्रजा प्रोक्ता श्रावणे धनधान्यदा ।
नभस्ये दुर्भगा क्लीबा आश्विने च तपस्विनी ॥
ऊर्ज्जे त्वायुष्मती नारी मार्गशीर्षे बहुप्रजा ।
पौषे च पुंश्चली नारी माघे पुत्रसुखान्विता ॥
फाल्गुने श्रीमती साध्वी क्रमान्मासफलं स्मृतम् ॥

अथ पक्षफलम्—

शुक्लपक्षे सुशीला स्यात्कृष्णे सा कुलटा भवेत् ।
कृष्णस्य दशमीं यावन्मध्यमं फलमादिशेत् ॥

अथ तिथिफलं गुरुः—

प्रथमायां पतिं हन्ति द्वितीयायां सुखं भवेत् ।
तृतीयायां श्रियै स्याच्च चतुर्थ्यां वृषली भवेत् ॥
पञ्चम्यां पुत्रलाभश्च षष्ठ्यां चारित्र्यविक्रिया ।
सप्तम्यां पुत्रवृद्धिः स्यादष्टम्यां सुतनाशनम् ॥
नवम्यां रुदती नित्यं दशम्यां धर्मशालिनी ।
एकादश्यां पतिस्निग्धा द्वादश्यां क्रन्दती भवेत् ॥
त्रयोदश्यां मानधना त्वपरा बहुदोषकृत् ।
पर्वण्यन्यगृहीता स्याद्विन्द्यादेवं तिथेर्वशात् ॥

अथ वारफलम्—

भानुवारे भवेद्व्याधिश्चन्द्रवारे पतिव्रता ।
बहुरोगा बहुक्लेशा पतिहीना कुजे दिने ॥

बहुपुत्रवती सौम्ये सर्वसम्पद्गुरोर्दिने ।
सौभाग्यं सुखसम्पत्तिः शुक्रवारे पतिव्रता ॥
कष्टबुद्धिर्महाव्याधिः स्वयमर्थस्य चोरिणी ।
मन्दवारे विनाशः स्यात्प्रथमर्तौ रजस्वला ॥

अथ नक्षत्रफलं गर्गसंहितायाम्—

सुभगा चैव १ दुःशीला २ वन्ध्या ३ पुत्रसमन्विता ४ ।
धर्मयुक्ता ५ व्रतघ्नी च ६ परसन्तानमोदिनी ७ ॥
सुपुत्रा ८ चैव दुष्पुत्रा ९ पितृवेश्मरता १० सदा ।
दीना ११ प्रजावती १२ चैव पुत्राढ्या १३ चित्रकारिणी १४ ॥
साध्वी १५ पतिप्रिया नित्यं १६ सुपुत्रा १७ कष्टकारिणी १८ ।
स्वकर्मनिरता १९ हिंस्रा २० पुण्या २१ पुत्रादिसंयुता २२ ॥
नित्यं धनव्ययासक्ता २३ पुत्रधान्यसमन्विता २४ ।
मूर्खा २५ चाज्ञा २६ गुणवती २७ दास्रर्क्षादेः क्रमात्फलम् ॥

अथ योगफलं नारदीये—

परिघस्य तु पूर्वार्धे व्यतीपाते च वैधृतौ ।
परिघस्य तु पूर्वार्धे षट्षड्गण्डातिगण्डयोः ॥
व्याघाते नव शूले तु नाड्यः पञ्चतुर्दर्शने ।
वैधव्यमर्थहानिं च सुतनाशमहद्भयम् ॥
तेजोहानिं समायाति सदा पुष्पवती क्रमात् ॥ इति ।

अथ राशिफलं नारदीये—

कुलीरवृषचापान्त्यनृयुक्कन्यातुलाधराः ।
राशयः शुभदा ज्ञेया नारीणां प्रथमार्त्तवे ॥

अथ लग्नफलं दैवज्ञभूषणे—

मेषे स्याद्व्यभिचाराढ्या वृषभे परदारिणी ।
मिथुने धनभोगाढ्या कर्कटे व्यभिचारिणी ॥
सिंहे तु पुत्रसंयुक्ता कन्यायां श्रीमती तथा ।
विचक्षणा तुलायान्तु वृश्चिके च पतिव्रता ॥

मकरे त्वन्नहीना तु कुम्भे निर्धनयुक्तता ।
मीने विचक्षणा लग्ने ग्रहसंस्था विवाहवत् ॥

अथ पूर्वाह्णादिफलं स्मृतिरत्ने—

शुभं चैव तु पूर्वाह्णे मध्याह्ने मध्यमं फलम् ।
अपराह्णे तु वैधव्यं पूर्वरात्रौ शुभं भवेत् ॥
मध्यरात्रौ तु मध्यं स्यात्पररात्रौ शुभान्विता ॥

अथ वस्त्रफलं गर्गसंहितायाम्—

सुभगा श्वेतवस्त्रा स्याद्दृढवस्त्रा पतिव्रता ।
क्षौमवस्त्रा क्षितीशा स्यान्नववस्त्रा सुखान्विता ॥
दुर्भगा जीर्णवस्त्रा स्याद्रोगिणी रक्तवाससा ।
नीलाम्बरधरा नारी विधवा पुष्पिता ततः ॥
मलिनाम्बरधरा नारी दरिद्रा स्याद्रजस्वला ।
वस्त्रे स्युर्विषमा रक्तबिन्दवः पुत्रमाप्नुयात् ॥
समाश्चेत्कन्यकां चेति फलं स्यात्प्रथमार्तवे ॥
संमार्जनीकाष्ठतृणाग्निशूर्पान्हस्ते दधाना कुलटा तदा स्यात् ।
तल्पोपभोगे तपसि स्थिता चेद्दृष्टं रजो भागवती तदा स्यात् ॥

अथ स्थानफलं वशिष्ठसंहितायां—

ग्रामाद्बहिः परग्रामे नारी स्याद्व्यभिचारिणी ।
पतिव्रता पतिस्थाने सुशीला गृहमध्यतः ॥
ग्राममध्ये तु वृद्धिश्च विधवा च दिगम्बरा ।
परागारे तु दुःशीला आयुष्यं जलसन्निधौ ॥
धनमध्ये तु कन्या या धनधान्यसमृद्धिदा ॥ इति ।

स्मृत्यन्तरेऽपि—

देवस्थाने पितृस्थाने निन्द्यस्थानेऽन्यवेश्मनि ।
पुष्पवत्याः फलं न स्यान्मार्गे चाण्डालवेश्मनि ॥ इति ।

अथ शोणितवर्णफलम्—

सा च शोणितसङ्काशे यद्वाऽलक्तकसन्निभे ।

पुत्रकन्याप्रसूतिः स्यान्नीले तु स्यान्मृतप्रजा ।
कर्बुरे म्रियते सा च पिङ्गले च मृतप्रजा ॥
कृष्णे तु विधवा नारी रजस्यैवं विनिर्दिशेत् ।
शोणिते बिन्दुमात्रे च स्वैरिणी चाल्पशोणिता ॥
पुरन्ध्र्यो यत्तु पश्यन्ति रजः स्त्रीणां सुखावहम् ।
विश्वस्तया तु यद्दृष्टं रजो वैधव्यदं स्मृतम् ॥
रजः पश्यति चेत्कन्या पुमान्वा तत्सुखं भवेत् ।
स्वयं दृष्टं तथा स्त्रीणामात्मघाताय कल्पते ॥
प्रथमर्त्तौ द्वितीये वा शुभाशुभनिरूपणम् ॥
प्रभूतदोषं यदि दृश्यते तत्पुष्पं तदा शान्तिककर्म कार्यम् ।
विवर्जयेदेव तदैकशय्यां यावद्रजोदर्शनमिष्टमग्रे ॥

अथ प्रथमरजोदर्शने विशेषः । तदुक्तं स्मृतिचन्द्रिकायाम्--

प्रथमर्त्तौ तु पुष्पिण्याः पतिपुत्रवती स्त्रियः ।
अक्षतैरासनं कुर्यात्तस्मिँस्तामुपवेशयेत् ॥
हरिद्रागन्धपुष्पादीन्दद्यात्ताम्बूलकं स्रजम् ।
आशिषो वाचयेयुस्ताः पतिपुत्रवती भवेत् ॥
दीपैर्निराजनं कुर्यात्सदीपे वासयेद्गृहे ।
ताः सर्वाः पूजयेत्पश्चाद्गन्धपुष्पाक्षतादिभिः ॥
लवणापूपमुद्गादि दद्यात्ताभ्यः स्वशक्तितः ।

अथ स्त्रीणां रजोदोषः प्रसङ्गतः कथ्यते-

स्त्रीणां चैव रजः प्रोक्तं कालजं दोषकृद्भवेत् ॥

बृहस्पतिः—

अर्वाक्प्रसूतेरुत्पन्नं मेदोवृध्याऽङ्गनासु यत् ।
तद्रागजमिति प्रोक्तं प्रजोद्भेदसमुद्भवम् ॥
पित्तादिदोषवैषम्यादसकृत्सम्प्रवर्तते ।
रोगजं तत्समुद्दिष्टम् ॥ इति ।
यावत्पञ्चाशदब्दानि परतो दशवत्सरात् ।

मासि मासि रजः स्त्रीणां कालजं तत्प्रचक्षते ॥
रागजं रोगजं चैवं द्रव्यजं चापि यद्भवेत् ।
अकाले यदि चेत्स्त्रीणां तद्रजो नैव दुष्यति ॥

पञ्चाशद्वर्षादूर्ध्वं नैव दोषः। अथ प्रसङ्गतो रजस्वलाधर्मा निरूप्यन्ते—

उदक्या पललं क्षौद्रं गन्धपुष्पघृतं त्यजेत् ।
अखर्वपात्रे भुञ्जीयात्तोयमञ्जलिना पिबेत् ॥
प्रसवात्स्यार्तवा नारी ग्रहाणामीक्षणं त्यजेत् ।
दिवा निद्रां च ताम्बूलं तालवृन्तादिबन्धनम् ॥

स्कन्दपुराणे—

स्त्री धर्मिणी त्रिरात्रं तु स्वमुखं नैव दर्शयेत् ।
स्ववाक्यं श्रावयेन्नापि यावत्स्नानेन शुद्ध्यति ॥

वीरमित्रोदये स्मृतिमञ्जर्याम्—

तस्मादुदक्यया सार्द्धमेकगेहे न संवसेत् ।
प्रतिग्रहं च संवादमस्या अन्नं च वर्जयेत् ॥
रजस्वला पतिं गच्छेच्चाण्डालो जायते सुतः ।
आर्तवाभिप्लुताऽस्नाताजातस्त्वप्सु मरिष्यति ॥
तैलेनाभ्यञ्जनं कुर्यात्कुष्ठरोगी प्रजायते ।
आर्तवे चेत्खनेद्भूमिमल्पायुर्जायते नरः ॥
नेत्रयोरञ्जनं कुर्यात्काणो वाऽन्धश्च जायते ।
पुष्पिणी दन्तधावी स्याज्जायते श्यावदन्तकः ॥
नखानां कृन्तनं कुर्यात्कुनखी जायते सुतः ।
ऋतौ रज्वादिकच्छेदं कुर्यात्क्लीबः प्रजायते ॥
तन्तूनां सृजते रज्जुमुद्बन्धनमृतो भवेत् ।
पर्णपात्रेऽन्नमश्नीयादुन्मादी जायते सुतः ॥
खर्वे शरावे भुञ्जीयाद्वामनो वा प्रजायते ।

अङ्गिराः—

हस्तेऽश्नीयान्मृण्मये वा हविर्भुक्क्षितिशायिनी ।
रजस्वला चतुर्थेऽह्नि स्नात्वा शुद्धिमवाप्नुयात् ॥

सुस्नाता भर्तृवदनमीक्षेन्नान्यस्य च कचित् ।
अथवा मनसि ध्यात्वा पतिं भानुं विलोकयेत् ॥
ऋतुस्नाता तु या नारी यं स्नेहान्नरमीक्षते ।
तादृशं जनयेद्गर्भं पतिरेव निरीक्षयेत् ॥ इति ।

याज्ञवल्क्यः—

रजःस्रावे तु नारीणां रजोदोषो दिनत्रयम् ।
चतुर्थे दिवसे स्नात्वा स्पर्शनादावनिन्दिता ॥
शुद्धा भर्तुश्चतुर्थेऽह्नि स्नानेन स्त्री रजस्वला ।
दैवे कर्मणि पित्र्ये च पञ्चमेऽहनि शुध्यति ॥

स्नानानन्तरमकालरजोदर्शने निर्णयमाह । तत्र वीरमित्रोदये अङ्गिराः—

आद्वादशाहं नारीणां मूत्रवच्छौचमिष्यते ।
आऽष्टादशाहात्स्नानं स्यात्त्रिरात्रं परतोऽशुचिः ॥

हारितोऽपि—

रजस्वला यदा स्नाता पुनरेव रजस्वला ।
अष्टादशदिनादर्वागशुचित्वं न विद्यते ॥
एकोनविंशतेरर्वागेकाहं स्यात्ततो द्व्यहम् ।
विंशत्प्रभृत्युत्तरेषु त्रिरात्रमशुचिर्भवेत् ॥ इति ।

इदन्तु गतयौवनाविषयम् । तथा च कश्यपः—

ऋतुस्नाता तु याऽप्रौढा पुनरेव रजस्वला ।
स्नानात्सप्तदशाहे तु शौचेनैव शुचिर्भवेत् ॥
अष्टादशाहे त्वेकाहं द्व्यहमेकोनविंशतौ ।
विंशत्प्रभृत्युत्तरेषु त्रिरात्रमशुचिर्भवेत् ॥ इति ।

अप्रौढाऽगतयौवना । यत्तु—

चतुर्दशदिनादर्वागशुचित्वं न विद्यते ।

इति तत्स्नानप्रभृतीति न विरोधः । युवत्यास्तु विशेषमाह कश्यपः—

त्रयोदशदिनादूर्ध्वं रजो दृष्टवती यदि ।
अष्टादशाहात्प्राग्वाऽपि युवत्याः स्यात्त्रिरात्रकम् ॥

एकादशाहे त्वेकाहं त्रिरात्रं द्वादशेऽहनि ।
ऊर्ध्वं त्रिरात्रं विज्ञेयमिति कुण्डलिनोदितम् ॥

धर्मप्रवृत्तौ—

ऋतुकाले व्यतीते तु यदि नारी रजस्वला ।
तत्र स्नानेन शुद्धिः स्यादष्टादशदिनात्पुरा ॥
दिनाच्चेत्षोडशादर्वाङ्नारी या चातियौवना ।
पुना रजस्वलाऽपि स्याच्छुद्धा स्नानेन केचन ॥
रात्रेः कुर्यात्त्रिभागन्तु द्वौ भागौ पूर्ववासरे ।
ऋतौ सूते मृते चैव ज्ञेयोऽन्त्यांशः परेऽहनि ॥

अन्यः पक्षः—

रात्रावेव समुत्पन्ने मृते रजसि सूतके ।
पूर्वमेव दिनं ग्राह्यं यावन्नोदयते रविः ॥

इति कश्चिद्देशाचारः, न तु सर्वत्र । अथ नैमित्तिकस्नानविधिं चाह पराशरः—

स्नाने नैमित्तिके प्राप्ते नारी यदि रजस्वला ।
पात्रान्तरिततोयेन स्नानं कृत्वा व्रतं चरेत् ॥
सिक्तगात्रा भवेदद्भिः साङ्गोपाङ्गा कथञ्चन ।
न वस्त्रपीडनं कुर्यान्नान्यद्वासश्च धारयेत् ॥

अथातुरर्तुमतीस्नाननिर्णयः । तत्र देवलः—

आतुरा चेदृतुमती तस्याः स्नानं कथं भवेत् ।
स्पृष्ट्वा तु तां परा स्नायाद्दशकृत्वो ह्यनातुरा ॥
वासोभिर्दशभिश्चैव परिधाप्य यथाक्रमम् ।
ब्राह्मणान्भोजयित्वाऽथ पुण्याहेन विशुध्यति ॥
आतुराणां तु सर्वेषामेवं शुद्धिर्विधीयते ।

इति पराशरोऽपि । अत्रिः—

आतुरस्नान उत्पन्ने दशकृत्वो ह्यनातुरः ।
स्पृष्ट्वा स्पृष्ट्वाऽवगाहेत स विशुद्ध्येत आतुरः ॥

अथोदक्ययोरन्योन्यस्पर्शे निर्णयः । स्मृतिमञ्जर्याम्—

**उदक्ये द्वे सगोत्रे वा सवर्णे चैकभर्तृके ।**
**तयोः स्नानं मिथः स्पर्शे पञ्चगव्यं ततः पिबेत् ॥**

सवर्णयोः सपत्न्योः सवर्णयोः सगोत्रयोर्वा मिथः स्पर्शे सद्यः स्नानं शुद्ध्यनन्तरं पञ्चगव्यप्राशनं प्रायश्चित्तमित्यर्थः । इदन्तु सहशयनादि-स्पर्शविषयम् । यत्तु—

**स्पृष्टे रजस्वलेऽन्योन्यं सगोत्रे त्वेकभर्तृके ।**
**कामादकामतो वाऽपि सद्यः स्नानेन शुध्यतः ॥**

इति वृद्धवशिष्ठवचनं तत्सकृत्स्पर्शविषयम् । तुशब्दो वाऽर्थः । सवर्णे इत्युभयविशेषणमुन्नेयम्, मूलवाक्ये तथा दर्शनात् । इदानीं सवर्णयोः सगोत्रयोः सोदरयोर्भगिन्योः कामाकामाभ्यां मिथः स्पर्शे शुद्धिमाह—

**सवर्णयोनिसम्बद्धे सगोत्रे च रजस्वले ।**
**मिथः स्पृशेदमत्या तु स्नानमात्रेण शुध्यति ॥**
**मत्यैकरात्रं नाश्नीयात्पञ्चगव्यं पिबेत्ततः ।**

वर्णश्च योनिश्च वर्णयोनी तयोः संबद्धे । यत्तु—

**उदक्या तु सवर्णा या स्पृष्टा चेत्स्यादुदक्यया ।**
**तस्मिन्नेवाहनि स्नाता शुद्धिमाप्नोत्यसंशयम् ॥**

इति मार्कण्डेयवाक्यम्, यच्च—

**रजस्वला तु संस्पृष्टा ब्राह्मण्या ब्राह्मणी यदि ।**
**एकरात्रं निराहारा पञ्चगव्येन शुध्यति ॥**

इति कश्यपवाक्यं तदुभयमपि मूलोक्तविषय एव कामाकामाभ्यां यथा-यथं योज्यम् । इदानीं भर्तृयोनिगोत्रासम्बद्धसवर्णयोः स्पर्शे प्रायश्चित्तं सपादश्लोकेनाह—

**उदक्ययोर्यदाऽन्योन्यमसम्बद्धसवर्णयोः ।**
**स्पृशेदमत्या स्नात्वा च तस्मिन्नाद्याच्छुचिर्भवेत् ॥**
**मत्या तु नाद्यादा शुद्धेः । इति ॥**

आशुद्धेः स्पर्शादिनमारभ्य शुद्धिदिनपर्यन्तमित्यर्थः । निषेधातिक्रमणे युवत्याः शुद्धिमाह—"शुद्धा चेत्प्रतिवासरं उपोषणं तदे"ति । स्पर्शानन्तरं यावद्दिनं भुङ्क्ते तावद्दिनं शुद्ध्यनन्तरमुपवासः कर्तव्य इत्यर्थः । उपवासाशक्तायाः पक्षान्तरमाह, केचिदाहुस्तद्दिनसंख्यया—

उपवासे त्वशक्ता चेत्तत्समं दानमाचरेत् ॥

यावद्दिनं भुङ्क्ते तावदिनसंख्याकं ब्राह्मणभोजनपर्याप्तमन्नं दद्यादित्यर्थः, प्राजापत्यप्रत्याम्नाये तथा दर्शनात् । एवं सम्बद्धासम्बद्धसवर्णयोः शुद्धिमभिधायेदानीमसम्बद्धब्राह्मण्योर्विशेषशुद्धिमाह—

सम्भाषेतां स्पृशेतां वा ब्राह्मण्यौ च रजस्वले ।
आस्नानकालान्नाश्नीतामुभे मत्या मिथः क्वचित् ॥
स्नात्वोपवासं कुर्यातां पञ्चगव्येन शुद्ध्यतः ॥

आस्नानकालात्स्पर्शादिनमारभ्य यावच्छुध्यनशनमन्ते त्रिरात्रोपवासश्च तथा च पराशरः—

स्पृष्ट्वा रजस्वलाऽन्योन्यं ब्राह्मणीं ब्राह्मणी तथा ।
तावत्तिष्ठेन्निराहारा त्रिरात्रेणैव शुध्यति ॥ इति ।

एवकारः पञ्चगव्याशनव्यावृत्त्यर्थः । क्वचिदमत्या स्नानानन्तरमुपवासः पञ्चगव्यपानं चेत्यर्थः । इदानीमुक्तविषयेष्वत्यन्ताभ्यासे प्रायश्चित्तमाह—

एवमभ्यासतश्चाब्दं प्रायश्चित्तं समाचरेत् ॥ इति ।

अथासवर्णासवर्णयोः स्पर्शे निर्णयः । तथा च पराशरः—

स्पृष्ट्वा रजस्वलाऽन्योन्यं ब्राह्मणी क्षत्रिया तथा ।
अर्द्धकृच्छ्रं चरेत्पूर्वा पादमेकं त्वनन्तरा ॥
स्पृष्ट्वा रजस्वलान्योन्यं ब्राह्मणी वैश्यजा तथा ।
पादहीनं चरेत्पूर्वा पादमेकमनन्तरा ॥
स्पृष्ट्वा रजस्वलाऽन्योन्यं ब्राह्मणी शूद्रजा तथा ।
कृच्छ्रेण शुद्ध्यते पूर्वा शूद्रा दानेन शुध्यति ॥

दानं पादकृच्छ्रप्रत्याम्नायभूतनिष्कचतुर्थांशमानम् । अत्र क्षत्रिया-

दीनां वैश्यादिस्पर्शने निर्णयः । तत्र वृद्धवशिष्ठः —

स्पृष्ट्वा रजस्वलाऽन्योन्यं क्षत्रिया शूद्रजाऽपि वा ।
उपवासैस्त्रिभिः पूर्वा त्वहोरात्रेण चोत्तरा ॥
स्पृष्ट्वा रजस्वलाऽन्योन्यं वैश्या शूद्रा तथैव च ।
त्रिरात्राच्छुध्यते पूर्वा उत्तरा तु दिनत्रयात् ॥

इदं च त्रिरात्राहोरात्रादिकं स्नानानन्तरमेव द्रष्टव्यम्, न तु स्नानात्प्राक् । नैमित्तिकोपवासैर्गतार्थम् । एतच्च सर्वं कामतः स्पर्शे ।

वर्णानां कामतः स्पर्शे विधिरेषः सनातनः ॥

इति वशिष्ठवाक्यविशेषात् । अकामतो वृद्धविष्णूक्तम्—

"रजस्वला हीनवर्णा रजस्वलां स्पृष्ट्वा न तावदश्नीयाद्याव-च्छूद्रा स्यात्सवर्णामधिकवर्णां स्पृष्ट्वा सद्यः स्नात्वा शुध्यति" ।

अथ रजस्वलायाश्चण्डालादिस्पर्शे निर्णयः । तत्र वृद्धवाशिष्ठः—

पतितान्त्यश्वपाकेन संस्पृष्टा चेद्रजस्वला ।
तान्यहानि व्यतिक्रम्य प्रायश्चित्तं समाचरेत् ॥

परतश्चतुर्थेऽह्नि स्नानात्प्रागित्यर्थः ।

शूद्रयोच्छिष्टया स्पृष्टा शुना च त्र्यहमाचरेत् ॥ इति ।

अकामतो बौधायन आह—

रजस्वला यदा स्पृष्टा चाण्डालान्त्यश्ववायसैः ।
तावत्तिष्ठेन्निराहारा यावत्कालेन शुध्यति ॥

असक्तां प्रति तु स एवाह—

रजस्वला तु संस्पृष्टा ग्रामकुक्कुटशूकरैः ।
श्वभिः स्नात्वा क्षपेत्तावद्यावच्चन्द्रस्य दर्शनम् ॥ इति ।

भोजनकाले स्पर्शे तु स एवाह—

रजस्वला तु भुञ्जाना श्वान्त्यजादीन्स्पृशेद्यदि ।
गोमूत्रयावकाहारैः षड्रात्रेण विशुद्ध्यति ॥
अशक्तौ काञ्चनं दद्याद्विप्रेभ्यो वाऽपि भोजनम् ॥ इति ।
विप्राश्चात्र व्रतरात्रिसमसङ्ख्याः षड् ग्राह्याः ।

अथाशौचमध्ये रजोदर्शने निर्णयः । मार्कण्डेयः—

मृतसूतकसम्पर्के ऋतुं दृष्ट्वा कथं भवेत् ।
नास्नानकालमश्नीयादभुक्त्वा चान्द्रायणं चरेत् ॥

मनुरपि—

अप्रायत्ये समुत्पन्ने मलवद्वाससी यदि ।
अभिषेके तु शुद्धिः स्याद्दिनत्रयमभोजनम् ॥

अप्रायत्ये सूतकाद्याशौचोत्पत्तौ । दिनत्रयमित्यवशिष्टकालोपलक्षणम् । एतच्चाबालापत्याविषयम् । बालापत्यानामशक्तानां तु सद्यःस्नानमात्रेण भोजनमिति प्राञ्चः । उच्छिष्टस्पर्शे त्वाहात्रिः—

उच्छिष्टोच्छिष्टसंस्पृष्टा कदाचित्स्त्री रजस्वला ।
कृच्छ्रेण शुद्ध्यते पूर्वा शूद्रा दानैरुपोषिता ॥ इति ।

पूर्वा ब्राह्मणी, दानं पादकृच्छ्रसमम् , अत्र ब्राह्मणीशूद्रयोः कृच्छ्रकृच्छ्रपादरूपप्रायश्चित्तमाम्नातम् । मध्यस्थयोः क्षत्रियावैश्ययोरनुक्तप्रायश्चित्तत्वेऽपि अर्थात्पादोनार्द्धकृच्छ्रौ वेदितव्यौ । तत्रैव चाण्डालरजस्वलादर्शने अव्यापस्तम्बौ—

रजस्वला तु या नारी चाण्डालं यदि पश्यति ।
उपवासव्रतं कुर्यात्प्राजापत्यं तु कामतः ॥

ऋतुगमनस्य च कालमाह याज्ञवल्क्यः—

षोडशर्तुर्निशाः स्त्रीणां तासु युग्मासु संविशेत् ।
ब्रह्मचार्येव पर्वाण्याद्याश्चतस्रश्च वर्जयेत् ॥

नाभिकमलीयशोणितप्रत्यक्षतादिनमारभ्य षोडशाहोरात्राणि गर्भधारणयोग्यः काल ऋतुर्भवति, तत्राद्याश्चतस्रो निशाः पर्वाणि वक्ष्यमाणानि अयुग्माश्च रात्रीर्वर्जयित्वा पुत्रार्थी संविशेत् । ब्रह्मचारी ऋतुगमनात्प्राक् अकृततत्संसर्गः । तथा चाश्वलायनः—

प्राग्रजोदर्शनात्पत्नीं नेयाद्गत्वा पतत्यधः ।
व्यर्थीकारेण शुक्रस्य ब्रह्महत्यामवाप्नुयात् ॥

महाभारते—

ऋतौ गच्छति यो भार्यामनृतौ नैव गच्छति ।
यावज्जीवं ब्रह्मचारी मुनिभिः परिकीर्त्तितः ॥ इति ।

अन्ये तु—

ऋतुस्नातां तु यो भार्यां सन्निधौ नोपगच्छति ।
घोरायां भ्रूणहत्यायां युज्यते नात्र संशयः ॥ इति ।

निशाशब्दग्रहणाद्दिवानिषेधः । तथा चोक्तं कात्यायनपरिशिष्टे —

"तस्मिन्प्रजायाः सम्भवकाले निशायां कुर्याद्यदि दिवा मैथुनं व्रजेत्क्लीबा अल्पवीर्या अल्पायुषाश्च प्रसूयन्ते तस्मादेतद्वर्जयेत्प्रजाकामः श्रुतिस्मृतिविरोधाभ्या"-मित्यनेन दिवा गमननिषेध इति, तन्न । व्यासः—

अनृतावृतुकाले वा दिवा रात्रावथापि वा ।
प्रोषितस्तु स्त्रियं गच्छेत्प्रायश्चित्ती भवेन्न च ॥ इति ।

युग्मास्वपि रात्रिषु पुत्रोत्पत्तौ उत्तरोत्तरा एव रात्रयः प्रशस्ताः । व्यासः—

रात्रौ चतुर्थ्यां पुत्रः स्यादल्पायुर्धनवर्जितः ।
पञ्चम्यां पुत्रिणी नारी षष्ठ्यां पुत्रस्तु मध्यमः ॥
सप्तम्यामप्रजा योषिदष्टम्यामीश्वरः सुतः ।
नवम्यां सुभगा नारी दशम्यां चतुरः पुमान् ॥
एकादश्यामधर्मा स्त्री द्वादश्यां पुरुषोत्तमः ।
त्रयोदश्यां सुता तस्य वर्णसङ्करकारिणी ॥
प्रजायते चतुर्दश्यां गुणौघैर्जगतीपतिः ।
धर्मध्वजः कृतज्ञः स्यादात्मवेदी दृढव्रतः ॥
राजपत्नी महाभागा राजवंशगता तथा ।
जायते पञ्चदश्यां तु बहुपुत्रा पतिव्रता ॥
विद्यालक्षणसम्पूर्णः सत्यवादी जितेन्द्रियः ।
आश्रयः सर्वभूतानां षोडश्यां जायते पुमान् ॥

वीरमित्रोदये—

निशाषोडशकं नारी संज्ञितर्तुमती सदा ।
तावद्योग्या प्रजास्थाने विनाऽऽद्याहश्चतुष्टयम् ॥

तच्चैकस्यां रात्रौ सकृदेव कार्यम्—

सुस्थ इन्दौ सकृत्पुत्रं लक्षण्यं जनयेत्पुमान् ।

इति याज्ञवल्क्योक्तेः । इदं चर्तौ गमनमन्यकाले प्रतिबन्धादिनाऽसम्भवे श्राद्धैकादश्यादावपि कार्यम् ।

ब्रह्मचार्येव पर्वाण्याद्याश्चतस्रश्च वर्जयेत् ॥

इति याज्ञवल्क्योक्तेः । व्याख्यातं चेदं मिताक्षरायाम्——यत्र श्राद्धादौ ब्रह्मचर्यं विहितं तत्राप्यृतौ गच्छतो न ब्रह्मचर्यस्खलनदोष–इति । "आद्याश्चतस्र"ति चतुर्थदिननिषेधेऽपि—

स्नातां चतुर्थे दिवसे रात्रौ गच्छेद्विचक्षणः ॥

इति भारतोक्तेर्गन्तव्यम् । तत्र प्रतिषिद्धदिनान्याह—

गण्डान्तन्त्रिविधन्त्यजेन्निधनजन्मर्क्षे च मूलान्तकं
दास्रं पौष्णमथोपरागदिवसं पातं तथा वैधृतिम् ।
पित्रोः श्राद्धदिनं दिवा च परिघाद्यर्धं स्वपत्नीगमे
भान्युत्पातहतानि मृत्युभवनं जन्मर्क्षतः पापभम् ॥
भद्राषष्ठीपर्वरिक्ताश्च सन्ध्याभौमार्कार्कीनाद्यरात्रीश्चतस्रः ।
गर्भाधानन्त्र्युत्तरेन्द्वर्कमैत्रब्राह्मस्वातीविष्णुवस्वम्बुपे सत् ॥

पर्वाणि—

चतुर्दश्यष्टमी कृष्णा अमावास्या च पूर्णिमा ।
पर्वाण्येतानि राजेन्द्र ! रविसङ्क्रान्तिरेव च ॥
केन्द्र १।४।७।१० त्रिकोणेषु १।५।९ शुभैश्च पापै-
स्त्र्यायारिगैः ३।११।६ पुंग्रहदृष्टलग्ने ।
ओजांशगेऽब्जेऽपि च युग्मराशौ
चित्राऽदितीज्याश्विषु मध्यमं तत् ॥

चन्द्रे विषमराशीनां नवांशगे सति । अपिशब्दाल्लग्नेऽपि विषमांशगे

युग्मराशौ समराशौ गर्भाधानं न कार्यम्।

अत्यन्तनिषिद्धानि नक्षत्राण्याह वीरमित्रोदये—

पित्र्यं पौष्ण नैर्ऋतं चापि धिष्ण्यं त्यक्त्वा नारीं सुप्रसन्नः प्रसन्नाम्।
पुष्टः क्षामां पुत्रकामो हि गच्छन्सल्लक्षण्यं पुत्रमाप्नोति धीमान्॥

एतत्त्रितयपरित्यागे निमित्तमुक्तं विष्णुपुराणे—

यस्मिन्नृक्षे भवेद्गर्भस्तस्माद्दशमम्भवेत्।
तत्रापत्यं प्रजायेत तस्मादेतत्त्रयं त्यजेत्॥

स्त्रिया रूक्षादि लघु भोजनं कर्तव्यम्। पुरुषेण च तुष्ट्यर्थं स्निग्धं भक्षणीयम्। तथा च बृहस्पतिः—

स्त्रियाः शुक्रेऽधिके स्त्री स्यात्पुमान्पुंसोऽधिके भवेत्।
तस्माच्छुक्रविवृद्ध्यर्थं वृष्यं स्निग्धं च भक्षयेत्॥
लघ्वाहारां स्त्रियं कुर्यादेवं सञ्जनयेत्सुतम्॥ इति।

वृष्यं वीर्यवृद्धिकरं द्रव्यम्। मनुरपि—

पुमान्पुंसोऽधिके शुक्रे स्त्री भवत्यधिके स्त्रियः।
समे नपुंसकं ज्ञेयं पुंस्त्रियोर्वाऽन्ययोगतः॥

शुक्रं रेतः पुरुषस्य स्त्रियाः शोणितम्। "शुक्रशोणितसम्भवः पुरुष" इति वशिष्ठोक्तेः। रेणुकारिकायाम्—

यदि संयोगकाले तु पुरुषो रागमोहितः।
द्विधा समुत्सृजेच्छुक्रं यमलं तत्र जायते॥
निःसारेऽल्पे च शुक्रे स्यान्न गर्भो मनुवाग्यतः।
तस्माच्छुक्रविवृद्ध्यर्थं वृष्यं स्निग्धं च सेवयेत्॥
षष्टिशाल्योदनं साज्यं माषसूपसमन्वितम्।
तत्पिबेदग्निशक्त्यैव वीर्यवर्धनमुच्यते॥
रसैर्विदारिकाचूर्णं सप्तधा भावितं स्वकैः।
शर्कराक्षीरसंयुक्तं पिबेत्तद्वृष्यमुत्तमम्॥
चूर्णमामलकानां वा स्वरसैर्भावितन्तथा।

मध्वाज्यशर्करायुक्तमाग्निशक्त्या पयः पिबेत् ॥
पयसा वानरीमूलं बीजं वा वप्यमुच्यते ॥

धर्मप्रवृत्तौ—

गर्भाधानाङ्गभूतं यत्कर्म कुर्यादिवैव हि ।
रात्रौ कुर्याद्विधानेन गर्भबीजस्य रोपणम् ॥
मूत्रादिकं ततः कृत्वा योनिं प्रक्षालयेज्जलैः ।
पूर्वरात्रे व्यतीते तु सङ्गच्छेद्रतिमन्दिरम् ॥
पादौ प्रक्षालयेत्पूर्वं पश्चाच्छय्यां समाविशेत् ।
सा नारी सुखमाप्नोति न भवेद्दुःखभागिनी ॥
उपानहौ वेणुदण्डमम्बुपात्रं तथैवच ।
ताम्बूलादीनि सर्वाणि समीपे स्थापयेद्गृही ॥
कुङ्कुमं चाञ्जनं चैव तथा हारिद्रासिन्दुरम् ।
धौतवस्त्रं च ताम्बूलं संयोगे च शुभावहम् ॥
स्वपेत्स्त्री प्राक्शिरः कृत्वा प्रत्यक्पादौ प्रसारयेत् ।
ताम्बूलचर्वणं कुर्यात्सकामो भार्यया सह ।
ताम्बूलेन मुखं पूर्णं कुङ्कुमादिसमन्वितम् ॥
प्रतिमाढादिकैर्युक्तं कृत्वा संयोगमाचरेत् ।
विना ताम्बूलवदनां नग्नामाक्रान्तरोगिणीम् ॥
दुर्मुखीं च क्षुधा युक्तां संयोगे च परित्यजेत् ॥

धर्मप्रवृत्तौ स्मृत्यन्तरे—

चन्दनं चानुलिप्याङ्गे धृत्वा पुष्पाणि दम्पती ।
ताम्बूलचर्वणं कृत्वा प्रदीपे मैथुनं चरेत् ॥
दीपे नष्टे तु यः सङ्गं करोति मनुजो यदि ।
यावज्जन्म दारिद्रत्वं जायते नात्र संशयः ॥
पादलग्नतनुश्चैव द्व्युच्छिष्टं ताडनं तथा ।
कोपं रोषं च निर्भर्त्स्यं संयोगे च न कर्मभाक् ॥
भुक्तवानुपविष्टस्तु शय्यायामभि सम्मुखः ।

संस्मृत्य परमात्मानं पत्न्या जङ्घे प्रसारयेत् ॥
अलोमशां च सुदृढामनार्द्रां सुमनोहराम् ।
योनिं स्पृष्ट्वा जपेत्सूक्तं विष्णुर्योनिं प्रजापते ॥
योनिं पश्येज्जपेन्मन्त्रं वसुनीते पुनात्विति ।
मत्सदृशो भवेत्पुत्र इति मत्वा स्मरेद्धरिम् ॥

तथा च कात्यायनपरिशिष्टम् "दक्षिणेन पाणिनोभावूरू प्रसार्य प्रजास्थानमभिस्पृशन्जपति पूषा भगꣳसविता मे ददातु रुद्रः कल्पयतु ललामगुं विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिꣳशतु । आसिञ्चतु प्रजापतिर्धाता गर्भन्दधातु ते । गर्भन्धेहि सिनीवालि ! गर्भन्धेहि पृथुष्टुके । गर्भन्ते अश्विनौ देवावाधत्तां पुष्करस्रजाविति तेजो वैश्वानरो दद्यादथ ब्रह्माणमामन्त्रयते ब्रह्मा गर्भन्दधात्विति प्राङ्मुखोदङ्मुखो वोपाविष्टो मन्थेद्व्रतो मूत्रमिति चैके स्रावणं कुर्यात्" इति । धर्मप्रवृत्तौ—

ओष्ठाविसर्जयेन्मन्त्रेणान्योन्यमवलोकयेत् ।
स्तनौ धृत्वा तु पाणिभ्यामन्योन्यं चुम्बयेन्मुखम् ॥
बलन्धेहीतिमन्त्रेण योन्यां शिश्नं प्रवेशयेत् ।
योनेस्तु किञ्चिदधिको भवेल्लिङ्गो बलान्वितः ॥
सन्तुष्टो भार्यया भर्ता भर्त्रा भार्या तथैव च ।
यस्मिन्नेतत् कुले नित्यं कल्याणं तत्र वै ध्रुवम् ॥
सम्भागं चैव भार्यायाः सुदृढं स्थिरवीर्यवान् ।
स्कन्धौ वाऽथ कटिं धृत्वा यथेष्टं मैथुनं चरेत् ॥
इच्छापूर्णं भवेद्यावदुभयोः कामयुक्तयोः ।
रेतः सिञ्चेत्ततो योन्यां तस्माद्गर्भं बिभर्त्ति सा ॥
ऋतुकालोपगामी यः प्राप्नोति परमां गतिम् ।
सत्कुले प्रभवेत्पुत्रः पितॄणां स्वर्गदो भवेत् ॥

अथ स्त्रीणां बहुत्वे ऋतौ यौगपद्ये च गमनक्रममाह देवलः—

यौगपद्ये तु तीर्थानां विप्रादिक्रमशो व्रजेत् ।

रक्षणार्थमपुत्राणां ग्रहणक्रमशोऽपि वा ॥ इति ।

तीर्थमृतुः । विप्रादिक्रमो वर्णक्रमः । ग्रहणक्रमो विवाहक्रमः । अगमने दोषमाह पराशरः—

ऋतुस्नातान्तु यो भार्यां सन्निधौ नोपगच्छति ।
घोरायां भ्रूणहत्यायां पितृभिः सह मज्जति ॥

अस्यापवादमाह मदनरत्ने—

व्याधितो बन्धनस्थो वा प्रवासेष्वथ पर्वसु ।
ऋतुकालेऽपि नारीणां भ्रूणहत्या प्रमुच्यते ॥
वृद्धां वन्ध्यामसंवृत्तां मृतामत्यामपुष्पिणीम् ।
कन्यां च बहुपुत्रां च वर्जयेन्मुच्यते भयात् ॥

स्त्रीणामपि ऋतुकाले रागद्वेषादिना पुरुषं प्रत्यगमने दोषमाह पराशरः-

ऋतुस्नाता तु या नारी पतिं नैवोपगच्छति ।
शुनी वृकी शृगाली च शूकरी च पुनः पुनः ॥
कामयज्ञमिति प्राहुर्गृहिणामेव सर्वदा ।
अनेन लभते पुत्रं संसारार्णवतारकम् ॥
तावुभावशुची स्यातां दम्पती मिथुनं गतौ ॥

वृद्धशातातपः—

शयनादुत्थिता नारी शुचिः स्यादशुचिः पुमान् ॥

"अथास्यै दक्षिणाꣳसमधि हृदयमालभते यत्ते सुशीमे हृदयं दिवि चन्द्रमसि श्रितम् । वेदाहन्तन्मान्तद्विद्यात्पश्येम शरदः शतꣳ जीवेम शरदः शतꣳ शृणुयाम शरदः शतमिति" इति सूत्रम् । अथ मैथुनोत्तरं अस्या भार्यायाः दक्षिणांसं दक्षिणस्कन्धं अधि उपरि स्वहस्तं नीत्वा तेनैव हस्तेन हृदयमालभते स्पृशति । "यत्ते सुशीम" इति मन्त्रेण । अत्र कर्कभाष्यम्—हृदयालम्भश्चाभिगमनोत्तरकालीनः, प्राक्कालीन इत्यपरे अप्रयतत्वादिति । नैतदिति जयरामः, यतो गर्भसम्भावनायां तदुपयुज्यते । प्रयतत्वं च शौचादिनाऽपि स्यादेव । याज्ञवल्क्यः—

ऋतौ तु गर्भशङ्कित्वात्स्नानं मैथुनिनः स्मृतम् ।

अनृतौ तु यदा गच्छेच्छौचं मूत्रपुरीषवत् ॥ इति ।

अभिगमनानन्तरमनाचान्त एव दक्षिणांऽसमधि हृदयमालभत इति भर्तृयज्ञः । मन्त्रार्थः—शोभना सीमा मूर्ध्नि केशमध्ये पद्धतिर्यस्याः सा तस्याः सम्बोधनं हे सुशीमे शोभनसीमन्तिनि ! यत्त तव हृदयं मनो दिवि स्वर्गे वर्तमाने चन्द्रमसि श्रितं तदधीनतया स्थितं तदहं वेद जानीयाम् । तच्च मां विद्यात् जानातु । एवं परस्परानुगुणितहृदया अपत्यादिसहिता वयं शरदः शतमित्याद्युक्तार्थम् । "एवमत ऊर्ध्व"मिति सूत्रम् । प्रथमर्तौ यथा हृदयालम्भः कृत एवमनेन प्रकारेण अतोऽनन्तरं ऊर्ध्वं ऋतौ हृदयालम्भः कार्यः । हरिहरगदाधरव्याख्या चैवम् । एवमनेन प्रकारेण अतोऽनन्तरं ऋतौ ऋतौ प्रवेशनम् । यथाकामं वेति ॥

**इति श्रीप्रथमशाखीयरामकृष्णविरचिते पारस्करगृह्यसूत्रविवरणे संस्कारगणपतौ प्रथमकाण्डे एकादशी कण्डिका ॥**

---

### अथास्य स्पष्टप्रयोगः ।

तत्र भार्या चेद्रजःस्नाता तदा आद्यं दिनचतुष्टयं मघामूलरेवतीपर्वपञ्चकमन्यानि ज्योतिःशास्त्रनिर्दिष्टानि विरुद्धतिथिवारादीनि च वर्जयित्वा सुलग्ने प्रसन्नां भार्यामभिगच्छेत् । तत्रादौ रजोदर्शनशान्तिप्रयोगः । रजोदर्शनानन्तरं पञ्चमदिने चन्द्रताराद्यानुकूल्ये शुचिदेशे सुस्नातया पत्न्या युतः पतिः प्राङ्मुख उपविश्य प्राणानायम्य देशकालौ सङ्कीर्त्य "मम पत्न्याः प्रथमरजोदर्शनेऽमुकदुष्टमासादिसूचितसकलारिष्टनिरसनद्वारा श्रीपरमेश्वरप्रीत्यर्थं सग्रहमखां शौनकोक्तां शान्तिं करिष्ये ।" इति सङ्कल्प्य गणेशपूजनपुण्याहवाचनगौर्यादिषोडशमातृकापूजनब्राह्म्यादिसप्तमातृकापूजननान्दीश्राद्धानि कृत्वा शान्तं दान्तं कुटुम्बिनं मन्त्रतन्त्रज्ञमाचार्यं ब्रह्माणं च जपहोमार्थमष्टौ षट् चतुरो वा ऋत्विजोऽपि वृत्वा गन्धादिना पूजयेत् । तत आचार्यः प्राणानायम्य देशकालौ सङ्कीर्त्य अमुककर्माङ्गत्वेन यजमानवृतोऽहं आचार्यकर्म करिष्ये" इति सङ्कल्प्य

गौरसर्षपान्विकिरेत्। तत्र मन्त्राः "ॐ रक्षोहणं वलगहनं" इति "यदत्र संस्थितं भूत"मित्यादिमन्त्रैः। "ॐ आपोहिष्ठे"त्यादिमन्त्रैः कुशैः पञ्चगव्येन भूमेः प्रोक्षणं कार्यम्। गृहेशानदेशे शुचौ "महीद्यौ"रित्यादिमन्त्रैः कुम्भत्रयं मन्त्रावृत्त्या स्थापयेत्। एवं सर्वत्र मन्त्रावृत्तिः। मध्यकुम्भे विशेषः। यवव्रीहितिलमाषश्यामाकमुद्गाः, तत्रैव गायत्र्या उदुम्बरम्, कुशदूर्वारक्तोत्पलं चम्पकं बिल्वं विष्णुक्रान्ततुलसीबर्हिषः शङ्खपुष्पीशतावर्यश्वगन्धानिर्गुण्डीरक्तपीतसर्षपान्, अपामार्गपलाशपनसजीरकप्रियङ्गुगोधूमान्, अश्वत्थदुग्धदधिघृतपद्मपत्रनीलोत्पलसितरक्तपीतकुरण्टकगुञ्जावचामद्रकामुस्तकान्, इति द्वात्रिंशदोषधानि यथासम्भवानि वा क्षिपेत्। ततः कलशोपरि क्रमेण सौवर्णं राजतं ताम्रमयं कांस्यमयं वैणवं मृण्मयं वा यवादिपूरितं पात्रत्रयं "पूर्णा दर्वी"ति निधाय तदुपरि श्वेतवस्त्रत्रयं न्यस्य तत्र चन्दनादिनाऽष्टदलानि कुर्यात्। तत्र मध्ये "गायत्र्या" भुवनेश्वरीमावाह्य यथाशक्तिसुवर्णनिर्मितां भुवनेश्वरीप्रतिमामग्न्युत्तारणपूर्वकं स्थापयेत्। तद्दक्षिणकुम्भोपरि "इन्द्रन्देवी"रिति इन्द्राणीप्रतिमां सुवर्णनिर्मितां स्थापयेत्। उत्तरकलशोपरि"त्रातारमिन्द्र"मिति इन्द्रप्रतिमां सुवर्णनिर्मितां स्थापयेत्। तत उक्तमन्त्रैरुक्तक्रमेण देवतात्रयस्य काण्डानुसमयेन षोडशोपचारपूजां कुर्यात्। ततो मध्यकुम्भे आचार्योऽष्टसहस्रमष्टशतं वा गायत्रीं जप्त्वा "श्रीसूक्तं" जपेत्। "हिरण्यवर्णा"मिति पञ्चदशर्चसूक्तम्। तत एक ऋत्विग्दक्षिणकुम्भे न्यासपूर्वकं रुद्रसूक्तं जपेत्। तत उत्तरकुम्भे रुद्रैकादशिनीं जपेत्। "शन्न इन्द्राग्नी"ति जपेत्। ततः कुम्भपश्चिमे देशे स्थण्डिलेऽग्निम्प्रतिष्ठाप्य परिस्तरणादि कृत्वा दुग्धेन पायसं श्रपयित्वाऽऽज्यभागान्तं कृत्वा तदीशान्यां वेद्यां विध्युक्तप्रकारेण नवग्रहपूजां कृत्वा, तदीशान्यां प्रागुदकं कुम्भं संस्थाप्य तत्र वरुणमावाह्य पूजयेत। ततः के चन वह्नेरुत्तरतस्तण्डुलानामाढकचतुष्टयपरिमाणेन राशिं कृत्वा तदुपरि हेम्नः पञ्चपलेन तदर्धेन तदर्धार्धेन वा कदलीं कृत्वा राशेरुपरि संस्थाप्य सम्पूजयेत। तत आज्यभागानन्तरं

यजमानो होमार्थं जपार्थं च बहूनृत्विजो वृत्वा यजमानस्त्यागं कुर्यात् । यथा—साक्षतं जलं गृहीत्वा "मया इदं सम्पादितं तिलाज्यादि द्रव्यं तद्यथादैवतमस्तु न मम" इति त्यागः । तत आचार्यो नवग्रहेभ्योऽष्ट-शताष्टाविंशत्यष्टान्यतमसंख्याका घृताक्ता अर्कादिसमिधस्तिलाहुतीश्च हुत्वा अधिदेवताप्रत्यधिदेवताविनायकादिपञ्चलोकपालेभ्यः यथाशक्ति जुहुयात् । तत्र केचित्सूर्यसूक्तं विष्णुसूक्तं च जपेत् । ततो भुवनेश्वर्यै "गायत्र्या" दधिमधुघृतादिभिस्तिसृभिर्दूर्वादिभिरेकाम् , एवमष्टोत्तरसहस्रमष्टोत्तरशतं दू-र्वाहुतीर्घृताक्तविलमिश्रगोधूमाहुतीः पायसाहुतीर्घृताहुतीश्च जुहुयात् । एव-मेव इन्द्राण्यै इन्द्राय च जुहुयात् । मन्त्रास्तु पूर्वोक्ताः । एवं प्रत्येकमष्टो-त्तरशतसंख्यं जुहुयात् । भुवनेश्वर्यै यदाऽष्टसहस्रं होमस्तदा इन्द्राण्यै इन्द्रा-य चाष्टशतं होम इति साम्प्रदायिकाः । ततः स्विष्टकृतादि प्रायश्चित्तहो-मान्तं कृत्वा, इन्द्रादिलोकपालेभ्यो भुवनेश्वरीन्द्राणीन्द्रेभ्यः क्षेत्रपालाय च माषभक्तबलींस्तत्तन्मन्त्रैर्दत्वा पूर्णाहुत्यन्तं सर्वं कुर्यात् । ततः प्रणीतावि-मोकं कृत्वा भुवनेश्वर्यादिकलशोदकं नवग्रहकलशोदकमेकस्मिन्पात्रान्तरे गृहीत्वा तेन तत्तत्पञ्चपल्लवैः सकुशैर्दूर्वादिभिश्च नववस्त्रपरिधानं प्राङ्मुखं यजमानं धृतनववस्त्रकञ्चुकीं भर्तृवामभागे स्थिताम्ऋतुमतीं सर्त्विगुदङ्मु-ख आचार्यस्तिष्ठन्नभिषेकं कुर्यात् । तत्र मन्त्राः । "आपो हि ष्ठे"त्यादि मन्त्रैरभिषिञ्चेदङ्गमन्त्रैश्च "सुरास्त्वे"त्यादिपौराणमन्त्रैश्च । ततो दम्पती शुक्लवस्त्रपरिधानौ अग्नेः पश्चिमे उपविश्य अग्निं सम्पूज्य, आचार्यं गन्ध-वासोऽलङ्कारादिभिः सम्पूज्य कदलीं सदक्षिणां सवस्त्रां दद्यात् । तत्र मन्त्रौ-

"सुपत्रे ? सुभगे ? देवि ? रम्भे ? भास्करवल्लभे ? ।
रक्षस्व मां रजसो दोषाद्दुष्टादस्मादगर्हिताम् ॥
दानेन तव देवेशः सविता विश्वतोमुखः ।
प्रीतो भवतु सद्यो मे दोषं हरतु दुष्करम् ॥

इत्युक्त्वा कुटुम्बिने ब्राह्मणाय दद्यात् । तत आचार्यप्रार्थना—

आचार्य ? त्वं महाभाग ? महादोषविनाशन ? ।
दानस्यास्य प्रभावेण रजोदोषाच्च पाहि माम् ॥

इति सम्प्रार्थ्य गन्धपुष्पालङ्करणैः सम्पूज्य तस्मै वंशपात्रं दद्यात् । वंशपात्रं गोधूमपुष्पफलताम्बूलताडपत्रसौभाग्यद्रव्यादियुतं "अद्ये"त्युक्त्वा "सर्वारिष्टनिवारणार्थं वंशाभिवृध्द्यर्थं रजोदोषनिवृत्त्यर्थं वंशपात्रदानमहं करिष्ये" तत्र मन्त्रः—

अरिष्टविनिवृत्त्यर्थमात्मवंशाभिवृद्धये ।
रजोदोषापनुत्त्यर्थं सौभाग्यं देहि मे सदा ॥

इति सम्प्रार्थ्य दापयेत् । तत आज्यावेक्षणम् । संकल्पं कृत्वा,

आज्यं पापहरं नित्यमाज्यं क्षीरसमुद्भवम् ।
आज्यं यज्ञसमुद्भूतमतः शान्तिं प्रयच्छ मे ॥

आज्यप्रार्थना—

याऽलक्ष्मीर्यश्च मे दोषः सर्वगात्रेषु संस्थितः ।
तत्सर्वं नाशमायातु लक्ष्मीन्तुष्टिं च वर्धय ॥

इति सम्प्रार्थ्य दद्यात् । के चन महिषीदानं चेच्छन्ति । तत्र मन्त्रः—

कालमृत्युस्वरूपां त्वां महिषीं सुविभूषिताम् ।
सालङ्कारामिमां तुभ्यं दास्यामि वरदा मम ॥

इत्युक्त्वा दद्यात् । ततो रुद्रजापिने सदक्षिणमनड्वाहं दद्यात् । तत्र मन्त्रः—

धर्मस्त्वं वृषरूपेण जगदानन्दकारकः ।
अष्टमूर्त्तेरधिष्ठानमतः शान्तिं प्रयच्छ मे ॥

इत्युक्त्वा दद्यात् । "यान्तु देवगणा" इति विसृज्य आचार्यहस्ते प्रतिमां दद्यात् । अग्निं सम्पूज्य "गच्छ गच्छ सुरश्रेष्ठे"ति विसृज्य, अस्याङ्गत्वेन नवग्रहप्रीत्यर्थं त्रीन् ब्राह्मणान् भुवनेश्वरीन्द्राणीन्द्रप्रीत्यर्थे प्रत्येकं त्रींस्त्रीन्ब्राह्मणान्सङ्कल्प्य भोजयेत् । ततो ब्राह्मणा "आनोभद्रा" इत्यादिशान्तिपाठं पठेयुः । ततस्तेभ्य आशिषो गृहीत्वा सुहृद्युक्तो भुञ्जीत । एवं कृते सर्वारिष्टशान्तिर्भवतीति ।

इति रजोदर्शनशान्तिः ॥

**अथ गर्भाधानम्।** तत्रायं क्रमः। कर्ता प्रातरभ्यङ्गस्नानं कृत्वा पत्नीमपि नवोदकुम्भसलिलैः सप्तमृत्तिकापञ्चपल्लवत्वक्सहितैः स्नापयित्वा तया सह मङ्गलवस्त्राभरणादि धृत्वा आचम्य देशकालौ स्मृत्वा "अस्याः मम भार्यायाः प्रतिगर्भसंस्कारातिशयद्वाराऽस्यां जनिष्यमाणसर्वगर्भाणां बीजगर्भसमुद्भवैनोनिर्बहणद्वारा श्रीपरमेश्वरप्रीत्यर्थं गर्भाधानाख्यं कर्माहं करिष्ये", इति सङ्कल्प्य, "तदङ्गत्वेन गणपतिपूजां पुण्याहवाचनं मातृकापूजनं वसोर्द्धारां आयुष्यमन्त्रजपं नान्दीश्राद्धं चाहं करिष्ये"। तानि कृत्वा स्निग्धमधुराहारोऽलङ्कृतोऽलङ्कृतपुष्पमालादिलेपनवात्रात्रौ साविलासं सुरतं विधाय तदनन्तरं शौचादिकं कृत्वा शुचिर्भार्यादक्षिणस्कन्धे हस्तं दत्वा हृदि संस्पृश्य जपेत्—"यत्ते सुशीमे हृदयन्दिवि चन्द्रमसि श्रितम्। वेदाहन्तन्मां तद्विद्यात्पश्येम शरदः शतं जीवेम शरदः शतꣳ शृणुयाम शरदः शत"मिति। ततः "अस्य गर्भाधानाख्यस्य कर्मणः साङ्गतासिद्ध्यर्थं स्मृत्युक्तान्दशसङ्ख्याकान्ब्राह्मणान्भोजयिष्ये"॥ गर्भाधानादीन्युपनयनान्तानि कर्माणि नियतकालान्यभिहितानि। यदि दैवात्पुरुषापराधाद्दोषाद्वा तेषां नित्यस्य कालस्यातिक्रमो भवति तदा किं कर्तव्यमिति सन्देहे निर्णयमाह "कालातिक्रमे नियतवत्"। कालातिक्रमे यस्य संस्कारकर्मणः शास्त्रेण नियमितो यः कालस्तस्यातिक्रमे लङ्घने नियतवान्नित्यवत्, नित्ये श्रौतकल्पे नित्येषु यद्विहितं तद्वत्, अनादिष्टप्रायश्चित्तं भवति। ततः कृतप्रायश्चित्तस्यातिक्रान्तकाले संस्कारकर्मण्यधिकारः सम्पद्यते। अत्र कालातिक्रमे इत्युपलक्षणम्, अतः अन्येषामपि कर्मणां नाशे इदमनादिष्टमेव। सर्वप्रायश्चित्ते गृह्यकारेण प्रायश्चित्तान्तरस्यानुपदिष्टत्वात्, किन्तु श्रौतानामतिदेशे प्राप्ते "अविज्ञाते प्रतिमहाव्याहृतिभिः सर्वाभिश्चतुर्थꣳसर्वप्रायश्चित्तं चे"त्यस्यैव "कालातिक्रमे नियतव"दित्यनेनातिदेशः कृतः। उपदेशो न कृतो गृह्यकारेण। तत्राविज्ञातमप्रत्यक्षश्रुतिमूलं किमिदमार्ग्वेदिकं याजुर्वेदिकं सामवेदिकं वेत्यनिश्चयं स्मार्तं कर्म। तस्य भ्रेषे श्रौतकल्पे व्याहृतिचतुष्टयं वारुणहोमं प्रायश्चित्तमुपदिश्यात्र गृह्यसूत्रे गृह्योक्तकर्मणामपि स्मार्तत्वात् तस्य भ्रेषे तस्यै-

वातिदेशो युक्तः, न पुनः प्रत्यक्षवेदमूलकर्मशेषोपदिष्टानाम् । तथा चाश्वलायनः—

गर्भाधानस्याकरणे तस्यां जातस्तु दुष्यति ।
अकृत्वा गां ततो दत्त्वा कुर्यात्पुंसवनं पतिः ॥

वीरमित्रोदये—

आरभ्याधानमाचौलात्कालातीते तु कर्मणाम् ।
आज्यं व्याहृतिभिर्हुत्वा प्रायश्चित्तं समाचरेत् ॥
एतच्चैकैकलोपे तु पादकृच्छ्रं समाचरेत् ।
चौलकर्मण्यतिक्रान्ते पादकृच्छ्रद्वयं चरेत् ॥

ननु अतिक्रान्तं कर्म न कर्तव्यमिति केचित् । तन्न—

प्रायश्चित्ते कृते पश्चाल्लुप्तं कर्म समाचरेत् ।

इति कात्यायनोक्तत्वात् ।

कालातीतानि कृत्वैव विदध्यादुत्तराणि तु ॥

इति मण्डनोक्तेश्च कात्यायनादियाजुषां लुप्तकर्मकरणमेव युक्तम् ।

## अथास्य स्पष्टप्रयोगः ।

देशकालौ स्मृत्वा "ममास्य कुमारस्य यथाकालं गर्भाधानाद्यकरणजनितदोषपरिहारार्थं गोमूल्यप्रत्याम्नायद्वारा लुप्तसंस्कारसंख्यपादकृच्छ्राण्याचरिष्ये" इति सङ्कल्प्य साङ्गमनङ्गं वा प्रायश्चित्तं कालान्तरे रिक्तासु तिथिषु समाप्य प्रायश्चित्तहोमं कुर्यात् । तद्यथा पञ्चभूसंस्कारपूर्वकमग्निं संस्थाप्य—

स्थाल्यामाज्यस्य निर्वापोऽधिश्रयन्स्रुवमार्जनम् ।
उद्वास्योत्पवनावेक्ष्य स्रुवेणाहुतिरेव च ॥

ताम्रादिपात्रे आज्यं निक्षिप्य अग्नावधिश्रित्य लौकिककुशैः स्रुवं सम्मृज्य उद्वास्य कुशाभ्यामुत्पूयावेक्ष्य दक्षिणं जान्वाच्य हृदि सव्यहस्तं निधाय मौनी जुहुयात् । "ॐ भूः स्वाहा । इदमग्नये नमम । ॐ भुवः स्वाहा । इदं वायवे नमम । ॐ स्वः स्वाहा । इदं सूर्याय नमम । ॐ भूर्भुवः स्वः स्वाहा । इदं प्रजापतये नमम । ॐ त्वन्नो अग्ने० इद-

मग्नीवरुणाभ्यां नमम। ॐ सत्वन्नो अग्ने० इदमग्नीवरुणाभ्यां नमम । ॐ अयाश्चाग्ने० इदमग्नये अयसे नमम। ॐ ये ते शतं० इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यश्च नमम । ॐ उदुत्तमं० इदं वरुणाय नमम" । इति नवाहुतिं हुत्वा विष्णुस्मरणम् । इति अनादिष्टप्रायश्चित्तहोमः। अथानन्तरं संस्कारकर्मकरणम् । अथ गर्भाधानादौ कर्तृनिर्णयः । तत्र वीरमित्रोदये देवलः—

ऋतुकालेऽभिगमनं भर्त्रा कार्यं प्रयत्नतः ।
पुंसवादीनि कर्माणि बान्धवैर्वापि कारयेत् ॥ इति ।

अत्र भर्त्रेति कर्तृनियमादसन्निधाने अशक्तौ वाऽन्यः प्रतिनिधिर्नास्तीति गम्यते । अत एव पैङ्ग्यः—

गर्भाधानम्पिता कुर्यादृतुस्नातासु शक्तिमान् ।
ऋत्वन्तरे वा कुर्वीत हीनसत्त्वो न दोषभाक् ॥

इत्यशक्तस्य कालान्तरमनुकल्पयति । न कर्त्रन्तरम् । पितेति जनिष्यमाणगर्भापेक्षया । ऋत्वन्तरे द्वितीयादावपि । हीनसत्त्वो दोषभाङ्नेत्यर्थः । पुंसवादिषु तु अनुकल्पमप्याह "पुंसवादीनी"ति । आदिशब्दादनवलोभनसीमन्तादीनां ग्रहणम् । अत एव बैजवापः—

पिता पुत्रस्य संस्कारं कुर्याद्यदि न शक्नुयात् ।
अन्येन गुणयुक्तेन कारयेत्स्वस्वशास्त्रतः ॥ इति ।

संस्कारं पुंसवादिकम् । अशक्तिरसान्निधानस्याप्युपलक्षणम् । अत एव व्यासः—

मृते देशान्तरगते पत्यौ स्त्री यद्यसंस्कृता ।
देवरो वा गुरुर्वापि वंश्यो वाऽपि समाचरेत् ॥

मृते गर्भमाधायेति शेषः । अथ वेदवाक्यद्वयं भर्तृमरणक्लीबत्वादौ गर्भाधानेऽपि प्रतिनिधिविधानार्थत्वेन व्याख्येयम् । अस्मिन्पक्षे संस्कारशब्दो असङ्कोचेन गर्भाधानादौ सर्वत्र वर्तते । न शक्नुयादितिपदं क्लैब्यादिना सर्वात्मना शक्त्यभावपरं व्याख्येयम । देशान्तरगते सर्वात्मना अश्रूयमाणवार्त्ते इति वक्तव्यं मरणसाहचर्यात् ।

पत्यौ मृते वा पतिते संन्यस्ते वा विदेशगे ।
तद्गोत्रजेन श्रेष्ठेन कार्याः पुंसवनादयः ॥

इत्याश्वलायनस्मरणाच्च । गुरुर्ज्येष्ठः । वंश्यः सपिण्डः । इदमेवाभिप्रेत्याह याज्ञवल्क्यः—

अपुत्रां गुर्वनुज्ञातो देवरः पुत्रकाम्यया ।
सपिण्डो वा सगोत्रो वा घृताभ्यक्त ऋतावियात् ॥

एवमेवार्थं स्पष्टमाचष्ट ब्रह्मपुराणम्—

गर्भाधानादिसंस्कर्ता पिता श्रेष्ठतमः स्मृतः ।
अभावे स्वकुलीनः स्याद्बान्धवो वाऽन्यगोत्रजः ॥ इति ।

एतदभावे असम्बन्ध्यपि ब्राह्मणः प्रतिनिधिः कार्यः ।

बीजार्थं ब्राह्मणः कश्चिद्धनेनोपनिमन्त्र्यताम् ।

इति महाभारते सत्यवतीं प्रति भीष्मवचनात् । तत्स्वरूपमाह तदेव—

आर्यावर्तसमुद्भूतः स्वशाखी श्रेष्ठ उच्यते ।
ब्राह्मणः सर्ववर्णानां श्रोत्रियो वा स्ववर्णजः ॥

स्वशाखी स्वशाखीयः ।

गृहस्थः सर्ववर्णेषु श्रेष्ठ इत्यभिधीयते ।
अभार्यस्त्वधमो ज्ञेय उपकुर्वाणनैष्ठिकौ ॥
आचार्यौ मध्यमौ ज्ञेयावसगोत्रौ तु मध्यमौ ।
वानप्रस्थयतीनान्तु कर्तृत्वं नेष्यते सदा ॥ इति ।

इति श्रीप्रथमशाखीयरामकृष्णविरचिते पारस्करगृह्यसूत्रविवरणे संस्कारगणपतौ संस्कारलोपे प्रायश्चित्तं गर्भाधानादिनिर्णयः समाप्तः ॥

## ( द्वादशी कण्डिका )

**पक्षादिषु स्थालीपाकꣳश्रपयित्वा दर्शपूर्णमासदेवताभ्यो हुत्वा जुहोति ब्रह्मणे प्रजापतये विश्वेभ्यो देवेभ्यो द्यावापृथिवीभ्यामिति विश्वेभ्यो देवेभ्यो बलिहरणं भूतगृह्येभ्य आकाशाय च वैश्वदेवस्याग्नौ जुहोत्यग्नये स्वाहा प्रजापतये स्वाहा विश्वेभ्यो देवेभ्यः स्वाहाऽग्नये स्विष्टकृते स्वाहेति प्राशनान्ते बाह्यतः स्त्रीबलिꣳहरति नमः स्त्रियै नमः पुꣳसे वयसेऽवयसे नमः शुक्लाय कृष्णदन्ताय पापिनां पतये नमो ये मे प्रजामुपलोभयन्ति ग्रामे वसन्त उत वाऽरण्ये तेभ्यो नमोऽस्तु बलिमेभ्यो हरामि स्वस्ति मेऽस्तु प्रजां मे ददत्विति शेषमद्भिः प्लावय ततो ब्राह्मणभोजनम् ॥ १२ ॥**

अथ पक्षादिकर्मोच्यते । "पक्षादिषु स्थालीपाकꣳश्रपयित्वा दर्शपूर्णमासदेवताभ्यो हुत्वा जुहोति ब्रह्मणे प्रजापतये विश्वेभ्यो देवेभ्यो द्यावापृथिवीभ्यामिति" इति सूत्रम् । पक्षाणामादयः पक्षादयः तासु पक्षादिषु प्रतिपत्सु बहुवचनोपदेशात्सर्वपक्षादिष्वेतत्कर्म भवति । उक्तेन विधिना स्थालीपाकं श्रपयित्वा तेनैव स्थालीपाकेन दर्शपूर्णमासदेवताभ्यो हुत्वा, दर्शकालपक्षादौ दर्शदेवताभ्यो हुत्वा ब्रह्मण इत्येवमादिभ्यश्च चतुर्भ्यो जुहोति स्थालीपाकेनैव । दर्शे पौर्णमासे च विधिः समान इति कृत्वा ग्रन्थगौरवभयादाचार्येण समस्तोपदेशः कृतः । अतो यादृशस्ताभ्यो होमो विभागेन सिद्धस्तादृश एवेहापीति । एवं च स्मृत्यन्तरैः सहानुगतार्थो भवति । केचित्तु समस्तोपदेशात्सर्वाभ्यो होममिच्छन्ति । सिद्धचरोरुपादानं मा भूदिति श्रपयित्वेत्युच्यते । यद्यप्यत्र पक्षादिष्विति सामान्येनोक्तन्तथापि स्मृत्यन्तरोक्तो यागकालो ग्राह्यः । वृद्धशातातपः—

> पर्वणो यश्चतुर्थोऽश आद्याः प्रतिपदस्त्रयः ।
> यागकालः स विज्ञेयः प्रातर्युक्तो मनीषिभिः ॥

कारिकायाम्—

आवर्तनेऽथ वा तत्माग्यदि पर्व समाप्यते ।
तत्र पूर्वाह्ण एव स्यात्मन्धेरूर्ध्वं द्विजाशनम् ॥
आहिताग्नेर्न नियम इष्टेरूर्ध्वं विधानतः ।
ऊर्ध्वमावर्तनाच्चेत्स्याच्छ्वोभूते प्रातरेव हि ॥

प्रतिपदि वृद्धिगामिन्यां क्षीणायां वा सन्धिज्ञानोपायमाह लौगाक्षिः—

तिथेः परस्या घटिकाश्च याः स्युर्न्यूनास्तथैवाभ्यधिकाश्च तासाम् ।
अर्धं वियोज्यं च तथा प्रयोज्य ह्रासे च वृद्धौ प्रथमे दिने स्यात् ॥

प्रतिपद्वृद्धिनाडिका द्विधा विभज्यार्द्धं पर्वणि संयोज्य सन्धिः कल्पनीयः । तथैव प्रतिपत्क्षयनाडिकाश्च द्वेधा विभज्यार्धं पर्वणि वियोज्य सन्धिः कल्पनीयः ।

आधानानन्तरं शुक्ला कृष्णा वा प्रतिपद्भवेत् ।
तस्यां पक्षादिकर्मैतत्कार्यं पूर्वाह्ण एव तु ॥

हरिहरभाष्ये तु—

सायमादिप्रातरन्तमेकं कर्म प्रचक्षते ।
पौर्णमासादि दर्शान्तमेकमेव विदुर्बुधाः ॥

इति वचनात्कृष्णपक्षे यद्याधानं तदा दर्शमनिष्ट्वैव पौर्णमास्यां पक्षादिकर्मारम्भः । यत्तु छन्दोगपरिशिष्टवचनम्—

ऊर्ध्वं पूर्णाहुतेर्दर्शः पौर्णमासोऽपि चाग्रिमः ।
य आयाति स होतव्यः स एवादिरिति श्रुतेः ॥

एतत्पुनराधानविषयं तच्छाखिविषयं वेत्युक्तम् । अत्रैके वदन्ति—आधानस्य शुक्लपक्षे विहितत्वात्तदुत्तरपौर्णमासस्थालीपाककालस्य विद्यमानत्वात्पौर्णमासस्थालीपाकारम्भो युक्तः । तच्चिन्त्यम् । अस्माकं सूत्रे 'दारकाले दायाद्यकाले वे'त्यावसथ्याधानस्य काल उक्तः, तत्र यदा दायाद्यकाल आधानं कृतं तदुत्तरं या प्रतिपद्भवति तस्यामारम्भो युक्तः । ननु "उदगयन आपूर्यमाणपक्षे पुण्याह" इत्युक्तत्वाद्विवाहोऽपि शुक्लपक्षे

स्याचदा कृष्णायां प्रतिपद्यारम्भः सिद्ध्येदेव ? सत्यम्, विभागस्तावद्भागतः प्राप्तस्तत्र कालापेक्षाभावादापूर्यमाणादिनियमो न स्यादतो यदैव विभागस्तदैवाधानं ततः प्रतिपदि आरम्भ इति युक्तम् । नन्वस्तु कृष्णपक्षे वा विभागः, आधानन्तु शुक्लपक्ष एव कार्यम् ? नैवम् । कालाविलम्बे प्रमाणाभावाद्विभागोत्तरं कार्यमेव, ततो या प्रतिपदायाति तस्यामारम्भ इति । अत्र बहु वक्तव्यमस्ति ग्रन्थगौरवभिया नोच्यते । यद्यारम्भे काले सूतकमलमासपौषमासगुरुशुक्रास्तबाल्यवार्द्धक्यग्रहणादि भवति, तदाऽपि प्रारम्भः कार्यः । यानि तु तत्रारम्भनिषेधकानि—

उपरागोऽधिमासश्च यदि प्रथमपर्वणि ।
तथा मलिम्लुचे पौषे नान्वारम्भणमिष्यते ॥
गुरुभार्गवयोर्मौढ्ये चन्द्रसूर्यग्रहे तथा ।

इत्यादीनि सङ्ग्रहकारादिवचनानि तानि आलस्यादिना स्वकालानुपक्रान्तस्थालीपाकादिप्रारम्भविषयाणीति प्रयोगपारिजातकारः, प्रयोगरत्नकारश्च । तथा चापरार्कस्थं गर्गवचनमुदाजहार—

नामकर्म च दर्शेष्टिं यथाकालं समाचरेत् ।
अतिपाते सति तयोः प्रशस्ते मासि पुण्यभे । इति ॥

देवयाज्ञिकैस्तु "दर्शपौर्णमासानीजान"इतिसूत्रव्याख्याने सूतकशुक्रास्तादिनिमित्तवशाद्दर्शपौर्णमासारम्भोत्कर्षे सति आग्रयणीयकाल आगते तदतिक्रमशङ्कायामयङ्काल इत्युक्तम् । अतो देवयाज्ञिकानामभीष्टः शुक्रास्तादावारम्भ इत्याभाति । तथा च त्रिकाण्डमण्डनः—

आधानान्तर पौर्णमासी चेन्मलमासगा ।
तस्यामारम्भणीयादीन्न कुर्वीत कदाचन । इति ॥

आचारोऽप्येवम् । "विश्वेभ्यो देवेभ्यो बलिहरणं भूतगृह्येभ्य आकाशाय च" इति सूत्रम् । द्रव्यान्तरानुपदेशात्स्थालीपाकादेव विश्वेभ्यो देवेभ्यो बलित्रयमग्नेरुदक् प्राक्संस्थं कुर्यात् । बलिहरणवाक्ये च नमःशब्दोऽन्ते कार्यः । उक्तं चैतत् कर्कोपाध्यायैः'बलिहरणे च नमस्कार' इति । "पितृ

भ्यः स्वधा नम इति दक्षिणत" इति सूत्रव्याख्यानावसरे च 'नमस्कार श्चात्र प्रदर्शित आचार्येण सर्वबलिहरणेषु प्रत्येतव्य' इत्युक्तम् । "वैश्वदेवस्याग्नौ जुहोत्यग्नये स्वाहा प्रजापतये स्वाहा विश्वेभ्यो देवेभ्यः स्वाहा ऽग्नये स्विष्टकृते स्वाहेति" इति सूत्रम् । वैश्वदेवस्येत्यवयवलक्षणा षष्ठी । विश्वे देवा देवपितृमनुष्यादयो देवता अस्येति वैश्वदेवः सर्वार्थः प्रत्यह क्रियमाणः पाकस्तस्य वैश्वदेवस्य 'अग्नये स्वाहे'त्यादिभिर्मन्त्रैर्जुहोति । वैश्वदेवस्येति सिद्धवदुपदेशाद्द्वितीयः स्थालीपाको वैश्वदेवसमानतन्त्रः पक्षादिषु भवतीति भर्तृयज्ञभाष्ये । कर्कोपाध्यायैस्तु 'वैश्वदेवं केचित्पृथक्चरुं कुर्वन्ति यथा पौष्णस्य जुहोतीति पौष्णम्, तत्पुनरयुक्तम्, वैश्वदेवशब्देन विश्वे देवा देवता अस्येति सर्वार्थः पाकोऽभिधीयते ततो जुहोतीत्युक्तं भवति । यत्तु पौष्णशब्दवाच्योऽन्यः कश्चिच्चरुर्भवति, तेनास्य पृथक्क्रिया । वैश्वदेवस्तु पुनः पाको विद्यत एवेति । तथा च वक्ष्यति—'वैश्वदेवादन्नात्पर्युक्ष्य स्वाहाकारैर्जुहुया'दित्युक्तम् । अग्नौ होमः प्राप्त एव, पुनरग्नौ जुहोतीत्यग्निग्रहणं बलिकर्मादौ मा भूदिति । 'अग्नये स्विष्टकृते स्वाहे'ति प्रयोगोपदर्शनार्थम् । "प्राजापत्यꣳ स्विष्टकृच्चे"ति प्रदेशान्तर उक्तम् , इह प्रयोग उपदिश्यते । अपि च स्थालीपाकेन दर्शपूर्णमासदेवतादीना होमविधिनाऽस्यावसरविधित्सयैतत्त्वकथं प्राङ्महाव्याहृतिभ्यः स्विष्टकृदन्यच्चेदाज्याद्धविरिति प्रदेशान्तर उक्तम्? तेन प्राङ्महाव्याहृतिहोमादाज्यभागोत्तरकालं चावसरो गम्यत इति । स्विष्टकृद्धोमश्च शेषादेव भवति । स्विष्टकृद्ग्रहणं वक्ष्यमाणस्य बलिहरणस्य प्राधान्यद्योतनार्थमिति भर्तृयज्ञः । परिभाषातः प्राजापत्यस्वाहाकारग्रहणं बलिनिवृत्त्यर्थम् , प्रदानोऽपि स्वाहाकारो न बलिहरणेपु भवति। "बाह्यतः स्त्रीबलिꣳ हरति नमः स्त्रियै नमः पुꣳसे वयसेऽवयसे नमः शुक्लाय कृष्णदन्ताय पापीनां पतये नमो ये मे प्रजामुपलोभयन्ति ग्रामे वसन्त उत वाऽरण्ये तेभ्यो नमोऽस्तु बलिमेभ्यो हरामि स्वस्ति मेऽस्तु प्रजां मे ददत्विति" इति सूत्रम् । ततो बाह्यतः शालाया बहिःप्रदेशे 'नमः स्त्रियै' इत्यादिमन्त्रैः प्रतिमन्त्रं स्थालीपाकात्स्त्रीबलिं स्त्रियादिभ्यो बलिः स्त्रीबलिस्तं

हरति स्रुवेण मन्त्रान्ते भूमौ प्रक्षिपति । एतच्चागन्तुकत्वात्सर्वान्ते भवति । मन्त्रार्थः—स्त्रियै सन्तानसुखविघातिन्यै नमः नमस्कारोऽस्तु । अतः सन्तानसुखेच्छवोऽत्र बाह्यबल्यधिकारिण इति जयरामः । तथा पुंसे उक्तस्वरूपाय वा किंभूताय वयसे अवयसे च वृद्धाय बालाय च शुक्लाय बहिः कृष्णदन्ताय असितान्तरङ्गावयवाय अतिमलिनमनसे इत्यर्थः । अत एव पापीनां पतये श्रेष्ठाय दीर्घश्छान्दसः । अत्र बलित्रये पुमानेव विशिष्यते । ये च मे मम प्रजां सन्तानमुपलोभयन्ति मोहयन्ति ग्रामे वसन्तः उत अपि वा समुच्चये, अरण्ये वा वने वाऽपि तेभ्यो नमः नमस्कारोस्तु । एतेभ्यो बलिं पूजां हरामि समर्पयामि । मम नमस्कारबलिभ्यां यूयं सन्तुष्टा भवत । ततो भवता प्रसादान्मम स्वस्ति कल्याणमस्तु । भवन्तश्च मे मह्यं प्रजा पुत्रादिसुखजातं ददतु प्रयच्छन्तु । "शेषमद्भिः प्रप्लाव्य ततो ब्राह्मणभोजन"मिति सूत्रम् । बलिहरणानन्तरं शेषं स्थालीपाकस्थितमवशिष्टं चरुं अद्भिर्लौकिकोदकेन प्रप्लाव्य मज्जयित्वा ब्राह्मणभोजनं कुर्यात् । प्रणीतोदकेन प्रप्लावनमिति वासुदेवादयः । नेति कारिकायाम् ॥

इति श्रीप्रथमशाखीयरामकृष्णविरचिते पारस्करगृह्यविवरणे संस्कारगणपतौ प्रथमकाण्डे द्वादशी कण्डिका ।

---

## ( त्रयोदशी कण्डिका )

**सा यदि गर्भं न दधीत सिंह्याः श्वेतपुष्प्या उपोष्य पुष्येण मूलमुत्थाप्य चतुर्थेऽहनि स्नातायां निशायामुदपेषं पिष्ट्वा दक्षिणस्यां नासिकायामासिञ्चतीयमोषधी त्रायमाणा सहमाना सरस्वती । अस्या अहं बृहत्याः पुत्रः पितुरिव नाम जग्रभामिति ॥ १३ ॥**

अथ यथोक्तविधिना गर्भानुत्पत्तौ गर्भोत्पत्तिप्रकारो लिख्यते "सा यदि गर्भं न दधीत सिंह्याः श्वेतपुष्प्या उपोष्य पुष्येण मूलमुत्थाप्य चतुर्थेऽहनि स्नातायां निशायामुदपेषं पिष्ट्वा दक्षिणस्यां ना-

सिकायामासिञ्चतीयमोषधी त्रायमाणा सहमाना सरस्वती । अस्या अहं बृहत्याः पुत्रः पितुरिव नाम जग्रभमिति" इति सूत्रम् । सा यदि स्त्री गर्भकामा यदि गर्भं न दधीत न धारयति तदा भर्ता सिंह्याः श्वेतपुष्प्याः, सिंहातिरिङ्गिणिका कण्टकारिका इति पर्यायाः । श्वेतानि पुष्पाणि यस्याः सा श्वेतपुष्पी तस्याः । उपोष्य पुष्यनक्षत्रदिनात्पूर्वदिने स्वयमुपवास कृत्वा पुष्येण मूलमुत्थाप्य पुष्यनक्षत्रदिने पूर्वोक्तायाः कण्टकारिकाया मूल उत्पाट्य यत्नेन स्थापयित्वा ऋतुयुक्ता भार्या यदा भवति तदा चतुर्थेऽहनि स्नातायां रात्रौ तन्मूलमुदके पेषयित्वा दक्षिणनासिकापुटे आसिञ्चति "इयमोषधी त्रायमाणे"त्यनेन मन्त्रेण भर्त्रैव । ततो भर्त्रा भोजनं कार्यमिति । मन्त्रार्थः—ओषति दहति दोषान् धत्ते गुणानित्योषधी । इयं त्रायमाणा यथोक्तं प्रयुक्ता रक्षन्ती सहमाना दोषवेगान्सोढ्वाऽपि नाशयन्तीत्यर्थः । सरस्वती कारणतयाऽनुगच्छतीति सरः समुद्रः तद्वती तत्सम्बद्धा वा । अतः अस्याः बृहत्याः बृंहयति पुत्रादिदानेन तस्याः प्रभावाच्चाहं पुत्रः पितुरिव प्रत्यहं नाम जग्रभं गृह्णीया लभेयं प्राप्नुयाम् । पुत्रस्य पितेति लोकाः कथयन्ति । सुगमत्वादत्र पदार्थक्रमो नोच्यते । अत्र प्रसङ्गात्किञ्चित्कर्मविपाकोऽप्युच्यते । महाकल्पे शतानन्द उवाच—

गणेशान ? समाख्याहि यथा देवेन शम्भुना ।

इत्युपक्रम्य । नन्दिकेश्वर उवाच—

कैलास शिखरे रम्ये सुखासीनं जगद्गुरुम् ।
देवी प्रपच्छ देवेशं फलं कर्मविपाकजम् ॥

पार्वत्युवाच—

पुरुषस्यानपत्यत्वं वद मे वदतां वर ? ।
चतुर्विधाः स्त्रियो दोषा अप्रसूता मृतप्रजा ॥
स्त्रीप्रसूः काकवन्ध्या च गर्भस्राववती तथा ।
पतिसौभाग्यहीना च दुर्भगा ऋतुवर्जिता ॥
केन दोषेण भगवन् तन्मे कथय सुव्रत ? ॥

निष्कृतिं च ममाख्याहि कृपया परमेश्वर! ॥

ईश्वर उवाच —

विप्ररत्नापहरणाद्विप्रैः सह विरोधनात् ।
देवर्षिपितृपूजासु विमुखानामभक्तितः ॥
गुरुमातृपितृश्राद्धवञ्चकानां च नित्यशः ।
अर्थिभ्यो नार्थदातृणां तथा तीर्थविरोधिनाम् ॥
अदत्ते नोऽतिथिभ्योऽन्नं भ्रातृणां पापचेतसाम् ।
स्वभार्यानिन्दकानां च लोकानां च विरोधिनाम् ॥
दुष्प्रतिग्रहदोषाणां जायते त्वनपत्यता ।
स्त्रियोऽपि बहुधैव स्युः पूर्वकर्मप्रदर्शिताः ॥
वन्ध्या भवति या बाल्ये उद्वेजयति मातरम् ।
गर्भघ्नी या भवेत्स्त्रीणां वन्ध्या भवति साऽथवा ॥
अन्यासामनपत्यत्वमिच्छन्ती वन्ध्यतां व्रजेत् ।
मृतप्रजा भवेन्नारी फलं दत्वा हरेत्तु या ॥
फलस्तेयं च कुरुते साऽपि स्यान्मृतवत्सका ।
पुरुषद्वेषिणी नारी स्त्रीप्रसूर्वै भवेद्ध्रुवम् ॥
व्रतदानक्रियाहीना काकवन्ध्यात्वमाप्नुयात् ।
काकवन्ध्या भवेत्सा हि गर्भपातं करोति या ॥
देवानां च पितॄणां च दानकर्मणि मैथुने ।
केशान्सङ्गोपयेदज्ञा चानपत्याऽथ वा भवेत् ॥
स्त्रीगर्भा च भवेयुस्ता बालान्हिंसन्ति शापतः ।
स्त्रीणां दुःसिद्धिदा या च भर्तृसौख्यं न सा लभेत् ॥
देवद्विजगुरून्ज्येष्ठान्पितॄंश्चामर्षिता भवेत् ।
या सा दौर्भाग्यमाप्नोति जनमध्येऽप्रिया भवेत् ॥
चौर्यात्पुष्पाणि चिनुयात्सा भवेदृतुवर्जिता ।
वैधव्यं पुत्रशोकं च दारिद्र्यं चैव दासताम् ॥
अतस्तत्कर्मशान्त्यर्थं यतितव्यं प्रयत्नतः ।

पूर्वजन्मकृतस्यास्य दुरितस्यापि निष्कृतिः ॥
जायते सततं धर्मः शृणुष्वैकमनाः प्रिये ।
ज्ञात्वा पापानि मतिमान्गुरूणि च लघूनि च ॥
प्रायश्चित्तं यथावित्तं प्राक्कार्यं तेन शुद्धये ।
षडब्दं चतुरब्दं वा त्र्यब्दं द्व्यब्दाब्दमेव च ॥
गोहिरण्यादिदानं वा कृत्वा कर्म समारभेत् ।
पश्चात्तद्दोषशान्त्यर्थं महारुद्रः प्रकीर्त्तितः ॥
तथा कलशरुद्रश्च विष्णुश्राद्धं सुरेश्वरि! ।
हरिवंशस्य श्रवणं विधिवत्परिकीर्तितम् ॥
तथा सन्तानगोपालविद्यानुष्ठानमेव च ।
अनपत्यत्वनाशार्थं कुर्यात्स्त्री पुरुषोऽपि वा ॥
ब्राह्मणेन तु कर्तव्यं सर्वपापापनुत्तये ।
क्षत्रियोऽपि हि कुर्वाणः संग्रामे विजयी भवेत् ॥
आतुरस्यानुकर्तव्यः सर्वरोगापनुत्तये ।
ग्रहव्रणादिरोगैश्च पीडितस्यापि शर्मदः ॥
कृतो दशरथेनेह तेन पुत्रः सुबुद्धिमान् ।
रामचन्द्रो महाबाहुर्बभूव पुरुषोत्तमः ॥
वीरसेनोऽपि कृतवान्पुण्यश्लोको नलस्तथा ।
इन्द्रराजोऽपि कृतवान्स्वर्गराज्याधिपोऽभवत् ॥
रामचन्द्रोऽपि कृतवान्द्वौ पुत्रौ च गुणान्वितौ ।
पाण्डुराजोऽपि कृतवान्पञ्च पुत्रान्गुणान्वितान् ॥
युधिष्ठिरोऽपि कृतवान्सत्यवादी सदाऽभवत् ।
ब्रह्माऽपि कृतवानेष नारदः समजायत ॥
अतः सर्वैः प्रकर्तव्यं सर्वकामफलप्रदम् ।
अल्पायासव्ययस्यास्य फलमेतावदुच्यते ॥
वक्तुं नैव हि शक्नोति महारुद्रादिकं फलम् ।
यावज्जीवं जपेद्रुद्रं पौरुषं सूक्तमेव च ॥

प्रविशेच्च महादेवगृहं गृहपतिर्यथा।
तस्मात्सर्वप्रयत्नेन रुद्रमाराधयेत्सदा॥
इति ते कथितं विप्र! प्रायश्चित्तविपाकजम्॥

इति श्रीनन्दिपुराणे अनपत्यकर्मविपाकफलम्।

किञ्चिद्विशेषमाह सूर्यारुणसंवादे—

अरुण उवाच—

वैश्यकुले समुत्पन्नो वाताधिकशरीरभाक्।
वित्तपो धर्मयुक्तश्च शिल्पिकार्यरतः सदा॥
व्यापारविषये वीरः क्रयविक्रयकारकः।
गौरवर्णः शुभाचारो किञ्चित्क्रोधसमन्वितः॥
तस्य भार्या महासाध्वी दानव्रतपरायणा।
सुनेत्राऽपि च सुश्रोणी भर्तृभक्तिपरायणा॥
अनपत्या कथन्देव! कस्येदं कर्मणः फलम्॥

सूर्य उवाच—

ब्राह्मे वै पूर्ववंश्ये तु सञ्जातो ब्राह्मणब्रुवः।
बहुक्लेशकरो नित्यं बहुदुःखस्य भाजनम्॥
प्रतिग्रहप्रकर्ता च वृत्तितो बहुयाचकः।
गृहे तु तस्य निर्मुक्तं द्रविणं बहु केन चित्॥
विप्रेण केन दैवाच्च विद्याभ्यासरतेन वै।
नार्पितन्तेन विप्रेण तस्य विप्रवराय वै॥
ब्रह्मस्वं भक्षितन्तेन सदा सन्ताननाशनम्।
निक्षेपहरणाच्चैव अनपत्यः प्रजायते॥
द्वितीयं च कृतं कर्म कूष्माण्डीफलनाशनम्।
ब्राह्मणस्य गृहाद्वत्स! हृतं तस्करबुद्धिना॥
तेन कर्मविपाकेन अपत्यं नैव जायते॥

अरुण उवाच—

प्रायश्चित्तं कथं स्वामिन्येनापत्यं प्रजायते।

ममोपरि कृपां कृत्वा सत्यं कथय सुव्रत! ॥

सूर्य उवाच—

एकमासो विधिर्वत्स! कर्तव्यं द्विजभोजनम् ।
तीर्थयात्रा च कर्तव्या रेवातापीसमुद्भवा ॥
तुलसीदललक्षैश्च विष्णुं सम्पूजयेत्ततः ।
स्वर्णधेनुं काश्यपेय! विप्राय प्रतिपादयेत् ॥
कलशं ताम्रमयं चैव घृतेन परिपूरितम् ।
चन्द्रसूर्योपरागे च दातव्यं च द्विजन्मने ॥
वैधृतौ च व्यतीपाते फलदानन्तु कारयेत् ।
श्रवणं हरिवंशस्य एकाचित्तेन मानद! ॥
विष्णुसूक्तस्य मन्त्रस्य लक्षसंख्यां तु कारयेत् ।
दशांशहोममोज्यं च कर्त्तव्यं विधिना ततः ॥
कौष्माण्डीं रोपयेद्वल्लीं विप्रस्य विनिवेशने ।
सप्तफलाव्रतं कुर्याद्विधिना च विशारद! ॥
एवंविधे कृते वत्स! सन्तानं जायते ध्रुवम् ॥

इत्यनपत्यप्रायश्चित्तम् ।

अरुण उवाच—

कश्चित्क्षत्रोत्तमो जातो वहुवित्तसमन्वितः ।
संयुक्तो वातपित्ताभ्यां श्यामवर्णः प्रतापवान् ॥
राजवृत्तिं तु भुञ्जानो सुकर्मनिरतः सदा ।
देवब्राह्मणभक्तश्च व्रतदानपरायणः ॥
मृतवत्सः कथ जात एक एवावशिष्यते ।
केन कर्म विपाकेन सत्यं कथय भास्कर! ॥

सूर्य उवाच—

स्त्रीणां नैव तु तत्कर्म भर्तुरेव प्रकीर्त्तितम् ।
पूर्वजन्मनि शूद्रोऽसौ द्विजशुश्रूषणे रतः ॥
कृतं तेन तु यत्कर्म तन्मे निगदतः शृणु ।

पूर्वजन्मनि शूद्रस्तु राज्ञो व्यापारकारकः ॥
बहुद्रव्येण संयुक्तो दुर्मदो विषयान्वितः ।
मृगयानिरतः पापो मृगशूकरघातकः ॥
कदाचिद्दैवयोगाच्च भाविनोऽर्थस्य वै बलात् ।
मृगशूकरशावाश्च त्रयोदश विहिंसिताः ॥
गले गृहीत्वा तेनैव मातरो दुःखमागताः ।
अचिरेणैव कालेन मृगोऽपि निधनं गताः ॥
पश्चात्सोऽपि च शूद्रस्तु गोसङ्घे निहते सति ।
किरातैर्दृष्ट इष्टार्थं प्राणास्तत्याज तस्करैः ॥
तेन पुण्यप्रभावेण स शूद्रः स्वर्गमागतः ।
अगस्तिहायनानां वै सहस्राणि खगेश्वर ! ॥
समाः सहस्राणि च सप्त वै जले
दशैकमग्नौ तपने च षोडश ।
महाहवे षष्टिरशीति गोगृहे
अनाशने भारत चाक्षया गतिः ॥
पश्चान्मानुषमापन्नस्त्रिदिवात्पतितः खग ! ।
तेन कर्मविपाकेन मृतापत्यः प्रजायते ॥
इदन्तु पञ्चमं जन्म क्षत्रवंशसमुद्भवम् ।

अरुण उवाच—

प्रायश्चित्तं कथं स्वामिन्येनापत्यं प्रजायते ॥

सूर्य उवाच—

श्रवणं हरिवंशस्य एकचित्तेन मानद ! ।
स्वर्णैकेन समायुक्तां धेनुं दद्याद्विधानतः ॥
वंशपात्रत्रयं चैव कूष्माण्डीफलसंयुतम् ।
विप्राय वेदविदुषे श्रद्धया प्रतिपादयेत् ॥
एवंविधिकृते वत्स ! सन्ततिर्निश्चला भवेत् ।
चिन्हन्तु तस्य ज्ञातव्यमेको भ्राताऽस्त्रपातितः ॥

मस्तके वेदनां प्राप्य प्राणांस्तत्याज विह्वलः ।

अरुण उवाच—

वैश्यवंशे समुत्पन्नः कश्चित्पुरुषसत्तमः ।
संयुक्तो वातपित्ताभ्यां धर्मिष्ठो धर्मतत्परः ॥
किंचिद्वित्तसमायुक्तो राजसेवारतस्तथा ।
देवब्राह्मणभक्तश्च गुरुपूजारतोऽभवत् ॥
तस्य भार्या तु सुश्रोणी व्रतानामनुकाङ्क्षिणी ।
मृतवत्सा कथं जाता एक एवावशिष्यते ।
जीवन्ति पुत्रिकास्तस्या द्वित्रिर्वा सततं तथा ।
केन कर्मविपाकेन सत्यं ब्रूहि द्विजेश्वर ! ॥

सूर्य उवाच—

वैनतेय ! महाभाग ! शृणु तस्य विचेष्टितम् ।
येन तस्य समुत्पन्नाः पुत्रास्तु निधनं गताः ॥
पूर्वजन्मनिषादानां पतिरासीन्महाभुजः ।
विन्ध्याचलनिवासी च लघुदेशपतिः प्रभुः ॥
चौर्यकर्मरतो नित्यं चौर्यैस्तु परिसेवितः ।
एकदा तु महाबाहो? दुर्भिक्षं पतितं किल ॥
तेन सन्तापिता लोका देशान्तरगताः खग? ।
ततस्तद्देशमार्गेण ब्राह्मणाश्चलितास्तथा ॥
चत्वारो भ्रातरो वत्स ! तेषां ज्येष्ठः सदारकः ।
आगतास्तस्य भिल्लस्य ग्राममध्येऽन्नकाङ्क्षिणः ॥
उषितास्तद्दिने तत्र रजन्यां निद्रितास्तु ते ।
ततः केनापि चौरेण निद्रायां शोधिता हि ते ॥
तेषां ग्रन्थिस्थितं हेम तोलकत्रयसम्मितम् ।
तल्लब्धं तेन चौरेण तद्गृहीत्वा सवस्त्रकम् ॥
निद्रायां शनकैर्याता राज्ञे नीत्वा समर्पितम् ।
ततः प्रभाते संजाते उदिते तु दिवाकरे ॥

जागृतास्ते तु चत्वारो भ्रातरो विनतात्मज? ।
न दृष्टं हेमवस्त्रं तज्जायया‌ऽपि तदा ततः ॥
अलब्ध्वा हेमवस्त्रन्ते मूर्च्छनामागतास्ततः ।
क्षणेन लब्धसञ्ज्ञास्ते समूचुश्च परस्परम् ॥
क्व गतं स्वर्णवसनं स्थापितं मध्य आत्मनाम् ।
अस्माकं जीवनं ह्येतत्कथं जीवामहे गते ॥
एतदाधारकाः सर्वे जीवनं दृष्टमात्रतः ।
अतः पर गताधारा मृत्युं यास्यामहे ध्रुवम् ॥
एवं विलप्य बहुधा दरिद्रा ब्राह्मणास्तदा ।
राजानन्तु समासाद्य विज्ञप्तिं चक्रुरुद्यताः ॥
राजन्रात्रौ प्रसुप्तेषु ह्यस्माकं वसुधाधिप? ।
नीतं केनापि स्वर्णं नो तद्विशोध्य प्रदाप्यताम् ॥
राजा तेषान्तु विज्ञप्तिं श्रुत्वा मानं समाश्रितः ।
ते ब्राह्मणा निराधारा लङ्घनं कर्तुमास्थिताः ॥
सोऽपि भिल्लाधिपपतिः सभार्यः प्रययौ गृहम् ।
द्वित्राण्यहानि ते तत्र लङ्घिता राजवेश्मनि ॥
अक्षमालां धनं कर्तुं विह्वला जातसंभ्रमाः ।
तेषां ज्येष्ठस्तु यो भ्राता विषं भुक्त्वा तु संस्थितः ॥
तस्य भार्या तु वै साध्वी भर्तारं पृष्ठतोऽन्वगात् ।
ततस्ते भ्रातरः सर्वे कालेन निधनं गताः ॥
निर्द्रव्या दुःखिता स्तेयं तत्र तेभ्योऽर्पितं धनम् ।
ततस्तु दैवयोगाच्च भाविनोऽर्थस्य वै बलात् ॥
वने व्याघ्रेण काचिद्वौर्गृहीता क्रन्दितं गवा ।
स तु भिल्लाधिपः श्रुत्वा गवार्थे वनमाययौ ॥
भिल्लैः कतिपयैरेव वृतो व्याघ्रं ददर्श सः ।
शरो मुक्तस्ततो राज्ञा व्याघ्रं प्रति न तं गतः ॥

ततो व्याघ्रस्तु गां मुक्त्वा राजानं प्राहरद्बली ।
तेन व्याघ्रप्रहारेण राजासौऽ निधनं गतः ॥
व्याघ्रोऽपि राजबाणेन क्षतो मृत्युं गतः किल ।
एवं च गोस्तु रक्षार्थं प्राणत्यागात्स पार्थिवः ॥
हित्वा कलेवरं यातः स्वर्लोकं विनतात्मज? ।
तस्यापि पत्नी राजानं भर्तारं पृष्ठतोऽन्वगात् ॥
सतीपुण्यप्रभावेण उभौ तौ देवतां गतौ ।
राजाऽसौ ब्राह्मणः सोऽपि स्वर्गलोके समूचतुः ॥
तिस्रः कोट्योऽर्द्धकोटीश्च यावद्रोमाणि मानसे ।
सतीपुण्यप्रभावेण तावद्वर्षाणि मानद? ॥
देवलोके सुखं भुङ्क्ते पापिष्ठोऽपि न संशयः ।
पुण्यक्षये त्वसौ राजा तया पत्न्या भुवं गतः ॥
कश्चित्क्षत्रोत्तमो राजा कतिचिद्ग्रामपालकः ।
तेऽपि विप्रसुताश्चैकभ्रातरः स्वर्णकारणात् ॥
मरणात्तन्निमित्तेन दुःखदास्तस्य ते पितुः ।
साऽपि राज्ञी हि तस्यासीत्सा वधूस्तत्सुतस्य वै ॥
आत्मघातोत्थपापेन किञ्चिद्व्याधिप्रपीडितः ।
स पुत्रो यौवनं प्राप्य तत्रापि निधनं गतः ॥
साऽपि पुत्रवधूस्तत्र भर्तारं पृष्ठतोऽन्वयात् ।
ब्रह्मस्वहरणाद्राजा महाशोकेन पीडितः ॥
न विषं विषमित्याहुर्ब्रह्मस्वं विषमुच्यते ।
विषमेकाकिन हन्ति ब्रह्मस्वं पुत्रपौत्रकम् ॥
कर्तृकर्मक्षयो नास्ति कल्पकोटिशतैरपि ।
अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम् ॥
सोऽपि राजा ततो दुःखी कालेन निधनं गतः ।
तस्य भार्या महासाध्वी राजानं पृष्ठतोऽन्वगात् ॥

एवं तौ च पितापुत्रौ सतीपुण्यप्रभावतः ।
भुक्त्वा स्वर्गगतान्भोगान्पुण्यशेषाद्दिवश्च्युतौ ॥
पश्चान्मानुषमापन्नौ पितृपुत्रौ बभूवतुः ।
सत्यौ चापि तयोर्भार्ये सञ्जाते विनतात्मज? ।
वैश्ययोनिं समासाद्य भोगवन्तो दिवश्च्युताः ॥
त्रयोऽपि पूर्वपुत्रास्ते सञ्जाता इह जन्मनि ।
ऋणसम्बन्धयोगेन मायादुःखादिकारकाः ॥
तस्मिन्वयसि सञ्जाते जाता नाशाः क्षयं गताः ।
पुत्रस्यापि वधूः सा हि तं पतिं पृष्ठतो ययौ ॥
सतीनां ह्यत्र सम्बन्धो देवानामपि दुस्त्यजः ।
महता व्याधिना पुत्रः पीडितो विषभक्षणात् ॥
एवं ते पुत्रतां गत्वा पित्रोर्दुःखप्रदायिनः ॥
पुनः पुनस्तु विप्रास्ते भ्रातृतां पुत्रतां गताः ।
एवं पापप्रभावेन सन्ततिः क्षीणतां व्रजेत् ॥
सतीपुण्यप्रभावेन धेन्वर्थे प्राणमुञ्चनात् ।
स्वर्गी भूत्वा पुनः सोऽयं भोगवान्भुवि जायते ॥

समासेन—

मृते भर्तरि या नारी प्रजां त्यजति दुस्त्यजाम् ।
सा च स्वर्गमवाप्नोति भर्तारमनुमोदते ॥

अरुण उवाच—

प्रायश्चित्तं कथं स्वामिन्! तस्य पापस्य शान्तये ।
सत्यं कथय देवेश ? कृपां कृत्वा ममोपरि ॥

सूर्य उवाच—

अहं ते कथयिष्यामि तस्य पापस्य निष्कृतिम् ।
यां कृत्वा मुच्यते पापात्तन्मे निगदतः शृणु ॥
विप्राणां हारितं यच्च स्वर्णं तत्तोलकत्रयम् ।
मिलेन तेन पूर्वं वै त्रिगुणं देयमत्र तु ॥

यावज्जन्मानि जातानि तावद्गुणमुदाहृतम् ।
तज्जन्मसंख्यया राज्ञा द्विगुण समुदाहृतम् ॥
गोदानेन समायुक्तं दातव्यं विदुषेऽरुण? ।
शक्त्यभावे तदर्द्धं वा वित्तशाठ्यं न कारयेत् ॥
दरिद्रस्तदपि स्वर्णं यावत्तेषां हृतं भवेत् ।
दद्यात्पापविनाशाय ह्यात्मनो हितमावहन् ॥
वस्त्रमेकं च दातव्यं स्वर्णं बध्वा तदञ्चले ।
सप्तफलीव्रतं कार्यं यथोक्तविधिमाचरेत् ॥
भर्त्रा च तत्कृतं कर्म स्त्रिया भागो न विद्यते ।
देवान्पितॄंश्च सन्तर्प्य स्नानं कृत्वा विधानतः ॥
मम पूजा च कर्तव्या विधिवद्विनतात्मज ? ।
ब्राह्मणान्भोजयेत्पश्चाच्चतुःपञ्चशतांस्तथा ॥
विदुषे दक्षिणां दद्यादात्मनो हितमिच्छते ।
अन्येभ्यो दक्षिणां दद्याद्वस्त्राद्याभरणात्मिकाम् ॥
तोषयेत्प्राणिनश्चान्यान्भोजनाद्यैः खगोत्तम ? ।
ग्रहांश्चापि च सम्पूज्य तोषयेद्दक्षिणादिभिः ॥
प्रायश्चित्ते कृते वत्स ? नैव पापफलं लभेत् ।
तस्मात्तद्दोषशान्त्यर्थमात्मनो हितमिच्छता ॥
कुलीनेन सदा कार्यं प्रायश्चित्तं यथाविधि ।
एवंविधे कृते वत्स ! सन्ततिर्निश्चला भवेत् ॥
ते हि विप्रा गृहीतार्था नैव सम्बन्धमाप्नुयुः ।
अन्येऽपि पुत्रपौत्राद्याः पापाभावात्स्थिराः सदा ॥
पुत्रत्रयसुखं चास्य सततं जायते ध्रुवम् ।
चतुष्टयन्तु पुत्राणां भविष्यति न संशयः ॥

इति मृतापत्यप्रायश्चित्तम् । अथ काकवन्ध्याप्रायश्चित्तम् ।

अरुण उवाच—

कश्चिद्वैश्यकुलोत्पन्नः पित्तवायुसमन्वितः ।

शिल्पकार्यप्रकर्ता च वित्तपो धनवत्सलः ॥
गौरवर्णः शुभाचारः कृषिकर्म करोति च।
भार्या प्रीतिपरा नित्यं व्रतानामनुकाङ्क्षिणी ॥
गौरवर्णा शुभाचारा सुश्रोणी सा पतिव्रता।
काकवन्ध्या कथन्देव! सत्यं ब्रूहि दिवाकर! ॥

सूर्य उवाच—

भर्त्रा कर्म कृतं नैव स्त्रीकृतं नात्र संशयः।
पूर्वजन्मनि शूद्रा स्त्री सपत्नीसहिता द्विज! ॥
एकपुत्रा सपत्नी च तस्यास्तत्रैव जन्मनि।
अनया ईर्ष्यया चैव कृतं कपटकं महत् ॥
कपटेनापि तस्यास्तु अपत्यं नाभवत्पुरा।
उपायैर्बहुधा चैव न त्वपत्यं व्यजायत ॥
द्वितीयं च कृत पापन्तया तत्रैव जन्मनि।
मार्ज्जारपत्यद्वित्रीणि तथा विशोषितानि च ॥
मृतानि कष्टभावेन तेन कर्मविपाकतः।
नरके पतिता घोरे वर्षाणां च शतत्रयम् ॥
पश्चान्मानुषमापन्ना व्रतदानप्रभावतः।
इदं चतुर्थकं जन्म वैश्यवंशसमुद्भवम्।
पुराकृतानि कर्माणि भुज्यन्त इह मानवैः ॥

अरुण उवाच—

एकापत्याऽनपत्या च दृश्यते किल कश्यप!।
प्रायश्चित्तं कथं देव? येनाऽपत्यं प्रजायते ॥

सूर्य उवाच—

नित्यं फलं प्रदातव्यं यावत्संवत्सरं सदा।
व्रतं सौभाग्यसुन्दर्याः शास्त्रोक्तविधिना खग! ॥
एकवासो विधिः पश्चाद्दम्पती अथ सङ्गमे।
कर्तव्यं विधिवत्सर्वं सर्वकामार्थसिद्धये ॥

सूर्यभार्याव्रतं चैव षण्मासावधि मानद ! ।
गर्गरीं पूजयेद्भक्त्या नारिकेलसमन्विताम् ॥
रविवारे विशेषेण यागीकरणमुत्तमम् ।
नक्तन्तु कारयेद्भक्त्या ततः सिद्धिर्भविष्यति ॥
ब्राह्मणान्भोजयेत्पश्चादष्टोत्तरशतं खग! ।
सवत्सा गौः प्रदातव्या स्वर्णमाषेण संयुता ॥
कूष्माण्ड दक्षिणायुक्तं विप्राय प्रतिपादयेत् ।
एवंविधिकृते वत्स! सन्तानं जायते भुवि ॥

इति काकवन्ध्याप्रायश्चित्तम् । अथ बहुकन्याजनने प्रायश्चित्तम् ।

अरुण उवाच—

वैश्ये कुले समुत्पन्नो वायुपित्तसमन्वितः ।
वित्तपो धर्मयुक्तश्च गौरवर्णः प्रतापवान् ॥
बहुशिल्पकरो नित्यं कदाचित्कृषिकारकः ।
तस्य भार्या सुशीला च भर्तृभक्तिपरायणा ॥
व्रतदानदयायुक्ता रूपलावण्यसंयुता ।
बहुपुत्र्यो विजाताश्च पुत्रो नैव विजायते ॥
केन कर्मविपाकेन सत्यं कथय भास्कर! ।

सूर्य उवाच—

पूर्वं शूद्रो वित्तपश्च राजमान्यः प्रतापवान् ।
व्यापारविषये वीरो राजकर्म चकार ह ॥
तस्य गोत्रे च सम्बन्धी नित्यं धनपरायणः ।
विष्णुभक्तो दयालुश्च देवब्राह्मणपूजकः ॥
सुताद्वयं तथा विद्धि ह्यपुत्रो मित्रवत्सलः ।
अकस्मान्मरणं प्राप्तः भिया तु पृष्ठतोऽन्वयात् ॥
तस्य भार्या ततः सर्वे दुःखैश्च परिपीडिताः ।
अचिराच्च मृतः सोपि मार्गे म्लेच्छैश्च घातितः ॥
अग्निदाहं विना वत्स? प्रेतयोनित्वमागतः ।

वर्षायुतं काश्यपेय ! नरके पतितः पुनः ॥
पश्चान्मानुषमापन्नो व्रतदानप्रभावतः ।
इदन्तु पञ्चमं जन्म ह्यनपत्यं खगेश्वर ! ॥
पुनः पुनः समा जाता बहुदुःखस्य कारकाः ।
तेन कर्मविपाकेन पुत्र्यो जाता अपुत्रकः ॥

अरुण उवाच—

प्रायश्चित्तं कथन्देव ! येन पुत्रः प्रजायते ।

सूर्य उवाच—

एकवस्त्रविधानं च दम्पती तीर्थसङ्गमे ॥
अष्टोत्तरशतं विप्रान्मिष्टान्नेन तु तर्पयेत् ।
स्वर्णधेनुः प्रदातव्या घृतकुम्भं ततः परम् ॥
श्रवणं हरिवंशस्य एकचित्तेन मानद ! ।
सप्तफलीव्रतं कुर्याद्वंशपात्रीत्रयं तथा ॥
एवंविधि कृते वत्स ! तस्य पुत्रः प्रजायते ।

इति बहुपुत्रीप्रायश्चितम् । अथ गर्भपातप्रायश्चित्तम् ।

अरुण उवाच—

वैश्यभावे समुत्पन्नः कश्चित्पुरुषसत्तमः ।
संयुक्तो वातपित्ताभ्यां शिल्पकार्यकरः सदा ॥
कृषिकर्म प्रकुर्वाणो धनधान्यसमन्वितः ।
क्रयविक्रयकर्ता च कदाचिच्छ्लेश्मपीडितः ॥
तस्य भार्या महासाध्वी पतिभक्तिपरायणा ।
दानव्रतदयायुक्ता सुरूपा चारुहासिनी ॥
गर्भपातरता नित्यं कस्येदं कर्मणः फलम् ।

सूर्य उवाच—

वैनतेय ! महाबाहो ! शृणु तस्य विचेष्टितम् ॥
पूर्वं क्षत्रोत्तमो जातः कामक्रोधसमन्वितः ।
कृषिकर्म प्रकुर्वाणो व्यभिचाररतः सदा ॥

कदाचिद्दैवयोगेन सगर्भा गौः समागता ।
सस्यं वै खादयामास दृष्टा तेन दुरात्मना ॥
अतिवेगाद्धावमानः काष्ठमुद्यम्य यत्नतः ।
स चैनां ताडयामास प्रहारैरतिदारुणैः ॥
अतिघाताद्विनतेय ! गर्भः शिथिलतां गतः ।
दिनद्वये त्रये वाऽपि मृतो गर्भस्तु निःसृतः ॥
अतिकष्टान्मृता वत्स ! घातिता दुष्टबुद्धिना ।
अचिरेण मृतः सोऽपि तस्करेण विनाशितः ॥
पतितो नरके घोरे वर्षाणां च शतत्रयम् ।
पश्चान्मानुषमापन्नः किञ्चिद्धर्मप्रभावतः ॥
इदन्तु पञ्चमं जन्म गर्भपातसमन्वितम् ।
तेन कर्मविपाकेन वंशवृद्धिर्न जायते ॥

अरुण उवाच—

प्रायश्चित्तं कथं स्वामिन्येन गर्भः स्थिरो भवेत् ।
ममोपरि कृपां कृत्वा सत्यं कथय सुव्रत ! ॥

सूर्य उवाच—

एकवस्त्रविधानेन दम्पती स्नानमुत्तमम् ।
श्रवणं हरिवंशस्य एकचित्तेन मानद ! ॥
सगर्भा गौः प्रदातव्या स्वर्णमाषेन संयुता ।
अष्टोत्तरशतं विप्रान्मिष्टान्नेन तु तर्पयेत् ॥
मन्त्रैस्तु लक्षसंख्याकैः शिवं पूज्य प्रयत्नतः ।
सारस्वतस्य मन्त्रस्य जपं कुर्यात्प्रयत्नतः ॥
सुवर्णदक्षिणायुक्तं प्रायश्चित्तं प्रकारयेत् ।
इति विधौ कृते वत्स ! सन्तानं जायते ध्रुवम् ॥

इति गर्भपातप्रायश्चितम् । अथापुष्पवतीप्रायश्चितम् ।

अरुण उवाच—

वैश्यकुले समुत्पन्नो वायुपित्तसमन्वितः ।

शिल्पकार्यकरः श्रीमान्व्यापारे विषयान्वितः ॥
तस्य भार्या शुभाचारा व्रतानामनुकाङ्क्षिणी ।
भर्तृभक्तिपरा नित्यं सौभाग्यमदगर्विता ॥
अपुष्पवती च सा स्वामिन्कस्येदं कर्मणः फलम् ।

सूर्य उवाच—

भर्त्रा कर्म कृतं नैव स्त्रीकृतं नात्र संशयः ।
क्षत्रवंशे समुत्पन्ना कृपणा चारुहासिनी ॥
तया तत्र कृतं कर्म ब्रह्मस्वहरणं विभो ! ।
अपरं च कृतं कर्म ब्राह्मणस्य निवेशने ॥
सपुष्पा सफला वल्ली उत्खाता ईर्ष्यया तथा ।
पुष्पे नष्टे फलं नष्टं तस्मात्पुष्पं विशिष्यते ॥
भर्ता च वञ्चितः पूर्वं कामाधिकतया तया ।
इह जन्म तृतीयन्तु वैश्यवंशसमुद्भवम् ॥
पुष्पं नष्टन्तु तस्याश्च पूर्वकर्मप्रभावतः ।
ईषत्कृष्णं विवर्णं च कदाचित्तु प्रवर्तते ॥
मासद्वये त्रये वाऽपि न तेन फलभाग्भवेत् ।
पुरा कृतानि कर्माणि सुकृतं दुःकृतानि च ॥
इह जन्मनि भुञ्येत प्राणी नित्यं विशङ्कितः ॥

अरुण उवाच—

वृथाऽधान्यं गृहं स्वामिन्नपुत्रं जन्म निःफलम् ।
प्रायश्चित्तं कथन्देव ! येन पुष्पं प्रवर्तते ॥

सूर्य उवाच—

एकान्तरोपवासं च षण्मासं कश्यपात्मज ? ।
रक्तरोहितकं प्राप्य शर्करापयमिश्रितम् ॥
एकवासोविधिं पश्चाद्विप्राणां शतभोजनम् ।
दद्याद्वै शुभयोगे च वैधृतीव्यतिपातयोः ॥
पुष्पैस्तु लक्षसंख्याकैः शिवं सम्पूजयेत्ततः ।

स्वर्णधेनुश्च दातव्या सवत्सा सुरभिस्तथा ॥
सताम्रं कलशं चैव घृतेन परिपूरितम् ।
चन्द्रसूर्योपरागे तु विप्राय प्रतिपादयेत् ॥
वंशपात्री प्रकर्तव्या त्रयोदश विसंख्यया ।
कूष्माण्डीफलसंयुक्ता विप्रेभ्यः प्रतिपादयेत् ॥

इत्यपुष्पवतीप्रायश्चित्तम् । अथ वीरसिंहावलोके वन्ध्यादीनां सन्ततिजीवनार्थं गोदानविधिर्लिख्यते ।

चतुर्विधा तु या वन्ध्या भवेत्सा च वियोजनात् ।
पक्षे तस्याः प्रतीकारं तत्स्वरूपं निबोधयेत् ॥
हिरण्येन यथाशक्त्या सवत्सां कारयेद्दृढाम् ।
धेनुं पलेन वत्सश्च पादेन गुरुरब्रवीत् ।
धेनुं रौप्यखुरां रत्नन्तस्याः पुच्छे नियोजयेत् ॥
घण्टां गले च बध्नीयात्सवत्सां प्राङ्मुखः शुचिः ।
चन्दनागरुकर्पूरैर्गन्धमाल्यैः सुशोभनैः ।
उपचारैः षोडशभिर्नैवेद्यं पायसम्भवेत् ॥
मोदकं च तथाऽपूपं गुडं लवणमेव च ।
ब्राह्मणं सर्वशास्त्रज्ञं कुशलं धर्मवेदिनम् ॥
विद्याविभवसम्पन्नं शान्तं चैव जितेन्द्रियम् ।
अलोलुपं सर्वजनप्रियं कलुषनाशनम् ॥
आहूय भक्त्या सम्पूज्य वस्त्राद्यैर्गन्धपुष्पकैः ।
तेनैव कारयेत्पूजां पादतो धेनुवत्सयोः ॥
होमं च कारयेत्तत्र समिदाज्यचरूत्कटम् ।
सोमो धेनुरितिमन्त्रं समुच्चार्य ततः पुमान् ॥
प्राङ्मुखायोपविष्टाय प्रदद्याच्चामुदङ्मुखः ।
मन्त्रेणानेन विधिवत्पुटहस्तं विधाय च ॥
धेनुर्याऽङ्गिरसः सत्रे विष्णोः स्युः सुरभिश्च या ।

दुहिता या तथा भानोरग्नेश्च वरुणस्य च ॥
याश्च गावः प्रवर्तन्ते वनेषूपवनेषु च ।
प्रीणन्तु ता मम सदा पुत्रपौत्रैः सदा सुखम् ॥
प्रयच्छन्तु दिवारात्रावविच्छेदं च सन्ततेः ।

इति दानमन्त्रः ।

एवं दत्वा तु तद्दानं प्रणिपत्य विसर्जयेत् ।

इति वन्ध्यात्वहरसुवर्णधेनुदानविधिः । अत्र प्रसङ्गतो नराणां कर्मविपाका उच्यन्ते ।

अतः परं प्रवक्ष्यामि नृणां कर्म फलं शृणु ।
ऐहिकामुष्मिकं चिह्नं शुभाशुभविचेतनम् ॥
प्राप्नोति पुरुषो येन कर्मणा प्राक्तनेन च ।
काणाः कुब्जास्तथा व्यङ्गा निर्धना दुःखजीविनः ॥
षण्ढाः पाखण्डिनो नित्यं जायन्ते हीनजातिषु ।
नृशंसा नास्तिकाः पापाः परद्रव्यापहारिणः ॥
द्यूतकर्मरता मूर्खाः सदा पापरता नराः ।
हिंसकाः सर्वभूतानां ये नरा व्याधिपीडिताः ॥
ते सर्वे क्रमशोऽपुत्राः कर्मयुक्ताश्चिरं भुवि ।
यत्पापमकृतप्रायश्चित्तं निरययातनम् ॥
गदाधिव्याधिरूपेण बाधते तद्भवान्तरे ।
तत्र तत्रैव भोक्तव्यं यद्बहु स्याच्छुभाशुभम् ॥
तच्छेषेणेह भोक्तव्यं सुखं दुःखं च मानवैः ।
पापिनः परलोकेषु भुक्त्वा तास्ताश्च यातनाः ॥
कर्मभूमिगतास्तत्र लिङ्गिनो दुःखमाप्नुयुः ।
ब्रह्महा मद्यपस्तेयी तथैव गुरुतल्पगः ॥
महापातकिनोऽप्येते तत्संसर्गी च पञ्चमः ।

खरश्च कोलोष्ट्रमृगाऽविगोजद्विजान्त्यजातौ द्विजघातकृत्स्यात् ।

व्रजेत्सुरापः कृमिकीटहिंस्रः पुरीषभुग्याति रथादियोनिम् ॥
स्तेयी भवेद्धिंस्रपिशाचतिर्यग्जलस्थलानां सरटादियोनौ ।
क्रव्यादवल्लीतृणगुल्मदंष्ट्रिहिंस्रादियोनौ गुरुतल्पगः स्यात् ॥
संसर्गमेभिः कुरुते समेतैर्यः सोऽपि तत्साम्यमुपैति मर्त्यः ।
अभक्ष्यभक्षा अपि नीचनारीरता भवेयुः किल मांसभक्षाः ॥
परधनान्यपहृत्य पराङ्गनामभिनिषेव्य भवेत्किल राक्षसः ।
किमपि वस्तु परस्य हरन्बलात् समुपयाति पशुत्वमनेकशः ॥

आखुर्धान्यं हरन्सर्पिर्नकुलः सलिलप्लवः ॥
सारमेयो रसं क्षीरं हंसः क्षौमं तु दर्दुरः ।
जीवजीवोऽरुणं वासः कौशेयन्तु कपिञ्जलः ॥
क्रौञ्चः कार्पासजं पत्रशाकं बर्हिर्गुडं गुहः ।
दुग्धः काकं फलं गृध्रो मधु दंशो बको दधि ॥
गन्धाञ्छुछुन्दरी क्षीरी लवणं दहनं बकः ॥
पुण्डरीकं फलं पुष्पं मर्कटो वारि चातकः ।
दोषैरेभिः स्त्रियोऽप्येषां भार्याभावमवाप्नुयुः ॥

स्याद्विप्रहा कुष्ठगदी सुरापः स्यात्कृष्णदन्तः कनकापहारी ॥
दुःपाणिजः स्याद्गुरुतल्पगामी त्वग्रोगवान्सङ्गतिकृत्तु हीनः ॥

अयाज्ययाजको ग्रामशूकरो बहुयाजकः ।
खरो निमन्त्रभोजी स्यात्काक ओतुस्तु तर्जकः ॥
खद्योतस्तृणदाहकोऽथ वृषभः स्याद्दुष्टबुद्धिप्रदः
कुब्जः पर्युषितान्नदोऽथ फलहृत्स्यान्नष्टसत्सन्ततिः ।
रात्र्यन्धो बहुमत्सरी भवति जन्मान्धो हरन्पुस्तकम्
सर्पः स्याद्विषदोऽपरीक्षितगृहे भुञ्जन्भवेद्वानरः ॥

पूज्याङ्गनामभिलषन् कृकलासयोनिः
स्यात्तापसीगमनकृन्मरुगः पिशाचः ।
सर्पो निवाङ्भवति संवनितामभीप्सु-
रश्नन्नदन्भवति वै खलु दुष्प्रसूतिः ॥

मत्स्यः स्याज्जलसेतुभिद्बहुगदः स्यादन्यमांसाशनः
स्याद्दुष्टो नृपनायिकामभिलषञ्चौरस्तु विट्शूकरः ॥
आचार्यव्यसनं विधाय भवति श्वा तद्धनस्त्रीहर-
श्चक्रीशान्यपरकामिनीमभिलषन्स्याच्चित्रकायो वृषः ॥

भुञ्जानः स्याद्ब्राह्मणः श्वा मृताहे निन्दाहृत्स्यात्कच्छपो न्यासहर्ता ।
कीटः पित्रोर्दुःखदः स्यादथार्थं सङ्कल्प्य कृत्वाऽददानः शृगालः ॥
विश्वासघाती प्रणियाति वा चाण्डालान्तको देवलको वृषः स्यात् ।
पतिर्वृषल्याः पतितान्नवित्तः खरस्त्वमज्ञस्त्वमरण्यसस्यहृत् ॥

सखीजनगुरुस्त्रीणां धर्षकः कीटशूकरः ।
धर्षयन्कोकिलो भ्रातृजायां षण्ढस्तु सोदराम् ॥
देवपित्रतिथिभ्योऽन्नमदत्त्वाश्नंस्तु वायसः ।
यज्ञदानविदोबोधो निध्यादिद्रव्यहृत्क्रमिः ॥
ज्येष्ठावमाननात्क्रौञ्चः कृतघ्नो वृश्चिकः कृमिः ।
खरः शस्त्रैर्नरं हत्वा स्त्रीबालहननात्कृमिः ॥

भोज्यं हृत्वा मक्षिकाज्यं बिडालो श्येनो मांसं वालुकीं तन्तुहारी ।
पानं पंगुस्तित्तिरिर्मद्यमुर्वीं विष्ठाकीटो निर्द्धनः पुष्पहारी ॥
लोहं हृत्वा वायसः कांस्यचित्रो हारीतः स्यात्काञ्चनं कीरयोनिः ।
ताम्रं षण्ढः सीसकं नीलकण्ठस्त्रपुं कीटो रौप्यहृत्स्यात्कपोतः ॥

छित्वा मुष्कौ वृषस्यागणितनरकवानप्यधर्म्यं नृपत्वम्
सारत्वाद्याप्य कीटः कृमिरपि जलगः स्यात्पतङ्गश्च पत्री ।
चाण्डालो मुष्कसादी भवति च बधिरोऽन्धश्च पंगुश्च कुष्ठी
दुष्टो धातुक्षयी स्यान्मृतिमुखनयनव्याधिमान्पाण्डुरोगी ॥

होमं कुर्याद्योऽसमिद्धेऽनले स मन्दाग्निश्चारोचको जीर्णरोगी ।
जायामन्यस्याहरंस्तोयपाता हृत्वा षण्ढो मेहनाद्यार्तिमांश्च ॥

मूको वागपहारकोऽथ पिशुनः स्यादन्ननाशः खलः
तत्पश्वाखलिनि द्विजोत्तमसुराक्रोशी विषाग्निप्रदः ।

उन्मत्तोऽजगरोन्त्यजादिकलनागामी वधूपण्यभुक्
षण्ढस्तल्पहरो भवेत्क्षपणकी दायादहृत्कौशिकः ॥
दारत्यागी दुर्भगो देवविप्रद्रव्यस्तेयी पाण्डुकी राजयक्ष्मी ।
मित्रद्रोही शङ्खहृत्स्यात्कपाली मिष्टैकाशी वानरो वातगुल्मी ॥
छिन्नौष्ठः स्याद्विघ्नकर्ता विवाहे शूद्राचार्यः स्याच्छ्वपाको दरिद्रः ।
रत्नस्तेयी मातृगोघातकृत्स्यादन्धो रुद्रद्रव्यहृत्स्थूलजिह्वः ॥
न्यङ्कुर्विद्याविक्रयी दन्दशूको गोहर्ता स्यात्काष्ठहृत्काष्ठकीटः ।
हीनाङ्गः स्याद्दत्तवृद्धयादिजीवी चारो दासो मत्सरी षट्पदः स्यात् ॥
गोघ्नः कुष्ठी पाण्डुकी विप्रहन्ता शोषी भूपघ्नोऽतिसारी वनच्छित् ।
धूर्तोऽपस्मारी विषाग्निप्रदः स्यात्क्षत्ताऽपेयान्यापिबन्वीतरक्ती ॥
गुरुस्त्रीगमनान्मूत्रकृच्छ्रं च स्वकुले हयः ।
भगन्दरोऽथ पैशुन्याच्छ्वासकाशज्वरादयः ॥
भ्रामको भ्रमरोगी स्याच्छर्दिरोगी गरप्रदः ।
भूतघाती यकृत्प्लीही मन्दाग्निः स्यात्कदन्नदः ॥
परोपतापदः सूर्यपादरोगोऽध्वनि घ्नतः ।
शापाद्व्रणो यकृद्वाऽपि परतापाज्ज्वरादयः ॥
श्लीपदी कूटसाक्षी स्यादभक्षाशी गलव्रणी ।
वातशुष्कः स्नुषागामी दारत्यागी जलोदरी ॥
असन्ततिर्न्यासहृतेरजीर्णी परान्नवित्सङ्ग्रहणी तु चौर्यात् ।
स्याद्दुर्गतिः सेतुभिदम्बुदेवगेहादिविट्कृद्गुदजामयार्तिः ॥
बहुमूत्री रसान् हृत्वा कुनखी त्रपुसिध्मलः ।
रजतं चित्रकुष्ठी च हृतं ताम्रं विपादकी ॥
गन्धहृद्बर्बरो देहे क्षारहृत्स्वेदवान्भवेत् ।
दृष्टहृद्दुष्टचित्तः स्यादकुलो दन्तुलः खलः ॥
अनृतं ये वदन्तीह लोभान्मोहाच्च मत्सरात् ।
ते सर्वे दासतां यान्ति नीचसङ्गरतः पुनः ॥

साध्वीं ये धर्षयन्तीह अल्पायुष्टं लभन्ति ते ।
नरकान्ते भवन्तीह दीनाश्च सुखवर्जिताः ॥
पितुर्भार्यां गुरोः पत्नीं राजपत्नीं च ये नराः ।
कामतो ह्यभिगच्छन्ति ते भवन्ति नपुंसकाः ॥
स्वामिद्रोहरता ये च ते सर्वे निर्द्धना भुवि ।
ज्ञानापहारिणो ये च मूकास्ते ज्ञानघातकाः ॥
ये कुर्वन्ति विवादांश्च गुरुभिर्ब्राह्मणैः सह ।
ते भवन्ति नरा लोके दम्भमोहभ्रमातुराः ।
पिण्डालवर्तिनो ये च मार्ज्जारास्ते भवन्ति हि ॥
बकव्रता बकाश्चैव विक्रियाश्चैव दर्दुराः ।
यत्र तत्राशनः श्वानः श्येनाश्च कलहप्रदाः ॥
परसौख्यहरा ये च मृतभार्या भवन्ति ते ।
दुष्टभार्या भवन्तीह साध्वीनामपवादकाः ॥
गोविप्रमार्गं रुन्धन्हि पाण्याङ्घ्रिविकलो भवेत् ।
गोग्रासमुपजीवन्तः शुष्काङ्गाः स्मृतिवर्जिताः ॥
ब्राह्मणानामृषीणाञ्च मूढा ये नार्पयन्ति च ।
ग्रामशूकरमुख्यास्ते सिद्धान्ने ह्यरुचिर्भवेत् ॥
नरकान्ते भवन्तीह ते ये मस्तकरोगिणः ।
सम्प्राप्य विभवं तेऽत्र सर्वसौख्यबाहिष्कृताः ॥
मातरं पितरं बन्धून्पोषयन्ति न सर्वदा ।
अदत्तदानाश्च तथा देहि देहीति भाषिणः ॥
ये सर्वे सम्पदं प्राप्य विप्राग्निगुरुदैवताः ।
न तर्पयन्ति च पितॄँस्ते नरा दुःखभागिनः ॥
भार्यावियोगस्तस्य स्यात्तापसीं योऽभिगच्छति ।
स्त्रीहन्ता नियतं भूमौ स्त्रीदुःखेनातिदुःखभाक् ॥
अनिवृत्तिपरो नित्यं बालघाती मृतप्रजः ।
गोहन्ता गणिकापुत्रो जायते जन्मपञ्चकम् ॥

विप्रहन्ता च नरकान् जायते कुष्ठरोगवान् ।
सदाज्वरी भवेन्नित्यं देवविप्रावमानकः ॥
परोपतापनः शूलं हृद्रोगी जायते भुवि ।
गुदमैथुनात्भवेत्काकः कूर्चहीनः प्रजायते ॥
नरमैथुनकृन्नूनं कियत्कालं न पुंस्त्ववान् ।
कृतघ्नता निष्ठुरता खलत्वं चौर्यं च हिंसाद्यभिचारता च ॥
द्रोहोऽशुचित्वं कुमतिः कुसङ्गो लक्ष्मेह वाच्यं नरकागतानाम् ।
इत्याद्यं च बहु प्रोक्तं पुराकर्मजं यत्फलम् ॥
तस्मात्तद्दोषशान्त्यर्थं शास्त्रोक्तविधिमाचरेत् ॥

इति पुरुषस्य नानाविधकर्मविपाकफलम् । अथ स्त्रीणां कर्मविपाकफलम् । अरुण उवाच—

इति सामान्यतो दुष्टकर्मजं फलमीरितम् ।
विशेषतश्च नारीणां कर्मजं फलमीरयेत् ।

सूर्य उवाच—

रक्षेत्कन्यां तत्पिता यौवने स्याद्भर्ता पुत्रो वार्द्धके बान्धवो वा ।
भूपा वाऽपि स्वेन वा पालयेयुर्न स्वातन्त्र्यं योषितः क्वापि दृष्टम् ॥

या नारी मुक्तकेशा व्रजति च हसते सा सगोपुत्रबन्धु-
र्नश्येद्या शुभकर्मदानसुरते केशान्न सङ्गोपयेत् ।
केशाग्रोद्गतसङ्गतिर्भवति यत्केशाग्रभागान् पतिः
पश्येत्सा विधवा सुताद्यसुखभाङ्नार्योज्झिता स्वैरिणी ॥
या मूलानि फलानि या च कुमतिं दत्वा फलान्याहरे-
त्सा नूनं मृतवत्सकाऽथ जननीविश्लेषमत्यर्भकैः ।
याऽन्यासामनपत्यतां समधिकं वाञ्छत्यथो याऽन्वहं
गर्भघ्नौषधदानभाषणपरा वन्ध्याः स्युरेताः स्त्रियः ॥

या हन्ति बालान् स्वगर्भका सा मन्दप्रजा सा तनुतेऽतिचारम् ।
स्यात्काकवन्ध्या व्रतदानहीना कन्याप्रसूतिः पुरुषं द्विषन्ती ॥

वितन्वन्ती दैन्यं भवति कुलटा चाथ विधवा
निजप्राणेशानां हितमसुभगाऽनेकपतिका।
तथाऽशुद्धा भर्तर्यपरनरसङ्गैकरसिका
कुमार्य्येव त्कुज्यं (?) समयमथ वैधव्यविवशा॥
भर्तृघ्नी नरकान्भुक्त्वा शूकरी शुनकी खरी।
उष्ट्री च स्वजनत्यक्ता स्वपक्षकलिकारिणी॥

देवातिथीज्ये सुहृतो द्विजादिपित्रादिकान् या कपटा भजेत्सा
सुदुर्भगा स्यात् परसन्ततिन्तु द्वेष्ट्येव या साऽचिरसन्ततिः स्यात्।
स्त्रीपुंसयोः प्रेमविनाशदाना धवोज्झिता याऽथ तयोर्विरोधम्॥
करोति सा स्यात्कुलटाऽथ काकवन्ध्या भवेत्कुरुते गर्भपातम्।
या मिष्टमश्नाति पुरा विशीला सा स्यादयोग्या कुमतिं च दत्ते॥
सा दुर्भगा या विनिवारयेत्तु गर्भं न सा स्याद्वनिता न पूरुषः।
निशासु पात्राणि पूतानि न स्युर्यद्यालये सा विधवा विसौख्या॥
लभेत वैधव्यमधर्मशीला न सेवते या च पतिं तथा सा॥

याङ्गीकृतं नियममुत्सृजति स्वमौल्या-
त्सा पूंश्चली भवति मार्ज्जयते तु गेहम्।
अभ्युद्गते सवितरि स्वकुलार्थकीर्ति-
पश्वादिकं समुपयाति न वृद्धिमस्याः॥
यद्गेहं नकुलानुरागसहितं यच्चैव काष्ठोपल-
द्रव्याद्यैरभिपूरितं तुषकचाङ्गारैश्च भस्मान्वितम्।
सत्कारातिथिबन्धुमङ्गलयशोभूहव्यकव्योज्झितं
यच्च स्त्रीजितभर्तृकं हि सदनं यत्तज्झटिति नश्यति॥
आचारोज्झितमुत्सवादिरहितं विण्मूत्रपाताशुचि-
श्लेष्मोर्णाद्यभिजुष्टमिष्टरहितं दुष्टानृतोक्त्यान्वितम्।
लिप्तं गोरसपङ्कशैवलमलैः सम्मार्ज्जिताद्युज्झितं
लिङ्गश्वापदसेवितं वसनदं यत्तन्न सौख्याश्रयम्॥
एकादशगजं पञ्चमहिषं नवगोवृषम्।

सशाड्वं त्रिगवं गेहं यत्तज्झटिति नश्यति ॥
इत्यादिदोषनाशाय मङ्गलाचारयुक्तया ।
स्त्रिया भाव्यं सदा भर्तृपूजादिव्रतिनिश्चयम् ॥
सदाचारपरा नारी देवपित्रातिथिप्रिया ।
भर्तृभक्ता च लभते सुखानीह परत्र च ॥
दूतीं प्रव्रजितां धूर्तां पांसुलां विधवाङ्गनाम् ।
न कुर्वन्तीं सखीं कापि तथा प्रोषितभर्तृकाम् ॥
रजकीं पुष्पकालीं च नापितां गतभर्तृकाम् ।
एता न स्थापयेद्गेहे स्वैरिणीं बहुधामगाम् ॥
जागृयात्प्रथमं भर्तुरस्वप्ने न शयीत च ।
द्वेष्यान्प्रियान्हितान्भर्तुः सन्मित्राणि प्रपूजयेत् ॥
सपत्नीष्वपि कुर्वीत प्रेम तज्जनितेष्वपि ।
दासदास्यादिकान्काले यथायोग्यमुपाचरेत् ॥
नावमन्येत भर्तारं सदा तद्धितमाचरेत् ।
आहूता सर्वकार्याणि त्यक्त्वा तस्यान्तिकं व्रजेत् ॥

इति स्त्रीणां कर्मविपाकफलम् । अथ जातिवर्णनम् ।

तिथिं वारं च नक्षत्रं योगं करणपञ्चकम् ।
नामास्याष्टगुणं कृत्वा चतूराशिसमन्वितम् ॥
चतुर्विंशतिभिर्भागं वर्णानां तत्र कल्पना ॥

राजा १ तपस्वी २ स्वर्णकारो ३ विप्रो ४ वणिक् ५ वैश्य ६ श्चाण्डालो ७ भिल्लो ८ म्लेच्छः ९ कृषिकृत् १० हारी ११ चक्रीवान् १२ प्रजापतिः १३ स्वर्णकारो १४ रजकः १५ पशुम्लेच्छपः १६ कुनागो १७ वल्लीमहिष १८ स्तैलपायी १९ कुविन्दो २० वणिक् २१ आसुरवैद्यः २२ कलावान् २३ पारणश्च २४ एवमुक्ता जातयो मुनिना क्रमेण ॥

इति श्रीप्रथमशाखीयरामकृष्णविरचिते पारस्करगृह्यसूत्रविवरणे संस्कारगणपतौ कर्मविपाकफलं प्रायश्चित्तं समाप्तम् ॥

## ( चतुर्दशी कण्डिका )

**अथ पुꣳसवनं पुरा स्पन्दत इति मासे द्वितीये तृतीये वा यदहः पुꣳसा नक्षत्रेण चन्द्रमा युज्येत तदहरुपवास्याप्लाव्याहते वाससी परिधाप्य न्यग्रोधावरोहाञ्छुङ्गाँश्च निशायामुदपेषं पिष्ट्वा पूर्ववदासेचनꣳहिरण्यगर्भोऽद्भ्यः सम्भृत इत्येताभ्यां कुशकण्टकꣳसोमाꣳशुं चैके कूर्मपित्तं चोपस्थे कृत्वा स यदि कामयेत वीर्यवान्त्स्यादिति विकृत्यैनमभिमन्त्रयते सुपर्णोऽसीति प्राग्विष्णुक्रमेभ्यः ॥ १४ ॥**

**अथ पुंसवनम्** । अथावसरप्राप्तं पुंसवनाख्यं गर्भसंस्कारकं कर्म व्याख्यायते । "**अथ पुꣳसवनं पुरा स्पन्दत इति**" इति सूत्रम्। पुंसवनमिति गर्भसंस्कारकर्मणो नामधेयम् । यद्वा पुमान्सूयते येन कर्मणेति व्युत्पत्त्या गर्भस्य पुंरूपतापादकः कर्मविशेषः । तथा च शौनकः–

**पुमान्प्रसूयते येन तत्पुंसवनमीरितम्** ॥ इति ।

पुरा अग्रे स्पन्दते चलिष्यति "यावत्पुरानिपातयोर्लट्" इति भविष्यदर्थे वर्तमानप्रयोगः । अतः पुरा गर्भस्पन्दनाद्भवति । तथा च शङ्खः–

**पुरा तु स्पन्दनात्कार्यं सवनं तु विचक्षणैः** ॥ इति ।

तच्च कदा भवतीत्यपेक्षायामाह "**मासे द्वितीये तृतीये वा**" इति सूत्रम् । गर्भधारणकालाद्द्वितीये मासे तृतीये वा भवति, "**तृतीये-स्पन्दते तत**" इति योगीश्वरस्मरणात् । स्पन्दनात्पुरेति वदता द्वितीये वा तृतीये मासि पुंसवनं कर्तव्यमित्युक्तं भवति । तथा च जातूकर्ण्यः–

**द्वितीये वा तृतीये वा मासि पुंसवनं भवेत् ।**
**व्यक्ते गर्भे भवेत्कार्यं सीमन्तेन सहाथ वा** ॥ इति ।

अनेन द्वितीये गर्भास्पष्टतायां तृतीय इति सिध्यति । तथा च शौनकः–

**अथ पुंसवनं कुर्यात्तृतीये मासि पुंस्त्वदम् ।**
**गर्भोऽव्यक्तस्तृतीये चेच्चतुर्थे मासि वा भवेत्** ॥

गर्भव्यक्ततायाश्च लक्षणमुक्तं ज्योतिर्निबन्धे--

स्तनयोर्मुखकार्ष्ण्यं स्याद्रोमराज्युद्गमस्तथा ।
अक्षिपक्ष्माणि चाप्यस्याः सम्मील्यन्ते विशेषतः ॥
छर्दयेत्पथ्यभुक्तानि गन्धादुद्विजते शुभात् ।
प्रसेकवदनं चैव गर्भिण्या लिङ्गमुच्यते ॥

तथा च श्रुतौ "सद्यो गृहीतगर्भायाः श्रमो ग्लानिः पिपासा सक्थिस्पन्दनं शुक्रशोणितयोरनुबन्धः स्फुरणं च योन्या" इति। इदन्तु प्रथमगर्भे, द्वितीयादिगर्भेषु कालातिक्रमे स्पन्दितेऽपि कार्यमेव। तदुक्तं कारिकायाम्—

एतदेव पुरा गर्भचलनादकृतं यदि ।
सीमन्तात्प्राग्विधातव्यं स्पन्दितेऽपि बृहस्पतिः ॥

इदं स्वकाले असम्भवे अनादिष्टहोमपूर्वकं सीमन्तोन्नयनेन सह वा कार्यम्। इदं गर्भसंस्कारत्वात्प्रतिगर्भमावर्तनीयम्। वीरमित्रोदयः—

प्रतिगर्भमिदं कर्म कार्यं पुत्रीयताऽखिलम् ।
प्राशनस्पर्शकरणाद्गर्भस्थः संस्कृतो भवेत् ॥

गदाधरभाष्ये—

गर्भसंस्कार एवायमिति कर्कस्य सम्मतिः ।
अतस्तद्गर्भसंस्काराद्गर्भे गर्भे प्रयुञ्जते ॥

इति बह्वृचकारिकायामपि। केचित्तु "पुंसवनसीमन्तोन्नयने क्षेत्रसंस्काररूपत्वात्सकृदेव कार्ये" इत्यनेन पुंसवनस्य सकृत्करणत्वमुक्तम्, तन्नादरणीयम्,

अथ पुंसवनं वक्ष्ये प्राग्गर्भचलनाद्भवेत् ।

इतिवाक्यात्। गर्भचलनन्तु प्रतिगर्भं भवेत्। इदं च गुरुशुक्रास्ताधिमासादिष्वपि कार्यम्। द्वितीयेत्यादिना मासनियमात्। तथा च बृहस्पतिः—

मासप्रयुक्तकार्येषु मूढत्वं गुरुशुक्रयोः ।
न दोषकृत्तदा मासलक्षणो बलवानिति ॥

वृद्धिर्दास्यं पुंसवादि प्रेतकर्मानुमासिकम् ।
नित्यं मासाधिकेऽन्यत्तु सर्वदैवादि चोत्तरे ॥ इति ।

मासलक्षणः काल इति विशेषः। "यदहः पुंसा नक्षत्रेण चन्द्रमा युज्येत" इति सूत्रम्। यस्मिन्नहनि पुंसा पुरुषनाम्ना नक्षत्रेण चन्द्रमा युक्तो भवति तदहस्तस्मिन्दिने पुंसवनं कार्यम्। पुन्नक्षत्राणि रत्नके दर्शितानि—

पुन्नक्षत्राणि चैतानि तिष्यो हस्तः पुनर्वसुः ।
अभिजित्प्रौष्ठपाच्चैव अनुराधाऽश्वियुक्तथा ॥

तथा च ज्योतिर्निबन्धे—

हस्तो मूलः श्रवणः पुनर्वसुर्मृगशिरस्तथा पुष्यः ।
पुंसंज्ञेषु कार्येष्वेतानि शुभानि धिष्ण्यानि ॥

गर्गोऽपि—

कुर्यात्पुंसवनाख्यन्तु पुन्नामर्क्षे शुभे दिने ।
पुन्नाम श्रवणं तिष्यः स्वाती हस्तः पुनर्वसुः ॥
मूलं प्रौष्ठपदं चानुराधा मृगशिरोऽश्विनी ॥

अथ तिथयः। तत्र नृसिंहः—

रिक्ताश्च पर्व नवमीं त्यक्त्वा पुंसवने शुभाः ॥ इति ।

रिक्ताश्चतुर्थीनवमीचतुर्दश्यः। नवम्याः पुनरुपादानं दोषाधिक्यख्यापनाय। अथ वाराः। तत्र बृहस्पतिः—

गुरुशुक्रबुधेन्दूनां द्रेःकाणा दिवसांशकाः ।
तेषामुदयहोरा च पुंसवेऽतिशुभावहाः ॥ इति ।

लग्नानि बृहस्पतिः—

कुलीरं मिथुनं कन्यां हित्वा शेषाः शुभावहाः ।
अन्यस्मिश्चैव राशौ तु शुभं स्याच्छुभवीक्षिते ॥

वशिष्ठः—

अष्टमस्था ग्रहाः सर्वे नेष्टाः स्युस्ते शुभावहाः ।
एवं सम्यङ्निरीक्ष्यैव कुर्यात्पुंसवनक्रियाम् ।

गृह्यकारिकायाम्--

रविभौमेज्यवारेषु त्रिकोणस्थे शुभे ग्रहे ।
पुंलग्ने कण्टकस्थे च गुरौ क्रूरैर्विवर्जिते ॥

अथ चन्द्रबलविचारः--

विवाहगर्भसंस्कारे दम्पत्योः शशिनो बलम् ।
धवाभावेऽङ्गनावीर्यं भर्तुरेवान्यकर्मसु ॥

भर्तुरसम्भवे देवरादिना कर्तव्यम् । अत्राश्वलायनः—

पत्यौ मृते वा पतिते सन्न्यस्ते वा विदेशगे ।
तद्गोत्रजेन श्रेष्ठेन कार्याः पुंसवनादयः ॥

गुरुर्ज्येष्ठः । वंश्यः सपिण्डः । अथ कर्तव्यमाह "तदहरुपवास्याप्लाव्याहते वाससी परिधाप्य न्यग्रोधावरोहाञ्छुङ्गांश्च निशायामुदपेषं पिष्ट्वा पूर्ववदासेचनꣳ हिरण्यगर्भोऽद्भ्यः सम्भृत इत्येताभ्याम्" इति सूत्रम् । तदहस्तस्मिन्नेव दिने गर्भिणीमुपवास्य अभोजनं कारयित्वा अहते नवे सदशे सकृत्प्रक्षालिते वाससी अन्तरीयोत्तरीये द्वे परिधाप्य परिधानं कारयित्वा न्यग्रोधस्य वटस्य अवरोहान् अव अधः रोहन्तीति तथा तान् शुङ्गान् अग्रपल्लवान् सन्निधानाद्वटस्यैव । चकारः समुच्चयार्थः । ततश्चोभयं रात्रौ पूर्ववद्गर्भधारणार्थोक्तवत् पिष्ट्वा पूर्ववदेव आसेचनं भर्तुर्दक्षिणनासारन्ध्रे "हिरण्यगर्भः, अद्भ्यः सम्भृत" इति मन्त्राभ्यामृग्भ्याम् । "कुशकण्टकꣳ सोमाꣳशुञ्चैके" इति सूत्रम् । एके आचार्या न्यग्रोधावरोहशुङ्गेषु पिष्यमाणेषु कुशस्य कण्टकं मूलं सोमांशुं सोमलताखण्डं च प्रक्षिपन्ति । तत्पक्षे द्रव्यचतुष्टयस्य पेषणम् । काम्यमाह "कूर्मपित्तं चोपस्थे कृत्वा स यदि कामयेत वीर्यवान्त्स्यादिति विकृत्यैनमभिमन्त्रयते सुपर्णोऽसीति प्राग्विष्णुक्रमेभ्यः" इति सूत्रम् । सभर्त्ता यदि कामयेत अयं गर्भो वीर्यवान् शक्तिमान् भवतु, तदा अस्या भार्याया उपस्थे उत्सङ्गे अङ्के कूर्मपित्तं उदकपूर्णं शरावं निधाय विकृत्या विकृतिच्छन्दस्कया "सुपर्णोऽसी"त्यनया "स्वःपते"त्यन्तया एनं गर्भमभिमन्त्रयते । गर्भिण्या उदरं अनामिकाग्रेण स्पृशन् विलो-

कयित्वा वा मन्त्रं पठतीत्यर्थः । तदुक्तं कात्यायनेन —

**स्पृशन्ननामिकाग्रेण क्वचिदालोकयन्नपि ।**
**सर्वत्र मनुनोक्तेन सदैवमनुमन्त्रयेत् ॥ इति ।**

अभिमन्त्रानुमन्त्रयोर्न कश्चिद्विशेषः । विकृतेः प्रसिद्धत्वादाह "सुपर्णोऽसि गरुत्मा"नित्यारभ्य विष्णुक्रममन्त्रेभ्यः प्राक् पूर्वं यावद्विकृतेः परिमाणमित्यर्थः ।

**इति श्रीप्रथमशाखीयरामकृष्णविरचिते पारस्करगृह्यसूत्रविवरणे संस्कारगणपतौ प्रथमकाण्डे चतुर्दशी कण्डिका ॥**



**अथास्य स्पष्टप्रयोगः** । तत्र गर्भाधानप्रभृति मासे द्वितीये तृतीये वा यस्मिन्नहनि पुंसा नक्षत्रेण पुष्यादिना चन्द्रमा युज्येत तस्मिन्नहनि स्त्रियमुपवासं कारयेत् । अशक्तौ नक्तम् । देशकालौ स्मृत्वा **"अस्यां भार्यायां उत्पत्स्यमानगर्भस्य बैजिकगार्भिकदोषपरिहारपुरुषज्ञानोदयप्रतिरोधिपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थं पुंसवनं करिष्ये"** इति सङ्कल्पः । ततो मातृपूजापूर्वकं नान्दीश्राद्धं कृत्वा ततस्तां स्नापयित्वा अहते वाससी परिधाप्य ततो रात्रौ न्यग्रोधावरोहान् न्यग्रोधशुङ्गांश्च उदकेन पिष्ट्वा नासिकाया दक्षिणपुटे आसिञ्चति भर्ता । **"हिरण्यगर्भः, अद्भ्यः सम्भृतः"** इति मन्त्रावुक्त्वा दद्यात् । न्यग्रोधावरोहेषु न्यग्रोधाङ्कुरेषु पिष्यमाणेषु कुशकण्टकं सोमांशुञ्च तन्मध्ये प्रक्षिप्य पेषणमिच्छया, वस्त्रेण पातयित्वा नासिकायां क्षिपेदिति । स यदि कामयेतेच्छेत् वीर्यवान्स्यादयं गर्भस्तदा स्त्रिया अङ्के उदकपूर्णं शरावं निधाय अनामिकाग्रेण गर्भमभिमन्त्रयते **"सुपर्णोऽसि० स्वः पते"**त्यन्तेन मन्त्रेण । ततो दशब्राह्मणभोजनसङ्कल्पः ।

**इति श्रीप्रथमशाखीयरामकृष्णविरचिते पारस्करगृह्यसूत्रविवरणे संस्कारगणपतौ पुंसवनप्रयोगः ॥**



( पञ्चदशी कण्डिका )

**अथ सीमन्तोन्नयनं पुंसवनवत्प्रथमगर्भे मासे षष्ठेऽष्टमे वा तिलमुद्गमिश्रꣳ स्थालीपाकꣳ श्रपयित्वा प्रजापतेर्हुत्वा पश्चादग्नेर्भद्रपीठ उपविष्टायां युग्मेन सटालुग्रप्सेनौदुम्बरेण त्रिभिश्च दर्भपिञ्जुलैस्त्र्येण्या शलल्या वीरतरशङ्कुना पूर्णचात्रेण च सीमन्तमूर्द्ध्वं विनयति भूर्भुवः स्वरिति प्रतिमहाव्याहृतिभिर्वा त्रिवृतमाबध्नात्ययमूर्ज्जावतो वृक्ष ऊर्ज्जीव फलिनी भवेत्यथाह वीणागाथिनौ राजानꣳ सङ्गायेतां यो वाऽप्यन्यो वीरतर इति नियुक्तामप्येके गाथामुपोदाहरन्ति सोम एव नो राजेमा मानुषीः प्रजाः ॥ अविमुक्तचक्र आसीरꣳस्तीरे तुभ्यमसाविति यां नदीमुपावसिता भवति तस्या नाम गृह्णाति ततो ब्राह्मणभोजनम् ॥ १५ ॥**

अथ सीमन्तोन्नयनम् । अथ पुंसवनानन्तरं क्रमप्राप्तं सीमन्तोन्नयनं गर्भसंस्कारकं कर्म व्याख्यायते । सीमन्तः उन्नीयते यस्मिन् कर्मणि तत्सीमन्तोन्नयनमिति कर्मणो नामधेयम् । तदुक्तं सङ्ग्रहे--

त्रेण्या शलल्या दर्भेण उदुम्बरयवाङ्कुरैः ।
विभज्य तस्याः केशेषु मध्ये सीमन्तमुन्नयेत् ॥

तदनुष्ठाने कारणमाहाश्वलायनः--

पत्न्यां प्रथमजं गर्भमत्तुकामाः सुदुर्मदाः ।
आयान्ति काश्चिद्राक्षस्यो रुधिराशनतत्पराः ॥
तासां निरसनार्थाय श्रियमावाहयेत्पतिः ।
सीमन्तकरणी लक्ष्मीस्तामावहति मन्त्रतः ॥
स्त्रियः श्रितशरीरत्वात्तां त्यजन्तीह मोहिताः ।
अलक्ष्म्यो दुर्भगाः क्रूरा राक्षस्यः पिशिताशनाः ॥
गृष्टयः सम्प्रगृह्यन्ते पीड्यन्ते च विशेषतः ।
कासां चित्तादृशी वृत्तिर्ब्रह्मणा विहिता पुरा ॥

"पुंसवनवत्" इति सूत्रम्। 'अनेन यदहः पुंसा नक्षत्रेण चन्द्रसोमयोगस्तदहरुपवास्याऽऽप्लाव्याऽहते वाससी परिधाप्येति लभ्यते, न तु सर्वमिति' कर्कः। 'पुंसवनवदिति यदहः पुंसा नक्षत्रेण चन्द्रमा युज्येत तदहरित्यर्थ' इति भर्तृयज्ञः। "प्रथमगर्भे" इति सूत्रम्। एतत्सीमन्तोन्नयनं प्रथमगर्भे आद्यगर्भे भवति। आपस्तम्बः–"सीमन्तोन्नयनं प्रथमगर्भे चतुर्थमासीति"। साङ्ख्यायनगृह्येऽपि "सप्तमे मासि प्रथमगर्भे सीमन्तोन्नयनमिति"। आश्वलायनगृह्यपरिशिष्टेऽपि "प्रथमे गर्भे सीमन्तोन्नयनसंस्कारो गर्भमात्रसंस्कार" इति। गृह्यकारिकायाम्—

स्त्रियाः संस्कार एवायमिति हारीतदेवलौ ॥

हरिहरभाष्ये हारीतवचनम्--

सकृत्संस्कृतसंस्काराः सीमन्तेन द्विजस्त्रियः।
यं यं गर्भं प्रसूयन्ति स सर्वः संस्कृतो भवेत् ॥

कर्कोपाध्यायैस्तु 'प्रथमगर्भे मासे षष्ठेऽष्टमे वेतिसूत्रं योजयित्वा द्वितीयादिष्वनियम' इत्युक्तम्। ननु प्रथमगर्भ एव सीमन्तोन्नयने क्रियमाणे द्वितीयादिगर्भाणां तत्संकारलोपः स्यादिति चेन्नैवम्।

यं यं गर्भं प्रसूयन्ति स सर्वः संस्कृतो भवेत् ॥

इति हारीतवचनादाद्यगर्भे संस्कारे कृते सर्वगर्भाणा संस्कार इति न संस्कारलोपः। "मासे षष्ठेऽष्टमे वा" इति सूत्रम्। सीमन्तोन्नयनं गर्भधारणात् षष्ठे मास्यष्टमे वा भवति। वीरमित्रोदये वसिष्ठः—

चतुर्थे सप्तमे मासि षष्ठे वाऽप्यथ वाऽष्टमे ॥

मुख्यकालासम्भवे प्रसवात् प्राक् कार्यम्। तथा च कृष्णाजिनिः—

गर्भलम्भनमारभ्य यावन्न प्रसवस्तदा।
सीमन्तोन्नयनं कुर्याच्छङ्खस्य वचनं यथा ॥

तत्रापि असम्भवे प्रसवोत्तरं जातकर्मणः प्राक् कार्यम्।

प्रसवोत्तरकरणे बालकं पेटायां निक्षिप्य मातुरङ्के स्थाप्य कर्त्तव्यम्। गार्ग्यः--

यदि सीमन्ततः पूर्वं प्रसूता चेत्तु भामिनी।

तदानीं पेटके गर्भं स्थाप्य संस्कारमाचरेत् ॥

पेटके पेटिकायां गर्भं बालकम् । तथा च सत्यव्रतः--

स्त्री यदाऽकृतसीमन्ता प्रसवेत्तु कथञ्चन ।
पुत्रं गृहीत्वा विधिवत्पुनः संस्कारमर्हति ॥

पुनः संस्कारमतिक्रान्तसंस्कारमित्यर्थः । भर्तुरसम्भवे देवरादिना कर्तव्यम् । मासश्चात्र सौरसावनयोरन्यतरो गृह्यते । कालविधाने--

चतुर्थषष्ठाष्टममासि भाजि सौरेण गर्भे प्रथमे विधेयम् ।
सीमन्तकर्म द्विजभामिनीनां मासेऽष्टमे विष्णुबालें च कुर्यात् ॥

वसिष्ठः--

चतुर्थे सावने मासि षष्ठे वाऽप्यथ वाऽष्टमे ॥

अथ पक्षः । तत्र शौनकः--

शुक्लपक्षे तु पुल्लिङ्गनक्षत्रस्थे निशाकरे ॥

बृहस्पतिः--

पूर्वपक्षः शुभः प्रोक्तः कृष्णे चान्त्यात्रिकं विना ॥ इति ।

अन्तेऽवसाने भवमन्त्यम् । अन्त्यं च तात्रिकं चेति त्रयोदश्यादित्रिकमित्यर्थः । नारदः--

अरिक्तपर्वादिवसे कुर्याज्जीवार्कवासरे ॥

बृहस्पतिः--

पक्षच्छिद्रां च रिक्तां च विना पञ्चदशी शुभाः ।
चतुर्दशी चतुर्थी च कदाचित्स्युः शुभप्रदाः ॥

षष्ठ्यष्टमीद्वादश्यः पक्षच्छिद्राः । कालनिर्णये--

शुभसंस्थे निशानाथे चतुर्थी च चतुर्दशी ।
पौर्णमासीं प्रशंसन्ति के चित्सीमन्तकर्मणि ॥ इति ।

अथ वाराः । तत्र व्यासः--

पुरुषग्रहवाराः स्युः शुभाः सीमन्तकर्मणि ।
मध्यौ स्त्रीग्रहवारौ तु वर्जयेत्तु नपुंसकौ ॥

पुंग्रहा रविभौमगुरवः । स्त्रीग्रहौ सोमभृगू । नपुंसकौ शनिबुधौ ।

अथ नक्षत्राणि । तत्र बृहस्पतिः--

रोहिण्यैन्दवमादित्यपुष्यहस्तोत्तरात्रयम् ।
पौष्णं वैष्णवभं चैव सीमन्ते दश संस्मृताः ॥

रात्रिनिषेधे विशेषमाह नारदः--

विप्रक्षत्रिययोः कुर्याद्दिवा सीमन्तकर्म तत् ।
वैश्यसच्छूद्रयोरेतद्दिवा निश्यपि केचन ॥

नृसिंहः--

केन्द्रत्रिकोणपुत्रस्था ग्रहाः सर्वे शुभावहाः ।
त्रिषडायगताः पापाः शुभाः सीमन्तकर्माणि ॥
लग्नादष्टमराशीशः केन्द्रगः शुभवीक्षितः ।
यद्यप्यष्टमभस्योक्तं दोषमाशु व्यपोहति ॥

वसिष्ठः--

मासे मासे मासपादिग्रहाणां शान्तिं कुर्याच्छान्तिवाक्यैर्जपैश्च ।
होमैर्दानैः सज्जनानां च वाक्यैर्गर्भं सम्यग्रक्षयेत्पुत्रकामी ॥

मासेश्वराः सित१कुजे२ज्य३रवी४न्दु५सौर६-
चन्द्रात्मजा७स्तनुप८चन्द्र९दिवाकराः१०स्युः ॥ इति ।

"तिलमुद्गमिश्रꣳस्थालीपाकꣳश्रपयित्वा प्रजापतेर्हुत्वा" इति सूत्रम् । तिलैर्मुद्गैर्मिश्रस्तिलमुद्गमिश्रस्तं स्थालीपाकमोदनचरुं श्रपयित्वा, तथा च रेणुः--

तण्डुलान्प्रक्षिपेत्स्थाल्यां तिलमुद्गसमन्वितान् ।
चरुं संश्रपयेन्मुद्गतिलयोर्न प्रधानता ॥
अन्तरा ना उपेक्ष्यैव ? मिश्रणस्योपदेशतः ॥

आज्यभागानन्तरं "प्रजापतये स्वाहे"त्येकामाहुतिं हुत्वा स्थालीपाकेनैव स्विष्टकृदाहुतिं हुत्वा दक्षिणादानान्तं विदध्यात् । "पश्चादग्नेर्भद्रपीठ उपविष्टायां" इति सूत्रम् । अग्नेः पश्चिमतो भर्तुर्दक्षिणतो मृदुपीठे आसीनायां गर्भिण्यां सत्याम् । अथ पीठलक्षणमाह--

श्रीपर्णीरचितं रम्यं हस्तमात्रायतं शुभम् ।

अरत्निविस्तृतं पीठं विचित्रासनमुच्यते ॥
शाकदारुमयं भव्यं दृढ श्लक्ष्णं सुविस्तृतम् ॥ इति ।

'भद्रपीठशब्दो गोमयपीठे चतुरस्रे प्रसिद्ध' इति भर्तृयज्ञः । "युग्मेन सटालुग्रप्सेनौदुम्बरेण त्रिभिश्च दर्भपिञ्जुलैस्त्र्येण्या शलल्या वीरतर-शङ्कुना पूर्णचात्रेण च सीमन्तमूर्ध्वं विनयति भूर्भुवः स्वरिति" इति सूत्रम् । ततो भर्ता औदुम्बरेणौदुम्बरवृक्षोद्भवेन युग्मेन द्व्यादियुग्मफल-वता सटालुग्रप्सेन—अपक्वफलैकस्तबकनिबद्धेन । सटालुरिति अपक्वफल नामाख्या । ग्रप्सः स्तबकसङ्घातः । युग्मानि एकस्तबकनिबद्धानि औदु-म्बरफलानि तेन । तथा च गृह्यकारिकायाम्—

औदुम्बरफलं युग्मद्वयमेकत्र संयुतम् ॥

औदुम्बरस्तबकाभावेऽन्यवृक्षस्तबको ग्राह्यः । तदुक्तं वीरमित्रोदये कारिकायाम्—

औदुम्बरस्य स्तबकस्तदभावेऽन्यवृक्षजः ॥ इति ।

त्रिभिर्दर्भपिञ्जुलैः त्रिभिर्दर्भपवित्रैः । परिशिष्टे—

एतत्प्रमाणके वैके कौशिमे वाऽर्द्रमञ्जरी ॥
शुष्का वा शीर्णकुसुमा पिञ्जुली परिचक्षते ॥

त्र्येण्या शलल्या त्रिषु स्थानेषु एता त्र्येणी तया त्र्येण्या शलल्या शलल्याख्यपक्षिकण्टकेन शल्यकरोम्णा वा ।

श्वावित्तु शल्यस्तल्लोम्नि शलली शललं शलम् ॥

इति त्रिकाण्डीस्मरणात् । वीरतरशङ्कुना वीरतरस्त्रिविधः "बि-ल्वोऽश्वत्थःशिरीषक" इति । कारिकाकारमते बिल्ववृक्षोद्भवः । तथा च—

शङ्कुः श्रीवृक्षजः पूर्णचात्रं मृदु तथासनम् ॥ इति ।

शर इति जयरामः । तथा चोक्तम्—

शिरीषिकोऽथ वा शङ्कुः कातीयपरिशिष्टतः ॥ इति ।

कर्कमते—

अश्वत्थवृक्षः पलितः शमीगर्भसमुद्भवः ।
अग्निहोत्रक्रिया येन स वै वीरतरः स्मृतः ॥

खादिरः शङ्कुरिति गर्गपद्धतौ । पूर्णचात्रेण सूत्रकर्तनसाधनभूतो लोष्टकीलकः तर्कुरपरपर्यायश्चात्रं सूत्रपूर्णं तेन। चकारः सर्वसमुच्चयार्थः । अतश्चौदुम्बरयुग्मादिभिः पञ्चकैः सर्वैः पुञ्जीकृतैः स्त्रियाः सीमन्तमूर्ध्वं विनयति केशललाटयोः सन्धिमारभ्य ऊर्ध्वं केशान् पृथक् करोति द्विधा करोति । सीमन्तशब्दो व्याख्यातोऽभिधानग्रन्थे—

**सीमन्तः कथ्यते स्त्रीणां केशमध्ये तु पद्धतिः** ॥ इति ।

"**भूर्भुवः स्व**"रिति मन्त्रेण सकृदेव साकाङ्क्षत्वाद्विनयामीत्यध्याहारः । पक्षान्तरमाह—"**प्रतिमहाव्याहृतिभिर्वा**" इति सूत्रम् । विनयनं सीमन्तस्य कार्यमित्यर्थः। अत्रापि चाध्याहारः । स चैवम्—"**भूर्विनयामि भुवो विनयामि स्वो विनयामि**" । "**त्रिवृतमाबध्नाति**"इति सूत्रम् । त्रिभिर्वृत्यते ग्रथ्यते इति त्रिवृत् वेणी तां प्रत्यौदुम्बरादिपञ्चकमाबध्नाति भर्ता—"**अयमूर्जावतो वृक्ष उर्जीव फलिनी भवे**"ति सूत्रमन्त्रेण । मन्त्रार्थः—हे सीमन्तिनि ! यतोऽयमूर्जावान्वृक्ष इति शेषः। अस्य चोर्जावतो वृक्षस्य ऊर्जीव सफलशाखेव फलिनी भव । "**अथाह वीणागाथिनौ राजानꣳ सङ्गायेतां यो वाऽप्यन्यो वीरतर इति**"इति सूत्रम्। अथ वेण्यां बन्धनानन्तरं वीणां गृहीत्वा गाथागायिनौ प्रति ब्रवीति यजमानः। हे वीणागाथिनौ! राजानं भूपतिं सङ्गायेतां युवाम् । ततश्च तौ ब्राह्मणावेव वीणागाथिनौ राजसम्बन्धि सोत्साहौ गायतः । यजमानः करसम्पुटं कृत्वा जपेदितिगङ्गाधरः । अथ वा योऽन्योऽपि राजव्यतिरिक्तो वीरतरः प्रकृष्टो वीरस्तं सङ्गायेतामित्यनुषङ्ग इत्याह ब्रवीति । "**नियुक्तामप्येके गाथामुपोदाहरन्ति सोम एव नो राजेमा मानुषीः प्रजाः । अविमुक्तचक्र आसीरंस्तीरे तुभ्यमसाविति**"इति सूत्रम् । एक आचार्या नियुक्तां गाने विहितां गाथां मन्त्रं सोम एव नो राजेति उदाहरन्त्युप समीपे गायन्ति । एके नेति । अतश्च विकल्पः। अपिः समुच्चयार्थः । ततो गाथागानपक्षे राजसम्बन्धि वीरतरसम्बन्धि वा गानं गाथागानं च द्वयं भवति । केषांचिन्मते राजवीरतरयोरन्यतरगानं गाथागानं वा । पद्धतिकारमते राजवीरतरगाथानाम-

न्यतमस्य गानम् । असावित्यत्र नामादेशः । गाथागानमपि वीणागाथिनौ कुरुतः । मन्त्रार्थः—सोमश्चन्द्रः नोऽस्माकं प्रजानां राजा प्रभुः । अत इमाः प्रजा मानवीर्मानुष्यः सौम्याः हि गङ्गादिनद्यस्तुभ्यं तव सोमरूपायास्तीरे आसीरन् त्वामाश्रित्य स्थिताः । किम्भूते तीरे—अविमुक्तचक्रे अनुल्लङ्घितशास्त्रे । अतो भवद्भ्यां पातव्या इत्यर्थः । "**यां नदीमुपावसिता भवति तस्या नाम गृह्णाति**" इतिसूत्रम् । असावित्यत्र च सीमन्तिनी यां नदीमुप समीपे आवसिता भवति । तस्या नद्या गाथागानकर्ता गङ्गे यमुने इत्येव नाम गृण्हाति । "**ततो ब्राह्मणभोजनम्**" इति सूत्रम् । व्याख्यातञ्चैतत् । अत्र भोजने प्रायश्चित्तमुक्तं पाराशरमाधवीये—

**धौम्ये ब्रह्मौदने चैव सीमन्तोन्नयने तथा ।**
**जातकर्म नवश्राद्धे भुक्त्वा चान्द्रायणं चरेत् ॥**

इदं च कर्माङ्गब्राह्मणभोजनविषयं न त्विष्टकुटुम्बादिभोजनविषयमिति मुरारिमिश्राः । चतुर्थेऽहनि मातृविसर्जनम् । अन्यत्र कर्मान्ते । उक्तं च—

**विवाहादिषञ्चसु च चतुर्थेऽन्हि विसर्जनम् ॥ इति ।**

मातॄणामिति शेषः । विसर्जन यावत्पारम्पर्यनियमयुक्तैर्भवितव्यम् , इति वासुदेवपद्धतौ । श्रीवत्सभट्टकृतवाक्यसङ्ग्रहेऽप्येवम् । गङ्गाधरपद्धतावप्येवमेव ।

**इति श्रीप्रथमशाखीयरामकृष्णविरचिते पारस्करगृह्यसूत्रविवरणे संस्कारगणपतौ प्रथमकाण्डे पञ्चदशी कण्डिका समाप्ता ॥**

---

**अथ स्पष्टप्रयोगः** । मङ्गलस्नापितां परिहितप्राकृतामहतवस्त्रपरिधानामलङ्कृतां पत्नीं बहिःशालायां स्वदक्षिणत उपवेश्य देशकालौ स्मृत्वा "**मम भार्यायास्तनुरुधिरप्रियालक्ष्मीभूतराक्षसीगणदूरानिरसनक्षेम सकलसौभाग्यनिदानभूतमहालक्ष्मीसमावेशनद्वारा प्रतिगर्भं बीजगर्भसमुद्भवैनोनिबर्हणाजनकातिशयद्वारा च परमेश्वरप्रीत्यर्थं स्त्रीगं-**

स्काररूपं सीमन्तोन्नयनाख्यं कर्म करिष्ये" इति सङ्कल्पः । "पुण्याहवाचनपूर्वकं मातृकापूजनं नान्दीश्राद्धञ्च करिष्ये । निर्विघ्नार्थं गणपतिपूजनमहं करिष्ये" । सर्वं सम्पाद्य ततो बहिःशालायां पञ्चभूसंस्कारान् कृत्वाऽग्निमुपसमाधाय, ततो वैकल्पिकावधारणम् "तत्र पूर्वेण ब्रह्मणो गमनम् । उत्तरेण पात्रासादनम् । द्वे पवित्रे । ताम्रमयी आज्यस्थाली । ताम्रमयी चरुस्थाली । पालाश्यः समिधः । प्राञ्चावाघारौ । समिद्धतमे आज्यभागौ । पूर्णपात्रं दक्षिणा । प्रतिमहाव्याहृतिभिर्विनयनम् । निरुक्तगाथागानम्—एतान्वैकल्पिकपदार्थानहंकरिष्ये" ॥ अथ देवताभिध्यानम् । "प्रजापतिमिन्द्रमग्निं सोममाज्येन, प्रजापतिं चरुणा अग्निं स्विष्टकृतं शेषेण, अग्निं वायुं सूर्यमग्नीवरुणौ अग्नीवरुणौ अग्निं वरुणं सवितारं विष्णुं विश्वान्देवान् मरुतः स्वर्कान् वरुणं प्रजापतिमेता अङ्गप्रधानार्थदेवता अस्मिन्कर्मण्यहं यक्ष्ये" ॥ ब्रह्मोपवेशनाद्याज्यभागान्तं विदध्यात् । तत्र पात्रासादने विशेषः । आज्यानन्तरं तण्डुलतिलमुद्गानां क्रमेण पृथगासादनम् । उपकल्पनीयानि "मृदुपीठम् । युग्मान्यौदुम्बरफलानि एकस्तबकनिबद्धानि । त्रयो दर्भपिञ्जुलाः । त्र्येणी शलली । वीरतरशङ्कुः । पूर्णचात्रम् । वीणागाथिनौ चेति" । आज्यमधिश्रित्य चरुस्थाल्यां मुद्गान्प्रक्षिप्याधिश्रित्य ईषच्छृतेषु मुद्गेषु तिलतण्डुलानां युगपत्प्रक्षेपः । पर्यग्निकरणमुभयोः । तत्राज्यभागान्ते स्थालीपाकेन "ॐ प्रजापतये स्वाहा । इदं प्रजापतये न मम" स्थालीपाकेनोत्तरार्धात्, "ॐ अग्नये स्विष्टकृते स्वाहा । इदमग्नये स्विष्टकृते न मम" । ततो महाव्याहृत्यादिप्रजापत्यान्ता नवाहुतीर्हुत्वा ततः संस्रवप्राशनम् । पूर्णपात्रं ब्रह्मणे दत्वाऽग्नेः पश्चात् मृदुपीठे गर्भिणीमुपवेशयेत् । ततो युग्मेन सटालुग्रप्सेनौदुम्बरेण त्रिभिर्दर्भपिञ्जुलैस्त्र्येण्या शलल्या वीरतरशङ्कुना पूर्णचात्रेण चैतैरेभिः सर्वैः पुञ्जीकृतैः स्त्रियाः समिन्तमूर्ध्वं विनयति "ॐ भूर्भुवः स्व" रिति मन्त्रेण सकृत । यद्वा "भूर्विनयामि । भुवर्विनयामि । स्वर्विनयामि" इति त्रिर्विनयति । तत औदुम्बरादिपञ्चकस्य वेण्यां

बन्धनम् । "ॐ अयमूर्ज्जावतो वृक्ष उर्ज्जीव फलिनी भवे"ति मन्त्रेण ।

अथ "वीणागाथिनौ सोमं राजान गायेता"मिति प्रैषं ददाति । प्रेषिते सति "ॐसोम एव नो राजेमा मानुषीः प्रजाः । अविमुक्त-चक्र आसीरँस्तीरे तुभ्यमसा"वित्यनया वीणागाथिनो गानम् । असौ-स्थाने समीपस्थिताया नद्या नामग्रहणम् । गङ्गा इत्येवमादिप्रथमान्तनाम-ग्रहणं गर्भिणी करोति । ततो ब्राह्मणभोजनम् । "सीमन्ताख्यकर्मणः साङ्गतासिद्ध्यर्थं स्मृत्युक्तान् दशसंख्याकान् ब्राह्मणान् भोजयिष्ये" ब्राह्मणेभ्यो दक्षिणां दद्यात् । नमस्कृत्य क्षमापयेत् । वीणागाथिभ्यां च व-स्त्रादिकं दद्यात् । अन्येभ्यो याचकेभ्यश्च भूयसीं दक्षिणां दद्यात् । चतु-र्थेऽहनि मातृकाविसर्जनम् । विवाहादिपञ्चसु चतुर्थेऽहनि विसर्जनमन्यत्र कर्मान्ते, इति वासुदेवपद्धतौ । पतिपुत्रवतीभिर्वृद्धाभिरुपदिष्टं मङ्गलाचारं कुर्यात् ।

इति श्रीप्रथमशाखीयरामकृष्णविरचिते गृह्यसूत्रविवरणे संस्कारगणपतौ सीमन्तोन्नयनप्रयोगः ॥

---

अथ विष्णुबलिः । तत्र वसिष्ठः—

मासेऽष्टमे च गर्भस्य कुर्याद्विष्णोर्बलिक्रियाम् ॥ इति ।

अथात्र तिथयः । वशिष्ठः—

द्वितीया सप्तमी चैव द्वादशी च शुभा तिथिः ॥

अथ वाराः । स एव—

शुभग्रहोदयाः श्रेष्ठास्तेषां च दिवसा अपि ॥

उदया लग्नानि । दिवसा वाराः । नक्षत्राणि वीरमित्रोदये—

श्रवणे चैव रोहिण्यां पुष्ये चैव प्रशस्यते ॥

श्रीधरोऽपि—

रोहिण्यां वा वैष्णवे पूर्वपक्षे द्वादश्यां वा सप्तमे वा तिथौ च ।
मध्ये वाऽह्नः पूर्वभागे न रात्रौ विष्णोः पूजां कारयेद्गर्भपुष्ट्यै ॥

एतदनुष्ठाने कारणमाह आश्वलायनः—

तथा विष्णुबलिश्चापि सप्तवध्रेषु पुष्टये ।
प्रातगर्भे बलिः कार्यः सीमन्तश्च प्रशस्यते ॥
अकृते च भवेद्दोषः कृते पुष्टिं समृच्छति ।
गर्भबाधानिवृत्त्यर्थं सुखसूत्यर्थमेव च ॥
महादोषापनुत्त्यर्थं बलिः कार्यो यथाविधि ॥

सप्तवध्राः सप्तधातवः । एतद्विधिमाह वीरमित्रोदये वशिष्ठः—

बलिः प्रवक्ष्यते सम्यग्घितार्थाय क्रियावताम् ।
तौ तु सन्मङ्गलस्नातौ दम्पती अहताम्बरौ ॥
भवेतां पूर्वदिवसे नान्दीश्राद्धादयस्तथा ।
प्राङ्गणेऽग्निं समाधाय सुमुहूर्ते गृहेऽथ वा ॥
घृतैर्हुत्वाऽऽज्यभागान्तं स्थण्डिले वाऽर्चयेद्धरिम् ।
पद्मस्थं स्वस्तिकस्थं वा समभ्यर्च्य निवेद्य च ॥
अग्नेर्दक्षिणतः कुर्यात्स्थण्डिले यजनं हरेः ।
विना स्थण्डिलयोगेन केचिज्जुह्वति च द्विजाः ॥
आज्याक्तेनैव चरुणा वक्ष्यमाणैर्हुनेत्पतिः ।
अतो देवा इति चरुं तस्मिन्नग्नावधिश्रितम् ॥
षड्भिर्विष्णोर्नुकाद्यैश्च दशभिः सप्तभिर्हुनेत् ।
संवामित्यष्टभिर्ऋग्भिश्चतुर्दशभिरेव च ॥
पर इत्यथ सूक्तेन पौरुषेण विचक्षणः ।
हुनेदादावथान्ते वा विष्णोर्योनिमिति त्रिभिः ॥
चतुःषष्टिभिरन्नेन हुनेदेवं च लौहने ।
अग्नेः प्रागुत्तरे भागे लिप्त्वा गां गोमयेन तु ॥
सितेन रजसा कुर्याच्चतुरस्रं चतुःपदम् ।
चतुःषष्टिपदं तस्मिन्कृत्वा स्पष्टं यथाविधि ॥
चतुरङ्गुलमानेन प्रतिप्रति ततो बलिः ।
निर्ऋत्यादिषु तेष्वन्नैस्तैर्मन्त्रैर्विकिरेद्बलिम् ॥
पिण्डमेकं च तन्मध्ये दद्यादर्घ्यं च विष्णवे ।

नमो नारायणायेति ताराद्यं मन्त्रमुच्चरन् ॥
दम्पती प्राशयेतां च पृथक् पिण्डद्वयं शुभम् ।
स्वयं कर्ता चरेत्कर्म पत्न्या स्पृष्ट इति द्विजाः ॥
ततः स्विष्टकृतं हुत्वा होमशेषं समापयेत् ।
दक्षिणां गुरवे दत्त्वा भुञ्जीयातां द्विजैः सह ॥
बलिरेवं प्रकर्तव्यः प्रतिगर्भं द्विजातिना ॥ इति ।

अस्य च गर्भपुष्टिफलश्रवणात्प्रतिगर्भमावृत्तिश्रवणाच्च स्पष्टमेव गर्भसंस्कारत्वम् ॥

इति श्रीप्रथमशाखीयरामकृष्णविरचिते पारस्करगृह्यसूत्रविवरणे संस्कारगणपतौ विष्णुबलिः ॥

अथ प्रसङ्गात् गर्भिणीधर्माः । वीरमित्रोदये पाद्मे—

नावस्करेषूपविशेन्मुसलोलूखलादिषु ।
जलं च नावगाहेत शून्यागारं च वर्जयेत् ॥
वल्मीकं नाधितिष्ठेत न चोद्विग्नमना भवेत् ।
विलिखेन्न नखैर्भूमिं नाङ्गारेण च भस्मना ॥
न शयालुः सदा तिष्ठेद्व्यायामं च विवर्जयेत् ।
न तुषाङ्गारभस्मास्थिकपालेषु समाविशेत् ॥
वर्जयेत्कलहं गेहे गात्रभङ्गं तथैव च ।
न मुक्तकेशा तिष्ठेत नाशुचिः स्यात्कदाचन ॥
न शयीतोत्तरादिशि नचैवाधःशिराः क्वचित् ।
न वस्त्रहीना नोद्विग्ना नचार्द्रचरणा तथा ॥
नामङ्गल्यं वदेद्वाक्यं न च हास्याधिका भवेत् ।
कुर्याच्छ्वशुरयोर्नित्यं पूजां माङ्गल्यतत्परा ॥

अवस्करः—उत्करः । मत्स्यपुराणे—

सन्ध्यायां नैव भोक्तव्यं गर्भिण्या वरवर्णिनि ? ।
न स्थातव्यं न गन्तव्यं वृक्षमूले च सर्वदा ॥

न शयाना सदा तिष्ठेद्वृक्षच्छायां विवर्जयेत् ।
सर्वौषधीभिः कोष्णेन वारिणा स्नानमाचरेत् ॥
कृतरक्षा सुभूषा च वास्तुपूजनतत्परा ।
दानशीला तृतीयायां पार्वत्या नक्तमाचरेत् ॥
गर्भिणी कुञ्जराश्वादिशैलहर्म्यादिरोहणम् ।
व्यायामं शीघ्रगमनं शकटारोहणं त्यजेत् ॥
शोकं रक्तविमोक्षं च साध्वसं कुक्कुटासनम् ।
व्यवसायं दिवास्वापं रात्रौ जागरणं त्यजेत् ॥
इतिवृत्ता भवेन्नारी विशेषेण तु गर्भिणी ।
यश्च तस्यां भवेत्पुत्रः स्थिरायुर्वृद्धिसंयुतः ॥
अन्यथा गर्भपतनमवाप्नोति न संशयः ॥

अथ गर्भिणीपतिधर्माः । तत्र याज्ञवल्क्यः—

दौहृदस्याप्रदानेन गर्भो दोषमवाप्नुयात् ।
वैरूप्यं निधनं वाऽपि तस्मात्कार्यं स्त्रियः प्रियम् ॥

पत्येति शेषः । संग्रहेऽपि—

गर्भिणीवाञ्छितं द्रव्यं तस्यै दद्याद्यथोचितम् ।
सूते चिरायुषं पुत्रमन्यथा दोषमर्हति ॥

आश्वलायनः—

वपनं मैथुनं तीर्थं वर्जयेद्गर्भिणीपतिः ।
श्राद्धं च सप्तमान्मासादूर्ध्वं चान्यत्तु वेदवित् ॥

मैथुनं गर्भिण्याम् । तीर्थं तीर्थयात्राम् । श्राद्धं श्राद्धभोजनम् । अन्यच्छवानुगमनादि । तथा च हारीतः-

क्षौरं च तीर्थयात्रां च श्राद्धभोजनमेव च ।
मासात्तु सप्तमादूर्ध्वं वर्जयेद्गर्भिणीपतिः ॥

वीरमित्रोदयेऽपि—

सिन्धुस्नानं द्रुमच्छेदं वपनं प्रेतवाहनम् ।
विदेशगमनं चैव न कुर्याद्गर्भिणीपतिः ॥

तथा च—

अन्तर्वत्न्यां तु जायायां तीर्थे क्षौरं न कारयेत् ।
प्रेतदाहादिकं चैव सीमन्तोन्नयनादनु ॥

क्षौरं क्षुरसाध्यं कर्म, तदेव वपनं मुण्डनं चोच्यते । यत्तु—

वपनस्य निषेधे तु कर्त्तनं च विधीयते ॥

इति स्मृत्यन्तरवचनं तद्गर्भिणीपतिव्यतिरिक्तानां जीवत्पितृकादीनां यो वपननिषेधः तत्र कर्तनविधानम् ।

पश्चाच्छ्राद्धायनात्पूर्वं क्षौरं नैमित्तिकं विना ।
न कुर्यात्तत्तदूर्ध्वं तु स्वेच्छया वपनं चरेत् ॥

प्रेतकर्मनिषेधापवादः । वीरमित्रोदये—

क्षौरं नैमित्तिकं कुर्यान्निषेधे सत्यपि ध्रुवम् ।
पित्रोः प्रेतविधानञ्च गर्भिणीपतिराचरेत् ॥

चतुर्थमासिकसीमन्तोन्नयनादनन्तरं निषेधपरिपालनं मुख्यः कल्पः । तत्राऽनुकल्पोऽयं "मासात्तु सप्तमादूर्ध्वं"मिति । अथ प्रसङ्गात्सूतिकागृहनिर्माणविधिः । तच्च नवमे मासि कार्यम् । तदुक्तं—रत्नकोशे—

आसन्नप्रसवे मासि कुर्याच्चैव विशेषतः ।
तच्च प्रसवकाले स्यादिति शास्त्रेषु निश्चयः ॥

आसन्नप्रसवे नवमे । प्रसवकालो दशमः । "दशमे मासि सूतवे" इतिमन्त्रलिङ्गात् । गर्गः—

वारेऽनुकूले राशौ तु दिने दोषादिवर्जिते ।
स्वानुकूलदिशि प्रोक्तं सूतिकाभवनं बुधैः ॥

तत्र स्वानुकूलां दिशमाह वसिष्ठः—

ऐन्द्रे तु विक्रमं स्थानमाग्नेय्यां पचनालयः ।
वारुण्यां भोजनगृहं नैर्ऋत्यां सूतिकागृहम् ॥
याम्यायां शयनस्थानं वायव्यां पशुमन्दिरम् ।
कौबेर्यां तु धनस्थानमैशान्यां देवतालयः ॥ इति ।

विक्रमो बलवर्द्धनम् । विष्णुधर्मोत्तरे—

सुभूमौ निर्मितं रम्यं वास्तुविद्याविशारदैः।
प्राग्द्वारमुत्तरद्वारमथवा सुदृढं शुभम्॥

शुभमायादिशुद्धम्। एतत्तु विस्तरभयान्न लिख्यते। तत्संस्कारश्लोकः वीरमित्रोदये साङ्ख्यायनगृह्ये—"काकादन्या मेचकरातन्याः कोशातक्या बृहत्याः कालकीतकस्येति मूलानि पेषयित्वोपलेपयेद्देशं यस्मिन् जायते रक्षसामपहत्यै"। काकादनी काकजंघा। मेचकरातनी काचमाचिका। कोशातकी घोषकः। बृहती कण्टकारी। कालकीतकः कृष्णगुञ्जा। एतन्मूलरसेन यस्मिन् जायते तं देशं गृहादिरूपं लेपयेदित्यर्थः। अथ गर्भिण्याः सूतिकागृहप्रवेशः। वीरमित्रोदये विष्णुधर्मोत्तरे—

प्रविशेत्सूतिकामंज्ञं कृतरक्षं समन्ततः।
सुभूमौ निर्मितं रम्यं वास्तुविद्याविशारदैः॥
देवानां ब्राह्मणानाञ्च गवां कृत्वा च पूजनम्।
विप्रपुण्याहशब्देन शङ्खवाद्यरवेण च॥
प्रसूता बहवस्तत्र तथा क्लेशक्षमाश्च याः।
हृद्या विश्वसनीयाश्च प्रविशेयुः स्त्रियश्च तत्॥
ताश्चानुलेपनैर्हृद्यैस्तत्रैवमुपचारयेत्॥

गर्भिणीति शेषः।

आहारैश्च विहारैश्च प्रसवाय सुखं द्विजः।
एरण्डमूलचूर्णेन सघृतेन तथैव ताम्॥
सुखप्रसवनार्थीयः पश्चात्काये क्षिपेदिति॥

पश्चात्काये पृष्ठभागे तां गर्भिणीं क्षिपेदनुलिंपेदिति। उपसूतिकेति शेषः। तत्र निषेयद्रव्याण्याह। मार्कण्डेयपुराणे—

अग्न्यम्बुशून्ये च तथा निर्यूपे सूतिकागृहे।
अदीपशस्त्रमुसले भूतिसर्षपवर्जिते॥
अनुप्रविश्य या जातमपहृत्यात्मसम्भवम्।
क्षणप्रसविनी बालं तत्रैवोत्सृजते द्विज ?॥
सा जातहारिणी नाम सुघोरा पिशिताशना।

तस्मात्संरक्षणं कार्यं यत्नतः सूतिकागृहे ॥

यूपोऽत्र यूपाकारकाष्ठविशेषः । प्रवेशे तिथिवारादिनिर्णयः । तत्र नारदः—

व्यर्कारवारे तिथिषु रिक्तास्वावर्जितेषु च ।
दिवा वा यदि वा रात्रौ प्रवेशो मङ्गलप्रदः ॥

गर्गः—

रोहिण्यैन्दवपौष्णेषु स्वातीवरुणयोरपि ।
पुनर्वसुपुष्यहस्तधनिष्ठात्र्युत्तरासु च ॥
मैत्रे त्वाष्ट्रे तथाऽश्विन्यां सूतिकागारवेशनम् ।
मृत्य्वर्थनाशौ २ मृत्युश्च ३ वृद्धि ४ पुष्ट्या ५ यु ६ रीप्सितम् ७ ॥
मृत्युश्च ८ मरणं पित्रो ९ र्मरणं तु ततस्त्रिषु ।
मेषादिक्रमशो विन्द्यात्सूतिकागारवेशने ॥
ग्रहेऽनुकूले राशौ तु रिष्फषष्ठाष्ट १२।६।८ वर्जिते ।
सर्वे वाऽथ शुभाः केन्द्रे पापाश्च त्रिषडायगाः ३।६।११ ॥
शुभांशे शुभदृष्टौ तु सूतिकावेशनं शुभम् ॥ इति ।

अथ जातकर्म । जातकर्मेति यौगिकं कर्मनामधेयम् । जाते कर्म जातकर्मेति च योगः । तत्र विष्णुः—

जातकर्म ततः कुर्यात्पुत्रे जाते यथोदितम् ॥ इति ॥

तत्रादौ सोष्यन्तीकर्म उच्यते ।

## अथ षोडशी कण्डिका ।

सोष्यन्तीमद्भिरभ्युक्षत्येजतु दशमास्य इति प्राग्यस्यै त इत्यथावरावपतनमवैतु पृश्निशेवलꣳ शुने जराय्वत्तवे नैव माꣳसेन पीवरि न कस्मिꣳश्चनायतनमवजरायुपद्यतामिति जातस्य कुमारस्याच्छिन्नायां नाड्यां मेधाजननायुष्ये करोत्यनामिकया सुवर्णान्तर्हितया मधुघृते प्राशयति घृतं वा भूस्त्वयि दधामि भुवस्त्वयि दधामि स्वस्त्वयि दधामि भूर्भुवः स्वः सर्वं त्वयि दधा-

मीत्यथास्यायुष्यं करोति नाभ्यां दक्षिणे वा कर्णे जप-त्यग्निरायुष्मान्स वनस्पतिभिरायुष्माँस्तेन त्वायुषा-युष्मन्तं करोमि ब्रह्मायुष्मत्तद्ब्राह्मणैरायुष्मत्तेन त्वा-युषायुष्मन्तं करोमि देवाऽआयुष्मन्तस्तेऽमृतेनायुष्म-न्तस्तेन त्वायुषायुष्मन्तं करोमि ऋषय आयुष्मन्त-स्ते व्रतैरायुष्मन्तस्तेन त्वायुषायुष्मन्तं करोमि पितर आयुष्मन्तस्ते स्वधाभिरायुष्मन्तस्तेन त्वायुषायुष्मन्तं करोमि यज्ञ आयुष्मान्स दक्षिणाभिरायुष्माँस्तेन त्वा-युषायुष्मन्तं करोमि समुद्र आयुष्मान्स स्रवन्तीभिरा-युष्माँस्तेन त्वायुषायुष्मन्तं करोमीति त्रिस्त्र्यायुषमिति च स यदि कामयेत सर्वमायुरियादिति वात्सप्रेणैनम-भिमृशेद्दिवस्परीत्येतस्यानुवाकस्योत्तमामृचं परिशिनाष्टि प्रतिदिशं पञ्च ब्राह्मणानवस्थाप्य ब्रूयादिममनुप्राणितेति पूर्वो ब्रूयात्प्राणेति व्यानेति दक्षिणोऽपानेत्यपर उदाने-त्युत्तरः समानेति पञ्चम उपरिष्टादवेक्षमाणो ब्रूयात्स्वयं वा कुर्यादनुपरिक्राममविद्यमानेषु स यस्मिन्देशे जातो भवति तमभिमन्त्रयते वेद ते भूमि हृदयं दिवि चन्द्र-मसि श्रितम् । वेदाहं तन्मां तद्विद्यात्पश्येम शरदः श-तञ्जीवेम शरदः शतꣳशृणुयाम शरदः शतमित्यथैनम-भिमृशत्यश्मा भव परशुर्भव हिरण्यमस्तुतं भव । आ-त्मा वै पुत्रनामासि स जीव शरदः शतमित्यथास्य मा-तरमभिमन्त्रयत इडासि मैत्रावरुणी वीरे वीरमजीज-नथाः । सा त्वं वीरवती भव याऽस्मान्वीरवतोऽकरदि-त्यथास्यै दक्षिणꣳ स्तनं प्रक्षाल्य प्रयच्छतीमꣳस्तनमिति यस्ते स्तन इत्युत्तरमेताभ्यामुदपात्रꣳशिरस्तो निदधा-त्यापो देवेषु जाग्रथ यथा देवेषु जाग्रथ । एवमस्याꣳसू-तिकायाꣳ सपुत्रिकायां जाग्रथेति द्वारदेशे सूतिकाग्नि-

मुपसमाधायोत्थानात्सन्धिवेलयोः फलीकरणमिश्रान्सर्षपानग्नावावपति शण्डा मर्का उपवीरः शौण्डिकेय उलूखलः। मलिम्लुचो द्रोणासश्च्यवनो नश्यतादितः स्वाहा। आलिखन्ननिमिषः किंवदन्त उपश्रुतिर्हर्यक्षः कुम्भीशत्रुः पात्रपाणिर्नृमणिर्हन्त्रीमुखः सर्षपारुणश्च्यवनो नश्यतादितः स्वाहेति यदि कुमार उपद्रवेज्जालेन प्रच्छाद्योत्तरीयेण वा पिताङ्क आधाय जपति कूर्कुरः सुकूर्कुरः कूर्कुरो बालबन्धनः। चेच्चेच्छुनक सृज नमस्ते अस्तु सीसरो लपेतापह्वर तत्सत्यम्। यत्ते देवा वरमददुः स त्वं कुमारमेव वा वृणीथाः। चेच्चेच्छुनक सृज नमस्ते अस्तु सीसरो लपेतापह्वर तत्सत्यम्। यत्ते सरमा माता सीसरः पिता श्यामशबलौ भ्रातरौ। चेच्चेच्छुनक सृज नमस्ते अस्तु सीसरो लपेतापह्वरेत्यभिमृशति न नामयति न रुदति न हृष्यति न ग्लायति यत्र वयं वदामो यत्र चाभिमृशामसीति ॥ १६ ॥

"सोष्यन्तीमद्भिरभ्युक्षत्येजतु दशमास्य इति प्राग्यस्यैत इति" इति सूत्रम्। सोष्यन्तीं प्रसवशूलवतीं प्रसवकाले शूलादिप्रसववेदनान्वितां स्त्रियं भर्ता अद्भिर्जलेन अभ्युक्षति "एजतु दशमास्यो० अस्रज्जरायुणा सह"इत्यनेन मन्त्रेण। जरायुणा सहेत्यत्र परिसमाप्तत्वाद्वाक्यस्य प्राग्यस्यैत इत्युच्यते। तथा च गृह्यकारिकायाम्—

जातकर्माधुना वक्ष्ये सर्वशास्त्रं विविच्य तु।
प्रसवार्थं शूलवतीमद्भिरभ्युक्षति स्त्रियम्।
मन्त्रेणैजतु दशमास्य एतेन प्राक्तनेन तु॥

"अथावरावपतनमवैतु पृश्नि शेवलꣳशुने जराय्वत्तवे नैव माꣳसेन पीवरि न कस्मिꣳश्चनायतनमव जरायु पद्यतामिति" इति सूत्रम्। अथाभ्युक्षणानन्तरम्। अवरावपतनसंज्ञकं मन्त्रं जपतीत्यध्याहारः। अवरो जरायुः। गर्भावरकश्चर्मविशेषः। तस्य अव अधः पतनं पतनहेतुं "म-

वैत्वि"ति मन्त्रं जपति पिता। तथा च रेणुः-

यदा जराय्वधो याति अवैतु पृश्निरित्ययम्।
मन्त्रं जपेत्स तान्नेक्षेत्सोष्यन्तीदोषदर्शनात्॥

मन्त्रार्थः-हे सोष्यन्ति? तव जरायु अधः एतु पतत्वित्यर्थः। किम्भूतं-पृश्नि नानारूपं, शेवलं पित्तुलं जातोपाचितं वा। किमर्थं शुने-श्वानमुपकर्तुं, यद्वा शुने इति षष्ठ्यर्थे चतुर्थी। शुनः अत्तवे भक्षणाय। हे पीवरि पुत्रादिगर्भधारणेन सुपुष्टगात्रि! तच्च जरायु मांसेन गर्भव्यथकावयवेन सह आयतं सम्बद्धं विस्तृत वा अधः नैव पद्यताम् पततु। न च कस्मिंश्चन गर्भोऽपि पद्यताम्। निमित्ते सत्यपीति। अथ सोष्यन्तीहोमः। तत्र गोभिलः-"अथ सोष्यन्तीहोमं प्रतिष्ठिते वह्नौ परिस्तीर्याग्निमाज्याहुतीर्जुहोति याविपश्चिदित्येतचर्चा विपश्चित्पुच्छामभरदिति च"। सोष्यन्ती प्रसवशूला। बस्तिः योनिद्वारम्। तत्र स्थिते गर्भे सोष्यन्तीहोमः कार्य इत्यर्थः। "जातस्य कुमारस्याच्छिन्नायां नाड्यां मेधाजननायुष्ये करोति" इति सूत्रम्। जातस्योत्पन्नस्य कुमारस्य बालस्य अच्छिन्नायां नाड्यामच्छिन्ने नाभिनाले पिता मेधाजननायुष्ये मेधाजननं चायुष्यं च मेधाजननायुष्ये ते करोति। कुमारग्रहणाच्च स्त्रिया अतः प्रभृति न क्रियत इति भाष्ये। ते तु स्नानानन्तरं कार्ये।

जाते पुत्रे पितुः स्नानं सचैलं तु विधीयते।
माता शुद्ध्येद्दशाहेन स्नानात्तु स्पर्शनं पितुः॥

इति संवर्त्तस्मरणात्। स्नानञ्च पुत्रमुखदर्शनानन्तरं कार्यम्।

सूतके तु मुखं दृष्ट्वा जातस्य जनकस्ततः।
कृत्वा सचैलं स्नानन्तु शुद्धो भवति तत्क्षणात्॥

तथा च वसिष्ठः—

जातमात्रकुमारस्य मुखमस्यावलोकयेत्।
पिता ऋणाद्विमुच्येत पुत्रस्य मुखदर्शनात्॥

तथा च श्रुतिः-"ऋणमस्मिन्सन्नयत्यमृतं च गच्छति"। अथ

स्नानाधिकरणानि । तत्र वसिष्ठः —

श्रुत्वा जातं पिता पुत्रं सचैलं स्नानमाचरेत् ।
उत्तराभिमुखो भूत्वा नद्यां वा देवखातके ॥

एतच्च स्नानं रात्रावपि कार्यम् । तथा च व्यासः—

रात्रौ स्नानं न कुर्वीत दानं चैव विशेषतः ।
नैमित्तिकं तु कर्तव्यं स्नानं दानं च रात्रिषु ॥
पुत्रजन्मनि यात्रायां शर्वर्यां दत्तमक्षयम् ॥

वसिष्ठोऽपि—

पुत्रजन्मनि यज्ञे च तथा संक्रमणे रवेः ।
राहोश्च दर्शने स्नानं प्रशस्तं नान्यथा निशि ॥

तच्च शीतोदकेन कार्यम् । तदाह जाबालिः—

कुर्यान्नैमित्तिकं स्नानं शीताद्भिः काम्यमेव च ।

रात्रौ तडागादिगमनाशक्तौ विशेषमाह साङ्ख्यायनः—

दिवा हृतं तु यत्तोयं कृत्वा स्वर्णयुतं तु तत् ।
रात्रिस्नाने तु सम्प्राप्ते स्नायादनलसन्निधौ ॥

यत्तु "स्नानात्तु स्पर्शनं पितु"रित्यस्पृश्यतापनोदः पितुः स्नानेन श्रूयते सोऽप्यनेनैव प्रसङ्गात्सिध्यति, इति न तदर्थं पृथक् स्नानं कर्तव्यम् । यदपि "जाते पुत्रे पितुः स्नान"मित्यादिवचनेषु पुत्रपदोपादानात्कन्यादिजन्मसु न स्नानमिति ? तन्न । बीजसम्बन्धाविशेषात् । अत एव बौधायनः—"जनने तावन्मातापित्रोर्दशाहमाशौचम् मातुरित्येके तत्परिहरणात्पितुरित्यन्ये शुक्रस्य प्राधान्यादयोनिजा अपि पुत्राः श्रूयन्ते मातापित्रोरेव तु संसर्गसाम्यादिति" । तत्परिहरणान्मातृपरिहरणात् । संसर्गसाम्यात्संसर्गः शुक्रशोणितयोस्तस्य साम्यात् । न चैवं मातापित्रोर्दशाहमस्पृश्यत्वसिद्धान्तात्पूर्वपक्षस्यैव सिद्धिः ? तुशब्देन पूर्वपक्षस्य दशाहस्य व्यावृत्त्या कालविशेषानालिङ्गिताभ्युपगतास्पृश्यत्वमात्रस्य सामान्यस्य—

माता शुद्ध्येद्दशाहेन स्नानात्तु स्पर्शनं पितुः ।

इत्यनेन विशेषेण व्यवस्थापनात् । तस्मादपत्यमात्रोत्पत्तौ स्नानं न पुत्रोत्पत्तावेवेति सिद्धम् । आशौचमस्पृश्यत्वलक्षणम् । स्नानानन्तरं च नान्दीश्राद्धं कुर्यात् । तथा चाश्वलायनः—

**जातं कुमारं तं दृष्ट्वा स्नात्वाऽऽनीय गुरून्पिता ।**
**नान्दीश्राद्धावसाने तु जातकर्म समाचरेत् ॥**

तच्च आमेन कार्यम् । प्रचेताः-

**स्त्री शूद्रः स्वपचश्चैव जातकर्मणि चाप्यथ ।**
**आमश्राद्धं सदा कुर्याद्विधिना पार्वणेन तु ॥**

स्वपचः स्वयं पाककर्ता । तथा च व्यासः—

**द्रव्याभावे द्विजाभावे प्रवासे पुत्रजन्मनि ।**
**हेमश्राद्धं प्रकुर्वीत यस्य भार्या रजस्वला ॥**

जातकर्मकालमाह । तच्च नाभिच्छेदनात्प्राक् कर्तव्यमित्याह मनुः—

**प्राङ्नाभिकर्तनात्पुंसो जातकर्म विधीयते ।**

कर्त्तनं छेदनम् । तथा चाश्वलायनः—

**प्राङ्नाभिकर्त्तनात्कार्या जातकर्मक्रिया द्विजैः ।**
**स्नात्वा सचैलवच्छुद्धैः सितगन्धादिभूषितैः** ॥ इति ।

नाभिच्छेदनानन्तरं कार्यमिति । तत्र गर्गः—

**जातमात्रकुमारस्य जातकर्म विधीयते ।**
**स्तनप्राशनतः पूर्वं नाभिकर्त्तनतोऽपि च** ॥ इति ।

इत्यनेन गौणकालोऽपि ग्राह्यः । जातकर्मस्वरूपमाह । तच्च मेधाजननम् । तदेवाह—"**अनामिकया सुवर्णान्तर्हितया मधुघृते प्राशयति घृतं वा**" इति सूत्रम । सुवर्णेनान्तर्हितया सुवर्णेनाच्छादितया अनामिकाङ्गुल्या मधु च घृतं च मधुघृते एकीकृते कुमारं प्राशयति । घृतं वा केवलम् । तथा च मनुः —

**मन्त्रवत्प्राशनं चास्य हिरण्यमधुसर्पिषाम् ।**

शङ्खोऽपि "**प्रसूते जातकर्म यवपिष्टमधुसर्पिर्भिर्मन्त्रवत्प्राशनं तस्य सुवर्णान्तर्हितयानामिकया मेधाधिकं ब्राह्मणस्य करोत्येव**

मितरयोः" । इतरयोः क्षत्रियवैश्ययोः । एवंशब्देन क्षत्रियवैश्ययोर्मन्त्रवत्प्राशनातिदेशेन शूद्रस्यामन्त्रकं प्राशनमिति गम्यते । अथ स्त्रीणां जातकर्म । तत्र गोभिलः—

"तूष्णीमेताः क्रियाः स्त्रीणां मन्त्रेण तु होम" इति ।

तथा च याज्ञवल्क्यः—

तूष्णीमेताः क्रियाः स्त्रीणां विवाहस्तु समन्त्रकः ॥ इति ।

तत्र मन्त्रानाह "भूस्त्वयि दधामि भुवस्त्वयि दधामि स्वस्त्वयि दधामि भूर्भुवः स्वः सर्वं त्वयि दधामीति" इति सूत्रम् । अत्र भूस्त्वयि दधामीत्यादि सर्वं त्वयि दधामीत्यन्तेन मन्त्रेण सकृत्कुमारं प्राशयति । प्रतिवाक्यं प्राशयतीति केचित् । कारिकायाम्—

मिश्रित्य प्राशयेदेनं तयोरन्यतरं बहु ।
घृतं वा भूस्त्वयि दधामीति मन्त्रेण वा सकृत् ॥
दक्षिणस्यानामिकया सुवर्णान्तर्हितया शिशुम् ।
कृत्वा मधुघृते पात्र एकस्मिन् तैजसादिके ॥
प्राशनं प्रतिवाक्यं स्यादिति केचिदिहाब्रुवन् ।
मेधाजननमेतस्य नामधेयं विदुर्बुधाः ॥

अथायुष्यकरणमाह "अथास्यायुष्यं करोति नाभ्यां दक्षिणे वा कर्णे जपत्यग्निरायुष्मान् स वनस्पतिभिरायुष्मांस्तेन त्वायुषायुष्मन्तं करोमि सोम आयुष्मान्स ओषधीभिरायुष्माँस्तेन त्वायुषायुष्मन्तं करोमि ब्रह्मायुष्मत्तद्ब्राह्मणैरायुष्मत्तेन त्वायुषायुष्मन्तं करोमि पितर आयुष्मन्तस्ते स्वधाभिरायुष्मन्तस्तेन त्वायुषायुष्मन्तं करोमि यज्ञ आयुष्मान्स दक्षिणाभिरायुष्मांस्तेन त्वायुषायुष्मन्तं करोमि समुद्र आयुस्मान् स स्रवन्तीभिरायुष्मांस्तेन त्वायुषायुष्मन्तं करोमीति त्रिस्त्र्यायुषमिति च" इति सूत्रम् । अथ मेधाजननोत्तरमस्य शिशोरायुष्यनामकं कर्म । आयुषे हितमायुष्यं कर्म करोति । नाभ्यामित्यधिकरणसप्तमी समीपसप्तमी वा । यथा गङ्गायां घोषः । तेन पिता बालकस्य नाभेः कर्णस्य वा समीपे

स्थित्वा अग्निरायुष्मानित्यष्टौ मन्त्रान् त्रिर्जपति। मन्त्रार्थः-अग्निः कारणात्मना आयुष्मानस्ति। स च वनस्पतिभिरिध्मसमिद्भिरिह आयुष्मत्त्वहेतुर्भवति। वनस्पतिभिः कृत्वा, वा तेन अग्न्यायुषा त्वा त्वामायुष्मन्तं निर्दुष्टदीर्घायुषं करोमीति वाक्यार्थ उत्तरत्रापि सम्बध्यते। एव सोमोऽपि व्याख्येयः। स च ओषधीभिः। सन्विरार्षः। ब्रह्म वेदः, ब्राह्मणैरध्येतृभिः। देवा अमृतैः। ऋषयो व्रतैः कृच्छ्रादिभिः। पितरः स्वधाभिः। पितृदेवं स्वधोच्यते। यज्ञो दक्षिणाभिः परिक्रयद्रव्यैः। समुद्रः स्रवन्तीभिर्नदीभिः। एतावत्पर्यन्तमग्निरायुष्मानित्यारभ्य त्रिर्जपति। त्र्यायुषमिति च "त्र्यायुषं जमदग्ने"रिति मन्त्रं चकारात्त्रिर्जपेत्। तथा च रेणुकारिका-

**तस्यैव दक्षिणे कर्णे नाभ्यां वा त्रिर्जपेदमुम्।**
**मन्त्रं पिताग्निरायुष्मानिति त्रिश्च त्रियायुषम्॥**

**"स यदि कामयेत सर्वमायुरियादिति वात्सप्रेणैनमभिमृशे"**-दिति सूत्रम्। संस्कारकर्त्ता यदि कामयेत यदीप्सेत्-अय कुमारः सर्वं सम्पूर्णं शतवर्षमायुः जीवितमियात् प्राप्नुयात्, तदा वात्सप्रेण एनं कुमारमभिमृशेत् अभि समन्ततः सर्वशरीरमालभेत्। वात्सप्रभेदात्संशयः। किं **"दिवस्परी"**त्यनेन वात्सप्रेण कि**"मुपप्रयन्तोऽध्वर"**मित्यनेनेति? संशयनिवृत्त्यर्थमाह **"दिवस्परीत्येतस्यानुवाकस्योत्तमामृचं परिशिनष्टि"** इति सूत्रम्। **"दिवस्परी"**त्यादिको द्वादशर्चोऽनुवाको वात्सप्रः। एतस्य तु उत्तमामन्त्यां द्वादशी**"मस्ताव्यग्नि"**रित्येतामृचं परिशिनष्टि व्युदस्यति। तां परित्यज्य एकादशर्भिरभिमृशेदित्यर्थः। **"प्रतिदिशं पञ्च ब्राह्मणानवस्थाप्य ब्रूयादिममनुप्राणितेति पूर्वो ब्रूयात्प्राणेति व्यानेति दक्षिणोऽपानेत्यपर उदानेत्युत्तरः समानेति पञ्चम उपरिष्टादवेक्षमाणो ब्रूयात्स्वयं वा कुर्यादनुपरिक्राममविद्यमानेषु"** इति सूत्रम्। ततः संस्कारकर्त्ता कुमारस्य प्रतिदिशं प्राच्यादिषु चतसृषु दिक्षु मध्ये च एवं पञ्च ब्राह्मणानवस्थाप्य स्थापयित्वा कुमाराभिमुखान् तान् प्रति ब्रूयात्। किम्? **"इममनुप्राणित"**।

इमं कुमारं अनुप्राणित अनुलक्षीकृत्य प्राणेत्यादि ब्रूत इति प्रैषः । ततः प्रेषिता ब्राह्मणाः पूर्वादिक्रमेण कुमारं लक्षीकृत्य "प्राण" इति पूर्वो ब्रूयात् । "व्यान" इति दक्षिणः । "अपान" इति पश्चिमः । "उदान" इत्युत्तरः । "समान" इति पञ्चम उपरिष्टाद्बालकमवेक्षमाणो ब्रूयात् । अविद्यमानेषु ब्राह्मणेष्वसत्सु स्वयं वा स्वयमेवानुप्राणनं कुर्यात् । कथं अनुपरिक्रामं परिक्रम्य पूर्वादिकां दिशि प्राणेत्यादि । अस्मिन्पक्षे प्रैषाभावः । स्वात्मनि स्वकर्तृकप्रेरणासम्भवात् । मन्त्रार्थः—इम कुमारं अनुलक्ष्यीकृत्य भो ब्राह्मणा अनुप्राणित । यूयं सर्वे प्राणादिपञ्चवायुयुक्तं कृत्वा दीर्घायुष्ट्वेनायुष्मन्तं कुरुत । कोष्ठस्थितो वायुर्मुखनासिकाभ्यां निःसरन् प्राणः । पुनस्तेनैव मार्गेण अन्तः प्रविशन्नपानः । प्राणो रेचकः । अपानः पूरकः । तयोर्वा अधः सन्धिः सन्धाने व्यानः कुम्भरूपः । उत्क्रमणादिरूर्ध्वगतिरुदानः । देहस्थितस्याशितपीतस्यान्नरसस्य सर्वाङ्गेषु समनयनात्समानः । "स यस्मिन् देशे जातो भवति तमभिमन्त्रयते वेद ते भूमिहृदयं दिवि चन्द्रमसि श्रितम् । वेदाहं तन्मां तद्विद्यात्पश्येम शरदः शतं जीवेम शरदः शतꣳशृणुयाम शरदः शतमिति" इति सूत्रम् । स बालो यस्मिन् प्रदेशे भूमिभागे जातो भवत्युत्पन्नो भवति तं देशमाभिमन्त्रयते "वेद ते भूमि हृदय"मिति मन्त्रेण हस्तेन स्पृशति । मन्त्रार्थः–हे भूमे कुमारजन्मप्रदेशे ते तव हृदयं अन्तःकरणं भूमिर्वेद । यत्र विद्यते गुप्तम् । विसर्गाभावच्छान्दसः । किम्भूतं दिवि द्युलोके वर्तमाने चन्द्रमसि श्रितम् कृष्णाभावेन यज्ञरूपस्थान असुरजयार्थं गोपितम् तत्प्रदेशोपलक्षितं "तदेतच्चन्द्रमसि कृष्ण"मिति श्रुतेः । तत्कर्मभूतमहं वेद जानामि । तत्कर्तृभूतमेनत्पुनरुपकर्तु मां विद्याज्जानातु । अतस्त्वद्दत्तपुत्रेण सह वयं पश्येमेत्याद्युक्तार्थम् । "अथैनमभिमृशत्यश्मा भव परशुर्भव हिरण्यमस्रुतं भव । आत्मा वै पुत्रनामासि स जीव शरदः शतमिति" इति सूत्रम् । अथैनं पिताऽभिमृशति हस्तेन स्पृशति । "अश्मा भवे"तिमन्त्रेण हृदि स्पृशतीति जयरामः । मस्तके इति कारिकायाम् । सर्वशरीरे इति हरिहरः । श्रुतिः

"अथैनमभिमृशत्यश्मा भव परशुर्भव हिरण्यमस्तुतं भवे"ति । मन्त्रार्थः—हे कुमार ! त्वमश्मा पाषाण इव दृढः स्थिरश्च परशुरिव वज्र इवापकर्तृनाशको भव । किञ्च अस्तुतमनभिभूतमप्रच्युतस्वरूपमिति यावत् । हिरण्यवत्तेजोयुक्तश्च प्रहणाय भव । यथा धात्वन्तरामिश्रित सुवर्णं शुद्धं भवति । तथा त्वमपि रोगाद्युपद्रवेण हीनो भवेत्यर्थः । यतस्त्वं पुत्रनामा आत्मासि देहः सन् । वै इति निश्चयेन । पुत्रेति संज्ञामात्रेण भिन्नोऽसि । न तु स्वरूपेण स त्वं शतं शरदो जीव । "अथास्य मातरमभिमन्त्रयत इडासि मैत्रावरुणी वीरे वीरमजीजनथाः । सा त्वं वीरवती भव यास्मान् वीरवतोऽकरदिति" इतिसूत्रम् । अथास्य कुमारस्य मातरं जननीमभिमुखो भूत्वाऽभिमन्त्रयते मन्त्रश्रावणेन संस्करोति । "इडासीति" मन्त्रेण । "अथास्य मातरमभिमन्त्रयत इडासि मैत्रावरुणी" तिश्रुतेः । मन्त्रार्थः–हे वीरे वीरवती पुत्रवतीति यावत् । त्वं इडा मानवी यज्ञपात्री तद्गतद्रव्यं वा मैत्रावरुणी मित्रावरुणयोरंशोत्पन्ना । यथा इडायां पुरूरवा उत्पन्नः । यथा च यज्ञपात्र्यां तद्गतद्रव्ये वा पुरोडाशो भवति तथा त्वय्यपि तादृशाः स्वर्गादिसाधनपराः सन्त्वित्यभिप्रायः । यतस्त्व वीरं पुत्रं अजीजनथाः असौषीः । अतः सा त्वं वीरवती पतिपुत्रवती भव । या त्वमस्मान्वीरवतः पुत्रवतः पुत्रयुक्तानकरत् अकरोः कृतवत्यसि । "अथास्यै दक्षिणꣳस्तनं प्रक्षाल्य प्रयच्छतीमꣳस्तनमिति" इतिसूत्रम् । अथास्यै अस्याः मातुर्दक्षिणं स्तन प्रक्षाल्य उदकेन क्षालयित्वा पिता कुमाराय पानीयं प्रयच्छति ददाति "इमꣳस्तन"मिति मन्त्रेण । "अथैनं मात्रे प्रदाय स्तनं प्रयच्छतीति" श्रवणात । स्तनसमर्पणं चापीतस्तनस्य भवति । "यस्ते स्तन इत्युत्तरमेताभ्याम्" इति सूत्रम् । ततः पिता उत्तरं वामं स्तन"मिमꣳस्तनं, यस्ते स्तन"इत्येताभ्यामृग्भ्यां प्रयच्छति कुमारायेत्यर्थः । अत्र वचनोपदेशा"दिमꣳस्तन"-मित्येव द्वितीया । अथ नालच्छेदनम् । मूलादष्टाङ्गुलं परित्यज्य स्वधूतेन ब्रह्मसूत्रेण नालमावेष्ट्य च्छिन्द्यात् । तथा च कारिकायाम्—

अष्टाङ्गुलं परित्यज्य नालं छिन्द्यात्क्षुरादिना ॥

तथा च धर्मप्रवृत्तावपि—

ब्रह्मसूत्रधृतं नालं तेनावेष्ट्य निकृन्तयेत् ॥

"उदपात्रꣳशिरस्तो निदधात्यापो देवेषु जाग्रथ यथा देवेषु जाग्रथ। एवमस्याꣳसूतिकायाꣳसपुत्रिकायां जाग्रथेति" इतिसूत्रम्। उदपात्रं सजलं शरावं शिरस्तः सूतिकायाः शिरःप्रदेशे खट्वाधस्तान्निदधाति "आपो देवेष्वि"ति मन्त्रेण तच्चोत्थापनपर्यन्तं तत्रैव तिष्ठति। मन्त्रार्थः-हे आपः जीवनहेतवः यूयं देवेषु देवकार्यनिमित्तं जाग्रथ तत्साधनत्वेन तिष्ठथ। अतो यथा देवेषु जाग्रथ एवं तथास्यां सूतिकायां सूतिकाया हिते जाग्रथेत्यर्थः। पुरुषव्यत्ययश्छान्दसः। किंभूतायां पुत्रादिसहितायाम्। "द्वारदेशे सूतिकाग्निमुपसमाधायोत्थानात्सन्धिवेलयोः फलीकरणमिश्रान् सर्षपानग्नावावपति शण्डा मर्का उपवीरः शाण्डिकेय उलूखलः। मलिम्लुचो द्रोणासश्च्यवनो नश्यतादितः स्वाहा। अलिखन्ननिमिषः किंवदन्त उपश्रुतिर्हर्यक्षः कुम्भीशत्रुः पात्रपाणिर्नृमणिर्हन्त्रीमुख· सर्षपारुणश्च्यवनो नश्यतादितः स्वाहेति" इतिसूत्रम्। सूतिकागृहस्य द्वारदेशे पञ्चभूसंस्कारान् कृत्वा तत्र सूतिकाग्निमुपसमाधाय स्थापयित्वौत्थानात् आ उत्थानात् उत्थानं यावत्सन्धिवेलयोः सायं प्रातः फलीकरणैस्तण्डुलकणैर्मिश्रान् युक्तान् सर्षपान् तस्मिन्नग्नौ आवपति प्रक्षिपति। "शण्डा मर्का" इति द्वाभ्यां मन्त्राभ्याम्। प्रतिसन्ध्ययोरग्निस्थापनमिति गङ्गाधरः। गङ्गाधरकारिकायाम्—

सन्ध्ययोरुभयोर्द्वे द्वे नित्यहोमादनन्तरम्।
औत्थानादन्वहं कार्यं सन्ध्ययोः स्थापनादिकम् ॥ इति।

सूत्रे सूतिकाग्नेर्ग्रहणं आवसथ्याग्निनिवृत्यर्थमिति भर्तृयज्ञः। आवपनोपदेशाद्धोमेतिकर्त्तव्यता न भवति। तथा च रेणुः—

आवपत्युपदेशाच्च नात्र स्यात्कुशकण्डिका ॥ इति।

अत्राग्नेर्देवतात्वं जयरामः। तथा च कारिकायाम्—

अनयोर्देवताग्निः स्यान्मन्त्रोक्ता कैश्चिदीरिता ॥ इति।

एतच्च स्वकाल एव भवति नियतकालत्वात्। मन्त्रार्थः। शण्डाः

शण्डः। मर्काः मर्कः। तत्र शृणोतीति शण्डो बालग्रहः स्वस्थानात् नश्यात्–अपगच्छतु। अयं च वाक्यार्थ उत्तरत्रापि योज्यः। मारयतीति मर्कः। उपपद्यते वीरसमर्थ उपवीरः विघ्नकुशलः। शौण्डिकेयः आश्रित-पातक उलूखलः अप्रतीकार्यो मलिम्लुचः अतिमलिनाशय इत्यर्थः। दीर्घ नासो द्रोणासः च्यावयत्यङ्गानीति च्यवनः। एते सर्वे मत्कृतहवनोपद्रुताः भीताश्चापसर्पन्त्वित्यर्थः। एवमासमन्ततो भावेन लिखन् आलिखन् परा-भवितुमव्यवच्छिन्नदृष्टिरनिमिषः। उप समीपे श्रुत्वा अपकर्ता उपश्रुतिः। हर्यक्षः पिङ्गलनयनः। कुम्भयति स्तम्भयतीत्येवंशीलः कुम्भी। शातय-तीति शत्रुः पात्रहस्तः पात्रपाणिः। नृन् मिनोति हिनस्तीति नृमणिः। हन्त्री हिंसा हननं मुखे यस्यासौ हन्त्रीमुखः। सर्षपवदरुणः उग्रो धूसरो वा सर्षपारुणः। च्यवत्यनेनेति च्यवनः। यो नोपद्रुतश्च्यवति प्रकृतेः परिभ्रश्यतीत्यर्थः। इतः स्थानान्नश्यतादिति सर्वपदानामेवान्वयः। गण-मभिप्रेत्याह किंवदन्त इति। एते सर्वे किंवदन्तः। किंवदद्गणमित्यर्थः।

**"यदि कुमार उपद्रवेज्जालेन प्रच्छाद्योत्तरीयेण वा पिताङ्क आधाय जपति कूर्कुरः सुकूर्कुरः कूर्कुरो बालबन्धनः। चेच्चेच्छुनक सृज नमस्ते अस्तु सीसरो लपेतापह्वर तत्सत्यम्। यत्ते देवा वरमददुः स त्वं कुमारमेव वा वृणीथाः। चेच्चेच्छुनक सृज नमस्ते अस्तु सीसरो लपेतापह्वर तत्सत्यम्। यत्ते सरमा माता सीसरः पिता श्यामशबलौ भ्रातरौ। चेच्चेच्छुनक सृज नमस्ते अस्तु सीसरो लपेतापह्वरेत्यभिमृशति न नामयति न रुदति न हृष्यति न ग्लायति यत्र वयं वदामो यत्र चाभिमृशामसीति"** इतिसूत्रम्। कुमार-शब्देन बालग्रहोऽभिधीयते। स यदि एनं बालकं उपद्रवेद्विघ्नयेत्तदा बालकं पिता जनको जालेन प्रच्छाद्याच्छादयित्वाऽस्योत्तरीयेण वा प्रच्छाद्याङ्के उत्सङ्गे निधाय 'कूर्कुर' इति मन्त्रत्रयं जपति। जपान्त एनं पिताऽभिमृशति "न नामयतीति" मन्त्रेण। मन्त्रार्थः–कूर्कुरोऽन्नषणा-ख्यो बालग्रहः। तथा सुकूर्कुरश्चातिभीषणः। बालान् बध्नातीति बाल-बन्धनः कूर्कुराख्यो बालग्रहः। सीसरोऽपसारकः हे शुनक ? तद्गणमुख्य?

छापनरोधकेति यावत् । अपहर गात्राहार ? ह्कौटिरये, ते तुभ्यं नमोऽस्तु । ततस्तुष्टश्चैनं कुमारं सृज मुञ्च । किंकुर्वन् चेचेच्छुच्छुः शब्दं कुर्वन् । हे शुनक ? तत्सत्यं यत्ते तुभ्यं देवहूताय देवा वरमददुः दत्तवन्तः । स च त्वं हिंसाविहरः कुमारमेव वा वृणीथाः वृतवानसीति । शेषमुक्तार्थम् । हे शुनक ? तत्सत्यं यत्ते तव सरमा देवशुनी माता सीसरदेवश्च पिता श्यामशबलौ च तव भ्रातराविति । शिष्टमुक्तार्थम् । "न नामयती"ति मन्त्रार्थः-यत्रास्मिन् कुमारे वयं वदामो ब्रूमः साकाङ्क्षत्वान्मन्त्रम् । यत्र चाभिमृशामस्यभितः स्पर्शनं कुर्मः । स कुमारो न नामयत्यङ्गानि । शिष्ट स्पष्टम् । अथ जातकर्मणि दानानि धर्मप्रवृत्तौ—

जाते सुतेऽवगाह्यापः श्राद्धं कृत्वा विधानतः ।
जातकर्म विधानेन कुर्याद्दानादिकं ततः ॥
तत्र दद्यात्सुवर्णं च भूमिगोतुरगान्रथम् ।
छत्रं छागं च माल्यं च शयनं वसन गृहम् ॥

शङ्खोऽपि—

"सर्वेषां सकुल्यानां द्विपदचतुष्पदधान्यहिरण्यादि दद्यात्प्रतिग्रहश्च नाभिच्छेदनात्प्राक्तदहर्वे"ति । मदनपारिजाते शङ्खः—"कुमारप्रसवे नाड्यामच्छिन्नायां गुडतिलहिरण्यवस्त्रगुवर्थप्रावरणगोधान्यप्रतिग्रहेष्वदोषस्तदहरित्येके कुर्वन्त" इति । प्रतिग्रहदोषाभावप्रतिपादनं तु नालच्छेदादूर्ध्वं सर्वदिनं पुण्यत्वपक्षे । अन्यथा प्राङ्नाभिच्छेदनादाशौचाप्रवृत्त्या दोषप्रसक्त्यभावेन तदपवादासम्भवात् । तथा च जैमिनिः—

यावन्न च्छिद्यते नालं तावन्नाप्नोति सूतकम् ।
छिन्ने नाले ततः पश्चात्सूतकं तु विधीयते ॥

ब्रह्मपुराणे—

देवाश्च पितरश्चैव पुत्रे जाते द्विजन्मनाम् ।
आयान्ति तस्मात्तदहः पुण्यं पूज्यं च सर्वदा ॥
तत्र दद्यात्सुवर्णं च भूमिं गां तुरगं तथा ।

छत्रं छागं च माल्यं च शयनं चासनं गृहम् ॥

प्रतिग्रहीतारं प्रत्याह व्यासः—

जाते कुमारे तदहः कामं कुर्यात्प्रतिग्रहम् ।
हिरण्यधान्यगोवासस्तिलांश्च मधुसर्पिषी ॥

वृद्धयाज्ञवल्क्यः—

कुमारजन्मदिवसे विप्रैः कार्यः प्रतिग्रहः ।
हिरण्यभूगवाश्वादिधान्यशय्यासनादिषु ॥
तत्र सर्वं प्रतिग्राह्य पक्वान्नं तु विसर्जयेत् ।
भक्षयित्वा तु तन्मोहाद्द्विजश्चान्द्रायणं चरेत् ॥
सूतके तु सकुल्यानामदोषो मनुरब्रवीत् ॥

जाबालिः—

जातश्राद्धे न दद्यात्तु पक्वान्नं ब्राह्मणेष्वपि ।
यस्माच्चान्द्रायणाच्छुद्धिस्तेषां भवति नान्यथा ॥

रेणुः—

अच्छिन्ननाड्यां कर्तव्यं श्राद्धं स्नानादनन्तरम् ।
आमद्रव्येण तत्कार्यं वचनात्तु प्रजापतेः ॥
हिरण्येन भवेच्छ्राद्धं आमद्रव्यं गृहे न चेत् ।
इति व्यासवचः प्रोक्तं पक्वान्नं स निषेधति ॥
आमान्नं द्विगुणं प्रोक्तं हिरण्यं च चतुर्गुणम् ॥ इति ।

अथ आशौचमध्ये जातकर्मनिर्णयः । पूर्वाशौचे जाते सत्यपि जातकर्म कर्तव्यम् । तत्र प्रजापतिः—

सूतके तु समुत्पन्ने पुत्रजन्म यदा भवेत् ।
कर्तुस्तात्कालिकी शुद्धिः पूर्वाशौचेन शुद्ध्यति ॥

केचित्तु मृताशौचमध्ये पुत्रे जाते तदाऽऽशौचापगमे कार्यम् ।

जातूकर्ण्यः—

मृताशौचस्य मध्ये तु पुत्रजन्म यदा भवेत् ।
आशौचापगमे कार्यं जातकर्म यथाविधि ॥

इदं जातकर्म विरुद्धातिथ्यादिजातस्य न कार्यम् । तस्य मुखदर्शनपूर्वकत्वात् । मुखदर्शनस्य चात्र निषिद्धत्वात् । तथा चोत्तरगार्ग्ये—

अथातः सम्प्रवक्ष्यामि जन्मकाले विशेषतः ।
गण्डान्तानि च नामानि महादोषकराणि च ॥
दिनक्षये व्यतीपाते व्याघाते विष्टिवैधृतौ ।
शूले गण्डेऽतिगण्डे च परिघे यमघण्टके ॥
कालयोगे मृत्युयोगे दग्धयोगे सुदारुणे ।
तस्मिन्गण्डदिने प्राप्ते प्रसूतिर्यदि जायते ॥
अतिदोषकरी प्रोक्ता तत्र पापयुते सति ।
विचार्य तत्र दैवज्ञं शान्तिं कुर्याद्यथाविधि ॥

शौनकोऽपि—

कुमारजन्मकाले तु व्यतीपातश्च वैधृतिः ।
संक्रमश्च रवेस्तत्र जातो दारिद्र्यकारकः ॥
दरिद्राणां महादुःखं व्याधिपीडामहद्भयम् ।
अश्रियं मृत्युमाप्नोति नात्र कार्या विचारणा ॥

नवनीतारिष्टे—

पूर्णातिथीनां तिसृणां तथान्ते मीनालिकर्के नवमो नवांशः ।
मेषेऽथ कण्ठीरवधन्विनोश्च गण्डान्तमाद्यो नवमस्तथांशः ॥

अश्विनीमघमूलादौ त्रिषट्कनवनाडिकाः ।
रेवतीसर्वसंक्रान्ते नाडिकाद्वितयं तथा ॥

वीरमित्रोदये—

अश्विनीमघमूलानां पूर्वार्द्धे बाध्यते पिता ।
पूषाहिशक्रपश्चार्धे जननी बाध्यते शिशोः ॥
पितृघ्नश्च दिवा जातो रात्रौ जातस्तु मातृहा ।
आत्मनः सन्ध्ययोर्जातो नास्ति गण्डो निरामयः ॥
सर्वेषां गण्डजातानां परित्यागो विधीयते ।
वर्जयेद्दर्शनं तावद्यावत्षाण्मासिकं भवेत् ॥

अन्यान्तरे —

कर्कालिमीनयुगलसन्धौ स्याद्घटिकामितम्।
पूर्णानन्दातिथेः सन्धौ गण्डान्त घटिकाद्वयम्॥
ज्येष्ठाश्लेषान्त्यभद्वन्द्वसन्धौ नाडीयुगं न सत्॥

तिथ्यर्क्षगण्डे पितृमातृनाशो लग्ने तु सन्धौ तनयस्य नाशः।
सर्वेषु नो जीवति हन्ति वंशं जीवन्पुनः स्याद्बहुवारणश्च॥

अन्यच्च—

भीमतुल्यबलश्चैव गण्डान्ते यदि जीवति॥

अथ कालातिक्रमे जातकर्मनिर्णयः। जाबालिबैजवापौ—

जन्मनोऽनन्तरं कार्यं जातकर्म यथाविधि।
दैवादतीतकाले चेदतीते सूतके भवेत्॥

गर्गोऽपि—

जन्मनोऽनन्तरं तु स्याज्जातकर्म यथाविधि।
सूतकानन्तरं कुर्यान्नाम निर्दशनादधः॥

वसिष्ठोऽपि—

यस्मिन्मुहूर्ते जनितः कुमारस्तस्मिन्विधेयं खलु जातकर्म।
विनिर्गमे वाऽप्यथ सूतकस्य तस्मिन्दिने तस्य च नामधेयम्॥

गर्गः—

एष्वतीतेषु कालेषु शुभयोगे शुभोदये।
जातकर्मक्रियां कुर्यात्पुत्रायुःपरिवृद्धये॥

ज्योतिषे—

तस्मिञ्जन्ममुहूर्तेऽपि सूतकान्तेऽथवा शिशोः।
जातकर्म च कर्तव्यं पितृपूजनपूर्वकम्॥
क्षिप्रैश्चरैर्ध्रुवैर्मिश्रैर्द्वादशे प्रथमेऽह्नि वा।
केन्द्रे गुरौ भृगौ कार्यं जातकर्म सनातनम्॥

एवं नालच्छेदनानन्तरमपि भवति। जातकर्म मुख्यकाले न कृतं चेत्तदा ते मेधाजननायुष्ये वर्जयित्वा वात्सप्राभिमर्शनादि "अश्मा भव"

स्याभिमर्शनान्तं कर्म कुर्यादिति कर्कः । प्रयोगरत्नेऽप्येवमेव । प्रकाशिकायां च । गङ्गाधरादयस्तु मुख्यकालातिक्रमे मेधाजननमेव न कर्तव्यम् । आयुष्यकरणादि कुमाराभिमर्शनान्तं सर्वं कुर्वन्तीति । तथा च रेणुकारिकायाम्--

स्वकाले न कृतं जातकर्म दुर्मानुषादपि ।
दैवादतीतकालं चेत्तदायुष्यादिकं भवेत् ॥
अश्मा भवति मन्त्रान्तमित्युपाध्यायसम्मतिः ।
कार्यं स्वकालतो मेधाजननं नान्यकालतः ॥
कुमारं जातमित्येषा भाष्ये श्रुतिरुदाहृता ॥ इति ।

तथा च श्रुतिः-"तस्मात्कुमारं जातं घृतं चैवाग्रे प्रतिलेहयन्ति स्तनं वाऽनुधापयन्तीति" । अयमर्थः श्रुतेः-तस्मात्कुमारं बालं जातं घृतं चैव त्रैवर्णिका जातकर्मणि जातरूपसहितं प्रतिलेहयन्ति प्राशयन्ति । स्तनं वाऽनुधापयन्ति पश्चात्पाययन्तीति अपीतस्तनस्यैतदिति गम्यते। वृद्धसम्मतिः-

अनुप्राशनवात्सप्रमभिमर्शनमन्त्रणम् ।
कालान्तरेऽपि कुर्वीत आयुष्यकरणं तथा ॥ इति ।

अथ रात्रिवर्गः । दशदिनं सन्ध्यायां सूतिकासमीपे जपेत् ।

प्रथमं गणपतेर्मन्त्रं श्रीश्च ते तदनन्तरम् ।
नवग्रहाणां मन्त्राश्च दिक्पालानां तथैव च ॥
दिवस्परि समारभ्य विबभ्रुस्त्वन्ततः पठन् ।
आ नो भद्रेति प्रथमं जनित्वान्तं ततः परम् ॥
ऋचं वाचं ततः पश्चादन्ते तु शरदः शतात् ।
रात्रिवर्गमिदं जप्यं बालानां भयनाशनम् ॥

अथ जातसूतके कर्तव्यतामाह । तत्र जन्मदादिदेवतापूजनम् । व्यासः--

सूतिकावासनिलया जन्मदा नाम देवताः ।
तासां यागनिमित्ते तु शुद्धिर्जन्मनि कीर्तिता ॥

जन्मदाख्यदेवतानां पूजने शुद्धिरस्तीत्यर्थः । तथा च वीरमित्रोदये--

प्रथमे दिवसे षष्ठे दशमे चैव सर्वदा।
त्रिष्वाशौचं न कुर्वीत सूतके पुत्रजन्मनि ॥
दद्यात्तु प्रथमे हेम षष्ठे वा सप्तमेऽपि वा।
बलिदानं तु दशमे ह्यन्नदानं प्रशस्यते ॥

निबन्धसारे—

जातादिपञ्चके षष्ठे निशीथे बलिमाहरेत्।
अर्चयेदष्टदिक्पालान् गीतवाद्यसशस्त्रकैः ॥
कृत्वा जागरणं दीपैः सूक्तैश्च शान्तिपाठकैः।
द्वारे द्वितीयभागे तु पुत्तलैश्चापि कज्जलैः ॥

मार्कण्डेयपुराणे—

रक्षणीया तथा षष्ठी निशा तत्र विशेषतः।
रात्रौ जागरण कार्यमन्नदानं तथा बलिः ॥
"जन्मदानां तथा बलि"रित्यपि पाठः।
पुरुषाः शस्त्रहस्ताश्च नृत्यगीतैश्च योषितः।
रात्रौ जागरणं कुर्युर्दशम्यां चैव सूतके ॥

नारदः—

जननात्सप्तमे वाऽह्नि मृत्युरायाति घातकः।
तद्दिने चैव रक्षेयं कर्तव्यायुर्विवृद्धये ॥
सायाह्ने पूज्य विघ्नेशमपूपैश्च पृथग्विधैः ॥ इति।

अथ पञ्चायुधाभरणधारणम्। तदुक्तं श्रीधरीये—

जातस्य पञ्चमदिने शुभदे मुहूर्ते पञ्चायुधाभरणधारणमिष्टमाहुः।
नाभिप्रदेशपरिलम्बिसुवर्णसूत्रं प्रोतं शिशोर्ग्रहनिवारणकं च युक्तम् ॥

अस्यार्थः—पञ्चमदिने जातस्य जन्मनक्षत्रात्पञ्चमनक्षत्रे पञ्चमदिने वा पञ्चायुधाभरणधारणं पञ्चायुधसमन्वितमाभरणं शङ्खचक्रगदाशार्ङ्गनन्दकानां पञ्चायुधानां प्रसिद्धेः पञ्चायुधमिति कथितम्। तत्र शिशोरिति सामान्येन कथनात् कुमारस्य कुमार्याश्च पञ्चायुधाभरणं धार्यमिति। तथोक्तं

बृहस्पतिना—

जन्मतः पञ्चताराङ्कं याते चन्द्रे शिशुं पिता ।
भूषयेद्भूषणैः सर्वैः पञ्चायुधसमन्वितैः ॥
विशेषात्कन्यकायाश्च कर्तव्यं मङ्गलेन च ।
पुंसः सायुधमाकल्पमायुःश्रीकान्तिदं शिशोः ॥ इति ।

इति श्रीप्रथमशाखीयरामकृष्णविरचिते पारस्करगृह्यसूत्रविवरणे संस्कारगणपतौ प्रथमकाण्डे षोडशी कण्डिका समाप्ता ॥

अथ स्पष्टप्रयोगः । आसन्नप्रसवां स्त्रियं गर्भवेदनायुतां ज्ञात्वा अद्भिरभ्युक्षति पतिः । तत्र मन्त्रः—

"एजतु दशमास्यो गर्भो जरायुणा सह ।
यथायं वायुरेजति यथा समुद्र एजति ॥
एवायन्दशमास्यो अस्रज्जरायुणा सह" ॥

ततः स्त्रीसमीपे "ॐ अवैतु पृश्नि शेवलꣳ शुने जराय्वत्तवे नैव माꣳसेन पीवरि न कस्मिँश्चनायतनमव जरायु पद्यताम्" इति अवरावपतनमन्त्रं जपति। तत्र जातमात्रे पुत्रे पिता तस्य मुखं निरीक्ष्य नद्यादावनुष्णवारिणा स्नात्वा देशकालौ स्मृत्वा "अस्य कुमारस्य गर्भाम्बुपानजनितसकलदोषनिबर्हणायुर्मेधाभिवृद्धिबीजगर्भसमुद्भवैनोनिबर्हणद्वारा परमेश्वरप्रीतये जातकर्म करिष्ये" इति सङ्कल्प्य गणेशपूजनाद्याभ्युदयिकं कृत्वा अच्छिन्ने नाले मेधाजननायुष्यं करोति । तत्र मेधाजननं यथा—अनामिकाङ्गुल्या सुवर्णेनान्तर्हितया मधुघृते मेलयित्वा केवलं घृतं वा कुमारं प्राशयति । "ॐ भूस्त्वयि दधामि । ॐ भुवस्त्वयि दधामि । ॐ स्वस्त्वयि दधामि । ॐ भूर्भुवःस्वः सर्वं त्वयि दधामि" । इत्यनेन मन्त्रेण सकृत् प्राशयति । प्रतिवाक्यमित्यपरे । अथायुष्यं करोति । कुमारस्य नाभिसमीपे दक्षिणकर्णसमीपे वा । "ॐ अग्निरायुष्मान्स वनस्पतीभिरायुष्माँस्तेन त्वायुषायुष्मन्तं करोमि । सोम आयुष्मान्स ओषधीभिरायुष्मांस्तेन त्वायुषा-

युष्मन्तं करोमि। ब्रह्म आयुष्मत्तद्ब्राह्मणैरायुष्मत्तेन त्वायुषायुष्मन्तं करोमि। देवा आयुष्मन्तस्तेऽमृतेनायुष्मन्तस्तेन त्वायुषा युष्मन्तं करोमि। ऋषय आयुष्मन्तस्ते व्रतैरायुष्मन्तस्तेन त्वायुषायुष्मन्तं करोमि। पितर आयुष्मन्तस्ते स्वधाभिरायुष्मन्तस्तेन त्वायुषायुष्मन्तं करोमि। यज्ञ आयुष्मान्स दक्षिणाभिरायुष्मास्तेन त्वायुषायुष्मन्तं करोमि। समुद्र आयुष्मान्स स्रवन्तीभिरायुष्मांस्तेन त्वायुषायुष्मन्तं करोमि। ॐकश्यपस्य त्र्यायुषं जमदग्नेस्त्र्यायुषम्। यद्देवानामायुषं तन्मे अस्तु त्र्यायुषम्"। इतिमन्त्रं त्रिर्जपति। काम्यत्वाद्वात्सप्रानुवाकं जपति।

"ॐ दिवस्परि प्रथमं जज्ञे अग्निरस्मद्द्वितीयं परि जातवेदाः। तृतीयमप्सु नृमणा अजस्रमिन्धान एनं जरते स्वाधीः॥१॥ विद्मा ते अग्ने त्रेधा त्रयाणि विद्मा ते धाम विभृता पुरुत्रा। विद्मा ते नाम परमं गुहा यद्विद्मा तमुत्सं यत आजगन्थ॥२॥ समुद्रे त्वा नृमणा अप्स्वन्तर्नृचक्षा ईधे दिवो अग्न ऊधन्। तृतीये त्वा रजसि तस्थिवांसमपामुपस्थे महिषा अवर्द्धन्॥ ३ ॥ अक्रन्ददग्निस्तनयन्निव द्यौः क्षामा रेरिहद्वीरुधः समञ्जन्। सद्यो जज्ञानो विहीमिद्धो अख्यदारोदसी भानुना भात्यन्तः॥ ४ ॥ श्रीणामुदारो धरुणो रयीणाम्मनीषाणां प्रार्पणः सोमगोपाः। वसुः सूनुः सहसो अप्सु राजा विभात्यग्र उषसामिधानः॥५॥ विश्वस्य केतुर्भुवनस्य गर्भ आरोदसी अपृणाज्जायमानः। वीडुञ्चिदद्रिमभिनत्परायञ्जना यदग्निमयजन्त पञ्च॥ ६ ॥ उशिक्पावको अरतिः सुमेधा मर्त्तेष्वग्निरमृतो निधायि। इयर्त्ति धूममरुषं भरिभ्रदुच्छुक्रेण शोचिषा द्यामिनक्षन्॥७॥ दृशानो रुक्म उर्व्या व्यद्यौद्दुर्मर्षमायुः

श्रिये रुचान? अग्निरमृतो अभवद्वयोभिर्यदेनं द्यौरजनयत्सुरेताः ॥८॥ यस्ते अद्य कृणवद्भद्रशोचेऽपूपन्देव घृतवन्तमग्ने । प्र तन्नय प्रतरं वस्यो अच्छाभि सुम्नन्देवभक्तं यविष्ठ ॥ ९ ॥ आतम्भज सौश्रवसेष्वग्न उक्थउक्थ आभज शस्यमाने । प्रिय? सूर्ये प्रियो अग्ना भवात्युज्जातेन भिनददुज्जनित्वैः ॥ १० ॥ त्वामग्ने यजमाना अनु द्यून्विश्वा वसु दधिरे वार्याणि । त्वया सह द्रविणमिच्छमाना व्रजं गोमन्तमुशिजो विवव्रुः" ॥ ११ ॥

अयं जपः पाक्षिकः । ततः कुमारस्य प्रतिदिशं ब्राह्मणपञ्चकस्य स्थापनम् । पञ्चमो नैर्ऋत्यकोणे । ततः पिता "इममनुप्राणिते"ति तान् ब्राह्मणान् प्रति ब्रूयात् । ततः पूर्वादिदिक्स्थिता ब्राह्मणाः कुमारं लक्षीकृत्य "प्राणे"ति प्राच्यः । "व्याने"ति दाक्षिणात्यः । "अपाने"ति पाश्चात्यः । "उदाने"त्युदीच्यः । "समाने"ति उपरिष्टादवेक्ष्यमाणः पञ्चमः । अविद्यमानेषु ब्राह्मणेषु स्वयमेव करोति तत्र प्रैषाभावः । ततो यस्मिन्देशे कुमारो जातो भवति तं देशमभिमन्त्रयते । तत्र मन्त्रः– "ॐवेद ते भूमि हृदयं दिवि चन्द्रमसि श्रितम् । वेदाहं तन्मां तद्विद्यात्पश्येम शरदः शतञ्जीवेम शरदः शतꣳशृणुयाम शरदः शतम्" । अथैनमभिमृशति । तत्र मन्त्रः "ॐ अश्मा भव परशुर्भव हिरण्यमस्रुतं भव । आत्मा वै पुत्रनामासि स जीव शरदः शतम्" । अस्य मातरमभिमन्त्रयते । तत्र मन्त्रः "ॐ इडासि मैत्रावरुणी वीरे वीरमजीजनथाः । सा त्वं वीरवती भव यास्मान्वीरवतोऽकरत्" । अथ कुमारस्य मातुर्दक्षिणं स्तनं प्रक्षाल्य प्रयच्छति । तत्र मन्त्रः । "ॐ इमꣳस्तनमूर्जस्वन्तन्धयापाम्प्रपीनमग्ने सरिरस्य मध्ये । उत्सञ्जुषस्व मधुमन्तमर्वन्त्समुद्रियꣳसदनमाविशस्व"। तत उत्तरं प्रक्षाल्य प्रयच्छति । तत्र मन्त्रः "ॐ यस्ते स्तनः शशयो यो मयोभूर्यो रत्नधा वसु-

सुविद्य६ सुदत्रं÷। येन विश्वा पुष्यसि वार्य्याणि सरस्वति तमिह धातवेऽकः?। उर्व्वन्तरिक्षमन्वेमि"। अथ शिरःप्रदेशे उदपात्रं निदधाति। तत्र मन्त्रः। "ॐ आपो देवेषु जाग्रथ यथा देवेषु जाग्रथ। एवमस्याᳬसूतिकायाᳬसपुत्रिकायां जाग्रथ"। उदपात्रं स्थापितमेव तिष्ठति प्रागुत्थानात्। ततः पञ्चभूसंस्कारान् कृत्वा सूतिकागृहद्वारदेशेऽग्नेः स्थापनम्। तत्र सन्ध्ययोराहुतिद्वयं होमयेद्दशरात्रम्। तत्र मन्त्रः—"ॐ शण्डा मर्का उपवीरः शौण्डिकेय उलूखलः। मलिम्लुचो द्रोणासश्च्यवनो नश्यतादितः स्वाहा। इदं शण्डा मर्का उपवीरः शौण्डिकेय उलूखलः। मलिम्लुचो द्रोणसश्च्यवनो नश्यतादितेभ्यो न मम। ॐ आलिखन्ननिमिषः किंवदन्त उपश्रुतिर्हर्यक्षः कुम्भीशत्रुः पात्रपाणिर्नृमणिर्हन्त्रीमुखः सर्षपारुणश्च्यवनो नश्यतादितः स्वाहा। इदमालिखतेऽनिमिषाय किंवदद्भ्यः उपश्रुतये हर्यक्षाय कुम्भीशत्रवे पात्रपाणये नृमणये हन्त्रीमुखाय सर्षपारुणाय च्यवनाय न मम।" ततो दशब्राह्मणभोजनसङ्कल्पः। अथवोभयोः "अग्नये न मम" इति त्यागः। यदि कुमारो बालग्रहादिगृहीतो भवेत्तदा पिता कुमारं मत्स्यजालेनोत्तरीयेण वा प्रच्छाद्य स्वाङ्के गृहीत्वा जपति-"ॐ कूर्क्कुरः सुकूर्क्कुरः कूर्क्कुरो बालबन्धनः। चेच्चेच्छुनक सृज नमस्ते अस्तु सीसरो लपेतापह्वर तत्सत्यम्। यत्ते देवा वरमददुः स त्वं कुमारमेव वा वृणीथाः। चेच्चेच्छुनक सृज नमस्ते अस्तु सीसरो लपेतापह्वर तत्सत्यम्। यत्ते सरमा माता सीसरः पिता श्यामशबलौ भ्रातरौ। चेच्चेच्छुनक सृज नमस्ते अस्तु सीसरो लपेतापह्वर" इति पितुर्जपः। ततस्तमभिमृशेत् "ॐ न नामयति न रुदति न हृष्यति न ग्लायति यत्र वयं वदामो यत्र चाभिमृशामसी"त्यनेन मन्त्रेण पिता-कुमारमभिमृशेत्। पितरि ग्रामान्तरं गते पितृव्यादिर्गोत्रजो ज्येष्ठक्रमेणेदं कुर्यात्। ततो दशदिनपर्यन्तं सन्ध्यायां सूतिकासमीपे जपेत्। "ॐ गणानांन्त्वा० १ श्रीश्चते० १ आ कृष्णेन० १ इमन्देवा० १ अग्नि-

म्मूर्द्धा० १ उद्बुध्यस्व० १ बृहस्पते अति० १ अन्नात्परिस्रुतो० १ शन्नो देवी० १ कयानश्चित्र० १ केतुङ्कृण्वन्० १ त्रातारमिन्द्र० १ त्वन्नो ऽअग्ने० १ यमाय त्वा० १ असुन्वन्त० १ तत्वा यामि० १ आ नो नियुद्भिः० १ व्वयꣳसोम० १ तमीशानं० १ अस्मे रुद्रा० १ स्योना पृथिवि० १ नमोऽस्तु सर्पेभ्यो० ३ दिवस्परि०" एकादशकण्डिकाः। "आ नो भद्रा" इत्यारभ्य प्रथमं "जनित्व" मित्यन्तम्। "ऋचं व्वाच०"मित्यध्यायः। इति रात्रिवर्गः।

अथ सूतिकास्नानविधिः। दैवज्ञवल्लभः—

करेन्द्रभाग्न्यानिलवासवान्त्यमैत्रेन्द्रमाश्विध्रुवभेऽह्नि पुंसाम्।
तिथावरिक्ते शुभमामनन्ति प्रसूतिकास्नानविधिं मुनीन्द्राः॥

पुंसामह्नि रविभौमगुरुवारेषु।

अथ षष्ठीपूजा। पञ्चमे षष्ठे च दिने षष्ठे एव वा पूर्वरात्रे। आचम्य प्राणनायम्य देशकालौ स्मृत्वा "अस्यां रात्रौ ममाभिनवजातकुमारस्य सकलारिष्टशान्तिद्वारा सकलायुरारोग्याभ्युदयकामः श्रीपरमेश्वरप्रीत्यर्थं क्षेत्रपालादिपूजनं क्षेत्रपालादिभ्यो बलिदानमहं करिष्ये। तदङ्गतया निर्विघ्नार्थं गणपतिपूजनं कलशस्थापनं च करिष्ये।" पूर्ववद्गणपतिपूजनादि सर्वं सम्पाद्य क्षेत्रपालादिप्रतिमासु अक्षतपुञ्जेषु वा आवाह्य पूजयेत्। "क्षेत्रपाल इहागच्छ इह तिष्ठ"त्यावाह्य "भूतानीहागच्छत इह तिष्ठत। योगिन्यादिमातरः इहागच्छत इह तिष्ठत। देवमातरः इहागच्छत इह तिष्ठत। आदित्यादिग्रहाः इहागच्छत इह तिष्ठत। दिक्पालाः इहागच्छत इह तिष्ठत। शक्र क्षेत्रपाल इहागच्छ इह तिष्ठ। भूतदैत्यपिशाचाद्या इहागच्छत इह तिष्ठत" इत्यावाह्य पूजयेत्। "आवाहित देवताभ्यो नमः" आसनं पाद्यमर्घ्यमाचमनं मध्येपानीयं करोद्वर्तनं ताम्बूलं दक्षिणां नीराजनं मन्त्र-

पुष्पाञ्जलिम्। एवं संपूज्य बलिदानं दद्यात्। तत्र मन्त्रः—

क्षेत्रपाल! नमस्तुभ्यं सदा शान्तिफलप्रद!।
बालस्य विघ्ननाशाय गृह्ण गृह्ण बलिं त्विमम्॥

इति क्षेत्रपालाय दध्योदनमाषदीपादीनि दद्यात्।

पूर्वादिदिग्विभागेन स्वस्थानं प्रतिवासिनः।
रक्षां कुर्वन्तु ते सर्वे मम गृह्णन्त्विमं बलिम्॥

इति भूतेभ्यः,

योगिनी डाकिनी चैव मातरो निवसन्ति याः।
रक्षां कुर्वन्तु ताः सर्वा मम गृह्णन्त्विमं बलिम्॥

इति मातृभ्यः,

नानारूपधराः सर्वा मातरो देवयोनयः।
स्वयं रक्षन्तु मे बालं मम गृह्णन्त्विमं बलिम्॥

इति देवमातृभ्यः,

आदित्यादिग्रहाः सर्वे नित्यं स्वर्गनिवासिनः।
रक्षां कुर्वन्तु ते सर्वे मम गृह्णन्त्विमं बलिम्॥

इत्यादित्यादिनवग्रहेभ्यः,

दिक्पालाश्च तथेन्द्राद्याः स्वस्थानप्रतिवासिनः।
शान्तिं कुर्वन्तु ते सर्वे मम गृह्णन्त्विमं बलिम्॥

इति इन्द्रादिदिक्पालेभ्यः,

विचित्ररथमास्थाय भास्वत्कुलिशपाणये।
पौलोम्यालिङ्गिताङ्गाय शक्राय च बलिर्नमः॥

शक्रक्षेत्रपालाय,

भूतदैत्यपिशाचाद्या गन्धर्वा रक्षसां गणाः।
शुभं कुर्वन्तु ते सर्वे मम गृह्णन्त्विमं बलिम्॥

भूतदैत्यपिशाचादिभ्यः। ईशाने "एष माषदीपदध्योदनबलिः चरक्यै नमः"। आग्नेय्याम् "एष माषदीपदध्योदनबलिः सर्प्यै नमः"। नैर्ऋते "एष माषदीपदध्योदनबलिः पूतनायै नमः"।

वायवे "एष माषदीपदध्योदनबलिः पापराक्षस्यै नमः" । ततो नमस्कृत्य क्षमापयेत् । हस्तौ पादौ प्रक्षाल्याचम्य गृहद्वारमागत्य गणपतिं पूजयेत् । देशकालौ सङ्कीर्त्य "मम जातस्य कुमारस्य सर्वोपद्रव निवृत्तिपूर्वकनैरुज्यदीर्घायुःप्राप्त्यर्थं महाषष्ठीपूजाङ्गभूतं गणपतिपूजनमहं करिष्ये" । षोडशोपचारैर्गणपतिं पूजयित्वा प्रणमेत् ।

सर्वविघ्नहरोऽसि त्वमेकदन्त ! गजानन ! ।
त्वं षष्ठ्यामर्चितः प्रीत्या शिशुं दीर्घायुषं कुरु ॥
लम्बोदर! महाभाग! सर्वोपद्रवनाशन! ।
त्वत्प्रसादादविघ्नेन चिरं जीवतु बालकः ॥

ततो द्वारदक्षिणप्रदेशे क्षेत्रपालं पूजयेत् । "क्षेत्रपाल इहागच्छ इह तिष्ठे"ति । "क्षेत्रपालाय नम" इत्यासनादिना पूजयेत् । ततो वामद्वारप्रदेशे दुर्गां पूजयेत् । "दुर्गे इहागच्छ इह तिष्ठे"ति "दुर्गायै नम" इत्यासनादिना पूजयेत् । ततो द्वारे नन्दिन्यादिसप्तमातृपूजनम् ।

नन्दे! नन्दिनि ! वासिष्ठे! वसुदेवे! च भार्गवे! ।
जये! च विजये! चैव सप्तैता द्वारमातरः ॥

"द्वारमातर इहाऽऽगच्छत इह तिष्ठत" । षोडशोपचारैः पूजयेत् । ततो मन्त्रपुष्पाञ्जलिं गृहीत्वा—

नन्दे! नन्दय वासिष्ठे! वसुभिश्चाम्बुभिः प्रजाः ।
जये! भार्गवदायादे! प्रजानां भद्रमावह ॥
पूर्णेऽङ्गिरसदायादे! पूर्णकामाः प्रजाः कुरु ।
भद्रे! काश्यपदायादे! प्रजानां भद्रमावह ॥
सर्वबीजसमायुक्ते! सर्वगन्धौषधैर्वृते! ।
सुचरे! नन्दने! नन्दे! वासिष्ठे! रम्यतां गृहे ॥
प्रजापतिसुते! देवि! चतुरस्रे! महीपते! ।
सुभगे! सुव्रते! देवि! गृहे काश्यपि! रम्यताम् ॥
पूजिते! परमाचार्यैर्गन्धमाल्यैरलङ्कृते! ।
भवभूतिकरि देवि! गृहे भार्गवि! रम्यताम् ॥

जयेके! वाञ्छिते! पूर्णे! मुनेरङ्गिरसः सुते! ।
इष्टके! त्वं यथेच्छं त्वं प्रतिष्ठां गृहिनः कुरु ॥
ग्रामस्वामिपुरस्वामिगृहस्वामिपरिग्रहे! ।
मनुष्यपशुहस्त्यश्वधनवृद्धिकरी भव ॥

नमस्कृत्य क्षमापयेत्। ततो गृहमध्ये प्रविश्य षष्ठीं देवीं पूजयेत्। नवसूतिकागृहं भूषितं कार्यम्। सर्वत्र सर्षपांश्च विकिरेत्। "यदत्र संस्थितं भूतं०। अपक्रामन्तु भू०"। गौर्यादिषोडशमातरः गणेश इष्टदेवता कुलदेवता ग्रामदेवता सूर्यादिग्रहा अधिदेवताः प्रत्यधिदेवताः पञ्चलोकपाला दिक्पाला अष्टौ वसवः। एतेषां पूजनादि कश्चिद्देशाचारः। ततः षष्ठीं पूजयेत्। देशकालौ सङ्कीर्त्य "अस्यां रात्रौ ममाभिनवजातस्य कुमारस्य सकलारिष्टशान्तिद्वारा नैरुज्यायुरारोग्यार्थं श्रीपरमेश्वरप्रीत्यर्थं जन्मदानां षष्ठीदेव्याः जीवन्तिकायाश्च यथामिलितोपचारैः पूजनमहं करिष्ये" इति सङ्कल्प्य षष्ठीमावाहयेत्।

आयाहि वरदे! देवि! षष्ठीदेवीति विश्रुते! ।
शक्तिभिः सह पुत्रं मे रक्ष रक्ष वरासने! ॥

"ॐमनो जूति"रिति प्रतिष्ठाप्य ततः षडङ्गन्यासं कुर्यात्। ॐ खां अङ्गुष्ठाभ्यां नमः। ॐखीं तर्जनीभ्यां स्वाहा। ॐखूं मध्यमाभ्यां वषट्। ॐखैं अनामिकाभ्यां हुम्। ॐखौं कनिष्ठिकाभ्यां वौषट्। ॐखः करतलकरपृष्ठाभ्यां फट्"। एवं हृदयादि। "ॐ खां हृदयाय नमः। ॐखीं शिरसे स्वाहा। ॐखूं शिखायै वषट्। ॐखैं कवचाय हुम्। ॐखौं नेत्रत्रयाय वौषट्। ॐखः अस्त्राय फट्। ततः "षष्ठिकादेव्यै नमः" पाद्य समर्पयामि अर्घ्यं समर्पयामि। आचमनीयं पञ्चामृतस्नानम्। शुद्धोदकस्नानम्। वस्त्रम्। यज्ञोपवीतम्। आभरणम्। चन्दनम्। अक्षतान्। पुष्पाणि। धूपम्। दीपम्। नैवेद्यम्। आचमनीयम्। मध्येपानीयम्। उत्तरापोशनम्। करोद्वर्तनम्। पूगीफलम्। ताम्बूलम्। दक्षिणाम्। नीराजनदीपम्। ततः पुष्पाञ्जलिं गृहीत्वा

शक्तिस्त्वं सर्वभूतानां लोकानां हितकारिणी ।
मातर्बालमिमं रक्ष महाषष्ठि ! नमोऽस्तु ते ॥
रुद्राणी रुद्ररूपेण महाविघ्नविनाशिनि ! ।
प्रसन्ने ! वरदे ! देवि ! स्वयं संरक्ष बालकम् ॥
भूतदैत्यपिशाचेषु डाकिनीयोगिनीषु च ।
मातेव रक्ष मे पुत्रमापदः पन्नगेषु च ॥
त्वमेव वैष्णवी देवि ! ब्रह्मरूपा व्यवस्थिता ।
रुद्रशक्तिः समाख्याता महाषष्ठि ! नमोऽस्तु ते ॥
गौरी पुत्रो यथा स्कन्दः शिशुः संरक्षितस्त्वया ।
तथा ममाप्ययं बालो रक्ष्यतां षष्ठि ! ते नमः ॥

अथ कार्तिकेयपूजा । "कार्तिकेय इहागच्छ इह तिष्ठ एतानि पाद्यार्घ्याचमनादीनि कार्तिकेयाय नमः" । पुष्पाञ्जलिं गृहीत्वा–

कार्तिकेय ! महाबाहो ! गौरीहृदयनन्दन ! ।
कुमारं रक्ष भीतिभ्यो देवदेव ! नमोऽस्तु ते ॥

ततो मन्थानं पूजयेत् ।

मन्थान ! त्वं हि गोलोके देवदेवेन निर्मितः ।
पूजितोऽसि विधानेन सूतीरक्षां कुरुष्व मे ॥
मन्थान ! त्वं हि लोकानां वैवस्वतविनिर्मितः ।
विधानं त्वं हि लोकेषु सूतीरक्षां कुरुष्व मे ॥
पूजितश्च विधानेन सूतीरक्षां कुरुष्व मे ।
अस्मिंश्च सूतिकागारे देवीभिः परिवारिते ॥
रक्षां कुरु महाभाग ! सर्वोपद्रवशान्तिकृत् ! ।

ततः खड्गपूजा "खड्गेहागच्छ इह तिष्ठ" । पाद्यादिभिः पूजयेत् । पुष्पाञ्जलिं गृहीत्वा–

असि१र्विशसनः२ खड्ग३ स्तीक्ष्णधारो४ दुरासदः५ ।
श्रीगर्भो६ विजयश्चैव७ धर्माधार८ स्तथैव च ॥
इत्यष्टौ तव नामानि स्वयमुक्तानि वेधसा ।

पूजितोऽसि विधानेन सूतीरक्षां कुरुष्व मे ॥
नक्षत्रं कृत्तिकाऽसि त्वं गुरुर्देवो महेश्वरः।
पिता पितामहो देवस्त्वं मां पालय सर्वदा ॥
इयं येन धृता क्षोणी हतश्च महिषासुरः।
तीक्ष्णधाराय शुद्धाय तस्मै खड्गाय ते नमः ॥

ततो विष्णुपूजां कुर्यात्।

त्रैलोक्यपूजितः श्रीमान्महाविजयनन्दनः।
शान्तिं कुरु गदापाणे! नारायण! नमोऽस्तु ते ॥

ततः शङ्खपूजां कुर्यात्।

पुण्यस्त्वं शङ्ख!पुण्यानां मङ्गलानाञ्च मङ्गलम्।
विष्णुना त्वं धृतो नित्यमतः शान्तिं प्रयच्छ मे ॥

ततो वंशं पूजयेत्।

सर्वमङ्गलमाङ्गल्य! गोविन्दस्य करे स्थित!।
वंश! वर्धय मे वंशं सदानन्द! नमोऽस्तु ते ॥

ततः पुष्पाञ्जलिं षष्ठीदेव्यै दत्वा "अस्यां रात्रौ ममाभिनवजातकुमारस्य नैरुज्यदीर्घायुष्यकामनया दत्तान्येतानि गन्धपुष्पधूपदीपनैवेद्यपक्वान्नापूपपूरिकाताम्बूलादीनि साङ्गायै सपरिवारायै षष्ठीदेव्यै नमः" इत्युत्सृजेत्। "अनया पूजया षष्ठी देवी प्रीयताम्"। ततो बालं व्यजने कृत्वा षष्ठीदेव्यै समर्पयेत्। तत्रायं मन्त्रपाठः—

देवतानामृषीणां च भक्तानां भक्तवत्सले!।
अर्पितं रक्ष मे पुत्रं महाषष्ठि! नमोऽस्तु ते ॥
जननी सर्वभूतानां बालकाना विशेषतः।
नारायणीस्वरूपेण पुत्रं मे रक्ष सर्वदा ॥
दैत्यभूतपिशाचेभ्यो डाकिनीभ्यः शरोत्करैः।
सुतं मे स्वसुतं कृत्वा रक्ष रक्ष वरानने! ॥
एवं रक्ष सदा षष्ठि! महाविघ्नविनाशिनि!।
बालं समातरं रक्ष नित्यं मत्कुलसंस्थिता ॥

सदा सर्वहिते ! मातर्जगतामुपकारिणि ! ।
सर्वतः षष्ठिरूपेण बालरक्षां कुरुष्व मे ॥
षष्ठि! देवि महाभागे ! हिताहितफलप्रदे ! ।
त्वत्प्रसादादविघ्नेन चीरं जीवतु बालकः ॥
सर्वतः षष्ठिके ! देवि ! बालरक्षां कुरुष्व मे ।
त्वां विना षाष्ठिके ! देवि ! नान्या रक्षा जगत्त्रये ॥
अयं मम कुमारोऽयं रक्षार्थं पादयोस्तव ।
नीतो मया महाभागे ! चिरं जीवतु बालकः ॥

ततो हस्तेन बालं सम्मार्जयेत् ।

माथुरं यद्बलं यच्च विष्णोरमिततेजसः ।
हरस्य यद्बलं तच्च सर्वं भवतु मे सुते ॥
शान्तिरस्तु शिवं चास्तु प्रणश्यत्वशुभं च यत् ।
यतः समागतं पापं तत्रैव प्रतिगच्छतु ॥

ततो जातहारिण्यो मातरः पूज्याः ।

जातं हरन्ति या बालं मातरो गूढविग्रहाः ।
अपि रक्षन्तु मत्पुत्र बलिं पूजां हरन्तु ताः ॥

ततो ब्राह्मणपूजनम् । ब्राह्मणेभ्यस्ताम्बूलदक्षिणादि दद्यात् । "अस्यां रात्रौ कृतषष्ठीपूजनसाङ्गतासिद्ध्यर्थं हिरण्यमग्निदैवतं तन्मूल्योपकल्पितं द्रव्यं यथानामगोत्रेभ्यो ब्राह्मणेभ्यो दातुमहमुत्सृजे" । जननाशौचमध्ये प्रथमपञ्चमषष्ठदशमादिनेषु दाने प्रतिग्रहे च न दोषः । अन्नं निषिद्धम् । तत आगत्य द्वारमातृकाः पूजयेत् । द्वारस्योभयतो द्वे द्वे लिखेत । तासां नामानि—

धिषणा वृद्धिमाता च तथा गौरी च पूतना ।
आयुर्दाऽयो भवन्त्वेता अद्य जन्मदिने मम ॥

पञ्चोपचारैः पूजा कार्या । स्त्रियो भोजनीयाः । गृहस्य पश्चात्स्था-मुण्डापूजनम् । ततो हलपूजनम् ।

निदानं सर्वभूतानामायुधं नीलवाससः ।
गृह्ण गृह्ण कृतां पूजां बलभद्र ! नमोऽस्तु ते ॥

अथ वृषभकपालपूजा ।

कपाल ? वृषभस्य त्वं श्मशानभुवि सन्ततम् ।
भूतप्रेतपिशाचेभ्यः पुत्रं मे रक्ष सर्वदा ॥

ब्राह्मणं प्रणमेत् । इत आरभ्य प्रतिदिनं पूजयेत् । दशमेऽह्नि विसर्जनं कार्यम् । द्वारमध्ये च्छागबन्धनम् । मुसलधारणम् । सशस्त्रपाणिभिः पुरुषैर्जाग्रद्भिः रात्रौ जागरणं कार्यम् ।

इति श्रीप्रथमशाखीयरामकृष्णविरचिते पारस्करगृह्यसूत्रविवरणे संस्कारगणपतौ षष्ठीपूजाप्रयोगः ।

अत्र प्रसङ्गादृक्षेषु गण्डान्तादिनिमित्तेषु जातस्यारिष्टं परिहारं चाह । उत्तरगार्ग्ये—

अथातः सम्प्रवक्ष्यामि जन्मकाले विशेषतः ।
गण्डान्तानि च नामानि महादोषकराणि च ॥
दिनक्षये व्यतीपाते व्याघाते विष्टिवैधृतौ ।
शूले गण्डेऽतिगण्डे च परिघे यमघण्टके ॥
कालदण्डे मृत्युयोगे दग्धयोगे सुदारुणे ।
तस्मिन्गण्डदिने प्राप्ते प्रसूतिर्यदि जायते ॥

शौनकोऽपि—

कुमारजन्मकाले तु व्यतीपातश्च वैधृतिः ।
संक्रमे च रवेस्तत्र जातो दारिद्र्यकारकः ॥
अतिदोषकरी प्रोक्ता तत्र पापयुते सति ।
विचार्य तत्र दैवज्ञं शान्तिं कुर्याद्यथाविधि ॥

यदा बहुनिमित्तसम्पातस्तदा 'प्रतिनिमित्तं नैमित्तिक'मिति न्यायेन सर्वाणि नैमित्तिकानि कार्याणि। यथा अमावास्याया ज्येष्ठानक्षत्रे व्यतीपातादौ जातस्य अमावस्यादिशान्तिः क्रियते । तत्र क्रमस्त्वैच्छिकः । यद्वा तन्त्रेणैव कार्याणि । कर्त्रादीनामेकत्वात् । कुमार्या अप्येतत्कार्यम् । न्या-

यसाम्यात् । "सुतः सुता वे"त्यादिवक्ष्यमाणवचनाच्च । तत्र तावत्सर्वारिष्टशान्तिसाधारणत्वात् गोमुखजननविधानमादावभिधीयते । प्रयोगपारिजाते गर्गः—

प्रणिपत्य रविं वक्ष्ये प्रायश्चित्तमनुस्मरन् ।
सर्वारिष्टविनाशाय यदुक्तं ज्योतिरर्णवे ॥
पित्ररिष्टे सुतारिष्टे मात्ररिष्टे तथैव च ।
प्रायश्चित्तं तदा कुर्यात्तत्तद्दोषस्य शान्तये ॥
पूषाश्विनौ गुरौ सार्पमघाचित्रन्द्रमूलभे ।
एषु ऋक्षेषु जातस्य कुर्याद्गोजननं तथा ॥

पूषा रेवती गुरुः पुष्यः इन्द्रो ज्येष्ठा । शेषं प्रसिद्धम् । अथ इतिकर्तव्यतामाह—

जन्मर्क्षे वा त्रिजन्मर्क्षे शुभे वारे शुभे दिने ।
कृत्वाभ्यङ्गादिकं सर्वं गृहालङ्कारपूर्वकम् ॥
गोमयेनोपलिप्याथ गृहस्यैशानभागके ।
पङ्कजं कर्णिकायुक्तं रजोभिः श्वेतवर्णकैः ॥

श्वेतवर्णकै रजोभिस्तण्डुलादिपिष्टैरित्यर्थः ।

व्रीहींस्तत्र विनिक्षिप्य यथा वित्तानुसारतः ।
नवशूर्पन्तु तन्मध्ये रक्तवस्त्रं प्रसारयेत् ॥
स्थापयित्वा शिशुं तत्र पुनः सूत्रेण वेष्टयेत् ।
प्राङ्मुखं तमवाक्पादं लिङ्गभगतं शिशुम् ॥
गोमुखं दर्शयित्वाथ पुनर्जातं तु गोमुखात् ।
विष्णुर्योनिमितिसूक्तेन गव्येन स्नपयेच्छिशुम् ॥
गवामङ्गेषु मन्त्रेण गवामङ्गेषु संस्पृशेत् ।
विष्णोः श्रेष्ठेन मन्त्रेण गोप्रसूतं तु बालकम् ॥
आचार्यस्तु समादाय पश्चान्मात्रे ददेत्तदा ।
माता जघन्यभागस्था शिशुमानीय संमुखात् ॥
ततः पित्रे तदा दद्यात्ततो मात्रे प्रदापयेत् ।

वस्त्रे स्थापयितस्याथ पुत्रस्य मुखमीक्षयेत् ॥
गोमूत्र गोमयं क्षीरं दधि सर्पिश्च संयुतम्।
आपोहिष्ठादिभिर्मन्त्रैरभिषिञ्चेत्ततः शिशुम् ॥
मूर्ध्नि चाघ्राय तं पुत्र तन्मन्त्रेण तदा पिता।
अङ्गादङ्गात्सम्भवसि हृदयादधिजायसे ॥
आत्मा वै पुत्रनामासि स जीव शरदः शतम्।
मूर्द्धनि त्रिश्चघ्राय तं शिशुं स्थापयेत्ततः ॥
पुण्याह वाचयेत्पश्चाद्ब्राह्मणैर्वेदपारगैः।
दरिद्रायाथ विप्राय तां गां चाभ्यर्च्य दापयेत् ॥
गोवस्त्रस्वर्णधान्यानि दद्यादर्कादितः क्रमात्।
यथाशक्ति धनं दद्याद्ब्राह्मणेभ्यस्तदा पिता ॥

अर्कादितः सूर्यादिग्रहेभ्य इत्यर्थः।

ततो होमं प्रकुर्वीत स्वस्वशाखोक्तमार्गतः।
उल्लेखनादिकं कृत्वा वाऽऽज्यभागान्तमाचरेत् ॥
होमस्येशानदिग्भागे धान्योपरि शुभं घटम्।
पञ्चगव्यं घटे स्थाप्य तिलं तत्र विनिक्षिपेत् ॥
क्षीरद्रुमकषायांश्च पञ्चरत्नानि निक्षिपेत्।

क्षीरद्रुमकषायाः पञ्चपल्लवाः पञ्चत्वच इत्यर्थः।

वस्त्रयुग्मेन संच्छाद्य गन्धादिभिरथार्चयेत्।
विष्णुं वरुणमभ्यर्च्य प्रतिमायां विधानतः ॥
यत इन्द्रादिभिर्मन्त्रैः कुम्भं स्पृष्ट्वाभिमन्त्रयेत्।
दधिमध्वाज्ययुक्तेन होमं कुर्याद्विधानतः ॥
आपोहिष्ठेति तिसृभिरप्सु मे सोम इत्यथ।
तद्विष्णोः परमं पदमक्षीभ्यां तेऽथ सूक्ततः ॥
ऋग्भिराभिः प्रत्यृचं च अष्टाविंशतिसंख्यया।
अशक्तश्चाष्टसंख्यया वा दधिमध्वाज्यसंयुतम् ॥
आदित्यादिग्रहाणां च होमं कुर्यात्समन्त्रकम् ॥

विष्णुर्योनिमित्यादिमन्त्रा ऋग्वेदे प्रसिद्धाः । दधिमध्वाज्ययुक्तेनेति । अत्र भावे क्तप्रत्ययः । दधिमध्वाज्यमेकीकृत्य होमयेदित्यर्थः ।

अथास्य स्पष्टप्रयोगः । उक्ते काले यजमानः अभ्यङ्गं कृत्वा शुचिपीठे उपविश्याचम्य देशकालौ स्मृत्वा "अमुकनक्षत्रोत्पत्तिसूचितारिष्टनिरसनद्वारा श्रीपरमेश्वरप्रीत्यर्थं गोमुखप्रसवं करिष्ये" । इति सङ्कल्प्य गणेशं सम्पूज्य आचार्यं वृणुयात् । तत आचार्येण गृहस्येशानभागे तण्डुलपिष्टेन पङ्कजं कार्यम् । तत्र कर्णिकायां यथाशक्तिव्रीहीन्निक्षिप्य तेषु शूर्पं निधाय शूर्पे रक्तवस्त्रं प्रसार्य तत्र तिलान्विकीर्य शूर्पे प्राङ्मुखं शिशुं निधाय सूत्रेण शूर्पं वेष्टयित्वा शिशुसमीपे गोमुखमानीय प्रसवं भावयित्वा पञ्चगव्येन शिशुं स्नापयित्वा । तत्र मन्त्राः—

ॐ विष्णोर्न्नु कं व्वीर्याणि प्रवोचं यः पार्थिवानि विममे रजांसि । यो अस्कभायदुत्तरꣳसधस्थं विचक्रमाणस्त्रेधोरुगायो विष्णवे त्वा ॥ दिवो वा विष्ण उत वा पृथिव्या महो वा विष्ण उरोरन्तरिक्षात् । उभा हि हस्ता व्वसुना पृणस्वाप्रयच्छ दक्षिणादोत सव्याद्विष्णवे त्वा । प्र तद्विष्णुस्तवते व्वीर्येण मृगो न भीमः कुचरो गिरिष्ठाः यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वा ॥ विष्णो रराटमसि विष्णोः श्नप्त्रे स्थो विष्णोः स्यूरसि विष्णोर्ध्रुवोऽसि । व्वैष्णवमसि विष्णवे त्वा ॥ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् । आददे नार्यसीदमहꣳ रक्षसां ग्रीवा अपि कृन्तामि । बृहन्नसि बृहद्रवा बृहतीमिन्द्राय व्वाचं व्वद ॥ रक्षोहणं व्वलगहनं व्वैष्णवीमिदमहन्तं व्वलगमुत्किरामि यन्नो निष्ट्यो यममत्यो निचखान । इदमहन्तं व्वलगमुत्किरामि यन्मे समानो यमसमानो निचखान । इदमहन्तं व्वलगमुत्किरामि यन्मे सबन्धुर्यमसबन्धुर्न्निचखान । इदमहन्तं व्वलगमुत्किरामि यन्मे सजातो यमसजातो निचखानोत्कृत्याङ्किरामि ।

"विष्णुर्योनिमिति षण्णां त्वष्टा ऋषिः विष्णुर्देवता अनुष्टुप्छन्दः पञ्चगव्येन शिशोरभिषेके विनियोगः । ॐविष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु। आसिञ्चतु प्रजापतिर्धाता गर्भन्दधातु ते ॥ गर्भन्धेहि सिनीवालि गर्भन्धेहि पृथुष्टुके । गर्भन्ते अश्विनौ देवावाधत्तां पुष्करस्रजौ ॥ हिरण्मयीमरणीयं निर्मन्थतोऽश्विना । तन्ते गर्भं हवामहे दशमे मासि सूतवे ॥ नेजमेष परा पत सुपुत्रः पुनरापत । अस्यै मे पुत्रकामायै गर्भमाधेहि यः पुमान् ॥ यथेयं पृथिवी मह्युत्ताना गर्भमादधे । एवन्त्वं गर्भमाधेहि दशमे मासि सूतवे ॥ विष्णोः श्रेष्ठेन रूपेणास्यां नार्यांङ्गवीन्याम् । पुमांसं पुत्रमाधेहि दशमे मासि सूतवे ॥" एभिरभिषेकः कार्यः । गां स्पृशेत् । तत्र मन्त्राः—

गवामङ्गेषु तिष्ठन्ति भुवनानि चतुर्दश ।
यस्मात्तस्माच्छिवं मे स्यादिह लोके परत्र च ।
गावो मे अग्रतः पान्तु गावो मे सन्तु पृष्ठतः ॥
गावो मे हृदये सन्तु गवां मध्ये वसाम्यहम् ॥

मात्रे शिशुदानम् । "विष्णोः श्रेष्ठेनेति त्वष्टा ऋषिः विष्णुर्देवता अनुष्टुप्छन्दः मात्रे शिशुदाने विनियोगः । ॐ विष्णोः श्रेष्ठेण रूपेणास्यां नार्यां गवीन्याम् । पुमांसम्पुत्रमाधेहि दशमे मासि सूतवे ॥" ततो माता बालं पित्रे दद्यात् । तत आचार्यो बालं गृहीत्वा मात्रे प्रदापयेत् । वस्त्रे स्थाप्य तं पिता तन्मुखमीक्षेत् । पञ्चगव्येन बालमभिषिञ्चेत् । "अपोहिष्ठेति तिसृणां सिन्धुद्वीप ऋषिः आपो देवता गायत्रीच्छन्दः शिशोरभिषेके विनियोगः । ॐआपो हि ष्ठा १ । यो वः शिवतमः २ । तस्मा अरङ्गमाम वः ३ ।" ततः पिता "अङ्गादङ्गादितिसौत्रमन्त्रस्य हिरण्यगर्भ ऋषिर्धाता देवता अनुष्टुप्छन्दः शिशुमूर्धन्यवघ्राणे विनियोगः ।

ॐ अङ्गादङ्गात्सम्भवसि हृदयादधि जायसे ।
आत्मा वै पुत्रनामासि स जीव शरदः शतम्" ॥

अनेन मन्त्रेण त्रिरवघ्राय मातृहस्ते दत्त्वा । "अस्य गोमुखप्रसवाख्यस्य कर्मणः पुण्याहं भवन्तो ब्रुवन्तु" इत्युक्त्वा तान्वाचयित्वा गां ब्राह्मणाय कुटुम्बिने दत्त्वा, ग्रहप्रीत्यर्थं प्रत्येकं गोवस्त्रस्वर्णधान्यानि दत्त्वा, यथाशक्ति भूयसीं दक्षिणां दत्त्वा, तत आचार्योऽग्निं ग्रहांश्च प्रतिष्ठाप्य अन्वाधानं कुर्यात् । "अत्र प्रधानं अपः विष्णुं सकृत् अक्ष्महणं अष्टाविंशतिसंख्यया वा दधिमध्वाज्यद्रव्येण नवग्रहांश्चाज्यद्रव्येण यक्ष्ये" । शेषेण स्विष्टकृतमित्याज्यभागान्तं कृत्वा अग्नेरीशान्यां कुम्भमेकं संस्थाप्य तत्र पञ्चगव्यं तिलान् व्रीहींश्च क्षीरद्रुमकषायान् पञ्चरत्नानि निक्षिप्य वस्त्रयुग्मेन संवेष्ट्य पूर्णपात्रोपरि "तद्विष्णो"रितिमन्त्रेण विष्णुप्रतिमां "तत्त्वा यामीति"वरुणप्रतिमां चाभ्यर्च्य कुम्भं स्पृष्ट्वा वक्ष्यमाणमन्त्रान् जपेत् "यत इन्द्रेति षण्णां कण्वपुत्र ऋषिः प्रगाथ इन्द्रो बार्हतो देवता प्रगाथं छन्दः जपे विनियोगः । ॐ यत इन्द्र भयामहे ततो नो अभयं कृधि । मघवञ्छग्धि तं वसन्न ऊतिभिर्द्विषो विमृधो जहि ॥ त्वं हि राधसस्पते राधसो महः क्षयस्यासि विधतः । तं त्वा वयं मघवन्निन्द्र गिर्वणः सुतावन्तो हवामहे ॥ इन्द्रस्य लुत वृत्रहा परस्या नो वरेण्यः । स नो रक्षिषच्चरमं स मध्यमं स पश्चात्पातु नः पुरः ॥ त्वन्नः पश्चादधरादुत्तरात्पर इन्द्र निपाहि विश्वतः । आरे अस्मत्कृणुहि दैव्यं भयमारेके हेतीरदेवीः ॥ अघाद्याश्वश्व मित्रास्वे परे च नः । विश्वा च नो जरितृत्सत्पन्ते अहा दिवा नक्तं च रक्षिषः ॥ प्रभङ्गी शूरो मघवा नु वां मघः संमिश्लो वीर्याय कम् । उभा ते बाहू वृषणा शतक्रतो निया वज्रं मिमिक्षतु ॥" एतैर्मन्त्रैः कलशमभिमन्त्रयेत् । ततो मिलितैर्दधिमध्वाज्यैर्होमं कुर्यात् । तत्र मन्त्राः—"आपो हि ष्ठेति तिसृणां सिन्धुद्वीप ऋषिः आपो देवता गायत्रीच्छन्दः होमे विनियोगः । ॐआपो हि ष्ठा० १। योवः शिवतमः २। तस्मा अरं ३। अप्सु मे इति मेधातिथिर्ऋषिः आपो देवता अनुष्टुप्छन्दः होमे विनियोगः । ॐअप्सु मे सोमो अब्रवीदन्तर्विश्वानि भेषजा । अग्निं च विश्वश-

म्भुवम् । अग्नय इदं न मम ॥ तद्विष्णोरिति मेधातिथिर्ऋषिः विष्णुर्देवता गायत्रीच्छन्दः होमे विनियोगः । ॐतद्विष्णोः परमं पदं० । विष्णव इदं न मम ॥ अक्षीभ्यां त इति षण्णां विवृहा ऋषिः यक्ष्मघा देवता अनुष्टुप्छन्दः होमे विनियोगः । ॐअक्षीभ्यान्ते नासिकाभ्यां कर्णाभ्यां छुबुकादधि । यक्ष्मं शीर्षण्यं मस्तिष्काज्जिह्वाया विवृहामि ते ॥ ग्रीवाभ्यस्त उष्णिहाभ्यः कीकसाभ्यो अनूक्यात् । यक्ष्मं दोषण्यमंसाभ्यां बाहुभ्यां विवृहामि ते ॥ आन्त्रेभ्यस्ते गुदाभ्यो वनिष्ठो हृदयादधि । यक्ष्मं मतस्नाभ्यां यक्नः प्लाशिभ्यो विवृहामि ते ॥ ऊरुभ्यां ते अष्ठीवद्भ्यां पार्ष्णिभ्यां प्रपदाभ्याम् । यक्ष्मं श्रोणिभ्यां भासदाद्भंससो विवृहामि ते ॥ मेहनाद्वनं करणाल्लोमभ्यस्ते नखेभ्यः । यक्ष्मं सर्वस्मादात्मनस्तमिदं विवृहामि ते ॥ अङ्गादङ्गाल्लोम्नो लोम्नो जातं पर्वणि पर्वणि । यक्ष्मं सर्वस्मादात्मनस्तमिदं विवृहामि ते ॥ यक्ष्मघ्न इदं न मम ॥

आदित्यादिग्रहाणां च होमं कुर्यात्समन्त्रकम् ॥

ग्रहाणां च होमं दधिमध्वाज्यसंयुतं कुर्यादित्यन्वयः । "ॐआ कृष्णेन० इदं सूर्याय नमम १ । ॐइमन्देवा० इदं चन्द्रमसे० २ । ॐअग्निर्मूर्द्धा० इदं भौमाय० ३ । ॐउद्बुध्य० इदं बुधाय० ४ । ॐबृहस्पते अति० इदं बृहस्पतये० ५ । ॐअन्नात्परिस्रुतो० इदं शुक्राय० ६ । ॐशन्नो देवी० इदं शनैश्चराय० ७ । ॐकयानश्चित्र० इदं राहवे० ८ । ॐकेतुं कृण्वन्० इदं केतवे० ९ ।" स्विष्टकृदादि होमशेषं समापयेत् । आचार्यादिभ्यो दक्षिणां दत्वा यथाशक्ति ब्राह्मणान् भोजयेत् । इति गर्गोक्तं गोमुखप्रसवविधानम् ।

अथ दुष्टनक्षत्रादिजननशान्तिविधानानि प्रोच्यन्ते । तत्रादौ नक्षत्रदेवताः कथ्यन्ते । रत्नमालायाम्—

भेशा दस्र१यमा२ग्नि३धातृ४शशिनः५ शर्वो६दिति७र्वाक्पतिः८
कद्रूजाः९पितरो१०भगो११यम१२रवि१३स्त्वष्टा१४ऽहयो मारुतः१५

इन्द्राग्नी१६ त्वथ मित्र१७ इन्द्र१८ निर्ऋति१९ स्तोयं च२० विश्वे२१ विधि२२—

गोविन्दो२३ वसवो२४ म्बुपा२५ जचरणा२६ हिर्बुध्न्य२७ पूषा२८ भिधाः ॥

भानामीशा भेशा नक्षत्रदेवता दस्रयमादयः । अश्विन्यादिक्रमेण बोद्धव्या अष्टाविंशतिः । एतानि जननिमित्तकशान्तिविधानानि ।

अथ प्रथमतो मूलशान्तिरुच्यते । तत्र शौनकः—

अथातः सम्प्रवक्ष्यामि मूलजातहिताय च ।
मातापित्रोर्धनस्यापि कुलशान्तिहिताय च ।
त्यागो वा मूलजातस्य स्यादष्टाब्दात्प्रदर्शनम् ॥

रत्नमालायाम्—

तदाद्यपादके पिता द्वितीयके जनन्यथ ।
धनक्षयं तृतीयके चतुर्थकः शुभावहः ॥
प्रतीपमन्त्यपादतः फलं तदेव सार्पभे ।
तदुक्तदोषशान्तये विधेयमत्र शान्तिकम् ॥

ज्योतिर्निबन्धे—

मूलं विरुद्धावयवं समूलं कुलं हरत्येव वदन्ति सन्तः ।
चेदन्यथा तत्कुरुते विशेषात्सौभाग्यमायुश्च कुलाभिवृद्धिः ॥

कात्यायनः-"अथातो मूलविधिं व्याख्यास्यामो मूलांशे प्रथमे पितुर्नेष्टो द्वितीये मातुस्तृतीये धनधान्यस्य चतुर्थे कुलशोकावहः" ।

ज्योतिर्निबन्धे विशेषः—

कृष्णे तृतीया दशमी वलक्षे भृतो महीजार्किबुधैः समेतः ।
चेज्जन्मकाले किल तत्र मूलमुन्मूलनं तत्कुरुते कुलस्य ॥

तत्रादौ मूलस्थितिः । तत्रैव—

वृषालिसिंहेषु घटेषु मूलं दिवि स्थितं युग्मतुलाङ्गनान्त्ये ।
पातालगं मेषधनुःकुलीरे नक्रेऽर्कसस्थे विचरेच्च मर्त्ये ॥

फलम्—

स्वर्गे मूले भवेद्राज्यं पाताले च धनागमम् ।
मृत्युलोके स्थिते मूले तदा शून्यं समादिशेत् ॥

अथाभुक्तमूलफलम्—

अभुक्तमूलसम्भवं परित्यजेच्च बालकम् ।
समाष्टकं पिताऽथ वा न तन्मुखं विलोकयेत् ॥

अभुक्तलक्षणं रत्नसङ्ग्रहे—

ज्येष्ठान्ते घटिका चैका मूलादौ घटिकाद्वयम् ।
अभुक्तमूलमित्याहुस्तत्र जातं परित्यजेत् ॥

अथ मूलवृक्षविचारः । ज्योतिर्निबन्धे—

मूलस्तम्भस्त्वचा शाखा पत्रं पुष्पं फलं शिखा ।
वेदा४श्च मुनय७श्चैव दिशश्च वसव८स्तथा ॥
नन्द९बाण५रसा६ रुद्रा११ मूलभेदाः प्रकीर्तिताः ।
नक्षत्रमानघटिकाः षष्ठिमानमितीरिताः ॥

फलम्—

मूले मूलं विनाशाय स्तम्भे हानिर्धनक्षयम् ।
त्वचा भ्रातृविनाशाय शाखा मातुर्विनाशकृत् ॥
पत्रेषु परिवारघ्नः पुष्पेषु नृपतिप्रियः ।
फलेषु लभते राज्यं शिखायामल्पजीवनम् ॥

अथ मूलपुरुषविचारः—

मूलर्क्षषष्ठिघटिकाः कृत्वा स्थाप्य नराकृतौ ।
मस्तके घटिकाः पञ्च५ वक्त्रे पञ्च ५ घटीस्तथा ॥
स्कन्धे चत्वारि४ चत्वारि४ भुजयोरष्टकं८ तथा ।
एकैकं१।१ हस्तयोर्न्यस्य हृदये चाष्टकं८ पुनः ॥
नाभिस्थाने द्वयं २ दद्याद्गुह्ये च दशकं१० तथा ।
रस६संख्यास्तु जान्वोश्च पादयोश्च षडेव हि ॥

फलम्--

क्षेत्रलाभः शिरोदेशे वदने पितृघातकम् ।
स्कन्धयोर्धूर्वह चैव बाहुयुग्मे त्वकर्मकृत् ॥
हत्याकरः करद्वन्द्वे पूज्याप्तिर्हृदये भवेत् ।
अल्पायुर्नाभिदेशे च गुह्ये च सुखमद्भुतम् ॥
जङ्घायां भ्रमणे प्रीतिः पादयोर्जीवितात्पता ।
घटीफलं किल प्रोक्तं मूलस्य मुनिपुङ्गवैः ॥
विज्ञेयं विबुधैः सर्वं सार्पे तच्च विपर्ययात् ॥

अथ मुहूर्त्तफलम्--

राक्षसो यातुधानश्च सोमः शुक्रः फणीश्वरः ।
पिता माता यमः कालो विश्वेदेवा महेश्वरः ॥
शर्वाख्यश्च कुबेरश्च घस्रो मेषादिवाकरः ।
गन्धर्वो यमदेवश्च ब्रह्मा विष्णुर्यमस्तथा ॥
ईश्वरो विष्णुरन्ध्रं च पवनो मुनयस्तथा ।
षण्मुखो भृङ्गिरिटी च गौरनाम्नी सरस्वती ॥
प्रजापतिश्च मूलस्य त्रिंशन्मुहूर्त एव च ।
विपरीता पुनर्ज्ञेया त्वश्लेषा जातबालके ॥

फलम्--

प्रथमे च द्वितीये च षष्ठे च द्वादशे तथा ।
त्रयोविंशे च नवमे कुलक्षयकरः शिशुः ॥

अथ स्त्रीजातके विशेषः--

लिखेत्स्त्रीसदृशीं मूर्तिन्तत्र स्थाप्यो घटीक्रमः ।
चतस्रो नाडिकाः४ शीर्षे कुर्वन्ति पशुनाशनम् ॥
मुखे षट्६ धनहानिः स्यात्कण्ठे पञ्च ५ धनागमम् ।
कौटिल्यं हृदये पञ्च५ कुचे वित्तागमं च षट्६ ॥
पायौ वेद ४ दयाधर्मौ वेद ४ गुह्ये च कामुकी ।
ज्येष्ठमातुलनाशश्च जङ्घयोर्युग्मनाडिका २ ॥

ज्येष्ठभ्रातृविनाशश्च चतस्रो ४।४ गुग्मजानुके ।
पादयोः पञ्च ५ नाड्यस्तु तत्र वैधव्यमादिशेत् ॥

इति स्त्रीजातके मूलविचारः ।

पादे मुहूर्तवेलायां वृक्षे च पुरुषाकृतौ ।
अनिष्टमशुभाधिक्ये शुभाधिक्ये शुभं फलम् ॥

शौनकः—

न बाला हन्ति मूलर्क्षे पितरं मातरन्तथा ।
मूलजा श्वशुरं हन्ति व्यालजा च तदङ्गनाम् ॥
माहेन्द्रजाग्रजं हन्ति देवरं तु द्विदैवजा ।
शान्तिर्वा पुष्कला स्याच्चेत्तर्हि दोषो न कश्चन ॥
मुख्यकालं प्रवक्ष्यामि शान्तिहोमस्य यत्नतः ।
जातस्य द्वादशाहे तु जन्मर्क्षे वा शुभे दिने ॥
समाष्टके द्वादशाहे कुर्याद्वा शान्तिमादरात् ॥

शान्तिमालायाम्—

तत्र शान्तिं प्रकुर्वीत वित्तशाठ्यविवर्जितः ।
जातस्यैकादशाहे तु द्वादशाहे शुभे दिने ॥

रत्नसंग्रहे—

गण्डान्तमूलसार्पेन्द्रपातर्क्षे धृतिदर्शने ।
पैत्रेऽपरागजे शान्तिं कुर्यात्तत्तद्दिने बुधः ॥

ग्रन्थान्तरे—

सद्वारे सत्तिथौ भे च गुरुपुष्यादिके शुभे ।
सुलग्नस्य बलं लब्ध्वा मूलादुत्थभयाच्छिदे ॥
विधेयं शान्तिकं यच्च यथावित्तानुसारतः ।
काले दर्शनयोग्ये वा मासान्ते द्वादशेऽह्नि वा ॥

राजमार्तण्डे—

गण्डप्रभूतजं बालं न पश्येत्तात तन्मुखम् ।
भसंख्य२७दिवसे कृत्वा स्नानशान्तिं विलोकयेत् ॥

मुहूर्तकल्पद्रुमे--

आद्यः पादो मूळजो रात्रिभोगतारानिष्टं नो दिने चेद्द्वितीयः।
मातुरिष्टं नो सदा शान्तितो नो साशौचान्तेऽब्दे त्रिमासेऽपि तद्गे॥

अथ शान्तिविधिः, "सर्वौषध्या सर्वगन्धैश्च संयुक्तं तत्रोदकुम्भं कृत्वा सवस्त्रगन्धपुष्परत्नसहितं श्वेतसिद्धार्थकुसुमयुक्तं कुर्या" दिति कात्यायनपरिशिष्टम्। ढुण्ढिराजः--

अष्टवर्षाणि नालोक्यन्तातेन शुभमिच्छता।
तद्दोषपरिहारार्थं शान्तिकं प्रोच्यतेऽधुना॥
रत्नैः शतौषधीमूलैः सुमृद्भिः प्रपूरयेत्।
शतच्छिद्रो घटस्तस्मान्निर्गतेन जलेन हि॥
बालकं पितरौ स्नाने विप्रैः सम्पादिते सति।
जपहोमप्रदाने च कृते स्यान्मङ्गलं ध्रुवम्॥

अथ शतौषधीनामानि। अश्मरी१ सहदेवी२ अपराजिता३ मुण्डी४ उशीर५ बाला६ अधःपुष्पी७ शङ्खपुष्पी८ ज्येष्ठीमधु९ कोरक१० चक्राङ्किता११ विष्णुक्रान्ता१२ शिवक्रान्ता१३ मयूरशिखा१४ काकजङ्घा१५ भृङ्गराज१६ कुमारी१७ हय१८ कर्णिका१९ अपामार्ग२० बिल्व२१ षण्मूला२२ उत्तरा२४ पुत्रजीवा२५ दूर्वा२६ काश२७ कुश२८ शाल२९ नाल३० चक्रमर्द्दक३१ सिंही३२ व्याघ्री३३ अर्क३४ प्लक्ष३५ पलाश ३६ पिप्पल ३७ वट ३८ उदुम्बर ३९ तुलसी ४० उत्पल ४१ शतपत्र ४२ अतसी ४३ सारिवा ४४ कदम्ब ४५ बकुल ४६ शमी ४७ रोहितक ४८ निर्गुण्डी ४९ मुण्डी ५० दाण्डी ५१ ब्राह्मी ५२ अशोक ५३ सूर्यभक्त्या ५४ रुद्रजटा ५५ कदली ५६ बीजपूर ५७ मदनक ५८ मुसली ५९ पुनर्नवा ६० आम्र ६१ पाटल ६२ श्रीपर्णी ६३ करवीर ६४ चम्पक ६५ गुडूची ६६ अगरु ६८ चन्दन ६९ कुटज ७० शिग्रु ७१ हरिद्रा ७२ जटामांसी ७३ वचा ७४ कुष्ठ ७५ तज ७६ दारुहरिद्रा ७७ बन्धुजीव ७८ सिन्धुवार ७९ सठी ८० अश्वगन्धा ८१ मुस्ता ८२ कुरण्टका ८३ पनस ८४ जीवक ८५ जाती

८६ मालती ८७ मधूक ८८ खदिर ८९ सप्तच्छद ९० शिरीष ९१ काकमाची ९२ शतावरी ९३ केतकी ९४ जम्बू ९५ शाक ९६ वेतस ९७ आमलक ९८ सरल ९९ गिरिकर्णी १०० । इति शतमूलानि । तदलाभे तु—

विष्णुक्रान्ता सहदेवी तुलसी तु शतावरी ।
मूलानीमानि गृह्णीयाच्छतालाभे विशेषतः ॥

अथ सप्तधान्यम्—

तिलमाषयवव्रीहिगोधूमानि प्रियङ्गवः ।
चणकैः सप्तधान्यानि मह्लीजानि च सर्वदा ॥

अथ पञ्चरत्नम्—

वज्रमौक्तिकवैडूर्यपुष्परागेन्द्रनीलकम् ।
पञ्चरत्नमिति प्रोक्तं मन्त्रैः कुम्भेषु निक्षिपेत् ॥

अथ सप्तमृत्तिकाः—

अश्वस्थानाद्गजस्थानाद्वल्मीकात्सङ्गमाद्ध्रदात् ।
राजद्वाराच्च गोष्ठाच्च गृह्णीयात्सप्त मृत्तिकाः ॥

अथ कषायाः—

न्यग्रोधोदुम्बरोऽश्वत्थः प्लक्षश्चैव चतुर्थकः ।
जम्बू आम्रश्च धात्री च कषायाः सप्तभिः स्मृताः ॥

अथ पञ्चगव्यम्—

गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ।
पूर्वोक्तपलसंख्यादि पञ्चगव्यमिति स्मृतम् ॥
क्षीरञ्च दधि सर्पिश्च मधु चेक्षुदकं शुभम् ।
पञ्चामृतमिति प्रोक्तं तस्मिन्कुम्भे क्षिपेद्बुधः ॥
यथा सर्पविषं घोरं स्मरन्मन्त्राद्विलीयते ।
तथेदं गण्डयोर्दोषं विधानेन विलीयते ॥

अथ मूलशान्तौ मूलवाक्यानि । शौनकः—

मुख्यकालं प्रवक्ष्यामि शान्तिहोमस्य यत्नतः ।

जातस्य द्वादशाहे तु जन्मर्क्षे वा शुभे दिने ॥
समाष्टके द्वादशाहे कुर्याद्वा शान्तिमादरात् ।
यदैव शान्तिकं कुर्यात्कर्म तत्र प्रचक्ष्महे ॥
सुसमे पुण्यदेशे तु मण्डपं कारयेद्बुधः ।
पुण्याभिर्मन्त्रितैस्तोयैः प्रोक्षितायां क्षितौ ततः ॥

पुण्यर्च "आपो हि ष्ठा"दयः ।

तत्रोदकुम्भं सुश्लक्ष्णं रक्तं व्रणविवर्जितम् ।
आचूडमूलं निर्णिक्तं पूरयेन्निर्मलाम्भसा ॥
वस्त्रावगुण्ठितं कुर्यात्पूरयेत्तीर्थवारिणा ।
कूर्चहेमसमायुक्तं चूतपल्लवसंयुतम् ॥

कूर्चं पञ्चगव्यं "स्वस्तिकोपरि विन्यस्य पञ्चकूर्चेन पीतेने"ति स्कान्दे तथा दर्शनात् । यद्वा दर्भमुष्टिः क्षीरद्रुमपल्लवं द्रोणव्रीहींश्च निक्षिप्य ईशान्ये निधापयेत् । शौनकः--

पञ्चरत्नानि निक्षिप्य सर्वौषधिसमन्वितम् ।
अर्चितं गन्धपुष्पाद्यैः श्रीरुद्रं च स्पृशञ्जपेत् ॥

श्रीरुद्रं रुद्राध्यायम् ।

षडङ्गसहितं सम्यग्जपेत्तद्रुद्रसंख्यया ।
बह्वृचो रुद्रसूक्तैर्वा च्छन्दोगा रुद्रसामगैः ॥

रुद्रसूक्तानि चत्वारि । कद्रुद्रायेति, नवर्चमेकम् । इमा रुद्राय तव स, इत्यकादशर्चं द्वितीयम् । आ ते पित, रिति पञ्चदशर्चं तृतीयम् । इमा रुद्राय स्थिरधन्वन, इति चतुर्ऋच चतुर्थम् । सामगस्तु–"आ वो राजान" मित्येकादश रुद्रसामानि जपेत् । बह्वृचसामगयोरयं विशेषः । श्रीरुद्रस्तु सर्वसाधारणः । यजुर्वेदिन एव श्रीरुद्र इत्यन्ये । एकादशाष्टत्रिष्येक-संख्यया शक्तितो जपेत् । एतत्सूक्तजपसंख्येयम् । श्रीरुद्रस्य संख्यान्तर-व्याप्तत्वात् ।

तत्राप्रतिरथं सूक्तं शतरुद्रानुवाककम् ।

अप्रतिरथसूक्त "आशुः शिशान" इति । रुद्रानुवाकः "त्वमग्ने

रुद्र'' इत्यादिः ।

रक्षामन्त्रं तथा पुण्यं रक्षोघ्नं च स्पृशञ्जपेत् ।

रक्षामन्त्रो ''रक्षा णो अग्न'' इति । रक्षोघ्नं सूक्तं ''रक्षोहण''मिति पञ्चविंशर्चम् ।

त्रैयम्बकं जपेत्सम्यगष्टोत्तरसहस्रकम् ।
एकवारं तथा चापि पावमानीं स्पृशञ्जपेत् ॥
संस्थाप्य पञ्चकुम्भांश्च द्वयं वा तदलाभतः ॥

तथा रुद्रकलशो मध्ये स्थाप्यस्तस्य चतुर्दिक्षु चत्वारः स्थाप्यास्तत्र मध्ये रुद्रप्रतिमां सम्पूज्य तं कुम्भं स्पृशन्रुद्राध्यायं रुद्रसूक्तानि च जपेत् । इतरेषु पूर्वादिकुम्भेषु वरुणमावाह्य क्रमेणाप्रतिरथशतरुद्रानुवाकरक्षामन्त्रं रक्षोघ्नानि जपेत् । त्र्यम्बकं मध्ये एवेत्यर्थः । पावमानमपि चतुर्थ एव । अथ वा रुद्रकुम्भ एक इतरसूक्तजपार्थं द्वितीय इति कुम्भौ । यद्वा पञ्चमुखं एकमेव कुम्भं स्थापयित्वा पञ्चकुम्भेतिकर्तव्यता कार्येत्याह—

श्रीरुद्रस्यैव कुम्भस्य सर्वसूक्तानि तत्र तु ।
तथान्यं च शुभं कुम्भं पूर्वोक्तैर्लक्षणैर्युतम् ॥
चतुःप्रस्रवणं कुर्यात्पञ्चवक्त्रं च तद्भवेत् ।
वस्त्रावगुण्ठितं कुर्यात्पूरयेत्तीर्थवारिणा ॥
पञ्चरत्नसमायुक्तमाम्रपल्लवसंयुतम् ।
कुम्भस्य नैर्ऋते देशे होमस्थानं प्रकल्पयेत् ॥
गोमयोल्लेपिते देशे कुर्यात्स्थण्डिलमुत्तमम् ।
कृत्वाग्निमुखपर्यन्तमुल्लेखादि स्वशाखतः ॥
पूर्णपात्रनिधानान्तं कृत्वा पूजां समारभेत् ।
निष्कमानेन चार्द्धेन पादेनाथ स्वशक्तितः ॥
प्रतिमां लक्षणेनैकां कारयित्वा विचक्षणः ।
यद्वा मूल्यं सुवर्णस्य स्थापयित्वा प्रपूजयेत् ॥
सुवर्णं सर्वदेवत्यं सर्वदेवात्मकोऽनलः ।
सर्वदेवात्मको विप्रः सर्वदेवमयो हरिः ॥

संस्मरेन्निर्ऋतिं श्यामं सुमुखं नरवाहनम् ।
रक्षोऽधिपं खड्गहस्तं दिव्याभरणभूषितम् ॥
प्रतिमापूजनार्थाय वस्त्रयुग्मं प्रकल्पयेत् ।
पङ्कजं कारयेत्पूर्वं रक्ताभैर्व्रीहितण्डुलैः ॥
चतुर्विंशद्दलोपेतं शुक्लैर्वा कर्णिकान्वितम् ।
तस्योपरि न्यसेत्पात्रं स्वर्णं वा रूप्यमृण्मयम् ॥
शुद्धवस्त्रेण संच्छाद्य तत्र मूलानि निक्षिपेत् ।

तत्र कलशे इत्यर्थः । मूलानि शतमूलानि । तदलाभे तु—

विष्णुक्रान्ता सहदेवी तुलसी तु शतावरी ।
मूलानीमानि गृह्णीयाच्छताळाभे विशेषतः ॥
स्थापयेत्कर्णिकामध्ये वस्त्रगन्धाद्यलङ्कृतम् ।
कूर्चहेमजलोपेतं कुङ्कुमौषधिसंयुतम् ।
कुम्भोपरि न्यसेद्विद्वान्मूलनक्षत्रदैवतम् ॥
अधिप्रत्यधिदेवौ च दक्षिणोत्तरदेशयोः ।
अधिदेवं न्यसेदादौ ज्येष्ठानक्षत्रदेवताम् ॥

निर्ऋतिं स्थापयित्वाऽथ तद्दक्षिणदेशे इन्द्रं संस्थाप्य तदुत्तरत अब्देवतां स्थापयेदित्यर्थः । ततः प्रागादितश्चतुर्विंशतिदलेषु मूसंस्थेषु उत्तराषाढाद्यनुराधान्तानि नक्षत्राणि स्थापयित्वा प्रपूजयेदित्याह—

उत्तराषाढऋक्षाद्या अनुराधान्तमर्चयेत् ।
ऐन्द्र्यादीशानपर्यन्तं पूजयेत्स्वस्वनामतः ॥
स्वलिङ्गोक्तैश्च मन्त्रैश्च प्रधानादीन्प्रपूजयेत् ।

स्वलिङ्गोक्ता मन्त्रा "मोषूण" इत्यादयः ।

पञ्चामृतेन संस्नाप्य आवाह्याथ समर्चयेत् ॥
उपचारैः षोडशभिर्यद्वा पञ्चोपचारकैः ।
रक्तचन्दनगन्धाद्यैः पुष्पैः कृष्णसितादिभिः ॥
मेषशृङ्गादिधूपैश्च घृतदीपैस्तथैव च ।
सुरापोलिकमांसाद्यैर्नैवेद्यैर्भोजनादिभिः ॥

मत्स्यमांससुरादीनि ब्राह्मणानां विवर्जयेत् ।
सुरास्थाने प्रदातव्यं क्षीरं सैन्धवमिश्रितम् ॥
पायसं लवणोपेतं मांसस्थाने प्रकल्पयेत् ।
उक्तगन्धाद्यभावे तु यथालाभं समर्पयेत् ॥
पुष्पाञ्जल्यन्तमभ्यर्च्य होमं कुर्याद्यथोदितम् ।
निर्वापप्रोक्षणादीनि चरोः कुर्याद्यथाविधि ॥
हविर्गृहीत्वा विधिवन्निर्ऋतेश्च ऋचा हुनेत् ।
मो षू णः परापरेति यन्ते देवीति वा पुनः ॥
पायसं घृतसंमिश्रं हुनेदष्टोत्तरं शतम् ।
समिदाज्यचरूनपश्चाच्छक्तितः संख्यया हुनेत् ॥
अधिदेवतयोश्चैव जुहुयात्स्वस्वमन्त्रतः ।
चतुर्थ्यन्तैर्नमोन्तैश्च स्वाहान्तैश्च स्वमन्त्रकैः ॥
नक्षत्रदेवताभ्यश्च पायसेन तु होमयेत् ।
कृणुष्वेति पञ्चदशभिर्जुहुयात्कृसरं ततः ॥
गायत्र्या जातवेदसे त्र्यम्बकमिति क्रमात् ।
सीरा युञ्जन्ति तामग्निं वास्तोष्पत्यग्निमेव च ॥
अग्नि "मग्निन्दूतं वृणीमह" इति मन्त्रसाम्यात् ।
क्षेत्रस्य पतिना गृणाना अग्निन्दूतं पुरो दधे ॥
श्रीसूक्तेन तथा विद्वान् समिदाज्यचरूंन्क्रमात् ।
अष्टोत्तरशतैर्वाथ अष्टाविंशतिभिः क्रमात् ॥
अष्टाष्टसंख्यया वापि जुहुयाच्छक्तितो बुधः ।
त्वन्नः सोमेति पायसं जुहुयात्तु त्रयोदश ॥
चतुर्गृहीतमाज्यं च या ते रुद्रेति मन्त्रतः ।
स्रुवेण जुहुयादाज्यं महाव्याहृतिभिः क्रमात् ॥
हुत्वा स्विष्टकृतं पश्चात्प्रायश्चित्ताहुतीर्हुनेत् ।
आचार्यो यजमानो वा अग्नौ पूर्णाहुतिं हुनेत् ॥
होमशेषं समाप्याथ जपेत्त्र्यम्बकं शतम् ।

रुद्रकुम्भोक्तमार्गेण रुद्रमन्त्रं स्पृशञ्जपेत् ॥
धूपं दीपं च नैवेद्यं कुम्भयुग्मे निवेदयेत् ।
प्रसादयेत्ततो देवमभिषेकार्थमादरात् ॥
तस्मिन् काले गृहातिथ्यं कर्तव्यं भूतिमिच्छता ।
पृथक् प्रशस्तं तेनैव नक्षत्रेष्ट्या सहैव वा ॥
अभिषेकविधिं वक्ष्ये सर्वाचार्यैरुदीरितम् ।
भद्रासनोपविष्टस्य यजमानस्य ऋत्विजः ॥
दारपुत्रसमेतस्य कुर्युः सर्वेऽभिषेचनम् ।
अक्षीभ्यामिति सूक्तेन पावमानीभिरेव च ॥
आपो हि ष्ठेति नवभिराप इद्वा द्वयेन च ।
सहस्राक्ष ऋचेनापि देवस्य त्वेति मन्त्रकैः ॥
शिवसङ्कल्पमन्त्रेण वक्ष्यमाणैश्च मन्त्रकैः ।
"योऽसौ वज्रधरे"त्यादिप्रयोगे वक्ष्यमाणा मन्त्राः—
तच्छंयोरभिषेकं तु सर्वदोषोपशान्तिदम् ॥
सर्वकामप्रदं दिव्यं मङ्गलानां च मङ्गलम् ।
वस्त्रान्तरितकुम्भाभ्यां पश्चात्तु स्नपयेद्बुधः ॥
ततः शुक्लाम्बरधरः शुक्लमाल्यानुलेपनः ।
यजमानो दक्षिणाभिस्तोषयेदृत्विगादिकान् ॥
धेनुं पयस्विनीं दद्यादाचार्याय सवत्सकाम् ।
निर्ऋतिप्रतिमां वस्त्रं कुम्भं हेम च दापयेत् ॥
ग्रहार्थवस्त्रप्रतिमा तत्तद्द्रोभूश्च दापयेत् ।
श्रीरुद्रजापिने देयः कृष्णोऽनड्वान्प्रयत्नतः ॥
तत्कुम्भवस्त्रप्रतिमां तस्मै दद्यात्प्रयत्नतः ।
इतरेभ्योऽपि विप्रेभ्यः शक्त्या दद्याच्च दक्षिणाम् ॥
उक्तालाभे ततो दद्यादाचार्यब्रह्मऋत्विजाम् ।
तत्तन्मूल्यं प्रदातव्यं शक्त्या वाथ प्रकल्पयेत् ॥
आचार्याय च यद्दत्तं तदर्द्धं ब्रह्मणे भवेत् ।

सदस्याय ब्रह्मणोऽर्द्धमृत्विग्भ्यश्च तदर्धकम् ॥
गृह्णीयादाशिषस्तेभ्यः प्रणम्याथ क्षमापयेत् ।
दद्यादन्नं पायसादि ब्राह्मणान्भोजयेच्छतम् ॥
अलाभे सति पंचाशद्दशकं तदलाभतः ।
सर्वशान्तेश्च पठनं ब्राह्मणैराशिषस्तथा ॥
गृही क्षमापयेद्विद्वान्निर्ऋतिः प्रीयतामिति ।
विधाने चरितेऽस्मिँस्तु ततः शान्तिर्भवेद्ध्रुवम् ॥
गण्डान्तेऽप्येवं कर्तव्यं पुष्यार्थन्तद्वदेव तु ।
समाष्टके द्वादशाहे कुर्याद्वा शान्तिमादरात् ॥
इत्युक्तं मनुना सम्यङ्मूलजातहिताय च ।
मातापित्रोर्धनस्यापि बन्धुशोकोपशान्तये ॥
( इति शौनकीये मूलशान्तौ मूलवाक्यानि )

अथास्य स्पष्टप्रयोगो लिख्यते । तत्र समे देशेऽष्टहस्तादिकं मण्डपं कुण्डं वा कृत्वा तन्मध्ये स्थण्डिलं कुण्डं वा कुर्यात् । यथोक्त काले गोमुखप्रसवं कृत्वा, कृतसामग्रीको यजमानः सपत्नीकः पीठे उप विश्य, प्राणानायम्य देशकालौ स्मृत्वा "ममास्य कुमारस्य कुमार्या वा मूलप्रथमचरणादिजननसूचितपित्ररिष्टादिशान्तिद्वारा श्रीपरमेश्वरप्रीत्यर्थं नवग्रहमखसहितां मूलशान्तिं करिष्ये" इति सङ्कल्प्य गणेशपूजनपुण्याहवाचनमातृकापूजननान्दीश्राद्धान्तं कृत्वा आचार्यं ब्रह्माणं सदस्यं ऋत्विजोऽष्टौ चतुरो वा वृत्वा मधुपर्कादिना पूजयेत् । आचार्य प्राणानायम्य देशकालौ स्मृत्वा "अस्मिन् कर्मणि आचार्यकर्म करिष्ये ।"

यदत्र संस्थितं भूतं स्थानमाश्रित्य सर्वदा ।
स्थानं त्यक्त्वा तु तत्सर्वं यत्रस्थं तत्र गच्छतु ॥
अपक्रामन्तु भूतानि पिशाचाः सर्वतो दिशम् ।
सर्वेषामविरोधेन यज्ञकर्म समारभेत् ॥

इति मन्त्रेण सर्वत्र सर्षपान्विकीर्य "आपो हि ष्ठा"दिमन्त्रैः कर्मभूमिं सम्प्रोक्ष्य । मण्डपपक्षे देवताः पूजयित्वा मण्डपस्येशानदेशे पञ्चव-

र्णकैः स्वास्तिकं कृत्वा, तत्र "महीद्यौ"रिति भूमिं स्पृष्ट्वा "ओषधयः स"मिति द्रोणप्रमाणान् व्रीहीन् प्रक्षिप्य, तत्र "आजिघ्रे"ति कलशं संस्थाप्य, "वरुणस्योत्तम्भन"मिति तीर्थवारिणाऽऽपूर्य, "त्वां गन्धर्वे"ति गन्ध प्रक्षिप्य, "अक्षन्नमीमदन्ते"ति अक्षतान्, "या ओषधी"रिति सर्वौषधीः, "काण्डात्काण्डा"दिति दूर्वा, "अश्वत्थे व"इति पञ्चपल्लवान्, "स्योना पृथिवी"ति सप्तमृदः, "याः फलिनी"रिति फलम्, "परि वाजपति"रिति पञ्चरत्नानि, "हिरण्यगर्भ"इति हिरण्यम् श्वेतसर्षपकुसुमम्, "यदश्वाय वास" इति वस्त्रयुग्मेनावेष्ट्य, "पूर्णा दर्वी"ति कलशोपरि ताम्रपात्रमयं पूर्णपात्रं निधाय, तदुपरि सुवर्णनिर्मितां अग्न्युत्तारणपूर्वकं रुद्रप्रतिमां संस्थाप्य "त्र्यम्बक"मिति मन्त्रेण आवाहनादिषोडशोपचारैः पूजयेत्। तत एक ऋत्विजः कुशैः कुम्भं स्पृष्ट्वा न्यासपूर्विकां रुद्रैकादशनीं जपेत्। द्वितीय ऋत्विक् तमेव कुम्भं स्पृष्ट्वा "आशुः शिशान"इति त्रयोदशर्चं जपेत। तृतीय ऋत्विक् "कृणुष्व पाज" इतिपञ्चर्चं जपेत्। ततस्तस्य कुम्भस्योत्तरतश्चतुर्विंशतिदलं पङ्कज पञ्चवर्णैः शुक्लतण्डुलपिष्टेन वा कृत्वा तत्र मध्ये अष्टदलं कृत्वा तत्र कर्णिकायां पूर्वमन्त्रैः चतुःप्रस्रवणयुक्तं कलशं स्थापयित्वा, तस्मिन्कलशे "धान्यमसी"ति सप्तधान्यानि। "या ओषधी"रिति मन्त्रेण शतौषधीमूलानि पञ्चरत्नानि पचामृतपञ्चगव्यानि च प्रक्षिपेत। कलशस्योपरि ताम्रमयं पूर्णपात्रं न्यस्य तस्योपरि वंशपात्रं स्थापयित्वा तदुपरि अष्टदलयुक्तवस्त्रं स्थापयेत्। तत्र कार्णिकायां सुवर्णनिर्मितां मूलप्रतिमां संस्थापयेत्। "मनो जूति"रिति मन्त्रेण प्रतिष्ठा कार्या। ततो मूर्तौ प्राणप्रतिष्ठा कर्तव्या। "ॐ हिमस्य त्वा जरायुणाग्ने परिव्ययामसि। पावको अस्मभ्यꣳ शिवो भव॥" इत्यनेन प्रतिमां घृतेन लिम्पेत। "ॐ प्राणदा अपानदा व्यानदा वर्चोदा वरिवोदा? । अन्याँस्ते ऽअस्मत्तपन्तुहेतयः पावकोऽअस्मभ्यꣳ शिवो भव।" इत्यनेन प्रतिमायां प्राणधारणं कुर्यात्। अथ पञ्चगव्यस्नानम्। गायत्र्या गोमूत्रम्।

"गन्धद्वारे"ति गोमयम्। "आप्यायस्वे"ति क्षीरम्। "दधिक्राव्ण" इति दधि। "घृतं मिमिक्षे" इति घृतम्। "देवस्य त्वे"ति कुशोदकम्। पुरुषसूक्तेन शुद्धोदकस्नानम्। "ॐ शिवो भव प्रजाभ्यो मानुषीभ्यस्त्वमङ्गिरः। मा द्यावापृथिवी अभिशोचीर्मान्तरिक्षं मा व्वनस्पतीन्"। इति मन्त्रेण पीठोपरि निधापयेत्। हस्ते पुष्पाण्यादाय। तत्र "प्राणप्रतिष्ठामन्त्रस्य ब्रह्मविष्णुरुद्रा ऋषयः ऋग्यजुःसामानि च्छन्दांसि चित्स्वरूपिणी प्राणशक्तिर्देवता आँ बीजं ह्रीँ शक्तिः क्रौं कीलकं मम प्राणप्रतिष्ठापने विनियोगः। ॐ आंह्रींक्रोंयंरंलंवंशंषंसंहंळंक्षंसोहंहंसः मूळाधिष्ठितदेवस्य प्राणा इह प्राणाः"। पुनर्मन्त्रं पठेत् "मूळाधिष्ठितदेवस्य जीव इह स्थितः"। पुनर्मन्त्रं पठेत् "मूळाधिष्ठितदेवस्य सर्वेन्द्रियाणि"। पुनर्मन्त्रं पठेत् "मूळाधिष्ठितदेवस्य वाङ्मनश्चक्षुःश्रोत्रघ्राणपाणिपादप्राणा इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा"। अथ ध्यानम्—

नरारूढं महाकायं खड्गहस्तं महाबलम्।
पीताम्बरधरं देवं बहुराक्षसवेष्टितम्॥

अथावाहनम्—

असुर! त्वमिहागच्छ रक्षोगणसमन्वितः।
शक्तिशूलधरो नित्यं रक्ताक्षश्च महाबळः।
हिरण्यपाशभृद्देव! पूजां स्वीकुरु मे विभो!॥

"ॐ मोषूणं इन्द्रात्र पृत्सु देवैरस्ति हि ष्मा ते शुष्मिन्नवयाः।
महश्चिद्यस्य मीढुषो यव्या हविष्मतो मरुतो व्वन्दते गीः"॥

इत्यावाह्य स्थापयेत्। तद्दक्षिणतः अधिदेवताम्।

शचीपते! महाबाहो! सर्वाभरणभूषित!।
आगच्छ भगवन्निन्द्र! पूजेयं प्रतिगृह्यताम्॥

"ॐ सजोषा इन्द्र०" इतीन्द्रम्। तदुत्तरतः प्रत्यधिदेवताम्।

आपस्त्वायान्तु सततं पवित्रा मङ्गलावहाः ।
समागच्छत यूयं वै कुर्वन्त्वस्मिद्धि सन्निधिम् ॥

"ॐ आपो हि ष्ठा०" इति आपः । ततो भूमिस्थचतुर्विंशतिदले प्रागादित उत्तराषाढाद्यनुराधान्तानि नक्षत्राणि तत्तद्देवताः स्थापयेत् । ताश्चैवम्—

आवाहयामि देवेशान्विश्वेदेवान्महाबलान् ।
सौम्यमूर्त्तिधरान्देवान्नानावस्तुविराजितान् ॥

"ॐ विश्वे॑ देवास आग॑त शृणुता॑ म इम॒ꣳ हव॑म् । एदं ब॒र्हिर्निषी॑दत" । तद्दक्षिणे विष्णुम्—

पद्मनाभ ! हृषीकेश ! कंसचाणूरमर्दन ! ।
आगच्छ भगवन्विष्णो ! पूजेयं प्रतिगृह्यताम् ॥

"ॐ इ॒दं विष्णु॒र्विच॑क्रमे त्रे॒धा नि द॑धे प॒दम् । समू॑ढमस्य पाꣳसु॒रे स्वाहा॑" । ततः—

आवाहयामि देवेशान्वसूनष्टौ महाबलान् ।
सौम्यमूर्तिधरान्देवान्दिव्यायुधकरान्वितान् ॥
शुद्धस्फटिकसंकाशान्नानावस्त्रविराजितान् ।
अश्वारूढान्दिव्यवस्त्रान्सर्वालङ्कारभूषितान् ।

"ॐ वस॑वस्त्वा धूपयन्तु गाय॒त्रेण॒ च्छन्द॑साङ्गिर॒स्वद्रु॒द्रास्त्वा॑ धूपयन्तु त्रैष्टु॑भेन॒ च्छन्द॑साङ्गिरस्वदा॑दि॒त्यास्त्वा॑ धूपयन्तु॒ जाग॑तेन॒ च्छन्द॑साङ्गिर॒स्वद्विश्वे त्वा दे॒वा वैश्वा॑नरा धूपयन्त्वानु॑ष्टुभेन॒ च्छन्द॑साङ्गिर॒स्वदिन्द्र॑स्त्वा धूपयतु॒ वरु॑णस्त्वा धूपयतु विष्णु॑स्त्वा धूपयतु" । ततः—

आवाहयामि देवेशं सलिलस्याधिपं प्रभुम् ।
शङ्खपाशधरं सौम्यं वरुणं यादसां पतिम् ॥
कुम्भीरथसमारूढं मणिरत्नसमन्वितम् ॥

"ॐ इमम्मे व्वरुण श्रुधी हवमद्या च मृडय। त्वामवस्युराचके" ॥

ततः—

आवाहयामि देवेशं सर्वावयवसुन्दरम्।
अजैकपादनामानं सर्वालङ्कारभूषितम्।

"ॐ (१)ऋतधामासि स्वर्ज्योतिः समुद्रोसि विश्वव्यचाः। अजो स्येकपादहिर्बुध्न्यः" । ततः—

आवाहयामि देवेशमहिर्बुध्न्यं सुरैर्नुतम्।
सर्वाङ्गसुन्दरं देवं सर्वाभरणभूषितम्॥

"ॐ उतनोऽहिर्बुध्न्यः शृणोत्वज एकपात्पृथिवी समुद्रः। विश्वे देवा ऋतावृधो हुवानास्तुता मन्त्राः कविशस्ता अवन्तु" । ततः—

आवाहयामि देवेशं पद्महस्त महाबलम्।
रक्तवस्त्रपरीधानं विद्युद्वर्णं महाबलम्॥
आगच्छ भगवन्पूषन्क्षेत्रेऽस्मिन्सन्निधो भव।

"ॐ पूषन्तव व्व्रते व्वयन्न रिष्येम कदा चन॥
स्तोतारस्त इह स्मसि" । ततः—

कामदेवसमौ रूपौ देवानामपि दुर्लभौ।
आयुर्विद्यातिविमलावश्विनावावाहयाम्यहम्॥

"ॐ अश्विना तेजसा चक्षुः प्राणेन सरस्वती व्वीर्यम्।
व्वाचेन्द्रो बलेनेन्द्राय दधुरिन्द्रियम्" ॥

सूर्यपुत्रं सदैवोग्रं महिषे समधिष्ठितम्।
यमुना भगिनी यस्य यममावाहयाम्यम्॥

"ॐ यमायत्वा० पित्रे" ।

---

(१) अयं मन्त्रः काण्वशाखीयः। एवंरूपस्य तत्रैवोपलम्भात्।

अग्निर्देवमुखो नित्यं बभ्रुः पिङ्गललोचनः ।
वाहनं यस्य वै मेषो अग्निमावाहयाम्यहम् ॥
"ॐ अग्निन्दूतं पुरो दधे हव्यवाहमुपब्रुवे ।
देवाँ आ सादयादिह" ॥
आवाहयामि देवेशं ब्रह्माणममितौजसम् ।
देवज्येष्ठं देवनिधिं ब्रह्म आवाहयाम्यहम् ।
"ॐब्रह्म जज्ञानं प्रथमं पुरस्ताद्वि सीमतः सुरुचो व्वेन आवः ।
स बुध्न्या उपमा अस्य व्विष्ठाः सतश्च योनिमसतश्च व्विवः" ॥
आवाहयामि देवेशं चन्द्रं चैव सितप्रभम् ।
शक्तिपाणिं गदाशूलं शशाङ्क यस्य वाहनम् ॥
"ॐ इमन्देवा० राजा" ॥
आवाहयामि देवेशं रुद्रं त्रिभुवनेश्वरम् ।
रुण्डमालाजटाजूटं त्रिनेत्रं चन्द्रशेखरम् ॥
"ॐ या ते रुद्रशिवा तनूरघोरापापकाशिनी ।
तया नस्तन्वा शन्तमया गिरिशन्ताभि चाकशीहि" ॥
आवाहयामि तान्देवीमदितिं देवमातरम् ।
द्विभुजां पद्महस्तां च सर्वाभरणभूषिताम् ॥
कश्यपस्य प्रियां भार्यां सुरूपां वामलोचनाम् ।
आगच्छ ह्यदिते ! त्वं हि क्षेत्रेऽस्मिन्सन्निधा भव ॥
"ॐ अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः ।
व्विश्वे देवा अदितिः पञ्चजना अदितिर्जातमदितिर्जनित्वम् ॥"
आवाहयामि देवेशं त्रयस्त्रिंशद्गुरोर्गुरुम् ।
बृहस्पतिं सुराचार्यं ब्रह्मजातिं चतुर्भुजम् ॥
सिन्धुदेशेऽङ्गिरोगोत्रमक्षसूत्रकमण्डलुम् ।
"ॐ व्वाचस्पतये पवस्व व्वृष्णोऽ अꣳशुभ्यां गभस्तिपूतः ।

देवो देवेभ्यः पवस्व येषां भागोऽसि मधुमतीर्न इषस्कृधि"(१)।

आवाहयेच्च तं नागं फणासप्तकसंयुतम् ॥
आगच्छोरगराज ! त्वं क्षेत्रेऽस्मिन्सन्निधो भव ।
"ॐ नमोस्तु सर्पेभ्यो ये के च पृथिवीमनु ॥
ये अन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः" ।
पितॄनावाहयिष्यामि सोमपाद्याननुक्रमात् ॥
पिङ्गाक्षान् पिङ्गलजटान्हस्ते कुशकमण्डलून् ।
दधानान्सितवस्त्राणि सितयज्ञोपवीतिनः ॥
गृह्णानान्कुसराश्नं च पितॄन्सम्पूजयाम्यहम् ।
ॐ उशन्तस्त्वा निधीमह्युशन्तः समिधीमहि ॥

उशन्नुशत आवह पितॄन्हविषे अत्तवे"। ततः—

आवाहयामि देवेशं भगाकारं महाबलम् ।
महावीर्यं भगन्देवमश्वत्थदलसन्निभम् ॥
"ॐ भग प्रणेतर्भग सत्यराधो भगेमान्धियमुदवा ददन्नः ।
भग प्र णो जनय गोभिरश्वैर्भग प्र नृभिर्नृवन्तः स्याम"॥
अर्यमन्कुरु मे भद्रं संज्ञया सह सर्वदा ।
गृहाणेमां मया दत्तां पूजां देव ! नमोऽस्तु ते ॥
"ॐ अर्यमणं बृहस्पतिमिन्द्रं दानाय चोदय ।
वाचं विष्णुꣳ सरस्वतीꣳ सवितारं च वाजिनम्" ॥
आवाहयामि देवेशं भास्करं तिग्मतेजसम् ।
कलिङ्गं काश्यपं रक्तं सप्ताश्वं सप्तरज्जुकम् ॥
द्विभुजं पद्महस्तं च त्रैलोक्यतिमिरापहम् ।
सर्वसौख्यप्रदातारं कर्मसाक्षिणमीश्वरम् ।
आगच्छ भगवन्सूर्य ! क्षेत्रेऽस्मिन्सन्निधो भव ॥

---

(१) अयमपि काण्वानामेवेदृशः ।

"ॐ सविता प्रथमेऽहन्नग्निर्द्वितीये व्वायुस्तृतीय आदित्यश्चतुर्थे चन्द्रमाः पञ्चम ऋतुः षष्ठे मरुतः सप्तमे बृहस्पतिरष्टमे। मित्रो नवमे व्वरुणो दशम इन्द्र एकादशे व्विश्वे देवा द्वादशे"।

आवाहयामि देवेशं विश्वकर्माणमीश्वरम् ।
मूर्तामूर्तकरं देवं सर्वकर्तारमीश्वरम् ॥
त्रैलोक्यसूत्रकर्तारं द्विभुजं सर्वदर्शिनम् ।
आगच्छ विश्वकर्मंस्त्वं क्षेत्रेऽस्मिन्सन्निधो भव ।

"ॐ व्विश्वकर्मन्हविषा व्वर्द्धनेन त्रातारमिन्द्रमकृणोरवद्ध्यम्। तस्मै व्विशः समनमन्त पूर्व्वीरयमुग्रो व्विहव्यो यथाऽसत्" ॥

आवाहयामि देवेशं भूतानान्देहधारिणम् ।
आगच्छ भगवन्वायो! क्षेत्रेऽस्मिन्सन्निधो भव ॥

"ॐ आ नो नियुद्भिः शतिनीभिरध्वरꣳ सहस्रिणीभिरुपयाहि यज्ञम् । व्वायोऽअस्मिन्त्सवने मादयस्व यूयम्पात स्वस्तिभिः सदा नः॥"

आवाहयामि देवेशौ शतसूर्यसमप्रभौ ।
रक्तपीताम्बरधरौ सर्वावयवशोभिनौ ॥

"ॐ इन्द्राग्नी आगतꣳ सुतङ्गीर्भिर्न्नभो व्वरेण्यम् । अस्य पातन्धियेषिता । उपयामगृहीतोऽसीन्द्राग्निभ्यान्त्वैषते योनिरिन्द्राग्निभ्यान्त्वा" ॥

मित्र! त्वमेह्येहि तमोपशान्त्यै पद्मासनः पद्मकरोऽसि नित्यम् ।
गृहाण पूजां घृतमोदकादि मित्रो न मन्त्रैर्भगवन्नमस्ते ॥

"ॐ मित्रो न एहि सुमित्रध इन्द्रस्योरुमाविश दक्षिणम् । उशन्नुशन्तꣳ स्योनः स्योनम्"(१) ।

---

(१) काण्वशाखीयः ।

एवमावाह्य षोडशोपचारैः पृथक् पृथक् पूजयेत् । पायसं लवणोपेतं ससैन्धवं दुग्धं नैवेद्यम् । ततो नैर्ऋत्यदेशे पञ्चभूसंस्कारपूर्वकं अग्निं स्थापयित्वा तदीशानभागे साधिप्रत्यधिदैवतनवग्रहानावाह्य पूजयित्वा पञ्चलोकपालांश्च पूजयेत् । अथ देवताभिध्यानम्—"प्रजापतिम्, इन्द्रम्, अग्निम्, सोमम्, एता आज्येन । आदित्यम्, सोमम्, भौमम्, बुधम्, बृहस्पतिम्, शुक्रम्, शनैश्चरम्, राहुम्, केतुम्, अर्कादिसमिद्भिः आज्यचरुतिलैः । ईश्वरं, उमां, स्कन्दं, विष्णु, ब्रह्माणं, इन्द्रं, यमं, कालं, चित्रगुप्त, इत्यधिदेवताः । अग्निं, अपः, धरां, विष्णुं, इन्द्रं, इन्द्राणीं, प्रजापतिं, सर्पान्, ब्रह्माणं, इति प्रत्यधिदेवताः । विनायक, दुर्गां, वायुं, आकाशं, अश्विनौ इति लोकपालांश्च अमुकसंख्याभिः पलाशसमिद्भिः एकैकचर्वाज्याहुत्या जपदशांशेन तिलाद्युपकल्पितद्रव्येण । अत्र प्रधानं, निर्ऋतिं, घृतमिश्रितपायससमिदाज्यचर्वाहुतिभिः प्रतिद्रव्यमष्टाविंशतिसंख्यया । तथा अधिदेवतां इन्द्रं, प्रत्यधिदेवताः अपः, घृतमिश्रितपायससमिदाज्यचरुद्रव्यैरष्टाष्टसंख्याभिः । अथावरणदेवताः उत्तराषाढां, अभिजितम्, श्रवणं, धनिष्ठां, शततारका, पूर्वाभाद्रपदां, उत्तराभाद्रपदां, रेवतीं, अश्विनीं, भरणीं, कृत्तिकां, रोहिणीं, मृगाशिरस, आर्द्रां, पुनर्वसुं, पुष्यं, आश्लेषां, मघां, पूर्वां, उत्तरां, हस्तं, चित्रां, स्वातिं, विशाखां, अनुराधां, यद्वा—विश्वान्देवान्, विधिं, विष्णुं, वसून्, वरुणं, अजैकपादं, अहिर्बुध्न्यं, पूषणं, अश्विनौ, यमं, अग्निं, ब्रह्माणं, चन्द्रमसं, रुद्रं, अदितिं, बृहस्पतिं, सर्पान्, पितॄन्, भगं, अर्यमणं, सूर्यं, त्वष्टारं, मरुतः, इन्द्राग्नी, मित्रं, प्रत्येकमष्टसंख्याभिः पायसाहुतिभिः । रक्षोहणं, कृणुष्वे,ति पञ्चदशभिः प्रत्यृचमष्टसंख्याभिः । सवितारं, दुर्गां, त्र्यम्बकं, ऋत्विक्स्तुतिदेवतां, दुर्गां, वास्तोष्पतिं, क्षेत्राधिपतिं, मित्रावरुणौ, अग्निं, च एताः प्रत्येकमष्टसंख्याभिः कृसराहुतिभिः । श्रियं, हिरण्यवर्णामिति पञ्चदशर्भिः प्रत्यृचमष्टसंख्याभिः समिदाज्यचर्वाहुतिभिः । सोमं,

त्रयोदशवारं पायसाहुतिभिः। रुद्रं, चतुर्गृहीतेनाज्येन अग्निं, वायुं, सूर्यं, प्रजापतिं, एकैकयाऽऽज्याहुत्या। शेषेणाग्निं स्विष्टकृतं, अग्निं, वायुं, सूर्यं, अग्नीवरुणौ२, अग्निं, वरुणं, सवितारं, विष्णुं विश्वान्देवान्, मरुतः, स्वर्कान्, वरुणं, प्रजापतिं, एता अङ्गप्रधानार्थदेवता आज्येनास्मिन्कर्मण्यहं यक्ष्ये" । अग्नेर्दक्षिणतो ब्रह्मासनास्तरणम् । तत्र ब्रह्मोपवेशनम् । प्रणीताप्रणयनम् । अग्नेः परिस्तरणम् । अथर्वत्पात्रासादनम् । अग्नेः पश्चादुत्तरतो वा पवित्रच्छेदनानि त्रीणि । पवित्रे द्वे । प्रोक्षणीपात्रम् । आज्यस्थाली । चरुस्थाली । सम्मार्गकुशाः । उपयमनकुशाः । समिधस्तिस्रः । स्रुवः । आज्यम् । तण्डुलाः । अर्कादिसमिधः । तिलाः । पूर्णपात्रम् । दक्षिणाः । पवित्रच्छेदनैः पवित्रीकरणम् । प्रोक्षणीपात्रे प्रणीतोदकमासिच्य । पवित्राभ्यामुत्पवनम् । पवित्रयोः प्रोक्षणीषु निधानम् । प्रोक्षणीनां सव्यहस्तकरणम् । प्रणीतोदकेन प्रोक्षणीनां प्रोक्षणम् । प्रोक्षण्युदकेनासादितवस्तुप्रोक्षणम् । असञ्चरे प्रोक्षणीनां निधानम् । आज्यस्थाल्यामाज्यनिर्वापः । चरुस्थाल्यां चरुनिर्वापः । आज्याधिश्रयणम् । चरोरधिश्रयणम् । पर्यग्निकरणमुभयोः । शते चरौ स्रुवस्य प्रतपनम् । संमार्गकुशैः स्रुव सम्मृज्य । प्रणीतोदकेनाभ्युक्षणम् । पुनः प्रतपनम् । दक्षिणतो निधानम् । आज्योद्वासनम् । चरोरुद्वासनम् । आज्योत्पवनम् । अवेक्षणम् । अपद्रव्यनिरसनम् । प्रोक्षण्युत्पवनम् । उपयमनकुशादानम् । तिष्ठत्समिदाधानम् । प्रोक्षण्युदकेन प्रदक्षिणं पर्युक्षणम् । पवित्रयोः प्रणीतासु निधानम् । अथ दक्षिणं जान्ववाच्य जुहोति । स्थाने उपविष्टो ब्रह्मणा कुशैरन्वारब्धः स्रुवेण जुहोति समिद्धतमे । "ॐप्रजापतये स्वाहा । इदं प्रजापतये न मम । ॐ इन्द्राय स्वाहा । इदमिन्द्राय न मम । ॐ अग्नये स्वाहा । इदमग्नये न मम । ॐसोमाय स्वाहा । इदं सोमाय न मम । ततो यजमानेन द्रव्यत्यागः कार्यः । स च बहुकर्तृके यथाकाले प्रत्याहुतित्यागस्य कर्तुमशक्यत्वात्सर्वमेव होमजातं मनसा ध्यात्वा देवताश्च "इदं यथा दैवतमस्तु न मम"इत्येवंरूपः । अथवा "इदं सम्पादितं समि-

चर्वाज्यतिलादिद्रव्यं यथा त्यक्ष्यामि"ति द्रव्यत्यागः। ततः सर्त्विगाचार्यो जुहुयात्, तद्यथा आज्यतिलचरुद्रव्यैः स्वस्वसामिद्भिः "ॐआकृष्णेन०१। इमन्देवा०२। अग्निर्मूर्द्धा० ३। उद्बुध्यस्वाग्ने०४। बृहस्पते अति० ५। अन्नात्परिस्रुतो० ६। शन्नो देवी० ७। कयानश्चित्र० ८। केतुं कृण्वन्० ९" पालाशसमिद्भिः चर्वाज्यद्रव्यैः "ॐ त्र्यम्बकं०१। श्रीश्च ते०२। अक्रन्ददग्निः३। इदं विष्णु०४। ब्रह्म जज्ञानं० ५। त्रातारमिन्द्रम्० ६। यमाय त्वाङ्गिर० ७। कार्षिरसि० ८। इन्धानास्त्वा० ९" इत्यधिदेवताः। "ॐ अग्निन्दूतं०१। आपो हि ष्ठा०२। मही द्यौः०३। इदं विष्णु०४। त्रातारमिन्द्र० ५। अदित्यै रास्नासी० ६। प्रजापते न त्व० ७। नमोऽस्तु सर्पेभ्यो० ८। ब्रह्म जज्ञानं० ९" इति प्रत्यधिदेवताः। "ॐगणानान्त्वा०१। अम्बेऽअम्बिके० २। आ नो नियुद्भिः० ३। या वाङ्कशा०४। अश्विना तेजसा०५" इति पञ्चलोकपालाः। तिलाज्याद्युपकल्पितद्रव्येण जपदशांशहोमः। अत्र प्रधानं घृतमिश्रितपायससमिदाज्यचर्वाहुतिभिः प्रतिद्रव्यमष्टाविंशतिभिः समिद्भिः "ॐ मोषूण इन्द्रात्र पृत्सु०"। अथवा नाममन्त्रेण तैरेव द्रव्यैः "ॐ सजोषा इन्द्र०" इत्यनेन अष्टाहुतयः। "ॐ आपो हि ष्ठा०" इत्यनेनापि अष्टाहुतयः नाममन्त्रेण वा। इत्यधिदेवताप्रत्यधिदेवताः। अथावरणदेवताहोमः। प्रत्येकमष्टसंख्याः पायसाहुतयः, ता यथा "ॐविश्वे देवास० १। इदं विष्णु० २। वसवस्त्वा धूपयन्तु० ३। इमम्मे वरुण०४। ऋतधामासि० ५। उतनोऽहिर्बुध्न्यः० ६। पूषन्तव व्रते ७। अश्विना तेजसा० ८। यमाय त्वाऽङ्गिरस्वते० ९। अग्निन्दूतं० १०। ब्रह्म जज्ञानं० ११। इमन्देवा० १२। या ते रुद्र० १३। अदितिर्द्यौरदिति० १४। वाचस्पतये० १५। नमोऽस्तु सर्पेभ्यो० १६। उशन्तस्त्वा० १७। भग प्रणेत० १८। अर्यमणं० १९। सविता प्रथमे० २०। विश्वकर्मन्हविषा०२१। आ नो नियुद्भिः० २२। इन्द्राग्नी आगतꣳ सुतं० २३। मित्रो

न एहि० २४" । कृसरान्नेन "ॐ कृणुष्व पाजः प्रसितिन्न पृथ्वीं याहि राजेवामवाँ३ इभेन । तृष्वीमनु प्रसितिन्द्रूणानोऽस्तासि व्विध्य रक्षसस्तपिष्ठैः स्वा०१। तव भ्रमास आशुया पतन्त्यनु स्पृश धृषता शोशुचानः । तपूँष्यग्ने जुह्वा पतङ्गानसन्दितो व्विसृज व्विष्वगुल्काः स्वा० २ । प्रति स्पशो व्विसृज तूर्णितमो भवा पायुर्व्विशो अस्या अदब्धः । यो नो दूरे अघशँसो योऽअन्त्यग्ने माकिष्टे व्यथिरादधर्षीत् स्वा० ३ । उदग्ने तिष्ठ प्रत्यातनुष्व न्यमित्राँ३ ओषतात्तिग्महेते । यो नो अरातिँसमिधान चक्रे नीचा तन्धक्ष्यतसन्न शुष्कम् स्वा० ४ । ऊर्ध्वो भव प्रति विध्याध्यस्मदाविष्कृणुष्व दैव्यान्यग्ने । अव स्थिरा तनुहि यातुजूनाञ्जामिमजामिम्प्रमृणीहि शत्रून् । अग्नेष्ट्वा तेजसा सादयामि स्वा० ५ । अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्याऽअयम् । अपाँ रेताँसि जिन्वति । इन्द्रस्य त्वौजसा सादयामि स्वा० ६ । भुवो यज्ञस्य रजसश्च नेता यत्रा नियुद्भिः सचसे शिवाभिः । दिवि मूर्द्धानन्दधिषे स्वर्षां जिह्वामग्ने चकृषे हव्यवाहम् स्वा० ७ । ध्रुवासि धरुणास्तृता व्विश्वकर्मणा । मा त्वा समुद्र उद्वधीन्मा सुपर्णोऽव्यथमाना पृथिवीन्दृँह स्वा० ८ । प्रजापतिष्ट्वा सादयत्वपाम्पृष्ठे समुद्रस्येमन् । व्यचस्वतीम्प्रथस्वतीम्प्रथस्व पृथिव्यसि स्वा० ९ । भूरसि भूमिरस्यदितिरसि व्विश्वधाया व्विश्वस्य भुवनस्य धर्त्री । पृथिवीं यच्छ पृथिवीन्दृँह पृथिवीम्मा हिँसीः स्वा० १० । व्विश्वस्मै प्राणायापानाय व्यानायोदानाय प्रतिष्ठायै चरित्राय । अग्निष्ट्वाभि पातु मह्या स्वस्त्या च्छर्दिषा शन्तमेन तया देवतयाङ्गिरस्वद्ध्रुवासीद स्वा० ११ । काण्डात्काण्डात्प्ररोहन्ती परुषः परुषस्परि । एवा नो दूर्वे प्र तनु सहस्रेण शतेन च स्वा०१२ । या शतेन प्रतनोषि सहस्रेण व्विरोहसि । तस्यास्ते देवीष्टके व्विधेम हविषा व्वयम् स्वा० १३ । यास्ते अग्ने सूर्ये रुचो दिवमातन्वन्ति रश्मिभिः । ताभिर्नोऽअद्य सर्वाभी रुचे जनाय नस्कृधि स्वा० १४।

या वो देवाः सूर्ये रुचो गोष्वश्वेषु या रुचः । इन्द्राग्नी ताभिः सर्वाभी रुचन्नो धत्त बृहस्पते स्वा० १५ " इति प्रत्यृचमष्टसंख्यया हुत्वा, "ॐ तत्सवितुर्वरे० ८ । इदं सवित्रे० । ॐ जातवेदसे सुनवाम सोममरातीयतो नि दहाति वेदः । स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुन्दुरितात्यग्निः स्वा० ८ । इदं जातवेदसे० । ॐ त्र्यम्बकं यजामहे० ८ । इदं रुद्राय० । ॐ सीरा युञ्जन्ति कवयो युगा वितन्वते पृथक् । धीरा देवेषु सुम्नया स्वा० ८ । इदं ऋत्विक्स्तुतिदेवतायै० । ॐ तामग्निवर्णां तपसा ज्वलन्तीं परिरोचनीं कर्मफलेषु जुष्टाम् । दुर्गां देवीं शरणमहं प्रपद्ये सुतरसि तरसे नमः सुतरसि तरसे नमः ८ । इदं दुर्गायै० । ॐ वास्तोष्पते प्रतीजानीह्यस्मान्स्वावेशो अनमीवो भवा नः । यत्वेमहे प्रति तन्नो जुषस्व शन्नो भव द्विपदे शञ्चतुष्पदे स्वाहा ८ । इदं वास्तोष्पतये० । ॐ अग्निः कण्वो मेधातिथिमग्निः सातमुपस्तुतम् । अग्निना दुर्वशं यदुं परावत उग्रा देवं हवामहे स्वा० । इदमग्नये० । ॐ क्षेत्रस्य पतिना वयं हितेनेव जयामसि । गामश्वं पोषयित्वा स नो मृळातीदृशे स्वा० । इदं क्षेत्रपालाय० । ॐ गृणाना जमदग्निवत्स्तुवाना च वशिष्ठवत् । जनीयन्तो न्वग्रवः पुत्रीयन्तः सुदानवः सरस्यन्तं हवामहे० । इदं मित्रावरुणाभ्यां० । ॐ अग्निन्दूतं वृणीमहे होतारं विश्ववेदसम् । अस्य यज्ञस्य सुक्रतुम्० । इदमग्नये० । ॐ हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजाम् । चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो ममावह १ । तां म आवह जातवेदो लक्ष्मीमनपगामिनीम् । यस्या हिरण्यं विन्देयं गामश्वं पुरुषहम् २ । अश्वपूर्वां रथमध्यां हस्तिनादप्रमोदिनीम् । श्रियं देवीमुपह्वये श्रीर्मा देवीर्जुषताम् ३ । कां सोस्मितां हिरण्यप्राकारामार्द्रां ज्वलन्तीं तृप्तान्तर्पयन्तीम् । पद्मे स्थितां पद्मवर्णान्तामिहोपह्वये श्रियम् ४ । चन्द्रां प्रभासां यशसा ज्वलन्तीं श्रियं लोके देवजुष्टामुदाराम् । तां पद्मिनीमीं शरणमहं प्रपद्ये अलक्ष्मीर्मे नश्यतां त्वां

वृणोमि ५। आदित्यवर्णे तपसोऽधिजातो वनस्पतिस्तव वृक्षोऽथ बिल्वः। तस्य फलानि तपसा नुदन्तु मा या अन्तरा याश्च बाह्या अलक्ष्मीः ६। उपैतु मान्देवसखः कीर्तिश्च मणिना सह। प्रादुर्भूतोऽसुराष्ट्रेस्मिन्कीर्तिं वृद्धिं ददातु मे ७। क्षुत्पिपासामला ज्येष्ठा अलक्ष्मीर्नाशयाम्यहम्। अभूतिमसमृद्धिं च सर्वा निर्णुद मे गृहात् ८। गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम्। ईश्वरीं सर्वभूताना तामिहोपह्वये श्रियम् ९। मनसः काममाकूतिं वाचः सत्यमशीमहि। पशूनां रूपमन्नस्य मयि श्रीः श्रयतां यशः १०। कर्दमेन प्रजाभूता मयि सम्भ्रम कर्दम! श्रियं वासय मे कुले मातरं पद्ममालिनीम् ११। आपः स्रजन्तु स्निग्धानि चिक्लीत! वस मे गृहे। नि च देवीं मातरं श्रियं वासय मे कुले १२। आर्द्रां पुष्करिणीं पुष्टिं सुवर्णां हेममालिनीम्। सूर्यां हिरण्मयीं लक्ष्मीं जातवेदो ममावह १३। आर्द्रां यः करिणीं यष्टिं पिङ्गलां पद्ममालिनीम्। चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो ममावह १४। तां म आ वह जातवेदो लक्ष्मीमनपगामिनीम्। यस्यां हिरण्यं प्रभूतं गावो दास्योऽश्वान्विन्देयं पुरुषानहम् स्वा० १५। इदं श्रियै०।" प्रत्यृचमष्टशताद्यन्यतमसंख्यया जुहुयात्। "ॐ त्वन्नः सोम विश्वतो वयोधास्त्वं स्वर्विदा विशा नृचक्षाः। त्वन्न इन्द्र ऊतिभिः सजोषाः पाहि पश्चातादुत वा पुरस्तात्स्वा० १। इदं सोमाय०। ॐ या ते रुद्र शिवा तनूः शिवा विश्वाहा भेषजी। शिवा रुतस्य भेषजी तया नो मृड जीवसे स्वा० २। इदं रुद्राय०।" तत आज्येन सकृद्गृहीतेन चतस्रो व्याहृतीर्हुत्वा। ततः पूजनमग्नेः "ॐ अग्ने नय सुपथा राये अस्मान्विश्वानि देव वयुनानि विद्वान्। युयोध्यस्मज्जुहुराणमेनो भूयिष्ठान्ते नम उक्तिं विधेम॥" इति मन्त्रेण चन्दनाद्युपचारैः पूजयेत्। ततो ग्रहपीठदेवतानां च उत्तरपूजां केचिदाहुः। ततश्चरुशेषादवदाय "ॐ अग्नये स्विष्टकृते स्वाहा। इदमग्नये स्विष्टकृते न मम।" ततो नवाहुतिः—"ॐ भूः स्वाहा। इदमग्नये न मम। ॐ

भुवः स्वाहा। इदं वायवे न मम। ॐ स्वः स्वाहा। इदं सूर्याय न मम। ॐ त्वन्नो अग्ने०। इदमग्नीवरुणाभ्यां न मम। ॐ सत्वन्नोऽ अग्ने०। इदमग्नीवरुणाभ्यां न मम। ॐ अयाश्चाग्ने०। इदमग्नये अयसे न मम। ॐ ये ते शतं०। इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यश्च न मम। ॐ उदुत्तमं वरुण०। इदं वरुणाय न मम।" ततो बलिदानम्। "ॐ त्रातारमिन्द्र०। इन्द्राय साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय एष माषभक्तसदीपबलिर्न मम। भो इन्द्र दिशं रक्ष बलिं भक्ष मम (यजमानस्य वा) सकुटुम्बस्य आयुःकर्ता क्षेमकर्ता शुभकर्ता शान्तिकर्ता पुष्टिदस्तुष्टिदो भव।" इति पुष्पाक्षतजलानि पूर्वाभिमुखस्त्यजेत्। एवं दशदिक्पालेभ्यो दद्यात्। ततो ग्रहाणां बलयो देयाः। पञ्चलोकपालेभ्यश्च साधिदैवतनिर्ऋतये आवरणदेवताभ्यश्च बलिदानं कुर्यात्। "ॐ वास्तोष्पते प्रतिजानीह्यस्मान्स्वावेशो अनमीवो भवा नः। यत्वेमहे प्रति तन्नो जुषस्व शन्नो भव द्विपदे शञ्चतुष्पदे। इदं बलिदानं वास्तोष्पतये०।" ततो महाबलिं कुङ्कुमादिरक्तपुष्पादियुतं सदीपं सदक्षिणं क्षेत्रपालाय दद्यात्। "ॐ न हि स्पशमविदन्नन्यमस्माद्वैश्वानरात्पुर एतारमग्नेः। एमेनमवृधन्नमृताऽअमर्त्यं वैश्वानरं क्षैत्रजित्याय देवाः।" क्षेत्रपालाय भूतप्रेतपिशाचराक्षसशाकिनीडाकिनीवेतालादिपरिवारयुताय इमं बलिं समर्पयामि। भो भोः क्षेत्रपाल इमं बलिं गृहाण मम (यजमानस्य वा) आयुःकर्ता क्षेमकर्ता शान्तिकर्ता तुष्टिकर्ता पुष्टिदो भव।" इमं बलिं शूद्रेण चतुष्पथे क्षिपेत्। ततः प्रक्षाल्य पाणिपाद आचम्य देशकालौ स्मृत्वा "कृतस्यास्य होमस्य सम्पूर्णतासिद्ध्यर्थं पूर्णाहुतिहोममहं करिष्ये" इति सङ्कल्प्य, आचार्यो यजमानो वा पूर्णाहुतिं जुहुयात्। तत्र मन्त्राः—

"ॐ समुद्रादूर्मिर्मधुमाँ उदारदुपाᳬशुना सममृतत्वमानट्। घृतस्य नाम गुह्यं यदस्ति जिह्वा देवानाममृतस्य नाभिः १। पूर्णा

दर्व्वि परा पत सुपूर्णा पुनरापत । वस्नेव व्वि क्रीणावहा इष-मूर्ज्जं शतक्रतो २ । सप्त ते अग्ने समिधः सप्त जिह्वाः सप्त ऋषयः सप्त धाम प्रियाणि । सप्त होत्राः सप्तधा त्वा यजन्ति सप्त योनी-रापृणस्व घृतेन स्वाहा ।" इति पूर्णाहुतिं हुत्वा वसोर्द्धारां कुर्यात् ।

तत्र मन्त्राः—

"ॐ समास्त्वा० १७ । व्विष्णोर्न्नुकं० ६ । अपाहं युत्सु० ४ । आप्यायस्व० ४ । एवं वसोर्धारां विधाय अग्निं प्रदक्षिणीकृत्य । तत-स्त्र्यायुषकरणम् । ततः संस्रवप्राशनादिप्रणीताविमोकान्तं कर्मशेषं समा-प्य रुद्रकुम्भं स्पृष्ट्वा "त्र्यम्बकं" मन्त्रं शतवारं जपेत् । ततो याजु-षश्चेद्यजमानस्तदा रुद्रैकादशनीं जपेत् । बह्वृचश्चेद्रुद्रसूक्तानि जपेत् । सामगश्चेद्रुद्रसामानि । अथर्वणश्चेत्त्र्यम्बकमन्त्रम् । अथ वा एकादशाष्टत्रि-ध्येकसंख्यया रुद्रजपः कार्यः । ततो रुद्रं "त्र्यम्बक"मिति मन्त्रेण । नैर्ऋतिं "मोषूण" इति मन्त्रेण पञ्चोपचारैः सम्पूज्य । "ॐ मोषूणः परा परा निर्ऋतिर्दुर्हणावधीत् । यदीष्टस्तृष्णया सह ॥ इन्द्रं वः० ॥ अप्सु मे सोमो अब्रवीदन्तर्विश्वानि भेषजा । अग्निञ्च विश्वश-म्भुवम् ।" इति नक्षत्रदेवता उपस्थाय सर्वकलशोदकं पात्रान्तरे गृहीत्वा सर्त्विगाचार्यो यजमानं सर्वौषधिभिरनुलिप्ताङ्गं धृतनववस्त्रं तद्वामभागे धृतनववस्त्रां सपुत्रां तत्पत्नीमुपवेश्य वक्ष्यमाणमन्त्रैरभिषिञ्चेत् । ते च मन्त्राः—

"ॐ आपो हि ष्ठा० ३ । त्रातारमिन्द्र० ५ । इमम्मे० ४ । मापो मौषधी० १ । भग प्रणेत० १ । इदमापः० १ । समुद्राय त्वा० १ । पुनन्तु मा पितरः० ९ । आप्यायस्व० १ । पञ्च नद्यः० १ । शिरो मे० ७ । देवस्य त्वा० ३ । सोमस्य त्वा द्युम्नेन० १ । यज्ञा-प्रतो० १ । पालाशं भवति तेन ब्राह्मणोऽभिषिञ्चति ब्रह्म वै पलाशो ब्रह्मणैवैनमभिषिञ्चति १ । औदुम्बरं भवति तेन स्वोऽभि-षिञ्चत्यन्नं वाऽऊर्गुदुम्बर ऊर्ग्वै स्वं यावद्वै पुरुषस्य सम्भवति नैव ताव-दशनायति तेनोर्क्स्वं तस्मादुदुम्बरेण स्वोऽभिषिञ्चति १ । नैयग्रोध-

पादं भवति तेन मित्र्यो राजन्योऽभिषिञ्चति पाङ्क्तिर्न्यग्रोधः प्रति-
ष्ठितो मित्रेण वै राजन्यः प्रतिष्ठितस्तस्मान्नैयग्रोधपादेन मित्र्यो
राजन्योऽभिषिञ्चति ३। आश्वत्थं भवति तेन व्वैश्योऽभिषिञ्चति
स यदेवादोऽश्वत्थे तिष्ठत इन्द्रो मरुत उपामन्त्रयत तस्मादाश्वत्थेन
व्वैश्योऽभिषिञ्चति ४। सर्व्वसुरभ्युन्मर्दनं भवति परमो वा एष
गन्धो यत्सर्वसुरभ्युन्मर्दनं गन्धेनैवैनमेतदभिषिञ्चति ५। यदेव-
कल्पाञ्जुहोति प्राणा वै कल्पा अमृतं वै प्राणा अमृतेनैवेनमेतद-
भिषिञ्चति ६। सर्वेषां वा एष वेदानाᳪं रसो यत्साम सर्वेषामेवै-
नमेतद्वेदानाᳪंरसेनाभिषिञ्चति ७।" नवग्रहमन्त्राश्च यथा–"ॐ आ
कृष्णेन०। इमन्देवा०। अग्निर्मूर्द्धा०। उद्बुध्यस्व०। बृहस्पते अति०।
अन्नात्परिस्रुतो०। शन्नो देवी०। कयानश्चित्र०। केतुङ्कृण्वन्०।"
मूलं "व्रजां वीर०।" इन्द्रं ज्येष्ठां "या दिव्या आपः०। त्र्यम्बकं
यजामहे०।" अथ ऋङ्मन्त्राः। "अक्षीभ्यामितिषण्णां कश्यपो विवृहा
यक्ष्मनाशनोऽनुष्टुप् आभिषेके विनियोगः। त्रिभिष्ठन्देवेति सप्तानां
वसिष्ठ ऋषिः आद्यानां त्रयाणामग्निर्देवता चतुर्णां विश्वेदेवाः
आद्या गायत्री द्वितीयानुष्टुप् ततस्तिस्रो गायत्र्यः अन्त्ये द्वे अनु-
ष्टुभौ अभिषेके विनियोगः। आपोहिष्ठेति नवर्चस्याम्बरीषः सिन्धु-
द्वीप आपो गायत्री पञ्चमी वर्द्धमाना सप्तमी प्रतिष्ठा अन्त्ये द्वे अनुष्टुभौ
अभिषेके विनियोगः। आप इद्वेति द्वयस्य सप्तर्षयो विश्वे देवा
अनुष्टुप् अभिषेके विनियोगः। सहस्राक्षेणेति प्राजापत्यो यक्ष्म-
नाशनो यक्ष्महा त्रिष्टुप् अभिषेके विनियोगः।" यद्वा "सहस्राक्षं-
शतधार"मित्यृचम्। "तच्छंयोः शंयुर्विश्वे देवाः शक्करी आभिषेके वि-
नियोगः। "ॐ अक्षीभ्यान्ते नासिकाभ्यां कर्णाभ्यां छुबुकादधि।
यक्ष्मं शीर्षण्यं मस्तिष्काज्जिह्वाया विवृहामि ते १। ग्रीवाभ्यस्त
उष्णिहाभ्यः कीकसाभ्यो अनूक्यात्। यक्ष्मं दोषण्यᳪंमंसा-
भ्यां बाहुभ्यां विवृहामि ते २। ऊरुभ्यान्ते अष्ठीवद्भ्यां पार्ष्णिभ्यां
प्रपदाभ्याम्। यक्ष्मं श्रोणिभ्यां भासदाद्भंससो विवृहामि ते ३।

मेहनाद्वनं करणाल्लोमभ्यस्ते नखेभ्यः। यक्ष्मं सर्वस्मादात्मनस्तमिदं विवृहामि ते ४। अङ्गादङ्गाल्लोम्नो लोम्नो जातं पर्वणि पर्वणि। यक्ष्मं सर्वस्मादात्मनस्तमिदं विवृहामि ते ५। त्रिभिष्ट्वं देव सवितर्वर्षिष्ठैः सोम धामभिः। तस्मै सरस्वती दुहे क्षीरं सर्पिर्मधूदकम् १। पावमानीः स्वस्त्ययनीः सुदुघा हि घृतश्चुतः। क्षीरं सर्पिर्मधूदकम् २। प्र देवमच्छा मधुमन्त इन्दवः। धर्ता दिवः पवते कृत्व्यो रसः ३। पवित्रन्ते विततं ब्रह्मणस्पते प्रभुर्गात्राणि पर्येषि विश्वतः। अतप्ततनूर्न तदामो अश्नुते शृतास इद्वहन्तस्तमाशत ४। तपोष्पवित्रं विततं दिवस्पदे शोचन्तो अस्य तन्तवो व्यस्थिरन्। अवन्त्यस्य पवीतारमाशवो दिवस्पृष्ठमधि तिष्ठन्ति चेतसा ५। स्वादुः पवस्व० ६। त्वं पवित्रे रजसो विधर्मणि देवेभ्यः सोम पवमान पूयसे। त्वामुशिजः प्रथमा अगृभ्णत तुभ्येमा विश्वा भुवनानि येमिरे ७। आपो हि ष्ठा० ३। शन्नो देवीः ४। ईशाना वार्याणां क्षयन्तीश्चर्षणीनाम्। आपो याचामि भेषजम् ५। अप्सु मे सोमो अब्रवीदन्तर्विश्वानि भेषजा। अग्निं च विश्वशम्भुवम् ६। आपः पृणीत भेषजं वरूथं तन्वे३ मम। ज्योक्च सूर्यं दृशे ७। इदमापः० ८। अपो अद्यान्वचारिषꣳ रसेन समसृक्ष्महि। पयस्वानग्न आगमन्तम्मा सꣳ सृज वर्चसा प्रजया च धनेन च ९। आप इद्वा उ भेषजीरापो अमीवचातनीः। आपः सर्वस्य भेषजीस्तास्ते कृण्वन्तु भेषजम् १। हस्ताभ्यां दशशाखाभ्यां जिह्वा वाचः पुरोगवी। अनामयित्नुभ्यां त्वाताभ्यां त्वोपस्पृशामसि २। सहस्राक्षेण शतशारदेन० ३।" यद्वा—

सहस्राक्षं शतधारमृषिभिः पावनं कृतम्। तेन त्वामभिषिञ्चामि पावमान्यः पुनन्तु मे १। भगन्ते वरुणो राजा भगं सूर्यो बृहस्पतिः। भगमिन्द्रश्च वायुश्च भगं सप्तर्षयो विदुः २। यत्ते केशेषु दौर्भाग्यं सीमन्ते यच्च मूर्द्धनि। ललाटे कर्णयोरक्ष्णोरापस्तद्घ्नन्तु सर्वदा ३।"

ग्रहाणामादिरादित्यो लोकरक्षणकारकः।
विषमस्थानसम्भूतां पीडां दहतु ते रविः॥
रोहिणीशः सुधामूर्तिः सुधागोत्रः सुधाशनः।
विषमस्थानसम्भूतां पीडां दहतु ते विधुः॥
भूमिपुत्रो महातेजा जगतां भयकृत्सदा।
वृष्टिकृद्वृष्टिहर्ता च पीडां दहतु ते कुजः॥
उत्पत्तिरूपो जगतां चन्द्रपुत्रो महाद्युतिः।
सूर्यप्रियकरो देवः पीडां दहतु ते बुधः॥
देवमन्त्री विशालाक्षः सदा लोकहिते रतः।
अनेकशिष्यसम्पूर्णः पीडां दहतु ते गुरुः॥
दैत्यमन्त्री गुरुस्तेषां प्राणदश्च महामतिः।
प्रभुस्ताराग्रहाणां च पीडां दहतु ते भृगुः॥
सूर्यपुत्रो दीर्घदेहो विशालाक्षः शिवप्रियः।
मन्दचारः प्रसन्नात्मा पीडां दहतु तेऽर्कजः॥
महाशिरा महावक्त्रो दीर्घदंष्ट्रो महाबलः।
असुरश्चोर्द्धबाहुश्च पीडां दहतु ते तमः॥
अनेकरूपो वर्णैश्च शतशोऽथ सहस्रशः।
उत्पातभूतो जगतां पीडां दहतु ते शिखी॥
सुदर्शन! महाज्वाल! विदीपितदिगन्तर!।
त्रायस्व चैनमापन्नो भद्रं प्रदिश ते नमः॥
दैत्यनिकराभागशैलनिर्भेददीक्षित!।
पद्मशङ्खमनोऽनन्द! त्राह्येतमपि नन्दक!॥
विपक्षकायमथन! तच्छिरोलुलितानन!।
कमलाकान्त! दैतेय! पाह्येनं मुशलायुध!॥
विश्वोद्भवलयत्राणलीलास्य परमात्मनः।
लीलारविन्द! सुभग! पाह्येनमपि पङ्कज!॥
कौमोदकी गदा सौरेर्याऽसौ दिशतु मङ्गलम्।

या मुकुन्दकराम्भोजे विलसद्भूषणायता ॥
त्रिदशारिहताशेषरक्षोदनुजजीवित ! ।
एनमो रक्षताद्देनं विष्णो ! शार्ङ्ग धनुर्धर ! ॥
दैत्यसीमन्तिनीगर्भनिर्भेदचतुरस्वन ! ।
स्त्रवदच्युतवक्त्राब्जमधुपर्णसुशङ्खराट् ! ।
दैत्यरक्षोऽधिपप्राणत्रमारुधिरभोजनाः ।
एवं सर्वत्र रक्षन्तु शार्ङ्गपाणेः शरोत्कराः ॥
अरातिहाऽतिप्रमुखाशक्याऽजा क्षपणक्षमा ।
आपद्भ्यो रक्षतां देवशक्तिर्विष्णोर्वरायुधम् ॥
योऽसौ वज्रधरो देवो महेन्द्रो गजवाहनः ।
मूलजातशिशोर्दोषं मातापित्रोर्व्यपोहतु ॥
योऽसौ शक्तिधरो देवो हुतभुङ्मेषवाहनः ।
सप्तजिह्वश्च देवोऽग्निर्मूलदोषं व्यपोहतु ॥
योऽसौ दण्डधरो देवो धर्मो महिषवाहनः ।
मूलजातशिशोर्दोषं व्यपोहतु यमो मम ॥
योऽसौ खड्गधरो देवो निर्ऋती राक्षसाधिपः ।
प्रशामयतु मूलोत्थं दोषं गण्डान्तसम्भवम् ॥
योऽसौ पाशधरो देवो वरुणश्च जलेश्वरः ।
नक्रवाहः प्रचेतानो मूलोत्थाघं व्यपोहतु ॥
योऽसौ देवो जगत्प्राणो मारुतो मृगवाहनः ।
प्रशामयतु मूलोत्थदोषं बालस्य शान्तिदः ॥
योऽसौ निधिपतिर्देवः खड्गभृद्वाजिवाहनः ।
मातापित्रोः शिशोश्चैव मूलदोषं व्यपोहतु ॥
योऽसौ पशुपतिर्देवः पिनाकी वृषवाहनः ।
अश्लेषामूलगण्डान्तदोषमाशु व्यपोहतु ॥
विघ्नेशः क्षेत्रपो दुर्गा लोकपाला नवग्रहाः ।
सर्वदोषप्रशमनं सर्वे कुर्वन्तु शान्तिदाः ॥

सुरास्त्वामभिषिञ्चन्तु ब्रह्मविष्णुमहेश्वराः ।
वासुदेवो जगन्नाथस्तथा सङ्कर्षणो विभुः ॥
प्रद्युम्नश्चानिरुद्धश्च भवन्तु विजयाय ते ।
आखण्डलोऽग्निर्भगवान्यमो वै निऋतिस्तथा ॥
वरुणः पवनश्चैव धनाध्यक्षस्तथा शिवः ।
ब्रह्मणा सहिताः सर्वे दिक्पालाः पान्तु ते सदा ॥
कीर्तिर्लक्ष्मीर्धृतिर्मेधा पुष्टिः श्रद्धा क्रियामतिः ।
बुद्धिर्लज्जा वपुः शान्तिः कान्तिस्तुष्टिश्च मातरः ॥
एतास्त्वामभिषिञ्चन्तु देवपत्न्यः समागताः ।
आदित्यश्चन्द्रमा भौमो बुधजीवसितार्कजाः ॥
ग्रहास्त्वामभिषिञ्चन्तु राहुः केतुश्च तर्पिताः ।
देवदानवगन्धर्वा यक्षराक्षसपन्नगाः ॥
ऋषयो मनवो गावो देवमातर एव च ।
देवपत्न्यो द्रुमा नागो दैत्याश्चाप्सरसां गणाः ॥
अस्त्राणि सर्वशस्त्राणि राजानो वाहनानि च ।
औषधानि च रत्नानि कालस्यावयवाश्च ये ॥
सरितः सागराः शैलास्तीर्थानि जलदा नदाः ।
एते त्वामभिषिञ्चन्तु सर्वकामार्थसिद्धये ॥

तत "स्तच्छंयोरावृणीमहे०"। ततो रुद्रनिर्ऋतिकलशोदकेनान्येन च शतच्छिद्रकलशं वस्त्रेणान्तर्द्धायाभिषिक्तो यजमानः स्नानं कुर्यात् । धौते वाससी परिधाय तिलकं विभूतिं च धृत्वा कांस्यपात्रे आज्यावलोकनं कृत्वा सङ्कल्पपूर्वकमाचार्यादीन्पूजयित्वा तेभ्यो दक्षिणां दद्यात् । तत आचार्याय सवत्सां धेनुं दद्यात् । ब्रह्मणे वृषभम् । रुद्रजापिने कृष्णमनड्वाहम् । तत्रमन्त्रः—

"अङ्गारक ! नमस्तेऽस्तु अनड्वँस्तव दानतः ।
शिशुजन्मनि दोषाश्च निवारय महाप्रभो !" ॥

तत ऋत्विग्भ्यो यथाशक्ति दक्षिणां दद्यात् । ततो निर्ऋत्यादीनां

उत्तरपूजां कृत्वा पुष्पाञ्जलिं दद्यात्। "आवाहनं न जानामि०। अ-पराधसहस्राणि०। यस्य स्मृत्या०। मन्त्रहीनं क्रिया०। "ॐ उत्तिष्ठ ब्रह्मणस्पते देवयन्तस्त्वेमहे। उपप्रयन्तु मरुतः सुदानव इन्द्र प्राशूर्भवा सचा"।

यान्तु देवगणाः सर्वे पूजामादाय पार्थिवीम्।
इष्टकामसमृध्यर्थं पुनरागमनाय च॥

इति विसृज्य,

गच्छ त्वं भगवन्नग्ने! स्वस्थानं कुण्डमध्यतः।
हव्यमादाय देवेभ्यः शीघ्रं देहि प्रसीद मे॥
गच्छ गच्छ सुरश्रेष्ठ! स्वस्थाने परमेश्वर!।
यत्र ब्रह्मादयो देवास्तत्र गच्छ हुताशन!॥

अग्निं विसृज्य, आचार्याय प्रतिमादानम्। रुद्रप्रतिमां रुद्रजापिने दद्यात्। ततो भूयसीं दक्षिणां दद्यात्। "अस्य कर्मणः साङ्गतासिद्धये शतं वा तदर्धार्धादिकं वा ब्राह्मणान् भोजयिष्ये"। सर्वं कर्म ईश्वराय समर्प्य "ब्रह्मार्पणं ब्रह्म हविः०। यस्य स्मृत्या" इत्युक्त्वा शान्तिसूक्तजपं कारयित्वा, सदस्यांश्चन्दनाक्षतादिभिः पूजयित्वा दक्षिणां दत्वाञ्जलिं बध्वा "मया यत्कृतं मूलशान्त्यादिकर्म तत्कालहीनं भक्तिहीनं श्रद्धाहीनं च भवतां ब्राह्मणानां वचनात्सर्वं सम्पूर्णमच्छिद्रं चास्तु" इति प्रार्थयेत्। ततः "सम्पूर्णमस्तु" सर्वे वदेयुः। तेषां मन्त्राशिषो गृहीत्वा सुहृद्युतो भुञ्जीत।

इति शौनकोक्तमूलशान्तिविधानम्।

---

अथ कात्यायनपरिशिष्टोक्तमूलशान्तिविधानम्। हेमाद्रौ शान्तिकाण्डे—

"अथातो मूलजातस्य मूलविधिं व्याख्यास्यामो मूलांशे प्रथमे पितुर्नेष्टो द्वितीये मातुस्तृतीये धनधान्यस्य चतुर्थे कुलशोकावहः स्वयं पुण्यभागी स्यान्मूलनक्षत्रे मूलविधानं कुर्यात्सर्वौषध्या सर्वगन्धैश्च संयुक्तमुदकुम्भं वस्त्रगन्धपुष्परत्नसहितं श्वेतसिद्धार्थकुसु-

मयुक्तं च कुर्यात्तस्मिन्त्रुद्रमभ्यर्च्य रुद्राञ्जपित्वाऽप्रतिरथꣳ राक्षोघ्नꣳ सूक्तं चाथ द्वितीयोदकुम्भं चतुःप्रस्रवणसंयुक्तं कृत्वा तदुपरिष्टान्मूलानि धारयेद्वंशपात्रे कृत्वा वस्त्रेण बद्ध्वा तस्मिन्प्रधानानि मूलानि वक्ष्याम्यष्टादशमाषꣳ हिरण्मयमूलꣳ सप्तधान्यानि प्रथमा कृष्णमेर्या सहदेव्यपराजिता बालापाठा शङ्खपुष्पी मधुयष्टिका चक्राङ्किता मयूरशिखा काकजङ्घा कुमारीद्वयं जीवन्त्यपामार्गो भृङ्गारको लक्ष्मणा सुलक्ष्मणा जाती व्याघ्रपत्रश्चक्रमर्दकमिद्धेश्वराश्वत्थपलाशोदुम्बरप्लक्षवटार्कदूर्वाशतावरीशमीरोहितकाण्येवमादिमूलशत पूरयित्वा तस्मिन्निषिद्धानि मूलानि वक्ष्यामि वैकङ्कतबेल्वधवनिम्बदकम्बराजवृक्षशालप्रियालुदधिकपित्थकोविदारश्लेष्मातकशाल्मलिसर्वकण्टकिवर्जं तत्राभिषेकं कुर्यात्पितुः शिशोर्जनन्या देवस्य त्वेत्यौदुम्बर्यासन्दीमुदग्ग्रामास्तृणाति तत्रासीनान्सम्पातेनाभिषिञ्चति शिरसोऽध्यनुलोमꣳ शिरो मे श्रीर्यश इति यथालिङ्गमङ्गानि संमृशति स्नानादूर्ध्वं नैर्ऋतं पयसि पायसꣳ श्रपयित्वा कार्ष्मर्यमयꣳ स्रुक्स्रुवं प्रतप्य संमृज्यान्वारब्ध आघारावाज्यभागौ हुत्वाऽसुन्वन्तमिति चतस्रः स्थालीपाकेन जुहुयात्कृणुष्व पाज इति पञ्चदशाज्याहुतीश्चतुर्गृहीतेन जुहुयान्मानस्तोक इति द्वाभ्यां या ते रुद्र शिवा तनूरिति षडग्ने रक्षाꣳसि सेधति शुक्रः शोचिरमर्त्यः । शुचिः पावक ईड्य इति त्वꣳसोम विश्वतो रक्षा राजन्नघायतः । नरिष्ये त्वावतःसखेति स्विष्टकृदादिप्राशनान्ते कृष्णा गौः कृष्णाश्च तिला हेममयमूलꣳ सप्तधान्यसंयुक्तमाचार्याय दद्यात्कृष्णोऽनड्वाँश्च ब्रह्मणे दद्यान्नक्षत्रसूचकेभ्यो वासो दद्यादन्येभ्यो ब्राह्मणेभ्यः सुवर्णं दद्यात्कृसरापायसेन ब्राह्मणान्भोजयेत्सार्पदैवते गण्डजाते जातानामयमेव विधिरेवं कृते शान्तिर्भवतीति ।

इति कात्यायनपरिशिष्टोक्तमूलाश्लेषागण्डान्तशान्तिविधानम् ।

इति श्रीप्रथमशाखीयरामकृष्णविरचिते पारस्करगृह्यसूत्रविवरणे संस्कारगणपतौ मूलशान्तिविधानम् ।

अथाश्लेषाशान्तिविधानं मानवसंहितायां ज्योतिर्निबन्धे—

सार्पांशे प्रथमे राज्यं द्वितीयांशे धनक्षयम् ।
तृतीये जननी हन्ति चतुर्थे पितृघातकः ॥
आश्लेषायान्तु जातानां शान्तिं वक्ष्याम्यतः परम् ।
जातस्य द्वादशाहे च शान्तिहोमं समाचरेत् ॥
असम्भवे तु जन्मर्क्षे अन्यस्मिन्वा शुभे दिने ।
स्नातोऽभ्यङ्गादिभिस्तस्मिन्वरयेत्तु द्विजोत्तमान् ॥
विभवे पञ्चकुम्भांस्तु द्वयं वा तदलाभतः ।
देवतास्थापने चैकमेकं रुद्राभिमन्त्रणे ॥
मूलर्क्षोक्तप्रकारेण कुम्भे निक्षिप्य पूजयेत् ।
गोमयालेपिते देशे धान्याद्यैः परिशोभिते ॥
पङ्कजं कारयेत्तत्र चतुर्विंशदलान्वितम् ।
तण्डुलैः कारयेद्यद्वा रक्तपीतसितासितैः ॥
कर्णिकायां न्यसेद्व्रीहीन्स्थापयेत्तेषु कुम्भकम् ।
आकलशेष्वित्यनया कलशस्थापनं स्मृतम् ॥
इमं म इति मन्त्रेण पूजयेत्तेन वारिणा ।
कुम्भं च गन्धवस्त्राद्यैस्तत्तन्मन्त्रैः प्रपूजयेत् ॥
याः फलिनीरित्यनया क्षिपेद्रत्नौषधादिकम् ।
कुम्भोदरस्थपात्रेषु अश्लेषाप्रतिमां यजेत् ॥
निष्कनिष्कार्धपादैर्वा कारयित्वा स्वशक्तितः ।
तत्पूर्वोत्तरनक्षत्रे दक्षिणोत्तरयोर्यजेत् ॥
ऐन्द्र्यादीशानपर्यन्तामितरक्षांणि पूजयेत् ।
मूलोक्तेन विधानेन कुम्भयोरभिमन्त्रणम् ॥
रुद्राचां रुद्रकुम्भे तु पूर्ववच्छेषमाचरेत् ।
नमोऽस्तु सर्पेभ्य इति पूजामन्त्रः प्रकीर्तितः ॥
सर्पो रक्तस्त्रिनेत्रश्च द्विभुजः पीतवस्त्रकः ।
फलकासिधरस्तीक्ष्णो दिव्याभरणभूषितः ॥

एवं ध्यात्वा ततोऽभ्यर्च्य होमकर्म समारभेत् ।
कर्तुः शाखोक्तमार्गेण आचार्यस्याथवा भवेत् ॥
मुखान्तं कर्म निर्वर्त्य हविरादाय शास्त्रतः ।
इदं सर्पेभ्यो जुहुयात्साधिपत्यधिदैवतम् ॥
अष्टोत्तरशतं वापि अष्टाविंशतिमेव च ।
मूलनक्षत्रवच्छेष होमकर्म समाचरेत् ॥
पूर्णाहुत्यन्तकर्माणि कृत्वा सम्पातकं तथा ।
कुम्भे जलेषु संक्षिप्य अभिषेकमथाचरेत् ॥
दारपुत्रसमेतस्य यजमानस्य पूर्ववत् ।
अभिषिञ्चेत्तथाऽऽचार्य ऋत्विग्भिः सहितस्ततः ॥
अभिमन्त्रितकुम्भाद्भिरभिषेचनमाचरेत् ।
तथा पौराणमन्त्रैश्च पल्लवैरभिषेचयेत् ॥

पौराणमन्त्रानाह—

आश्लेषाऋक्षजातस्य मातापित्रोर्धनस्य च ।
भ्रातृज्ञातिकुलस्थानां दोषं सर्वं व्यपोहतु ॥
योऽसौ वागीश्वरो नाम अधिदेवो बृहस्पतिः ।
मातापित्रोः शिशोश्चैव गण्डान्तं च व्यपोहतु ॥
पितरः सर्वभूतानां रक्षन्तु पितरः सदा ।
सार्पनक्षत्रजातस्य वित्तं च ज्ञातिबान्धवान् ॥
एवं कृतेऽभिषेके तु सर्पशान्तिर्भवेद्ध्रुवम् ।
ततः शुक्लाम्बरधरो यजमानः सुभूषितः ॥
दक्षिणाभिस्ततो विप्रान्मूलवच्च प्रतोषयेत् ।
भुक्तवद्भ्यश्च विप्रेभ्यः स्वीकुर्यादाशिषं गृही ॥
इत्युक्तेन विधानेन सर्वारिष्टमपोहति ।
सर्वकामाश्च सिद्ध्यन्ति वेदोक्तायुर्भविष्यति ॥
इत्युक्तवेदशास्त्रार्थं सारमागमचोदितम् ।
मानवानां हितार्थाय मनुना सार्वकामिकम् ॥

सर्पाधीश ! नमस्तुभ्यं नागानां च गणाधिप ! ।
गृहाणार्घं मया दत्तं सर्वारिष्टप्रशान्तये ॥
इतिमन्त्रेण सर्पाय दद्यादर्घं सुशोभितम् ।
मूलनक्षत्रवत्कुर्यात्सार्पगण्डे च नामतः ॥

इतिमानवसंहितायामाश्लेषाजननशान्तिविधानमूलवाक्यानि ॥

अथास्य स्पष्टप्रयोगो लिख्यते । द्वादशाहादिशुभे दिने कृताभ्यङ्गो यजमानः प्राणानायम्य देशकालौ सङ्कीर्त्य "ममास्य कुमारस्य कुमार्या वा आश्लेषानक्षत्रजननसूचितमात्रारिष्टादिशान्तिद्वारा श्रीपरमेश्वरप्रीत्यर्थं सनवग्रहमखां गोमुखप्रसवशान्तिसहितां आश्लेषाजननशान्तिं करिष्ये" इति सङ्कल्प्य , तदङ्गतया गणेशपूजनपुण्याहवाचननान्दीश्राद्धादि कृत्वाऽऽचार्यादीन्वृत्वाऽष्टौ ऋत्विजो वृणुयात् । अथाचार्योऽस्मिन्कर्मण्याचार्यकर्म करिष्ये"इति सङ्कल्प्य, "यदत्र संस्थित"मित्यादिमन्त्रेण सर्षपान्सर्वतोऽवकीर्य "अपोहिष्ठे"ति कर्मभूमिं प्रोक्ष्य गोमुखप्रसवं कृत्वा मण्डपेशानदेशे पञ्चवर्णकैः स्वस्तिकं विरच्य तत्र पूर्ववत्कलशं संस्थाप्य जलेनापूर्य गन्धपुष्पैश्चाभ्यर्च्य यवदूर्वाश्वत्थादिपञ्चपल्लवपञ्चरत्नसप्तमृत्तिकाफलहिरण्यपञ्चगव्यपञ्चामृतानि तत्तल्लिङ्गमन्त्रैः कलशे निधाय कण्ठे वस्त्रेणावेष्ट्य तदुपरि पूर्णपात्रं निदध्यात् । ततस्तत्कलशात्पूर्वादिचतुर्दिक्षु यवराश्युपरि पूर्ववत्कलशचतुष्टयं स्थापयेत् । अथ मध्यकलशे वस्त्रोपरि सौवर्णीं रुद्रप्रतिमां स्थापयित्वा "त्र्यम्बक"मितिमन्त्रेण पूजयेत् । तत्रैक ऋत्विक् कुम्भं स्पृष्ट्वा रुद्रैकादशनीं न्यासपूर्वकां साङ्गां जपेत् । चत्वारि रुद्रसूक्तानि । ततोऽन्य ऋत्विक् तत्रैव कुम्भे त्र्यम्बकमन्त्रमष्टोत्तरसहस्रं पावमानीमप्येकवारं जपेत् । उत्तरदिक्स्थकुम्भे पावमानीजप इति केचित् । ततः कुम्भोत्तरदेशे चतुर्विंशतिदलं पङ्कजं पञ्चवर्णैः कृत्वा कर्णिकायां व्रीहीन् शक्तितो निधाय तदुपरि कलशं स्थापयित्वा तत्रौषधिफलरत्नादीनि निधाय पूर्णपात्रं स्थापयित्वा तदुपरि सपाख्यामाश्लेषाप्रतिमां पञ्चामृतस्नापितां प्रतिष्ठाप्य "नमोऽस्तु सर्पेभ्य" इति मन्त्रेण सर्पमावाहयेत्।

ततः—

सर्पो रक्तस्त्रिनेत्रश्च द्विभुजः पीतवस्त्रकः ।
फलकासिधरस्तीक्ष्णो दिव्याभरणभूषितः ॥

इति सर्पं ध्यात्वाऽऽवाहयेत् । अथ पङ्कजचतुर्विंशतिदलेषु पूर्वमारभ्य पुनर्वसुपर्यन्तं नक्षत्राणि । तत्तद्देवताः पूर्वादिदलेष्वावाहयेत् । देवताश्चेत्थम् । "भगः । अर्यमा । सविता । त्वष्टा । वायुः । इन्द्राग्नी । मित्रः । इन्द्रः । निर्ऋतिः । आपः । विश्वेदेवाः । विष्णुः । वसवः । वरुणः । अजैकपात् । अहिर्बुध्न्यः । पूषा । अश्विनौ । यमः । अग्निः । प्रजापतिः । सोमः । रुद्रः । आदितिः" इति चतुर्विंशतिदेवानावाह्य लोकपालानावाहयेत् । ततः पदार्थानुसमयेन काण्डानुसमयेन वा सर्वान्पूजयेत् । नैवेद्यादिद्रव्य मूलशान्तिवज्ज्ञेयम । तत आचार्योऽग्निं स्थापयित्वा नवग्रहस्थापनं कृत्वा तदीशान्या ग्रहकलशं स्थापयित्वा वरुणं सम्पूजयेत् । ततः समिद्द्वयमादाय "देवतापरिग्रहार्थमन्वाधानं करिष्ये" । अन्वाधानशब्देन देवताभिध्यानम् । "प्रजापतिं, इन्द्रं, अग्निं, सोमं, आज्येन । नवग्रहान्प्रत्येकममुकसङ्ख्याभिः समिच्चर्वाहुतिभिरधिदेवताप्रत्यधिदेवताश्चामुकसंख्याहुतिभिः विनायकादीन् लोकपालानमुकसङ्ख्याभिः समिच्चर्वाहुतिभिः । प्रधानदेवताः सर्पान्, प्रतिद्रव्यमष्टोत्तरशतसङ्ख्याभिर्घृतमिश्रितपायससमिदाज्यचर्वाहुतिभिः। बृहस्पतिं, पितॄंश्च, प्रतिद्रव्यमष्टाविंशतिसंख्याभिर्घृतमिश्रितपायससमिच्चर्वाहुतिभिः । मघादिचतुर्विंशतिदेवताः प्रत्येकमष्टसंख्याभिः पायसाहुतिभिः । रक्षोहण, कृणुष्वेति, पञ्चदशभिः प्रत्यृचमष्टसंख्याभिः पायसाहुतिभिः । सवितारं, दुर्गां, त्र्यम्बकं, ऋत्विक्स्तुतिं, दुर्गां, वास्तोष्पतिं, अग्निं, क्षेत्राधिपतिं, मित्रावरुणौ, अग्निं, च एताः प्रत्येकमष्टाष्टसङ्ख्याभिः कृसराहुतिभिः । श्रियं "हिरण्यवर्णा"मिति पञ्चदशर्ग्भिः प्रतिमन्त्रमष्टाष्टसङ्ख्याभिः समिदाज्यचर्वाहुतिभिः । सोमं, त्रयोदशसङ्ख्याभिः पायसाहुतिभिः । रुद्रं, चतुर्गृहीतेनाज्येन । अग्निं, वायुं, सूर्यं, प्रजापतिं, चाज्येन ।

शेषेण अग्निं स्विष्टकृत"मित्यादिपूर्णपात्रनिधानान्तं कर्म कृत्वा पायसं कृसरं चरुं च सहैव श्रपयित्वाऽऽज्यभागान्ते यजमानेनाग्नेर्दक्षिणत उपविष्टेन त्यागं कारयित्वा ऋत्विक्सहित आचार्यः अन्वाधानक्रमेण तत्तन्मन्त्रैर्यथाविधि होमं कुर्यात् । होममन्त्रा मूलशान्तिप्रयोगे द्रष्टव्याः । ततः स्विष्टकृदादि होमशेषं समाप्य दिक्पालेभ्यो ग्रहेभ्यो विनायकादिभ्यः सर्पेभ्यो बृहस्पतये पितृभ्यश्च रुद्राय क्षेत्रपालाय च सदीपमाषभक्तबलीन्दत्वा मूलशान्तिवत्पूर्णाहुतिं हुत्वा प्रणीतानिनयनादि कर्मशेषं समाप्य, अथ रुद्रकुम्भं स्पृष्ट्वा "त्र्यम्बकं" मन्त्रं शतमष्टोत्तरं जप्त्वा, याजुषश्चेद्यजमानस्तदा रुद्रैकादशनीं जपेत् । यजमानश्चेद्बह्वृचस्तदा चत्वारि "कद्रुद्राये"त्यादिसूक्तानि जपेत् । सामगश्चेत्तदा रुद्रसामानि जपेत् । आथर्वणश्चेत्त्र्यम्बकमन्त्रं जपेत् । एकादशाष्टत्रिद्व्येकसङ्ख्याऽत्र सूक्तजपे द्रष्टव्या । ततो रुद्रं सर्पांश्च पञ्चोपचारैः पूजयित्वा तत्तन्मन्त्राभ्यामुपस्थाय सर्वकलशोदकं पात्रान्तरे गृहीत्वा तत्र होमसम्पातकं प्रक्षिप्य सर्त्विगाचार्यस्तिष्ठन् सकुटुम्बं यजमानमभिषिञ्चेत् "अक्षीभ्या"मित्यादिमन्त्रैर्मूलशान्त्युक्तैः । तथा—

योऽसौ वज्रधरो देवो महेन्द्रो गजवाहनः ।
सार्पजातशिशोर्दोषं मातापित्रोर्व्यपोहतु ॥
योऽसौ शक्तिधरो देवो हुतभुङ्मेषवाहनः ।
सप्तजिह्वश्च देवोऽग्निः सार्पदोषं व्यपोहतु ॥
योऽसौ दण्डधरो देवो धर्मो महिषवाहनः ।
सार्पजातशिशोर्दोषं व्यपोहतु यमो मम ॥
योऽसौ खड्गधरो देवो निर्ऋती राक्षसाधिपः ।
प्रशामयतु सार्पोत्थं दोषं गण्डान्तसम्भवम् ॥
योऽसौ पाशधरो देवो वरुणश्च जलेश्वरः ।
नक्रवाहः प्रचेतानः सार्पोत्थाघं व्यपोहतु ॥
योऽसौ देवो जगत्प्राणो मारुतो मृगवाहनः ।
प्रशामयतु सार्पोत्थं दोषं बालस्य शान्तिदः ॥

योऽसौ निधिपतिर्देवः खड्गभृद्वाजिवाहनः ।
मातापित्रोः शिशोश्चैव सार्पदोषं व्यपोहतु ॥
योऽसौ पशुपतिर्देवः पिनाकी वृषवाहनः ।
आश्लेषामूलगण्डान्तं दोषमाशु व्यपोहतु ॥
विघ्नेशः क्षेत्रपो दुर्गा लोकपाला नवग्रहाः ।
सार्पदोषप्रशमनं सर्वे कुर्वन्तु शान्तिदाः ॥

"योऽसौ वज्रधर" इत्यादि "शान्तिदा" इत्यन्ता मन्त्रा ऊहिता द्रष्टव्याः । "अभिषेकमथाचरे"दित्युपक्रम्य—

दारपुत्रसमेतस्य यजमानस्य पूर्ववत् ॥

इति मूलशान्त्यतिदेशात् । एवं गण्डान्तशान्त्यादावपि द्रष्टव्यम् । "गण्डान्तेऽप्येवं वक्तव्यं पुष्याश्लेषा ते द्वे तथे"ति वचनात् । अनूहिता अपि—

आश्लेषाऋक्षजातस्य मातापित्रोर्धनस्य च ।
भ्रातृज्ञातिकुलस्थानां दोषं सर्वं व्यपोहतु ॥
योऽसौ वागीश्वरो नाम अधिदेवो बृहस्पतिः ।
मातापित्रोः शिशोश्चैव गण्डान्तं स व्यपोहतु ॥
पितरः सर्वभूतानां रक्षन्तु पितरः सदा ।
सार्पनक्षत्रजातस्य वित्तं च ज्ञातिबान्धवान् ॥

ततः "सुरास्त्वामभिषिञ्चन्त्वि"त्यादिभिश्चाभिषिच्य "तच्छंयोः शंयुर्विश्वेदेवाः शक्करी अभिषेके विनियोगः । ॐ तच्छंयोरावृणीमहे० । ततो रुद्रसर्पकलशोदकेन अन्येन च शतच्छिद्रकलशमन्तर्धाय अभिषिक्तो यजमानो धौते वाससी परिधाय तिलकं कृत्वा सङ्कल्पपूर्वकमाचार्यादीन्पूजयित्वा तेभ्यो दक्षिणां दद्यात् । तत्र आचार्याय सवत्सां दोग्ध्रीं धेनुं दद्यात् । ब्रह्मणे वृषम् । रुद्रजापिने कृष्णवर्णमनड्वाहं दद्यात् । तत्र मन्त्रः—

"अङ्गारक ! नमस्तेऽस्तु अनड्वाँस्तव दानतः ।
शिशुजन्मनि दोषांश्च निवारय महाप्रभो ! ॥ इति ।

तत ऋत्विग्भ्यो यथाशक्ति दक्षिणां दत्वा भूयसीमपि दत्वा रुद्रस-र्पादीनामुत्तरपूजां विधाय, ताम्रपात्रे फलपुष्पादियुतं जलं प्रक्षिप्य सर्पा-यार्घं दद्यात्

सर्पाधीश ! नमस्तुभ्यं नागानां च गणाधिप ! ।
गृहाणार्घं मया दत्तं सर्वारिष्टं प्रशामय ॥

इति मन्त्रेण । तत "उत्तिष्ठ ब्रह्मणस्पते०। यान्तु देवगणाः" इति विसृज्य सङ्कल्पपूर्वकं प्रतिमादिकमाचार्यहस्ते प्रतिपाद्याग्निं सम्पूज्य, "गच्छ गच्छ सुरश्रेष्ठे"ति विसृज्य, शततदर्धार्धदशान्यतरब्राह्मणभोजनं सङ्कल्प्य कर्मेश्वराय समर्प्य "यस्य स्मृत्ये"त्युक्त्वा शान्तिसूक्तजपं कारयित्वा सुहृद्युतो भुञ्जीतेति ।

इति श्री प्रथमशाखीयरामकृष्णविरचिते पारस्करगृह्यसूत्र-विवरणे संस्कारगणपतौ आश्लेषाशान्तिप्रयोगः ।

---

अथ ज्येष्ठाशान्तिविधानं वृद्धगार्ग्यसंहितायाम्—

सुखासीनं मुनिश्रेष्ठं गर्गं मुनिगणान्वितम् ।
कृताञ्जलिपुटो भूत्वा परिपप्रच्छ शौनकः ॥
ज्येष्ठानक्षत्रसम्भूतगण्डदोषविनिर्णयम् ।
तस्य शान्तिविधानं च वद मे मुनिसत्तम ! ॥

गर्ग उवाच—

शौनकस्य वचः श्रुत्वा प्रत्युवाच महामुनिः ।
शृणु शौनक! यत्नेन गण्डदोषविनिर्णयम् ॥
तस्य शान्तिविधानं च यथावत्कथयाम्यहम् ।
घटिकैका च मैत्रान्ते ज्येष्ठादौ घटिकाद्वयम् ॥
तयोः सन्धिरिति ज्ञेयं शिशुगण्डं समीरितम् ॥

मैत्रमनुराधा ।

प्रथमे च द्वितीये च ज्येष्ठर्क्षे च तृतीयके ।
पादत्रये जातमर्त्यो ज्येष्ठोऽप्यत्र प्रजायते ॥

ज्येष्ठाद्यघटिकाद्वयं परित्यज्य प्रथमादिचरणत्रये जातो नरो ज्येष्ठः श्रेष्ठ इत्यर्थः, दोषाभावात्।

ज्येष्ठान्त्यपादजातस्तु पितुः स्वस्य च नाशनः।
जायते नात्र सन्देहो दशाहाभ्यन्तरे तथा॥
ज्येष्ठर्क्षे कन्यका जाता हन्ति शीघ्रं धवाग्रजम्॥

तथा च भारद्वाजः—

ज्येष्ठादौ मातृजननीं मातामहं द्वितीयके।
तृतीये मातुलं हन्ति चतुर्थे जननीन्तथा॥
आत्मानं पञ्चमे हन्ति षष्ठे गोत्रक्षयो भवेत्।
सप्तमे कुलनाशः स्यादष्टमे ज्येष्ठसोदरः॥
नवमे श्वशुरं हन्ति सर्वस्वं दशमे तथा।

घटिकाषट्कस्य फलं ज्योतिर्निबन्धे—

ज्येष्ठायाः प्रथमे पादे गृहज्येष्ठविनाशनम्।
द्वितीये धनहानिः स्यात्तृतीये मातृपीडनम्॥

गर्गः—

तस्य शान्तिं प्रवक्ष्यामि गण्डदोषप्रशान्तये।
सुदिने शुभनक्षत्रे चन्द्रताराबलान्विते॥
सूतकान्तेऽथ वा कुर्याज्ज्येष्ठाशान्तिं विधानतः।
वज्राङ्कुशधरं देवमैरावतगजस्थितम्॥
कुर्याच्छचीपतिं रम्यं देवेन्द्रं सुरपूजितम्।
कर्षमात्रसुवर्णेन कर्षार्धेनाथ पादतः॥
तद्विधानं प्रकुर्वीत वित्तशाठ्यं न कारयेत्।
शालितण्डुलसम्पूर्णकुम्भस्योपरि पूजयेत्॥
इन्द्रायेन्दो मरुत्वत इति मन्त्रेण वाग्यतः।
गन्धपुष्पैर्धूपदीपैर्नानाभक्ष्यनिवेदनैः॥
पूजयेद्विधिना विप्र! लोकपालगणान्वितम्।
रक्तवस्त्रद्वयोपेतं पूजयेत्सुरनायकम्॥

तत्पुरः स्थापयेत्कुम्भाश्चतुर्दिक्षु विशेषतः ।
तन्मध्ये स्थापयेत्कुम्भं शतच्छिद्रसमन्वितम् ॥
पुण्योदकसमायुक्तान्वस्त्रयुग्मविवेष्टितान् ।
कुम्भेषु विन्यसेद्धीमान्पञ्चगव्यं समन्त्रकम् ॥
पञ्चामृतं पञ्चरत्नं मृत्तिकाः पञ्चसंख्यकाः ।
पञ्चवृक्षकषायांश्च पञ्चपल्लवकांस्तथा ॥
सुवर्णं कुशदूर्वांश्च शतौषधिमपि क्षिपेत् ।
पूरयेद्वारुणैर्मन्त्रैः कुम्भान्धीमान्प्रयत्नतः ॥
त्वन्नो अग्ने जपेदादौ सत्वन्नोऽपि द्वितीयके ।
तृतीये पुरुषसूक्तं च कद्रुद्राय चतुर्थके ॥
समुद्रज्येष्ठा इति चेमम्मे गङ्गे चतुर्थके ।
पूजयेद्वस्त्रयुग्माद्यैश्चतुरः कलशानपि ॥
जपं कुर्युः प्रयत्नेन मन्त्रैरेभिर्द्विजोत्तमाः ।
आ नो भद्रा जपं चादौ भद्रा अग्नेर्द्वितीयके ॥
आचार्यो मूलमन्त्रेण जपं कुर्याद्विशेषतः ।

मूलमन्त्र "इन्द्रायेन्दो" इति ।

इन्द्रसूक्तं रुद्रजाप्यं मृत्युञ्जयजपं ततः ।
इत्थं सम्पूज्य देवेन्द्रं वरुणं कुम्भसंस्थितम् ॥
सुसङ्कल्प्य विधानेन होमकर्म ततश्चरेत् ।
समिद्भिर्ब्रह्मवृक्षस्य शतमष्टोत्तरं तथा ॥
सर्पिषा चरुणा चैव मूलमन्त्रेण वाग्यतः ।
हुनेज्जाप्यं च तेनैव यत इन्द्र भयेति च ॥
तिलान्व्याहृतिभिर्हुत्वा शतमष्टोत्तरं पृथक् ।
भार्याशिशुसमोपेतं यजमानं विशेषतः ॥
अभिषिक्तं प्रकुर्वीत सूक्तैर्वारुणसंज्ञकैः ।
समुद्रज्येष्ठादिभिर्मन्त्रैरिमम्मे वरुणैस्तथा ।
द्यौः शान्तिरादिभिर्मन्त्रैराभिषेकं समाचरेत् ॥

अभिषेकं निवर्त्याथ यजमानः समाहितः।
शुक्लाम्बराणि धृत्वाऽथ कुर्यादाज्यावलोकनम्॥
रूपंरूपेति मन्त्रेण चित्रं तच्चक्षुरेव वा॥
देवतापुरतः स्थित्वा धूपदीपनिवेदनम्॥
दद्यादाचमनं सम्यक्ताम्बूलार्घ्यं तथैव च।
अर्घ्यमन्त्रः—
नमस्ते सुरनाथाय नमस्तुभ्यं शचीपते!।
गृहाणार्घ्यं मया दत्तं गण्डदोषप्रशान्तये॥
कारयेत्पूजकादीनां कारितं यत्फलं शुभम्।
लब्ध्वा तु तत्फलं सर्वं देवेन्द्राय समर्पयेत्॥
आचार्याय च गां दद्यात्सुशीलां च पयस्विनीम्।
रक्तवर्णां वत्सयुतां सर्वालङ्कारभूषिताम्॥
वस्त्रयुग्मविधानं च यथाविभवसारतः।
यक्षगन्धर्वसिद्धैश्च पूजितोऽसि शचीपते!॥
दानेनानेन देवेश! गण्डदोषं विनाशय।
इति संप्रार्थयेद्देवमिन्द्राणीसखमुत्तमम्॥
अष्टोत्तरशतं संख्यं कुर्याद्ब्राह्मणभोजनम्।
तेभ्योऽपि दक्षिणां दत्वा प्रणिपत्य क्षमापयेत्॥
इमां कृत्वा ज्येष्ठशान्तिं यथाविध्युक्तमार्गतः।
गण्डदोषं विनिर्जित्य आयुष्माञ्जायते नरः॥
इत्युक्तं वृद्धगार्ग्येण शौनकाय विशेषतः।
ज्येष्ठानक्षत्रसम्भूतगण्डदोषप्रशान्तये॥
अज्ञानादथवा ज्ञानाद्वैकल्याद्वा धनस्य च।
यन्न्यूनमतिरिक्तं वा तत्सर्वं क्षन्तुमर्हति॥

इति श्रीप्रथमशाखीयरामकृष्णविरचिते गृह्यसूत्रविवरणे संस्कारगणपतौ वृद्धगार्ग्योक्तज्येष्ठानक्षत्रजननशान्तिविधानम्।

अथैकनक्षत्रजननशान्तिः । तत्रैव वृद्धगार्ग्यः—

एकस्मिन्नेव नक्षत्रे भ्रात्रोर्वा पितृपुत्रयोः ।
प्रसूतिश्चेत्तयोर्मृत्युर्भवेदेकस्य निश्चयः ॥

ज्योतिर्निबन्धे—

तातस्य जन्मभे यस्य प्रसूतिर्यदि जायते ।
तातं वा भ्रातरं ज्येष्ठं रिष्टं तस्य भवेद्ध्रुवम् ॥

वशिष्ठेन विशेषो दर्शितः—

पित्रोस्तु जन्मकर्मर्क्षे जातस्तु पितृमातृहृत् ।
जन्मर्क्षांशे च तल्लग्ने जातः सद्यो मृतिप्रदः ॥

वृद्धगार्ग्यः—

तद्दोषनाशाय तदा प्रशस्तां शान्तिं च कुर्यादभिषेचनं च ।
सम्पूज्य ऋक्षप्रतिमां तदग्रे दानं च कुर्याद्विभवानुरूपम् ॥

तत्र शान्तिं प्रवक्ष्यामि सर्वाचार्यमतेन तु ।
शुभर्क्षे शुभवारे च चन्द्रताराबलान्विते ॥
रिक्ताविष्टिविवर्ज्ये तु प्रारभेद्दिवसे सुधीः ।
आचार्यं वरयेत्पूर्वं चतुरोऽथ द्विजोत्तमान् ॥
पुण्याहं वाचयित्वा तु शान्तिकर्म समारभेत् ।
अग्नेरीशानदिग्भागे नक्षत्रप्रतिमां ततः ॥
तन्नक्षत्रोक्तमन्त्रेण अर्चयेत्कलशोपरि ।
रक्तवस्त्रेण संच्छाद्य वस्त्रयुग्मेन वेष्टयेत् ॥
स्वशाखोक्तेन मार्गेण कुर्यादग्निमुखं ततः ।
अनेनैव तु मन्त्रेण हुनेदष्टोत्तरं शतम् ॥
प्रत्येकं समिदन्नाज्यैः प्रायश्चित्तान्तमेव च ।
अभिषेकं ततः कुर्यादाचार्यः पितृपुत्रयोः ॥
वस्त्रालङ्कारगोदानैराचार्यं पूजयेत्पुनः ।
ऋत्विग्भ्यो दक्षिणां दद्यान्माषत्रयसुवर्णकम् ॥
देवताप्रतिमादानं धान्यवस्त्रादिभिः सह ।

यानशय्यासनादीनि दद्यात्तद्दोषशान्तये ॥
भोजयेद्ब्राह्मणान्सर्वान्वित्तशाठ्यविवर्जितः ।

इति वृद्धगार्ग्योक्तैकनक्षत्रजननशान्तिः। अथ प्रकारान्तरेणैकनक्षत्रजननशान्तिः—

समानभे यदा देवि! पितापुत्रौ च सोदरौ ।
भगिन्यौ वा स्वबन्धू वा तदा पूर्वस्य नाशनम् ॥
विधानं तत्र कर्तव्यं जन्मनक्षत्रपूजनम् ।
नक्षत्रदेवता पूज्या त्वधिप्रत्यधिपूर्वकम् ॥

तत्पूर्वोत्तरनक्षत्रदेवते अधिप्रत्यधिदेवते ।

यस्य ऋक्षस्य यद्द्रव्यं दक्षिणा पूजनादिकम् ।
तस्य तच्च विधातव्यमृक्षदैवततुष्टये ॥
गृह्योक्तेन विधानेन हवनं तत्र कारयेत् ।
समिच्चरुतिलैश्चैव पृथगष्टोत्तरं शतम् ॥
भक्त्या हरिहरौ देवौ स्वर्णरूप्यमयौ शुभौ ।

तद्दानमन्त्रः—

विविधस्यास्य विश्वस्य पितरौ विश्वतोमुखौ ।
प्रीयेतां मूर्त्तिदानेन देवौ हरिहरावुभौ ॥
दानं होमविधेः पश्चाद्दानादन्वभिषेचनम् ।
अभिषेचनपूर्वात्र विप्रपूजा स्मृता शिवे! ॥
ततोऽभिगम्य गोविन्दशूलिनोश्च निकेतनम् ।
तूर्याणां च निनादेन जयघोषेण पार्वति! ॥
पूजाविधिं समाप्यैव सर्वोपस्करसंयुतम् ।
प्रार्थयेद्देवदेवेशौ लक्ष्मीशैलसुतेश्वरौ ॥
दण्डवत्प्रणिपातेन पूजनीयौ पुनः पुनः ।
ततः स्वगृहमागत्य ब्राह्मणान्भोजयेत्सुधीः ॥
तोषयेद्दक्षिणादानैर्यथाशक्त्या वरानने ! ।
एवङ्कृते विधानेन विघ्ननाशो भवेद्ध्रुवम् ॥

तुष्टिदं पुष्टिदं नृणां विधानमिदमुत्तमम् ॥

इति श्रीप्रथमशाखीयरामकृष्णविरचिते पारस्करगृह्यसूत्रविवरणे संस्कारगणपतौ।शिवसंहितोक्तमेकनक्षत्रजननशान्तिविधानम् ॥

---

अथ गण्डान्तविचारो लिख्यते ।

नक्षत्रतिथिलग्नानां गण्डान्तं त्रिविधं स्मृतम् ।
गण्डान्तं मृत्युदं जन्मयात्रोद्वाहव्रतादिषु ॥

ज्योतिर्निबन्धे—

सार्पेन्द्रपौष्णभेष्वन्त्यषोडशांशा भसन्धयः ।
तदग्रभेष्वाद्यपादा भानां गण्डान्तसंज्ञकाः ॥

सूर्यसिद्धान्ते—

सार्पेन्द्रपौष्णधिष्ण्यानामन्त्यपादा भसन्धयः ।
तदग्रभेषु पादार्धं गण्डान्तं नाम कीर्तितम् ॥

ज्योतिःसागरे—

अश्विनीमघमूलादौ त्रि३वेद४नव९नाडिकाः ।
रेवतीशाक्रसार्पान्त्यमासशक्रश्विवास्त्यजेत् ॥

रत्नमालायाम्—

पौष्णाश्विन्योः सार्पपित्राख्ययोश्च यच्च ज्येष्ठामूलयोरन्तरालम् ।
तद्गण्डान्तं स्याच्चतुर्नाडिकं हि यात्राजन्मोद्वाहकालेष्वनिष्टम् ॥

अथ तिथिगण्डान्तं मुहूर्तसर्वस्वे—

पूर्णानन्दातिथेः सन्धौ गण्डान्तं घटिकाद्वयम् ॥

अथ लग्नगण्डान्तं ज्योतिर्निबन्धे—

कुलीरसिंहयोः४।५।कीटचापयोः८।९।मीनमेषयोः१२।१।
गण्डान्तमन्तरालं स्याद्घटिकार्द्धं मृतिप्रदम् ॥

ज्योतिःसागरे—

कथयति वराहमिहरो विलोक्य वाक्यानि गण्डविषये च ।
गण्डदण्डप्रमितं पूर्वं पश्चात्तयोर्मध्यात् ॥

फलम्--

तिथ्यर्क्षगण्डे पितृमातृनाशो लग्ने तु सन्धौ तनयस्य नाशः ।
सर्वेषु नो जीवति हन्ति सर्वं जीवेत्पुनः स्याद्धनवान्स जातः ॥

पितृघ्नश्च दिवा जातो रात्रौ जातस्तु मातृहा ।
आत्मनः सन्ध्ययोर्जातो नास्ति गण्डो निरामयः ॥

उत्तरगर्गो गण्डान्तदानमाह--

तिथिगण्डे त्वन्नदानं नक्षत्रे धेनुरुच्यते ।
काञ्चनं लग्नगण्डे तु गण्डदोषो विनश्यति ॥
सर्वेषां गण्डजातानां परित्यागो विधीयते ।
तातेन दर्शनं तावद्यावत्षाण्मासिको भवेत् ॥
तस्य शान्तिं प्रवक्ष्यामि सोममन्त्रेण भक्तिमान् ।

सोममन्त्र"आप्यायस्व"इत्यादिः ।

कांस्यपात्रं प्रकुर्वीत पलैः षोडशभिर्युतम् ॥
अष्टाभिश्च चतुर्भिर्वा द्वाभ्यां वा शोभनं मतम् ।
तत्र पायसशङ्खेन नवनीतेन पूरिते ॥

कांस्यपात्रे पायसं निक्षिप्य तत्र नवनीतपूर्णं शङ्खं स्थापयित्वा च
न्द्रप्रतिमामर्चेदित्याह--

राजतं चन्द्रमभ्यर्च्य सितपुष्पसहस्रकैः ।
दैवज्ञः क्षौमवासास्तु शुक्लमाल्याम्बरार्चितः ॥
सोमोऽहमिति सञ्चिन्त्य पूजां कुर्यात्समाहितः ।
दत्त्वैव दक्षिणामिष्टां गण्डदोषप्रशान्तये ॥
शुक्रं वागीश्वरं चैव ताम्रपात्रे समर्चितम् ।
गण्डदोषोपशान्त्यर्थं दद्याद्वेदविदे शुचिः ॥

इदं शान्तिकं गोमुखप्रसवपूर्वकं कर्तव्यम् ।

पूषाश्विनोर्गुरौ सार्पमघाचित्रेन्दुमूलभे ।
एषु ऋक्षेषु जातस्य कुर्याद्गोजननं तथा ॥

इति गर्गोक्तनक्षत्रगण्डान्तशान्तिः । अथ तिथ्यादिगण्डान्तशान्तिः ।

अभुक्तेतरजातस्य सूतकान्तदिनेऽथ वा ।
शान्तिं शुभेऽह्नि वा कुर्यात्तावत्पुत्रं न लोकयेत् ॥
आद्यभागे पितुर्गण्डं त्रयाणामभिषेचनम् ।
इतरत्र शिशोर्मातुरभिषेकं च कारयेत् ॥
उत्तरे तिलपात्रं स्यात्पुष्ये गोदानमुच्यते ।
आज्यप्रदानं त्वाष्ट्रे च पूर्वाषाढे च काञ्चनम् ॥

त्वाष्ट्रं चित्रानक्षत्रम् ।

उत्तरातिष्यचित्रासु पूर्वापाढोद्भवस्य च ।
कुर्याच्छान्तिं प्रयत्नेन नक्षत्राकारजं बुधः ॥
सुवर्णेन तदर्धेन यथावित्तानुसारतः ।
नक्षत्राधिपते रूपं कृत्वा वस्त्रद्वयान्वितम् ॥
वरुणस्यार्चनं कार्यं स्वस्तिवाचनपूर्वकम् ।
शतौषधानि रत्नानि मृत्त्वक्पल्लवसंयुतम् ॥

वरुणपूजा कलशे कार्या लिङ्गात् ।

पूजान्ते समिदन्नाज्यैर्होमं तिलयवैस्तथा ।
ततः पूर्णाहुतिं हुत्वा वेदाध्यायिकुटुम्बिने ॥
उत्तराप्रथमे पादे तिलपात्रं तथैव च ।
तिष्ये तु गां सवत्सां च सुशीलां च पयस्विनीम् ॥
अजा चित्रासु वै दद्यात्पूर्वाषाढे तु काञ्चनम् ।
यवाश्च व्रीहिमाषाश्च तिलमुद्गान्प्रदापयेत् ॥
यथावित्तानुसारेण कुर्याद्ब्राह्मणभोजनम् ।
पितुरायुष्यवृद्ध्यर्थं शान्तिरत्र विधीयते ॥
एवं यः कुरुते सम्यक्शान्तिकर्म समाहितः ।
न दोषैर्लिप्यते नूनं पद्मपत्रमिवाम्भसा ॥
आयुरारोग्यमैश्वर्यं समाप्नोति दिने दिने ।
धनधान्यसमृद्धिं च पुत्रपौत्रसमृद्धिमान् ॥

इत्युत्तरगार्ग्ये तिष्यादिगण्डान्तशान्तिः ।

अथ दिनक्षयादिसर्वगण्डान्तशान्तिः—

अथातः सम्प्रवक्ष्यामि जन्मकाले विशेषतः।
गण्डान्तानि च नामानि महादोषकराणि च ॥
दिनक्षये व्यतीपाते व्याघाते विष्टिवैधृतौ।
मूले गण्डेऽतिगण्डे च परिघे यमघण्टके ॥
कालगण्डे मृत्युयोगे दग्धयोगे सुदारुणे।
तस्मिन्गण्डदिने प्राप्ते प्रसूतिर्यदि जायते ॥
अतिदोषकरी प्रोक्ता तत्र पापयुते सति।
विचार्य तत्र दैवज्ञं शान्ति कुर्याद्यथाविधि ॥
यजनं देवतानां च ग्रहादींश्चैव पूजयेत्।
दीपं शिवालये भक्त्या घृतेन प्रतिपादयेत् ॥
अभिषेकं शङ्करस्य अश्वत्थस्य प्रदक्षिणाम्।
आयुर्वृद्धिकरं जाप्यं सर्वारिष्टविनाशनम् ॥
गुरुदैवतविप्राणां पूजनं गोत्रवर्धनम्।
पुष्ट्यायुस्तुष्टिवृद्ध्यर्थमभीष्टफलसिद्धये ॥
सर्वारिष्टहरार्थाय ग्रहयज्ञं समाचरेत्।
शिवाय विधिवद्भक्त्या दीपदानं करोति यः ॥
अखण्डं गोघृतेनैव स वै मृत्युं जयेन्नरः।

पुनर्ग्रहपूजनशिवदीपदानादिकथनं गुणफलसम्बन्धार्थम्, ततो न कार्यान्तरमिति द्रष्टव्यम।

विष्णुमूर्त्तिं महापुण्यमश्वत्थं श्रीकरं सदा ॥
प्रदक्षिणां ततो भक्त्या कृत्वा मृत्युञ्जयं जपेत्।
अर्थसम्पत्समृद्ध्यर्थं नित्यकल्याणवृद्धये ॥
अभीष्टफलसिध्यर्थं कुर्याद्ब्राह्मणभोजनम्।
अभिषेकं शिवे! शान्ति कृत्वा भक्त्या नरोत्तमः ॥
अकालमृत्युं निर्जित्य दीर्घायुर्जायते नरः ॥

विधानान्तरमाह—

गाणपत्यं पुरुषसूक्तं सौरं मृत्युञ्जयं शुभम् ।
शान्तिजाप्य रुद्रजाप्यं कृत्वा मृत्युञ्जयी भवेत् ॥
मूले वा सार्पगण्डे वा कुर्यादेतानि यत्नतः ।
आयुर्वृद्धिकरार्थाय गण्डदोषोपशान्तये ॥

इत्युत्तरगार्ग्योक्तदिनक्षयादि गण्डान्तशान्तिः ।

अथ व्यतीपातादिशान्तिः । शौनकीये—

अथातः सम्प्रवक्ष्यामि शौनकः शान्तिमुत्तमाम् ।
वैधृतौ च व्यतीपाते महादोषोऽभिजायते ॥
कुमारजन्मकाले च व्यतीपातश्च वैधृतिः ।
सङ्क्रमश्च रवेस्तत्र जातो दारिद्र्यकारकः ॥
दरिद्राणां महादुःखं व्याधिपीडामहद्भयम् ।
अश्रियं मृत्युमाप्नोति नात्र कार्या विचारणा ॥
स्त्रीणां च शोकदुःखं च सर्वनाशकरो भवेत् ।
शान्तिर्वा पुष्कला कार्या तदा दोषो न कश्चन ॥
गोमुखप्रसवं कुर्याच्छान्तिं कुर्यात्प्रयत्नतः ।
जपाभिषेकदानैश्च होमादपि विशेषतः ॥
नवग्रहमखं कुर्यात्तस्य दोषोपशान्तये ।
प्रथमं गोमुखाज्जन्म ततः शान्तिं समाचरेत् ॥
गृहस्य पूर्वदिग्भागे गोमयेनानुलिप्य च ।
अलङ्कृतस्वदेशे तु व्रीहिराशिं प्रकल्पयेत् ॥
पञ्चद्रोणमितं धान्यं तदर्धं तण्डुलेन च ।
तदर्धं तु तिलैः कुर्यादन्योन्यं परिकल्पयेत् ॥

धान्यं व्रीहिः । प्रथमं व्रीहिपरिधिः, तन्मध्ये तण्डुलपरिधिः, तदन्तस्तिलपरिधिः, इति राशित्रयविवेकः ।

द्रव्यत्रितयराशौ तु अष्टपत्रं लिखेद्बुधः ।
पुण्याहं वाचयित्वा तु आचार्यं वृणुयात्पुरा ॥

आचारवन्तं धर्मज्ञं कुलीनं च कुटुम्बिनम् ।
मन्त्रमन्त्रार्थतत्त्वज्ञं शान्तिकर्मणि कोविदम् ॥
पञ्चाङ्गभूषणं दद्यात्पदवस्त्राङ्गुलीयकम् ।
राशौ प्रतिष्ठितं कुम्भमव्रणं सुमनोहरम् ॥
तीर्थोदकेन सम्पूर्य त्वङ्मृदौषधिपल्लवम् ।
मङ्गल्यं गन्धरत्नं च वस्त्रयुग्मेन वेष्टयेत् ॥
तस्योपरि न्यसेत्पात्रं सूत्रवस्त्रेण वेष्टयेत्
प्रतिमां स्थापयेद्धीमान्साधिप्रत्यधिदेवताम् ॥
चन्द्रादित्याकृती पार्श्वे मध्ये वैधृतिमर्चयेत् ।
एवमेव व्यतीपातशान्तौ सङ्क्रमणस्य तु ॥
भानोरुत्तरतो रुद्रमग्निं दक्षिणतो यजेत् ।
निष्कमात्रेण चार्धेन पादेनापि स्वशक्तितः ॥
प्रतिमाः कारयेद्धीमांस्तत्तल्लक्षणलक्षिताः ।
प्रतिमापूजनार्थाय वस्त्रयुग्मं निवेदयेत् ॥
अधिदैवं भवेत्सूर्यश्चन्द्रः प्रत्यधिदैवतम् ।
तत्तद्व्याहृतिपूर्वेण तत्तन्मन्त्रेण पूजयेत् ॥

अयमत्र विवेकः—वैधृतिर्व्यतीपातश्च प्रधानदेवता, उभयत्रापि सूर्योऽधिदेवता, चन्द्रः प्रत्यधिदेवता। सङ्क्रान्तौ तु भानुः प्रधानदेवता, रुद्रोऽधिदेवता, अग्निः प्रत्यधिदेवतेति ।

त्र्यम्बकमितिमन्त्रेण प्रधानप्रतिमां यजेत् ।
तत्सूर्य इति मन्त्रेण सूर्यपूजां समाचरेत् ।
आप्यायस्वेति मन्त्रेण सोमपूजां समाचरेत् ॥

सङ्क्रान्तिदेवतादिपूजनं तु तत्तल्लिङ्गकैर्मन्त्रैः कार्यम् । व्याहृतिमन्त्रास्तु सर्वैः समुच्चीयन्ते ।

उपचारैः षोडशभिर्यद्वा पञ्चोपचारकैः ।
अर्चितं पुष्पगन्धाद्यैः फलैर्नैवेद्यमर्पयेत् ॥
मृत्युञ्जयेन मन्त्रेण प्रधानप्रतिमां स्पृशन् ।

अष्टोत्तरसहस्रं वा अष्टोत्तरशतं तु वा ॥
अष्टाविंशति वा चाथ प्रजप्याथ स्वशक्तितः ।
सर्वसौरं प्रजप्याथ सोमार्थं सोममन्त्रतः ॥
आ नो भद्रेति सूक्तं च भद्रा अग्नेश्च सूक्तकम् ।
जपेच्च पौरुषं सूक्तं त्रैयम्बकमतः परम् ।
कुम्भं स्पृष्ट्वा चतुर्दिक्षु जपं कुर्युस्त्वथर्त्विजः ॥
कुम्भस्य पश्चिमे देशे स्थण्डिलेऽग्निं प्रकल्पयेत् ॥
स्वगृह्योक्तविधानेन कारयेत्संस्कृतानलम् ।
त्रैयम्बकेन मन्त्रेण समिदाज्यचरुं हुनेत् ॥
अष्टोत्तरसहस्रं वा अष्टोत्तरशतं तु वा ।
अष्टाविंशति वा कुर्यात्स्वस्य शक्त्यनुसारतः ॥
मृत्युञ्जयेन मन्त्रेण तिलहोमं समाचरेत् ।
ततः स्विष्टकृतं हुत्वा अभिषेकन्तु कारयेत् ॥
समुद्रज्येष्ठाः सूक्तेन आपोहिष्ठा तृचेन च ।
अक्षीभ्यामिति सूक्तेन पावमानीभिरेव च ॥
त्रैयम्बकेन तत्सूर्य आप्यायस्वेति मन्त्रतः ।
सुरास्त्वामिति मन्त्रेण अभिषेकं समाचरेत् ॥
अभिषेकाप्लुतं वस्त्रमाचार्याय प्रदापयेत् ।
श्वेतवस्त्रधरो भूत्वा भूषणाद्यैरलङ्कृतः ॥
यजमानः स्त्रिया युक्त आज्यावेक्षणमाचरेत् ।
आचार्यं पूजयेद्भक्त्या वस्त्रहेमाङ्गुलीयकैः ॥
गोदानं वस्त्रदानं च स्वर्णदानं विशेषतः ।
तद्दोषशमनार्थाय आचार्याय प्रदापयेत् ॥
प्रच्छादनपटं दद्यात्ततः शान्तिर्भविष्यति ।
जापकेभ्यो ब्राह्मणेभ्यो दक्षिणाभिश्च तोषयेत् ॥
दीनान्धकृपणेभ्यश्च प्रदद्याद्भूरिदक्षिणाम् ।
ब्राह्मणाञ्छतसङ्ख्याकान्मिष्टान्नैर्भोजयेत्ततः ॥

बन्धुभिः सह भुञ्जीत यथाविभवसारतः।
एवं यः कुरुते मर्त्यो नैव दुःखमवाप्नुयात्॥
आयुरारोग्यमैश्वर्यं मातापित्रोः शिशोरपि।
सर्वदुःखनिवृत्त्यर्थं पुत्रपौत्रप्रवर्द्धनम्॥
सर्वान्कामानवाप्नोति सुखी भूत्वा चिरं वसेत्॥

इति शौनकोक्तवैधृतिव्यतीपातसङ्क्रान्तिजननशान्तिः।

अथ विषघटिकाजननशान्तिः। वृद्धगार्ग्यः—

विषनाडीषु सञ्जाते मातापित्रोरथात्मनः।
नाशकृद्विषशस्त्रास्त्रैः क्रूरे लग्ने समेऽपि वा॥
तद्दोषपरिहाराय शान्तिकर्म समाचरेत्।
रुद्रो यमोऽग्निर्मृत्युश्च देवताः परिकीर्तिताः॥
सुवर्णेन यथाशक्त्या तत्तल्लक्षणसंयुताः।
प्रतिमाः कारयित्वा तु आढकव्रीहिभिः स्थले॥
स्थण्डिले परिकल्प्याथ कुसुमौषधिसंयुतम्।
जलैः सम्पूर्य संस्थाप्य मृदादि प्रक्षिपेत्ततः॥
वस्त्रद्वयेन संवेष्ट्य पञ्चरत्नानि निक्षिपेत्।
कुम्भस्योपरि संस्थाप्य चतस्रः प्रतिमास्तथा॥
तत्तन्मन्त्रैश्च सम्पूज्य गन्धपुष्पोपहारकैः।
कद्रुद्रायेतिमन्त्रेण यमायत्वेति मन्त्रतः॥
अग्निर्मूर्धेतिमन्त्रेण परम्मृत्यो इति त्वथ।
एतैश्चतुर्भिर्मन्त्रैश्च क्रमादर्चेद्‌धुनेत्तथा॥
समिच्चरुघृतद्रव्यैः प्रत्येकं च यथाक्रमम्।
ऋत्विग्भिश्च सहाचार्यो हुनेदष्टसहस्रकम्॥
अष्टोत्तरशतं वाथ अष्टाविंशतिमेव वा।
ततस्तिलैर्हुनेद्देवांस्तत्तन्मन्त्रैश्च कल्पवित्॥

तिलहोमोऽपि रुद्रादीनामेव।

ततोऽभिषेचयेद्दानमन्त्रैः पौराणिकैः क्रमात्।

दानं प्रतिमानां कुर्यादिति शेषः ।

प्रीयतां भगवानीशः पिनाकी सर्वतोमुखः ॥
तव मूर्तिप्रदानेन समस्ताभीष्टदो भव ।
ईषत्पीनो यमः कालो दण्डहस्तः प्रसन्नधीः ॥
रक्तो दिक्पालकः क्लृप्तो महिषस्थः शिवं कुरु ।
पिङ्गभ्रूश्मश्रुकेशान्तः पिङ्गाक्षचरणोऽरुणः ॥
छागस्थः साक्षसूत्रश्च सप्तार्चिः शक्तिलोचनः ।
तव मूर्त्तिप्रदानेन मम पापं विनाशय ॥
दंष्ट्राकरालवदनो नीलाञ्जनसमाकृतिः ।
रक्तः खड्गगदापाणिर्मृत्युर्मां पातु सर्वदा ॥
दानमेवंविधैर्मन्त्रैर्यथाविधि समाचरेत् ।
गोभूहिरण्यमन्त्रैश्च आचार्यं पूजयेत्सुधीः ॥
एवं कुर्वन्विधानेन सर्वदोषं प्रशामयेत् ॥

इति वृद्धगार्ग्योक्तविषघटिकाजननशान्तिः ।

अथ कृष्णचतुर्दशीशान्तिः ।

मन्दिरस्थं सुखासीनं गर्गं मुनिवरं शुभम् ।
नमस्कृत्याथ पप्रच्छ शौनको मुनिपुङ्गवः ॥

शौनक उवाच—

शान्तिकर्माणि सर्वाणि त्वत्तो जातानि वै मुने! ।
अधुना श्रोतुमिच्छामि कृष्णपक्षचतुर्दशीम् ॥
दिवा वा यदि वा रात्रौ प्रसूतेः किं फलं वद ।

गर्ग उवाच—

कृष्णपक्षे चतुर्दश्यां प्रसूतेः षड्विधं फलम् ॥
चतुर्दश्यां तु षड्भागं कुर्यादादौ शुभं भवेत् ।
द्वितीये पितरं हन्ति तृतीये मातरं तथा ॥
चतुर्थे मातुलं हन्ति पञ्चमे वंशनाशनम् ।
षष्ठे तु धनहानिः स्यादात्मनो वंशनाशनम् ॥

तस्मात्सर्वप्रयत्नेन शान्तिं कुर्याद्विधानतः ।
प्रतिमां कारयेच्छम्भोः कर्षमात्रसुवर्णतः ॥
तदर्धार्धेन वा कुर्यात्सर्वलक्षणसंयुताम् ।
वृषभे च समासीनं वरदाभयपाणिकम् ।
शुद्धस्फटिकसंकाशं श्वेतमाल्याम्बरान्वितम् ।
त्र्यम्बकेन मन्त्रेण पूजां कुर्याद्विधानतः ॥

मूलशान्तिवत् कलशस्थापनादि कृत्वा तत्र शम्भुपूजां विधाय तत्र-

आवाह्य वारुणैर्मन्त्रैरनेन च विधानतः ।
इमम्मे वरुणेत्यनया तत्त्वा यामीत्यृचा तथा ।
त्वन्नो अग्न इत्यनया सत्वन्न इतिमन्त्रतः ।
आग्नेयं कुम्भमारभ्य पूजां कुर्याद्यथाक्रमात् ॥
आनो भद्राश्च सूक्तेन भद्रा अग्नेश्च सूक्तकम् ।
जपेत्पुरुषसूक्तं च कद्रुद्रन्तु क्रमाज्जपेत् ॥
ईश्वरस्याभिषेकं च ग्रहपूजां च कारयेत् ।
समिदाज्यचरूंश्चैव तिलमाषांश्च सर्षपान् ॥
अश्वत्थप्लक्षपालाशसमिद्भिः खादिरैः शुभैः ।
अष्टोत्तरसहस्रं वा अष्टोत्तरशतन्तु वा ॥
अष्टाविंशतिभिर्वापि होमं कुर्यात्पृथक्पृथक् ।
त्र्यम्बकेन मन्त्रेण तिलान्व्याहृतिभिः क्रमात् ॥
ग्रहा एवं च होतव्याश्चास्मदुक्तविधानतः ।
एवं क्रमेण हुत्वाऽथ होमशेषं समापयेत् ॥
सर्वालङ्कारयुक्तानां त्रयाणामभिषेचनम् ।

त्रयाणां मातृपितृबालानाम् ।

चतुर्भिः कलशैरद्भिर्बृहत्कुम्भसमन्वितम् ॥

चतुःकलशोदकं बृहत्कुम्भे निषिच्याचार्योऽभिषेकं कुर्यादित्यर्थः ।

धौताम्बराणि धृत्वाऽथ कुर्यादाज्यावलोकनम्
पूर्णाहुतिं च जुहुयाद्यजमानः समाहितः ॥

तत्सर्वं परया भक्त्या ईश्वराय निवेदयेत् ।
अन्येषामृत्विजां चैव कुर्याद्ब्राह्मणभोजनम् ।
तस्मादनेन विधिना वित्तशाठ्यविवर्जितः ॥
य एवं कुरुते शान्तिं सर्वारिष्टैः प्रमुच्यते ॥
सर्वान्कामानवाप्नोति स्थिरजीवी सुखी भवेत् ॥
( इत्युत्तरगार्ग्योक्तकृष्णचतुर्दशीशान्तिः । )

अथ सिनीवालीकुहूशान्तिविधानम् । अमायुक्ता चतुर्दशी सिनीवालीत्युच्यते । "दृष्टचन्द्रा सिनीवाली"त्यभिधानात् । नष्टचन्द्रा अमावस्या कुहूरित्युच्यते । गर्गः—

सिनीवाल्यां प्रसूता स्याद्यस्य भार्यापशुस्तथा ।
गजाश्वमहिषी चैव शक्रस्यापि श्रियं हरेत् ॥
ये सन्ति सकलाश्चान्ये स्वप्रसादोपजीविनः ।
वर्जयेत्तानशेषांस्तु पशुपक्षिमृगादिकान् ॥
कुहूप्रसूतिरत्यर्थं सर्वदोषकरी भवेत् ।
यस्य प्रसूतिरेतेषां तस्यायुर्धननाशनम् ॥
सर्वगण्डसमस्तत्र दोषस्तु प्रबलो भवेत् ।
शान्तिं विना विशेषेण परित्यागो विधीयते ॥
परित्यागाच्च शान्तिं कुर्याद्धोमं विचक्षणः ।
तत्फलं तत्क्षणार्धेन पुनरेवानुपालनम् ॥
तद्योगं नाशयेत्किञ्चित्स्वयं वा नाशमश्नुते ।
कल्पोक्तशान्तिः कर्तव्या शीघ्रं दोषापनुत्तये ॥
रुद्रः शक्रश्च पितरः पूज्याः स्युर्देवताः क्रमात् ।
कर्षमात्रसुवर्णेन तदर्धार्धेन वा पुनः ॥
अथ वा शक्तितः कुर्याद्वित्तशाठ्यविवर्जितः ।
प्रतिमां कारयेच्छम्भोश्चतुर्भुजसमन्विताम् ॥
त्रिशूलखड्गवरदाभयहस्तां यथाक्रमात् ।
श्वेतवर्णां श्वेतपुष्पां श्वेताम्बरवृषस्थिताम् ॥

त्रैयम्बकेन मन्त्रेण पूजां कुर्याद्यथाविधि ।
इन्द्रश्चतुर्भुजो वज्राङ्कुशबाणः समायकः ॥
रक्तवर्णो गजारूढो यत इन्द्रेति मन्त्रतः ।
पितरः कृष्णवर्णाश्च चतुर्हस्ता विमानगाः ॥
अक्षसूत्रकमण्डल्वभयस्यैव तु धारिणः ।
ये सत्या इति मन्त्रेण पूजां कुर्यादनन्तरम् ॥
आग्नेय्यां दिशमारभ्य कुम्भान्कोणेषु विन्यसेत् ।
तन्मध्ये स्थापयेत्कुम्भं शतच्छिद्रसमन्वितम् ॥
तेष्वेव पञ्चगव्यादि तत्तन्मन्त्रैश्च निक्षिपेत् ।
कल्पोक्तशान्तिः कर्त्तव्या कुर्याच्छीघ्रं स्वशक्तितः ॥
गोदानं वस्त्रदानं च सुवर्णं च वरं शुभम् ।
दश दानानि चोक्तानि क्षीरमाज्यं गुडांस्तथा ॥
आज्यावेक्षणमेतानि तत्तन्मन्त्रैश्च कारयेत ॥

अन्यत्र सर्वशान्तिषु तथा क्रमस्योपलब्धेः । इदं दानं होमाभिषेकानन्तरं कार्यम ।

समिदाज्यचरोर्होमं तिलमाषैश्च सर्षपैः ॥
अश्वत्थप्लक्षपालाशसमिद्भिः खादिरैः शुभैः ।
अष्टोत्तरशतं मुख्यं प्रत्येकं जुहुयाद्द्विजः ॥
त्रैयम्बकेन मन्त्रेण तिलाज्याहुतिभिः पुनः ।

मुख्यपदोपादानं शक्तौ सङ्ख्योत्तरस्य ज्ञापकम् । तेनाष्टाविंशतिरपि संख्या भवति ।

चतुर्भिः कलशैर्युक्तं बृहत्कुम्भसमन्वितम् ॥
शान्तिवत्कलशं कार्यमभिषेकं च कारयेत् ।
पितृमातृशिशूनां च अभिषिञ्चेत्तु वारुणैः ॥
शङ्करस्याभिषेकश्च कुर्याद्ब्राह्मणभोजनम् ।
अन्येषां चैव सर्वेषां ब्राह्मणानां च तर्पणम् ॥

कार्यं शक्त्यनुसारेण स्वस्तिवाचनपूर्वकम् ॥

( इत्युत्तरगार्ग्योक्तसिनीवालीकुहूशान्तिविधानम् ॥ )

अथ दर्शजननशान्तिविधानम् । नारदः—

अथातो दर्शजातानां मातापित्रोर्दरिद्रता ।
तद्दोषपरिहारार्थं शान्तिं वक्ष्यामि नारदः ।
पुण्याहं वाचयित्वादौ क्रतुसङ्कल्पपूर्वकम् ॥
कुण्डं वा मण्डलं कुर्यात्तद्देशे स्थापयेद्घटम् ।
तत्कुम्भे निक्षिपेद्द्रव्यं दधिक्षीरघृतादिकम् ।
न्यग्रोधोदुम्बराश्वत्थाः सचूता निम्बकास्तथा ॥
एतेषां वृक्षवर्याणां त्वगादीन्पल्लवांस्तथा ।
पञ्चरत्नानि निक्षिप्य वस्त्रयुग्मेन वेष्टयेत् ॥
सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः ।
आयान्तु यजमानस्य दुरितक्षयकारकाः ॥
आपोहिष्ठा तृचेनाथ कया नश्चित्र इत्यृचा ।
अभिमन्त्र्योदकं पश्चादग्नेः पूर्वप्रदेशके ॥
हारिद्रं रक्तकं चैव कृष्णं श्वेतं च नीलकम् ।
एतेषां तण्डुलैश्चैव सर्वतोभद्रमुद्धरेत् ॥
दर्शस्य देवतायाश्च सोमसूर्यस्वरूपिणीम् ।
प्रतिमां स्वर्णजनितां राजतीं ताम्रजां तथा ॥

अयं धातुक्रमो दर्शे सोमसूर्यक्रमापेक्षया द्रष्टव्यः ।

सर्वतोभद्रमध्ये च स्थापयेद्दर्शदेवताम् ।
ग्रहवर्णे वस्त्रयुग्मं तद्वर्णगन्धपुष्पकम् ॥

श्वेतरक्तवर्णमित्यर्थः ।

आप्यायस्वेति मन्त्रेण सविता पश्चात्तादेव च ।
उपचारैः समाराध्य ततो होमं समाचरेत् ॥

सोमसूर्यपूजापि सर्वतोभद्र एव सान्निध्यात् ।

ततो वह्निं प्रतिष्ठाप्य क्रतुसङ्कल्प ईदृशः ।

आयुरारोग्यसिद्ध्यर्थं सर्वारिष्टप्रशान्तये ॥
पुत्रस्य दर्शजननदोषनिर्हरणाय च ।
मातापित्रोः कुमारस्य सर्वारिष्टप्रशान्तये ॥
तेषामायुःश्रिये चैव शान्तिहोमं करोम्यहम् ।

अयं सङ्कल्पपूर्वकमपि कार्यः । तत्रैतावान्विशेषो "दर्शजननशान्तिं करिष्ये" इति ।

समिधश्च चरुं द्रव्य क्रमेण जुहुयाद्गृही ॥
हुनेत्सवितृमन्त्रेण सोमो धेनुं च मन्त्रतः ।

सवितृमन्त्र "आकृष्णेने" त्यादिः ।

एतैर्मन्त्रैस्तु प्रत्येकं हुनेदष्टोत्तरं शतम् ।
दर्शस्य देवताहोममष्टाविंशतिसंख्यया ॥

दर्शदेवतामन्त्रस्तल्लिङ्गको ग्राह्यः । यद्वा दर्शदेवतापूजाहोमादिमूलमन्त्रेण कार्यम्, वेदमन्त्रेण न कार्यम्, वेदमन्त्रानुपदेशात् ।

होममेवन्तु कृत्वाथ विध्याचाराभिषेचनम् ॥

अभिषेकस्तु पूर्वस्थापितकुम्भेन कार्यः । श्रीसूक्तमायुष्यसूक्तं, "समुद्रज्येष्ठा" बह्वृचम् ।

एतैर्मन्त्रैश्चाभिषेकं मातापित्रोः शिशोस्तथा ॥
ततः स्विष्टकृदादि स्याद्धोमशेषं समापयेत् ।
हिरण्यं रजतं चैव कृष्णा धेनुः सदक्षिणा ॥
अन्येभ्योऽपि यथाशक्ति दातव्या दक्षिणा तथा ।
ब्राह्मणान्भोजयेत्तत्र कारयेत्स्वस्तिवाचनम् ॥
( इति नारदोक्तदर्शजननशान्तिः । )

अथ सूर्यग्रहणसमयजननशान्तिः ।

ग्रहणे चन्द्रसूर्यस्य प्रसूतिर्यदि जायते ।
व्याधिपीडा तदा स्त्रीणामादितः सम्प्रजायते ॥
ऋतुदर्शं प्रवक्ष्यामि नराणां हितकाम्यया ।
यस्मिनृक्षे विशेषेण ग्रहणं सम्प्रजायते ॥

तद्दक्षाधिपते रूपं सुवर्णेन प्रकल्पयेत् ।
यथाशक्त्यनुसारेण वित्तशाठ्यं न कारयेत् ॥
सूर्यग्रहे सूर्यरूपं सुवर्णेन स्वशक्तितः ।
चान्द्रं चन्द्रग्रहे धीमान्रजतेन विशेषतः ॥
राहुरूपं प्रकुर्वीत नागेनैव विचक्षणः ।

नागेन सीसकेन ।

शुचौ देशे प्रयत्नेन गोमयेन प्रलेपयेत् ॥
तस्योपरि न्यसेद्धीमान्नववस्त्रं सुशोभनम् ।
त्रयाणां चैव रूपाणां स्थापनं तत्र कारयेत् ॥
रक्ताक्षतं रक्तगन्धं रक्तपुष्पाम्बराणि च ।
सूर्यग्रहे प्रदातव्यं सूर्यप्रीतिकरं च यत् ॥
श्वेतवस्त्रं श्वेतमाल्यं श्वेतगन्धाक्षतादि च ।
चन्द्रग्रहे प्रदातव्यं चन्द्रप्रीतिकरं च यत् ॥
राहवे चैव दातव्यं कृष्णपुष्पाम्बराणि च ।
दद्यान्नक्षत्रनाथाय श्वेतगन्धानुलेपनम् ॥
सूर्यं सम्पूजयेद्धीमानाकृष्णेनेति मन्त्रतः ।
चन्द्रग्रहे च पालाशैः समिद्भिर्जुहुयान्नरः ॥
दूर्वाभिर्जुहुयाद्धीमान्राहोः सम्प्रीणनाय च ।
समिद्भिर्ब्रह्मवृक्षोत्थैर्मेषाय जुहुयाद्बुधः ॥

मेषाय नक्षत्राधिपतये ।

आज्येन चरुणा चैव तिलैश्च जुहुयात्ततः ।
पञ्चगव्यैः पञ्चरत्नैः पञ्चत्वक्पञ्चपल्लवैः ॥
जलैरोषधिकल्कैश्च सहितैः कलशोदकैः ।

ओषधिकल्कैः सर्वौषधीकल्कैः ।

अभिषेकं प्रकुर्वीत यजमानेन यत्नतः ।
मन्त्रैर्वारुणदैवत्यैरापोहिष्ठादिभिस्त्रिभिः ॥
इमम्मे व्वरुण तत्वा यामीति मन्त्रकैः ।

अभिषेके निवृत्ते तु यजमानः समाहितः ।
अनेन विधिना शान्तिं कृत्वा सम्यग्विशेषतः ॥
अकालमृत्युशोकं च व्याधिं पीडां न वाऽऽप्नुयात् ।
सौख्यं सौमनसं नित्यं सौभाग्यं लभते नरः ॥
इत्थं ग्रहणजातानां सर्वारिष्टविनाशनम् ।
कथितं भार्गवेणेदं शौनकाय महात्मने ॥
( इति भार्गवोक्ता ग्रहणजननशान्तिः । )

अथ यमलजननशान्तिः । तत्रादौ तयोः संस्कारार्थं ज्येष्ठकनिष्ठभावमाह देवलः--

यस्य जातस्य यमयोः पश्यन्ति प्रथमं मुखम् ।
सन्ततौ पितॄणां चैव तस्मिञ्ज्यैष्ठ्यं प्रतिष्ठितम् ॥

भागवते तु--

द्वौ तदा भवतो गर्भौ सूर्ति वेशविपर्ययात् ॥

इति पश्चादुत्पन्नस्य ज्येष्ठत्वमुक्तम् । तत्र देशाचारतो व्यवस्था । तत्राश्वलायनकारिका—

अथ यस्य वधूर्गौर्वा जनयेच्चेद्यमौ ततः ।
स मरुद्भ्यश्चरुं कुर्यात्पूर्णाहुतिमथापि वा ॥ इति ।

अत्र चाश्वलायनब्राह्मणं भवति—"तदाहुर्य आहिताग्निर्यस्य भार्या गौर्वा यमौ जनयेत्का तत्र प्रायश्चित्तिरिति सोऽग्नये मरुत्वते त्रयोदशकपालं पुरोडाशं निर्वपेत्तस्य याज्यानुवाक्ये मरुतो यस्य हि क्षये राहवेदचरमा अहं वेत्याहुतिं वाहवनीये जुहुयादग्नये मरुत्वते स्वाहेति सा तत्र प्रायश्चित्तिरिति"। मारुतचर्वितिकर्तव्यता दर्शपूर्णमासस्थालीपाकवद्द्रष्टव्या ।

अथ कात्यायनगृह्यपरिशिष्टोक्तयमलजननशान्तिः। "अथातो यमलजनने प्रायश्चित्तं व्याख्यास्यामो यस्य भार्या गौर्दासीमहिषी वडवा वा विकृतं प्रसवेत्प्रायश्चित्ती भवेत्पूर्णे दशाहे चतुर्णां क्षीरवृक्षाणां काषायमुपसंहरेत्प्लक्षवटोदुम्बराश्वत्थशमीदेवदारुगौरसर्ष-

पास्तेषामयोमिश्रꣳहिरण्यं दूर्वाङ्कुराम्रपल्लवैरष्टौ कलशान्प्रपूर्य सर्वौषधीनां दम्पती स्नापयित्वाऽऽपो हि ष्ठेति तिसृभिः कया नश्चित्र इति द्वाभ्यां पञ्चैन्द्रेण पञ्चवारुणेनेदमापः प्रवहतेत्यपाद्यमिति स्नापयित्वाऽलङ्कृत्य तौ दर्भेषूपवेश्य मारुतꣳस्थालीपाकꣳश्रपयित्वाऽऽज्यभागाविष्ट्वाऽऽज्याहुतीर्जुहोति पूर्वोक्तैः स्नपनमन्त्रैः स्थालीपाकस्य जुहोत्यग्नये स्वाहान्तकाय स्वाहा मृत्यवे स्वाहा सोमाय स्वाहा पवमानाय स्वाहा पावकाय स्वाहा मरुताय स्वाहा मारुताय स्वाहा मरुद्भ्यः स्वाहा यमाग्न स्वाहान्तकाय स्वाहा मृत्यवे स्वाहा ब्रह्मणे स्वाहाग्नये स्विष्टकृते स्वाहेत्येतदेव गृहोत्पात उल्कः कपोतो गृध्रः श्येनो वा गृहं प्रविशेत्स्तम्भः प्ररोहेद्वल्मीकं मधुजालं वा भवेदुदकुम्भप्रज्वलनासनशयनयानभङ्गेषु गृहगोधिकाकृकलासशरीरसर्पणे छत्रध्वजविनाशे सार्पदेवते नैर्ऋते गण्डयोगे देवसर्पे कूपादूर्जने पर्वतपातनेष्वन्येष्वप्युत्पातेष्वेतदेव प्रायश्चित्तं गृह्योक्तेन विधिना कृत्वाऽऽचार्याय वरं दत्वा ब्राह्मणान्भोजयित्वा स्वस्ति वाच्याशिषः प्रतिगृह्य शान्तिर्भवति शान्तिर्भवति" ।

इति हेमाद्रौ शान्तिकाण्डे कात्यायनपरिशिष्टोक्तयमलजननशान्तिः।

अथ सदन्तोपरिदन्तजननशान्तिः । तत्र पद्मपुराणे विष्णुधर्मोत्तरखण्डे परशुरामं प्रति आह पुष्करः—

दन्तजन्मनि बालानां लक्षणं तन्निबोध मे ।
उपरि प्रथमं यस्य जायन्ते तच्छिशोर्द्विजाः ॥

द्विजा दन्ता इत्यर्थः ।

दन्तैर्वा सह यस्य स्याज्जन्म भार्गवसत्तम ! ।
मातरं पितरं चाथ खादेदात्मानमेव वा ॥
तत्र शान्तिं प्रवक्ष्यामि तन्मे निगदतः शृणु ।
गजपृष्ठगतं बालं तैस्तथा स्नापयेद्द्विजः ॥

तैरिति वक्ष्यमाणैः सर्वौषधादिभिः सम्बध्यते ।

तदभावे तु धर्मज्ञः काञ्चने तु वरासने ।

सर्वौषधैः सर्वगन्धैर्बीजैः पुष्पैः फलैस्तथा ॥
पञ्चगव्येन रत्नैश्च मृत्तिकाभिश्च भार्गव ! ।
स्थालीपाकेन धातारं पूजयेत्तदनन्तरम् ॥
सप्ताहं चात्र कर्तव्यं तथा ब्राह्मणभोजनम् ।

स्थालीपाकेन धातृपूजनं नैवेद्यहोमात्मकम् ।

अष्टमेऽहनि विप्राणां तथा देया च दक्षिणा ॥
काञ्चनं रजतं गाश्च भुवं चासनमेव च ।
दन्तजन्मनि सामान्ये शृणु स्नानमतः परम् ॥

सामान्ये सदन्तोपरिदन्तजननव्यतिरिक्ते स्वाभाविकदन्तजनने इत्यर्थः ।

भद्रासने निवेश्यैनं मूर्ध्नि मूलफलैस्तथा ।
सर्वौषधैः सर्वबीजैः सर्वगन्धैस्तथैव च ॥
स्नापयेत्पूजयेदत्र वह्निं सोमं समीरणम् ।

समीरणं वायुम् ।

पर्वताश्च तथाख्यातान्देवदेवं च केशवम् ॥
एतेषामेव जुहुयाद्घृतमग्नौ यथाविधि ।

एतेषां वन्ह्यादिपञ्चकानाम् । होमसंख्याऽष्टोत्तरशतादिः ।

ब्राह्मणानां तु दातव्या यथाशक्त्या च दक्षिणा ॥
ततस्त्वलङ्कृतं बालमासने तूपवेशयेत् ।
आसीनं छत्रमूर्द्धानं बीजैः सुस्नापयेत्ततः ॥
स्वाति वै (?) बालकाना च तैश्च कार्यं च पूजनम् ।
पूज्याश्च विविधा नार्यो ब्राह्मणाः सुहृदस्तथा ॥
( इति पद्मपुराणोक्तं सदन्तोपरिदन्तस्वभाविकदन्त-
जननशान्तिविधानम् । )

अथोर्द्ध्वदन्तजननमात्रशान्तिः । ब्रह्मयामले—

प्रथमं दन्तनिर्मोकमूर्द्ध्वं बालस्य चेद्भवेत् ।
क्लेशाय मातुलस्येह स च प्रोक्तो मनीषिभिः ॥
विघ्नभङ्गं प्रवक्ष्यामि विधानं विधिपूर्वकम् ।

सौवर्णं राजतं वापि ताम्रकांस्यमयन्तु वा ॥
दध्योदनेन सम्पूर्णं पात्रं दद्याच्छिशोः करे ।
समन्त्रं भाजनं दत्वा तं पश्येन्मातुलः शुभम् ॥
सालङ्कारं सवस्त्रं च शिशुमालिङ्ग्य सादरम् ।

मन्त्रस्तु—

रक्ष मां भागिनेय ! त्वं रक्ष मे सकलं कुलम् ॥
गृहीत्वा भाजनं सान्नं प्रसन्नो भव मे सदा ।
निर्विघ्नं कुरु कल्याणं मां निर्विघ्नां स्वमातरम् ॥
मय्यात्मानमधिष्ठाप्य चिरञ्जीव मया सह ।
ततोऽभिनन्दयेद्विद्वान्भगिनीं भगिनीपतिम् ॥
ज्येष्ठाञ्श्रेष्ठान्गुरून्विप्रानपरानपि पूजयेत् ।
होमं कृत्वा तिलाज्येन ब्राह्मणानपि भोजयेत् ॥

होमसंख्याष्टोत्तरशतादिः ।

एवङ्कृते विधाने तु विघ्नः कोऽपि न जायते ।
तस्मात्प्रयत्नतो विद्वान्विधानं सम्यगाचरेत् ॥

( इति ब्रह्मयामलोक्तमूर्द्धदन्तजननशान्तिकम् । )

अथ वैकृतप्रसवशान्तिः । प्रयोगपारिजाते गार्ग्यः—

अकालप्रसवा नार्यः कालातीतप्रजास्तथा ।
विकृतप्रसवाश्चैव युग्मप्रसवनास्तथा ॥
अमानुषा अखण्डाश्च अज्ञातव्यञ्जनास्तथा ।

अखण्डाः पिण्डीभूताः ।

हीनाङ्गा अधिकाङ्गाश्च जायन्ते यदि वा स्त्रियः ॥
पशवः पक्षिणश्चैव तथैव च सरीसृपाः ।
विनाशं तस्य देशस्य कुलस्य च विनिर्दिशेत् ॥
निर्वासयेत्तान्नृपतिश्च राष्ट्रात्स्त्रियश्च पूज्याश्च ततो द्विजेन्द्राः ।
चिकित्सनैर्ब्राह्मणतर्पणैश्च ततोऽस्य शान्तिं समुपैति पापम् ॥

( इति गार्ग्योक्ताऽकालप्रसवादिशान्तिः । )

अथ विधानमालोक्तविकृतजननशान्तिः।

विकृताङ्गानि जायन्ते त्वपत्यानि नृपोत्तम!।
यानि यानि महाबाहो! तच्छृणुष्व विधानतः॥
हीनाङ्गान्यधिकाङ्गानि सदन्तानि विशेषतः।
उत्पन्नान्येव पश्यन्ति प्रवदन्ति हसन्ति च॥
सकूर्चानि च जायन्ते पित्रोर्मृत्युं दिशन्ति च।
सर्पव्याघ्रवृकादीनां रूपैर्नानाविधैर्नृप!॥
जायन्ते प्राणिनां गर्भा महाभयविधायकाः।
उत्पद्यन्ते विलीयन्ते कालेनैकेन देहिनः॥
तज्जन्यभयनाशाय विधानं कथ्यते मया।
यस्या उदरसम्भूता दृश्यते विकृता प्रजा॥
दशाहादूर्ध्वमुद्दिष्टा स्नापनीया शुभैर्जलैः।
जनयित्री च राजेन्द्र! जनकश्च विशेषतः॥
सकुल्या अपि मानुष्याः शुक्लमाल्यानुलेपनाः।
शुक्लाम्बरधराश्चापि श्लक्ष्णवाचः प्रयत्नतः॥
कृताह्निकस्तु कर्त्ता च विदधीत विधानकम्।
सदनस्योत्तरे भागे स्थण्डिलं तु प्रकल्पयेत्॥
वाचयित्वा द्विजान्स्वस्ति कृत्वा याम्यीं हिरण्मयीम्।
नवेन वस्त्रयुग्मेन वेष्टयित्वा विधानतः॥
चतुर्भुजा पिङ्गकेशा पिङ्गश्मश्रुविलोचना।
कर्णिकारभवैः पुष्पैः पूजिता सुमनोहरा॥
यमस्य पूजा कर्तव्या सुवर्णस्य विशेषतः।
वामहस्ते गदा पूज्या दक्षिणे कालदण्डकः॥
ऊर्द्ध्वं वामे हलः पूज्यस्तथा खड्गश्च दक्षिणे।
यम! प्रेतसख! काल! श्राद्धदेव! महामते!॥
कालदण्डधर! श्रीमन्! वैवस्वत! नमोऽस्तु ते।

अयं पूजामन्त्रः।

अथातोऽग्निं प्रतिष्ठाप्य हवनं कारयेत्ततः ॥
तिलाज्यतण्डुलास्तत्र प्रधानद्रव्यमीरितम् ।
कृणुष्व पाजमन्त्रेण जुहुयाच्च सहस्रकम् ॥
राक्षोघ्नांश्च जपेन्मन्त्रांश्छन्न इत्यादिशान्तये ।
ततो वै स्विष्टकृद्देया प्रायश्चित्तं तु सर्पिषा ॥
ततो दीपबलीन्दत्वा धर्मराजस्य तुष्टये ।
पूर्णाहुतिं ततो दत्वा ततो दानं समाचरेत् ॥
नीलाम्बरयुतं चण्डं महिषं यमवाहनम् ।
आचार्याय ततो दद्यात्सखड्गं च सदक्षिणम् ॥
पुष्पमालावृताङ्गं च स्वर्णशृङ्गमनोरमम् ।
ताम्रपृष्ठं रौप्यखुरं रत्नपुच्छं समाचरेत् ॥
दक्षिणार्थे सुवर्णं च दद्याद्धर्मस्य तुष्टये ।
सम्पूज्य विधिवद्विद्वान्वस्त्रालङ्कारभूषणैः ॥

दानमन्त्रः—

यमवाह ! नमस्तुभ्यमकालमरणापह ! ।
लुलाय ! तव दानेन प्रीयतां मे सदा यमः ॥
एवं दत्वा तु महिषं सम्पूज्या ऋत्विजस्ततः ।
ततोऽभिषेको विकृतेर्मातापित्रोः सगोत्रयोः ॥

अथाचार्याय प्रतिमादानम् ।

यमोऽसि पुण्यरूपोऽसि पुण्यमूर्ते ! निरामय ! ।
दानेन तव देवेश ! विघ्ना नश्यन्तु मे सदा ॥
ब्राह्मणास्तर्पणीयाः स्युरेवं शान्तिर्भवेदिह ॥
( इति पद्मपुराणोक्तं विकृतजननशान्तिविधानम् ॥ )

अथ त्रिकशान्तिः । शान्तिसर्वस्वे गर्गसंहितायाम्—

सुतत्रये सुता चेत्स्यात्तत्त्रये वा सुतो यदि ।
मातापित्रोः कुलस्यापि तदारिष्टं महद्भवेत् ॥

धनहानिर्ज्येष्ठनाशो दुःखं वा सुमहद्भवेत् ।
तत्र शान्तिं प्रकुर्वीत वित्तशाठ्यविवर्जितः ॥
जातस्यैकादशाहे वा द्वादशाहे शुभे दिने ।
आचार्यमृत्विजो वृत्वा ग्रहयज्ञपुरःसरम् ॥
सह वा ग्रहयज्ञः स्यात्स्वस्य वित्तानुसारतः ।
ब्रह्मविष्णुमहेशेन्द्रप्रतिमाः स्वर्णतः कृताः ॥
पूजयेद्धान्यराशिस्थकलशोपरि शक्तितः ।
पञ्चमे कलशे रुद्रं पूजयेद्रुद्रसंख्यया ॥

पञ्चमशब्दनिर्देशादन्येऽपि ब्रह्मविष्णुमहेशेन्द्रप्रतिष्ठाकलशाश्चत्वारो द्रष्टव्याः ।

रुद्रसूक्तानि चत्वारि शान्तिसूक्तानि सर्वतः ।

रुद्रसूक्तानि मूलशान्तिके स्पष्टीकृतानि ।

द्विज एको जपेद्धोमकाले शुद्धः समाहितः ॥
आचार्यो जुहुयात्तत्र समिदाज्यतिलांश्चरून् ।
अष्टोत्तरसहस्रं वा शतं वा विंशतिं च वा ॥
देवताभ्यश्चतुर्वक्त्रादिभ्यो ग्रहपुरःसरम् ।

चतुर्वक्त्रादिभ्यो ब्रह्मादिभ्यः पञ्चभ्य इत्यर्थः ।

ब्रह्मादिमन्त्रैर्ब्रह्मादेरिन्द्रस्यापीन्द्रमन्त्रतः ॥
ततः स्विष्टकृतं हुत्वा बलिं पूर्णाहुतिं चरेत् ।
अभिषेकं कुटुम्बस्य कृत्वाऽऽचार्यं प्रपूजयेत् ॥
हिरण्यधेनुरत्नानि ऋत्विजां दक्षिणा ततः ।
प्रतिमा गुरवे देया उपस्कारसमन्विता ॥
कास्याज्यवीक्षणं कृत्वा शान्तिपाठं तु कारयेत् ।
ब्राह्मणान्भोजयेच्छक्त्या दीनानाथांश्च तर्पयेत् ॥
कृत्वैवं विधिना शान्तिं सर्वारिष्टाद्विहीर्भवेत् ।

( इति गर्गसंहितोक्तं पुत्रत्रयोत्पत्त्यनन्तरं कन्योत्पत्तौ कन्यात्रयोत्पत्त्यनन्तरं पुत्रोत्पत्तौ शान्तिविधानम् । )

अथ काकमैथुनशान्तिः । नारदः—

उत्पाता विविधा लोके दिव्यभौमान्तरिक्षजाः ।
तेषां नामानि शान्तिं च सम्यग्वक्ष्ये पृथक् पृथक् ॥
दिवा वा यदि वा रात्रौ यः पश्येत्काकमैथुनम् ।
आकाकघातव्रतं च विदधीतार्कवत्सरम् ॥
पितृदेवद्विजान्भक्त्या प्रत्यहं चाभिवादनम् ।
जितेन्द्रियः शुद्धमनाः सत्यधर्मपरायणः ॥
तद्दोषशमनार्थाय शान्तिकर्म समारभेत् ।
स्वगृह्योक्तविधानेन तत्र स्थाप्य हुताशनम् ॥
मुखान्ते समिदाज्यान्नैर्हुनेदष्टोत्तरं शतम् ।
प्रतिमन्त्रं त्र्यम्बकेन अपमृत्युद्वयेन च ॥
व्याहृतिभिर्व्रीहितिलैर्जपाद्यन्तं प्रकल्पयेत् ।
पूर्णाहुतिं च जुहुयात्कर्त्ता शुचिरलङ्कृतः ॥
स्वर्णशृङ्गी रौप्यखुरी कृष्णा धेनुः पयस्विनी ।
वस्त्रालङ्कारसहिता निष्कद्वादशसंयुता ॥
तदर्धेन तदर्धेन तदर्धार्धेन वा युता ।
यथावित्तानुसारेण तन्न्यूनाधिककल्पना ॥
आचार्याय श्रोत्रियाय तां गां दद्यात्कुटुम्बिने ।
ब्राह्मणेभ्यश्च शिष्टेभ्यो यथाशक्त्या च दक्षिणाम् ॥
ब्राह्मणान्भोजयेत्पश्चाच्छान्तिवाचनपूर्वकम् ।
एवं यः कुरुते सम्यक् स तद्दोषात्प्रमुच्यते ॥

( इति काकमैथुनशान्तिः । )

अथ कपोतशान्तिः—

आरोहयेद्गृहं यस्य कपोतो वा प्रवेशयेत् ।
स्थानहानिर्भवेत्तस्य यथानर्थपरम्परा ॥
दोषाय धनिनां गेहे दरिद्राणां शिवाय च ।
तस्य शान्तिं प्रकुर्वीत जपहोमविधानतः ॥

ब्राह्मणान्वरयेत्तत्र स्वस्तिवाचनपूर्वकम् ।
षोडश द्वादशाऽष्टौ वा श्रौतस्मार्तक्रियापराः ॥
देवाः कपोत इत्यादि ऋग्भिः स्यात्पञ्चभिर्जपः ।
कुण्डं कृत्वा प्रयत्नेन स्वगृह्योक्तविधानतः ॥
ईशान्यां स्थापयेद्वह्निं मुखान्तेऽष्टोत्तरं शतम् ।
प्रत्येकं समिदाज्याग्नैः प्रतिप्रवणपूर्वकम् ॥
यत इन्द्र भयामहे स्वस्तिदाचोरमन्त्रकैः ।
त्रिभिर्मन्त्रैश्च जुहुयात्तिलान्व्याहृतिभिस्ततः ॥
जयादींश्च ततो भक्त्या कर्ता पूर्णाहुतिः स्वयम् ।
विप्रेभ्यो दक्षिणां दद्याद्दोषशान्ति ततो जपेत् ॥
ब्राह्मणान्भोजयेत्पश्चात्स्वयं भुञ्जीत बन्धुभिः ।
एवं यः कुरुते सम्यक् स तद्दोषात्प्रमुच्यते ॥
पिङ्गलस्य स्वरेऽप्येवं मधुवल्मीकयोरपि ।
सम्पूर्णमन्दिरे हानिः शून्यसद्मनि मङ्गलम् ॥
प्राकारे च पुरद्वारे प्रासादाग्रेषु वीथिषु ।
तत्फलं ग्रामपस्यैव सीम्नि सीमाधिपस्य च ॥
शान्तिकर्माखिलं कार्यं पूर्वोक्तेन क्रमेण तु ॥

( इति कपोतशान्तिः । )

अथ कदलीप्रसवशान्तिः । उमोवाच—

प्रथमः प्रसवो देव ! रम्भाया दृश्यते यदि ।
दक्षिणाभिमुखो जातो विदधाति फलं च किम् ॥
भूपाले वा कृपणे वा फलं कस्मिंस्तु जायते ।

श्री महादेव उवाच—

यदा याम्यमुखा देवि ! कदली तु प्रसूयते ॥
तदा ग्रामपतेर्नाशं विदधाति न संशयः ।
एवं विघ्ने समुत्पन्ने विधानं तत्र कारयेत् ॥
सूतकिनोपचर्या सा कदली हितमिच्छता ।

दर्शे तु जागरं कार्यं होमं कुर्यात्ततः परम् ॥
कदलैर्हवनं कार्यमन्येभ्यः समुदाहृतैः ।
सहस्र प्रयतो वाग्मी जपशान्तिरनेकधा ॥
विष्णुस्तु देवता तत्र तल्लिङ्गो मन्त्र उच्यते ।
विप्रेभ्यः सप्तधान्यानि देयानि हि विधानतः ॥
दद्यात्तां कदलीं राजा विप्रवर्याय धीमते ।
एवङ्कृतविधानेन विघ्नशान्तिस्तु जायते ॥
पूजिते विप्रवर्ये च कर्ता सुखमवाप्नुयात् ॥
( इति कदली दुष्टप्रसवसवशान्तिः । )

अथ नानाविधोत्पातलक्षणम् । नारदः—

देवता यत्र नृत्यन्ति पतन्ति प्रज्वलन्ति वा ।
मुहू रुदन्ति गायन्ति प्रस्विद्यन्ति हसन्ति च ॥
वमन्त्यग्निं तथा धूमं लेहं रक्तं पयो जलम् ।
अधोमुखाश्च तिष्ठन्ति स्थानात्स्थानं व्रजन्ति च ॥
एवमाद्याश्च दृश्यन्ते विकाराः प्रतिमासु च ।
गन्धर्वनगरं चैव दिवा नक्षत्रमण्डलम् ॥
महोल्कापतनं काष्ठतृणरक्तप्रवर्षणम् ।
गन्धर्वगेहं दिग्दाहं भूमिकम्पं दिवा निशि ॥
अनग्नौ च स्फुलिङ्गाः स्युर्ज्वलनं च विनेन्धनम् ।
निशीन्द्रचापमण्डूकाशिखरं श्वेतवायसम् ॥
दृश्यन्ते विस्फुलिङ्गाश्च गजाश्वाश्वोष्ट्रगास्ततः ।
जन्तवो द्वित्रिशिरसो जायन्ते वाऽपयोनिषु ॥
जम्बूकग्रामसंवेशे केतूनां च प्रदर्शने ।
कामानामाकुल रात्रौ कपोतानां दिवा यदि ॥
अकाले पुष्पिता वृक्षा दृश्यन्ते फलिता यदि ।
कार्यन्तच्छेदनं तत्र ततः शान्तिर्मनीषिभिः ॥
एवमाद्या महोत्पाता बहवः स्थाननाशदाः ।

केचिन्मृत्युप्रदाः केचिच्छत्रुभयश्च भयप्रदाः ॥
मध्याह्ने ये पणे(?) मृत्युः क्षयकीर्तिसुखाय हि ।
ऐश्वर्यं धनहानिश्च मधुच्छत्रं च वल्मिकम् ॥
देवालये स्वगेहे वा ईशान्यां पूर्वतोऽपि वा ।
कुण्डं लक्षणसंयुक्तं कल्पयेन्मेखलायुतम् ॥
स्वगृह्योक्तेन विधिना स्थापयेच्च हुताशनम् ।
जुहुयादाज्यभागान्तं पृथगष्टोत्तरं शतम् ॥
समिदाज्यचरुव्रीहितिलैर्व्याहृतिभिस्तथा ।
कोटिहोमं तदर्धं वा लक्षहोममथापि वा ॥
यथावित्तानुसारेण तन्न्यूनाधिककल्पना ।
एवं विंशतिरात्रं वा पक्षं पक्षार्धमेव वा ॥
पञ्चरात्रं त्रिरात्रं वा होमकर्म समारभेत् ।
दक्षिणां च ततो दद्यादाचार्याय कुटुम्बिने ॥
गणेशक्षेत्रपालार्कदुर्गाक्षोण्यङ्गदेवताः ।
तासां प्रीत्यै जपं कुर्याच्छेषं पूर्ववदाचरेत् ॥
ऋत्विग्भ्यो दक्षिणां दद्यात्षोडशभ्यः स्वशक्तितः ।

( इति नानाविधोत्पातशान्तिः । )

अथाङ्गस्फुरणम् ।

मूर्ध्नि स्फुरत्याशु पृथिव्यवाप्तिः स्थानादिवृद्धिश्च ललाटदेशे ।
भ्रूघ्राणमध्ये प्रियसङ्गमाय नासादिमध्ये च सहायलाभः ॥
दृगन्तमध्ये स्फुरणेऽर्थसम्पत्सोत्कण्ठता स्यात्स्फुरणे दृगर्धे ।
जयो दृशोऽधःस्फुरणे रणः स्यात्प्रियश्रुतिः प्रस्फुरिते च कर्णे ॥
योषित्समृद्धिः स्फुरिते च गण्डे घ्राणे सदा सौख्यमतीव वै भवेत् ।
भोज्येष्टसङ्गावधरोष्ठयोश्च स्कन्धे गले भोगविवृद्धिलाभौ ॥
स्पन्दो भुजस्येष्टसमागमाय स्पन्दः करे स्याद्द्रविणाप्तिहेतुः ।
स्पन्दस्तु पृष्ठस्य पराजयाय स्पन्दो जयायोरसि मानवानाम् ॥

पार्श्वप्रकम्पे भवति प्रमोदः स्तनप्रकम्पे विषयस्य लाभः ।
कटिप्रकम्पेऽपि बलप्रमोदौ नाभिप्रकम्पे निजदेशनाशः ॥
धनर्द्धिरान्त्रप्रभवे प्रकम्पे ऊरौ धनान्तं हृदयस्य चान्ते ।
स्फिक्प्रकम्पे धनवाहनानि वराङ्गकम्पे वरयोषिदाप्तिः ॥
मुष्कप्रकम्पे तनयस्य जन्म बस्तौ प्रकम्पे युवतिप्रवृद्धिः ।
दोषः प्रकम्पे पुनरूरुपृष्ठ उरःपुरः स्यात्सुमुखाय लाभः ॥
स्याज्जानुकम्पेऽरिविरेण सन्धिर्जङ्घाप्रकम्पेऽपि च लाभनाशः ।
स्थानानि चोर्ध्वं चरणप्रकम्पे यात्रासलाभोऽङ्घ्रितलप्रकम्पः ॥
पुंसां यदा दक्षिणदेहभागे स्त्रीणान्तु वामावयवेषु जातः ।
स्पन्दः फलानि प्रविशत्यवश्यं निहन्ति चोक्ताङ्गविपर्ययेण ॥

व्रणपिटकतिलकलाञ्छनमत्स्यादयस्त्वेवमुपदिष्टाः ।
कण्डूयनं नरपतेर्दक्षिणपादे जयायेति ॥

चिन्तामणौ—

अङ्गस्फुरणवज्ज्ञेयमावर्तानां फलं बुधैः ।
बह्वावर्ताश्शिरःप्रायो दिवा चाल्पायुषोऽन्यथा ॥
आवर्ता वामभागे तु स्त्रीणां संहारवृत्तयः ।
न शुभास्तु शुभा भाले दक्षिणाङ्गे तु स्थितः ॥
( इति ज्योतिर्निबन्धे अङ्गस्फुरणम् । )

अथ सरटफलम्—

नाशः शीर्षे मुखे हानिः पृष्ठे लाभो भयं हृदि ।
दक्षे रोगः शुभं वामे सरटस्य प्रपातनात् ॥

अथ पल्लीपतनफलम् ।

पल्लीस्पर्शे फलं वक्ष्ये यदुक्तं ब्रह्मणा पुरा ।
ब्रह्मस्थाने भवेद्राज्यं स्थानलाभो ललाटके ॥
कर्णयोर्भूषणावाप्तिर्नेत्रयोः प्रियदर्शनम् ।
नासिकायां सुगन्धाप्तिर्मुखे मिष्टान्नभोजनम् ॥
कपोलयोर्भवेत्सौख्यं हनुदेशे महद्भयम् ।

ग्रीवायां विग्रहश्चैव कण्ठे चारिजनागमः ॥
कलिर्वंशे सुखं दृष्ट्यां दक्षवामे कण्ठादिभिः(?)।
दक्षांसे विजयो नित्यं वामांसे शत्रुजं भयम् ॥
इष्टलाभो भुजे दक्षे मणिबन्धे धनक्षयः।
वामे करतले हानिस्तत्पृष्ठे चार्थनष्टता ॥
हृदये राजसन्मानं सौभाग्यं दक्षिणे स्तने।
दक्षपार्श्वे च भोगाप्तिस्तने वामे यशोऽभयम् ॥
वामपादे भवेत्पीडा वामकुक्षौ शिशोस्तथा।
दक्षकुक्षौ सुखावाप्तिरुदरे च विशेषतः ॥
वस्त्राप्तिर्दक्षकट्यां च वामकट्यां सुखक्षयः।
नाभ्यां मनोरथावाप्तिर्वस्तौ गर्भच्युतिर्भवेत् ॥
गुह्ये मृत्युर्गुदे रोगो दक्षे करे प्रीतिवर्द्धनम्।
वामे करे मृत्युदुःखं दक्षजानौ सुखावहम् ॥
पशुहानिर्वामजानौ दक्षिणे जघने सुखम्।
क्लेशः स्याद्वामजङ्घायां स्फिचि दक्षेऽर्थवृद्धिकृत् ॥
स्फिचि वामे स्त्रीवियोगो दक्षे गुल्फे प्रियागमः।
उपद्रवो वामगुल्फे पादयोर्गमनं भवेत् ॥
पुरोभागे च दुर्वार्ता नष्टवार्ता च पृष्ठतः।
वामे हानिर्धनं दक्षे परितो भ्रमणं भवेत् ॥
वामदक्षविभागेन यत्फलं कथितं नृणाम्।
विपर्ययेण तत्स्त्रीणां ज्ञेयं शेषं द्वयोः शुभम् ॥
इत्थं पल्ल्याः प्रपातस्य फलं ज्ञेयं विचक्षणैः।
एतदेव फलं विन्द्यात्सरटस्य प्ररोहणे ॥
ल्ल्याः प्ररोहणे चैव पतने सरटस्य तु।
योः फलस्य व्यत्यासस्तद्वदेव प्रजायते ॥
पल्ल्याः प्ररोहण रात्रौ सरटस्य प्रपातनम्।
नातिदुष्टफलं विन्द्याद्व्याधिमुग्रां विपर्यये ॥

पतनानन्तरं तस्य रोहणं यदि जायते ।
पतने फलमुत्कृष्ट रोहणे तत्फलं भवेत् ॥
मृत्युयोगे च जन्मर्क्षे विष्ट्यां पाते च वैधृतौ ।
चन्द्रेऽष्टमे च सक्रूरे लग्ने विघ्नं प्रजायते ॥
अङ्गं दक्षिणमारुह्य वामेनोत्तरति स्फुटम् ।
तदा हानिकरा ज्ञेया व्यत्ययेन तु लाभदा ॥
चरणादूर्ध्वगा भूयः सद्यो रोहति शीर्षके ।
प्राप्तं राज्यं तदादत्ते पल्ली श्वेता विशेषतः ॥
चिन्तिताभ्यधिकं लाभं स्थिता भोजनभाजने ।
पादाङ्गुलीषु सम्पाताद्धानिश्च महती भवेत् ॥
शीर्षस्योपरि पतिता शुभाय पल्ली सिता च यदि नान्या ।
सितगृहगोधास्पर्शे सर्वेष्वङ्गेषु शोभना ज्ञेया ॥
कर्कटिका गृहगोधा दक्षाङ्गे समारोहति पुंसाम् ।
वामाङ्गे तु स्त्रीणां राज्यं धत्ते भृगुर्वदति ॥
पल्लीसरटयोर्वापि युग्ममङ्गे शुभं पतेत् ।
दम्पत्योर्जायते प्रीतिर्निम्नभागे वियोगता ॥
( इति पल्लीफलम् । )
हंसाद्या उत्तमा जीवा कोपाविष्टास्तु राज्यदाः ।
सरटाद्यधमाः शीर्षे पतिता विघ्नदाः स्मृताः ॥
गोधा कुक्कुटसरटोलूका ध्वांक्षाः कपोतका वापि ।
निःकाणा नरस्य समस्तकष्टनिक्षतिं कुर्युः ॥
पल्लीसरटगोधाद्याः शकृन्मूत्रे च कुर्वते ।
शरीरे यस्य तस्याशु दुःखं चैव महद्भयम् ॥
कृकलासः पतेद्यस्य मूर्ध्नि तद्विघ्नशान्तये ।
मृतसञ्जीवनीं विद्यां जपेन्मुण्डितमस्तकः ॥

अथ पल्लीशब्दफलम् ।

चित्तं ब्रह्मणि कार्यसिद्धिरतुला शाक्रे हुताशे भयम्

याम्ये मित्रवधः क्षयश्च निर्ऋतौ लाभः समुद्रालये ।
वायव्यां वरवस्त्रमन्नमतुलं सौम्येऽर्थलाभं ध्रुवम्
ईशान्यां गृहगोधिकार्थजननी त्रासस्त्वधःशङ्किता ॥

अथ पल्लीविधानम् ।

पल्लीसरटयोः स्पर्शे सचैलं स्नानमाचरेत् ।
पञ्चगव्यं प्राशयित्वा कुर्यादाज्यावलोकनम् ॥
शस्ते चाऽप्यथ वाऽशस्ते यदीच्छेदात्मनः सुखम् ।
पुण्याहवाचनं कृत्वा शान्तिकर्म समारभेत् ॥
प्रतिरूपं सुवर्णेन कुर्याद्वित्तानुसारतः ।
रक्तवस्त्रेण संवेष्ट्य गन्धपुष्पैः प्रपूजयेत् ॥
तदा वै मृण्मयं रम्यं कलशं जलपूरितम् ।
वस्त्रमाल्यैरलङ्कृत्य स्थापयेत्तण्डुलोपरि ॥
पञ्चामृतं पञ्चगव्यं पञ्चरत्नानि शक्तितः ।
पञ्चवृक्षकषायानि निक्षिप्यावाहयेत्ततः ॥
पूजयेद्गन्धपुष्पाद्यैर्लोकपालान् क्रमेण तु ।
अग्निसंस्थापनं कृत्वा होमकर्म समारभेत् ॥
मृत्युञ्जयेन मन्त्रेण समिद्भिः खादिरैः शुभैः ।
तिलैर्व्याहृतिभिर्होममष्टोत्तरसहस्रकम् ॥
अष्टोत्तरशतं वापि कुर्याद्वित्तानुसारतः ।
अभिषेकं ततः कृत्वा यजमानस्य तद्द्विजैः ॥
पुण्यवारुणसूक्तैश्च दोषशान्त्यै द्विजोत्तमाः ।
धौताम्बराणि धृत्वाश्वस्वर्णवस्त्रतिलान्ददेत् ॥
ब्राह्मणान्भोजयेदित्थं शान्तिकर्म करोति यः ।
तस्यायुर्विजयो लक्ष्मीः कीर्त्तिर्वृद्धिः सुखं भवेत् ॥
पल्लीसरटयोः शान्तिः कथिता भृगुणा पुरा ।
शौनकाय मुनीन्द्राय लोकानुग्रहकारिणे ॥

( इति पल्लीसरटयोः शान्तिः । )

अथ होमविधान विना शान्तिः । गार्ग्यः—

विचार्य तत्र दैवज्ञं शान्तिं कुर्याद्यथाविधि ।
यजनं देवतानां च ग्रहाणां चैव पूजनैः ॥
दीपं शिवालये भक्त्या गोघृतेन प्रदापयेत् ।
अभिषेकं शङ्कराय अश्वत्थस्य प्रदक्षिणम् ॥
अभीष्टफलसिद्ध्यर्थं कुर्याद्ब्राह्मणभोजनम् ।
गाणपत्यं पुरुषसूक्तं सौरं मृत्युञ्जयं शुभम् ॥
शान्तिजाप्यं पुनश्चैव कृत्वा मृत्युञ्जयी भवेत् ॥

शङ्खः—

सर्वपापहरा ह्येषा रुद्रैकादशिनी स्मृता ।
वेदमेकगुणं जप्त्वा तदह्नैव विशुध्यति ॥

रुद्रपद्धतावपि—

अनपत्यादिदोषे तु शाकिन्यादिगणेन च ।
सर्वज्वरविनाशाय रुद्रः पूज्यो न संशयः ॥
सर्वेषु ग्रहदोषेषु दुःस्वप्नाद्भुतदर्शने ।
जपन्नेतत्सकृद्विप्रः सर्वदोषैः प्रमुच्यते ॥
कपोतोलूकसरटविकारोत्पादनेषु च ।
पल्लीसरटकादीनां स्पर्शने रुद्रपूजनम् ॥

भवतीति शेषः । शातातपः—

मद्यं पीत्वा गुरुदारांश्च गत्वा स्तेयं कृत्वा ब्रह्महत्यां च कृत्वा ।
भस्मच्छन्नो भस्मशय्याशयानो रुद्राध्यायी मुच्यते सर्वपापैः ॥

तथा—

स्पृष्ट्वाऽश्वत्थं यजेद्यस्तु रुद्रैकादशिनीं शुचिः ।
रोगज्वरातिसारादीन्नाशयेदुल्बणानपि ॥
गायत्री हरते पापं त्र्यम्बके वृद्धिरायुषः ।
उभयं रुद्रजाप्येन सन्ततेश्चानुवर्द्धनम् ॥

नन्दिपुराणे—

शृणुष्व भो महाप्राज्ञ ! रुद्रभेदान्वदामि ते ।

रुद्राः पञ्चविधाः प्रोक्ता देशिकैरुत्तरोत्तरम् ॥
साङ्गस्त्वाद्यो रूपकाख्यः सशीर्षो रुद्र उच्यते ।
एकादशगुणैस्तद्वद्रुद्रीसंज्ञो द्वितीयकः ॥
एकादशभिरेताभिस्तृतीयो लघुरुद्रकः ।
लघ्वेकादशभिः प्रोक्तो महारुद्रश्चतुर्थकः ॥
पञ्चमः स्यान्महारुद्र एकादशभिरन्तिमः ।
अतिरुद्रः समाख्यातः सर्वेभ्यो ह्युत्तमोत्तमः ॥
शिवसङ्कल्पहृदयं सूक्तं स्यात्पौरुषं शिरः ।
प्राहुर्नारायणं सूक्त शिखां तस्योत्तराभिधम् ॥
आशुः शिशानः कवचं नेत्रं विभ्राड्बृहत्स्मृतम् ।
शतरुद्रियमस्त्रं स्यात्षडङ्गक्रम ईरितः ॥
हृच्छिरस्तु शिखानेत्रं वर्म चास्त्रं महामते ! ।
प्राहुर्विधिज्ञा रुद्रस्य षडङ्गानि स्वशास्त्रतः ॥
सकामो न जपेद्रुद्रं यज्ञं यज्ञगुरुं बुधः ।
तत्कामदहनं त्यक्त्वा द्विनेत्रेशं जपेदिह ॥
नेत्रहीनः कथं सोऽन्धः कुर्यात्पुंसां महत्फलम् ।
निष्कामस्तु जपेत्सम्यक्त्रिनेत्रं मुनिसत्तम ! ॥
रुद्राध्यायः सरुद्रः स्यात्प्रथमः साङ्गशीर्षकः ।
एकस्यैकादशावृत्या रौद्रीनाम्ना द्वितीयकः ॥
साङ्गमाद्यं जपेद्रुद्रं केवलानि नवान्तरे ।
साङ्गं सशीर्षकं चान्त्यं निरङ्गमिति के चन ॥

इति माधवनिदाने ।

अथास्य पुरश्चरणविधिः । कालिकापुराणे—

कृच्छ्रमादौ स्वयं चीर्त्वा पराकं च तथा पुनः ।
कृत्वा ध्यायन्महादेवमिदं भूयः समाचरेत् ॥
स्नात्वा हीशानमभ्यर्च्य उषित्वा सर्वशर्वरीः ।
जपेद्रुद्रांस्तथा जप्ते तदन्तं प्राशयेद्घृतम ॥

अपरेऽहनि सञ्जाते समाप्यैवं व्रतं पुनः ।
भास्कराभिमुखो भूत्वा तद्दिने याजयेद्बहून् ॥
भूयश्चाह्नि जपेद्रुद्रं सम्पूज्य विधिवत्ततः ।
घृताक्तैर्बिल्वपत्रैश्च रुद्रैर्होमं प्रकल्पयेत् ॥
एवं सम्यग्व्रते नूनं कृतेऽसौ जायते द्विजः ।
साक्षाद्रुद्रो महातेजास्ततः कामान्प्रसाधयेत् ॥ इति ।

इति श्रीप्रथमशास्त्रीयरामकृष्णविरचिते पारस्करगृह्यसूत्र-
विवरणे संस्कारगणपतौ शान्तिः ।



अथ दत्तकपुत्रविधानम् । अथ दत्तपुत्रपरिग्रहविधानम् । प्रयोग पारिजाते—एवं पूर्वोक्तविधिनाप्यजातपुत्रस्य परिग्रहविधिरभिधीयते । लिङ्गपुराणे—

अपुत्रस्य गतिर्नास्ति स्वर्गो नैव च नैव च ॥ इति ।

विधानपारिजाते स्मृतिः—

अपुत्रस्य मुखं दृष्ट्वा भानुमण्डलमीक्षयेत् ॥

श्रुतिरपि—"नापुत्रस्य लोकोऽस्ती"ति । तस्मात्सर्वथाप्यपुत्रस्य पुत्रपरिग्रहविधिः । तदाहात्रिः—

अपुत्रेणैव कर्तव्यः पुत्रप्रतिनिधिः सदा ।
पिण्डोदकक्रियाहेतोर्यस्मात्तस्मात्प्रयत्नतः ॥

अपुत्रेणेति पुत्रपदं पौत्रप्रपौत्रयोरप्युपलक्षणम् । वीरमित्रोदये—

पुत्रेण लोकञ्जयति पौत्रेणानन्त्यमश्नुते ।
अथ पुत्रस्य पौत्रेण ब्रध्नस्याप्नोति विष्टपम् ॥

इत्यादिवचनात् । प्रपौत्रादिनाप्यलोकतापरिहारः स्यादित्यादिश्रवणादेक एव प्रतिनिधिः कार्यो न द्वित्राः, तावतैवालोकतापरिहात् प्रतिनिधिश्चात्र क्षेत्रजादिरेकादशविधः । ते यथा—

औरसः पुत्रिकापुत्रः क्षेत्रजो गूढजस्तथा ।
कानीनश्च पुनर्भूतो दत्तः क्रीतश्च कृत्रिमः ॥

दत्तात्मा च सहोढाजस्त्वपविद्धस्तु तत्समः ॥ इति ।

औरस विना एकादशेत्यर्थः । वीरमित्रोदये —

क्षेत्रजादीन्सुतानेतानेकादश यथोदितान् ।
पुत्रप्रतिनिधीनाहुः क्रियालोपान्मनीषिणः ॥

इति मानवात् । तेषु च —

दत्तौरसेतरेषां तु पुत्रत्वेन परिग्रहः ॥

इति कलिवर्ज्यवचनेन कलौ क्षेत्रजादीना दशानां निषिद्धत्वादौर-सप्रतिनिधित्वं दत्तकस्यैव परिशिष्यते इति स एवात्र निरूप्यते । स च कः ? कीदृशः ? कथं च परिग्राह्य ? इति त्रितयं निरूपणीयम् । तत्र क इत्याह शौनकः—

ब्राह्मणानां सपिण्डेषु कर्तव्यः पुत्रसङ्ग्रहः ।
तदभावेऽसपिण्डो वा अन्यत्र तु न कारयेत् ॥

सपिण्डेषु सप्तमपुरुषावधिकेषु । सपिण्डेष्विति सामान्यश्रवणाच्च समानगोत्रेष्विति गम्यते ।

स्वगोत्रेषु कृता ये स्युर्दत्तक्रीतादयः सुताः ।
विधिना गोत्रतां यान्ति न सापिण्ड्यं विधीयते ॥

इति वृद्धगौतमेन सगोत्रेषु पुत्रीकरणाभ्यनुज्ञानात् । गोत्रत्वं सन्ततित्वम् ।

सन्ततिर्गोत्रजननकुलान्यभिजनान्वयौ ॥

इतित्रिकाण्डीस्मरणात् । सपिण्डः सगोत्रो मुख्यः कल्पः । तद-भावेऽसगोत्रः सपिण्डः । तस्याप्यभावेऽसपिण्डः सगोत्रः । तस्याप्यभा-वेऽसगोत्रोऽसपिण्डोऽसमानप्रवरश्च । तदाह शौनकः—

सपिण्डापत्यकं चैव सगोत्रजमथापि वा ।
अपुत्रको द्विजो यस्मात्पुत्रत्वे परिकल्पयेत् ॥
समानगोत्रजाभावे पालयेदन्यगोत्रजम् ।
दौहित्रं भागिनेयं च मातृष्वसृसुतं विना ॥ इति ।

तस्याप्यभावे सजातीयः कार्यः । तथा च याज्ञवल्क्यः—

सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिः ॥

मनुरपि--

सदृशं प्रीतिसंयुक्तं स ज्ञेयो दत्रिमः सुतः ॥ इति ।

सदृश सजातीयम् । यत्तु सदृशं न ज्ञातितः किन्तर्हि कुलानुरूपै-र्गुणैस्तेन "क्षत्रियादिरपि ब्राह्मणस्य युज्यत" इति मेधातिथिव्या-ख्यान, यच्च "शूद्रोऽपि किल पुत्रो भवती"त्यभिप्राय इति कल्पतरु-व्याख्यानं, तदुभयमपि शौनकवृद्धगौतमयाज्ञवल्क्यवचनविरोधात्त्याज्यम् । तथा च वृद्धगौतमः—

यदि स्यादन्यजातीयो गृहीतो वा सुतः क्वचित् ।
अंशभाजं न तं कुर्याच्छौनकस्य मतं हि तत् ॥

इत्यसमानजातीयस्यांशभाक्त्वनिषेधेन पुत्रत्वानुत्पत्तिं गमयति । त स्मादसमानजातीयो न पुत्रीकार्य इति सिद्धम् । सन्निहितसगोत्रसपिण्डेषु भ्रातृपुत्र एव पुत्रीकार्य इत्याह मनुः—

भ्रातॄणामेकजातानामेकश्चेत्पुत्रवान्भवेत् ।
सर्वे ते तेन पुत्रेण पुत्रिणो मनुरब्रवीत् ॥

सोदराणां भ्रातॄणामेकस्यापि यः पुत्रस्तेन पुत्रेण सर्वेऽप्यपुत्रा भ्रातरः पुत्रं कुर्युरिति । वसिष्ठवाक्ये हि दानं निषिध्यते । न चात्र मनुवाक्ये दानं श्रूयते । नन्वस्यां कल्पनायां किं प्रमाणमिति चेत् ? उच्यते । "सर्वे ते तेन पुत्रेणे"ति शब्दश्रुतिरेकम् । वैतालभैरवाभ्यामुभाभ्यां भैरवपुत्रस्यैकस्य सुवेशस्य पुत्रीकरणं लिङ्गं चापरं प्रमाणम् । तथा च कालिकापुराणम्—

ऋषय ऊचुः—

अपुत्रस्य गतिर्नास्ति श्रूयते लोकवेदयोः ।
वैतालभैरवौ यातौ पुरा वै तपसे गिरिम् ॥
पूर्वन्त्वकृतदारौ तौ तयोः पुत्रा न च श्रुताः ।
तेषां तु सम्यगिच्छामः श्रोतुं संस्थानमुत्तमम् ॥

मार्कण्डेय उवाच—

अपुत्रस्य गतिर्नास्ति प्रेत्य चेह च सत्तमाः ! ।
स्वपुत्रैर्भ्रातृपुत्रैश्च पुत्रवन्तो हि सङ्गताः ॥
सम्यक्सिद्धिमवाप्येह यदा वैतालभैरवौ ।
हरस्य मन्दिरं यातौ कैलासं प्रति हर्षितौ ॥
तदा हरस्य वचनान्नन्दी तौ रहसि द्विजाः ! ।
प्राहेदं वचनं तथ्यं सान्त्वयन्निव बोधकृत् ॥

नन्द्युवाच—

अपुत्रौ पुत्रजनने भवन्तौ शङ्करात्मजौ ।
यतेतां तात ! पुत्रस्य सर्वत्र सुलभा गतिः ॥

मार्कण्डेय उवाच—

तस्येदं वचनं श्रुत्वा नन्दिनः प्रीतमानसौ ।
एवमेव करिष्यावो नन्दिनं चेत्यभाषताम् ॥
ततः कदाचिदुर्वश्यां भैरवो मैथुनं गतः ।
तस्यां स जनयामास सुवेशं नाम पुत्रकम् ॥
तमेव चक्रे तनयं वैतालोऽपि स्वकं सुतम् ।
ततस्तौ स्तेन पुत्रेण स्वर्ग्यां गतिमवापतुः ॥ इति ।

तस्मादेतल्लिङ्गोपष्टब्धयाऽनया स्मृत्याऽनैकैरप्यपुत्रैर्भ्रातृभिरेकोऽपि भ्रातृपुत्रः पुत्रीकार्य इति सिद्धम् । एतेनाकृतस्यैव भ्रातृपुत्रस्यापुत्रपितृव्यपुत्रत्वमनेनोच्यते । तथा च बृहत्पराशरः—

अपुत्रस्य पितृव्यस्य तत्पुत्रो भ्रातृजो भवेत् ।
स एव तस्य कुर्वीत श्राद्धपिण्डोदकक्रियाम् ॥ इति ।

अथ क्षत्रियादिनिर्णयः । तत्र शौनकः—

क्षत्रियाणां स्वजातौ तु गुरुगोत्रसमेऽपि वा ।
वैश्यानां वैश्यजातेषु शूद्राणां शूद्रजातिषु ॥
सर्वेषां चैव वर्णानां ज्ञातिष्वेव न चान्यतः ।
दौहित्रो भागिनेयश्च शूद्रैस्तु क्रीयते सुतः ॥
ब्राह्मणादित्रये नास्ति भागिनेयः सुतः क्वचित् ॥

स्वजातौ क्षत्रियजातौ। जातिसामान्योपादानेऽपि प्रत्यासत्तिः पूर्ववदत्रापि नियामिका। सपिण्डाभावे गुरुगोत्रसमेऽपि वा। क्षत्रियाणां प्रातिस्विकगोत्राभावाद्गुरुनिर्देशः। इदानीं कीदृशः पुत्रीकार्य इति निरूप्यते। शौनकः—

नैकपुत्रेण कर्तव्यं पुत्रदानं कदाचन।
बहुपुत्रेण कर्तव्यं पुत्रदानं प्रयत्नतः॥ इति।

एक एव पुत्रो यस्येत्येकपुत्रस्तेन तत्पुत्रदानं न कार्यम्। "न त्वेवैकं पुत्रं दद्या"दिति वशिष्ठस्मरणात्। अत्र स्वस्वत्वनिवृत्तिपूर्वकपरस्वत्वापादानस्य दानपदार्थत्वात्परस्वत्वापादानं च परप्रतिग्रहं विनानुपपद्यमानं सत्तमप्याक्षिपति। तेन प्रतिग्रहनिषेधोऽप्यनेनैव सिध्यति। अत एव वसिष्ठः—"नत्वेवैकं पुत्रं दद्यात्प्रतिगृह्णीयाद्वा न स्त्री पुत्रं दद्यात्प्रतिगृह्णीयाद्वा अन्यत्रानुज्ञानाद्भर्तु"रिति। यत्तु समन्त्रकहोमस्य पुत्रप्रतिग्रहाङ्गत्वात् व्याहृत्यादिमन्त्रपाठे च स्त्रीशूद्रयोरनधिकारात्तयोर्दत्तकः पुत्रो न भवत्येवेति शुद्धिविवेके एकपुत्रदाने। तत्र हेतुमाह—"स हि सन्तानाय पूर्वेषा"मिति। सन्तानार्थत्वाभिधानेनैकस्य दाने सन्तानविच्छित्तिः प्रत्यवायो बोधितः। स च दातृप्रतिग्रहीत्रोरुभयोरपि, उभयशेषत्वात्। यत्तु चन्द्रिकायां स्मृत्यन्तरम्—

सुतस्य सुतदारायां वशित्वमनुशासने।
विक्रये चैव दाने च वशित्वन्न सुते पितुः॥

यच्च योगिस्मरणम् "देयं दारसुतादृत" इति तदेकपुत्रविषयम्। कदाचन आपद्यपि। तथा च नारदः—

निक्षेपः पुत्रदारं च सर्वस्वं चान्वये सति।
आपद्यपि हि कष्टेषु वर्तमानेन देहिना॥
अदेयान्याहुराचार्या यच्च साधारणं धनम्॥ इति।

इदमप्येकपुत्रविषयमेव, वशिष्ठशौनकैकवाक्यत्वात्। तर्हि केन पुत्रो देय? इत्यत आह "बहुपुत्रेणे"ति। बहवः पुत्रा यस्येति बहुपुत्रः। नैकपुत्रे-

णेतिनिषेधात्। द्विपुत्रस्यैव दानप्राप्तौ बहुपुत्रेणेत्युच्यते तद्द्विपुत्रस्यापि तत्प्रतिषेधाय।

एकपुत्रो ह्यपुत्रो मे मतः कौरवनन्दन!।
एकं चक्षुर्यथाऽचक्षुर्नाशे तस्यान्ध एव हि॥

इत्यादि भीष्मं प्रति शन्तनूक्तेः। बहुपुत्रेणेति पुंस्त्वश्रवणात्स्त्रियाः पुत्रदानप्रतिषेधः। अत एव वाशिष्ठः—"न पुत्री पुत्रं दद्या"दिति नैरपेक्ष्यश्रवणाच्च भर्त्रनुज्ञाने तस्या अप्यधिकारः। तथा च वसिष्ठः—"अन्यत्रानुज्ञानाद्भर्तु"रिति। यत्तु "दद्यान्माता पिता वे"ति, यच्च "माता पिता वा दद्येता"मिति मातुः पितृसमकक्षतयाभिधानं तदपि भर्त्रनुज्ञानविषयमेव। बजिस्य प्राधान्यादयोनिजा अपि पुत्रा दृश्यन्त इति। मानवे 'दद्यातामि'त्युभयकर्तृकताश्रवणाच्चोभयाधिकारो मुख्यः। अत एव वसिष्ठः—"शुक्रशोणितसम्भवः पुरुषो मातापितृनिमित्तकस्तस्य दानविक्रयपरित्यागेषु मातापितरौ प्रभवत" इति। बौधायनोऽपि "मातापित्रोरेव संसर्गसाम्या"दिति। अत एव "माता पिता वा दद्येता"मिति मनुवचनम्। तथा च योगियाज्ञवल्क्यः "दद्यान्माता पिता यं वे"ति प्रत्येकान्वय्येकवचनन्तदेव क्रियापदमुदाजहार। तत्रापि निमित्तमाह "प्रयत्नत" इति। प्रकृष्टो यत्नो यस्मिन्कालेऽसौ प्रयत्न आपत्कालस्तेन चापत्काल एव पुत्रदानं नान्यथेत्यर्थः। यथाह कात्यायनः—

आपत्काले तु कर्त्तव्यं दानं विक्रय एव वा।
अन्यथा न प्रवर्त्तेत इति शास्त्रविनिश्चयः॥

इति प्रक्रमात्पुत्रदाराणां दानानि निषिध्यन्ते। मनुरपि—

माता पिता वा दद्येतां यमद्भिः पुत्रमापदि॥ इति।

आपदि दुर्भिक्षादौ। अनापदि दाने दातुर्दोषः। तथा च अपरार्कचन्द्रिकायाम् "आपदि प्रतिग्रहीतुरपुत्रत्व" इति। विशेषान्तराण्यपि कालिकापुराणे—

दत्ताद्या अपि तनया निजगोत्रेण संस्कृताः।

आयान्ति पुत्रतां सम्यगन्यबीजसमुद्भवाः ॥
पितुर्गोत्रेण यः पुत्रः संस्कृतः पृथिवीपते ! ।
आचूडान्तं न पुत्रः स पुत्रतां याति चान्यतः ॥
चूडाद्या यदि संस्कारा निजगोत्रेण वै कृताः ।
दत्ताद्यास्तनयास्ते स्युरन्यथा दासतोच्यते ॥
ऊर्ध्वन्तु पञ्चमाद्वर्षान्न दत्ताद्याः सुता नृप ! ।
गृहीत्वा पञ्चवर्षीयं पुत्रेष्टिं प्रथमं चरेत् ॥
पौनर्भवं तु तनयं जातमात्रं समानयेत् ।
कृत्वा पौनर्भवष्टोमं जातमात्रस्य तस्य वै ॥
सर्वांस्तु कुर्यात्संस्काराञ्जातकर्मादिकान्नरः ।
कृत्वा पौनर्भवष्टोमं सुतः पौनर्भवस्ततः ॥

दत्तेति—अन्यबीजसमुद्भवा अपि दत्ताद्यास्तनया निजगोत्रेण प्रतिग्रहीत्रा स्वगोत्रेण सम्यक् स्वशाखोक्तविधिना जातकर्मादिभिः संस्कृताश्चेत्तदैव प्रतिग्रहीतृपुत्रतां प्राप्नुवन्ति नान्यथेत्यर्थः । तदाह वशिष्ठः—

अन्यशाखोद्भवो दत्तः पुत्रश्चैवोपनायितः ।
स्वगोत्रेण स्वशाखोक्तविधिना स स्वशाखभाक् ॥ इति ।

दत्ताद्या इत्यादिपदेन कृत्रिमादीनां ग्रहणम्—प्रतिनिधित्वसाम्यात् । तेन च तेषामपि संस्कारैरेव पुत्रत्वं न परिग्रहमात्रेण । "अन्यथा दासतोच्यत" इति वचनात् ।

अथ दत्तकपुत्रपरिग्रहविधिः । तत्र शौनकः—

शौनकोऽहं प्रवक्ष्यामि पुत्रसङ्ग्रहमुत्तमम् ।
अपुत्रो मृतपुत्रो वा पुत्रार्थं समुपोष्य च ॥
वाससी कुण्डले दत्वा उष्णीषं चाङ्गुलीयकम् ।
आचार्यं धर्मसंयुक्तं वैष्णवं वेदपारगम् ॥
मधुपर्केण सम्पूज्य राजानं च द्विजाञ्छुचीन् ।

राजा ग्रामाधीशः । द्विजान् त्रीन् याचनार्थतया मधुपर्कादिना सम्पूज्येत्यर्थः ।

बर्हिः कुशमयं चैव पालाशं चेध्ममेव च ॥
एतानाहृत्य बन्धूंश्च ज्ञातीनाहूय यत्नतः ।
बन्धूनात्मपितृमातृबन्धून् ज्ञातीन्सपिण्डान् ।
बन्धूनन्नेन सम्भोज्य ब्राह्मणांश्च विशेषतः ॥
बन्धूनाहूतान् ब्राह्मणान् पूर्ववृतान् । चकारादाहूतान् ज्ञातींश्च सम्भोज्येत्यर्थः ।
अग्न्याधानादिकं तन्त्रं कृत्वाऽज्योत्पवनान्तकम् ।
दातुः समक्षं गत्वा तु पुत्रं देहीति याचयेत् ॥
याचनं कारयेत् पूर्ववृतैर्ब्राह्मणैरित्यर्थः ।
दाने समर्थो दातास्मै ये यज्ञेनेति पञ्चभिः ।
देवस्य त्वेति मन्त्रेण हस्ताभ्यां परिगृह्य च ॥
अङ्गादङ्गादृचं जप्त्वा आघ्राय शिशुमूर्द्धनि ।
वस्त्रादिभिरलङ्कृत्य पुत्रच्छायावहं सुतम् ॥
पुत्रच्छाया पुत्रसादृश्यम् ।
नृत्यगीतैश्च वाद्यैश्च स्वस्तिशब्दैश्च संयुतम् ।
गृहमध्ये तथाधाय चरुं हुत्वा विधानतः ॥
यस्त्वा हृदेत्यृचा चैव तुभ्यमग्र ऋचैकया ।
सोमोऽददादित्येताभिः प्रत्यृचं पञ्चभिस्तथा ॥
एवं सप्तभिर्मन्त्रैः सप्त चर्वाहुतीर्हुत्वेत्यर्थः ।
स्विष्टकृदादिहोमं च कृत्वा शेषं समापयेत् ॥
वृद्धगौतमस्तु विशेषमाह—
पायसं तत्र साज्यं च शतसंख्यं तु हावयेत् ।
प्रजापते न त्वदेतानित्युद्दिश्य प्रजापतिम् ॥ इति ।
मिताक्षरादौ तु व्याहृतिभिराज्येन होम उक्तः । तदनन्तरम्—
दक्षिणां गुरवे दद्याद्यथाशक्ति द्विजोत्तमः ।
द्विजोत्तमो ब्राह्मणः ।
नृपो राज्यार्धमेवाथ वैश्यो वित्तं शतत्रयम् ॥

शूद्रः सर्वस्वमेवापि अशक्तश्चेद्यथाबलम् ॥

अशक्तश्चेद्यथाबलमित्यस्य सर्वशेषत्वान्नृपादीनामप्यर्धराज्याद्यसम्भवे यथाशक्त्येव दक्षिणादाने द्रष्टव्यम् । अथ पुत्रग्रहणानन्तरं औरसे जाते तत्राह वसिष्ठः—"तस्मिंश्चेत्प्रतिगृहीत औरस उत्पद्येत चतुर्थभागभागी स्याद्दत्तक" इति ।

दत्ते पुत्रे गृहीते तु कदाचित्स्वौरसो भवेत् ।
पितुर्वित्तस्य सर्वस्य भवेतां समभागिनौ ॥

इदं तु दत्तपुत्रस्य गुणवत्तरत्वे द्रष्टव्यम् । "दत्तस्य गुणवत्तरत्वे समो भाग" इति हारीतवचनात् ।

अविधाय विधानं तु परिपुष्णाति नन्दनम् ।
विवाहविधिभाजं तं कुर्यान्न धनभागिनम् ॥

इति श्रीप्रथमशाखीयरामकृष्णविरचिते पारस्करगृह्यसूत्रविवरणे संस्कारगणपतौ दत्तकपुत्रविधिः ।

---

## ( अथ सप्तदशी कण्डिका )

**दशम्यामुत्थाप्य ब्राह्मणान्भोजयित्वा पिता नाम करोति द्व्यक्षरं चतुरक्षरं वा घोषवदाद्यन्तरन्तस्थं दीर्घाभिनिष्ठानं कृतं कुर्यान्न तद्धितमयुजाक्षरमाकारान्तꣳ स्त्रियै तद्धितꣳ शर्म ब्राह्मणस्य वर्म क्षत्रियस्य गुप्तेति वैश्यस्य चतुर्थे मासि निष्क्रमणिका सूर्यमुदीक्षयति तच्चक्षुरिति ॥ १७ ॥**

अथ नामकरणम् "दशम्यामुत्थाप्य ब्राह्मणान्भोजयित्वा पिता नाम करोती"ति सूत्रम् । प्रसवाद्दशम्यां रात्र्यामतीतायामेकादशेऽहनि सूतिकागृहात्सूतिकामुत्थाप्य श्राद्धव्यतिरिक्तान् त्रीन्ब्राह्मणान्भोजयित्वा पिता कुमारस्य नाम संज्ञां व्यवहारार्थं करोति । तथा च बृहस्पतिः—

नामाखिलस्य व्यवहारहेतुः शुभावहं कर्मसु भाग्यहेतुः ।
नाम्नैव कीर्तिं लभते मनुष्यस्ततः प्रशस्तं खलु नामकर्म ॥

अन्यस्मिन्नपि संस्कारे पितुरेवोत्सर्गात्कर्तृत्वम्। इह पितृग्रहणादन्यत्रापि नियमोऽवगम्यते। अत्र दशम्यामिति सूतकान्तोपलक्षणम्। तथा च मदनरत्ने नारदीये—

सूतकान्ते नामकर्म विधेयं स्वकुलोचितम्॥ इति।

ततश्च यस्य यावन्ति दिनानि सूतकं तदन्तदिने कार्यमिति हरिहरः। सङ्ग्रहे—

एकादशेऽह्नि विप्राणां क्षत्रियाणां त्रयोदशे।
वैश्यानां षोडशे कार्यं मासान्ते शूद्रजन्मनः॥

इति सूत्रकारवचनादेकादशेऽहन्येवेत्यन्ये। व्यासः—

नामधेयं दशम्यां तु के चिदिच्छन्ति सूरयः।
द्वादश्यामाहुरन्ये तु मासे पूर्णे तथाऽपरे॥

बृहस्पतिः—

दशाहे द्वादशाहे वा जन्मतोऽपि त्रयोदशे॥

वसिष्ठः—

द्वादशे दशमे वापि जन्मतो दिवसे शुभे।
षोडशे विंशतौ चैव द्वाविंशे वर्णतः क्रमात्॥

भविष्यपुराणे—

द्वादश्यामपरे रात्र्यां मासे पूर्णे तथाऽपरे।
अष्टादशेऽह्नि च तथा वदन्त्यन्ये मनीषिणः॥

गोभिलगृह्यपरिशिष्टयोः—"जननाद्दशरात्रे संवत्सरे वा नामकरण"मिति। धर्मप्रवृत्तौ—

द्वाविंशद्दिवसादूर्ध्वं यावत्संवत्सरं भवेत्।
नामकर्म द्विजैः कार्यमिति कैश्चिदुदीरितम्॥

अथ प्राप्तकालेऽपि निमित्तविशेषेण निषेधमाह। गर्गः—

व्यतीपाते च संक्रान्तौ ग्रहणे वैधृतावपि।
श्राद्धं विना शुभं नैव प्राप्तकालेऽपि मानवः॥

कुर्यादिति शेषः। अन्यच्च—

अमासंक्रान्तिविष्ट्यादौ प्राप्तकालेऽपि नाचरेत् ॥ इति ।

एवमतिक्रान्ते कालान्तरमाह नारदः–

देशकालोपघाताद्यैः कालातिक्रमणं यदि ।
अनस्तगे भृगावीज्ये तत्कार्यं चोत्तरायणे ॥

अत्र विशेषमाह धर्मप्रवृत्तिकारः––

आवत्सरं नैव दोषो मूढयोर्गुरुशुक्रयोः ।
मलमासेऽपि तत्कुर्यादुक्तकाले न दोषकृत् ॥
यस्यां क्रियायां सर्वोक्तः कालो मासैर्दिनैरपि ।
तस्यां न दोषो मूढत्वं वक्रं वा जीवशुक्रयोः ॥

अत्र संवत्सरपर्यन्तमुक्तः कालः । अथ तिथयः––

युग्माश्च तिथयः सर्वा अजधर्मतिथीर्विना ।
पक्षच्छिद्रा इति ज्ञेयाः सर्वकर्मसु गर्हिताः ॥

अजो द्वितीया, धर्मो दशमी । अथ वाराः । तत्र वासिष्ठः––

बुधेन्दुसितजीवानामंशके दिवसोदये ।
द्रेष्काणे कालहोरायां नामकर्म प्रशस्यते ॥

अथ नक्षत्राणि । तत्र बृहस्पतिः––

त्र्युत्तरासु धनिष्ठायां रेवतीहस्तयोरपि ।
मूलवारुणपुष्येषु श्रवणादित्ययोरपि ॥
मैत्रवाजिभयोः स्वातीरोहिण्यैन्दवभेषु च ।
कुर्यान्नामक्रियां विद्वानायुःश्रीकीर्तिवृद्धये ॥

बृहस्पतिः––

अष्टमे तु ग्रहाः सर्वे नेष्टास्ते नामकर्मणि ।
धनकर्मसुतभ्रातृनवमस्थः शुभः शशी ॥
शुद्धे व्ययाष्टमे लग्ने पापाश्च त्रिषडायगाः ।
शुभेषु शेषसंस्थेषु नामकर्म शुभावहम् ॥

अथ पूर्वाह्णादिकालनिर्णयः । बृहस्पतिः––

पूर्वाह्णः श्रेष्ठ इत्युक्तो मध्याह्नो मध्यमः स्मृतः ।

अपराह्णं च रात्रिं च वर्जयेन्नामकर्मणि ॥

कीदृशं नाम कार्यमित्यत आह—तच्च नाम चतुर्विधम् कुलदेवतासम्बद्धं माससम्बद्धं नक्षत्रसम्बद्धं व्यावहारिकम् चेति । तत्राद्यमाह शङ्खः—"कुलदेवतासम्बद्धं पिता नाम कुर्या"दिति । कुलदेवता कुलपूज्या देवतेति यावत् । तया सम्बद्धं तत्प्रतिपादकमित्यर्थः । अस्मिंश्च व्याख्याने अनादिरविच्छिन्नः शिष्टाचारो मूलम् । अथ मासनामान्याह गार्ग्यः—

मासनाम गुडोनाम दद्याद्बालस्य वै पिता ।
कृष्णोऽनन्तोऽच्युतश्चक्री वैकुण्ठोऽथ जनार्दनः ॥
उपेन्द्रो यज्ञपुरुषो वासुदेवस्तथा हरिः ।
योगीशः पुण्डरीकाक्षो मासनामान्यनुक्रमात् ॥

अनुक्रमोऽत्र मार्गशीर्षादिकः । केचिच्चैत्रादिक्रमोऽत्र मन्यन्ते तन्न चैत्रादिक्रमे वैकुण्ठादिनामश्रवणात् । तथा च वीरमित्रोदये गर्गः—

चैत्रादिमासनामानि वैकुण्ठोऽथ जनार्दनः ।
उपेन्द्रो यज्ञपुरुषो वासुदेवो हरिस्तथा ॥
योगीशः पुण्डरीकाक्षः कृष्णोऽनन्तोऽच्युतस्तथा ।
चक्रधारीति चैतानि क्रमादाहुर्मनीषिणः ॥ इति ।

नक्षत्रनामाहतुः शङ्खलिखितौ । "नक्षत्राभिसम्बद्धं पिता वा कुर्यादन्यो वा कुलवृद्ध"इति । नाक्षत्रमेव चाभिवादनिकं नामोच्यते । तथा च बौधायनः "नक्षत्रनामधेयेन द्वितीयं नामधेयं गुह्यमस्यान्यदभिवादनीयमोपनयनान्मातापितरौ संविदितौ भवतो विज्ञायते तस्माद्द्विनामा ब्राह्मण" इति । द्वितीयं व्यावहारिकापेक्षया तदेव गुह्य मन्यत् व्यावहारिकनाम्नोऽन्यत । नाक्षत्रमिति यावत् । न पुनस्तृतीयं "द्विनामा ब्राह्मण" इति वाक्यशेषासङ्गतेः । एतदेवाभिप्रेत्याहाश्वलायनः—"अभिवादनीयं च समीक्षेत तन्मातापितरौ विद्यातामोपनायना"दिति । येन नाम्नोपनीतोऽभिवादयते तच्च समीक्षेत कुर्यादित्यर्थः । तच्च मातापितरावेव विद्यातामोपनयनात् । शौनकोऽपि—

येन नाम्नोपनीतोऽसौ करिष्यत्यभिवादनम् ।
तच्चास्मिन्नेव समये कर्ताऽसौ नामकर्मणः ॥
अभिवादननामेदमस्त्वेत्यालोच्य चेतसा ।
उपांशु निर्दिशेच्चैतन्न जानीयुर्यथाऽपरे ॥
तच्च नामौपनयनं स्मरेतां पितरौ शिशोः ॥ इति ।

अथ नक्षत्रनामान्याह । ज्योतिर्विदस्तु जन्मनक्षत्रचरणलक्षितस्वरोदयाभिहितशतपदचक्रान्तर्गताक्षरादिकमेव कार्यमित्याहुः । तथा च गृह्यपरिशिष्टे—

तदक्षरादिकं नाम यस्मिन्धिष्ण्ये तदक्षरम् ॥ इति ।

शतपदचक्रसारोद्धारो ज्योतिषेऽभिहितः—

शुण्ठीकोष्ठेषु तिर्यक्त्ववकहड लिखाधःस्थितालीष्विदाद्यै-
स्तान्युक्तांश्च स्वरैश्च क्रमत इह कुयुग्घङ्छा मध्यकोष्ठे ।
घैर्घैरूर्ध्वाधरालीष्वनलभत इहासार्पमर्णैर्भपादा
एवं चान्येषु दद्यान्मटपरत पुयुक्षणठा मध्यकोष्ठे ॥
पितृभत इह भानि वा द्विदैवं नयभजखाश्च तथा भुयुग्धफौढः ।
हरिभमवाधिमैत्रतः स्युर्गसदचला वसुना दुयुग्झञौथः ।

अस्यार्थः । शुण्ठीकोष्ठेषु पञ्चविंशतिकोष्ठेषु तिर्यक् तिर्यक् मार्गेण अवकहड वर्णान् लिख । अधःस्थितालीषु अधःस्थितपङ्क्तिषु उक्तैः कथितैः इदाद्यैः स्वरैः तान् वर्णान् क्रमतः संयोज्य लिख । इकाराद्यैः स्वरैः तेषां वर्णानां संयोगः कथं कर्तव्यः ? तदेवाह—वकहड एतेषु इकारसंयोगेन विकिहिडि भवेत् । उकारसंयोगेन वुकुहुडु भवेत् । एकारसंयोगेन वेकेहेडे भवेत् । ओकारसंयोगेन वोकोहोडो भवेत् । इह अत्र चक्रे मध्यकोष्ठके कुयुक्घङछा लेख्याः । यत्र कोष्ठे कुकारस्तस्मिन्नेव कोष्ठे घङछा इत्यर्थः । एवं पञ्चविंशतिकोष्ठेषु वर्णा लेख्याः । घैर्घैश्चतुर्भिश्चतुर्भिर्वर्णैः अनलभतः कृत्तिकानक्षत्रतः आसार्पं अश्लेषापर्यन्तं नक्षत्रचरणा भवन्ति । यथा अइउए कृत्तिका । वोवाविवुरोहिणी । एवं सर्वत्र । अन्येषु पञ्चविंशतिकोष्ठेषु मटपरता लेख्याः । यत्र मध्यकोष्ठे पुकार तत्र षणठा लेख्याः ।

पितृभतः मघामारभ्य आद्रिदैवं विशाखान्तं इकारादिस्वरैर्युक्ता लेख्याः । मिटिपिरिति मुट्ठपुरुतु मेटेपेरेते मोटोपोरोतो । यत्र पुस्तत्र षण- ठ । मैत्रतः अनुराधामारभ्य हरिभमवधि श्रवणपर्यन्तम् । नयभजख नियिभिजिखि नुयुभुजुखु नेयेभेजेखे नोयोभोजोखो । यत्र भुः तत्र धफढ । वसुभात् धनिष्ठामारभ्य भरणीपर्यन्तम् । गसदचल गिसिदिचिलि गुसुदुचुलु गेसेदेचेले गोसोदोचोलो । यत्र दुः तत्र झञथ । चतुर्भिश्च- तुर्भिरक्षरैः एकैकं नक्षत्रं भवति । चतुश्चरणात्मकमेकं नक्षत्रं भवतीत्यर्थः ।

( शतपदचक्रम् )

( १ )

| | | | | |
|---|---|---|---|---|
| अ | व | क | ह | ड |
| इ | वि | कि | हि | डि |
| उ | वु | कु घ ङ छ | हु | डु |
| ए | वे | के | हे | डे |
| ओ | वो | को | हो | डो |

( २ )

| | | | | |
|---|---|---|---|---|
| म | ट | प | र | त |
| मि | टि | पि | रि | ति |
| मु | टु | पु ष ण ठ | रु | तु |
| मे | टे | पे | रे | ते |
| मो | टो | पो | रो | तो |

( ३ )

| | | | | |
|---|---|---|---|---|
| न | य | भ | ज | ख |
| नि | यि | भि | जि | खि |
| नु | यु | भु ध फ ढ | जु | खु |
| ने | ये | भे | जे | खे |
| नो | यो | भो | जो | खो |

( ४ )

| | | | | |
|---|---|---|---|---|
| ग | स | द | च | ल |
| गि | सि | दि | चि | लि |
| गु | सु | दु झ ञ थ | चु | लु |
| गे | से | दे | चे | ले |
| गो | सो | दो | चो | लो |

शतपदचक्रस्य स्पष्टार्थोऽभिहितः । ज्योतिषार्के—

चूचेचोला पदेऽश्वाद्ये लीलूलेलो यमस्य च ।
अईउए इमेऽग्नेर्भे ओवावीवू तथाऽर्कभे ॥
वेवोकाकी मृगः ख्यातः कूघङच्छास्तु रौद्रभे ।
केकोहाही त्वदितिभे हूहेहोडा च पुष्यभे ॥
डीडूडेडो इमे सार्पे मामीमूमे मघाभिधे ।
मोटाटिटू तथा भाग्ये टेटोपापिपर्यमर्क्षके ॥
पूषणठ तथा हस्ते पेपोरारीति चित्रभे ।
रूरेरोता तथा स्वातौ तीतूतेतो द्विदैवभे ॥
नानीनूने क्रमान्मैत्रे नोयायीयू इतीन्द्रभे ।
येयोभाभीति मूलाख्ये भूधफढ जलस्य भे ॥
भेभोजाजीति विश्वर्क्षे जूजेजोखाऽभिजिद्भवेत् ।
खीखूखेखो श्रुतौ ज्ञेया गागीगूगे च वासवे ॥
गोसासीसू जलेशर्क्षे सेसोदादीत्यजाङ्घ्रिभे ।
दूझञथ तथापान्त्ये देदोचाचीति पौष्णभे ॥ इति ।

अत्र ह्रस्वस्थाने दीर्घोच्चारस्तु न दोषाय भवति । ह्रस्वदीर्घप्लुतसवर्णत्वात् । अश्वाद्ये अश्विन्याद्ये पदे नवमांशे । ततश्च तत्तदक्षराणि चूडामणि चेदिपति चोलपति लाटपतिरित्यादीन्युन्नेयानि । तथा च तत्रैवोपसंहृतम्—

इति प्रोक्ता इमे पद्ये वर्णा नामादिजाः स्फुटाः ।
ज्ञेया मेषादिराशीनां नवभिर्नवभिः पदैः ॥

इति पूर्वोक्ताः नामादिजाः नामादौ जाताः । विशेषान्तरं हिरण्यकेशिसूत्रे "नक्षत्रनाम द्वितीयं स्यादन्यतरद्गुह्यं स्यादन्यतरेणैनमामन्त्रयेर"न्निति । अनेन व्यावहारिकस्याप्यभिवादनीयत्वं सिध्यति । तच्चाप्यभिवादनीयं नाम व्यावहारिकनामकरणानन्तरं कर्तव्यमित्याश्वलायनादिसूत्रपाठक्रमादवगम्यते । अथ व्यावहारिकं नामाह "द्व्यक्षरं चतुरक्षरं वे"ति सूत्रम् । अक्षरं स्वरः ते चाकारादयो नपुंसकवर्जा द्वाद-

श। द्वे अक्षरे यस्य तत् द्व्यक्षरं द्विस्वरमित्यर्थः। चत्वार्यक्षराणि यस्य तत् चतुरक्षरं चतुःस्वरयुक्तमित्यर्थः। व्यञ्जनेषु तु न सङ्ख्यानियमः। अत्र विशेषमाह वीरमित्रोदये बैजवापः "पिता नाम करोत्येकाक्षरं द्व्यक्षरं त्र्यक्षरमपरिमिताक्षरं वे"ति। "घोषवदादि"इति सूत्रम्। घोषवदक्षरं आदौ यस्य नाम्नः तद्घोषवदादि। कुचुटुतुपु इति वर्गाः। तेषां तृतीयचतुर्थपञ्चमवर्णा घोषाः। ते च यथा गघङ जझञ डढण दधन बभम। तदादि कर्तव्यम्। "अन्तरन्तस्थ"मिति सूत्रम्। अन्तः मध्ये अन्तस्था यस्य तत् अन्तरन्तस्थम्। अन्तस्था यरलवाः। "दीर्घाभिनिष्ठान"मिति सूत्रम्। दीर्घमह्रस्वं गुर्वित्यर्थः। अभिनिष्ठानं अवसानं समाप्तिः यस्य तद्दीर्घाभिनिष्ठानम्। दीर्घाभिनिष्ठानं विसर्गः। यथा देवः। आदौ घोषवन्तीनि मध्ये अन्तस्थानि अन्ते विसर्गः। "कृतं कुर्यादि"ति सूत्रम्। कृतं कृत्प्रत्ययान्तं कुमारस्य नामधेयं कुर्यात्। "न तद्धित"मिति सूत्रम्। तद्धितप्रत्ययान्तं न कुर्यात्। तथा च कारिकायाम्—

तच्च घोषवदाद्यन्तरन्तस्थं चतुरक्षरम्।
द्व्यक्षरं कृत्प्रत्ययान्तं विसर्गान्तमतद्धितम्॥

आश्वलायनोऽपि—

द्विदुव्यक्षरं द्व्यक्षरं वा नामकर्मणि शस्यते।
नाम पैतामहं शस्यं यादृशं वा द्विजन्मसु॥

तथा च रेणुः—

पितामहं च नाम स्यान्मातामहमथापि वा॥

पितामहो देवतानामप्युपलक्षणम्। तथा च वीरमित्रोदये कपिलसंहितायाम्—

एकादशेऽह्नि विधिवन्नाम कुर्यात्कुलोचितम्।
देवतानां विशेषेण पित्रोर्वा नाम शस्यते॥

मनुरपि—

मङ्गल्यं ब्राह्मणस्य स्यात्क्षत्रियस्य बलान्वितम्।
वैश्यस्य धनसंयुक्तं शूद्रस्य तु जुगुप्सितम्॥

मङ्गल्यं मङ्गलप्रतिपादकम् । यथा लक्ष्मीधरः । बलान्वितं शौर्य प्रतिपादकम् । यथा युधिष्ठिरः । धनसंयुक्तं धनप्रतिपादकशब्दसंयुक्तम् । यथा महाधनः । जुगुप्सितं निन्दाप्रतिपादकशब्दसंयुक्तम् । यथा नर दासः । "शर्म ब्राह्मणस्य वर्म क्षत्रियस्य गुप्तेति वैश्यस्ये"ति वक्ष्य माणं सूत्रम् । ब्राह्मणस्य विप्रस्य पूर्वोक्तलक्षणनामान्ते शर्मेति । यथा हर-दत्तशर्मा हरशर्मा हरिशर्मा भगवन्तशर्मा इत्यादि ।

तपसा ब्रह्मचर्येण शमेन च दमेन च ।
जगतां शर्मदानेन शर्मान्तं ब्राह्मणे भवेत् ॥

इत्याश्वलायनः । क्षत्रियस्य पूर्वोक्तलक्षणनामान्ते वर्मेति । यथा हरदत्तवर्मा हरिवर्मा ।

तापत्रयादतिबलाज्जगतां रक्षतीति यत् ।
तस्मात्सर्वसमे धीरे वर्मान्तं क्षत्रिये भवेत् ॥

क्षत्रियस्य शौर्यरक्षाप्रतिपादकं वा । यथा हरिसिंहः हरसिंहः सभासिंह इत्यादि । वैश्यस्य पूर्वोक्तलक्षणनामान्ते गुप्तेति । हरिगुप्त इति ।

काले काले धनं दत्वा सर्वान्गोपायतीति यत् ।
तस्माद्वैश्यस्य नामैतद्गुप्तं तमभिधीयते ॥

शूद्रस्य पूर्वोक्तलक्षणनामान्ते दासेति । हरिदास इत्यादि ।

द्विजाञ्छुश्रूषयन्नित्यं शूद्रस्तोषयतीति यत् ।
तस्मात्तस्य च दासत्वं तत्तत्स्त्रीणां तथा तथा ॥

यमः—

शर्मा देवश्च विप्रस्य वर्म राजा च भूभुजः ।
गुप्तो दत्तश्च वैश्यस्य दासः शूद्रस्य कारयेत् ॥

अथ स्त्रीणां नामकरणम् । "अयुजाक्षरमाकारान्तः स्त्रियै तद्धित-"मिति सूत्रम् । अयुजाक्षरं अयुजानि विषमाक्षराणि त्र्यादीनि यस्मिन्नाम्नि तदयुजाक्षरम् । आश्वलायनः—"युग्मानि त्वेव पुंसामयुजानि स्त्रीणा"मिति । शौनकोऽपि—

कुमार्याश्चेदमखिलं नाम कुर्यादमन्त्रकम् ।

पुंसां युग्माक्षरं नाम स्यात्स्त्रीणामयुजाक्षरम् ॥

अयुजानि विषमाक्षराणि त्रीणि पञ्च वेत्यादि। तथा च बैजवापः— "त्र्यक्षरमीकारान्तं स्त्रिया" इति। ईकारान्तं सावित्री देवकीत्यादि। अत्र घोषवदादिनियमो नास्ति। तथा च कारिका—

पुंसां युग्माक्षराणि स्युर्विपरीतानि योषिताम्।
पक्षो घोषवदित्यादिरेवकारादनादृतः ॥

घोषवदादिपक्षः स्त्रीणां नास्तीत्यर्थः। शर्मान्तादिनियमस्त्वत्राप्यस्त्येव। तेषां वर्णानां स्त्रियः कन्यकास्तासामपि तथा शर्मवर्माद्यन्तमित्यर्थः। तस्य च स्त्रीत्वेऽपि "मन" इति नान्तलक्षणस्य ङीपः प्रतिषेधाद्गार्गीशर्मेत्यादि पुंवत्प्रयोगः। "डाबुभाभ्या" मिति वा डाबन्तत्वे त्वाबन्तवद्गङ्गाशर्मामित्यादिरिति विशेषः। आकारान्तम्। आकारो अन्ते यस्मात्तदाकारान्तरम्। गिरिजा पुलोमजेत्यादि। मनुः—

स्त्रीणां च सुखमक्रूरं विस्पष्टार्थं मनोहरम्।
मङ्गल्यं दीर्घवर्णान्तमाशीर्वादाभिधानवत् ॥

सुखं सुखोच्चार्यम्, यशोदेत्यादि। अक्रूरं हिंसाद्यर्थरहितम् कुलश्रीत्यादि। विस्पष्टार्थं अव्याख्येयम् इन्दिरेत्यादि। इदमुदाहरणद्वयं व्यतिरेके। मनोहरम् कमलेत्यादि। मङ्गल्यम् सुभद्रेत्यादि। दीर्घवर्णान्तम् सुमित्रेत्यादि। आशिर्वादाभिधानवत् सौभाग्यवतीत्यादि। तद्धितप्रत्ययान्तम् च स्त्रियै नाम कुर्यादिति। यथा जयन्ती बाडेयी भाल्लुकी। यथा बालाकथा च। मासनामस्वपि—

कृष्णानन्ताच्युता चक्रिणी वैकुण्ठा जनार्दना।
उपेन्द्री यज्ञपुरुषा वासुदेवी हरिणी तथा ॥
योगेशी पुण्डरीकाक्षा,—इति।

एतद्व्यतिरिक्तनामान्यपि सन्ति संस्कारनृसिंहे—

श्रीः पद्मा कमला लक्ष्मीः सीता सत्या च रुक्मिणी।
माधवी चेन्दिरा देवी तुलसी जाम्बवती तथा ॥

पद्धतिरत्ने प्रकारान्तरेणाह—

मार्गशीर्षे च वाग्देवी ततः पद्मावती भवेत् ।
श्रीदेवी चापि सावित्री भूमिः कल्याणकी तथा ॥
सत्यभामा पुण्यवती इन्द्राणीन्दुमती तथा ।
चन्द्रामृता च लक्ष्मीश्च मासनामानि च स्त्रियः ॥

ज्योतिर्निबन्धे—

कन्यां नदीपर्वतपादपादिनाम्नीं तथा पुण्यदिवौकसाञ्च ।
तथाऽचलान्तां महिपक्षनाम्नीं प्राज्ञो न कुर्वीत हिताय नित्यम् ॥

अत्रायं दाक्षिणात्यशिष्टाचारः । तण्डुलान् कांस्यपात्रे प्रसार्य तदुपरि सुवर्णशलाकया कुलदेवताभक्त इत्यादि नामचतुष्टयं लेख्यम् । ततो "नामदेवताभ्यो नम" इति सम्पूज्य "अमुकनाम्ना त्वममुकोऽसी"ति स्वदक्षिणस्थमातुरुत्सङ्गस्थशिशोर्दक्षिणकर्णे कथयित्वा "मनोजूति"-रितिमन्त्रपाठः । ततो विप्रै"र्नाम सुप्रतिष्ठितमस्त्वि"त्युक्ते"ऽमुकनाम्ना अमुकनामायं भवतोऽभिवादयते । ते च"युष्मान्भवतु" इति वदेयुः । अथात्र कर्तृनिर्णयः । विष्णुपुराणे—

ततस्तु नाम कुर्वीत पितैव दशमेऽहनि ॥ इति ।

पितैवेत्येवकारः पितृपितामहादिसमवधाने पितृनियमार्थः । असमवधाने तु पितामहादिरपि कुर्यात् । तथा च शङ्खः "पिता नाम कुर्यादन्योऽपि वा कुलवृद्ध" इति । पिता मातुरप्युपलक्षणम् । तथा च बौधायनः—"दशम्यां द्वादश्यां वा मातापितरौ स्नात्वा शुच्यगारं कृत्वा पुत्रस्य नामधेयमस्य विधीयत" इति ।

अथास्य स्पष्टप्रयोगः । तत्र पूर्वाह्णे पित्रादिः कृताह्निकः प्राणानायम्य देशकालौ सङ्कीर्त्य "अस्य कुमारस्य बैजिकगार्भिकैनोनिबर्हणायुरभिवृद्धिद्वारा परमेश्वरप्रीतये नामकरणाख्यं संस्कारमहं करिष्ये । तदङ्गतया विहितं स्वस्तिवाचनं मातृकापूजनं वसोर्द्धारापूजनं नान्दीश्राद्धं चाहं करिष्ये । निर्विघ्नेन परिसमाप्त्यर्थं गणपतिपूजनं च करिष्ये" । सर्वं सम्पाद्य

"नामकरणाङ्गत्वेन विहितं ब्राह्मणत्रयभोजनं सम्प्रदास्ये" इति सङ्कल्प्य अनुच्छिष्टपाकेन त्रीनधिकान्वा ब्राह्मणान् भोजयित्वा प्रशस्तपात्रे तण्डुलान् प्रसार्य तदुपरि आदौ गणपतिस्मरणप्रतिपादकं लेख्यम्। ततो "लक्ष्मीनृसिंहभक्त" इत्यादि स्वकुलदेवतानाम लेख्यम्। ततो मासनाम "वैकुण्ठभक्त"इत्यादि लेख्यम्। ततोऽवहकडाचक्रानुसारेण जन्मनक्षत्रपादप्रयुक्ताद्याक्षरम् जन्मनाम "भैरव"इत्यादि लेख्यम। ततः पूर्वोक्तलक्षणं व्यावहारिकनाम "हरदत्तशर्मा"इत्यादि लेख्यम्। "नामदेवताभ्य"इति सम्पूज्य, मातुरुत्सङ्गस्थशिशोर्दक्षिणकर्णे "कुलदेवतानाम्ना लक्ष्मीनृसिंहभक्तोऽसि" इति कथनीयम्। मासनाम्ना "वैकुण्ठोऽसि"। नक्षत्रनाम्ना "भैरवोऽसि"। व्यावहारिकनाम्ना "हरदत्तशर्माऽसि"। इति नामचतुष्टयं कथनीयम्। 'मनो जूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमन्तनोत्वरिष्टं यज्ञꣳसमिमन्दधातु॥ विश्वे देवास इह मादयन्तामो३म्प्रतिष्ठ"इति मन्त्रान्ते "नाम सुप्रतिष्ठितमस्तु" इतिवक्तव्यम्। उत्थितो बद्धाञ्जलिः कर्ता "कुलदेवतानाम्ना नृसिंहभक्तनामायं भवतोऽभिवादयते"इति वदेत्। ते च "युष्मान् भवतु लक्ष्मीनृसिंहभक्ता३"इति वदेयुः। अनेनैव प्रकारेण मासनामनक्षत्रनामव्यावहारिकनामभिरन्योन्यमभिवादनप्रत्याभिवादनं कार्यमिति। यस्य यथागतं नामचतुष्टयं अभिवादनप्रत्यभिवादनादिष्वेवम्। ततः कर्ता विप्रान्नत्वा "कृतैतन्नामकरणाङ्गतया विहितदशसंख्याकान्ब्राह्मणान्भोजयिष्ये"। दक्षिणां दत्वा आशिषो गृहीत्वा, कुमार्या अपि नामकरणं कार्यम्। विषमाक्षरं तन्नाम।

इति श्रीरामकृष्णविरचिते गृह्यसूत्रविवरणे संस्कारगणपतौ नामकरणम्॥

---

अथ दोलारोहः। बृहस्पतिः—

दोलारोहस्तु कर्त्तव्यो दशमे द्वादशेऽहनि।
षोडशे दिवसे वापि द्वाविंशे दिवसेऽपि वा॥

प्रेङ्खो दोलिका क्वचित्खट्वेत्यपि पाठः । भविष्यपुराणे--

अभीष्टे पुण्यदिवसे चन्द्रताराबलान्विते ।
मृदुध्रुवक्षिप्रभेषु माता वा कुलयोषितः ॥
योगशायिहरिं स्मृत्वा प्राक्शीर्षं विन्यसेच्छिशुम् ॥

मृगचित्रा रेवती अनुराधा मृदूनि । रोहिणी उत्तरात्रयं ध्रुवम् । हस्ताश्विन्यौ पुष्य अभिजित् क्षिप्राणि । ज्योतिर्निबन्धेऽपि—

करत्रये वैष्णवरेवतीषु दितिद्वये चाश्विनकध्रुवेषु ।
कुर्याच्छिशूनां नृपतेश्च तद्वदान्दोलनं वै सुखिनो भवन्ति ॥
आन्दोलाशयने पुंसो द्वादशो दिवसः शुभः ।
त्रयोदशस्तु कन्याया न नक्षत्रविचारणा ॥
अन्यस्मिन्दिवसे चेत्स्यात्तिर्यगास्ये प्रशस्यते ॥

अथ दोलाचक्रम् । वीरमित्रोदये—

सूर्यभाच्चन्द्रभं यावत्पञ्च पञ्च चतुर्दिशम् ।
मध्ये तु सप्त देयानि दोलिकाचक्र उत्तमे ॥
पूर्वभागे च नैरुज्यं दक्षिणे मरणं ध्रुवम् ।
शेषेषु सप्त धिष्ण्येषु बालकस्य भवेदिति ॥

स्त्रीशूद्रयोरप्येतद्भवति दृष्टार्थत्वात् । दोलारोहस्तु नामकरणदिने तदुक्तमुहूर्ते वा कुलदेवता सम्पूज्य अलङ्कृतं शिशुं हरिद्रादिचर्चिते पालके मात्राद्याः सौभाग्ययुक्ताः स्त्रियो योगशायिनं हरिं स्मरन्त्यो गीतवाद्यादिसमकालं प्राक्शिरसं दक्षिणाशिरसं वा न्यसेयुः । अन्यदपि यथाचारं कार्यम् । इति पालकारोहः ।

अथ दुग्धपानं श्रीधरीये--

एकात्रिंशे वासरे वा द्वितीये जन्मर्क्षे वा शुद्धलग्नेऽनुकूले ।
शङ्खे क्षीरं सन्निदध्याच्छिशूनां वक्त्रे धात्रीपूज्यपूजां विधाय ॥

द्वितीयजन्मर्क्षे वेत्यन्वयः । शङ्ख इति तृतीयार्थे सप्तमी । नृसिंहोऽपि–

एकात्रिंशद्दिने चैव पयः शङ्खेन पाययेत् ।
अन्नप्राशननक्षत्रदिवसोदयराशिषु ॥

नाक्षत्रे मासि सम्पूर्णे जातर्क्षे तु विशेषतः ।
मासान्ते दुग्धपानं स्यात्पश्चात्काले सुशोभने ॥
उत्तरात्रयहस्तौ च त्वाष्ट्रवैष्णववासवाः ।
पौष्णाश्विनीमघास्वातीवरुणादितिजीवभम् ॥
रौहिण्यैन्दवमैत्राश्च दुग्धपाने शिशोः शुभाः ।
षष्ठीरिक्ताष्टमीदर्शा वर्ज्या विष्टिस्थिराणि च ॥
वर्ज्यास्त्वशुभयोगाश्च कृष्णे चान्त्यत्रिभागकः ।
अधोमुखानि वर्ज्यानि मीनाजालिगृहाणि च ॥
जीवशुक्रेन्दुसौम्यानां वारवर्गोदयेक्षणाः ।
शुभानां राशयः श्रेष्ठा विशिष्टाः शुभकर्मणि ॥
आयारिभ्रातृगाः पापाः विशेषेण शिशोः शुभाः ।
पूर्वाह्णे वापि मध्याह्ने कुर्याद्रात्रिं च वर्जयेत् ॥
योगनीराहुरुद्रादि मुखं चैव विवर्जयेत् ॥

योगिनीलक्षणम् —

शतमखेन्दुहुताशनरक्षसां यमजलेशसमीरणशूलिनाम् ।
दिशि दिशि क्रमशः परिवर्तते तिथिषु च प्रथमादिषु योगिनी ॥

अथ राहुलक्षणम्—

गुरुभान्वोर्वसेत्प्राच्यामिन्दौ शुक्रे च दक्षिणे ।
कालराहू कुजे प्रत्यगुत्तरे बुधमन्दयोः ॥

अथ रुद्रलक्षणम्—

हरिसोमवह्निराक्षसयमवरुणानिलहरालयेष्वेवम् ।
उदयादि भ्रमति सदा घटिकारुद्रो महाप्रबलः ॥ इति ।

इति दुग्धपानम् ।

अथाचारप्राप्तजलपूजा ।

कवीज्यास्तचैत्राधिमासे न पौषे जलं पूजयेत्सूतिका मासपूर्तौ ।
बुधेन्द्वीज्यवारेऽतिरिक्ते तिथौ हि श्रुतीज्यादितीन्द्वर्कनैर्ऋत्यमैत्रैः ॥

मुहूर्तमालायामपि—

सूतिकयापः पूज्याः करिहरिमित्रादितीज्यमूलेन्दौ ।

गुरुबुधचन्द्रेऽह्नि विना मध्वाधिपौषद्वितीयमासास्तम् ॥

अथ शिशोस्ताम्बूलभक्षणम् । ज्योतिर्निबन्धे-

सार्द्धे मासद्वये दद्यात्ताम्बूलं प्रथमं शिशोः ।
कर्पूरादिकसंमिश्रं विलासाय हिताय च ॥

मूलादितिद्रविणतिष्यकरोत्तरासु
पौष्णाश्विविष्णुरजनीकरशक्रभेषु ॥
वारेषु जीवशशिसूर्यसितेन्दुजानां
ताम्बूलभक्षणविधिः कथितः शिशूनाम् ॥

अथ निष्क्रमणम् "चतुर्थे मासि निष्क्रमणिका सूर्यमुदीक्षयति तच्चक्षुरिति" इति सूत्रम् । कुमारस्य जननाच्चतुर्थे मासि निष्क्रमणिका गृहाद्बहिर्नयनं कर्त्तव्यम् । ज्योतिर्निबन्धे बृहस्पतिः—

उपनिष्क्रमणं नाम गृहात्प्रथमनिर्गमः ।
अकृतायां क्रियायां स्यादायुःश्रीनाशनं शिशोः ॥
कृते सम्पद्विवृद्धिः स्यादायुर्वर्धनमेव च ॥

तत्र भाविष्यत्पुराणे-

द्वादशेऽहनि राजेन्द्र ! शिशोर्निष्क्रमणं गृहात् ॥

वीरमित्रोदये-

चतुर्थे मासि कर्तव्यं शिशोर्निष्क्रमणं गृहात् ॥

मुहूर्त्तसङ्ग्रहे-

अन्नप्राशनकाले वा कुर्यान्निष्क्रमणक्रियाम् ॥

अन्नप्राशनकालः षष्ठो मासः । तथा चाश्वलायनः-

चतुर्थे मासि कार्यं स्यादुपनिष्क्रमणं शिशोः ।
षष्ठे वा देवतास्थानमियादादाय तं शिशुम् ॥

शौनकोऽपि-

मासे चतुर्थे षष्ठे वा शिशोर्निष्क्रमणं गृहात् ।
विदधीतास्य पित्रादिर्हितैषी यश्च रक्षकः ॥

मासश्चात्र सावनः। तथा च यमः—

उपनिष्क्रमणं कुर्याच्चतुर्थे मासि सावने॥

बृहस्पतिः—

यात्रोक्तसमये मासि तृतीये द्वादशेऽह्नि वा।

राजमार्तण्डः—

मासे तृतीये शशिवृद्धिपक्षे क्षपाकरे गोचरशोभनस्थे।
उत्पातपापग्रहवर्जिते भे निष्काशनं सौख्यकरं शिशूनाम्॥

अथ पक्षनिर्णयः। मुहूर्तसङ्ग्रहे—

पूर्वपक्षः शुभः प्रोक्तः कृष्णे चान्त्यत्रिकं विना॥

अथ तिथयः—

रिक्ताषष्ठ्यष्टमीदर्शद्वादशीश्च विवर्जिताः॥

अथ वाराः। बृहस्पतिः—

जीवभार्गवसौम्यानां शिशुनिष्क्रमणक्रिया।
दिवसे शस्यते नित्यमायुर्वृद्धिधनप्रदा॥

अथ नक्षत्राणि। तत्र स एव—

अश्विनी रेवती हस्तधनिष्ठा रोहिणी तथा।
श्रवणं पुष्यसंयुक्तं मृगेणोत्तरफल्गुनी॥
अनुराधोत्तराषाढा तथा चैव पुनर्वसुः।
इमानि भानि शस्तानि शिशुनिष्क्रमणे विधौ॥

ज्योतिर्निबन्धे—

वर्ज्यास्त्वशुभयोगाः स्युर्विष्टिश्च शकुनादि च।
वृषालिमेषवर्ज्याः स्युस्तथैवाधोमुखानि च॥
केन्द्रत्रिकोणगाः सौम्याः पापाः षष्ठास्त्रिलाभगाः।
उपनिष्क्रमणे शस्ताः शिशोरायुःप्रवर्द्धनाः॥

निष्क्रमणस्वरूपमाहाश्वलायनः—

नयेदाकल्पकैः सम्यग्देवतायतनं गृहात्।
अभ्यर्च्य देवतामूर्तिं पञ्चघोषपुरःसरम्॥

आकल्पकैः भूषणैः । पञ्चघोषः पञ्चविधं वाद्यम् ।

भोजयित्वा द्विजान्गेहे स्वस्तिवाचनमाचरेत् ।
शाकुन्ते प्रजपेत्सूक्ते शिशोर्निष्क्रमणे पिता ॥

वीरमित्रोदये—

चतुर्थे मासि कर्तव्यं शिशोर्निष्क्रमणं गृहात् ।
दिगीशानां दिशां तत्र तथा चन्द्रार्कयोर्द्विजः ॥
पूजनं वासुदेवस्य गगनस्य च कारयेत् ।
ततस्त्वलङ्कृता धात्री बालमादाय पुजितम् ॥
बहिर्निष्कासयेद्गेहाच्छङ्खपुण्याहनिस्वनैः ॥

तदनन्तरकर्तव्यतामाह तत्रैव—

द्विजांश्चादर्शपूर्वाणि मङ्गलानि पुरा नयेत् ।
दर्पणः कलशः कन्यास्तथा सुमनसोऽक्षताः ॥
दीपमाला ध्वजं लाजाः संप्रोक्तं चाष्टमङ्गलम् ॥

सुमनसः पुष्पाणि—

विवाहे निष्क्रमे काम्ये वृद्धौ पूर्ते समागमे ।
उत्सवेषु च यात्रायां प्रशस्तं चाष्टमङ्गलम् ॥

अत्र विशेषमाह शौनकः—

निर्गमय्य गृहादेनं नीत्वा वा देवतालयम् ।
गन्धमाल्यादिभिस्तत्र पूजयित्वा च देवताम् ॥
प्रणमय्य च तं बालं ततो देवालयस्थितः ।
विद्वद्भिर्ब्राह्मणैराशीर्वादाद्यैरभिनन्दितम् ।
परिगृह्य ततः स्थानान्निष्क्रमय्य ततः शिशुम् ॥
मातुलादेः समासन्नबन्धोः प्रापय्य मन्दिरम् ।
तत्रोपहारदानाद्यैराशीर्भिश्चाभिलालितम् ॥
कुमारं परिगृह्यैनं प्रापयेत्स्वगृहं ततः ॥ इति ।

विशेषान्तरमाह बृहस्पतिः—

चतुरस्रे शुचौ देशे गोमयेनोपलेपिते ।

धान्यपुञ्जे समासीनं बालं बालामथापि वा ॥
अर्चयेद्गन्धपुष्पाद्यैस्तस्मिन्मूर्ध्नि ललाटके।
अस्य रक्षां ततः कृत्वा मृतसञ्जीवनं जपेत् ॥
तत्रार्चयेद्गणेशानं भूतेशानं तथैव च।
भक्ष्यैर्विचित्रैः सफलैः शिशुनाभ्यर्चयेद्बुधः ॥ इति।

मृतसञ्जीवनश्च मन्त्र"त्र्यम्बकं यजामहे" इत्यादिराद्यन्तयोः। इदं निष्क्रमणं कन्याया अपि भवति। अथात्र कर्तृनिर्णयः। तत्र शौनकः—

मासे चतुर्थे षष्ठे वा शिशोर्निष्क्रमणं गृहात्।
विदधीतास्य पित्रादिर्हितैषी यश्च रक्षकः ॥

आदिशब्दात्पितामहादीनां ग्रहणम्। कल्पतरुस्तत्र नान्दीश्राद्धं नेच्छति,

सूर्येन्द्वोः कर्मणी ये च तयोः श्राद्धं न विद्यते।

इति च्छन्दोगपरिशिष्टात्। तच्छन्दोगाना विषयम्।

अथास्य स्पष्टप्रयोगः। पत्नीकुमारसहितः कृतमङ्गलस्नान आचम्य प्राणानायम्य देशकालौ स्मृत्वा "अस्य कुमारस्य गृहान्निष्क्रमणमहं करिष्ये। तदङ्गतया विहितं मातृपूजनपूर्वकं नान्दीश्राद्धं चाहं करिष्ये"। मातृपूजाभ्युदयिकं विधाय अलङ्कृतं शिशुं मातुरङ्के कृत्वा ततः कुलदेवतां गणपतिं च स्मृत्वा वेदघोषवादित्रादिसहितं गृहाद्बहिरानीय पिता कुमारं सूर्यमुदीक्षयेत्। तत्र मन्त्रः—"ॐतच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत्। पश्येम शरदः शतञ्जीवेम शरदः शतꣳ शृणुयाम शरदः शतं प्रब्रवाम शरदः शतमदीनाः स्याम शरदः शतं भूयश्च शरदः शतात्"। तदनन्तरं देवालयं नीत्वा प्रदक्षिणं कारयित्वा देवालये प्रविश्य गन्धमाल्यादिभिस्तां देवतां पूजयेत्। तत्रस्थेभ्यो ब्राह्मणेभ्यो बहुविधा आशिषो गृहीत्वा मातुलादेः समासन्नबन्धोः मन्दिरं गत्वा तत्रोपहारादिकं गृहीत्वा स्वगृहं प्रविशेत्। तदनन्तरं शुचौ देशे चतुरस्रे गोमयेनोपलेपितधान्यराशौ बालकं उपवेश्य तन्मूर्ध्नि ललाटे गन्धाद्यैरर्चयित्वा मृतसञ्जीवनं मन्त्रं जपेत्। अत्र गणपतिं सदाशिवं

भक्ष्यैर्नानाविधैः सम्पूजयेत् । अस्मिन्नेव मासे शुभदिने रात्रौ कुमारस्य चन्द्रदर्शनं कारयेत् ।

चन्द्रार्कयोर्दिगीशानां दिशां च वरुणस्य च ।
निक्षेपार्थमिमं दद्मि ते त्वां रक्षन्तु सर्वदा ॥
प्रमत्तं वा प्रसुप्तं वा दिवारात्रमथापि वा ।
रक्षन्तु सततं सर्वे देवाः शक्रपुरोगमाः ॥

एवं शिशुरक्षणार्थं देवान्प्रार्थयेत् । तूष्णीं तस्मिन्नहनि वा इति गदाधरः ।

इति श्रीप्रथमशाखीयरामकृष्णविरचिते पारस्करगृह्यसूत्रविवरणे संस्कारगणपतौ प्रथमकाण्डे सप्तदशी कण्डिका ।

---

अथ भूम्युपवेशनम् । विष्णुधर्मोत्तरे परशुरामं प्रति आह पुष्करः—

पञ्चमे च तथा मासि भूमौ तमुपवेशयेत् ।
तत्र सर्वे ग्रहाः शस्ता भौमो राम ! विशेषतः ॥
तिथिश्च वर्जयेद्रिक्तां शस्तानि शृणु भानि मे ।
उत्तरात्रितये सौम्ये पुष्यर्क्षे शक्रदेवतम् ॥
प्राजापत्यं च हस्तं च शस्तमाश्विनमित्रभम् ।

अथेतिकर्तव्यता । तत्रैव—

वराहं पूजयेद्देवं पृथिवीं च तथा द्विज ! ।
पूजनं पूर्ववत्कृत्वा गुरुदेवद्विजन्मनाम् ॥
भूभागमुपलिप्याथ कृत्वा तत्र तु मण्डलम् ।
शङ्खपुण्याहशब्देन भूमौ तमुपवेशयेत् ॥

अत्र शङ्खशब्दः सर्ववाद्योपलक्षणार्थः । ज्योतिर्निबन्धे—

तस्मिन्काले स्थापयेत्तत्पुरस्ताद्वस्त्रं शस्त्रं पुस्तकं लेखनीयम् ।
स्वर्णं रौप्यं यच्च गृह्णाति बालस्तैराजीवैस्तस्य वृत्तिः प्रदिष्टा ॥

अथ प्रयोगः—प्राणानायम्य देशकालौ स्मृत्वा "अस्य कुमारस्य आयुरारोग्याभिवृद्ध्यर्थं भूम्युपवेशनमहं करिष्ये । तदङ्गतया विहितं

गणपतिपूजनस्वस्तिपुण्याहवाचनं करिष्ये" । सर्वं पूर्ववद्विधाय । वराहपृथिवीगुरुदेवद्विजान् नाममन्त्रेण पूजयित्वा भूभागमुपलिप्य तत्र मण्डलं कृत्वा तत्र शङ्खतूर्यादिमाङ्गलिकध्वनौ क्रियमाणे शिशुमुपवेशयेत् । तत्र मन्त्रः—

रक्षैनं वसुधे ! देवि ! सदा सर्वगतं शुभे ! ।
आयुःप्रमाणं निखिलं निक्षिपस्व हरिप्रिये ! ॥
अचिरादायुषस्त्वस्य ये केचित्परिपन्थिनः ।
जीवतो रोग्यवित्तेषु निर्दहस्वाचिरेण तान ॥
धरण्यशेषभूतानां मातस्त्वमसि कामधुक् ! ।
अजरा चाप्रमेया च सर्वभूतनमस्कृता ॥
चराचराणां भूतानां प्रतिष्ठानाऽव्यया ह्यसि ।

ततो ब्राह्मणान् पूजयित्वा शिशोर्वाचयित्वा नीराजनाद्युत्सवं कुर्यात् । एतस्मिन्नेव काले वस्त्रशस्त्रपुस्तकलेखनीस्वर्णरौप्यान्नानां तदग्रे स्थापितानां मध्ये यद्वस्तु गृह्णाति बालस्तस्य सैव वृत्तिः । तद्वस्त्योपजीविका ।

इति संस्कारगणपतौ भूम्युपवेशनम् ।

---

अथ प्रथमादिमासेषु दन्तोत्पत्तिफलम् । ज्योतिर्निबन्धे—

दन्तैर्युतश्चेत्प्रथमेऽर्भकः स स्वयं विनश्येदनुजं द्वितीये ।
हन्ति तृतीये भगिनीं चतुर्थे स्वमातरं बाणमितेऽग्रजातम् ॥
षष्ठादिमासेषु शुभं फलं स्यात्स्वकं यदा जन्म भवेत्तु दन्तैः ।
यस्योर्ध्वपङ्क्तौ प्रथमं रदाः स्युः स्वमातरं स्वं च निहन्ति तातम् ॥

अथास्य शान्तिः—

गजपृष्ठगतं बालं नौस्थं वा स्थापयेद्द्विजम् ।
तदभावे तु धर्मज्ञ ! काञ्चने तु वरासने ॥
सर्वौषधैः सर्वगन्धैर्बीजैः पुष्पैः फलैस्तथा ।
पञ्चगव्येन रत्नैश्च मृत्तिकाभिश्च भार्गव ! ॥
स्थालीपाकेन धातारं पूजयेत्तदनन्तरम् ।
सप्ताहं चात्र कर्तव्यं तथा ब्राह्मणभोजनम् ॥

अष्टमेऽहनि विप्राणां तथा देया च दक्षिणा ।
काञ्चनं रजतं गाश्च भुवं वासनमेव च ॥

अथ कटिसूत्रबन्धनम्—

कटिसूत्रं मृदुक्षिप्रध्रुवेन्द्विन्द्रैः शुभेऽहनि ।
बध्वा च पञ्चमे मासि शिशोर्भूम्युपवेशने ॥

अथकर्णवेधः । तत्र याज्ञिकाः पठन्ति—

"अथ कर्णवेधो वर्षे तृतीये पञ्चमे वा पुष्येन्दुचित्राहरिरेवतीषु पूर्वाह्णे कुमारस्य मधुरं दत्वा प्रत्यङ्मुखायोपविष्टाय दक्षिणं कर्णमभिमन्त्रयते भद्रं कर्णेभिरिति वक्ष्यन्तीवेदिति चाथ भिन्द्यात्तो ब्राह्मणभोजन"मिति परिशिष्टम् ।

वीरमित्रोदये बृहस्पतिः—

जन्मतो दशमे वाह्नि द्वादशे वाथ षोडशे ।
सप्तमे मासि वा कुर्याद्दशमे मासि वा पुनः ॥

तथा च गर्गः—

मासे षष्ठे सप्तमे वाप्यष्टमे द्वादशेऽह्नि वा ।
कर्णवेधं प्रशंसन्ति पुष्ट्यायुःश्रीविवृद्धये ॥

मदनरत्नेऽपि—

प्रथमे सप्तमे मासि अष्टमे दशमे तथा ।
द्वादशे च तथा कुर्यात्कर्णवेधं शुभावहम् ॥

वत्सरे अयुग्म इत्यर्थः । वीरमित्रोदये—

अर्केऽनुकूले शशिनि प्रशस्ते ताराबले चन्द्रविवृद्धिपक्षे ।
अयुग्मवर्षे शुभदं शिशूनां कर्णस्य वेधं मुनयो वदन्ति ॥

तथा च राजमार्तण्डः—

ताराचन्द्रानुकूलेऽह्नि शस्ते भास्वति वाक्पतौ ।
अयुक्संवत्सरे प्राहुः कर्णवेधविधिं बुधाः ॥

अत्राजातदन्तस्यैव कर्णवेधो मुख्यः । कारिकायाम्—

शिशोरजातदन्तस्य मातुरुत्सङ्गसर्पिणः ॥ इति ।

अथ मासादि । वीरमित्रोदये व्यासः—

कार्तिके पौषमासे वा चैत्रे वा फाल्गुनेऽपि वा ।
कर्णवेधं प्रशंसन्ति शुक्लपक्षे शुभे दिने ॥

ज्योतिर्निबन्धे—

वेध्यौ कर्णावदन्तस्य विषमेऽब्दे पिता शिशोः ।
शुक्लपक्षे शुभे वारे चैत्रपौषोर्ज्जफाल्गुने ॥

नृसिंहः—

एकादश्यष्टमीपर्वरिक्तावर्ज्याः शुभावहाः ।
श्रेष्ठाश्च तिथयः सर्वाः कृष्णे चान्त्यत्रिकं विना ॥
शकुन्यादीनि विष्टिश्च विशेषेण विवर्जयेत् ।
शुभयोगेषु सर्वेषु कर्णवेधः शुभावहः ॥
कर्णद्वयादितिक्षिप्रमृदुभैस्त्र्यायगैः शुभैः ।
गुरौ लग्नेऽथ केऽप्याहुरुत्तरासु श्रुतिव्यधः ॥

वृद्धनारदः—

वृषभे मिथुने मीने कुलीरे कन्यकासु च ।
तुलाचापे तु कुर्वीत कर्णवेधं शुभावहम् ॥
रन्ध्रारिव्ययगो नेष्टो गुरुः शेषेषु शोभनः ।
सुतरन्ध्रगतः सौम्यो नेष्टः शेषेषु शोभनः ॥
सप्ताष्टमगतः शुक्रो न शुभोऽन्यत्र शोभनः ।
चन्द्रो द्वित्रिसुतस्त्रीषु धर्मकर्मगतः शुभः ॥
त्रिषडायगताः सौम्याः शुभाः कर्णस्य वेधने ।
कर्णवेधे त्रिलाभस्थौ क्रूरौ नेष्टौ शुभाशुभौ ॥

स च रात्रौ न कार्यः । तथा च वशिष्ठः—

न कश्चिदिष्टोऽष्टमराशिसंस्थस्तिथिद्वयं वा यमसंज्ञकं च ।
न तत्र कुर्याद्दिवसे विशेषाद्रात्रौ न कुर्यात्खलु कर्णवेधम् ॥ इति ॥

अथ सूचीनिर्णयः । तत्र बृहस्पतिः—

शातकुम्भमयी सूची वेधने शोभनप्रदा ।

राजती वायसी वापि यथाविभवतः शुभा ॥

स्मृतिमहार्णवे ताम्रीत्यप्युक्तम् ।

शुक्लसूत्रसमायुक्तताम्रसूच्याथ वेधयेत् ।

अथ वर्णविशेषण सूचीव्यवस्था । तत्र वीरमित्रोदये बृहस्पतिः—

सौवर्णी राजपुत्रस्य राजती विप्रवैश्ययोः ।
शूद्रस्य चायसी सूची मध्यमाष्टाङ्गुलात्मिका ॥

मध्याङ्गुलीमध्यमपर्वमितमङ्गुलं तेन प्रमाणेनाष्टाङ्गुलेत्यर्थ इति प्राञ्चः । तन्न, अनक्षरार्थत्वात् । किन्तु मध्यमा चासावष्टाङ्गुलात्मिकेति सम्योऽर्थः । मध्यमा नातिस्वल्पा नात्यधिकेत्यर्थः । अथेतिकर्तव्यता । विष्णुधर्मोत्तरे—

शिशोरेवाथ कर्तव्यं कर्णवेधं यथा शृणु ।
पूर्वाह्णे पूजनं कुर्यात्केशवस्य हरस्य च ॥
ब्रह्मणश्चन्द्रसूर्याभ्यां दिगीशानां तथैव च ।
नासत्ययोः सरस्वत्या ब्राह्मणानां गवां तथा ॥
गुरूणां मण्डनं कृत्वा तत्र दत्वा वरासनम् ।
तथोपवेशयेत्तत्र धात्रीं शुक्लाम्बरां तथा ॥
अलङ्कृतं तदुत्सङ्गे बालं धृत्वा तु सान्त्वितम् ।
धृतस्य निश्चलं सम्यगलक्तकरसाङ्किते ॥
विध्येदेवं कृते च्छिद्रे सकृदेवात्र लाघवात् ।
प्राग्दक्षिणे कुमारस्य भिषग्वामे तु योषितः ॥
शिशोर्विवर्धनं कार्यं यावदाभरणक्षमम् ।
कर्णवेधदिने विप्राः सांवत्सरचिकित्सकौ ॥
पूज्याश्चाविधवा नार्यः सुहृदश्च तथा द्विजाः ॥ इति ।

अथ कर्णक्षालनमाह । ज्योतिर्निबन्धे —

वेधात्तृतीयनक्षत्रे क्षालयेदुष्णवारिणा ॥ इति ॥

अत्र पुरुषकर्णरन्ध्रवृद्धिविषये विशेषमाह देवलः—

कर्णरन्ध्रे रवेश्छाया न विशेदग्रजन्मनः ।

तं दृष्ट्वा विलयं यान्ति पुण्यौघाश्च पुरातनाः ॥
तस्मै श्राद्धं न दातव्यं यदि चेदासुरं भवेत् ॥

अविद्धकर्णादिनिषेधमाह शालङ्कायनः—

अविद्धकर्णैर्यद्भुक्तं लम्बकर्णैस्तथैव च ।
दग्धकर्णैस्तु यद्भुक्तं तद्वै रक्षांसि गच्छति ॥

तत्प्रमाणमाहतुः शङ्खगोभिलौ—

हनुमूलादधः कर्णौ लम्बौ तु परिकीर्त्तितौ ।
त्र्यङ्गुलौ त्र्यङ्गुलौ शस्तौ तेन शातातपोऽब्रवीत् ॥

स्त्रीशूद्रयोरप्येतद्भवति । अथास्य स्पष्टप्रयोगः । पूर्वोक्तदिने कुमारेण सह पितरौ स्नात्वाऽहतवासांसि परिधाय उपविश्य देशकालौ स्मृत्वा "अस्मिन्पुण्याहे अस्य कुमारस्य कर्णवेधमहं करिष्ये । तदङ्गत्वेन विहितं स्वस्तिपुण्याहवाचन मातृकापूजनं नान्दीश्राद्धं चाहं करिष्ये"—सर्वं सम्पाद्य पूर्वाह्णे "केशवं हरं ब्रह्माणं चन्द्रमसं सूर्यं दिक्पालान् अश्विनीकुमारौ सरस्वतीं ब्राह्मणान् गवां" नाममन्त्रेण पूजयित्वा, ततो गुरून् वरासने उपवेश्य पूजयित्वा, ततो वरासने धात्रीं उपवेश्य तदुत्सङ्गे पूर्वाभिमुखमलङ्कृतं बालकं धृत्वा कुमारहस्ते शर्करादिमधुरं दत्वा पिता अन्यो वा दक्षिणकर्णं यथोक्तसूच्या वेधयेत् । ततो वामम् । "भद्रं कर्णेभि"रित्यनेन दक्षिणकर्णमभिमन्त्रयते ।

'वृक्ष्यन्तीवेदागनीगन्ति कर्णं प्रियꣳ सखायं परिषस्वजाना ।
योषेव शिङ्क्ते वितताधिधन्वञ्ज्या इयꣳ समने पारयन्ती ।

इति मन्त्रेण वाममभिमन्त्रयते । ततः कर्णवेधनिमित्तं यथाशक्ति ब्राह्मणभोजनम् । वेधात्तृतीयनक्षत्रे उष्णवारिणा क्षालयेत् । अथ कन्याया नासवेधः ।

कन्याया घ्राणवेधः सन्सद्वारे विषमेऽब्दके।
आद्ययामे सिते पक्षे मैत्रक्षिप्रोत्तराचरे ॥

इति श्रीप्रथमशाखीयरामकृष्णविरचिते पारस्करगृह्यसूत्रविवरणे संस्कारगणपतौ कर्णवेधः कन्याया नासावेधः ।

( अष्टादशी कण्डिका )

प्रोष्येत्य गृहानुपातिष्ठते पूर्ववत्पुत्रं दृष्ट्वा जपत्यङ्गा-दङ्गात्सम्भवसि हृदयादधि जायसे । आत्मा वै पुत्रनामासि स जीव शरदः शतमित्यथास्य मूर्द्धानमवजिघ्रति प्रजापतेष्ट्वा हिङ्कारेणावजिघ्रामि सहस्रायुषासौ जीव शरदः शतमिति गवान्त्वा हिङ्कारेणेति च त्रिर्दक्षिणेऽस्य कर्णे जपत्यस्मे प्रयन्धि मघवन्नृजीषिन्निन्द्र रायो विश्ववारस्य भूरेः । अस्मे शतꣳशरदो जीवसे धा अस्मे वीरान्छश्वत इन्द्र शिप्रिन्नितीन्द्र ज्येष्ठानि द्रविणानि धेहि चित्तिन्दक्षस्य सुभगत्वमस्मे । पोषꣳरयीणामरिष्टिन्तनूनाꣳस्वाद्मानं वाचः सुदिनत्वमन्हामिति सव्ये स्त्रियै तु मूर्द्धानमेवावजिघ्रति तूष्णीम् ॥ १८ ॥

प्रोष्य गृहागमनविधिः । "प्रोष्येत्य गृहानुपातिष्ठते पूर्वव"दिति सूत्रम् । साग्निकः प्रवासं कृत्वा एत्य गृहान् गृहस्थितान् भार्यापुत्रादीनुपतिष्ठते तत्समीपे स्थित्वा मन्त्र पठति । पूर्ववत् श्रौतवत् । "गृहा मा बिभीते"ति त्रिभिर्मन्त्रैरित्यर्थः । उपस्थानानन्तरम् "क्षेमाय व" इति प्रवेशनमिति भर्तृयज्ञहरिहरौ । प्रवासश्च साग्निकेन द्रव्यार्जनादिदृष्टकार्यार्थमेव केवलेन पुरुषेण कार्यः । न तु तीर्थयात्राद्यदृष्टकार्यार्थमिति प्रयोगरत्ने । "पुत्रं दृष्ट्वा जपत्यङ्गादङ्गात्सम्भवति हृदयादधिजायसे । आत्मा वै पुत्रनामासि स जीव शरदः शतमिति" इति सूत्रम् । पुत्रं आत्मजं दृष्ट्वा विलोक्य "अङ्गादङ्गा"दिति मन्त्रं पठति । मन्त्रार्थः—हे पुत्र ! यतस्त्वमङ्गात्सम्भवासि उत्पत्स्यसे हृदयात् । अतोऽङ्गादपि अविकतया जायसे । अतस्त्वं वै निश्चितं पुत्रनामा आत्मा अभिन्नरूपोऽसि । स त्वं शतं शरदो वर्षाणि जीव प्राणिहि । "अथास्य मूर्धानमवजिघ्रति प्रजापतेष्ट्वा हिङ्कारेणावजिघ्रामि सहस्रायुषासौ जीव शरदः शतमिति" इति सूत्रम् । जपोत्तरं अस्य पुत्रस्य मूर्धानं शिर अवजिघ्रति अवाचीनं जिघ्रति "प्रजापतेष्ट्वे"ति मन्त्रेण । असाविति तस्यैव

नामग्रहणम् । **मन्त्रार्थः**—प्रजापतेर्ब्रह्मणः हिङ्कारेण स्नेहादिकृतध्वनिविशेषेण सामवेदावयवेन वा । त्वा त्वां अवजिघ्रामि शिरसि चुम्बामि । अतोऽवघ्राणात् हे असौ अमुकशर्मन् ! सहस्रायुषा सुबहुजीवनेन । शरदः शतमिति उक्तोऽर्थः । **"गवां त्वा हिङ्कारेण च त्रिः"** इति सूत्रम् । **"गवान्त्वे"**ति च मन्त्रेण त्रिरवजिघ्रति । सहस्रायुषेत्यादेरत्राप्यनुषङ्गः । तेन प्रजापतिस्थाने गवान्त्वेतिपदं मन्त्रे पठेदित्यर्थः । ततश्च **"गवान्त्वा हिङ्कारेणावजिघ्रामि सहस्रायुषाऽमुकशर्मन् जीव शरदः शत-"**मिति मन्त्रेण सकृन्मूर्धानमवघ्राय द्विस्तूष्णीमवजिघ्रति । **"दक्षिणेऽस्य कर्णे जपत्यस्मे प्रयन्धि मघवन्नृजीषिन्निन्द्र रायो विश्ववारस्य भूरेः । अस्मे शतꣳशरदो जीवसे धा अस्मे वीराञ्छश्वत इन्द्र शिप्रिन्निति"** इति सूत्रम् । अस्य पुत्रस्य दक्षिणकर्णे **"अस्मे प्रयन्धि मघवन्नि"**ति मन्त्रं जपति । **मन्त्रार्थः**—हे मघवन् इन्द्र ! ऋजीषिन् स्निग्धचित्त ! हे इन्द्र ! लोकेश ! शिप्रिन् सुखद !, लघुहस्तेति वा । अस्मे अस्मै कुमाराय रायः ऐश्वर्याणि धनानि च प्रयन्धि प्रयच्छ । विश्ववारस्य सर्ववरणीयस्य । वराणां समूहो वारं सर्वेषां वाराणां समूहः सर्ववारं तस्येति वा । भूरेर्बहुतरस्य । उभयत्र कर्मणि षष्ठी । प्रचुरसर्ववारं रायं प्रयच्छ इत्यर्थः । प्रयोजनमाह—अस्मे अस्य शतं शरदो जीवसे जीवनायेति । किञ्च अस्मे अस्मिन् वीरान् पुत्रान् शश्वतः शाश्वतान् दीर्घायुषः धाः निधेहि । अस्मे देहीत्यर्थः । **"इन्द्र ज्येष्ठानि द्रविणानि धेहि चित्तिं दक्षस्य सुभगत्वमस्मे । पोषꣳरयीणामरिष्टिं तनूनाꣳस्वाद्मानं वाचः सुदिनत्वमह्नामिति सव्ये"** इति सूत्रम् । सव्ये सव्ये कर्णे **"इन्द्र ज्येष्ठानी"**ति मन्त्रं जपति । **मन्त्रार्थः**—हे इन्द्र ! परमैश्वर्ययुक्त ! अस्मे अस्मिन् ज्येष्ठानि समज्ञादीनि धेहि स्थापय । चित्तिं ज्ञानं दक्षस्य प्रजापतेरिव सुभगत्वं सौभाग्यं सर्वं सुभगत्वं च धेहि । तथा रयीणा धनानां पोषं पुष्टिं तनूनां अवयवाना अरिष्टिं नीरोगत्वं वाचः वाण्याः स्वाद्मानं स्वादुत्वं माधुर्यमिति यावत् । अह्नां दिनानां सुदिनत्वं साफल्यं च धेहीति । **"स्त्रियै तु मूर्द्धानमेवावजिघ्रति**

तूष्णी"मिति सूत्रम् । स्त्रियाः दुहितुः पुत्रिकाया मूर्द्धानमेव तूष्णीं जिघ्रति, न त्वन्यत् । एवकारेण दर्शनजपकर्णजपयोर्निवृत्तिरिति हरिहरः । एवकारकरणं कर्णजपप्रतिषेधार्थमिति भर्तृयज्ञः ।

इति श्रीप्रथमशाखीयरामकृष्णविरचिते पारस्करगृह्यसूत्रविवरणे संस्कारगणपतौ प्रथमकाण्डे अष्टादशी कण्डिका ।

---

अथास्य स्पष्टप्रयोगः । प्रवत्स्यन् यजमानः स्वगृहं प्रविशति, पुत्रं दृष्ट्वा जपति "अङ्गादङ्गात्सम्भवसि हृदयादधिजायसे । आत्मा वै पुत्रनामासि स जीव शरदः शतम्" । अथास्य मूर्द्धानमवजिघ्रति । तत्र मन्त्रः—"प्रजापतेष्ट्वा हिङ्कारेणावजिघ्रामि सहस्रायुषा हरदत्तशर्मन् जीव शरदः शतम्" इति मन्त्रेण सकृत् । द्विस्तूष्णीं । "गवां त्वा हिङ्कारेणावजिघ्रामि सहस्रायुषा हरदत्तशर्मन् ! जीव शरदः शतम्" इति मन्त्रेण सकृत् द्विस्तूष्णीं मूर्द्धानमवजिघ्रति । अथ दक्षिणे कर्णे जपति "अस्मे प्रयन्धि मघवन्नृजीषिन्निन्द्र रायो विश्ववारस्य भूरेः । अस्मे शतꣳशरदो जीवसे धा अस्मे वीराञ्छश्वत इन्द्र शिप्रिन्" । अथ सव्यकर्णे जपति । "इन्द्र श्रेष्ठानि द्रविणानि धेहि चित्तिं दक्षस्य सुभगत्वमस्मे । पोषꣳरयीणामरिष्टिन्तनूनाꣳ स्वाद्मानं वाचः सुदिनत्वमह्नाम्" । अथ कन्यापत्यस्य तु मूर्द्धानमेवावजिघ्रति तूष्णीम् । इति संस्कारगणपतौ प्रोष्येत्यकृत्यम् ।

---

## ( एकोनविंशतिकण्डिका )

**षष्ठे मासेऽन्नप्राशनꣳस्थालीपाकꣳश्रपयित्वाज्यभागाविष्ट्वाज्याहुतीर्जुहोति दैवीं वाचमजनयन्त देवास्तां विश्वरूपाः पशवो वदन्ति । सा नो मन्द्रेषमूर्जन्दुहाना धेनुर्वागस्मानुपसुष्टुतैतु स्वाहेति वाजो नो अद्येति च द्वितीयाꣳस्थालीपाकस्य जुहोति प्राणेनान्नमशीय स्वाहाऽपानेन गन्धानशीय स्वाहा चक्षुषा रूपाण्यशीय**

स्वाहा श्रोत्रेण यशोऽशीय स्वाहेति प्राशनान्ते सर्वान्नसान्सर्वमन्नमेकतोदृधृत्याथैनं प्राशयेत्तूष्णीᳬ हन्तेति वा हन्तकारं मनुष्या इति श्रुतेर्भारद्वाज्या माᳬसेन वाक्प्रसारिकामस्य कपिञ्जलमाᳬसेनान्नाद्यकामस्य मत्स्यैर्जवनकामस्य कृकषाया आयुष्कामस्याड्या ब्रह्मवर्चसकामस्य सर्वैः सर्वकामस्यान्नपर्याय वा ततो ब्राह्मणभोजनमन्नपर्याय वा ततो ब्राह्मणभोजनम् ॥ १९ ॥

अथान्नप्राशनम् । "षष्ठे मासेऽन्नप्राशन"मिति सूत्रम् । जन्मतः षष्ठे मासे कुमारस्यान्नप्राशनाख्यं कर्म कुर्यात् । तथा च नारदः—

तन्मतो मासि षष्ठे स्यात्सौरेणोत्तममन्नदम् ।
तदभावेऽष्टमे मासे नवमे दशमेऽपि वा ॥
द्वादशे वाऽपि कुर्वीत प्रथमान्नाशनं परम् ।
संवत्सरे वा सम्पूर्णे केचिदिच्छन्ति पण्डिताः ॥

नवमे इति कन्याभिप्रायेण । बृहस्पतिरपि—

पञ्चाशद्दिवसात्त्रिघ्नात्पश्चात्त्रिहतषष्ट्यहात् ।
अर्वागेवोत्तमा भुक्तिर्मास्यन्येऽप्येवमूचिरे ॥

त्रिघ्नात्त्रिगुणात् सार्धशत१५०दिवसादिति यावत् । त्रिहतषष्ट्यहात् त्रिगुणितषष्ठिदिनात् । १८० साशीतिशततमदिवसादिति यावत् । अथ स्त्रीणामन्नप्राशनकालः । तत्र वशिष्ठः—

युग्मेषु मासेषु च सत्सु पुंसां संवत्सरे वा नियतं शिशूनाम् ।
अयुग्ममासेषु च कन्यकानां नवान्नसंप्राशनमिष्टमेतत् ॥

श्रीपतिः—

षष्ठे मासे प्राशनं दारकाणामन्यस्मिंस्तत्कन्यकानां विधेयम् ॥

अन्यस्मिन्नयुग्मे विषमे । तदेतत्स्पष्टमाह नारदः—

षष्ठे मास्यष्टमे वाऽथ पुंसां स्त्रीणान्तु पञ्चमे ।
सप्तमे मासि वा कार्यं नवान्नप्राशनं शुभम् ॥

मासश्चात्र सौरः सावनो वा । वीरमित्रोदये—

जन्मतो मासि षष्ठे स्यात्सौरेणोत्तममन्नदम् ॥ इति ।

अथात्र पक्षनिर्णयः । नारदः—

पक्षयोरुभयोरुक्तं कृष्णे चान्त्यत्रिकं विना ॥

अथ तिथयः । लघुनारदः—

द्वितीया च तृतीया च पञ्चमी सप्तमी तथा ।
त्रयोदशी च दशमी प्राशने तिथयः शुभाः ॥

वीरमित्रोदये—

पञ्चपर्वसु रिक्तायां नन्दायामाद्यभोजनम् ।
बलमायुर्यशो हन्ति सप्तम्यां चेति के चन ॥

अथ वाराः । तत्र नारदः—

बुधशुक्रगुरूणान्तु वारा बालाशने शुभाः ।
चन्द्रवारं प्रशंसन्ति कृष्णे चान्त्यत्रिकं विना ॥

वीरामित्रोदये—

अर्काङ्गारकमन्दानां वाराश्चापि शुभप्रदाः ।
यदा वाराधिपस्तिष्ठेत्स्वोच्चमित्रगृहे तदा ॥

वशिष्ठः—

जीवसौम्यसितानान्तु द्रेःकाणा दिवसांशकाः ।
बालान्नप्राशने शस्ता न चन्द्रार्कार्किजासृजाम् ॥

असृग्भौमः । अत्र सोमवारानिन्दाक्षीणचन्द्रविषया । अत्र च जन्मनक्षत्रमपि शुभमित्याह नारदः—

पद्बन्धनचौलान्नप्राशने चोपनायने ।
शुभदं जन्मनक्षत्रमशुभं त्वन्यकर्मणि ॥

नृसिंहस्तु निषेधति—

जन्मर्क्षे च दिने श्रेष्ठे निशायां नैव भोजयेत् ।
उभयोः शुभदं प्रोक्तं कर्माधानर्क्षयोरपि ॥

जन्मर्क्षादीनां फलमाह स एव—

जन्मर्क्षे श्रीक्षयं विन्द्यात्कर्मर्क्षे चापि सौख्यकृत् ।

आधानर्क्षे च बालानां भोजनं रोगनाशनम् ॥

विधिरत्नेऽपि —

अन्नप्राशनकार्ये तु जन्मभं मृत्युदं भवेत् ।
शुभं कर्मर्क्षमाधाने विवाहे चान्नभोजनम् ॥

जन्मभमासादीनां स्वरूपमुक्तं सङ्ग्रहे—

जन्मभं जन्मनक्षत्रं दशमं कर्मसंज्ञिकम् ।
एकोनविंशमाधानं त्रयोविंशं विना शुभम् ॥

अथ योगविचारः । तत्र बृहस्पतिः—

न वैधृतौ व्यतीपाते विष्कुम्भे गण्डातिगण्डयोः ।
मूले वज्रे न परिघे बालान्नप्राशनं हितम् ॥

अथ लग्नानि । कश्यपः—

गोऽश्विकुम्भतुलाकन्यासिंहकर्किनृयुग्मकाः ।
शुभदा राशयश्चैते न मेषझषवृश्चिकाः ॥

नृसिंहोऽपि—

मेषालिमीना वर्ज्याः स्युस्तथैवाधोमुखानि च ॥

अधोमुखानि सूर्याधिष्ठितराशयः ।

सूर्याधिष्ठितराश्युपक्रमतयाऽधास्तिर्यगूर्ध्वाननाः ।

इति सङ्ग्रहवाक्यात् । अथ ग्रहसंस्था । तत्र वशिष्ठः—

शुभाशुभेषु त्रिधनायकेन्द्रत्रिकोणगेष्वायरिपुत्रिगेषु ।
अषष्ठरिःफाष्टगते हिमांशौ बालान्नभुक्तिः शुभदा च तेषाम् ।
कुष्ठी लग्नगते सूर्ये क्षीणे चन्द्रे च भिक्षुकः ।
सत्रदः पूर्णचन्द्रे च कुजे पित्तरुजार्दितः ॥
बुधे ज्ञानी गुरौ भोगी दीर्घायुर्भाग्यवान् सिते ।
वातरोगः शनौ राहौ केतौ चान्नविवर्जितः ॥
सम्पूर्णेन्दूभयाष्टम्योर्मध्येन्दुः पूर्णसंज्ञितः ।
विनष्टेन्दूभयाष्टम्योर्मध्येऽसौ क्षीणसंज्ञकः ॥

महेश्वरः—

सूर्ये केन्द्रमृतिव्ययात्मजगते धर्मे च कुष्ठी भवे-
द्भौमे पित्तरुजान्वितोऽनिलरुजा युक्तस्तु सूर्यात्मजे ।
क्षीणे शीतकरे तु भैक्ष्यभुगिति प्रोक्तं च रिक्ते तिथौ
सौम्ये ज्ञानयुतो विधौ मखकरः पूर्णे तु सत्रप्रदः ॥
गुरौ चिरायुर्भृगुजेऽथ भोगी कोणस्त्रिकोणाद्यससप्तसंस्थः।
बन्धुस्थितश्चान्नहरोऽथ षष्ठो मृत्युस्थितो मृत्युकरः शशाङ्कः ॥

कोणः शनिः । राजमार्तण्डः—

लाभत्रिषष्ठभवनोपगतास्त्वसौम्याः सौम्यग्रहा नवमपञ्चमकण्टकस्थाः ।
लग्नेषु दैत्यसचिवज्ञबृहस्पतीनामन्नोपभोगकरणैर्विविधोपभोक्ता ॥

अर्णवेऽपि—

दशमस्थान्ग्रहान्सर्वान्वर्जयेन्मतिमान्नरः ।
अन्नप्राशनकार्येषु मृत्युक्लेशभयावहान् ॥
बुधशुक्रेनजीवाः स्युर्व्ययलग्नायकेन्द्रगाः ।
शुभांशे शीतगौ भोक्तुर्दद्युरायुः श्रियं शुभम् ॥

इनः सूर्यः । "स्थालीपाकꣳश्रपयित्वाऽऽज्यभागाविष्ट्वा-ऽऽज्याहुतीर्जुहोति" इति सूत्रम् । स्थालीपाकं चरुं यथाविधि श्रपयित्वाऽऽज्यभागौ हुत्वा द्वे आहुती वक्ष्यमाणैर्मन्त्रैर्जुहोति । "दैवीं वाचमजनयन्त देवास्तां विश्वरूपाः पशवो वदन्ति । सा नो मन्द्रेषमूर्जन्दुहाना धेनुर्वागस्मानुपसुष्टुतैतु स्वाहेति वाजो नो अद्येति च द्वितीया" मिति सूत्रम् । द्वे आहुती जुहोतीत्युक्तम् । तत्र "दैवीं वाचमजनयन्त" इतिमन्त्रेणैकामाहुतिं जुहोति । ततश्च "दैवीं वाच"मिति "वाजो नो अद्ये"ति च द्वाभ्यामृग्भ्यां द्वितीयामाहुतिं जुहोतीत्यर्थः । मन्त्रार्थः- दैवीं देवसम्बन्धिनीं वाचं देवाः प्राणादिवायवः अजनयन्त उत्पादितवन्तः । ततस्तां दैवीं वाचं विश्वरूपाः नानारूपाः ऋषिमुनिब्राह्मणादयः पशवः संसरणत्वाद्वदन्ति । "पशुरेव स देवाना"मिति श्रुतेः । सा नोऽस्मान् उपैतु सन्निहिताऽस्तु । किम्भूता मन्द्रा हर्षकरी । इषं रसं

ऊर्जं अन्नादि च दुहाना सुष्टुता शोभनैर्मन्त्रैस्तुता । तत्र दृष्टान्तः—वत्सान्धेनुरिवेति । "**स्थालीपाकस्य जुहोति प्राणेनान्नमशीय स्वाहाऽपानेन गन्धानशीय स्वाहा चक्षुषा रूपाण्यशीय स्वाहा श्रोत्रेण यशोऽशीय स्वाहेति**" इति सूत्रम् । स्थालीपाकस्येत्यवयवलक्षणा षष्ठी । स्थालीपाकस्य चरोः "प्राणेनान्नमशीय स्वाहे"ति प्रतिमन्त्रं चतुर्भिर्मन्त्रैश्चतस्र आहुतीर्जुहोति । ततः स्विष्टकृदादि प्राशनान्तम् । **मन्त्रार्थः**—प्राणेन वायुना अन्नं अशीय अहं प्राप्नुयां लभेयम् । अपानेन वायुना गन्धान् परिमलान् लभेयम् । एवमग्रेऽपि योज्यम् । "**प्राशनान्ते सर्वान्रसान्सर्वमन्नमेकतोद्धृत्याथैनं प्राशयेत्तूष्णीᳫं हन्तेति वा हन्तकारं मनुष्या इति श्रुते**"रिति सूत्रम् । प्राशनान्ते कर्माणि सर्वान् रसान् मधुराम्ललवणकटुतिक्तकषायादीन् सर्वमन्नं भक्ष्यं भोज्यं लेह्यं चोष्यं पेयं चैकतः एकस्मिन्सुवर्णादिपात्रे उद्धृत्य अथैनं कुमारं तस्मादन्नाद्गृहीत्वा तूष्णीं प्राशयेत । "हन्ते"ति वा मन्त्रेण प्राशयेत् । तथा चोक्तम्—

> भक्ष्यं भोज्यं तथा पेयं लेह्यं चोष्यं तथैव च ।
> इति पञ्चविधं हृद्यं पथ्यं भुञ्जीत भूपतिः ॥
> सौवर्णे राजते पात्रे रीतियन्त्रविधारिते ।
> भोजयेन्मण्डलेशादीन्यथायोग्यप्रदेशतः ॥

अथ भक्ष्यपदार्थमाह । भक्ष्यशब्देन पक्वान्नम् । तत्करणप्रकारमाह —

> गोधूमाः क्षालिताः शुभ्राः शोषिता रविरश्मिभिः ।
> घरट्टैश्चूर्णिताः श्लक्ष्णाश्चालन्या वितुषीकृताः ॥
> गोधूमचूर्णकं श्लक्ष्णं किञ्चिद्घृतविमिश्रितम् ।
> लवणेन च संयुक्तं क्षीरनीरेण पिण्डितम् ॥
> सुमत्यां काष्ठपात्र्यां वा करस्फालैर्विमर्दयेत् ।
> मर्दितं चिक्कणीभूतं गोलकान्परिकल्पयेत् ॥
> स्नेहाभ्यक्तैः करतलैः शालिचूर्णैर्विरूक्षितान् ।
> प्रसारयेद्गोलकांस्तान्करसञ्चारवर्त्तनैः ॥
> विस्तृता मण्डकाः श्लक्ष्णाः सितपद्मसमप्रभाः ।

प्रसन्नाग्निनिक्षिपेत्सन्नस्तप्तखर्परमस्तके ॥
पक्वांश्चापनयेच्छीघ्रं यावत्काष्ण्यं न जायते ।
चतस्रश्च चतस्रश्च घट्टिता मण्डका वराः ॥
इति मण्डकाः ।
गोलान्प्रसारितान्पाणावङ्गारेषु विनिक्षिपेत् ।
अङ्गारपोलिकाः शस्ताः किञ्चित्कृष्णत्वमागताः ॥
गोलकान् पिष्टकालिप्तान्वेषण्या तान्प्रसारयेत् ।
सुतप्ततावनिक्षिप्तानीषत्पक्वान्विवर्तयेत् ।
खर्परेऽपि पचेदेवं पोलिकानामयं क्रमः ॥
इति पोलिका ।
तैलपूर्णकटाहे तु सुतप्ते सोहलां पचेत् ।
उत्तानपाकसंसिद्धाः कठिनाः सोहला मताः ॥
सोहारीति प्रसिद्धा ।
तनुप्रसारितान्गोलान् ताप्यां स्नेहेन पाचितान् ।
दुग्धाक्तान्घृतपक्वांश्च सितया च विमिश्रितान् ॥
एलामरिचचूर्णेन युक्तान्कासारसंज्ञितान् ॥
इति कासारम् ।
गोलकेन समावेष्ट्य तैलेनौदुम्बरान्पचेत् ।
उत्क्वाथ्य द्विदलान्पिष्ट्वा चणकप्रकृतीञ्छुभान् ॥
हिङ्गुसैन्धवसंयुक्ताञ्छर्करापरिमिश्रितान् ।
मरिचैलादिचूर्णेन युक्तान्गोलकवेष्टितान् ॥
किञ्चित्प्रसारिते तैले पूरिका विपचेच्छुभाः ।
एवं ताप्यां पचेदन्याः पूरिकाश्च विचक्षणाः ॥
हरिमन्थस्य विदलं हिङ्गुजीरकमिश्रितम् ।
लवणेन च संयुक्तमार्द्रकेन समन्वितम् ।
वेष्टयित्वा गोलकेन वेष्टिकाः खर्परे पचेत् ॥
इति वेढई ।
विदलं चणकस्यैव पूर्वसम्भारसंस्कृतम् ।

ताप्यां तैलविलिप्तायां घोसकान्विपचेद्बुधः ॥

इति घोसकः।

माषस्य राजमाषस्य वट्टाणस्य च घोसकान्।
अनेनैव प्रकारेण विपचेत्पाकतत्त्ववित् ॥
वट्टाणकस्य विदलमथ वा चणकस्य च।
चूर्णितं वारिणा सार्धं सर्पिषा परिभावितम् ॥
सैन्धवेन च संयुक्तं कणिडन्या परिघट्टितम्।
निष्पावचूर्णसंयुक्तं पेषण्यां च प्रसारितम् ॥
कटाहे तैलसम्पूर्णे कटकर्णान्विपाचयेत्।
यावद्बुद्बुदसङ्काशा भवन्ति कनकत्विषः ॥
माषस्य विदलान्क्लिन्नान्निस्तुषान्हस्तलोडनैः।
ततः सम्पेष्य पेषण्यां सम्भारेण विमिश्रितान् ॥
स्थाल्यां विमृद्य बहुशः स्थापयेत्तदहस्ततः।
अम्लीभूतं माषपिष्टं विटिकासु विनिक्षिपेत् ॥
वस्त्रगर्भाभिरन्याभिः पिधाय परिपाचयेत्।
अवतार्याथ मरिचं चूर्णितं विकिरेदनु ॥
घृताक्तं हिङ्गुसर्पिर्भ्यां जीरकेण च धूपयेत्।
सुशीता धवलाः श्लक्ष्णा एता इन्दुरिका वराः ॥
तस्यैव माषपिष्टस्य गोलकान्विस्तृतान्घनान्।
पञ्चभिः सप्तभिर्वापि च्छिद्रैश्च परिशोभितान् ॥
तावत्तैलं पचेद्यावल्लौहित्यं तेषु जायते।
घारिकासंज्ञया ख्याता भक्ष्येषु सुमनोहराः ॥

इति घारिका।

निच्छिद्रा घारिकाः पक्वा मथिते शर्करायुते।
एलामरिचसंयुक्ते निक्षिप्ता वटकाभिधाः ॥
त एव वटकाः क्षिप्ताः काञ्जिके काञ्जिकाभिधाः।
यत्र यत्र द्रवद्रव्ये तन्नाम्ना वटकास्तु ते ॥

आरनालेन सान्द्रेण दध्ना सुमथितेन च ।
सैन्धवार्द्रकधान्याकजीरकं च विमिश्रयेत् ॥
मरिचानि द्विधा कृत्वा क्षिपेत्तत्र तु पाकवित् ।
दर्व्या विघट्टयन्सर्वं पचेद्यावद्घटी भवेत् ।
उत्तार्य वटकान्क्षिप्त्वा विकिरेन्मारिचं रजः ॥
हिङ्गुना धूपयेत्सम्यग्वटकास्तेमनाभिधाः ।
दुग्धमुत्काथ्य तन्मध्ये तक्रमम्लं विनिक्षिपेत् ।
हित्वा तोयं घनीभूतं वस्त्रबद्धं पृथक्कृतम् ॥
शालितण्डुलपिष्टेन मिश्रितं परिपेषितम् ।
नानाकारैः सुघटितं सर्पिषा परिपाचितम् ॥
पक्वशर्करया सिक्तमेलाचूर्णेन वासितम् ।
क्षीरप्रकारनामेदं भक्ष्यं मृष्टं मनोहरम् ॥

इति भक्ष्याणि । अथ भोज्यान्याह--

रक्तशालिर्महाशालिर्गन्धशालिः कलिङ्गकः ।
सुगन्धो गन्धशाली स्यात्कालिङ्गस्थः कलिङ्गकः ॥
शूकशून्यो मुण्डशालिः स्थूलशालिस्तदाकृतिः ।
सौक्ष्म्यात्तु सूक्ष्मशालिः स्याद्द्विमासः षाष्टिकः स्मृतः ॥
एताञ्छालीन्पृथक् सर्वान्मुसलैर्वितुषीकृतान् ।
निक्षिप्य तण्डुलान्पट्टे विसृजेत्कणकांस्ततः ॥
पाषाणमृत्तिकाशालीतृणपर्णतुषं तथा ।
यत्नाद्विकृष्यापनयेद्दासीभिस्तण्डुलस्थितान् ॥
अखण्डाञ्छोधितानेव क्षालितान्बहुशस्तथा ।
तण्डुलान् कुन्दसंकाशांस्तोयान्तर्धारितांश्चिरम् ॥
स्थाल्यां ताम्रकृतायां वा मृज्जातायामथापि वा ।
तण्डुलात्रिगुणं तोयं निक्षिपेच्च पिधापयेत् ॥
वाससा शशिशुभ्रेण धौतेन च घनेन च ।
चुल्यां निधाय निर्धूमे वह्नौ तत्क्राथयेज्जलम् ॥

सुतप्ते बुद्बुदोपेते स्वबाष्पसमन्विते।
तण्डुलानावपेत्स्थाल्यां दर्व्या च परिघट्टयेत्॥
सिक्थं विमृद्य वीक्षेत वारं वारं विचक्षणः।
मृदुभूते च तत्सिक्थे किञ्चिद्वा कणगर्भिते॥
तक्रं दुग्धं घृतं वापि निक्षिप्योत्तारयेत्ततः।
स्थाल्यास्ये पीठकं दत्वा मण्डं संस्रावयेद्गुणैः॥
ईषदुद्धरितं मण्डमूष्मण्या परिशोषयेत्।
एवं भक्तं सुपक्वं यद्राजयोग्यं तदुत्तमम्॥

इत्योदनम्।

राजमुद्गास्तथा पीता निष्पावाश्चणका अपि।
कृष्णाढक्यस्तथा माषा मसूरा राजमाषकाः॥
सूपकर्मणि सप्तैते नियोज्याः सूपकारकैः।
दलिताऽदलिताश्चैते पचनीया यथारुचि॥
चणका राजमाषाश्च मसूरा माषमुद्गकाः।
घरट्टैर्दलिताः कार्याः पाकार्थं हि विचक्षणैः॥
किञ्चिद्भ्रष्टास्तथाढक्यो यन्त्रावर्त्ते द्विधाकृताः।
विदलाश्च कृताः सम्यक्शूर्पकैर्वितुषीकृताः॥
स्थाल्यां शीतोदकं क्षिप्त्वा विदलैः सममानतः।
आतपे विदलान्पश्चाच्चुल्यामारोपयेत्ततः॥
मृद्वग्निपच्यमाने हि हिङ्गुतोयं विनिक्षिपेत्।
वर्णार्थं रजनीचूर्णमीषत्तत्र नियोजयेत्॥
मुहुर्मुहुः क्षिपेत्तोयं यावत्पाकस्य चूर्णता।
सुश्लक्ष्णं सैन्धवं कृत्वा विंशत्यंशेन निक्षिपेत्॥
वर्णतः स्वादुता गन्धो मार्दवाल्लाघवादपि।
एवं विदलपाकस्य सम्यक्सिद्धिरुदाहृता॥
निष्पावा मेचकाढक्यो हिङ्गुना परिवर्जिताः।
अभिन्नाः पूर्ववत्पाक्या हरिद्राचूर्णकं विना॥

मसूरमाषपाकेषु हिङ्गुतोयं विनिक्षिपेत् ।
इतरः पूर्ववत्कार्यः पाकः पाकविचक्षणैः ॥
प्रक्षालितान्वरान्मुद्गान्स्वमताङ्ग(?)विनिक्षिपेत् ।
चुल्ल्यां मृद्वग्निना पाकः कर्तव्यः सूपकारकैः ॥
पच्यमानेषु मुद्गेषु हिङ्गुवारि विनिक्षिपेत् ।
आर्द्रकस्य च खण्डानि सूक्ष्माणि च विनिक्षिपेत् ॥
वार्ताकं पाटितं तैलं मृष्टं तत्र विनिक्षिपेत् ।
तैलभृष्टा मृदूभूता क्षिपेद्वा बिसचक्रिकाः ॥
बीजकानि प्रियालस्य क्षिप्त्वा दर्व्या विवर्तयेत् ।
पुनः पुनः क्षिपेत्तोयं स्तोकं स्तोकं विचक्षणः ॥

इति भोज्यानि ।

अथ पेयवस्तून्याह—

गव्यं वा माहिषं वापि क्षीरं नीरविवर्जितम् ।
पचेत्स्थाल्यां मृदौ वह्नौ दर्वीघट्टनसंयुतम् ॥
अर्धावशेषं कुर्वीत त्रिभागेनावशेषितम् ।
षड्भागशेषितं वापि कुर्यादष्टावशेषकम् ॥
अर्द्धावशिष्टं येन स्यात्त्रिभागं लेह्यकं भवेत् ।
षड्भागं पिण्डतामेति शर्करा स्यादथाष्टमे ॥
अर्धावशेषिते दुग्धे तक्रमीषद्विनिक्षिपेत् ।
नवस्थाल्यां न्यसेत्तन्तु निवाते स्थापयेच्च तम् ॥
शर्करामिश्रितं वापि फलैर्वापि विमिश्रयेत् ।
यामषट्कोषितं क्षीरमम्लतां घनतां भजेत् ॥
दधीति नाम प्राप्नोति पथ्यं मृष्टं मनोहरम् ॥

इति दधि ।

हीनकाले तथा पथ्यं चिरकालेऽम्लता बहु ॥
मन्थानेन मथित्वा तन्नवनीतमथोद्धरेत् ।
निर्मलं मथितं प्रोक्तं उदास्वित्या जलार्धकम् ॥

पादान्तक्रमुकोद्दिष्टं धूपितं हिङ्गुजीरकैः ।
आर्द्रकेन समायुक्तमेलासैन्धवचूर्णितम् ॥
मथितं शर्करायुक्तमेलाचूर्णविमिश्रितम् ।
कर्पूरधूपितं नाम्ना मज्जिकेत्यभिधीयते ॥
मग्जि इति कर्णाटकाः ।
निष्पीड्य दधि वस्त्रेण स्नावयेत्तद्द्रुतं जलम् ।
शर्करैलासमायुक्ता सूदैः शिखरिणी मता ॥
शिखरिणी दधिजा ।
स्नावितं यद्घृतं तोयं जीरकार्द्रकसैन्धवैः ।
संयुक्तं हिङ्गुधूपेन धूपितं मस्तु कीर्त्तितम् ॥
नवनीतं नवं धौतं नीरलेशविवर्जितम् ।
तापयेदग्निना सम्यङ्मृदुना घृतभाण्डके ॥
पाके सम्पूर्णतां याते क्षिपेद्गोधूमबीजकम् ।
क्षिपेत्ताम्बूलपत्रं च पश्चादुत्तारयेद्घृतम् ॥
तण्डुलक्षालनं तोयं चिञ्चाम्लेन विमिश्रितम् ।
ईषत्तक्रेण संयुक्तं सितया सह योजितम् ॥
एलाचूर्णसमायुक्तमार्द्रकस्य रसेन च ।
धूपितं हिङ्गुना सम्यग्व्यञ्जनं परिकीर्तितम् ॥
सौवीरं निर्मलं साम्लं लवणेन च संयुतम् ।
हिङ्गुना जीरकेणापि धूपितं धूपकाञ्जिकम् ॥
शङ्कुद्वयं समास्थाप्य बध्नीयादुज्वलाम्बरम् ।
प्रसार्य यष्टिभिः किञ्चित्क्षीरमम्लेन भेदितः ॥
सितया च समायुक्तमेलाचूर्णविमिश्रितम् ।
क्षिपेत्प्रसारिते वस्त्रे स्नावयेत्प्रेषयेत्समम् ॥
पुनः पुनः क्षिपेत्तत्र यावन्निर्मलतां व्रजेत् ।
पक्वचिञ्चाफलं मृष्टं वर्णार्थं तत्र निक्षिपेत् ॥
यस्य यस्य फलस्यापि रसेन परिमिश्रितम् ।

तत्तन्नाम समाख्यातं पानकं पेयमुत्तमम् ॥

इति सर्वं पेयसंज्ञकम् । अथ लेह्यमुच्यते—

श्यामाकं कङ्गु नीवारं गन्धशालिषु तण्डुलैः ।
कृसरास्थितसेवाकैर्दिवसैर्लघुविस्तृतैः ॥
चिरप्रसूतमहिषीपयसा पायसं पचेत् ।
पायसं लेहने योऽयं स्वादुगन्धमनोहरम् ॥
पक्वान्नं पायसं मध्ये शर्कराघृतमिश्रितम् ॥

इति लेह्यम् । अथ चोष्यमुच्यते । चोष्यशब्देन शाकादिकं ग्राह्यम् । यथा—

फलशाकं पत्रशाकं कन्दशाकं च मूलकम् ।
पुष्पशाकं शिम्बिशाकं पक्वापक्वविभेदतः ॥
लवणं मरिचं शुण्ठी जीरकं च विचूर्णितम् ।
कल्पयेद्विविधैः शाकैः सर्वसम्भारकोविदः ॥
वटकान्पर्पटान्हृद्यानङ्गारैः परिभर्जयेत् ।
आम्राम्रातकजम्बूश्च बीजपूराग्निमन्थकैः ॥
भल्लातागस्त्यकार्पासद्राक्षाभृङ्गकसल्लकैः ।
पुनर्नवाऽमरी तीक्ष्णा अतसी सुरसाद्वयम् ॥
मरुकं तालपर्णी च भिण्डुकी मुण्डिका तथा ।
ब्राह्मी चैवाम्रपत्रा च कोकिलाक्षी कुसुम्भकम् ॥
अञ्जनं पद्मकोशश्च शेदकं च तथापरम् ।
सङ्गृह्य पल्लवानेषां माल्लिकाम्लेन मिश्रयेत् ॥
जम्बीराम्लेन दध्ना वा लवणेन च संयुतान् ।
श्रीफलं केतकं चिञ्चा मेषशृङ्गीसुगन्धिजम् ॥
कुटजं मरिचं पन्थ्या विषमुष्टिकशिम्बिजम् ।
एलारामठनीवारमेथिकापर्पटं तथा ॥
अगस्त्यनन्दनं राजा मातुलिङ्गिकपाटलिः ।
कटं मटं कर्कटं च करीरं टेन्दुकं तथा ॥

वेत्रकारीफलं चैव लवणाम्भसि निक्षिपेत् ।
चूतमाम्रातकं धात्री कुगीरी कर्कटा तथा ॥
कूष्माण्डं त्रपुसं द्राक्षा कर्कटा बृहतीद्वयम् ।
कोशातकी बीजपूर निष्पावं करमर्दकम् ॥
जम्बीरनिम्बवार्ताकं कर्मरं लवणाम्भसि ।
अथ वा राजिकाचूर्णे सतैले लवणान्विते ॥
प्रक्षाल्य वृन्तसहितं फलं चूतादिकं न्यसेत् ।
कारवेल्लं सपनसं कदलीफलमेव च ॥
सतैले राजिकाचूर्णे निक्षिपेल्लवणोषिते ।
वंशाङ्कुरं लघु चक्रीं शतावर्यस्तथैव च ॥
पाताले टेटुकानां च प्ररोहान्क्षालितान्मृदून् ।
सलिले लवणोपेते तैले चापि सराजिके ॥
लवणेन समायुक्ते प्रक्षिपेदङ्कुरानिमान् ।
मार्गिणीमार्द्रकं पेष्टु करीरं वनमार्गिणीम् ॥
कर्पूरमार्गिणीमूलं तथैवाम्लहरिद्रकाम् ।
सूरणं मधु शिग्रु च तथा वण्टलकन्दकम् ॥
एतानि पूर्ववत्कृत्वा तैले वाऽपि विनिक्षिपेत् ॥

इति शाकादिकम् । एकतोद्धृत्येत्यत्र छान्दसः सन्धिः । मार्कण्डेयः—

देवतापुरतस्तस्य धात्र्युत्सङ्गगतस्य च ।
अलङ्कृतस्य दातव्यं पत्रं पात्रे सकाञ्चनम् ॥
मध्वाज्यदधिसंयुक्तं प्राशयेत्पायसं तु वा ॥ इति ।

गुणफलमाह—"भारद्वाज्या मांसेन वाक्प्रसारिकामस्य कपिञ्जलमांसेनान्नाद्यकामस्य मत्स्यैर्जवनकामस्य कृकषाया आयुष्कामस्याड्या ब्रह्मवर्चसकामस्य सर्वैः सर्वकामस्ये"ति सूत्रम । भारद्वाज्या भरद्वाजपक्षिजातीयास्त्रियः । चिठीकेतिप्रसिद्धा । तस्या मांसेन वाक्प्रसार अयं कुमारो वाग्मी स्यादित्येवंकामो यस्मिन् कुमारे तस्य प्राशनं कुर्यात । कपिञ्जलमांसेन कपिञ्जलो गौरतित्तिरिः तस्य मांसेन अन्नाद्यकामस्य ।

अथयं कुमार अन्नादः स्यादिति कामयेत तदा कपिञ्जलमांसेन प्राशनं कुर्यात्। एवमग्रेऽपि योज्यम्। मत्स्यैर्जवनकामस्य जवनः शीघ्रगामी स्यादिति कामयेत तदा मत्स्यानां मांसेन प्राशनं कुर्यात्। कृकषायाः गोधायाः दीर्घायुःकामस्य प्राशनम्। आट्याः आटिर्जलचरपक्षिः शरालिजातीयपक्षिस्त्रियः, तन्मांसेन ब्रह्मवर्चसकामस्य प्राशनं कुर्यात्। सर्वैः भारद्वाज्यादिसर्वैर्मांसैः क्रमेण सर्वकामस्य प्राशनं कुर्यात्। मिश्रैः प्राशनमिति भर्तृयज्ञः। "अन्नपर्याय वा ततो ब्राह्मणभोजनमन्नपर्याय वा ततो ब्राह्मणभोजनम्" इति सूत्रम्। अन्नपरिपाट्या वा अन्नवत्सर्वमांसान्येकीकृत्य प्राशयेदित्यर्थः। अन्नपरिपाट्या वा क्रमेण प्राशयेन्नैकत उद्धृत्येति भर्तृयज्ञ.। अन्नपर्यायेत्यविभक्तिक छान्दसं पदम्। मांसनिषेधस्तु काशिकायाम्। मनुः—

नाकृत्वा प्राणिनां हिंसां मांसमुत्पाद्यते क्वचित्।
न च प्राणिवधः स्वर्ग्यस्तस्मान्मांसं विवर्जयेत्॥
समुत्पत्तिं च मांसस्य वधबन्धाय देहिनाम्।
प्रसमीक्ष्य निवर्त्तेत सर्वमांसस्य वर्जनात्॥

महाभारते भीष्मोऽपि—

न हि मांसं तृणात्काष्ठादुपलाद्वापि जायते।
हत्वा जन्तून्भवेन्मांसं तस्मात्तत्परिवर्जयेत्॥
एकस्य क्षणिका तृप्तिरन्यः प्राणैर्वियुज्यते।
अहो मांसस्य दौरात्म्यं प्रत्यक्षमिह दृश्यते॥
यो हिंसकानि भूतानि हिनस्त्यात्मसुखेच्छया।
कृष्णद्वैपायनः प्राह स्थावरत्वं स गच्छति॥

तथा च काशिकायां पराशरः—

गोमेधो नरमेधश्च अक्षता गोपशुस्तथा।
देवराच्च सुतोत्पत्तिः कलौ पञ्च विवर्जयेत्॥

यस्तु देशविषयो निषेध इति, तदपि न। मध्यदेशादौ जिह्मलतयाऽविहितमांसोपलब्धेः। न च देशविषयः शक्यते वक्तुम्। देशभेदविष-

यस्य निरासात् । तथा च वृद्धप्रचेताः—

न युगानां न देशानां न विप्राणां द्विजोत्तमाः ।
धर्मशास्त्रेषु वै भेदो दृश्यते मांसभक्षणे ॥

भक्ष्यं छागादिविहितमांसम् । देवलः—

पञ्च पञ्चनखा भक्ष्या धर्मतः परिकीर्त्तिताः ।
गोधा कूर्मः शशोऽविश्च शल्लकश्चेति ते स्मृताः ॥

धर्मत इति प्रोक्षितादौ । तथा च रामायणे—

शशकः शल्लको गोधा सेधा कूर्मश्च पञ्चमः ।
पञ्च पञ्चनखा भक्ष्या न भक्ष्या वानरा नराः ॥

विधिना मांसभक्षणे न हि दोषः । तथा च यमः—

हविर्यत्प्रोक्षितं मन्त्रैः प्रोक्षिताभ्युक्षितं शुचि ।
वेदोक्तेन प्रकारेण पितॄणां प्रक्रियासु च ॥
पितृदैवतयज्ञेषु प्रोक्षितं हविरुच्यते ।
विधिना वेददृष्टेन तदुक्तान्येन दुष्यति ॥
सर्वेषामेव मांसानां महान्दोषस्तु भक्षणे ।
निवर्तने महापुण्यमिति प्राह प्रजापतिः ॥

इतिमहाभारतवाक्यम् । एतदुभयमपि जिह्वालतया भक्षणविषयम् ।
तथा च स्कन्दपुराणे—

यत्र यत्र निषेधो हि श्रूयते मांसभक्षणे ।
जिह्वालान्प्रति स ज्ञेयो न तूक्तविधिना श्रुतम् ॥

तथा च काशिकायाम्—

प्रयान्ति नरकं घोरं मांसमश्नन्ति ये नराः ।
जिह्वालान्प्रति दोषोऽयं न दोषो विधिनाश्नताम् ॥

बृहस्पतिरपि—

रोगार्त्तोऽभ्यर्थितो वापि मांसं नाश्नात्यलोलुपः ।
फलं प्राप्नोत्ययत्नेन सोऽश्वमेधफलस्य च ॥

अथ परिवेशनप्रकारमाह । धर्मप्रवृत्तौ—

अन्नं मध्ये प्रतिष्ठाप्य दक्षिणे घृतपायसम् ।
शाकादि पुरतः स्थाप्य भक्ष्यं भोज्यं च वामतः ॥
मध्वाज्यकनकोपेतं प्राशयेत्पायसं तु तम् ।
कृतप्राशमथोत्सङ्गाद्धात्री बालं समुत्सृजेत् ॥

कनकोपेतं कनकेनोपात्तमित्यर्थः । अथ स्त्रीणामन्नप्राशनम् । तत्र मनुः—

अमन्त्रिका तु कार्येयं स्त्रीणामावृदशेषतः ॥ इति ।

शौनकोऽपि—

इदं कर्म कुमार्याश्च सर्वं कार्यममन्त्रकम् ॥ इति ।

आश्वलायनोऽपि—

जातकृत्यादि चूडान्तं स्त्रीणां कार्यममन्त्रकम् ।
हुतकृत्यं तु पुंवत्स्यात्स्त्रीणां चूडाकृतावपि ॥

हुतकृत्यं होमः स च पुंवत्स्यात्पुरुषसंस्कार इवेत्यर्थः । शूद्राणामपि भवतीत्युक्तं ग्रन्थादौ । ततो ब्राह्मणभोजनम् । ब्राह्मणेभ्यो भोजनं देयमित्यर्थः । अन्नपर्याय वा ततो ब्राह्मणभोजनमिति पुनरुक्तिः काण्डसमाप्तिसूचनार्था ।

इति श्रीप्रथमशाखीयरामकृष्णविरचिते पारस्करगृह्यसूत्रविवरणे संस्कारगणपतौ प्रथमकाण्डे एकोनविंशतिकण्डिका ।

अथास्य स्पष्टप्रयोगः । भार्याशिशुसहितः कृतमङ्गलस्नानः आचम्य प्राणानायम्य देशकालौ स्मृत्वा "ममास्य कुमारस्य मातृगर्भमलप्राशनशुध्यर्थमन्नाद्यब्रह्मवर्चसेन्द्रियायुर्लक्षणफलसिद्धिबीजगर्भसमुद्भवैनोनिबर्हणद्वारा परमेश्वरप्रीत्यर्थं अन्नप्राशनाख्यं कर्माहं करिष्ये । तदङ्गतया विहितं स्वस्तिपुण्याहवाचनं मातृकापूजनं नान्दीश्राद्धं च करिष्ये"। पूर्ववत्सम्पाद्य । स्थण्डिले पञ्चभूसंस्कारपूर्वकमग्निस्थापनं विधाय, तत्र "पूर्वेण ब्रह्मणो गमनम् । अपरेण पात्रासादनम् । द्वे पवित्रे । ताम्रमयी आज्यस्थाली । ताम्रमयी चरुस्थाली ।

पालाश्यः समिधः। आघारावाघारौ। समिद्धतमे आज्यभागौ। पूर्णपात्रं दक्षिणा। हन्तेति प्राशनम्। एतान्वैकल्पिकपदार्थानहं करिष्ये"। अथ देवताभिध्यानम्। "अत्र प्रजापतिं, इन्द्रं, अग्निं, सोमं, दैवीं वाचं, वाजं, एता आज्येन। प्राणं, अपानं, चक्षुः, श्रोत्रं, एताँश्चरुणा। शेषेणाग्निं स्विष्टकृतं, अग्निं, वायुं, सूर्यं, अग्नीवरुणौ, अग्नीवरुणौ, अग्निं, वरुणं, सवितारं, विष्णुं, विश्वान्देवान्, मरुतः, स्वर्क्कान्, वरुणं, प्रजापतिं, एताः पुनराज्येन। एता देवता अङ्गप्रधानार्था अस्मिन्नन्नप्राशनाख्ये कर्मण्यहं यक्ष्ये"। ततो ब्रह्मोपवेशनादि—पूर्णपात्रासादनान्ते, मधुरादिसर्वान्रसान् सर्वमन्नं मधु घृतं सुवर्णं च शस्त्राणि शास्त्राणि लेखनीं वस्त्रं रजतं स्वर्णं भाण्डानि चोपकल्पितानि। ततः पवित्रकरणाद्याज्यभागान्ते आज्येनान्वारब्धः। "दैवीं व्वाचमजनयन्त देवास्तां विश्वरूपाः पशवो वदन्ति। सा नो मन्द्रेषमूर्जन्दुहाना धेनुर्व्वागस्मानुपसुष्टुतैतु स्वाहा इदं दैव्यै वाचे न मम"। पुनः "दैवींवाच०सुष्टुतैतु। व्वाजो नो अद्य प्रसुवाति दानं व्वाजो देवाँ ऋतुभिः कल्पयाति। व्वाजो हि मा सर्व्ववीरञ्जजान विश्वा आशा व्वाजपतिर्जयेयं स्वाहा। इदं दैव्यै वाचे वाजाय च नमम"। अथ चरुमभिघार्य स्रुवेणैव "ॐ प्राणेनान्नमशीय स्वाहा। इदं प्राणाय न मम। ॐअपानेन गन्धानशीय स्वाहा। इदमपानाय न मम। ॐचक्षुषा रूपाण्यशीय स्वाहा। इदं चक्षुषे न मम। ॐ श्रोत्रेण यशोऽशीय स्वाहा। इदं श्रोत्राय न मम।" चरोरुत्तरार्धादग्नेरुत्तरार्द्धे "ॐअग्नये स्विष्टकृते स्वाहा। इदमग्नये स्विष्टकृते न मम"। ततोऽन्वारब्धो भूरादिप्रजापत्यन्ता नवाहुतयः। संस्रवप्राशनादिविमोकान्तं कृत्वा स्वर्णादिपात्रे सर्वान् रसान् सर्वमन्नं मध्वाज्यं चैकीकृत्य हस्ते गृहीतसुवर्णेन देवताग्रे मातुरुत्सङ्गस्थं शिशुं "हन्त"इति मन्त्रेण प्राशयेत्। कुमार्यास्तु तूष्णीमेव। तत उपकल्पितवस्तुसमीपे शिशुमुपवेश्य तन्मध्ये यदेवादौ गृह्णाति तेन तस्य जीविकापरीक्षा कर्तव्या।

इतिश्रीप्रथमशाखीयरामकृष्णविरचिते पारस्करगृह्यसूत्रविवरणे संस्कारगणपतौ अन्नप्राशनप्रयोगः ॥

अथाब्दपूर्त्तिकृत्यम् । तत्र नृसिंहः—

सौरेणाब्दान्तजन्मर्क्षे शिशुं संस्नाप्य शास्त्रतः ।
आबध्य हेमसूत्रन्तु राश्यादावनुकूलके ॥
नवक्षौमाम्बरादीनि यथार्हं धारयेत्तदा ।

जन्मदिनात्सौरेण मानेन योऽब्दस्तदन्ते यदा जन्मर्क्षं भवति तदा वक्ष्यमाणविधिं कुर्यादित्यर्थः । अब्दान्त इति सामान्योपादानात्प्रत्यब्दान्ते कार्यम् । तथा च गर्गः—

यस्मिन्दिने सवितरि यन्नक्षत्रदिनं भवेत् ।
प्रत्यब्दान्ते च नक्षत्रे विधिं वक्ष्ये नृणां परम् ॥
येनायुर्वर्द्धते नित्यं बलं तेजः सुखं सदा ॥ इति ।

जन्मर्क्षद्वैधे निर्णयमाह वृद्धगार्ग्यः—

एकमासे द्विजन्मर्क्षे प्रथमे जन्म चाचरेत् ।
तस्मिन्नक्षत्रखण्डे तु अन्त्यखण्डे समाचरेत् ॥
उदयव्यापि जन्मर्क्षं तस्माद्ग्राह्यन्तु जन्मनः ।
सङ्गवव्यापिखण्डर्क्षे तत्र जन्म वरं शुभम् ॥

जन्मतिथिकृत्यविधिश्च ब्रह्मपुराणे—

सर्वैश्च जन्मदिवसे स्नानं मङ्गलवारिभिः ।
गुरुदेवाग्निविप्राश्च पूजनीयाः प्रयत्नतः ॥

जन्मर्क्षव्यतिक्रमे तिथ्याद्याह नृसिंहः—

रिक्तापर्वाष्टमीश्चैव कृष्णे चान्त्यत्रिकं विना ।
शुभानां वारवर्गाश्च राशयश्च धनुर्विना ॥
श्रेष्ठा नेष्टास्तथा मेषा मकरो मध्यमो भवेत् ।
हस्तादिभूतनक्षत्राण्यजद्विश्युत्तराणि च ॥
वसुपौष्णादितीपुष्यवाजिभानि शुभानि तु ।

भूतं मूलम् । अजद्विः रोहिणीमृगशीर्षे शेषं प्रसिद्धम् ।

शकुन्यादीनि विष्टिं च वर्ज्या योगाः शुभेतराः ॥
लग्ने सर्वे शुभाः श्रेष्ठास्तथा केन्द्रत्रिकोणयोः ।
चन्द्रः शुभप्रदो ज्ञेयो द्वादशाष्टमभाद्विना ॥
पापास्त्रिलाभषष्ठस्थाः शुभा वस्त्रस्य धारणे ।
उच्चमित्रस्ववर्गेषु शुभः केन्द्रत्रिकोणगैः ॥
वस्त्रवाहनशस्त्रादि भूषणानि सुसम्पदः ।
सद्गुणस्थे निशानाथे कुर्याच्च्छोभने दिने ॥
नद्यादिगमने चैव तथा देवादिदर्शने ।
शिशोर्लीला दिवान्यत्तु वस्त्रधारणवद्भवेत् ॥

अथेतिकर्तव्यतामाह । तत्र गर्गः—

पूर्वं जन्मदिनाद्रात्रौ कृत्वा कौतुकबन्धनम् ।
कृत्वा शान्त्युदकं चैव प्राशयेच्चाभिषेचयेत् ॥
ग्रहशान्तिं समाप्यैव नक्षत्राधिपपूजनम् ।
आयुष्यहोमं च कृत्वा दिगीशावर्चयेद्बुधः ॥
देवांश्च वैदिकान्विप्रान्गुरून्बन्धुसुहृज्जनान् ।
प्रणम्य पूजयेद्विद्वान्गन्धमाल्यानुलेपनैः ॥
नवाम्बरधरो भूत्वा युक्तस्रग्वस्त्रभूषणः ।
गुरुप्रणामं कृत्वा च राजा तु महिषीसखः ॥

राजेत्युपलक्षणम् । तेनान्येनापि कर्तव्यम् ।

अन्यानि पुण्यकर्माणि प्रकुर्वीत यथाविधि ।
पापं कर्म न कुर्वीत यस्माच्छतगुणं भवेत् ॥

तथा च ब्रह्मपुराणे—

प्रतिसंवत्सरं जन्मर्क्षे वक्ष्ये नृणां विधिं परम् ।
पूर्वाह्णे चैव जन्मर्क्षे स्नात्वा भक्त्या सुरोत्तम ! ॥
मध्वाज्यदधिसंयुक्ता दूर्वा मृत्युञ्जयेन तु ।
जुहुयाच्च सहस्रं वा अष्टाविंशतिमाहुतीः ॥
ततोऽपराह्णे सम्प्राप्ते कृत्वा कौतुकमङ्गलम् ।

ग्रहपूजां प्रकुर्वीत भक्षेत्राधिपपूजनम् ॥
आयुष्यहोमं कृत्वा च श्रोत्रियानथ भोजयेत् ॥
दत्वा गोभूहिरण्यादि तथा स्वर्णादिनिर्मितम् ॥
बध्वा वा कटिसूत्रं च वस्त्रं च परिधापयेत् ॥

ग्रहपूजा नवग्रहमखः । पूजनं होमस्याप्युपलक्षणम् । तथा च शौनकः—

अथ स्वजन्मनक्षत्रे स्नातः शुक्लाम्बरो नृपः ।
कृतकौतुकबन्धश्च सर्वाभरणभूषितः ॥
नक्षत्रदेवतापूजां कुर्याद्गुरुसमान्वितः ।
आचार्येणैव होतव्यो होमः सर्वत्र भूपतेः ॥
स्थण्डिलाद्याज्यभागान्तं कृत्वा सर्वं यथाक्रमम् ।
दूर्वा घृताक्ता जुहुयादष्टोत्तरशताहुतीः ॥
यद्देवताकं नक्षत्रं मन्त्रस्तद्दैवतः स्मृतः ।
ततः स्विष्टकृतं सर्वं होमशेषं समापयेत् ॥
गोभूहिरण्यवस्त्राद्यैर्ब्राह्मणान्भोजयेन्नृपः ।
तस्मिन्नहनि सर्वत्र देवतायतनानि च ॥
यद्दुःखितान्सर्ववर्णान्मोचयेन्नृपतिस्ततः ।
द्विजान्सर्वानथाभ्यर्च्य तस्मिन्नहनि कारयेत् ॥
पूजयित्वा विधानेन पूजितव्यान्स्वबान्धवान् ।
न हिंस्यात्सर्वभूतानि तदहस्तु विशेषतः ॥
सर्वं समाचरेद्राजा सुखी भवति सर्वदा ॥ इति ।

वीरमित्रोदये —

गुडदुग्धतिलान्दद्याज्जन्मग्रन्थेश्च बन्धनम् ।

जन्मग्रन्थिबन्धनं नाम वक्ष्यमाणगुग्गुलादिपञ्चद्रव्यार्थपोटलिकाया हस्ते बन्धनम् । तान्येव द्रव्याण्याह—

गुग्गुलं निम्बसिद्धार्थदूर्वागोरोचनायुतम् ।
सम्पूज्य भानुविघ्नेशौ महर्षिं प्रार्थयेदिदम् ॥

प्रार्थनामन्त्राँस्तु प्रयोगे वक्ष्यामि ।

मार्कण्डेयं नरो भक्त्या पूजयेत्प्रयतस्तथा ।
ततो दीर्घायुषं व्यासं रामं द्रौणिं कृपं बलिम् ॥
प्रह्लादं च हनुमन्तं विभीषणमथार्चयेत् ।

रामोऽत्र परशुरामः द्रौणिरश्वत्थामा ।

स्वनक्षत्रं जन्मतिथिं प्राप्य सम्पूजयेन्नरः ॥
षष्ठीं च दधिभक्तेन वर्षे वर्षे पुनः पुनः ।

पूजा च प्रतिमास्वक्षतपुञ्जेषु शालिग्रामे जलपूर्णकलशे वा कार्या ।
तथा पद्मपुराणम्—

शालग्रामशिलारूपी यत्र तिष्ठति केशवः ।
तत्र देवासुरा यक्षा भुवनानि चतुर्दश ॥ इति ।

जन्मदिने शनिभौमवारपाते तु विशेष उक्तो दीपिकायाम्—

कृतान्तकुजयोर्वारे यस्य जन्मदिनं भवेत् ।
अनृक्षयोगसंप्राप्तौ विघ्नस्तस्य पदे पदे ॥
तस्य सर्वौषधीस्नानं ग्रहविप्रसुरार्चनम् ।
सौरारयोर्दिने युक्ता देयाऽनृक्षे च काञ्चनम् ॥

अथ जन्मतिथौ निषिद्धानि । स्कन्दपुराणे—

खण्डनं नखकेशानां मैथुनाध्वानमेव च ।
आमिषं कलहं हिंसां वर्षवृद्धौ विवर्जयेत् ॥

वृद्धमनुः—

मृते जन्मानि संक्रान्तौ श्राद्धे जन्मदिने तथा ।
अस्पृश्यस्पर्शने चैव न स्नायादुष्णवारिणा ॥

अथास्य स्पष्टप्रयोगः । वर्द्धापनं प्रतिवर्षं जन्मतिथौ कार्यम् । तत्र पूर्वाह्णव्यापिनी ग्राह्या । तिलोद्वर्त्तनं कृत्वा तिलोदकेन स्नात्वा नव्यवस्त्रं परिधाय कृतनित्यक्रियो दक्षिणपाणौ गुग्गुलादिपञ्चद्रव्यगर्भां पोटलिकामाबध्य गृहान्तर उपविश्य आचम्य देशकालौ सङ्कीर्त्य "ममामुकगोत्रस्यामुकशर्मणः आयुष्याभिवृद्ध्यर्थं वर्षवृद्धिकर्म करिष्ये। निर्विघ्नार्थं

गणपतिपूजनञ्च करिष्ये" "गणानान्त्वे"तिमन्त्रेण षोडशोपचारै-र्गणपतिं पूजयित्वा प्रणम्य "ॐ गणपते! क्षमस्वे"ति विसर्जयेत् । प्रक्षालितपीठे तण्डुलपुञ्जेषु गौर्यादिमातरः पूज्याः ।

गौरी१ पद्मा२ शची३ मेधा४ सावित्री५ विजया६ जया ७ ।
देवसेना८ स्वधा९ स्वाहा१० मातरो११ लोकमातरः१२ ॥
धृतिः१३ पुष्टि१४स्तथा तुष्टि१५रात्मनः कुलदेवता ।
गणेशेनाधिका ह्येता वृद्धौ पूज्यास्तु षोडश ॥

षोडशोपचारैः पूजयेत् । ततो घृतेन वसोर्द्धारां कुर्यात् । पूजयेत् । ततः "ॐ गणपतये नमः १ । ॐ दुर्गायै नमः २ । ॐ कुलदेवतायै नमः ३ । ॐ गुरुभ्यो नमः ४ । ॐ देवताभ्यो नमः ५ । ॐ अग्नये नमः ६ । ॐ विप्रेभ्यो नमः ७ । ॐ मातृभ्यो नमः ८ । ॐ पितृभ्यो नमः ९ । ॐ सूर्याय नमः १० । ॐ सोमाय नमः ११ । ॐ भौमाय नमः १२ । ॐ बुधायनमः १३ । ॐ बृहस्पते नमः १४ । ॐशुक्राय नमः १५ । ॐ शनैश्चराय नमः १६ । ॐ राहवे नमः १७ । ॐ केतुभ्यो नमः १८ । ॐ पञ्चभूतेभ्यो नमः१९ । ॐ कालाय नमः२० । ॐ युगाय नमः२१ ॐ संवत्सराय नमः २२ । ॐ मासाय नमः२३ । ॐ पक्षाय नमः २४ । ॐ अस्मज्जन्मनक्षत्राय नमः२५ । ॐ अस्मज्जन्मतिथये नमः२६ । ॐ अस्मज्जन्मराशये नमः २७ । ॐ शिखायै नमः २८ । ॐ सम्भूत्यै नमः२९ । ॐ प्रीत्यै नमः३० । सन्तत्यै नमः ३१ । ॐ अनुसूयायै नमः३२ । ॐ क्षमायै नमः३३ । ॐ विष्णवे नमः३४ । ॐ भद्रायै नमः३५ । ॐ इन्द्राय नमः३६ । ॐ अग्नये नमः३७ । ॐ यमाय नमः३८ । ॐ निर्ऋतये नमः३९ । ॐ वरुणाय नमः ४० । ॐ वायवे नमः ४१ । ॐ धनदाय नमः ४२ । ॐ ईशानाय नमः ४३ । ॐ अनन्ताय नमः ४४ । ॐ ब्रह्मणे नमः ४५ । इति प्रत्येकं षोडशोपचारैः सम्पूज्य । ततः "षष्ठिके इहागच्छ इह तिष्ठे"त्यावाह्य षोडशोपचारैः पूजयेत् । षष्ठ्या नैवेद्यं दधिभक्तम् ।

ॐ जगन्मातर्जगद्धात्रि ! जगदानन्दकारिणि ! ।
प्रसीद मम कल्याणि ! नमोऽस्तुषष्ठिदेवते ! ॥

इत्यनेन नमस्कृत्य,

रूपन्देहि यशो देहि भद्रं भगवति ! देहि मे ।
पुत्रान्देहि धनन्देहि सर्वान्कामांश्च देहि मे ॥

इत्यनेन वरं प्रार्थ्य प्रणम्य विसर्जयेत्। ततश्चन्दनेनाष्टदलं कृत्वा अक्षतानादाय। "ॐ भगवन् मार्कण्डेय इहागच्छ इह तिष्ठ" इत्यावाहनस्थापनं कृत्वा पाद्यादीन्दत्वा "मार्कण्डेयाय नमः" इति नाममन्त्रेण,

ॐ आयुःप्रद ! महाभाग ! सोमवंशसमुद्भव ! ।
महातपो ! मुनिश्रेष्ठ ! मार्कण्डेय ! नमोऽस्तु ते ॥

इति पुष्पाञ्जलिमन्त्रेण संपूज्य गन्धादीनि दत्वा वरं प्रार्थयेत्।

मार्कण्डेयाय मुनये नमस्ते महदायुषे ।
चिरञ्जीवी यथा त्वं भो ! भविष्यामि तथा ! मुने! ॥
मार्कण्डेय ! महाभाग ! सप्तकल्पान्तजीवन ! ।
आयुरारोग्यसिद्ध्यर्थमस्माकं वरदो भव ॥
नराणामायुरारोग्यैश्वर्यसौख्यसुखप्रद ! ।
सौम्यमूर्ते ! नमस्तुभ्यं भृगुवंशवराय च ॥
महातपो मुनिश्रेष्ठ ! सप्तकल्पान्तजीवन ! ।
मार्कण्डेय ! नमस्तुभ्यं दीर्घायुष्यं प्रयच्छ मे ॥
मार्कण्डेय ! महाभाग ! प्रार्थये त्वां कृताञ्जलिः ।
चिरञ्जीवी यथा त्वं भो ! भविष्येऽहं तथा मुने ! ॥

इति वरं प्रार्थ्य प्रणम्य, "अश्वत्थाम्ने नमः१। बलये नमः२। व्यासाय नमः३। हनुमते नमः४। विभीषणाय नमः५। कृपाय नमः६। परशुरामाय नमः७। कार्तिकेयाय नमः८। जन्मदेवतायै नमः९। स्थानदेवतायै नमः१०। वासुदेवाय नमः ११। क्षेत्रपालाय नमः१२। पृथिव्यै नमः१३। अग्नये नमः१४। तेजसे नमः १५। वायवे नमः१६। आकाशाय नमः१७"। इष्टदिग्भागे संपूज्य,

प्रीयन्तां देवताः सर्वाः पूजां गृह्णन्तु तां मम ।
प्रयच्छन्त्वायुरारोग्यं यशः सौख्यं च सम्पदः ॥

अथाचार्योऽग्निस्थापनाद्याज्यभागान्तं कृत्वा, मध्वाज्यदधिदूर्वा- "त्र्यम्बकं" इति मन्त्रेणाष्टोत्तरसहस्रमष्टोत्तरशतं वा जुहुयात् । इति मृत्युञ्जयहोमः । ततो यथोक्तदेवताभ्यो यथोक्तमन्त्रैर्दूर्वाभिर्घृताक्ताञ्जुहुयात् । ततो वह्निं सम्पूज्य स्विष्टकृद्धोमः । बलिं दद्यात् । पायसान्नेन सर्वभूतेभ्यो बलिं दद्यात् । होमशेषं समापयेत् । ब्राह्मणाय तिलान्दद्यात् । देयद्रव्याणि सम्पूज्य कुशयवजलान्यादाय "मदीयजन्मदिने दीर्घायुष्कामः एतान् तिलान् सोमदैवतान् यथानामगोत्राय ब्राह्मणाय दातुमहमुत्सृजे" इति दद्यात् । तत "स्तण्डुलेभ्यो नमः" इति तण्डुलान्सम्पूज्य जलेन सिक्त्वा कुशयवजलान्यादाय "मदीयजन्मदिने दीर्घायुष्कामः एतान्सोपस्करान् तण्डुलान् चन्द्रदैवतान् यथानामगोत्राय ब्राह्मणाय दातुमहमुत्सृजे" दद्यात् । "घृताय नमः" इति घृतं सम्पूज्य "इदं घृतं प्रजापतिदैवतं यथानामगोत्राय ब्राह्मणाय दातुमहमुत्सृजे" । ततस्तिलगुडसहितं दुग्धपानम् । तत्र मन्त्रः—

अञ्जल्यर्धमिदं क्षीरं सतिलं गुडमिश्रितम् ।
मार्कण्डेयवरं लब्ध्वा पिबाम्यायुष्यहेतवे ॥

तत आचम्य, "मार्कण्डेय ! क्षमस्वे"ति विसर्जयेत् ।

अश्वत्थामा बलिर्व्यासो हनुमांश्च बिभीषणः ।
कृपः परशुरामश्च सप्तैते चिरजीविनः ॥
सप्तैतान्यः स्मरेन्नित्यं मार्कण्डेयमथाष्टमम् ।
जीवेद्वर्षशतं साग्रमपमृत्युविवर्जितः ॥

इति वचनादश्वत्थामादीन्मार्कण्डेयान्तानष्टौ स्मरेत् । आचार्याय गां दद्यात् । ब्राह्मणान् भोजयेत् । स्वयं भुञ्जीत ।

इति श्रीप्रथमशाखीयरामकृष्णविरचिते पारस्करगृह्यसूत्रविवरणे संस्कारगणपतौ वर्द्धापनम् ।

अथ शिशुरक्षाविधानम् । विधानपारिजाते कपिलसंहितायाम्—

शिशुसंरक्षणार्थाय शिशुग्रहनिवारिणीम् ।
रक्षां सन्ध्यासु कुर्वीत निम्बसर्षपगुग्गुलैः ॥
फलीकरणसम्मिश्रैः करञ्जैरवलोकनम् ।
वचां द्वारप्रदेशेषु बालग्रहविमुक्तये ॥
वासुदेवो जगन्नाथः पूतनामञ्जनो हरिः ।
रक्षतां त्वरितो बालं मुञ्च मुञ्च कुमारकम् ॥
कृष्ण ! रक्ष शिशुं शश्वन्मधुकैटभमर्दन! ।
प्रातःसङ्गवमध्याह्नसायाह्नेषु च सन्ध्ययोः ॥
महानिशि सदा रक्ष कंसारिष्टनिषूदन ! ।
यक्षोरगपिशाचांश्च ग्रहान्मातृगणानपि ॥
बालग्रहान्विशेषेण छिन्धि छिन्धि महाभयात् ।
त्राहि त्राहि हरे ! नित्यं त्वद्रक्षारक्षितं शिशुम् ॥
इति भस्माभिमन्त्र्यैव भूषयेत्तेन भस्मना ।
शिरो ललाटाद्यङ्गेषु रक्षां कुर्याद्यथाविधि ॥
मन्त्रसंरक्षणादेव शिशुः संवर्द्धतेऽन्वहम् ।

इति श्रीप्रथमशाखीयरामकृष्णविरचिते पारस्करगृह्यसूत्रविवरणे संस्कारगणपतौ कपिलसंहितोक्तशिशुरक्षाविधानम् ।

प्रथमकाण्डं समाप्तम् ॥



## अथ द्वितीयं काण्डम् ।

### ( अथ प्रथमा कण्डिका )

सांवत्सरिकस्य चूडाकरणन्तृतीये वाऽप्रतिहते षोडशवर्षस्य केशान्तो यथामङ्गलं वा सर्वेषां ब्राह्मणान्भोजयित्वा मातरकुमारमादायाप्लाव्याहते वाससी परिधाप्याङ्क आधाय पश्चादग्नेरुपविशत्यन्वारब्ध आज्याहुतीर्हुत्वा प्राशनान्ते शीतास्वप्सूष्णा आसिञ्चत्युष्णेन वाय उदकेनेह्यदित केशान्वपेति केशश्मश्रुञ्चाति च केशान्तेऽथात्र नवनीतपिण्डं घृतपिण्डं दध्नो वा प्रास्यति तत आदाय दक्षिणं गोदानमुन्दति सवित्रा प्रसूता दैव्या आप उन्दन्तु ते तनूम्। दीर्घायुत्वाय वर्चस इति त्रेण्या शलल्या विनीय त्रीणि कुशतरुणान्यन्तर्दधात्योषध इति शिवो नामेति लोहक्षुरमादाय निवर्तयामीति प्रवपति येनावपत्सविता क्षुरेण सोमस्य राज्ञो वरुणस्य विद्वान् । तेन ब्रह्माणो वपतेदमस्यायुष्यं जरदष्टिर्यथासदिति सकेशानि प्रच्छिद्यानडुहे गोमयपिण्डे प्रास्यत्युत्तरतो ध्रियमाण एवं द्विरपरन्तूष्णीमितरयोश्चोन्दनाद्यथ पश्चात्त्र्यायुषमित्यथोत्तरतो येन भूरिश्चरा दिवं ज्योक्च पश्चाद्धि सूर्यम् । तेन ते वपामि ब्रह्मणा जीवातवे जीवनाय सुश्लोक्याय स्वस्तय इति त्रिः क्षुरेण शिरः प्रदक्षिणं परिहरति समुखं केशान्ते यत्क्षुरेण मज्जयता सुपेशसा वप्त्वा वा वपति केशाञ्छिन्धि शिरो माऽस्यायुः प्रमोषीर्मुखमिति च केशान्ते ताभिरद्भिः शिरः समुद्य नापिताय क्षुरं प्रयच्छत्यक्षण्वन्परिवपेति यथामङ्गलं केशशेषकरणमनुगुप्तमेतं सकेशं गोमयपिण्डं निधाय गोष्ठे पल्वल उदकान्ते

**वाऽऽचार्याय वरं ददाति गां केशान्ते संवत्सरं ब्रह्मचर्यमवपनं च केशान्ते द्वादशरात्रं षड्रात्रं त्रिरात्रमन्ततः॥१**

अथ चूडाकरणमाह । चूडाकरणमिति कर्म्मणो नामधेयम् । वशिष्ठः

**सर्वेषामेव वर्णानां चौलकर्म्मविधिः स्मृतः ।**
**चौलेनैवायुषो वृद्धिश्चौलेनैवायुषः क्षयः ॥**
**तस्मात्सर्वप्रयत्नेन कारयेद्द्विजसत्तम ! ॥** इति ।

चूडाकरणकालमाह "**सांवत्सरिकस्य चूडाकरण**"मिति सूत्रम् । संवत्सरो जातो यस्य स सांवत्सरिकः । तस्य बालकस्य चूडाकरणं कर्म्म कुर्य्यादित्यर्थः । "**तृतीये वाऽप्रतिहते**" इति सूत्रम् । अथ वा तृतीये संवत्सरेऽप्रतिहतेऽपूर्णेऽसमाप्ते चूडाकरणं कुर्य्यात् । "**षोडशवर्षस्य केशान्तः**" इति सूत्रम् । केशान्त इति संस्कारनामधेयम् । षोडश वर्षाण्यतीतानि यस्य स षोडशवर्षः । तस्य पुरुषस्य केशान्ताख्यः संस्कारः स्यात् । अत्र कारिका—

**केशान्तः षोडशे वर्षे ब्राह्मणस्य विधीयते ।**
**राजन्यबन्धोर्द्वाविंशे वैश्यस्य त्वधिके ततः ॥**

कर्म्मणस्तुल्यत्वात्केशान्तकथनमत्र भगवता कृतम् । "**यथामङ्गलं वा सर्व्वेषाम्**" इति सूत्रम् । अथवा यथामङ्गलं यथाकुलाचारं चूडाकरणं कार्य्यम् । यस्य कुले सांवत्सरिकस्य कुमारस्य कुर्व्वन्ति तस्य सांवत्सरिकस्य चूडाकरणम् । यस्य कुले तृतीयेऽब्दे कुर्वन्ति तस्य तृतीयेऽपूर्णे कार्यमिति व्यवस्था । यस्य कुले नियमो नास्ति तस्य विकल्पः । यथामङ्गलशब्देन केचित्कालान्तरं कल्पयन्ति । अत्र स्मृत्यन्तरोक्ताः काला उच्यन्ते । नारदः—

**तृतीये पञ्चमेऽब्दे वा स्वकुलाचारतोऽपि वा ।**
**बालानां जन्मतः कार्य्यं चौलमावत्सरत्रयात् ॥**

मनुः—

**चूडाकर्म द्विजातीनां सर्वेषामेव धर्मतः ।**
**प्रथमेऽब्दे तृतीये वा कर्त्तव्यं श्रुतिचोदनात् ॥**

वाशब्दाद्द्वितीयग्रहणम् । तथा च यमः—

ततः संवत्सरेऽपूर्णे चूडाकर्म विधीयते ।
द्वितीये वा तृतीये वा कर्तव्यं श्रुतिचोदनात् ॥ इति ।

अत्रापूर्ण इति पदच्छेदः । नारदः—

पञ्चमे सप्तमे वापि जन्मतो मध्यमं भवेत् ।
अधमं गर्भतः स्यात्तु नवमैकादशेऽपि वा ॥

अत्र दशमैकादशग्रहणमुपनयनकालात्ययेनातीतकालचौलत्वाभिप्रायेण । प्रयोगपारिजाते—

आद्यब्दे कुर्वते के चित्पञ्चमेऽब्दे द्वितीयके ।
उपनीत्या सहैवेति विकल्पाः कुलधर्मतः ॥

बृहस्पतिः—

तृतीयेऽब्दे शिशोर्गर्भाज्जन्मतो वा विशेषतः ।
पञ्चमे सप्तमे वापि स्त्रियः पुंसोऽपि वा समम् ॥

रत्नसङ्ग्रहे—

माघादिपञ्चके चौलं हित्वा क्षीणविधुं मधुम् ।
क्रूरवारं निशां रिक्तां षष्ठीं सन्ध्याश्च जन्मभम् ॥

नारदः—

सौम्यायने नास्तगयोरसुरासुरमन्त्रिणोः ।
अपर्वरिक्तातिथिषु शुक्रेज्यज्ञेन्दुवासरे ॥

विशेषान्तरमुक्तं सारसङ्ग्रहे—

ज्येष्ठे मासे तथा मार्गे क्षौरं परिणयव्रतम् ।
ज्येष्ठपुत्रदुहित्रोश्च यत्नेन परिवर्ज्जयेत् ॥
कृत्तिकास्थं रविं त्यक्त्वा ज्येष्ठे ज्येष्ठस्य कारयेत् ।
अधिमासेऽथ यत्क्षौरं जन्ममासेऽथ जन्मभे ॥
न भवेत्तत्र कल्याणमिति शंसन्ति सूरयः ॥

अथ पक्षनिर्णयः । वीरमित्रोदये बृहस्पतिः—

शुक्लपक्षे शुभं प्रोक्तं कृष्णपक्षे शुभेतरत् ।

अशुभोऽन्त्यस्त्रिभागः स्यात्कृष्णपक्षे त्रिधा कृतः ॥ इति ।

अथ तिथयः । पराशरः—

पञ्चमी सप्तमी चैव दशम्येकादशी तथा ।
त्रयोदशी तृतीया च चौलकर्म्मशुभावहाः ॥

वशिष्ठोऽपि—

द्वित्रिपञ्चमसप्तम्यामेकादश्यान्तथैव च ।
दशम्यां च त्रयोदश्यां कार्यं क्षौरं विजानता ॥

वीरमित्रोदये—

चूडा व्रतं तथोद्वाहं कर्णयोरपि वेधनम् ।
गळग्रहे न कुर्वीत यदीच्छेत्पुत्रजीवितम् ॥

गलग्रहतिथयः—

त्रयोदश्यादि चत्वारि सप्तम्यादि दिनत्रयम् ।
चतुर्थी चैकतः प्रोक्ता अष्टावेते गळग्रहाः ॥

गलग्रहास्तु कृष्णपक्षे न तु शुक्लपक्षे । तदुक्तं रत्नसङ्ग्रहे—

कृष्णपक्षे चतुर्थी च सप्तम्यादिदिनत्रयम् ।
त्रयोदशीचतुष्कं च अष्टावेते गळग्रहाः ॥

कृष्णपक्ष इति सर्वत्र सम्बध्यते । अथ वाराः । पराशरः—

सितेज्यसौम्यवारेषु चौलं पक्षद्वये हितम् ।
इन्दुवारः सिते पक्षे वाराः शेषा न शोभनाः ॥

तत्र भुजबलः—

मासं हरेत्क्षौरमिहायुषोऽर्कः शनैश्चरः पञ्च कुजस्तथाष्टौ ।
आचार्य्यभृग्विन्दुबुधाः क्रमेण दद्युर्दशैकादश सप्त पञ्च ॥

गुरुः—

सोमवारः सिते पक्षे कृष्णपक्षेऽतिगर्हितः ।
बुधवारः शुभः प्रोक्तः पापग्रहयुते बुधे ॥

ज्योतिर्निबन्धे—

पापग्रहाणां वारादौ विप्राणां तु शुभो रविः ।

क्षत्रियाणां क्षमासूनुर्विट्शूद्राणां शनिः शुभः ॥

अथ नक्षत्राणि । बृहस्पतिः--

हस्ताश्विविष्णुपौष्णाश्च श्रविष्ठादित्यपुष्यभम् ।
सौम्यचित्रे नक्षौरे उत्तमा नवतारकाः ॥
त्रीण्युत्तराणि वायव्यं रोहिणी वारुणं तथा ।
क्षौरे षण्मध्यमाः प्रोक्ताः शेषा द्वादश गर्हिताः ॥

नारदः--

दस्रादितीज्यचन्द्रेन्द्रपूषभानि शुभान्यतः ।
चौलकर्म्माणि हस्तर्क्षं त्रीणि च त्रीणि विष्णुभात् ॥

श्रीपतिः--

षट्कृतिका पञ्चमघास्त्रिमैत्रो ब्रह्माष्टकोऽपश्चतुरुत्तराश्च ।
क्षौरी स वर्षं चतुराननोऽपि न प्राणितीति प्रकटप्रवादः ॥

बृहस्पतिः--

सपादि क्षेमभे मैत्रे साधके मेऽतिमित्रभे ।
चौलकर्म्म प्रशस्तं स्याच्छोभनांशुगते विधौ ॥
आद्यंशो विपदि त्याज्यः प्रत्यरे चरमोऽशकः ॥
वधे त्याज्यस्तृतीयांशो शेषांशा अपि शोभनाः ॥

अथावश्यके प्रकारद्वयेन परिहारमाह--

मृत्यौ स्वर्णतिलान्विपद्यपि गुडं शाकं त्रिजन्मस्वथो
दद्यात्प्रत्यरितारकासु लवणं सर्व्वा विपत्प्रत्यरिः ।
मृत्युश्चादिमपर्य्यये न शुभदोऽथैषां द्वितीयेंऽशका
नादिप्रान्त्यतृतीयका अथ शुभाः सर्व्वे तृतीये स्मृताः ॥

शाकं वृन्ताकादि । तत्रादिमपर्याये प्रथमावृत्तौ विपत् प्रत्यरिर्मृत्युश्च सर्वा अपि सामान्यतः षष्ठिघटिकात्मिका न शुभदाः स्युः । अथ द्वितीये पर्याये द्वितीयावृत्तौ विपत्प्रत्यरिमृत्यूनामादिप्रान्त्यतृतीयका अंशा न शुभदाः । विपत्तारायामाद्यंशः प्रथमचरणो निषिद्धः । प्रत्यरितारायां

प्रान्त्यश्चतुर्थचरणो निषिद्धः। मृत्युतारायां तृतीयोऽशस्तृतीयचरणो निषिद्धः। तृतीयावृत्तौ विपत् प्रत्यरिर्मृत्युश्चैते सर्वे षष्टिघटिकात्मिकाः शुभाः। चिन्तामणौ—

तारादौष्ट्येऽब्जे त्रिकोणोच्चगे वा क्षौरं सत्स्यात्सौम्यमित्रस्ववर्गे।
सौम्येभेऽब्जेऽश्रे भवेद्दुष्टतारा शस्ता ज्ञेया क्षौरयात्रादिकृत्ये॥

नारदः—

अष्टमे शुद्धिसंयुक्ते शुभलग्ने शुभांशके।
न नैधने भे शीतांशौ षष्ठाष्टान्त्यविवर्जिते॥
धनत्रिकोणकेन्द्रस्थः शुभस्त्र्यायारिगैः परैः।
चौलान्नप्राशने शस्ताः सौम्या रन्ध्रव्ययायगाः॥
अष्टमस्था ग्रहाः सर्व्वे नेष्टाः शुक्रविवर्जिताः।
शुक्रस्तु निधने क्षौरे सर्व्वसम्पत्प्रदः शिवः॥

अस्यापवादमाह बृहस्पतिः—

लग्नादष्टमराशीशः केन्द्रगः शुभवीक्षितः।
सर्व्वोऽप्यष्टमगस्योक्तदोषमाशु व्यपोहति॥
स्वांशगः स्वोच्चगो वाऽपि स्वक्षेत्रोपचयर्क्षगः।
अष्टमस्थानदोषोऽयं विनश्यति न संशयः॥

वृद्धनारदः—

जामित्रे भास्करे क्षौरे मृत्युः स्याद्भूमिजे तथा।
शुक्रे सौख्यविनाशः स्यान्मन्दभाग्यं शनैश्चरे॥

ज्योतिर्निबन्धे—

त्रिकोणकण्टके वापि सत्कर्म्मनिरते विधौ।
गुरुर्वातिबलः प्रोक्तः क्षौरयोगः शुभावहः॥
मीने शुक्रे च लग्नस्थे भवे भानौ चतुष्टये।
गुरौ यातेऽथवा योगः शुभदः क्षुरकर्म्मणि॥
यमे कर्किणि सिंहे च सहिते भृगुजे बुधे॥
भानौ भवे व्यये वाऽपि योगे क्षौरः शुभावहः॥

"सर्वेषा"मिति सूत्रम्। सर्वेषां वर्णानामित्यर्थः। ब्राह्मणान् भोजयित्वा माता कुमारमादायाप्लाव्याहते वाससी परिधाप्याङ्क आधाय पश्चादग्नेरुपविशति" इति सूत्रम्। आभ्युदयिकश्राद्धभोजनव्यतिरिक्तान् त्रीन् ब्राह्मणान् भोजयेत्। भर्तृयज्ञभाष्ये तु यस्य यादृशब्राह्मणभोजने मङ्गलबुद्धिः स तादृश ब्राह्मणभोजनं कृत्वा चूडाकरणं कुर्यादिति सूत्रं योजितम्। माता कुमारमादाय माता जननी कुमारं स्वपुत्रमादाय हस्ते गृहीत्वाऽऽप्लाव्य स्नापयित्वाऽहते नवे यन्त्रमुक्ते सकृद्धौते वाससी वस्त्रे परिधाप्य परिहिते कारयित्वा अङ्क आधाय अङ्के उत्सङ्गे स्थापयित्वाऽग्नेः पश्चादुपविशति। माता चेद्यदि सगर्भा स्यात्तदा चौलं न कारयेत्। तथा च वीरमित्रोदये—

चूडाकर्म्म न कर्त्तव्यं यस्य मातास्ति गर्भिणी।
करोति यदि मन्दात्मा तदा गर्भस्य नाशनम्॥
पित्रोर्मृतिं वदन्त्येके चतुरब्दान्तरे स्फुटम्॥

बृहस्पतिः—

गर्भिण्यां मातरि शिशोः क्षौरकर्म्म न कारयेत्।
शताभिषेकेऽप्येवं स्यात्कालो वेदव्रतेष्वपि॥

शताभिषेको बौधायनोक्तः पौष्टिकं काण्डम्। वेदव्रतानि महानाम्न्यादीनि। अस्य निषेधस्य व्यवस्थामाह वशिष्ठः—

गर्भे मातुः कुमारस्य न कुर्य्याच्चौलकर्म्म तु।
पञ्चमासादधः कुर्य्यादत ऊर्ध्वं न कारयेत्॥

पञ्चमासाः पूर्य्यन्ते यस्मिन् दिने तत्पञ्चमासं तस्मादध उर्ध्वं नेत्यर्थः।

भृगुः—

पञ्चमासादधः कुर्य्यादत ऊर्ध्वं न कारयेत्॥

गर्गः—

पुत्रचूडाकृतौ माता यदि सा गर्भिणी भवेत्।
शस्त्रेण मृत्युमाप्नोति तस्मात्क्षौरं विवर्जयेत्॥

अयं च निषेधः पञ्चमवर्षादर्वागेव न तूर्ध्वम् । तथा च नारदः—

सूनोर्मातरि गर्भिण्यां चूडाकर्म्म न कारयेत् ।
पञ्चाब्दात्प्रागथोर्ध्वन्तु गर्भिण्यामपि कारयेत् ॥
यदि गर्भविपत्तिः स्याच्छिशोर्वा मरणं भवेत् ।
सहोपनीत्या कुर्य्याच्चेत्तदा दोषो न विद्यते ॥ इति ।
गते तु पञ्चमे मासे गर्भादीनां मृतिर्भवेत् ॥

इति कैश्चिद्वचनमुदाहृतं तन्मूलं चिन्त्यम् । शिशुमातरि रजस्वलायामपि चौलं न कार्य्यम् । तदाह वृद्धगार्ग्यः—

विवाहव्रतचूडासु माता यदि रजस्वला ।
तस्याः शुद्धेः परं कार्य्यं माङ्गल्यं मनुरब्रवीत् ॥
विवाहे विधवा नारी जडत्वं व्रतबन्धने ।
चौले चैव शिशोर्मृत्युस्तस्मादेतत्त्रयं त्यजेत् ॥

यदा चौलादौ लग्नान्तराभावे शान्तिं कृत्वा तदैव कार्य्यम् । कारिकानिबन्धे—

सूतकोदक्ययोः शुद्धौ गां दद्याद्धोमपूर्व्विकाम् ।
प्राप्ते कर्म्मणि शुद्धा स्यादितरस्मिन्न शुद्ध्यति ॥
अलाभे तु मुहूर्त्तस्य रजोदोषे तु संस्थिते ।
श्रियं सम्पूज्य तत्कुर्य्याद्वृत्रहत्याभयङ्करम् ॥
हैमीं माषमितां पद्मां श्रीसूक्तविधिनाऽर्च्चयेत् ।
प्रत्यृचं पायसं हुत्वाऽभिषिच्य शुभमाचरेत् ॥

अथ कुमारस्य ज्वरोत्पत्तौ न कार्य्यमित्याह । गर्गः—

ज्वरस्योत्पादनं यस्य लग्नं तस्य न कारयेत् ।
दोषनिर्गमनात्पश्चात्स्वस्थे धर्म्मं समाचरेत् ॥

लग्नमितिसर्वमङ्गलोपलक्षणम् । "अन्वारब्ध आज्याहुतीर्हुत्वा प्राशनान्ते शीतास्वप्सूष्णा आसिञ्चत्युष्णेन वाय उदकेनेह्यदिते केशान्वपेति केशश्मश्रु‌ण्वति च केशान्ते" इति सूत्रम्। तत अन्वारब्धो ब्रह्मणा उ-

पस्पृष्ट आज्याहुतीः आघारादिस्विष्टकृदन्ताश्चतुर्दशाहुतीर्हुत्वा संस्रवप्राशनान्ते शीतासु पूर्व्वकल्पितासु उष्णा अप आसिञ्चति प्रक्षिपति। "**उष्णेन वाय उदकेनेह्यदिते केशान्वप**"तिमन्त्रेण। केशान्ते तु "**उष्णेन वाय उदकेनेह्यदिते केशश्मश्रु वप**"तिमन्त्रविशेषः। कुमारेण अन्वारम्भः कार्य्य इति भर्तृयज्ञमते विशेषः। **मन्त्रार्थः**—रविकिरणसम्बन्धादन्तर्गततया वा वायोरुष्णत्वम्। हे वायो! त्वमप्युष्णोदकेन गृहीतेन कुमारस्य शिरः प्लावनाय एहि। हे अदिते! देवमातः! केशान् लक्षीकृत्य केशदूरकरणार्थं शीतोदकमध्ये उष्णोदकं वप क्षिपेति, अनेकार्थाद्धातोः। "**अथात्र नवनीतपिण्ड घृतपिण्डं दध्नो वा प्रास्यति**"इति सूत्रम्। अथोष्णोदकसेकानन्तरमत्र प्रकृतोदके नवनीतपिण्ड घृतस्य पिण्ड दध्नो वा प्रास्यति प्रक्षिपति। तथा च कारिका—

**नवनीतं क्षिपेद्वात्र घृतं वा दधि वा ततः॥**

"**तत आदाय दक्षिणं गोदानमुन्दति सवित्रा प्रसूता दैव्या आप उन्दन्तु ते तनूम्। दीर्घायुत्त्वाय वर्चस इति**"इति सूत्रम्। ततः तस्मात् यत्र नवनीतादीनामन्यतमपिण्डप्रासनं कृतं तस्मादुदकात्किञ्चिदुदकमादाय दक्षिणं गोदानम् गवि पृथिव्यां दीयते निधीयते स्थाप्यते शयनकाले इति गोदानं दक्षिणकर्णसमीपवर्त्तिशिरःप्रदेशमुन्दति। उन्दी क्लेदने, क्लेदयति आर्द्रं करोति "**सवित्रे**"ति मन्त्रेण। **मन्त्रार्थस्तु**—हे कुमार! सवित्रा सूर्य्येण प्रसूता उत्पादिता आपः दैव्यः दिवि भवाः तव तनुं शरीरं चूडालक्षणमङ्गम् उन्दन्तु क्लेदयन्तु। किमर्थम् तव दीर्घायुत्वाय चिरं जीवनार्थम् वर्च्चसे प्रतापाय इति। "**त्र्येण्या शलल्या विनीय त्रीणि कुशतरुणान्यन्तर्दधात्योषध इति**" इति सूत्रम्। त्रिषु स्थानेषु एनी श्वेता त्र्येणी शलली सेधाशलाका तया छिन्नान् केशान् विनीय पृथक्कृत्य विरलान् कृत्वा त्रीणि कुशतरुणानि दर्भतृणान्यन्तर्दधाति धारयति "**ओषधे त्रायस्वे**"ति **मन्त्रेण**। "**शिवो नामेति लोहक्षुरमादाय निवर्त्तयामीति प्रवपति**" इति सूत्रम्। ततः कर्त्ता

"शिवो नामे"ति मन्त्रेण लोहक्षुरं ताम्रेण परिष्कृतमादाय दक्षिणहस्तेन गृहीत्वा "निवर्तयामी"ति मन्त्रेण प्रवपति तं क्षुरं कुशतरुणान्तर्हितेषु संलागयति स्थापयति । तथा च रेणुः—

गृह्णीयात्तं क्षुरं ताम्रं शिवो नामेति मन्त्रतः ।
उक्त्वा निवर्त्तयामीति संलग्नं तत्र कारयेत् ॥

शिव इत्यस्यार्थः–हे क्षुर ! यस्त्वं शिवोनामाऽसि भवसि । ते तव स्वधितिर्वज्रं पिता । हे भगवन् ! तस्मै तुभ्यं नमः । मा मां मा हिंसीः मा विनाशयेति । निवर्त्तयामीत्यस्यार्थः–निवर्तयामि मुण्डयामि । भाविनि भूतो पचारात् । आयुषे अन्नाद्याय प्रजननाय गर्भोत्पत्त्यै धनस्य पुष्टयै सुप्रजास्त्वाय सुवीर्याय शोभनवीर्य्याय । "येनावपत्सविता क्षुरेण सोमस्य राज्ञो वरुणस्य विद्वान् । तेन ब्रह्माणो वपतेदमस्यायुष्यं जरदष्टिर्यथा सदिति सकेशानि प्रच्छिद्यानडुहे गोमयपिण्डे प्रास्यत्युत्तरतो ध्रियमाणे" इति सूत्रम् । येनावपदित्यादि जरदष्टिर्यथासदित्यन्तेन मन्त्रेण केशसहितानि कुशतरुणानि प्रच्छिद्य खण्डयित्वा अग्रेरुत्तरतो भूमौ ध्रियमाणे स्थाप्यमाने आनडुहे गोमयपिण्डे गोपुरीषे तानि प्रास्यति क्षिपति । तथा च कारिकायाम्—

येनावपदिति च्छित्वा सकेशतरुणानि तु ।
प्रास्यत्युत्तरतो धीयमान औक्ष्णे तु गोमये ॥

मन्त्रार्थः–हे ब्राह्मण ! येन क्षुरेण तेजोमयेन विद्वान्सर्वज्ञः सविता सूर्यः सोमस्य राज्ञः वरुणस्य च शिरः अवपत राजसूयदीक्षायै अमुण्डयत् । हे ब्रह्माणो ब्राह्मणाः ! तेन क्षुरेणास्य शिशोरिदं शिरो यूयं वपत मुण्डयत । इदं शिरः अस्य कुमारस्य आयुषे हितम् आयुष्यम् आयुषो भावः तत्ता वा । यथाऽयं कुमारः जरदष्टिः सम्पूर्णायुरसत् भूयात् । जरामश्नुते व्याप्नोति जरदष्टिः जरद्भावः । "एवं द्विरपरं तूष्णीम्" इति सूत्रम । एवमेवोक्त रीत्या द्विर्द्विवारं तूष्णीम् मन्त्रं विना उन्दनादि गोमयपिण्डे निधानान्तमपरं दक्षिणे एव गोदाने कर्म्म कुर्यात् । "एकद्रव्ये कर्म्मावृत्तौ सकृन्मन्त्रवचनं कृतत्वा"दिति कात्यायनपरिभाषातः । अत्रैवं पदार्थाः ।

उन्दनम्। केशानां विनयनम्। दर्भतृणान्तर्धानम्। क्षुरग्रहणम्। नापिताय क्षुरदानम्। सकेशाना छेदनम्। गोमयपिण्डे प्रासनमिति। "इतरयो-श्चोन्दनादि" इति सूत्रम्। इतरयोः पश्चिमोत्तरयोर्गोदानयोरुन्दनादि छेदनप्रभृति कर्म्म चकारात्सकृन्मन्त्रेण द्विस्तूष्णीं कुर्य्यात्। तत्र पूर्वं पश्चिमगोदाने कृत्वा तत उत्तरगोदाने कार्य्यम्। "अथ पश्चात्त्र्यायुष-मिति" इति सूत्रम्। अथ दक्षिणगोदानस्य त्रिरुन्दनादिप्रच्छेदनानन्तरं पश्चात्पश्चिमगोदाने विशेषमाह त्र्यायुषमिति। "त्र्यायुषं जमदग्ने"-रित्यादिना मन्त्रेण सकेशानि कुशतरुणानि सकृत्प्रच्छिद्य तूष्णीं द्विः प्रच्छिद्य गोमयपिण्डे प्रास्यति। "अथोत्तरतः" इति सूत्रम्। अथान-न्तरम् उत्तरगोदाने उन्दनादि गोमयपिण्डनिधानान्ते विशेषमाह "येन भूरिश्चरा दिवं ज्योक्च पश्चाद्धि सूर्य्यम्। तेन ते वपामि ब्रह्मणा जीवातवे जीवनाय सुश्लोक्याय स्वस्तय इति" इति सूत्रम्। येन भूरिरित्यादि स्वस्तये इत्यन्तेन मन्त्रेण सकृत्सकेशानां कुशतरुणानां प्रच्छेदनम्। अन्यत्सर्वं दक्षिणगोदानवत्कार्य्यम्। मन्त्रार्थः—येन ब्रह्मणा मन्त्रेण तपसा वा चराश्चरणशीलो वायुर्ज्योक् चिरम् आकल्पमित्यर्थः। दिवं द्याम् पश्चात्तामनु सूर्य्यं तमनु विश्वञ्च। किम्भूतः भूरिः प्रचुरः। तेन ब्रह्मणा तपसा वा तन्मन्त्रितक्षुरेण तव शिरो वपामि। किमर्थम्? जीवातवे जीवनहेतवे धर्माद्यर्थम्। जीवनायायुषे। सुश्लोक्याय शोभनाय यशसे। स्वस्तये अविनाशाय। "त्रिः क्षुरेण शिरः प्रदक्षिणं परि-हरति समुखं केशान्ते" इति सूत्रम्। त्रिः त्रीन् वारान् क्षुरेण शिरः मूर्द्धानं प्रदक्षिणं यथा भवति तथा परिहरति। दक्षिणकर्णादारभ्य शिरसः समन्तात् प्रदक्षिणं दक्षिणकर्णपर्य्यन्तं क्षुरं भ्रामयतीत्यर्थः। तत्र मन्त्र माह—"यत्क्षुरेण मज्जयता सुपेशसा वप्त्वा वाऽऽवपति केशाँश्छिन्धि शिरो मास्यायुः प्रमोषीमुखमिति च केशान्ते" इति सूत्रम्। यत्क्षु-रेणेत्यादि मास्यायुः प्रमोषीरित्यन्तं केशान्ते च मुखमिति पदं प्रक्षिपेत् मन्त्रे आवपेत्। यत्क्षुरेणेति सत्कृन्मन्त्रेण द्विः तूष्णीं शिरःपरिहरणम्।

कारिकायाम्—

क्षुरेण त्रिः परिहरेच्छिरस्तेन प्रदक्षिणम् ।
यत्क्षुरेणेति मन्त्रेण केशान्ते समुखं शिरः ॥

मन्त्रार्थः-हे क्षुर ! यत् यस्मात् क्षुरेण वप्त्वा मुण्डित्वा आवपति गोमयपिण्डे केशान् क्षिपति । किम्भूतेन एनं कुमारं मज्जयता सँस्कुर्वता तथा सुपेशसा शोभयता । अतोऽस्य केशान् छिन्धि, अवखण्डय । शिरो मस्तकं मा छिन्धि मा सव्रण कुरु । अस्य मायुः प्रमोषीः मा अपहर । "ताभिरद्भिः शिरः समुद्य नापिताय क्षुरं प्रयच्छत्यक्षण्वन्परिवपेति" इति सूत्रम् । ताभिरद्भिः शीतोष्णाभिः कुमारस्य शिरः समुद्य आर्द्रं विधाय नापिताय क्षौरकर्त्रे जातिविशेषाय क्षुरं प्रयच्छति समर्पयति "अक्षण्वन्परिवपे"ति मन्त्रेण । मन्त्रार्थः-हे नापित ! अक्षण्वन् क्षतरहितं यथा स्यादेवं परिवप मुण्डय । "यथामङ्गलं केशशेषकरण"मिति सूत्रम् । क्षुरसमर्पणानन्तरं नापितेन, रेणुः—

उदङ्मुखः प्राङ्मुखस्य तस्य शीर्षं वपत्यसौ ॥ इति ।

तत्र केशानां शेषकरणं शिखास्थापनं यथामङ्गलं यस्य कुले यथा प्रसिद्धं तस्य तथैव शिखास्थापनं कार्य्यम् । तथा च रेणुकारिकायाम—

केशशेषं ततः कुर्य्याद्यस्मिन्गोत्रे यथोचितम् ।
वशिष्ठा दक्षिणे भागे उभयत्रात्रिकश्यपाः ॥
शिखां कुर्वन्त्यङ्गिरसः शिखाभिः पञ्चभिर्युताम् ।
परितः केशपङ्क्त्या वा मुण्डाश्च भृगवो मताः ॥
कुर्वन्त्यन्ये शिखामात्रं मङ्गलार्थमिह कचित् ॥

तथा च लौगाक्षिः—

कम्बुजानां वशिष्ठानां दक्षिणे कारयेच्छिखाम् ।
द्विभागेऽत्रिकश्यपानां मुण्डाश्च भृगवो मताः ॥
पञ्चचूडा आङ्गिरसः एका वाजसनेयिनाम् ।
मङ्गलार्थं शिखिनोऽन्ये कुर्वन्तीह महर्षयः ॥

अत्र "कुलधर्म्मानुगता"मिति वचना"च्चूडा कार्य्या यथा-

कुरु" मित्यादि स्मृत्युक्तेः शिखावपनं नास्तीति गम्यते ।

सदोपवीतिना भाव्यं सदा बद्धशिखेन च ।
विशिखो व्युपवीतश्च यत्करोति न तत्कृतम् ॥

इति देवलेन तस्य नित्यधार्य्यमाणत्वस्मरणात् ,

शिखां छिन्दन्ति ये मोहाद्द्वेषादज्ञानतोऽपि वा ।
तप्तकृच्छ्रेण शुध्यन्ति त्रयो वर्णा द्विजातयः ॥

इति हारीतेन शिखानाशे प्रायश्चित्ताभिधानाच्च । मोहात्प्रमादाद्, द्वेषात्स्पर्द्धादिकलहे क्रोधाद्यावेशात् , अज्ञानतः शिखानित्यत्वाज्ञानात् । अत एव शिखानाशे तत्प्रतिनिधिरुक्तः काठकगृह्ये—"अथ चेत्प्रमादान्निःशिखं वपनं स्यात्तदा कौशीं शिखां ब्रह्मग्रन्थिसमन्वितां दक्षिणकर्णोपर्य्यशिखाबन्धादधस्तिष्ठेत्" इति । एतच्छूद्रातिरिक्तविषयम् "शूद्रस्यानियताः केशशेषा" इति वशिष्ठोक्तेः । "अनुगुप्तमेतꣳसकेशं गोमयपिण्डं निधाय गोष्ठे पल्वले उदकान्ते वा" इति सूत्रम् । ततो वपनोत्तरं सर्वान् केशान् गोमयपिण्डे कृत्वा गोमयपिण्डं वस्त्रादिवेष्टनेनानुगुप्तमावृतं कृत्वा गोष्ठे गवां व्रजे पल्वले अल्पोदके सरसि उदकान्ते वा यत्र कुत्रचिदुदकसमीपे वा स्थापयेत् । "आचार्य्याय वरं ददाति" इति सूत्रम् । कर्म्मकर्त्ता पित्रादिः स्वकीयाय आचार्य्याय वरमभिलषितद्रव्यं ददाति। अभिलषितद्रव्याभावे "चतुःकार्षापणो वर"इति मूल्याध्यायोक्तद्रव्यदानमिति वृद्धाः । "गां केशान्ते" इति सूत्रम् । केशान्ते कर्म्मणि केशान्तसंस्कारकर्त्ता स्वाचार्य्याय गां ददाति । संस्कार्यस्याचार्य्यायेति हरिहरः ।

अथ स्त्रीणां चूडाकर्म्माह । तत्र मनुः—

अमन्त्रिका तु कार्य्येयं स्त्रीणामावृदशेषतः ॥ इति ।

याज्ञवल्क्योऽपि—

तूष्णीमेताः क्रियाः स्त्रीणां विवाहस्तु समन्त्रकः ॥ इति ।

स्मृतिरूपेणाप्याह स एव—

हुतकृत्यन्तु पुंवत्स्यात्स्त्रीणां चूडाकृतावपि ॥

हुतकृत्यं होमः, पुंवत् समन्त्रकः । तेन प्रधानमात्रममन्त्रकमित्युक्तं प्राक् । कुमारीचौलेऽपि यथाकुलधर्म्ममित्यनुवर्त्तते । ततश्च सर्वमुण्डनं शिखाधारणममुण्डनं वेति सिध्यति । तत्र स्त्रीणां शिखाधारणं निषिद्धम् । धर्म्मप्रदीपे—

शिखा यज्ञोपवितं च कुशा मौनं तथैव च ।
वेदाध्ययनभैक्ष्ये च स्त्रीशूद्रपतनानि षट् ॥ इति ।

तासां च लग्नविशेषमाह गुरुः—

चन्द्रोदयो जनानान्तु प्रशस्तः क्षुरकर्म्मणि ॥ इति ।

चन्द्रोदयं चन्द्रदेवताकं लग्नम् । अथ शूद्राणां चूडाकर्माह—

शूद्रोऽप्येवंविधः कार्य्यो विना मन्त्रेण संस्कृतः ।
न केनचित्समसृजच्छन्दसा तं प्रजापतिः ॥

द्विजात्युक्तचूडान्तकर्म्मेतिकर्त्तव्यतापरामर्शार्थमेवं शब्दः । गृह्यकारोऽपि-"शूद्रस्यापि पुंसवनसीमन्तोन्नयनजातकर्मनामकरणान्नप्राशनचौलान्यमन्त्रकाणि यथाकालमुपदिष्टानी"ति ।

अथैषां वारविशेषमाह बृहस्पतिः—

विट्शूद्राणां शनिः शुभः ॥ इति ।

लग्नविशेषमाह स एव—

विट्शूद्राणां यमोदयः ॥ इति ।

यमोदयः शनिदेवताकं लग्नम् । तेषां च शिखा न कार्य्या ।

शिखा यज्ञोपवीतं च कुशा मौनं तथैव च ।
वेदाध्ययनभैक्ष्ये च स्त्रीशूद्रपतनानि षट् ॥

इति धर्म्मप्रदीपे तन्निषेधात् । प्रभासखण्डेऽपि—

न दर्भानुद्धरेच्छूद्रो न पिबेत्कापिलं पयः ।
मध्यपत्रे न भुञ्जीत ब्रह्मवृक्षस्य भामिनि ! ॥
नोच्चरेत्प्रणवं मन्त्रं पुरोडाशं न भक्षयेत् ।
न शिखा नोपवीतं च नोच्चरेत्संस्कृतां गिरम् ॥
न पठेद्वेदवचनं त्रिषवं न हि सेवयेत् ।

नमस्कारेण मन्त्रेण क्रियासिद्धिर्भवेद्ध्रुवम्।
निषिद्धाचरणं कुर्वन्पितृभिः सह मज्जति ॥

"संवत्सरं ब्रह्मचर्यमवपनं च केशान्ते" इति सूत्रम्। केशान्तकर्म्मानन्तरं केशान्तकर्म्मणा यः संस्कृतः स संवत्सरं यावद्ब्रह्मचर्यं चरेत्, स्त्रीसम्भोगं न कुर्यादित्यर्थः। अवपनं च केशान्तोत्तरकालं संस्कृतः। चशब्दः संवत्सरानुवृत्त्यर्थः। केशान्तकर्म्मोत्तरमवपनञ्च। यावज्जीवं शास्त्रीयवपनव्यतिरेकेणेति वासुदेवहरिहरगगाः। "द्वादशरात्रं षड्रात्रं त्रिरात्रमन्ततः" इति सूत्रम्। एते चत्वारो विकल्पाः पूर्वपूर्वाशक्त्या। अत्र स्मृत्यन्तरोक्तो वपने विधिः। अथ क्षौरनिषेधमाह ज्योतिर्निबन्धे —

उदन्वतोऽम्भसि स्नानं न स्वकेशनिकृन्तनम्।
विदेशगमनं चैव न कुर्याद्गुर्विणीपतिः ॥
मुण्डनस्य निषेधेऽपि कर्त्तनं च विधीयते।
छेदनं दृषदा वाऽपि न क्षुरेण कदाचन ॥
पञ्चाशद्वायनात्पूर्व्वं क्षौरं नैमित्तिकं विना।
न कुर्यात्तदूर्ध्वन्तु स्वेच्छया वपनं चरेत् ॥

स्मृत्यन्तरेऽपि—

विना तीर्थं विना यज्ञं मातापित्रोर्मृतिं विना।
यो वापयति रोमाणि स पुत्रः पितृघातकः ॥

निर्णयसिन्धौ—

गङ्गायां भास्करक्षेत्रे मातापित्रोः क्षयेऽहनि।
आधाने सोमपाने च षट्सु क्षौरं विधीयते ॥

धर्म्मप्रवृत्तौ—

सेतुबन्धश्च गोकर्णनिवृत्तिः श्रीगिरिस्तथा।
विरूपाक्षस्तथा काशी क्षेत्रं भास्करसंज्ञकम् ॥
मुण्डनं चोपवासश्च सर्वतीर्थेष्वयं विधिः।
वर्ज्जयित्वा कुरुक्षेत्रं विशाला विरजां गयाम् ॥
तथा च वपनं चानुभाविनां प्रेतकनीयसाम् ॥

तथा—

प्रयागे वपनं कुर्य्याद्गयायां पिण्डपातनम् ॥

इत्यादिषु निमित्तेषु वपनं कार्य्यम् । वृथा तु न कार्य्यम् । तथा च विष्णुः—

प्रयागे तीर्थयात्रायां पितृमातृवियोगतः ।
कचानां वपनं कुर्य्याद्वृथा न विकचो भवेत् ॥

इति निषेधेऽपि "नीचकेशो विप्रः स्या"दिति नीचकेशविधानात्कर्त्तनादिना नीचत्वं सम्पादनीयम् । तथा च बृहस्पतिः—

मुण्डनस्य निषेधेऽपि कर्त्तनन्तु विधीयते ॥ इति ।

मुण्डने दिङ्नियमस्तु गदाधरभाष्ये—

प्राङ्मुखः श्मश्रुकर्म्माणि कारयीत समाहितः ।
उदङ्मुखोऽथ वा भूत्वा तथायुर्विन्दते महत् ॥

अपरार्के—

केशश्मश्रुलोमनखान्युदक्संस्थानि वापयेत् ।
दक्षिणं कर्णमारभ्य धर्म्मार्थं पापसंभवे ॥
हन्वाद्यन्तश्च संस्कारे शिखाद्यन्तं शिरो भवेत् ॥

यतीनां विशेषो निगमे—

कक्षोपस्थशिखावर्ज्जमृतुसन्धिषु वापयेत् ॥

धर्म्मप्रवृत्तौ—

वापयेत्सर्वरोमाणि कक्षोपस्थशिखां विना ॥

अथ प्रसङ्गात्सामान्यक्षौरनिर्णयः । वीरमित्रोदये व्यासः—

चतुर्थीं चैव षष्ठीं च अष्टमीं च चतुर्दशीम् ।
तथा पञ्चदशीं चैव ब्रह्मचारी भवेत्सदा ॥
श्मश्रुकर्म्म शिरोऽभ्यङ्गं दन्तधावनमज्जनम् ॥

वर्ज्जयेदिति शेषः । मरीचिः—

षष्ठ्यां पर्व्वसु पक्षादौ रिक्तामन्दातिथिष्वपि ।
कृते श्राद्धे विवाहे च क्षौरं वर्ज्यं निशासु च ॥

गर्गः—

षष्ठ्यमा पूर्णिमा पातश्चतुर्दश्यष्टमी तथा।
आसु सन्निहितं पाप तिले मांसे क्षुरे भगे॥

वीरमित्रोदये—

शन्याररविवारेषु रात्रौ पाते व्रतेऽहनि।
श्राद्धाह प्रतिपद्रिक्तां भद्रां क्षौरे विवर्जयेत्॥

वराहसंहितायाम्—

न स्नानमात्रगमनोत्सुकभूषितानाम्-
मभ्यक्तभुक्तरणकालनिरासनानाम्।
सन्ध्यानिशाशनिकुजार्कदिने च रिक्ते
क्षौरं हितं न नवमेऽह्नि न चापि विष्ट्याम्॥ इति।

स्नानमात्रमित्यत्र नित्यनैमित्तिककाम्यस्नानानन्तराभ्यर्हितकालो निषिध्यते। यत्र तु तीर्थप्रायश्चित्तादौ स्नानानन्तरमेव क्षौरविधानं तत्र न दोषो विधिबलात्। गमनोत्सुको ग्रामान्तरे गमनेच्छुः। भूषितः धृतोत्तमवस्त्रभूषणादिः। अभ्यक्तस्तैलेन। भुक्तो भुक्तवान्। रणकालो युद्धोद्यमकालः। निरासनः आसनरहितः। ईदृशस्य क्षौरनिषेधः अमङ्गलसूचनार्थः। नक्षत्रादीनि चूडाकर्म्मोक्तानि ग्राह्याणि। कालविधाने—

अशुभर्क्षे कृते क्षौरे क्षिप्रं कुर्य्यात्पुनः शुभे।
आहिताग्नेः पर्व्वदिने द्वादश्यां च प्रशस्यते॥ इति।

अत्रापि जन्मर्क्षजन्ममासौ निषिद्धौ राजमार्त्तण्डे—

देवकार्य्ये पितृश्राद्धे रवेरंशपरिक्षये।
क्षुरकर्म्म न कुर्व्वीत जन्ममासे न जन्मभे॥

अंशपरिक्षयः सौरमासान्तिमदिनम्। वीरमित्रोदये गर्गः—

न देवपितृकार्य्यान्ते न पक्षादौ वपेन्नरः।
उपोषितोऽथ जन्मर्क्षे पक्षान्ते च विशेषतः॥ इति।

उपोषितो व्रतादौ। सर्वनिषेधापवादमाह वराहमिहिरः—

नृपाज्ञया ब्राह्मणसम्मते च विवाहकाले मृतसूतके च।

बन्धस्य मोक्षे क्रतुदीक्षणेषु सर्वेषु शस्तं क्षुरकर्म भेषु ॥

बृहस्पतिः —

राजकार्य्यनियुक्तानां नटानां रूपजीविनाम् ।
श्मश्रुरोमनखच्छेदे नास्ति कालविशोधनम् ॥

नृपक्षौरे विशेषः । तत्र श्रीपतिः—

श्मश्रुकर्म पञ्चमे पञ्चमेऽह्नि भूभुजाम् ।
क्षौरभस्य चोदये निन्द्यतारका न चेत् ॥

निन्द्यतारकाः जन्मात्रिपञ्चसप्तमताराः । गर्गोऽपि—

क्षौरकर्म महीशानां पञ्चमे पञ्चमेऽहनि ।
कर्त्तव्यं क्षौरनक्षत्रेऽप्यथ वा तन्मुहूर्त्तके ॥ इति ।

इति श्रीमथुराखीयरामकृष्णाविरचिते पारस्करगृह्यसूत्रविवरणे संस्कारगणपतौ द्वितीयकाण्डे प्रथमा कण्डिका ।

---

अथाऽस्य स्पष्टप्रयोगो लिख्यते । प्रथमवर्षसमाप्तौ द्वितीयवर्षारम्भे तृतीयेऽपूर्णे वा पञ्चमे अथवा उपयनदिने एवोपनयनात्प्राक् कार्य्यम । कर्त्ता पूर्वाह्ने देशकालौ स्मृत्वा, "अस्य कुमारस्य बीजगर्भसमुद्भवैनोनिबर्हणेन बलायुर्वर्चोऽभिवृद्धिद्वारा श्रीपरमेश्वरप्री ये चूडाकर्माहं करिष्य" इति सङ्कल्प्य, पूर्ववत् गणेशपूजनपुण्याहवाचनमातृकापूजननान्दीश्राद्धं कृत्वा आभ्युदयिकश्राद्धव्यतिरिक्तान् त्रीन् ब्राह्मणान् भोजयेत् । बहिःशालायां स्थण्डिले पञ्चभूसंस्कारान् कृत्वा लौकिकाग्निं स्थापयेत् । माता पुत्रं स्थापयित्वा वाससी परिधाप्य, उत्सङ्गे कृत्वा अग्नेः पश्चाद्भर्तुर्दक्षिणे उपविशति । ततो ब्रह्मोपवेशनादि कार्य्यम् । तण्डुलवर्ज्जमासादनमुपकल्पनीयम् । शीतोदकार्थं भाण्डम् । उष्णोदकार्थं भाण्डम् । शीतोदकम् । उष्णोदकम् । दधि वा नवनीतं वा आज्यं वा । श्येणी शलली । त्रीणि कुशतरुणानि । पृथग्बद्धानि । नवताम्रपरिष्कृतक्षुरः । अनडुद्गोमयपिण्डम् । नापितश्चेति । पर्य्युक्षणान्ते होमः ।

"ॐ प्रजापतये स्वाहा। इदं प्रजापतये न मम ॥ ॐ इन्द्राय स्वाहा। इदमिन्द्राय न मम ॥ ॐ अग्नये स्वाहा। इदमग्नये० ॥ ॐ सोमाय स्वाहा। इदं सोमाय० ॥ ॐ भूः स्वाहा। इदमग्नये०॥ ॐ भुवः स्वाहा। इदं वायवे० ॥ ॐ स्वः स्वाहा। इदं सूर्याय०॥ त्वन्नः०। सत्वन्नः०। अयाश्चाग्ने०। ये ते शतम्०। ॐ प्रजापतये स्वाहा। इदं प्रजापतये०॥ ॐ अग्नये स्विष्टकृते स्वाहा। इदमग्नये स्विष्टकृते०"॥ ततः संस्रवप्राशनं पवित्राभ्यां मार्जनम्। पवित्रप्रतिपत्तिः। ब्रह्मणे पूर्णपात्रदानम्। प्रणीताविमोकः। पत्न्या दक्षिणत उपविश्य ततः शीतोदकार्थभाण्डे शीतोदकं क्षिपेत्। उष्णोदकार्थभाण्डे उष्णोदकं क्षिपेत। ततः शीतोदके उष्णोदकमासिञ्चति। तत्र मन्त्रः--"ॐ उष्णेन वाय उदकेनेह्यदिते केशान्वप"। तत उष्णोदकं शीतोदके क्षिपेत। तत्रैव घृतपिण्डं क्षिपेत। तूष्णीं तदुदकं गृहीत्वा। "ॐ सवित्रा प्रसूता दैव्या आप उदन्तु ते तनूम। दीर्घायुत्वाय वर्चसे"। इत्यनेन मन्त्रेण दक्षिणं गोदानं केशमूले आर्द्रं करोति। ततस्त्र्येण्या शलल्या मध्ये केशान् विनीय, "ओषधे त्रायस्व स्वधिते मैनꣳ हिꣳसीः" इत्यनेन मन्त्रेण त्रीणि कुशतरुणानि शिरोऽग्राणि अन्तर्दध्यात्। शिरोऽग्राणि उर्ध्वमूलानि। "ॐ शिवो नामासि स्वधितिस्ते पिता नमस्ते अस्तु मा मा हिꣳसीः" इत्यनेन मन्त्रेण कल्पितक्षुरमादाय, "ॐ निवर्तयाम्यायुषेऽन्नाद्याय प्रजननाय रायस्पोषाय सुप्रजास्त्वाय सुवीर्य्याय" इत्यनेन मन्त्रेण क्षुरस्य गोदाने संलग्नीकरणम्। ॐ येनावपत्सविता क्षुरेण सोमस्य राज्ञो वरुणस्य विद्वान्। तेन ब्रह्माणो वपतेदमस्यायुष्यं जरदष्टिर्यथाऽसत्" इत्यनेन मन्त्रेण सकेशानि दर्भतरुणानि मध्ये च्छित्वा अनडुहो गोमयपिण्डे उत्तरतो ध्रियमाणे प्रक्षिपति। एवमेवापरं वारद्वयम। उन्दनम् केशविनयनम। कुशतरुणान्तर्धानम्। क्षुरनिधानम्। सकेशकुशतरुणप्रच्छेदनम्। गोमयपिण्डे स्थापनं तूष्णीं कुर्य्यात्। "एकद्रव्ये कर्म्मावृत्तौ सकृन्मन्त्रवचनं कृतत्वा"दिति कात्यायनवचनात्। एवमेव पश्चिमोत्तरयोर्गो-

दानयोः । पश्चिमगोदानच्छेदने मन्त्रः—"ॐ त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषम् । यद्देवेषु त्र्यायुषन्तन्नोऽअस्तु त्र्यायुषम्" । उत्तरगोदानच्छेदने मन्त्रः-"ॐ येन भूरिश्चरा दिवं ज्योक्च पश्चाद्धि सूर्य्यम् । तेन ते वपामि ब्रह्मणा जीवातवे जीवनाय सुश्लोक्याय स्वस्तये ।" अन्यत्सर्वं समानम् । द्विस्तूष्णीं च समानम् । "ॐ यत्क्षुरेण मज्जयता सुपेशसा वप्त्वा वा वपति केशाँश्छिन्धि शिरो मास्यायुः प्रमोषीः" इत्यनेन मन्त्रेण दक्षिणकर्णादारभ्य शिरसः समन्तात् प्रदक्षिणं क्षुरभ्रामणं सकृन्मन्त्रेण द्विस्तूष्णीम् । ततस्तेनैवोदकेन शिरस आर्द्रीकरणम् । नापितहस्ते क्षुरं दद्यात् "अक्षण्वन्परिवप" इत्यनेन मन्त्रेण । "वपामी"ति नापितो ब्रूयात् । कुमारस्य वपनं नापितः करोति । तेषामेव केशानां शिखाकरणम् । शिखारक्षणं यस्य कुले यथैवोक्तं तथा कर्त्तव्यम् । तं सकेशं गोमयापिण्ड वस्त्रादिना गोपयित्वा उदकसमीपे भूमौ गोष्ठे वा गोपयेत् । सुगन्धतैलेनोद्वर्त्तनेन कुमारस्याभ्यङ्गं कुर्य्यात् । तत आचार्य्याय वरदानम् । ततो ब्राह्मणभोजनसङ्कल्पः । भूयसीं दक्षिणां दद्यात् । द्वितीयेऽह्नि चतुर्थे वा मातृकाविसर्ज्जनम् । सर्वेषु संस्कारकर्म्मसु गर्भाधानादिविवाहान्तेषु पितैव कर्त्ता ॥

इति श्रीप्रथमशाखीयरामकृष्णविरचिते पारस्करगृह्यसूत्रविवरणे संस्कारगणपतौ चूडाकरणप्रयोगः ॥

---

अथ बालकस्याक्षरारम्भविधानम् । तत्कालमाह नृसिंहः—

अक्षरस्वीकृतिः प्रोक्ता प्राप्ते पञ्चमहायने ।
उत्तरायणगे सूर्य्ये कुम्भमासं विवर्ज्जयेत् ॥

अथ नक्षत्राणि—

हस्तादित्यमरुन्मित्ररौद्रपौष्णाश्विचित्रभम् ।
श्रवणं च प्रशस्तं स्यादक्षरग्रहणे शिशोः ॥

अथ पक्षः । मुहूर्त्तसङ्ग्रहे—

उत्तरायणगे सूर्य्ये कुम्भमासं विवर्ज्जयेत् ।

पूर्वपक्षः शुभः प्रोक्तः कृष्णे चान्त्यत्रिकं विना ॥

अथात्र तिथयः । तत्र मार्कण्डेयः—

षष्ठीं प्रतिपदं चैव वर्जयित्वा तथाष्टमीम् ।
रिक्तां पञ्चदशीं चैव सौरिभौमदिनं तथा ॥

अथ वाराः । तत्र मार्कण्डेयः—

वारे दिनेशभृगुपुत्रबृहस्पतीनां विद्वानसौ भवति योऽतिविमूढबुद्धिः।
चन्द्रे च चन्द्रतनये त्वकृशे च सर्वं विघ्नं भवेदवनिजे रविजे विनाशः ॥

नृसिंहः—

शुभाः पापाश्च रन्ध्रस्थाः सर्वे नेष्टाः सदा ग्रहाः ।
भ्रातृषष्ठायकर्म्मस्थाः पापाः सर्व्वे शुभावहाः ॥
शुभाः केन्द्रत्रिकोणस्था धनभ्रातृगताः शुभाः ।
सर्वे त्वभिप्रशस्ताः स्युरक्षरग्रहणे शिशोः ॥

अत्र सिंहस्थादिनिषेधोऽभिहितो राजमार्त्तण्डे—

विद्यारम्भः प्रशस्तो भवति मधुरिपौ प्राप्तबोधे शशाङ्के
शस्ते तीक्ष्णद्युतौ च त्रिदशपतिगुरावुद्गते चाथ शुक्रे ।
स्वाध्याये सिंहसंस्थं खरकिरणयुतं देवपूज्यं विहाय
शुक्रादित्येज्यवारे त्रिदशपतिगुरौ केन्द्रसंस्थे न पापे ॥

अथेतिकर्त्तव्यता । तत्र वशिष्ठः—

समुद्गते भास्वति पञ्चमेऽब्दे प्राप्तेऽक्षरस्वीकरणं शिशूनाम् ।
सरस्वतीं विघ्नविनायकं च गुडौदनाद्यैरभिपूज्य कुर्य्यात् ॥

देवतान्तरं पूजाप्रकारं चाह मार्कण्डेयः—

अभ्यङ्गस्नानपूर्वन्तु गन्धाद्यैश्च विभूषितः ।
शुक्लवस्त्रं समास्तीर्य्य तण्डुलोपरि पूजयेत् ॥
पूजयित्वा हरिं लक्ष्मीं देवीं चैव सरस्वतीम् ।
स्वविद्यासूत्रकारांश्च स्वां विद्यां च विशेषतः ॥

सूत्रकाराः पाणिन्यादयः । विद्याश्च पाणिनिव्याकरणादयः ।

एतेषां चैव देवानां नाम्ना तु जुहुयाद्घृतम् ।
दक्षिणाभिर्द्विजेन्द्राणां कर्त्तव्यं चात्र पूजनम् ॥

प्राङ्मुखो गुरुरासीनो वरुणाशामुखं शिशुम् ।
अध्यापयीत प्रथमं द्विजाशीर्भिः प्रपूजितम् ॥
ब्राह्मणानां गुरूणां च देवतानामनन्तरम् ।
ततः सम्पूज्य वित्तेन धात्रीं राम ! गुरूँस्तथा ॥
ततः प्रभृत्यनध्यायान्वर्ज्जनीयान्विवर्ज्जयेत् ।
अष्टमीद्वितयं राम ! पक्षान्ते च दिनत्रयम् ॥
आशौचे चेन्द्रयात्रायां भूकम्पे राहुदर्शने ।
व्यतीपाते त्वहोरात्रे मुक्त्वा पातं तथैव च ॥
अकालस्तनिते चैव निर्ज्योतिषि तथाम्बरे ।
तथा काले प्रचण्डश्च यदा वायुस्तदा भवेत् ॥
प्रदोषे चाथ संशुद्धे चैत्यवृक्षे चतुष्पथे ।
गोस्थाने कुञ्जरे चाश्वे न चैत्येऽपि तथा पठेत् ॥
श्वशृगालरवैर्घोरैस्तथाच खरनिःस्वनैः ।
तथा वादित्रशब्दे च प्रवृत्ते नगरोत्सवे ॥

इति श्रीप्रथमशाखीयरामकृष्णविरचिते पारस्करगृह्यसूत्र-
विवरणे संस्कारगणपतौ बालस्याक्षरारम्भविधानम् ॥

---

अथेदानीं प्रसङ्गादनुपनीतधर्म्माः कथ्यन्ते । स च त्रिविधः । शिशुर्बालः कुमारश्चेति । तल्लक्षणमाह वृद्धशातातपः—

प्राक्चूडाकरणाद्बालः प्रागन्नप्राशनाच्छिशुः ।
कुमारकस्तु विज्ञेयो यावन्मौञ्जीनिबन्धनम् ॥

तेषां चास्पृश्यस्पर्शनादौ शुद्धिभेदमप्याह स एव—

शिशोरभ्युक्षणं प्रोक्तं बालस्याचमनं स्मृतम् ।
रजस्वलादिसंस्पर्शे स्नातव्यं तु कुमारकैः ॥

रजस्वलादीत्यत्रादिशब्देनाऽस्पृश्यानां म्लेच्छचाण्डालसूतिकादीनां ग्रहणम् । कुमाराणां स्नानं नाम सर्वाङ्गजलसंयोगमात्रम् , नेतिकर्तव्यता, मन्त्राद्यभावात् ।

स्नानं सर्वाङ्गसंयोगो वारिणा परिकीर्त्तितः ॥

इति वीरमित्रोदये स्मरणात्। धर्मान्तरमप्याह स्मृतिचन्द्रिकायां गौतमः—

"प्रागुपनयनात्कामचारकामवादकामभक्ष" इति। कामचार इच्छाचरणम्। कामवादः अश्लीलादिभाषणम्। कामभक्षः पर्य्युषितान्नादिभक्षणम्। एतेषु क्रियमाणेषु उपनयनात्प्राङ्न दोष इति भावः। तथा च वीरमित्रोदये विष्णुपुराणवचनम्—

भक्ष्याभक्ष्ये तथाऽपेये वाच्यावाच्ये तथानृते।
अस्मिन्काले न दोषोऽस्ति स यावन्नोपनीयते ॥

ब्रह्मपुराणेऽपि—

मातापित्रोरथोच्छिष्टं बालो भुञ्जन्भवेत्सुखी ॥

न तु ब्रह्महत्यासुरापानाद्यतिप्रसङ्गः। तथा च विधानपारिजाते स्मृत्यन्तरम्—

स्यात्कामचारभक्ष्योक्तिमर्हतः पातकादृते ॥ इति।

महापातके प्राप्ते पित्रादिभिः प्रायश्चित्तं कार्य्यम्। तथा चोक्तं विधानपारिजाते पाराशरेण—

अनुपेतस्तु यो विप्रो मद्यं मोहात्पिबेद्यदि।
तस्य कृच्छ्रत्रयं कुर्य्यान्माता भ्राता पिताऽथवा ॥

वीरमित्रोदये—

वैश्वदेवपुरोडाशमग्निमध्ये च यद्धुतम्।
प्रमादाच्छिशुराकर्षन्मात्रा रक्ष्यः प्रयत्नतः ॥

इदन्त्वतिबालविषयम्। तदाचारविषये वशिष्ठः—

नह्यस्य विद्यते कर्म्म किञ्चिदामौञ्जिबन्धनात्।
वृत्त्या शूद्रसमस्तावद्यावद्वेदे न जायते ॥ इति।

पुनरिति शेषः। गौतमोऽपि "यथोपपादमूत्रपुरीषो भवती"ति। यथोपपादं यथासम्भवं मूत्रपुरीषे यस्य स तथोक्तः। तेनास्योदङ्मुखत्वादिनियमो नास्तीत्यर्थः। किञ्च "न त्वेवैनमग्निहवनबलिहरण-

योर्नियुञ्ज्यात्'' इति । एवमनुपनीतमग्निहवने औपासनहोमादौ बलि-हरणे वैश्वदेवादौ न नियुञ्जीतेत्यर्थः । तथा च मनुः—

नैव कन्या न युवतिर्नाल्पविद्यो न बालिशः ।
होता स्यादग्निहोत्रस्य नार्त्तो नासंस्कृतस्तथा ॥

कन्या कुमारिका । किञ्च ''न ब्रह्माभिव्याहरेदन्यत्र स्वधानिनयना''दिति । ब्रह्म वेदस्तमनुपेतो नोच्चारयेत् । तस्यापवादः- स्वधानिनयनं प्रेतकर्म्म तस्माद्विना । तथा च वशिष्ठः—

नह्यस्य विद्यते कर्म्म किञ्चिदामौञ्जिबन्धनात् ॥ इति ।

''अथाप्युदाहरन्ति, अन्यत्रोदकधर्म्मस्वधापितृसंयुक्तेभ्यः'' इति । उदकं तिलाञ्जलिदानादि । धर्म्म आशौचिनां कटशयनादिः । स्वधा श्राद्धमेकोद्दिष्टसपिण्डनमासिकवार्षिकादि । पितृसंयुक्तं शय्यादानवृषोत्सर्गादि पितृसंयोगविशेषात् , एतेभ्योऽन्यत्रैतानि विहायेत्यर्थः । तेनैतेष्वनुपेतस्यापि मन्त्रोच्चारणं सिद्ध्यति । तदपि कृतचूडस्य त्रिवर्षस्य वा द्रष्टव्यम् ।

अनुपेतोऽपि कुर्वीत मन्त्रवत्पैतृमेधिकम् ।
यद्यसौ कृतचूडः स्याद्यदि स्याच्च त्रिवर्षकः ॥

इति सुमन्तुस्मरणात् । तथा च व्याघ्रपादः—

कृतचूडस्तु कुर्वीत उदकं पिण्डमेव च ।
स्वधाकारं प्रयुञ्जीत वेदोच्चारं न कारयेत् ॥

सङ्ग्रहेऽपि—

कृतचूडोऽनुपेतस्तु पित्रोः श्राद्धं समाचरेत् ।
उदाहरेत्स्वधाकारं न तु वेदाक्षराण्यसौ ॥

इदं च वचनद्वयं प्रथमवर्षविषयम् । कृतचूडस्य त्रिवर्षस्य पैतृके मन्त्राधिकारोऽस्ति । वीरमित्रोदये मनुः—

कुर्य्यादनुपनीतोऽपि श्राद्धमेकोऽपि यः सुतः ।
पितृयज्ञाहुतिं पाणौ जुहुयान्मन्त्रपूर्वकम् ॥

तथा च कात्यायनः—

असंस्कृतेन पत्न्या च ह्यग्निदाहः समन्त्रकम् ।

कर्त्तव्यमितरत्सर्वं कारयेदन्यमेव हि ॥ इति ।

अयं च पैतृकमन्त्राविकारोऽनुपेतस्यौरसस्यैव । तथा च वीरमित्रोदये स्कन्दपुराणम्—

पित्रोरनुपनीतोऽपि विदध्यादौरसः सुतः ।
और्ध्वदेहिकमन्ये तु संस्कृताः श्राद्धकारिणः ॥ इति ।

और्ध्वदेहिकं समन्त्रकमिति शेषः । तथा च सुमन्तुः—

नाभिव्याहारयेद्ब्रह्म यावन्मौञ्जी न बध्यते ।
मन्त्राननुपनीतोऽपि पठेदेवैक औरसः ॥ इति ।

और्ध्वदेहिके इति शेषः । इत्यनुपनीतधर्म्माः ।

अथ प्रसङ्गाद्बालपितृधर्म्मा अप्युच्यन्ते । विष्णुधर्म्मोत्तरे—

अपथ्यं न च बालानां तथा भार्गव ! पश्यताम् ।
प्रार्थितं बालकानां च दातव्यं स्याद्धितं ततः ॥
बालानां प्रार्थितं दत्वा नाकलोके महीयते ।
बालकाश्चानुनेयाः स्युर्धर्म्मकामैः सदा नरैः ॥
तेषां भोज्यप्रदानेन गोदानफलमाप्नुयात् ।
तेषां क्रीडनकं दत्त्वा मोदते नन्दते दिवि ।
आह्लादयन्ति सततं यस्मिन्गृहे न बालकाः ॥
दौर्भाग्यं महदाप्नोति यत्र यत्राभिजायते ।
तस्मात्सर्वप्रयत्नेन बालानग्रे तु भोजयेत् ॥
अभुक्तवत्सु बालेषु न चाश्नीयात्कदाचन ।
यन्न दद्यान्न चाश्नीयात्कदाचिदपि च स्वयम् ॥

इति श्रीप्रथमशाखीयरामकृष्णविरचिते पारस्करगृह्यसूत्रविवरणे संस्कारगणपतौ अनुपनीतबालपितृधर्माः ॥

---

अथोक्तसंस्कारातिपत्तिप्रायश्चित्तम् । तत्र कात्यायनः—

संस्कारा अतिपद्येरन्स्वकालाच्चेत्कथञ्चन ।
कृत्वैतदेव कर्त्तव्या ये तूपनयनात्पुरा ॥

एतत्स्वयमेव वक्ष्यमाणम् । तस्मिन्कृतेऽपि कर्त्तव्या एव, तैरेवो·

पनयनयोग्यत्वात्। तथा च देवलः--"प्रथमं मातापितृभ्यां गर्भाधानादिभिः संस्कृतो गर्भाष्टमे वर्षे तूपनयनार्हो भवती"ति। इदं च तेषां गौणकालसद्भावे, तदतिक्रमे तु प्रायश्चित्तमात्रमेव। तदाह भृगुः--

गर्भाद्यसंस्कृतस्यापि कर्त्तव्यं चोपनायनम्।
प्रायश्चित्तन्तु पूर्वेषां नौपनायनिकस्य तु॥
श्रौतस्मार्त्ताधिकारी स्यान्नौपनायनिकं विना॥ इति।

तदेतत्प्रायश्चित्तमाह कात्यायनः--

लुप्ते कर्म्मणि सर्वत्र प्रायश्चित्तं विधीयते।
प्रायश्चित्ते कृते तस्माल्लुप्तं कर्म्म समाचरेत्॥

स्मृत्यर्थसारेऽप्येवमेव। कारिकायां यद्यपि "लुप्तं कर्म्म कृताकृत"मिति, तथापि कात्यायनोक्तेः,

कालातीतानि कृत्वैव विदध्यादुत्तराणि तु॥

इति मण्डनोक्तेश्च, कात्यायनादियाजुषां लुप्तकर्म्मकरणमेव युक्तम्। अतीतसंस्काराणां युगपत्करणे सकृदेवाभ्युदयिकम्। "गणशः क्रियमाणाना"मिति च्छन्दोगपरिशिष्टात्। बह्वपत्यानां युगपत्संस्कारविषयमिति बोपदेवः। तत्र विधिः--

त्वन्नः सत्वन्न इत्याभ्यामिमम्मे त्वेतया ऋचा।
ये ते शतमयाश्चाभ्यामुदुत्तममृचाऽऽहुतीः॥
हुत्वा पृथक्पृथक्पादमर्धं चौले समाचरेत्।
स्त्रीणामप्येवमेवं स्याज्जाताद्या मन्त्रिकाः क्रियाः॥ इति।

शौनकोऽपि--

आरभ्याधानमाचौलात्कालातीते तु कर्म्मणाम्।
व्याहृत्याज्यं सुसंस्कृत्य हुत्वा कर्म्म यथासुखम्॥
एतेष्वेकैकलोपेऽपि पादकृच्छ्रं समाचरेत्।
चूडायामर्द्धकृच्छ्रं स्यादापदि त्वेवमीरितम्॥
अनापदि तु सर्वत्र द्विगुणाद्द्विगुणं चरेत्॥

गर्भाधानाद्यन्नप्राशनान्तानां कर्म्मणां मध्ये एकैकस्य सर्वेषां वा

लोपे तत्तल्लोपनिमित्तं प्रत्येकं पादकृच्छ्रं प्रायश्चित्तं तन्त्रेण वा कृत्वा अनादिष्टहोमं च कृत्वा अतिक्रान्तसंस्कारान् कृत्वा चौलारम्भः कार्य्यः। अथ अनादिष्टप्रायश्चित्तहोमे पदार्थक्रमः। तत्र प्रयोगः देशकालौ स्मृत्वा "ममास्य कुमारस्य यथाकालं गर्भाधानाद्यकरणजनितदोषपरिहारार्थं गोमूल्यप्रत्याम्नायद्वारा लुप्तसंस्कारसंख्यपादकृच्छ्राण्याचरिष्ये" इति सङ्कल्प्य साङ्गमनङ्गं वा प्रायश्चित्तं कालान्तरे ।रिक्तासु तिथिषु समाप्य प्रायश्चित्तहोमं कुर्य्यात्। तद्यथा—पञ्चभूसंस्कारपूर्वकमग्निं संस्थाप्य स्थाल्यामाज्यस्य निर्वापः स्रुवमार्ज्जनम्।

उद्वास्योत्पवनावेक्ष्य स्रुवेणाहुतिरेव च॥

ताम्रादिपात्रे आज्यं निक्षिप्य अग्नौ अधिश्रित्य लौकिककुशैः स्रुवं संमृज्य उद्वास्य कुशाभ्यामुत्पूय अवेक्ष्य दक्षिणं जान्ववाच्य हृदि सव्यहस्तं निधाय मौनी जुहुयात्। "ॐभूः स्वाहा। इदमग्नये न मम। ॐ भुवः स्वाहा। इदं वायवे न मम। ॐस्वः स्वाहा। इदं सूर्याय न मम। ॐभूर्भुवः स्वः स्वाहा। इदं प्रजापतये न मम। त्वन्नो अग्ने०। सत्वन्नो अग्ने०। अयाश्चाग्ने०। ये ते शतम्०। उदुत्तमम्०"। त्यागास्तु पूर्ववत्। इति नवाहुतिं हुत्वा विष्णुस्मरणम्। अथानन्तरं कर्म्मकरणम्।

इति श्रीप्रथमशाखीयरामकृष्णविरचिते पारस्करगृह्यसूत्रविवरणे संस्कारगणपतौ संस्कारातिपत्तिप्रायश्चित्तम्।



## ( द्वितीया कण्डिका )

अष्टवर्षं ब्राह्मणमुपनयेद्गर्भाष्टमे वैकादशवर्षꣳ राजन्यन्द्वादशवर्षं वैश्यं यथामङ्गलं वा सर्वेषां ब्राह्मणान्भोजयेत्तं च पर्युप्तशिरसमलङ्कृतमानयन्ति पश्चादग्नेरवस्थाप्य ब्रह्मचर्यमागामिति वाचयति ब्रह्मचार्यसानीति चाथैनं वासः परिधापयति येनेन्द्राय बृहस्पतिर्वासः पर्यदधादमृतम् । तेन त्वा परिदधाम्यायुषे दीर्घायुत्वाय बलाय वर्चस इति मेखलां बध्नीत इयं दुरुक्तं परिबाधमाना वर्णं पवित्रं पुनती म आगात् । प्राणापानाभ्यां बलमादधाना स्वसा देवी सुभगा मेखलेयमिति युवा सुवासाः परिवीत आगात्स उ श्रेयान्भवति जायमानः । तं धीरासः कवय उन्नयन्ति स्वाध्यो मनसा देवयन्त इति वा तूष्णीं वा(त्र यज्ञोपवीतपरिधानं यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् । आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः । यज्ञोपवीतमसि यज्ञस्य त्वा यज्ञोपवीतेनोपनह्यामीत्य)थाजिनं प्रयच्छति मित्रस्य चक्षुर्द्धरुणं बलीयस्तेजो यशस्वि स्थविरꣳ समिद्धम् । अनाहनस्यं वसनं जरिष्णुः परीदं वाज्याजिनं दधेऽहमिति वा तूष्णीं दण्डं प्रयच्छति तं प्रतिगृह्णाति यो मे दण्डः परापतद्वैहायसोऽधि भूम्याम् । तमहं पुनराददं आयुषे ब्रह्मणे ब्रह्मवर्चसायेति दीक्षावदेके दीर्घसत्रमुपैतीति वचनादथास्याद्भिरञ्जलिनाऽञ्जलिं पूरयत्यापो हि ष्ठेति तिसृभिरथैनꣳ सूर्यमुदीक्षयति तच्चक्षुरित्यथास्य दक्षिणांꣳसमधि हृदयमालभते मम व्रते ते हृदयं दधामि मम चित्तमनु चित्तं तेऽस्तु । मम वाचमेकमना जुषस्व-

बृहस्पतिष्ट्वा नियुनक्तु मह्यमित्यथास्य दक्षिणँ हस्तं गृहीत्वाऽऽह को नामासीत्यसावहं भो३इति प्रत्याहाथैनमाह कस्य ब्रह्मचार्य्यसीति भवत इत्युच्यमान इन्द्रस्य ब्रह्मचार्य्यस्यग्निराचार्य्यस्तवाहमाचार्य्यस्तवासावित्यथैनं भूतेभ्यः परिददाति प्रजापतये त्वा परिददाम्मि देवाय त्वा सवित्रे परिददाम्यद्भ्यस्त्वौषधीभ्यः परिददामि द्यावापृथिवीभ्यान्त्वा परिददामि विश्वेभ्यस्त्वा देवेभ्यः परिददामि सर्व्वेभ्यस्त्वा भूतेभ्यः परिददाम्यरिष्ट्याऽइति ॥२॥

अथोपनयनमाह "अष्टवर्षं ब्राह्मणमुपनयेदि"ति सूत्रम्। प्रसवानन्तरम् अष्टौ वर्षाण्यतीतानि यस्य बालकस्यासौ तं अष्टवर्षं ब्राह्मणं ब्राह्मणकुलोद्भवं द्विजोत्तममुपनयेत्, उपनयनाख्यसँस्कारेण सँस्कुर्य्यात्। तत्रोपनयनशब्दः कर्म्मनामधेयम। तथा च भारद्वाजः—

उपायनाख्यं यत्कर्म्म विद्यार्थं तदुदीरितम् ॥ इति।

तच्च यौगिकम् न रूढम्। उप समीपे आचार्य्यादीनां वटोर्नीतिर्नयनम्प्रायणमुपनयनम्। समीपे आचार्य्यादीनां नीयते बटुर्येन तदुपनयनमिति वा। तदुक्तं वीरमित्रोदये—

गुरोर्व्रतानां वेदस्य यमस्य नियमस्य च।
देवतानां समीपे वा येनासौ नीयते द्विजः ॥ इति।

सावित्रीवाचनं वोपनयनम्। तथा च कात्यायनः—

"गायत्र्या ब्राह्मणमुपनयीते"ति। मेधातिथिरपि "तया ह्यनुक्तया तन्न निष्पन्नं भवती"ति तस्माद्गायत्र्युद्देश एवोपनयनपदार्थ इति। इदमेव द्वितीयं जन्मेत्याह गौतमः—"तद्द्वितीयं जन्म माता अत्रास्य सावित्री पिता त्वाचार्य्य" इति।

उपायनाख्यं यत्कर्म्म विद्यार्थं तदुदीरितम् ॥

इति भारद्वाजोक्तत्वात्प्रतिवेदाध्ययनमुपनयनावृत्तिः सिद्ध्यति, "प्रतिप्रधानं गुणावृत्ति"रितिन्यायात्। गुणत्वं च तत्तच्छाखीयस्यैवोपनयनस्य तत्तच्छाखाध्ययनम्प्रतीति मन्तव्यम्, अन्यथा प्रतिशाखं

तदाम्नानानुपपत्तेः । तथा चापस्तम्बः-"उपनयनं विद्यार्थस्य श्रुतितः संस्कार" इति । विद्या अर्थः प्रयोजनं यस्य स विद्यार्थः । येन वेदेन यस्य प्रयोजनं तच्छ्रुत्या संस्कारस्तस्योपनयनम् , नान्यवेदेनोपनीतस्यान्यवेदाध्ययनमित्यर्थः । वशिष्ठोऽपि—

यच्छाखीयैस्तु सँस्कारैः सँस्कृतो ब्राह्मणो भवेत् ।
तच्छाखाध्ययनं कार्य्यमन्यथा पतितो भवेत् ॥ इति ।

तदशक्तावाहापस्तम्बः—"सर्वेभ्यो वै वेदेभ्यः सावित्र्यनूच्यत इति हि ब्राह्मण"मिति । वै शब्दो वार्थ इति धूर्त्तस्वामिनः ।

त्रिभ्य एव तु वेदेभ्यः पादं पादमदूदुहत् ।
तदित्यृचोऽस्याः सावित्र्याः परमेष्ठी प्रजापतिः ॥

इति मनुस्मरणात् । अस्मिन्नपि पक्षे अथर्ववेदाध्ययनार्थं पृथगेवोपनयनं कार्य्यम् । तथा च वीरमित्रोदये तदीयैव श्रुतिः—"नान्यत्र सँस्कृतो भृग्वङ्गिरसोर्विधीयते" इति । अथोपनयननिर्णयः । तत्र ब्राह्मणक्षत्रियविशामुपनयनम् । "वसन्ते ब्राह्मणमुपनयीत, गर्भाष्टमे वाष्टमे" इत्यादिश्रुतिस्मृतिभ्यामेव सिद्धम् । शूद्राणान्तु न भवत्येव । "अशूद्राणामदुष्टकर्म्मणामुपनयन"मिति आपस्तम्बेन शूद्रपर्य्युदासात् । "शूद्रजाति"रिति गौतमेन तस्यैव जातित्वाभिधानात् । तच्च पित्रादिना पुत्रादीनां कार्य्यमिति वक्ष्यते । ते च पुत्रादयो द्विविधाः, औरसाः क्षेत्रजादयश्च । तांश्चाह याज्ञवल्क्यः—

औरसो धर्म्मपत्नीजस्तत्समः पुत्रिकासुतः ।

क्षेत्रजादयश्चाह याज्ञवल्क्यः—

क्षेत्रजः क्षेत्रजातस्तु सगोत्रेणेतरेण वा ॥
गृहे प्रच्छन्न उत्पन्नो गूढजस्तु सुतः स्मृतः ।
कानीनः कन्यया जातो मातामहसुतो मतः ॥
अक्षतायां क्षतायां वा जातः पौनर्भवः स्मृतः ।
दद्यान्माता पिता यं वा स पुत्रो दत्तको भवेत् ॥
क्रीतश्च ताभ्यां विक्रीतः कृत्रिमः स्यात्स्वयं सुतः ।

दत्तात्मा तु स्वयं दत्तो गर्भे भिन्नः सहोढजः ॥
उत्सृष्टो गृह्यते यस्तु सोऽपविद्धो भवेत्सुतः।
स्वजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिः ॥

औरसा अपि द्विविधा,—सजातीया विजातीयाश्च। तत्र सजातीयानामुपनयनं द्विजत्वेनैव प्राप्तम्। विजातीया अपि द्विविधाः—अनुलोमजाः प्रतिलोमजाश्च। तत्रानुलोमजानामुपनयनमाह मनुः—

स्वजातिजानन्तरजाः षट् सुता द्विजधर्म्मिणः ॥ इति।

अस्यार्थः—

स्त्रीष्वनन्तरजातासु द्विजैरुत्पादितास्तु ये।
सदृशानेव तानाहुर्मातृदोषविगर्हितान् ॥

इत्यनेनानुलोमजाना यद्द्विजसादृश्यमुक्तं तत्र निमित्ताभिधानायेदमारभ्यते स्वजातिजेति—स्वजातिजाः सवर्णाः ताभ्योऽनन्तराः पश्चादनुकल्पत्वेनाम्नाताः। ब्राह्मणस्य क्षत्रिया वैश्या शूद्रा, क्षत्रियस्य वैश्या शूद्रा, वैश्यस्य शूद्रा, तासु ये जाता मूर्धावसिक्ताम्बष्ठनिषादमाहिष्योग्रकरणाः द्विजातीनां षट् सुतास्ते द्विजधर्म्मिणः। द्विजानां धर्म्मो द्विजधर्म्मः सोऽस्ति येषां ते द्विजधर्म्मिणः। द्विजात्युक्तोपनयनादिधर्माहा इत्यर्थः। यत्तु कश्चिन्निषादोग्रकरणपरिहारेण ब्राह्मणक्षत्रियवैश्यैः स्वजातिजैः सहानन्तरजातानां मूर्द्धावसिक्ताम्बष्ठमाहिष्याणां त्रयाणामेव षट्त्वमभिप्रेत्य द्विजधर्म्मत्वं व्याख्यातं, तन्न सुन्दरम्। "ब्राह्मणक्षत्रियविशां मातुरग्रे विजनन"मित्याद्युपदेशत एव द्विजधर्म्मत्वसिद्धौ द्विजधर्म्मातिदेशानर्थक्यात्। नचानन्तरजानां द्विजतुल्यत्वाभिधानेन द्विजधर्म्मप्राप्त्यर्थः सिद्धस्यैवानुवादोऽयमिति युक्तम्। तेनैवार्थसिद्धौ "षट्सुता द्विजधर्म्मिण"इति। "षट्सुता द्विजधर्म्मिणः, सदृशानेव तानाहुः, आत्मा वै पुत्रनामासि, आत्मातिजज्ञे, आत्मनः स एवायं विरूढः प्रत्यक्षेणोपलभ्यते, तत्रात्मा जायते स्वयम्, येषामुभयतो वा ब्राह्मण्यं पितृत इत्येके"इति। पुत्रजनने मातुः प्राधान्यं पितुरित्यन्ये। बीजप्राधान्यादयोनिजा अपि पुत्रा दृश्यन्ते द्रोणागस्त्यादयः। बीजप्राधा-

न्यदर्शनात् । तस्मात्सिद्धं षण्णामप्यनुलोमजानां द्विजत्वमिति । अत एवैतरेयब्राह्मणे निषादस्योपनयनलिङ्गं सत्रानुष्ठानं दृश्यते । तद्यथा-"सरस्वतीतीरे सत्रमासीनैर्ऋषिभिरिलूषपुत्रः कवषनामा ऋषिर्दासीपुत्रः कितवो ब्राह्मणोऽस्माकं मध्ये कथं दीक्षिष्यति इति मत्वा मरुद्देशे नीत्वा पातितः । अत्रैनं पिपासा हन्तु सरस्वत्युदकमप्ययं मापादिति तत्रायं पिपासाखिन्नोऽदैवतं "प्र देवत्रे"ति पञ्चदशर्चं सूक्तं सस्मार । तत्प्रयोगप्रभावेण सरस्वत्येव स्वदेशमपहाय तं प्रत्यधावत् । ततस्ते तस्य देवतानुग्रहं वेदप्रभावं च ज्ञात्वा सत्रे तं समाहूय तत्सूक्तप्रयोगेण सरस्वतीमविन्दन्निति" । "विदुन्न वा इमन्देवा" इत्यनेन उपनयनकालीनदेवतासम्प्रदानकबटुपरिदानमुक्तं भवति तेन हि ते तं जानते अयमस्मदीय इति । तस्मात्सिद्धं निषादस्योपनयनमिति । रामायणे शरहतस्य ऋषिपुत्रस्य दशरथम्प्रति वाक्यमपि —

न द्विजातिरहं शङ्कां ब्रह्मवध्याकृतां त्यज ।
ब्राह्मणेन त्वहं जातः शूद्रायां वसता वने ॥

तत्पितुर्वाक्यमपि—

कस्य चापररात्रेऽहं स्वाध्यायं कुर्वतो वने ।
श्रोष्यामि सुचिरं शब्दं पुण्यं शास्त्रमधीयते ॥ इति ।

महाभारतेऽपि दीर्घतमोपाख्याने—

तस्यां काङ्क्षीवदासीत्स शूद्रयोनावृषिस्तदा ।
जनयामास धर्मात्मा पुत्रानेकादशैव तु ॥
काङ्क्षीवदादासीपुत्राँस्तान्दृष्ट्वा सर्वानधीयतः ।
उवाच तमृषिं राजा ममेम इति भारत ! ॥ इति ।

तत्रैव धृतराष्ट्रोत्पत्तावपि—

धृतराष्ट्रश्च पण्डुश्च विदुरश्च महामतिः ।
जन्मप्रभृति भीष्मेण पुत्रवत्परिपालिताः ॥
सँस्कारैः सँस्कृतास्ते तु व्रताध्ययनसंयुताः ।
श्रमव्यायामकुशलाः समपद्यन्त यौवनम् ॥

धनुर्वेदे च वेदे च गदायुद्धेऽसिचर्म्मणि ।
तथैव गजशिक्षायां नीतिशास्त्रे च पारगाः ॥
इतिहासपुराणेषु नानाशिक्षासु बोधिताः ।
वेदवेदाङ्गतत्त्वज्ञाः सर्वत्र कृतनिश्चयाः ॥ इति ।

अस्त्वेवं निषादादीनामुपनयप्राप्तिः , अथ येऽनुलोमजा अप्यूढोत्पन्नाः कुण्डलगोलकास्तेषामुपनयनादि न सर्वस्मृतिसम्मतम् , वर्णजातिलक्षणाभावात् । तथा चादिपुराणे —

सवर्णासु सवर्णैस्तु ये जायन्ते परैरपि ।
अवरोढकसंज्ञास्ते व्रतसंस्कारवर्ज्जिताः ॥

परैः स्वपत्यतिरिक्तैः । अवरोढक इति कुण्डलगोलकयोः साधारणी संज्ञा । देवलोऽपि —

द्वितीयेन तु यः पित्रा सवर्णायां प्रजायते ।
अवरोढ इति ज्ञेयः शूद्रधर्म्मा स जातितः ॥

शूद्रधर्माऽनुपनेय इत्यर्थः । तथा—

व्रतहीनास्त्वसंस्कार्याः सवर्णास्वपि ये सुताः ।
उत्पादिताः सवर्णेन व्रात्या इति बहिष्कृताः ॥

अपिशब्दादसवर्णानुलोमासु जातानां सुतरामसंस्कार्यत्वमुक्तं भवति । अन्ये तु तयोरप्युपनयनमिच्छन्ति । तथा च ब्रह्मपुराणम्—

एवमेव द्विजैर्जातौ संकार्यौ कुण्डगोलकौ ॥ इति ।

एवं मूकाद्युपनयनविधिनेत्यर्थः । तत्कर्त्तव्यमप्युक्तं तत्रैव—

कुण्डो वा गोलको विप्रः सन्ध्योपासनमात्रवित् ।
स्नानभोजनसन्ध्यासु देवेषु स पठेच्चरेत् ॥
एकान्ते कुटपे भुक्त्वा सदृशैस्सह सङ्गतः । इति ॥

सन्ध्या त्रिकालजा । उपासनं गृह्याग्नौ सायंप्रातर्होमः । मात्रशब्देन गायत्रीपुरश्चरणदर्शपूर्णमासस्थालीपाकादिनिवृत्तिः । विच्छब्देन तावन्मात्रोपयुक्तमन्त्राध्ययनमप्यनुज्ञायते , नैतावदेव, किन्त्वन्यदपीत्याह स्नानेति—स्नानं प्रातर्मध्याह्नयोः । भोजनं सायंप्रातः । अत्र सन्ध्याश-

ब्देन सायंप्रातर्विहितौ वैश्वदेवौ लक्ष्येते भोजनसन्निधानात् । असंस्कृतान्नभोजननिषेधाच्च । अत्र पाठक्रमो न विवक्षितः, आह्निकक्रमप्रापकसामान्यप्रमाणसद्भावात् । देवो देवपूजा । एतेषु अधिकरणसप्तम्या निमित्तसप्तम्या वा कर्त्तव्येषु तत्तदुपयुक्तान्मन्त्रान् पठेत् । चरेदाचारं शौचाचमनादिकम् । परिगणनं चेदम्, इतरद्विजधर्म्मपरिसङ्ख्यार्थम् । श्राद्धन्तु सामान्यधर्म्मत्वाद्भविष्यति । तदेवं कुण्डगोलकयोः विधिनिषेधाभ्यामुपनयने विकल्पमेके मन्यन्ते । उक्तं च स्मृत्यर्थसारे–

केचिदाहुर्द्विजैर्जातौ संस्कार्यौ कुण्डगोलकौ ।
संस्कार्य्यौ मा भवत्यद्धा इति कैश्चिदुदीरितम् ॥
अमृते च मृते पत्यौ जारजौ कुण्डगोलकौ ॥

अथ मूकाद्युपनयनम् । ब्रह्मपुराणे––

ब्राह्मण्यां ब्राह्मणाज्जातो ब्राह्मणः स इति श्रुतिः ।
तस्माच्च षण्ढबधिरकुब्जवामनपङ्गुषु ॥
जडगद्गदरोगार्त्तशुष्काङ्गविकलादिषु ।
मत्तोन्मत्तेषु मूकेषु शयनस्थे निरिन्द्रिये ॥
ध्वस्तपुंस्त्वेषु चैतेषु संस्कार्य्याः स्युर्यथोचितम् ।
मत्तोन्मत्तौ न संस्कार्य्याविति केचित्प्रचक्षते ॥
कर्म्मस्वनधिकाराच्च पातित्यं नास्ति वै तयोः ।
तदपत्यं च संस्कार्य्यमपरे त्वाहुरन्यथा ॥
संस्कारमन्त्रहोमादीन्करोत्याचार्य्य एव तु ।
उपनेयश्च विधिवदाचार्य्यः स्वसमीपतः ॥
आनीयाग्निसमीपे वा सावित्रीं स्पृश्य वा जपेत् ।
कन्यास्वीकरणादन्यत्सर्व्वं विप्रेण कारयेत् ॥
एवमेव द्विजैर्जातौ संस्कार्य्यौ कुण्डगोलकौ ॥ इति ।

अस्यार्थः—अत्र ऊढात्वविशेषणमनपेक्ष्यैव केवलब्राह्मणब्राह्मणीजन्यत्वेन गोलकादिसाधारणं ब्राह्मण्यमभिप्रेत्येदमुच्यते ब्राह्मण्यमिति । तेनेदं गौणं ब्राह्मण्यं तन्निमित्तक एवायमुपनयने गुणविकारः । कुब्ज-

वामनादिषु सत्यपि मुख्ये ब्राह्मण्ये कुब्जत्वादिनिमित्तक एवास्योपदेशस्तेन गुणविकारे निमित्तद्वयं सिद्ध्यति। गौणं ब्राह्मण्यं कुब्जत्वादिकं चेति। अन्यथा कुब्जादीनामत्र परिगणनमनर्थकं स्यात्। षण्ढादयोऽत्र जात्यैवावधेयाः। चिकित्सनीयेषु पुनर्यथावदुपनयनं कार्य्यम्। न गुणविकारः। मत्तो वाय्वादिना। उन्मत्तो ग्रहावेशादिना। शयनस्थ उत्थानाशक्तः। निरिन्द्रियः षडिन्द्रियशून्यः। ध्वस्तपुंस्त्वो दोषविशेषेण प्रत्यानेयपुंस्त्वः। यथोचितं यस्य यदङ्गोपसंहारसामर्थ्यं नास्ति तस्य तदङ्गपरिहारेण कर्त्तव्यमित्यर्थः। मत्तोन्मत्तयोर्मतान्तरमाह—"**मत्तोन्मत्तौ न संस्कार्य्यौ**"विति। तत्र हेतुमाह—"**कर्म्मस्वनधिकारा**"दिति। तदपत्यसंस्कारेहेतुमाह—"**पातित्यं नास्ति वै तयो**"रित्यर्थः। ततश्च व्यतिरेकमुखेन पतितापत्यं न संस्कार्यमित्युक्तं भवति। "**पतितोत्पन्नः पतितो भवति अन्यत्र स्त्रिया**" इति वशिष्ठस्मरणात्। "**तदपत्यन्तु सँस्कार्य**"मित्यत्र तुशब्देन विवक्षितं विधिं विच्छिद्य प्राकृत एव विधिरनूद्यते संस्कार्य्यपदेन। अन्यथा "**अपरे त्वाहुरन्यथे**"त्यन्यथापदेन विवक्षितविधेः पक्षान्तरत्वाभिधानं नोपपद्येत। ततश्च मत्तोन्मत्तापत्यस्य प्राकृतगुणविकारौ वैकल्पिकौ भवतः। तमेव गुणविकार दर्शयति संस्कारेति। बटुपठनीयानां दण्डाजिनोपवीतादिग्रहणसंस्कारमन्त्राणामाचार्य्यम्प्रत्येव पाठो विधीयते। तथा होमः समिदाधानं तन्मन्त्रपाठश्च। न चाचार्य्यपठनीयानाम्। न वा तत्कर्तृकस्य प्रधानहोमस्य विधिः प्राप्तत्वात्। बटूपगमनपरिहारेणाचार्य्यस्य स्वसमीपेऽग्निसमीपे वा पङ्ग्वादिमाणवकानयनं विधीयते। प्राकृताद्गायत्र्युपदेशात् बटुं स्पृष्ट्वा गायत्रीजपो वैकल्पिको विधीयते। तस्य च श्रवणोच्चारणसमर्थान्प्रत्युपदेशः। मूकबधिरादीन् प्रति स्पृष्ट्वा जप इति व्यवस्था। बौधायनोऽपि—"**अथ षण्ढबधिरमूकानां सँस्कारं व्याख्यास्यामऽऋतुर्यथाकामी स्यात्पुण्ये नक्षत्रे ब्राह्मणान्भोजयित्वाऽऽशिषो वाचयित्वा केशानोप्य स्नातं शुचिवाससं बद्धशिखं यज्ञोपवीतिनमप आचम्य देवयजनमुदानयत्यथ देवयजनोल्लेखनप्रभृत्यग्नि-**

मुखात्कृत्वा याज्ञिकीं समिधमाज्येनाङ्क्त्वा तूष्णीमभ्याधापयति तूष्णीमश्मानमास्थापयति यथालाभं तूष्णीं वासः परिधापयति तूष्णीं मेखलां मन्त्रवद्ग्रन्थिं करोति तूष्णीमजिनं प्रतिमुञ्चति तूष्णीं दण्डं प्रयच्छति याज्ञिकस्य वृक्षस्य नाम पृच्छत्यथैनं दक्षिणं हस्तं गृह्णाति यस्मिन्भूतं च भव्यं चेत्यथैनं देवताभ्यः परिददाति देवेभ्यस्त्वेत्यथैनमुपनयति देवस्य त्वेति सर्व्वं नामग्रहणवर्जमाचार्य्य एव पक्वाञ्जुहोति तत्सवितुर्वरेण्यमित्यन्याहुतीरुपजुहोति क्षेत्रियै त्वा निर्ऋत्यै त्वेति षड्भिर्व्याहृतीभिरथाग्रेणाग्निं याज्ञिकस्य वृक्षस्य पर्णेषु हुतशेषं निदधातीति तत्पुरस्ताद्व्याख्यातम् । अथ पक्वादुपादाय प्राश्नाति तूष्णीं सर्व्वान्मन्त्रानाचार्य्य एव जपेदित्येके । अन्धजडक्लीबव्यसनिव्याधितोन्मत्तहीनाधिकाङ्गानामामयाव्यपस्मारिश्वित्रिकुष्ठिजङ्गरोगिणश्चैतेन व्याख्याता इत्येके । सद्यो मधुपर्कं ददाति तिसृषु व्युष्टासु मधुपर्कवदावृता तूष्णीमायुर्दा अग्नेर्हविषो जुषाण इति पिता वा भ्राता वात्मजमारोपयेदित्येके" ॥

ऋतोर्यथाकामित्वेन वसन्ताद्यनियमो विहितः । उपनयति गायत्रीसम्बद्धं करोति उपदेशेन तं स्पृष्ट्वा जपते वा । अथ शूद्राणामुपनयनम् । आपस्तम्बः—"शूद्राणामदुष्टकर्म्मणामुपनयनम्" । मद्यपानरहितानामिति कल्पतरुकारः । अथ स्त्र्युपनयनम् । यमः—

पुराकल्पे कुमारीणां मौञ्जीबन्धनमिष्यते ।
अध्यापनं च वेदानां सावित्रीवचनन्तथा ॥
पिता पितृव्यो भ्राता वा नैनामध्यापयेत्परः ।
स्वगृहे चैव कन्याया भैक्षचर्य्या विधीयते ॥
वर्ज्जयेदजिनं चीरं जटाधारणमेव च ॥ इति ।

तच्चोपनयनममन्त्रकम् । तथा च मिताक्षरायां याज्ञवल्क्यः—

तूष्णीमेताः क्रियाः स्त्रीणां विवाहस्तु समन्त्रकः ॥ इति ।

अथोपनयनकालमाह । स च द्विविधः—नित्यः, काम्यश्च । फला-

ननुपबन्धेन श्रुतो नित्यः। तदुपबन्धेन श्रुतश्च काम्यः। नित्यो द्विविधः—मुख्यो गौणश्च। तत्रोत्पत्तिवाक्यशिष्टो मुख्यः। उत्पन्ने कर्म्मणि पश्चाच्छिष्यमाणो गौणः। तत्र नित्यमुख्यमाह श्रुतिः-"अष्टवर्षं ब्राह्मणमुपनयीत" अष्टवर्षत्वं चाष्टवर्षसम्बन्धेन अतीताष्टमवर्षत्वेन च। "गर्भाष्टमे वा" इति सूत्रम्। अथवा ब्राह्मण गर्भसहिताष्टवार्षिकमुपनयेत। गर्भसहचरितोऽब्दो गर्भशब्देनोच्यत इति भारुचिः। यस्मिन् वर्षे गर्भो भूत्वा शेते स गर्भ इति हरदत्तः। नारदः—

आधानादष्टमे वर्षे जन्मतश्चाग्रजन्मनाम्॥ इति।

स पञ्चमो यस्येति बहुव्रीहिः। पञ्चमीसमासो वा न षष्ठीसमासः। तस्य पूरणप्रत्ययान्तेन निषेधात्। एवमुत्तरत्रापि। गर्भपञ्चमश्चात्र जन्मतश्चतुर्थो भवति। गर्भाऽष्टमः सप्तमः। गर्भैकादशो दशमः। गर्भद्वादश एकादशः। "एकादशवर्षꣳराजन्यम्" इति सूत्रम्। एकादश वर्षाण्यतीतानि यस्यासौ तथा तं वैश्यं वर्णतृतीयमुपनयीत। जन्मतस्त्रयोदशवर्षे इत्यर्थः। "द्वादशवर्षं वैश्यं यथामङ्गलं वा सर्वेषाम्" इति सूत्रम्। अथ वा सर्वेषां ब्राह्मणक्षत्रियविशां यथामङ्गलं यथाकुलधर्म्मम्। यद्वा यथामङ्गलशब्देन स्मृत्यन्तरोक्तपञ्चवर्षादिकालसङ्ग्रहः। अथ काम्यानि आपस्तम्बः— "अथ काम्यानि सप्तमे ब्रह्मवर्चसकाममष्टम आयुष्कामं नवमे तेजस्कामं दशमेऽन्नाद्यकाममेकादश इन्द्रियकामं द्वादशे पशुकाममुपनयीत"। तथा च मनुः—

ब्रह्मवर्च्चसकामस्य कार्य्यं विप्रस्य पञ्चमे।
राज्ञो बलार्थिनः षष्ठे वैश्यस्यार्थार्थिनोऽष्टमे॥

विष्णुः—

षष्ठे तु धनकामस्य विद्याकामस्य सप्तमे।
अष्टमे सर्वकामस्य नवमे कान्तिमिच्छतः॥

आपस्तम्बसूत्रेऽपि—"गर्भाष्टमेषु ब्राह्मणमुपनयीते"ति। अत्र गर्भाष्टमेष्विति सूत्रेषु बहुवचनं गर्भषष्ठसप्ताष्टमवर्षप्राप्त्यर्थमिति सुदर्शन-

भाष्यकारः । नृसिंहः—

उत्तरायणगे सूर्ये कर्त्तव्यं ह्युपनायनम् ॥

वर्णविशेषेणास्यापवादमाहतुर्बृहस्पतिवशिष्ठौ—

विप्रस्य क्षत्रियस्यापि मौञ्जी स्यादुत्तरायणे ।
दक्षिणे तु विशां कुर्यान्नानध्याये न सङ्क्रमे ॥

अथर्तुनिर्णयमाह गर्गः—

विप्रं वसन्ते क्षितिपं निदाघे वैश्यं घनान्ते व्रतिनं विदध्यात् ॥

वैश्यस्य ग्रीष्ममप्याह बृहस्पतिः—

श्रीविद्याबलकारि चोपनयनं प्रोक्तं वसन्ते शिशो—
ग्रीष्मे क्षत्रियवैश्ययोः शुभकरं पूर्वाह्णपक्षे सिते ॥

तथा च श्रुतिः—"वसन्ते ब्राह्मणमुपनयीत ग्रीष्मे राजन्यं शरदि वैश्यम्" । वसन्तादिलक्षणमाह वृद्धवशिष्ठः—

वसन्तश्चैत्रवैशाखौ ग्रीष्मः शुक्रशुची तथा ।
इषोर्ज्जौ च शरच्चान्द्रमासाः श्रौतादिकर्म्मसु ॥

तथा च श्रुतिः—"मधुश्च माधवश्च वासन्तिकावृतू, शुक्रश्च शुचिश्च ग्रैष्मावृतू" इत्यादि । वृद्धगर्गस्तु सौरमप्याह—

मीनमेषौ रविर्यावद्वसन्तस्तावदिष्यते ।
नृपयुग्मवृषौ ग्रीष्मोऽनन्तराश्च ऋतुः शरत् ॥ इति ।

अनन्तराः कर्कसिंहकन्यातुलाः राशयः शरदृतुः । बौधायनोऽपि—"मीनमेषयोर्मेषवृषयोर्वा वसन्तः" इति । ब्राह्मणम्प्रति वसन्तावश्यकतामाह बृहस्पतिः—

विनर्तुना वसन्तेन कृष्णपक्षे गलग्रहे ।
अनध्याये चोपनीतः पुनः संस्कारमर्हति ॥

ततश्च मूर्द्धावसिक्तादीनां क्षत्रियादिकाल एवोपनयनं सिद्ध्यति । तेषां तद्धर्म्मत्वात् । अथ मासाः । तत्र वृद्धगार्ग्यः—

माघादिमासषट्के तु मेखलाबन्धनं मतम् ।
चूडाकरणमन्नं च श्रवणादौ विवर्ज्जयेत् ॥

एतेऽपि षट् त्रैवर्णिकसाधारणा इत्युक्तं मैत्रायणीयगृह्ये—"माघादिषण्मासाश्च सर्व्ववर्णाना"मिति । एतेषु षट्स्वपि मासेषु ब्राह्मणस्य सर्व दोषापवादकतया चैत्रः प्रशस्तः । तथा च बृहस्पतिः—

गुरौ भृगौ नष्टगते च चैत्रे कार्य्यं न माङ्गल्यमनर्थकारि ।
मीनस्थितेऽर्के खलु चैत्रमासे शुभप्रदो ब्राह्मणमौञ्जिबन्धः ॥
गोचराष्टकवर्गाभ्यां गुरुशुद्धिर्न लभ्यते ।
तदोपनयनं कार्य्यं चैत्रे मीनगते रवौ ॥
शुक्रे नष्टे तथा जीवे दुर्बले चन्द्रभास्करे ।
व्रतोपनयनं कार्य्यश्चैत्रे मीनगते रवौ ॥

वीरमित्रोदये—

जीवभार्गवयोरस्ते सिंहस्थे देवतागुरौ ।
मेखलाबन्धनं शस्तं चैत्रे मीनगते रवौ ॥

जन्ममासनिर्णयः । तत्र राजमार्त्तण्डः—

वसन्तसमये कुर्य्यादब्दे गर्भाष्टमेऽपि वा ।
मेधावी मेखलाबन्धं जन्ममासेऽथ जन्मभे ॥

शौनकोऽपि—

जन्मोदये जन्मसु तारकासु मासेऽथ वा जन्मनि जन्मराशौ ।
व्रतेन विप्रो न बहुश्रुतोऽपि मन्त्राविशेषैः प्रथितः पृथिव्याम् ॥

जन्मसु इति बहुवचनं तिसृणां जन्मताराणां परिग्रहाय ।

अथ पक्षनिर्णयः कालविधाने—

शुक्ले पक्षे निर्म्मले शीतभानौ राशौ चर्क्षे स्याच्छिशोर्मौञ्जिबन्धः ॥

बृहस्पतिः—

शुक्लपक्षः शुभः प्रोक्तः कृष्णश्चान्त्यत्रिकं विना ॥

स्मृत्यन्तरेऽपि—

शुक्लपक्षः शुभः प्रोक्तः कृष्णपक्षे त्रिधा कृते ।
अन्त्यभागं विनान्यौ द्वौ गणितौ मध्यमाधमौ ॥ इति ।

अथ तिथयः । बृहस्पतिः—

द्वितीया पञ्चमी षष्ठी सप्तमी दशमी तथा ।

त्रयोदशी तृतीया च शुक्ले श्रेष्ठाः प्रचोदिताः ॥
द्वादश्येकादशी चैव मध्यमास्तिथयस्तथा ।
मध्यमाश्च प्रशंसन्ति चन्द्रे च बलसंयुते ॥

तथा च नृसिंहः—

तृतीया पञ्चमी षष्ठी द्वितीया वापि सप्तमी ।
पक्षयोरुभयोश्चैव विशेषेण सुपूजिताः ॥
धर्म्मकामौ सिते पक्षे कृष्णे च प्रथमा तथा ।
कृष्णे त्रयोदशीं केचिदिच्छन्ति मुनयस्तथा ॥

प्रथमा प्रतिपद् । साऽपि कृष्णे पक्षे चन्द्रबले सति ग्राह्या । तथा च बृहस्पतिः—

कृष्णे च प्रथमा पूज्या कदाचिच्छुभगे विधौ ॥

यत्तु मदनरत्नेन प्रथमाः इतिबहुवचनान्तं पाठं कल्पयित्वा प्रथमाः आद्याः पञ्चम्यन्ता इति व्याख्यातम् , तदसत् । पूर्ववाक्ये कृष्णपक्षीय षष्ठीसप्तम्यादीनामपि ग्रहणेन परिसङ्ख्यासम्भवात् ।

द्वादश्येकादशी चैव मध्यमा चोपनायने ।
प्रशस्ता प्रतिपत्कृष्णे कदाचिच्छुभगे विधौ ॥ इति ।

वीरमित्रोदये बृहस्पतिः—

चन्द्रे बलयुते लग्ने शुभभावे शुभेक्षिते ।
चतुर्दशीं प्रशंसन्ति कुमारे वयसाधिके ॥ इति ।

कृष्णपक्षे प्रतिपच्चतुर्दश्योरुपादानं व्रात्योपनयनविषयम् । "वर्षाणामतिलङ्घने, कुमारे वयसाऽधिके" इति व्यासबृहस्पतिवाक्यात् । अतिलङ्घनं षोडशाद्यतिक्रमः । चतुर्थीसप्तमीत्रयोदशीनां गलग्रहत्वेऽपि उपादानं मूकाद्युपनयनविषयम् । तेषामध्ययनीयाभावेन तस्यादोषत्वात् ।

अथानध्यायाः । गृह्यकारिकायाम्—

नष्टे चन्द्रे गते शुक्रे निरंशे चैव भास्करे ।
कर्त्तव्यं नोपनयनं नानध्याये गलग्रहे ॥

अनध्याया द्विविधाः । नित्या अनित्याश्च । तत्र नित्यानध्यायाः ।

गौतमः—

पक्षद्वये चतुर्द्दश्योरष्टमीद्वितये तथा ।
पक्षादावपि पक्षान्ते ब्रह्म नाधीयते नरैः ॥

फलञ्च—

अष्टमी हन्त्युपाध्यायं शिष्यं हन्ति चतुर्दशी ।
अमावास्योभयं हन्ति प्रतिपत्पाठनाशिनी ॥

मनुः—

चातुर्मास्यद्वितीयासु मन्वादिषु युगादिषु ।
अष्टकासु च सङ्क्रान्तौ शयने बोधने हरेः ॥
अनध्यायं प्रकुर्वीत तथा सोपपदास्वपि ॥

चातुर्मास्यद्वितीया गर्गेणोक्ताः—

आषाढफाल्गुनोर्ज्जेषु या द्वितीया विधुक्षये ।
चातुर्मास्यद्वितीयास्ताः प्रवदन्ति महर्षयः ॥

मन्वादयस्तिथयः—

तृतीया पूर्णिमा चैत्रे पूर्णिमा ज्येष्ठमासके ।
आषाढे दशमी पूर्णे कृष्णश्रावणगाष्टमी ॥
भाद्रे तृतीया नवमी चाश्विने कार्तिके तथा ।
द्वादशी पूर्णिमा पौषे भवेदेकादशी तिथिः ॥
सप्तमी माघमासस्य पूर्णिमा सा च फाल्गुने ।
मन्वादय इमाः पुण्याः स्नानदानादिकर्म्मसु ॥

अथ युगाद्याः—

युगाद्या अपि वैशाखतृतीया सा च माघगा ।
कार्तिके नवमी भाद्रकृष्णपक्षे त्रयोदशी ॥

कुत्रचिद्युगादावदोषमाह ज्योतिर्निबन्धे—

या चैत्रवैशाखसिता द्वितीया माघस्य सप्तम्यथ फाल्गुनस्य ।
कृष्णतृतीयोपनये प्रशस्ताः प्रोक्ता भरद्वाजमुनीन्द्रमुख्यैः ॥

अथाष्टकाः —

मार्गे पौषे तथा माघे नभस्ये फाल्गुनेषु च ।

कृष्णपक्षेऽष्टकास्तिस्रः सप्तम्यादिदिनत्रयम् ॥

अथ सोपपदाः--

ज्येष्ठशुक्लद्वितीया च ह्याश्विने दशमी सिता ।
चतुर्थी द्वादशी माघे एताः सोपपदाः स्मृताः ॥

यजुर्वेदविषये अपवादमाह चण्डेश्वरः--

वेदव्रतोपनयने स्वाध्यायाध्ययने तथा ।
न दोषो यजुषां सोपपदास्वध्ययनेऽपि च ॥
चतुर्दश्यां यदा पर्व्व प्रागस्ताद्दृश्यते रवेः ।
अनध्यायं प्रकुर्व्वीत त्रयोदश्यान्तु सर्वदा ॥
अनध्यायस्य पूर्वेद्युस्तस्य चैवापरेऽहनि ।
व्रतबन्धं विसर्गं च विद्यारम्भं न कारयेत् ॥

अथ नैमित्तिका अनध्यायाः । स्मृत्यर्थसारे आपस्तम्बः-"उल्कायामग्न्युत्पाते च सर्व्वासां विद्यानामाकालिक"मिति । तथा मनुः—

चौरैरुपप्लुते ग्रामे संग्रामे चाग्निकारिते ।
आकालिकमनध्यायं विद्यात्सर्वाद्भुतेषु च ॥

"उल्कानिर्घातभूकम्पपरिवेषेन्द्रचापप्रतिसूर्य्यगन्धर्व्वनगरदिग्दाहरजोवृष्ट्यादिजातेष्वाकालिकोऽनध्यायः" । गर्गः--

ग्रहे रवीन्द्वोरवनिप्रकम्पे केतूद्गमोल्कापतनादिदोषे ।
व्रते दशाहानि वदन्ति तज्ज्ञास्त्रयोदशाहानि वदन्ति के चित् ॥

सङ्कटे तु चण्डेश्वरः--

दाहे दिशां चैव धराप्रकम्पे वज्रप्रपातेऽथ विदारणे च ।
केतौ तथोल्कांशुकणप्रपाते त्र्यहं न कुर्य्याद्व्रतमङ्गलानि ॥

अग्न्युत्पाते अग्निना दह्यमाने ग्रामे, सर्व्वाद्भुतेषु रुधिरादिवृष्टिषु ।

वाशिष्ठः--"उपलरुधिरप्रपाते त्र्यह"मिति । स्मृत्यन्तरेऽपि--

विद्युद्गर्ज्जितवृष्टीनां सन्निपातो यदा भवेत् ।
कालवृष्टौ तु तत्कालमकाले तु त्रिरात्रकम् ॥

अकालवृष्टिलक्षणं स्मृतिरत्नावल्याम्--

अनुराधर्क्षमारभ्य षोडशर्क्षेषु भास्करः ।

यावच्चरति चैतावदकालं मुनयो विदुः ॥

आर्द्रादिविशाखान्तं कालवृष्टिरित्यर्थः। लल्लः—

व्रतेऽह्नि पूर्वसन्ध्यायां वारिदो यदि गर्जति।
तद्दिने स्यादनध्यायो व्रतं तत्र विवर्जयेत् ॥

सायं सन्ध्यागर्ज्जने उदयान्तोऽनध्यायः। अर्द्धरात्रादूर्ध्वं गर्ज्जने अर्द्धरात्रे वाऽऽकालिकोऽनध्यायः। प्रातःसन्ध्यागर्ज्जने त्वहोरात्रम्। कालं मर्य्यादीकृत्येत्यकालम्। अकाले भव आकालिकः। यस्मिन् काले निमित्तमुत्पन्नम् तदारभ्य द्वितीयदिने तत्कालपर्य्यन्तमित्यर्थः। ज्योतिर्निबन्धे—

नान्दीश्राद्धं कृतं चेत्स्यादनध्यायस्त्वकालिकः।
तदोपनयनं कार्य्यं वेदारम्भं च कारयेत् ॥

एतच्चाश्वलायनकात्ययनाद्यन्यविषयम्। तेषां तद्दिने वेदारम्भाभावात्। अत एषामुपनयनं तद्दिने न भवत्येव। नित्यनैमित्तिकादौ अनध्यायो न दोषाय।

नित्ये नैमित्तिके काम्ये व्रते यज्ञे क्रतौ तथा।
प्रवृत्ते कामकार्य्ये च नानध्यायाः स्मृतास्तथा ॥
देवतार्चनमन्त्राणां नानध्यायाः स्मृतास्तथा ॥ इति।

अथ गलग्रहमाह नारदः—

त्रयोदशीचतुष्कं च सप्तम्यादिदिनत्रयम्।
चतुर्थी चैव सम्प्रोक्ता अष्टावेते गलग्रहाः ॥

राजमार्त्तण्डः—

आरम्भानन्तरं यत्र प्रत्यारम्भो न सिद्ध्यति।
गर्गादिमुनयः सर्वे तमेवाहुर्गलग्रहम् ॥

मदनरत्ने नारदः—

विनर्तुना वसन्तेन कृष्णपक्षे गलग्रहे।
अपराह्णे चोपनीतः पुनः संस्कारमर्हति ॥

वसन्ते गलग्रहो न दोषायेत्यर्थः। अपराह्णस्त्रेधा विभक्तदिनतृतीयांश इत्युक्तं तत्रैव। प्रदोषदिनमपि वर्ज्यम्। तत्स्वरूपमुक्तं गोभिलेन-

षष्ठी च द्वादशी चैव अर्द्धरात्रोननाडिका।
प्रदोषमिह कुर्वीत तृतीयातूनयामिका॥ इति।

ज्योतिषेऽपि—

चतुर्थी प्रहरादर्वाक् सार्द्धयामाच्च सप्तमी।
त्रयोदशी त्वर्द्धरात्रात्प्रदोषस्तु तदा भवेत्॥

दैवज्ञमनोहरे—

प्रदोषे निश्यनध्याये मन्दे कृष्णे गलग्रहे।
मधुं विना चोपनीतः पुनः संस्कारमर्हति॥
गलग्रहे प्रदोषे च स्वल्पायुरुपजायते॥

चिन्तामणौ—

कृष्णे प्रदोषेऽनध्याये रात्रौ निश्यपराह्णिके।
प्राक्सन्ध्यागर्जिते नेष्टो व्रतबन्धो गलग्रहे॥

पुनः संस्कारप्राप्तौ "निमित्तानन्तरमेव नैमित्तिक"मितिन्यायेन यदा रात्रिसद्भावस्तदोपनयनं माभूदितिरात्रिपदोक्तिः। प्राक्सन्ध्या प्रातःसन्ध्या तस्यां गर्जिते।

अथ वारनिर्णयः। तत्र नारदः—

गुरुशुक्रबुधानान्तु वाराः श्रेष्ठतमाः स्मृताः।
अधमः सोमवारस्तु सूर्य्यवारस्तु मध्यमः॥
वारौ मन्दारयोर्वर्ज्यौ कृष्णे वर्ज्यो निशापतेः।
अस्तङ्गतस्य सौम्यस्य वारो वर्ज्यो द्विजन्मनि॥

द्विजन्मनि उपनयने। बृहस्पतिः—

पापग्रहाणां वाराः स्युर्न शुभश्चन्द्रवासरः।
सिते पक्षे प्रशस्तः स्यात्कृष्णे वारो विधोर्न हि॥
शुभो बुधो नास्तमितः पापग्रहयुतो न च॥

वृद्धगर्गः—

शाखाधिपे बलिनि केन्द्रगते च मौञ्जी-
बन्धस्तदीयदिवसेषु शुभाय क्लृप्तः।
अस्मिन्बलेन रहिते तु पुनर्द्विजानां
स्याद्वर्णसङ्कर इति प्रवदन्ति तज्ज्ञाः॥

तदीयदिवसेषु शाखाधिपतिवारेषु। शाखेशानाह नारदः—

दृश्यमाने गुरौ शुक्रे शाखेशे चोत्तरायणे।
वेदानामधिपा जीवशुक्रभौमबुधाः क्रमात्॥ इति।

तत्तच्छाखाध्येतॄणां तत्तच्छाखाधिपे उपनयनं कार्यमित्याह वाराहः—

गुरोः कवेर्लोहितस्य मिहिरस्य च वासराः।
ऋग्यजुःसामाथर्वाणां शस्ताः स्युर्व्रतबन्धने॥

लोहितोऽङ्गारकः। मिहिरः सूर्य्यः। पारिजाते बृहस्पतिः—

बह्वृचानां गुरोर्वारे यजुर्वेदजुषां बुधे।
सामगानां धरासूनोरथर्व्वविदुषां रवेः॥

शाखेशवद्वर्णेशेऽपि बलवति उपनयनं कार्य्यम्। पराशरः—

सदानुकूले चैकस्मिन्वर्णेशे बलशालिनि।
ब्राह्मणानां प्रकुर्वीत कुमारव्रतचारिणाम्॥

वर्णेशानाह स एव—

पती सितेज्यौ विप्राणां नृपाणां कुजभास्करौ।
वैश्यानां शशभृत्सौम्याविति वर्णाधिपाः स्मृताः॥

अर्णवेऽप्येवम्। अथ नक्षत्राणि। तत्र बृहस्पतिः—

त्रिषूत्तरेषु रोहिण्यां हस्ते मैत्रे च वासवे।
त्वाष्ट्रे सौम्यपुनर्वस्वोः प्रशस्तं ह्युपनायनम्॥

सौम्यं मृगशिरः। नारदोऽपि—

श्रेष्ठान्यर्कत्रयान्त्येज्यचन्द्रादित्युत्तराणि च।
विष्णुत्रयाश्विमित्राब्जयोनिभान्युपनायने॥

अर्कत्रयम् हस्तत्रयम्। अब्जयोनिभं रोहिणी। अथ वर्ज्यानि।

तत्र बृहस्पतिः--

कृत्तिकाभरणीमूलज्येष्ठार्द्रासु विशाखयोः ।
पूर्वात्रये च सार्पर्क्षे न कुर्य्यादौपनायनम् ॥

ब्राह्मणस्य पुनर्वसुनिषेधमाह । तत्र राजमार्त्तण्डः-

चन्द्रतारानुकूलेषु ग्रहाब्देषु शुभेष्वपि ।
पुनर्वसौ कृतो विप्रः पुनः संस्कारमर्हति ॥

नारदः--

श्रवणादितिनक्षत्रे कर्म्मसंस्थे निशाकरे ।
तदा व्रती वेदशास्त्रधनधान्यसमृद्धिमान् ॥

अत्र विप्रपदोपादानात्क्षत्रियादीनामनिषेधः । अथ वेदविशेषेण नक्षत्रविशेषो ज्योतिर्निबन्धे -

मूले हस्तत्रये सार्पे शैवे पूर्वात्रये तथा ।
ऋग्वेदाध्यायिनां कार्यं मेखलाबन्धनं बुधैः ॥
पुष्ये पुनर्वसौ पौष्णे हस्ते मैत्रशशाङ्कभे ।
ध्रुवेषु च प्रशस्तं स्याद्यजुषां मौञ्जिबन्धनम् ॥
पुष्यवासवहस्ताश्विशिवकर्णोत्तरात्रयम् ।
प्रशस्तं मेखलाबन्धे वटूनां सामगायिनाम् ॥
मृगमैत्राश्विनीहस्तरेवत्यदितिवासवम् ।
अथर्वशाखिनां शस्तो भगणोऽयं व्रतार्पणे ॥

पुरुषविशेषेण नक्षत्रविशेषमाह नृसिंहः--

रौद्रे शिवद्विजः कुर्य्याद्वैष्णवे वैष्णवस्तथा ।
वासवर्क्षे सवर्णश्च वारुणे कुण्डगोलकौ ॥

प्रातिस्विकनक्षत्रासम्भवे सामान्यतो विहितानि नक्षत्राणि ग्राह्याणि । उक्तान्यपि नक्षत्राणि दुष्टग्रहक्रान्त्यादिदुष्टानि त्याज्यानि । तदुक्तं मुहूर्त्तचिन्तामणौ--

उत्पातान्सहपातदग्धतिथिभिर्दुष्टांश्च योगाँस्तथा
चन्द्रज्योशनसामथास्तमयनं तिथ्यः क्षयर्द्धी तथा ।

गण्डान्तं च सविष्टिसङ्क्रमदिनं तन्वंशपास्तं तथा
तन्वंशे सविधूनथाष्टरिपुगान्पापस्य वर्गांस्तथा ॥
सेन्दुक्रूरखगोदयांशमुदयास्ताशुद्धिचण्डायुधान्
खार्ज्जूरं दशयोगयोगसहितां जामित्रलत्ताव्यधम् ।
बाणोपग्रहपापकर्त्तरि तथा तिथ्यर्क्षयोगोत्थितं
दुष्टं योगमथार्द्धयामकुलिकाद्यान्वारदोषानपि ॥
क्रूराक्रान्तविमुक्तभं ग्रहणभं क्रूरस्य गन्तव्यभं
त्रेधोत्पातहतं च केतुहतभं सन्ध्योदितं भन्तथा ।
तद्वच्च ग्रहभिन्नयुद्धगतभं सर्व्वानिमान्सन्त्यजेत्
उद्वाहे शुभकर्म्मसु ग्रहकृतॉल्लग्नस्य दोषानपि ॥

उत्पातादीन् दोषान् उद्वाहे यज्ञोपवीतादौ शुभकर्म्मसु च त्यजेदिति तृतीयश्लोकेनान्वयः । अथ जन्मर्क्षनिर्णयः । तत्र राजमार्तण्डः—

वसन्तसमये कुर्य्याद्‌ब्दे गर्भाष्टमेऽपि वा ।
मेधावी मेखलाबन्धं जन्ममासेऽथ जन्मभे ॥

यत्तु—

वैनासिके त्रिजन्मर्क्षं नेष्टं तेषूपनायनम् ।

इति बृहस्पतिवचनं तद्गर्भाष्टमवर्षातिरिक्तविषयम् । ब्राह्मणातिरिक्त-विषयं वा ।

गर्भाष्टमे गर्गपराशराद्यैः फलं यदुक्तं व्रतबन्धने तु ।
ततोऽधिकं जन्मसु तारकासु मासेऽथ वा जन्मनि वाडवानाम् ॥

इति राजमार्त्तण्डवचनात् । एवं पञ्चाङ्गशुद्धौ पूर्वाह्णादिनिर्णयः । स्कन्दपुराणे—

ऊर्ध्वं सूर्य्योदयात्प्रोक्तं मुहूर्त्तानान्तु पञ्चकम् ।
पूर्वाह्णः प्रथमः प्रोक्तो मध्याह्नस्तु ततः परम् ॥
अपराह्णस्ततः प्रोक्तो मुहूर्तानान्तु पञ्चकम् ॥ इति ।

तत्रापराह्णे उपनयनं न कार्य्यम् । उक्तं च वीरमित्रोदये—

विनर्तुना वसन्तेन कृष्णपक्षे गलग्रहे ।

अपराह्णे चोपनीतः पुनः संस्कारमर्हति ॥

नारदोऽपि—

त्रिधा विभज्य दिवसं तत्रादौ कर्म्म वैदिकम् ।
द्वितीये मानुषं कार्यं तृतीयेंऽशे तु पैतृकम् ॥ इति ।

उत्तमादिव्यवस्थामाह मनुः—

सर्वदेशेषु पूर्व्वाह्णे मुख्यं स्यादुपनायनम् ।
मध्याह्ने मध्यमं प्रोक्तमपराह्णे च गर्हितम् ॥ इति ।

अथ लग्नानि । तत्र वशिष्ठः—

मेषे भवति वाक्कुण्ठो वित्तविद्यायुतो वृषे ।
युग्मे वेदान्तदर्शी च कुलीरे च षडङ्गवित् ॥
शिल्पकर्म्मरतः सिंहे षष्ठे भवति पण्डितः ।
तुलायां वणिजः प्राप्तिः काण्डपृष्ठश्च वृश्चिके ॥
सर्वत्र पूजितश्चापे शूद्रवृत्तिर्मृगे तथा ।
राजप्रेक्षो भवेत्कुम्भे मीने वेदाङ्गपारगः ॥

नृसिंहः—

गुरुशुक्रोदये शस्तमनन्तस्य बुधस्य च ।
पूर्वपक्षे विधोः शस्तं नेतरेषां द्विजन्मनि ॥

नारदः—

शुभलग्ने शुभांशे च नैधने शुद्धिसंयुते ।
लग्ने त्वनैधने सौम्यैः संयुते वा निरीक्षिते ॥

अथ नवांशाः । ज्योतिर्निबन्धे—

राशयः सकलाः श्रेष्ठाः शुभग्रहयुतेक्षिताः ।
शुभा नवांशा न तथा ग्राह्यास्ते शुभराशयः ॥
न कदाचित्कर्कटांशः शुभेक्षितयुतोऽपि वा ।
तस्माद्गोमिथुनान्त्याश्च तुलाकन्यांशकाः शुभाः ॥
एवंविधे लग्नगते नवांशे व्रतमीरितम् ॥

वीरमित्रोदये गुरुरपि--

विद्यान्वितः सदाचारोऽहीनधर्म्मो दयापरः ।
आयुष्मान्धनवांश्चैव सौम्यभृग्वङ्गिरोंऽशकः ॥

भवतीति शेषः । वशिष्ठोऽपि--

कुलीरकांशं परिहृत्य सौम्यं नवांशका मौञ्जिविधौ प्रशस्ताः ।
ते निन्दिताः क्रूरनभश्चराणां खेटस्य वर्गा अपि चैव ग्राह्याः ॥
न नैधनं नैधनशुद्धिलग्नं न नैधनर्क्षं न च तन्नवांशकाः ।
न नैधनेशो न तदंशकेशो लग्ने प्रशस्ते न च रात्रिनाथः ॥

चिन्तामणौ—

क्रूरो जडो भवेत्पापः पटुः षट्कर्म्मकृद्वटुः ।
यज्ञार्थभाक्तथा मूर्खो रव्याद्यंशे तनौ क्रमात् ॥

अथ चन्द्रांशफलम् । तत्र वशिष्ठः--

सूर्यांशके गते चन्द्रे महापातककृद्व्रती ।
पुण्योक्तसेवी स्वांशस्थे नीचांशस्थः खलस्तदा ॥
कुजांशकगते चन्द्रे वेदवेदी भवेद्द्विजः ।
जीवांशकगते चन्द्रे साङ्गवेदविशारदः ॥
शुक्रांशके धनी दाता विद्यावित्तविशारदः ।
क्षिप्रोद्वाही यज्ञकृत्स्यात्सत्रदो भोगवान्भवेत् ॥
शुक्ले स्वांशे निशानाथे वित्तवान्यज्ञकृद्भवेत् ।
कृष्णे स्वांशगते चन्द्रे जातिभ्रंशं करोति च ॥ इति ।

अथ फलम् । वीरमित्रोदये काश्यपः—

भास्करो लग्नगः कुर्याद्वटुं भूपतिसेवकम् ।
वसुस्थः स्वर्णरहितं भ्रातृस्थः सुखिनं सदा ॥
बन्धुगो दुःखिनं नित्यं सुतगो मतिवर्ज्जितम् ।
शत्रुगो रोगरहितं सप्तमो भोगवर्ज्जितम् ॥
अष्टमो दृष्टिरहितं नवमो धर्महारिणम् ।
व्ययारिगो भिषग्वृत्तिं दीर्घायुषमथायगः ॥

रिष्फगो हानियुक्तं च फलमेतद्गुरोरपि ।
सिते चन्द्रे लग्नसंस्थे शुभं स्यादसितेऽशुभम् ॥
वसुगे स्याद्धनप्राप्तिस्तृतीये सुखसंस्थितिः ।
चतुर्थे बुद्धिवैषम्यं पञ्चमे सौख्यमुत्तमम् ॥
षष्ठे तु व्याधिपीडा स्यात्सप्तमे सुखसङ्गतिः ।
अष्टमे निधनप्राप्तिर्नवमे धर्मसञ्चयः ॥
दशमे स्यात्सदाचारी लाभे स्याद्धनसङ्ग्रहः ॥
दारिद्र्यं रिष्फगे विन्द्याच्चन्द्रे फलमुदाहृतम् ॥
मृति१र्नाशं २ सुखं ३ काणो ४ हानि५र्वृद्धि६र्मृति७र्गदः ८ ।
अधर्मा९ दुर्मति१०र्वृद्धि११र्नाशो १२ लग्नात्कुजे फलम् ॥
बुद्धि१ र्वृद्धि२ र्वित्तनाशो३ लाभः ४ पुत्रो ५ मृतिः ६ सुखी ७ ।
आयुःक्षयो ८ धर्म्म९सौख्ये१० कोशलाभः ११ क्षयः १२ क्रमात् ॥
सौम्ये लग्नादिराशीनां फलमेतदुदाहृतम् ।
षष्ठाष्टमे विना जीवः सर्वत्र शुभकृत्सदा ॥
सर्वत्र शुभकृच्छुक्रः सप्तषष्ठाष्टमं विना ।
निन्दां १ हानिं २ सुखं३ रोगं४ द्यूतं५ कामं६ जडं७ मृतिम् ८ ।
विपत्९क्लेशो१० सुखं ११ मृत्यु१२मुदयात्कुरुते शनिः ॥
मेखलाबन्धकाले तु सर्वथा पञ्चमं गृहम् ।
शुभयुक्तं प्रशंसन्ति तदालोकितमेव वा ॥ इति ।

संहितान्तरेऽपि--

गृहप्रवेशे हि बुकं मौञ्जीबन्धे तु पञ्चमम् ।
विवाहे वर्ज्जयेद्यूनं यात्राकाले तथाष्टमम् ॥

क्रूरग्रहयुक्तमित्यनुवर्त्तते । वशिष्ठः--

इष्टाः पञ्च ग्रहा यस्य राशेस्तल्लग्नसंज्ञकम् ।
रविचन्द्रेज्यमुख्यास्ते चत्वारो वा बलान्विताः ॥
नीचस्थिताः शत्रुगृहस्थिताश्च पराजिताश्चास्तमुपागताश्च ।
लग्ने ग्रहास्ते स्वफलं प्रदातुं क्षमा न किञ्चिद्रिपुदृष्टदेहाः ॥

ते च ग्रहाः के? इत्यपेक्षायामाह स एव—

बुधे लग्नगते जीवे शुक्रे चाप्यथवा स्थिते।
करोति व्रतिनं नूनं वित्तविद्यासुखान्वितम्॥
द्वितीयस्था ग्रहाः सौम्याः सौख्यभोगकरास्तदा।
तत्र पापग्रहाः सर्वे सर्वस्वफलनाशनाः॥
तृतीयस्थाः शुभाः पापा वित्तभोगकराः सदा।
चतुर्थस्थानगाः सौम्याः सम्पद्भोगसुखप्रदाः॥
पञ्चमस्थानगाः सौम्या नृपपूजार्थसिद्धिदाः।
तत्र पापग्रहाः सर्वे सदा तत्फलनाशनाः॥
षष्ठस्थाः खेचराः सौम्या दुःखशोकभयप्रदाः।
तत्रस्थाः क्रूरखचराः सदा तत्फलनाशनाः॥
लग्नात्सप्तमगाः सौम्या वित्तविद्यासुखप्रदाः।
सर्वग्रहा अष्टमगा निधना धनशोकदाः॥
नवमे सौम्यखचरा वित्तायुष्यसुखप्रदाः।
तत्र पापाः सौम्यखेटफलस्यैव विघातकाः॥
सौम्याः कुर्वन्ति दश वित्तविद्याधनान्वितम्।
व्ययस्थानस्थिताः सर्वे कुर्वन्ति व्ययशालिनम्॥
खलं हीनं पापरतं बुद्धिहीनं विदेशगम्॥

अथ दुष्टग्रहफलम्—

रवौ लग्नादिकेन्द्रस्थे दोषः स्फुरितसंज्ञकः।
तत्रोपनीतस्य शिशोः कुलनाशो भवेत्तदा॥
कुजे लग्नादिकेन्द्रस्थे दोषः कुजितसंज्ञकः।
तत्रोपनीतं बटुकं हन्ति वर्षान्न संशयः॥
शनौ लग्नादिकेन्द्रस्थे दोषो रन्ध्राह्वयो भवेत्।
व्रतिनो जननीं हन्ति त्वथवा धनसञ्चयम्॥
केतौ लग्नादिकेन्द्रस्थे दोषश्च ग्रामसंज्ञकः।
समग्रव्रतिनां वृत्तं वित्तं विद्यां विनाशयेत्॥

लग्ने षष्ठाष्टमान्त्यस्थः करोत्येव निशाकरः ।
व्रतिनो रोगमिथुनं निधनं दुःखसञ्चयम् ॥

अत्र गुरुबलं चन्द्रबलं ताराबलं बालवृद्धास्तादिविचारः सङ्क्रान्तिदोषखार्जूरदशयोगमहापातवैधृत्युपग्रहपातबाणपञ्चकवज्रगण्डान्तदुर्मुहूर्तवारदोषान्धादिलग्नाष्टमलग्नदोषषड्वर्गविचारकर्त्तरीदोषादिविचारश्च विवाहप्रकरणोक्त एव ग्राह्यः । मण्डपप्रकार उपनयनवेदीतैलचन्दनमृदाहरणघटीयन्त्रप्रकारघटीयन्त्रस्थापनघाटिकाभ्रमणफललग्नपत्रलेखनादि सर्वमपि विवाहप्रकरणोक्तं ग्राह्यम् । अथोपनयने कर्त्तृनिर्णयः । तत्र वृद्धगर्गः—

पिता पितामहो भ्राता ज्ञातयो गोत्रजाग्रजाः ।
उपानयेऽधिकारी स्यात्पूर्वाभावे परः परः ॥

भ्रातेति पितुर्भ्रातेति व्याख्येयम् । वीरमित्रोदये—

पितैवोपनयेत्पुत्रं तदभावे पितुः पिता ।
तदभावे पितुर्भ्राता तदभावे तु सोदरः ॥
व्रतबन्धं कुमारस्य विना पितुरनुज्ञया ।
यः करोति द्विजो मोहान्नरकं प्रतिपद्यते ॥

इति दूरस्थपितृविषयम् । ज्ञातयः सपिण्डाः । गोत्रजाग्रजाः गोत्रजेषु सपिण्डातिरिक्तेषु अग्रजा वृद्धाः । यद्यप्यग्रजपदं गोत्रपदेन समस्तन्तथापि बुद्ध्या विभज्य सपिण्डेष्वपि सम्बन्धनीयम् । अन्यथोपनेयकनिष्ठानामपि तदधिकारापातात , दारकाचार्य्यत्वस्योपपातकत्वाच्च । अत्र केचिदाचार्य्यसमीपनयनमेवोपनयनमित्यभिप्रेत्य "पितैवोपनये"दित्यादिवाक्यानि पितैवाचार्यसमीपं नयेदित्यर्थपरतया व्याचक्षते । तेषां मते सत्यपि पित्रादावुपनेतरि होमगायत्र्युपदेशादिकर्त्ताऽन्य एवाचार्योऽन्वेष्टव्यः ।

आस्तिको वेदनिरतः शुचिराचार्य उच्यते ॥

इत्यादिवाक्येषु आचार्य्यस्य नित्यवच्छ्रवणात् । पितुरेवाचार्य्यत्वे आचार्य्यलक्षणाचार्य्यशौचाचार्य्यपत्न्यभिगमनप्रायश्चित्ताभिधानाद्यानर्थक्यापत्तेः, पितृलक्षणाद्यभिधानेनैव गतार्थत्वात् । पितृकुलावस्थितस्य ब्रह्म-

चारिण आचार्य्यकुलप्रत्यावृत्तिरूपसमावर्त्तनासम्भवापत्तेश्च । तस्मात्पित्र-तिरिक्त आचार्य्यः कर्त्तव्य इति । तन्न सुन्दरम् । बटोराचार्य्येण गायत्री-सम्बन्धस्यैवोपनयनपदार्थत्वेन व्याख्यातत्वात् । तत्र च पित्राचार्य्ययोः समुच्चितयोः कर्तृत्वासम्भवेन नित्यवच्छ्रुतस्याप्याचार्य्यस्य विकल्पेना-नुकल्पेन वान्वयस्यावश्यमभ्युपेयत्वात् । लक्षणाद्यभिधानं त्वनुकल्पतया प्राप्तस्याप्यपेक्षितमेव । समावर्त्तनं तु नाचार्य्यकुलान्निवृत्तिरेव, किन्तु ब्रह्मचर्य्यव्रतसमापनमिति न क्वापि विरोधः । तस्मात्पित्राद्यभावे आचार्य्यः कर्त्तव्य इति स्थितम् । आचार्य्यलक्षणमाह—

सत्यवाग्धृतिमान्दक्षः सर्वभूतदयापरः ।
आस्तिको वेदनिरतः शुचिराचार्य्य उच्यते ॥

यमोऽपि —

वेदाध्ययनसम्पन्नो वृत्तिमान्विजितेन्द्रियः ।
दक्षोत्साही यथावृत्तजीवने हस्तवृत्तिमान् ॥

व्यासोऽपि—

वेदैकनिष्ठं धर्मज्ञं कुलीनं श्रोत्रियं शुचिम् ।
स्वशाखाध्यमनालस्यं विप्रं कर्त्तारमीक्षितम् ॥

"विप्रं कर्त्तारमीक्षित"मिति व्यासवाक्येन विप्रपदोपादानात्तस्यैवा-ध्यापनाधिकाराच्च । तेन त्रयाणामपि वर्णानां पित्राद्यभावे विप्र एवोपनेता न क्षत्रियादिरिति सिद्ध्यति । "पितैवोपनयेत्पुत्र"मितिपदं ब्राह्मणो-पनयनविषयं न क्षत्रियवैश्ययोः, तयोस्तु पुरोहित एव, उपनयनस्य दृष्टार्थत्वात, तयोस्त्वध्यापनेऽनधिकारात् । अथ बटूपनेत्रोरधिकार-सिद्ध्यर्थं प्रायश्चित्तम् । तत्र वृद्धविष्णुः—

कृच्छ्रत्रयं चोपनेता त्रीन्कृच्छ्रांश्च बटुश्चरेत् ॥ इति ।

आचार्य्यस्य विशेषमाह स एव—

सावित्रीमभ्यसेदग्निपवित्राणि च संस्मरेत् ।
सहस्रं द्वादशावृत्तं सावित्रीं प्रजपेद्बुधः ॥
स्वाधिकारार्थमेवास्याः प्रदानार्थं हि तत्स्मृतम् ॥ इति ।

अग्निपवित्रा "ण्यग्निः शुचिव्रततम" इत्यादीनि । प्रजपेदित्यनेनाभ्यासमेवानूद्य सङ्ख्याविशेषमाह सहस्रमिति । तत्प्रयोजनमाह स्वाधिकारार्थमिति । अस्याः प्रदानार्थं यः स्वाधिकारस्तदर्थमित्यर्थः । इदानीं कर्म्माह "ब्राह्मणान्भोजयेत्तं च" इति सूत्रम् । उपनेताऽऽभ्युदयिकब्राह्मणव्यतिरिक्ताँस्त्रीन् ब्राह्मणान्भोजयेदाशयेत् । तं च कुमारं भोजयेत् । चशब्दो भोजनक्रियानुकर्षणार्थः । "पर्य्युप्तशिरसमलङ्कृतमानयन्ति" इति सूत्रम् । परि सर्वतः उप्तं मुण्डितं शिरो यस्य सः पर्य्युप्तशिरास्तं पर्य्युप्तशिरसमलङ्कृतं स्रङ्मालादिना भूषितमानयन्ति । आचार्य्यपुरुषाः आचार्य्यसमीपमानयन्ति । कर्कवासुदेवमतेन कुमारस्यादौ वपनं पश्चात्त्रीन्भोजयेत् । तत्पक्षे मुण्डितशिरसं बटुं च । कुमारस्य वपनं कृत्वा स्नापयित्वा त्रिप्रभृतिब्राह्मणैर्मात्रा च सह कुमारं भोजयेत् । तथा च धर्म्मप्रवृत्तौ —

अथोपनयनाहे तु मुहूर्ताच्छोभनादधः ।
मात्रा सहैव भुञ्जीयाद्विवाहे भार्य्यया सह ॥
मात्रा सहैव भुञ्जीयाच्चौलमानेकभाजने ॥

"पश्चादग्नेरवस्थाप्य ब्रह्मचर्य्यमागामिति वाचयति" इति सूत्रम् । आनयनानन्तरमाचार्य्यः अग्नेः पश्चात्स्वस्य दक्षिणतः कुमारमवस्थाप्य अवस्थितं कृत्वा "ब्रह्मचर्य्यमागामिति ब्रूहि" इत्येवं वाचयति । ततो माणवकः प्राङ्मुखस्तिष्ठन्नेव "ब्रह्मचर्य्यमागा"मिति वदति । मन्त्रार्थः— ब्रह्मचर्य्यम्प्रत्यागतोऽस्मि । ब्रह्म वेदस्तस्य चरणम् । "ब्रह्मचार्य्यसानीति चे"ति सूत्रम् । तत आचार्य्यो "ब्रह्मचार्य्यसानीति ब्रूही"ति वाचयति । चशब्दान्माणवकश्च प्राङ्मुखस्तथैव तिष्ठन् "ब्रह्मचार्य्यसानी"ति तथैव ब्रूयात् । मन्त्रार्थः— ब्रह्म कर्म्म चरतीति एवंशीलो ब्रह्मचारी अहमसानि भवानि । अथ वस्त्रम् "अथैनं वासः परिधापयती"ति सूत्रम् । आनयनानन्तरमाचार्य्य एनं कुमारं वास अहतं परिधापयति । वीरमित्रोदये—

तत्रादौ परिधानार्थं कल्पयेन्नववस्त्रकम् ।

शिरोऽवगुण्ठनं चैव नवमन्यत्प्रकल्पयेत् ॥

शिरोऽवगुण्ठनं प्रावरणवासः । अत्र वस्त्रशब्देन कौपीनं ग्राह्यम् । तथा चाश्वलायनः—

वाससी ते स्वगुरवे मेधाजननकर्मणि ।
दद्यात्तावत्प्रभृत्येव कौपीनेन प्रवर्त्तयेत् ॥

तावत्प्रभृति कौपीनेनेत्यन्वयः । स्मृत्यर्थसारे—

कौपीनं कटिसूत्रं च यतेः स्याद्ब्रह्मचारिणः ।
ग्राह्यं नैव गृहस्थस्य श्रौते स्मार्त्ते च कर्मणि ॥

वीरमित्रोदये—

कौपीनमात्रा वर्तन्ते तथाऽन्ये ब्रह्मचारिणः ॥ इति ।

अत्र मात्रशब्देन बहिर्वासोऽव्यावृत्तिः। वाससि विशेषमाहाश्वलायनः-"अहतेन वाससा संवीत"मिति । अहतलक्षणमाह प्रचेताः—

ईषद्धौतं नवं श्वेतं सदशं यन्न धारितम् ।
अहतं तद्विजानीयात्सर्वकर्म्मसु पावनम् ॥

वस्त्रविशेषमाह-"वासांसि शाणक्षौमाविकानि"इति वक्ष्यमाण-सूत्रात । तथा च मनुः—

वसीरन्नानुपूर्वेण शाणक्षौमाविकानि च ।

आपस्तम्बोऽपि "वासांसि शाणक्षौमाविकानि काषायं चैके वस्त्र-मुपदिशन्ति ब्राह्मणस्य माञ्जिष्ठं राजन्यस्य हारिद्रं वैश्यस्येति" । वशिष्ठोऽपि—"शुक्लमहतं वासो ब्राह्मणस्य कार्पासं माञ्जिष्ठं क्षौमं क्ष-त्रियस्य सर्वेषां वा तान्तवमरक्त"मिति । गौतमोऽपि—वासांसि शाणक्षौमचीरकुतपाः सर्वेषां कार्पासं वाविकृतं काषायमप्येके" । अथ वस्त्रधारणे मन्त्रः-"येनेन्द्राय बृहस्पतिर्वासः पर्य्यदधादमृतम् । तेन त्वा परिदधाम्यायुषे दीर्घायुत्वाय बलाय वर्च्चसे इति" इति सूत्रम् । येनेन्द्रायेति मन्त्रेण । मन्त्रार्थः-हे कुमार ! येन विधिना इन्द्राय सँस्कर्त्तुं बृहस्पतिः सुराचार्य्यो वासः पर्यदधात् परिधापितवान् । किम्भूतं अमृतम् अहतम् । तेन विधिना त्वा त्वां माणवकं परिदधामि । उभ-

यान्तर्भूतो णिज्ज्ञेयः। परिधापयतीति सूत्रे तत्त्वात्। यद्वा इन्द्राय पर्य्यदधात् इन्द्रे अव्यवस्थितं स्थापितवान्। तथा त्वा त्वां लक्ष्मीकृत्य परिदधामि त्वयि अव्यवच्छेदेन धारयामीति। किमर्थम् दीर्घायुत्वाय तव चीरं जीवनाय। आयुशब्द उकारान्तोऽप्यस्ति। बलाय देहशक्तये वर्चसे इन्द्रियशक्तये ऐश्वर्यायेति वा। अथ मेखला "**मेखलां बध्नीत इयं दुरुक्तं परिबाधमाना वर्णं पवित्रं पुनती म आगात्। प्राणापानाभ्यां बलमादधाना स्वसा देवी सुभगा मेखलेयमिति युवा सुवासाः परिवीत आगात्स उ श्रेयान्भवति जायमानः। तन्धीरासः कवय उन्नयन्ति स्वाध्यो मनसा देवयन्त इति वा तूष्णी**"मिति सूत्रम्। तत आचार्य्यो माणवककट्यां मेखलां रशनां बध्नीते "**इयं दुरुक्त**"मिति मन्त्रेण। अथ वा "**युवा सुवासा**"इति मन्त्रेण। अथ वा तूष्णीं बध्नीते। "**मौञ्जी रशना ब्राह्मणस्य धनुर्ज्या राजन्यस्य मौर्व्वी वैश्यस्ये**"ति वक्ष्यमाणसूत्रात्। मुञ्जस्तृणविशेषः तत्कृता मेखला मौञ्जी। धनुर्ज्या धनुषोपनीय ग्राह्या। मौर्वी मुरुस्तृणविशेषस्तन्मयी। अविरूर्णायुस्तद्रोमभिः कृता आवी। तथा च वशिष्ठः-"**मौञ्जी रशना ब्राह्मणस्य धनुर्ज्या क्षत्रियस्य शणतान्तवी वैश्यस्ये**"ति। पैठीनसिरपि-"**मौञ्जी मेखलाश्मन्तकजा वा ब्राह्मणस्य बल्वजा मौर्वी वा राजन्यस्य शाणी क्षौमी वा वैश्यस्ये**"ति। मेखला कटिवेष्टनरज्जुः। अश्मन्तकः कुशसदृशस्तृणविशेष इति कल्पतरुः। बल्वजा बिल्वत्वङ्निर्म्मिता। मौर्वी इति जिनीमालेति दाक्षिणात्यानां प्रसिद्धा। अयं च विकल्पो यथाशाखं यथासम्भवं वा द्रष्टव्यः। अथ मुख्याभावेऽनुकल्पः। तत्र मनुः—

**मुञ्जाभावे तु कर्त्तव्या कुशाश्मन्तकबल्वजैः॥** इति।

मुञ्जग्रहणमुक्तद्रव्योपलक्षणं प्रतिनिधौ त्रित्वदर्शनात्। तेन मुञ्जमूर्वीशणानामभावे वर्णत्रयस्य क्रमेण कुशादयो ग्राह्या इत्यर्थ इति केचित्। वस्तुतस्तु एकैकस्या मेखलायास्त्रयस्त्रयः प्रतिनिधयः। अत्र च मुञ्जादिस्थाने विहितानां कुशादीनां प्रतिनिधित्वान्मुञ्जधर्म्मस्त्रिवृत्त्वादिधर्म्मलाभो भवति। नीवारेष्टिवद्व्रीहिधर्म्माणां प्रोक्षणावघातादीनामिति। शङ्खः—"**सर्वेषां**

वा मौञ्जी"। अथ मेखलालक्षणमाह—"ब्रह्मचारिणः शिरसः समन्ताद् गुणमेकविंशतिवारं वेष्टयित्वा शिरोवेष्टनप्रमाणरज्जुर्ग्राह्या। सा त्रिवृता कार्या। उक्तञ्च निर्णयामृते—

अथावर्त्यैकविंशत्या शिरसि ब्रह्मचारिणः।
मेखला त्रिगुणीकृत्य कर्त्तव्या साम्प्रदायिकैः॥

तथा च याज्ञवल्क्यः—"उपवीतवन्मेखला कार्य्या केचित्त्रैगुण्यमिच्छन्ति"। अथ मेखलाबन्धनम्। आचार्य्यस्त्रिगुणां मेखलामादाय बटोः कटिप्रदेशे प्रादक्षिण्येन त्रिर्वेष्टयति। तृतीयवेष्टने ग्रन्थयस्त्रयः पञ्च सप्त वा कार्य्याः। तदुक्तं गदाधरभाष्ये—

त्रिवृता मेखला कार्य्या त्रिवारं स्यात्समावृता।
तद्ग्रन्थयस्त्रयः कार्य्याः पञ्च वा सप्त वा पुनः॥

अत्र प्रवरसङ्ख्यानियमः। त्र्यार्षेयस्य ग्रन्थित्रयं पञ्चार्षेयस्य पञ्च सप्तार्षेयस्य सप्तेति गर्गपद्धतौ। वृद्धाचारोऽप्येवमेव। आचार्य्यकर्तृकं मेखलाबन्धनं कुमारस्य मन्त्रपाठ इति वासुदेवमुरारिमिश्रजयरामहरिहराः। गदाधरमते तु आचार्यस्यैव मन्त्रपाठः। तेषामयं ग्रन्थः—मुरारिमिश्रैरबुद्ध्वैव "पुरुषयोगिसंस्कारयोस्त्यागे सामर्थ्या"दिति हेतूपन्यासार्थं प्रदर्शितम्। न हि करणमन्त्रेऽयं न्यायः प्रवर्त्तते। आचार्यकर्तृको ह्ययं पदार्थः, मन्त्रपाठस्तु लिङ्गवशेन माणवककर्त्तृकः स्यात् इति चेन्न। प्रधानभूतश्च पदार्थः, गुणभूतश्च मन्त्रः। अतः पदार्थाङ्गत्वेन मन्त्रोऽपि पदार्थकर्त्रा पठनीयः। मन्त्रेऽपि च लक्षणया माणवकाभिधानमित्यदोषः। तथा च श्रुतिः "यां वै काञ्च यज्ञ ऋत्विज आशिषमाशासते यजमानस्यैवे"ति। कारिकायाम्—

बध्नीयात्त्रिगुणां श्लक्ष्णामियन्दुरुक्तमुच्चरन्।
आचार्यस्यैव मन्त्रोऽयं न बटोरात्मनेपदात्॥

गङ्गाधरोऽपि—

वस्त्रे च मेखलादाने तथैवाञ्जलिपूरणे।
हृदयालम्भने प्रश्ने तथा भूतप्रदानके॥

आचार्यस्यैव मन्त्रपाठः । अन्यत्र माणवकस्य । मन्त्रार्थः–इयमितीहशब्द आद्यन्तयोर्वाक्यालङ्कारार्थः । इयं मेखला माम् अगात् आगता । किं कुर्वती । तदुक्तम् दुष्टं भाषितमसत्याप्रियादिकं परितः सर्वतः भूतं भविष्यच्च बाधमाना निराकुर्वाणा । वर्णं वर्णत्वं पवित्रं शुद्धं पुनती सत्कुर्वती, मे मम प्राणापानाभ्यां मरुद्भ्यां तयोर्बलं सामर्थ्यम् आदधाना स्थापयन्ती । स्वसा स्वसृवद्धिता । देवी दीप्तिमयी । सुभगा सौभाग्यदा । युवा सुवासा इत्यस्यार्थः–यौति गुणानेकीकरोतीति युवा । सुवासाः शोभनवस्त्रः । अहतं शोभनमुच्यते । परिवीतः वस्त्रपुष्पमालाभिः समन्ततो वेष्टित आगात् आगतः । उ वितर्के । श्रेयान् सपदि जायमान उत्पाद्यमानः श्रेयान्शुद्धः स्यात् । धीरासः स्थिरप्रज्ञाः कवयो वेदवेदार्थज्ञा यतः । अथ यज्ञोपवीतम् । अत्र यद्यपि सूत्रकारेण यज्ञोपवीतधारणं न सूत्रितं तथापि–"एकवस्त्राः प्राचीनावीतिन" इति प्रेतोदकदाने प्राचीनावीतित्वविधानात् ,

दण्डाजिनोपवीतानि मेखलां चैव धारयेत् ।

इति याज्ञवल्क्येन ब्रह्मचारिण उपवीतधारणस्मरणात् । तथा—

सदोपवीतिना भाव्यं सदा बद्धशिखेन च ।
विशिखो व्युपवीतश्च यत्करोति न तत्कृतम् ॥

इति च्छन्दोगपरिशिष्टे कात्यायनेन सामान्यतः सर्वाश्रमिणां सदा यज्ञोपवीतधारणस्मरणाच्च । यज्ञोपवीतधारणं तावदुपनयनप्रभृति प्राप्तम् । तच्च कुत्र कर्त्तव्यमित्यवसरापेक्षायामौचित्यान्मेखलाबन्धनानन्तरं युज्यते । एतदेव कर्कोपाध्यायवासुदेवदीक्षितप्रभृतयः स्वस्वग्रन्थे यज्ञोपवीतधारणमन्त्रावसरे लिखितवन्तः । तच्च सर्वकर्म्माङ्गत्वान्मत्रवद् युज्यते इति मन्त्रमपि लिखितवन्तः । "यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् । आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः"।

इति माणवकपठितेन मन्त्रेण उपवीतं परिधापयति । अथ यज्ञोपवीतलक्षणम् । तत्र मनुः—

कार्पासमुपवीतं स्याद्विप्रस्योर्ध्ववृतन्त्रिवृत् ।

शणसूत्रमयं राज्ञो वैश्यस्याविकसूत्रजम् ॥

त्रिवृन्नवसूत्रकमिति यावत्। बौधायनः—"कौशं सौत्रं त्रिस्त्रिवृद्यज्ञोपवीतमानाभेः"। कौशं कृमिकोशोद्भवं पट्टसूत्रमयमिति यावदिति कल्पतरुः। वस्तुतस्तु कौशं कुशपत्रनिर्म्मितम्। तथा च गोभिलः "यज्ञोपवीतं कुरुते सूत्रं वस्त्रं कुशं रज्जुं वे"ति। सौत्रं कार्पासम्। त्रिवृन्नवगुणम्। "नव वै त्रिवृ"दिति श्रुतेः। देवलः—

कार्पासक्षौमगोवालशणवल्कतृणोद्भवम्।
सदा सम्भवतो धार्य्यमुपवीतं द्विजातिभिः ॥

क्षुमा अतसी तत्सम्बन्धी। वल्कलं तरुत्वक्। तृणोद्भवं कुशादितृणनिर्म्मितम्। आदित्यपुराणे—

क्षौमजं वाथ कार्पासं शणसूत्रमथापि वा।
दद्याद्यज्ञोपवीतं यो न तं हिंसन्ति वायसाः ॥

वायसा राक्षसाः। यद्यप्येषु वाक्येषु सम्भवं यथासम्भवं वा शब्दाः श्रूयन्ते तथाप्येषां कल्पानां मुख्यासम्भवविषयत्वमेव द्रष्टव्यम्, न तुल्यबलत्वम्। अथ यज्ञोपवीतलक्षणम्। तत्र भृगुकात्यायनौ—

त्रिवृदूर्ध्ववृतं कार्यं तन्तुत्रयमधोवृतम्।
त्रिवृतं चोपवीतं स्यात्तस्यैको ग्रन्थिरुच्यते ॥

सङ्ग्रहेऽपि—

ऊर्ध्ववृत्तमधोवृत्तं पुनरुर्ध्ववृतन्तथा।
एतद्यज्ञोपवीतं स्यात्तस्यैको ग्रन्थिरिष्यते ॥

गृह्यपरिशिष्टेऽपि—"उपवीतमयुग्मशरं विषमतन्तुकं त्रिवृद् यज्ञोपवीत"मिति। एकं सूत्रमयुग्मशरं त्रिगुणीकृत्य वलितं पुनस्त्रिवृत्क्रियते त्रिगुणीकृत्य वध्यते तन्नवतन्तुकमुपवीतं भवति। त्रिगुणीकृतमेकेन ग्रन्थिना बद्धं सत् यज्ञोपवीतमित्युक्तेः। तथा च देवलः—

यज्ञोपवीतं कुर्वीत सूत्रेण नवतन्तुकम्।
एकेन ग्रन्थिना तन्तुर्द्विगुणस्त्रिगुणोऽथ वा ॥

अत्र तन्तौ द्वैगुण्यं त्रैगुण्यं सम्भवे द्रष्टव्यम् । ततश्च द्विगुणस्यैव त्रैगुण्यं षट्तन्तुकतैव सम्पद्यते । अत एव पैठीनसिः—

"कार्पासमुपवीतं षट्तन्तुकं त्रिवृतं ब्राह्मणस्य क्षौमं राजन्यस्याविकं वैश्यस्ये"ति। द्विगुणे सूत्रे त्रिवृति कृते षट्तन्तुकम्भवतीत्यर्थः। तदूर्ध्ववृतं कार्यम् । तथा मार्कण्डेयपुराणे दत्तात्रेयः--

अधोवृत्तैस्त्रिभिः सूत्रैः पुनश्चोर्ध्ववृतैस्त्रिवृत् ।

ऊर्ध्ववृत्तस्य लक्षणमाह सङ्ग्रहकारः—

करेण दक्षिणेनोर्ध्वं गतेन त्रिगुणीकृतम् ।
वलितं मानवैः सूत्रं शास्त्रे चोर्ध्ववृतं स्मृतम् ॥

अथोपवीतनिर्माणप्रकारः । तत्र देवलः—

कर्पासकं समादद्याच्छुचिक्षेत्रे विशोधिते ।
त्रिवृतन्तु तथा कार्य्यं ब्राह्मण्या सूत्रकं कृतम् ॥

ब्राह्मण्यत्र सधवेति व्याख्येयम् , विधवानिर्म्मितस्य निषिद्धत्वात् । तथा च स्कान्दे —

विधवारचितं सूत्रमनध्यायकृतं च यत् ।
विच्छिन्नं चाप्यधोयातं भुक्त्वा निर्म्मितमुत्सृजेत् ॥

धर्मप्रवृत्तौ—

उच्छिष्टं तोरणच्छिन्नं विकृतं विधवाकृतम् ।
भुक्तोत्तरे त्वनध्याये सप्त तन्तून्न धारयेत् ॥

इदं च सूत्रान्तरसम्भवे द्रष्टव्यम् । असम्भवे तु तस्यापि ग्राह्यत्वात् । तदुक्तं स्मृतिसारे—

छेदे विनाशे वा स्नाने कन्यया निर्म्मितं शुभम् ।
विधवान्धाभिरथवा सूत्रं गृह्णीत वै शुचिः ॥

छेदे विनाशे यज्ञोपवीतस्येति शेषः । गदाधरभाष्येऽपि—

शुचौ देशे शुचिः सूत्रं संहताङ्गुलिमूलकम् ।
आवेष्ट्य षण्णवत्या ९६ तत्त्रिगुणीकृत्य यत्नतः ॥
अब्लिङ्गकैस्त्रिभिः सम्यक्प्रक्षाल्योर्ध्ववृतन्तु तत् ॥

अब्लिङ्गकैः "आपोहिष्ठा"दिभिः। वीरमित्रोदये—

देवागारेऽथ वा गोष्ठे नद्यां वान्यत्र वा शुचौ।
सावित्र्या त्रिगुणं कुर्य्यान्नवसूत्रं तु तद्भवेद्॥
अभिमन्त्र्याथ भूरग्निश्चेति वृत्तत्रयं त्रिभिः॥

तत्र मन्त्राः—

"ॐ भूरग्नये च पृथिव्यै च महते च स्वाहा।
ॐ भुवो वायवे चान्तरिक्षाय च महते च स्वाहा।
ॐ स्वरादित्याय च दिवे च महते च स्वाहा"।

अथ यज्ञोपवीतपरिमाणम्। वीरमित्रोदये—

आकण्ठस्तत्प्रमाणं स्याद्दीर्घन्तु सुस्थितं तथा।
कनिष्ठाङ्गुलिवत्स्थूलन्तदूर्ध्वं वा त्रिवृच्छुभम्॥

कात्यायनः—

पृष्ठदेशे च नाभ्यां च धृतं यद्विन्दते कटिम्।
तद्धार्य्यमुपवीतं स्यान्नातिलम्बं न चोच्छ्रितम्॥
स्तनादूर्ध्वमधो नाभेर्न धार्य्येत कथञ्चन॥

तत्र मनुः—

स्कन्धादिनाभिपर्य्यन्तं ब्रह्मसूत्रं पवित्रकम्।
न्यूने रोगप्रवृद्धिः स्यादधिके धर्म्मनाशनम्॥ इति।

अथाश्रमविशेषेणोपवीतसंख्यामाह। तत्र भृगुः—

उपवीतं बटोरेकं द्वे तथेतरयोः स्मृते।
एकमेव यतीनां स्यादिति शास्त्रविनिश्चयः॥

तथाशब्दात्स्नातकग्रहणम्। तथा च वशिष्ठः—

स्नातकानां द्वितीयं स्यादन्तर्वासस्तथोत्तरम्।
यज्ञोपवीते द्वे यष्टिः सोदकश्च कमण्डलुः॥ इति।

इतरयोर्गृहस्थवानप्रस्थयोः। देवलोऽपि—

यज्ञोपवीते द्वे धार्य्ये श्रौते स्मार्ते च कर्मणि।
तृतीयमुत्तरीयार्थं वस्त्राभावे चतुर्थकम्॥

यतीनां त्रिदण्डिनाम् । एकदण्डिनां शिखासूत्रत्यागाभिधानात् । काश्यपोऽपि—

त्रीणि चत्वारि पञ्चाष्ट गृहिणः स्युर्दशापि वा ।
उत्तमाश्रमिणस्त्वेकं व्रतिनस्त्वेकमेव हि ॥

इयं च सङ्ख्या नित्यधारणे । काम्ये तु सङ्ख्यान्तरमपि देवलः—

आयुःकामैः सदा धार्य्यं बहु यज्ञोपवीतकम् ।
पञ्चभिः पुत्रकामी स्याद्धर्म्मकामी तथैव च ॥

इदं च ब्रह्मचारिणोऽपि भवति, आयुःकामनाया विशेषात् । यत्तु—

एकयज्ञोपवीतेन जपहोमादि यत्कृतम् ।
तत्सर्वं विलयं याति न पितॄँश्चोपतिष्ठते ॥

इति निन्दार्थवादः, सोऽपि गृह्यादिविषय एव, न ब्रह्मचारिविषयः। सदोपवीतिनेत्यत्र सदाशब्दश्रवणाच्चोपवीतस्य कण्ठादनुत्तारणं गम्यते । तथा च भृगुः—

मन्त्रपूतं स्थितं काये यस्य यज्ञोपवीतकम् ।
नोद्धरेच्च ततः प्राज्ञो य इच्छेच्छ्रेय आत्मनः ॥
सकृच्चाधारणात्तस्य प्रायश्चित्ती भवेद्द्विजः ॥ इति ।

प्रक्षालनार्थन्तु शाखाविशेषेणापवादमाह । तत्र भृगुः—

तैत्तिरीयाः कठाः काण्वाश्चरका वाजसनेयिनः ।
कण्ठादुत्तार्य्य सूत्रन्तु कुर्य्युर्वै क्षालनं द्विजाः ॥
बह्वृचाः सामगाश्चैव ये चान्ये यजुःशाखिनः ।
कण्ठादुत्तार्य्य सूत्रन्तु पुनरर्हन्ति सँस्क्रियाम् ॥

सँस्क्रियां मन्त्रेण धारणम् ।

अभ्यङ्गे चोदधिस्नाने मातापित्रोर्मृतेऽहनि ।
कण्ठादुत्तार्य्य सूत्रन्तु कुर्य्युर्वै क्षालनं द्विजाः ॥

केशसंस्पृष्टे यज्ञोपवीते शुद्धिमाह । वीरमित्रोदये देवलः—

सूत्रं सलोमकं चेत्स्यात्ततः कृत्वा विलोमकम् ।
सावित्र्या दशकृत्वाद्भिर्मन्त्रिताभिस्तदुत्क्षिपेत् ॥

यज्ञोपवीतादिभङ्गे प्रतिपत्तिमाह । मनुः--

मेखलामजिनं दण्डमुपवीतं कमण्डलुम् ।
अप्सु प्रास्य विनष्टानि गृह्णीतान्यानि मन्त्रतः ॥

भृगुः--

पतितं त्रुटितं वापि ब्रह्मसूत्रं यदा भवेत् ।
नूतनं धारयेद्विप्रः स्नानसङ्कल्पपूर्वकम् ॥
आचम्य प्रतिसूत्रन्तु त्रिगुणीकृत्य यत्नतः ।
यज्ञोपवीतमेकैकं प्रतिमन्त्रेण धारयेत् ॥
एकमन्त्रेण सङ्कल्प्य धृत्वा यज्ञोपवीतकम् ।
एकस्मिँस्त्रुटिते सर्वं त्रुटितं नात्र संशयः ॥

अथ यज्ञोपवीतधारणे कर्मविशेषे देशविशेषमाह परिशिष्टे-"वामस्कन्धे यज्ञोपवीतं दैवे प्राचीनावीतमितरथा पितृयज्ञे" । देवलोऽपि-

ब्रह्मसूत्रेऽपसव्येंऽसे स्थिते यज्ञोपवीतिता ।
प्राचीनावीतिता सव्ये कण्ठस्थे च निवीतिता ॥

श्रुतिरपि--"दक्षिणं बाहुमुद्धरतेऽवधत्ते सव्यमिति यज्ञोपवीतमेतदेव विपरीतं प्राचीनावीतं संवीतं मानुष"मिति । अथ यज्ञोपवीतधारणमन्त्रार्थः-हे आचार्य्य ! इदं ब्रह्मसूत्रमहं प्रतिमुञ्च प्रतिमुञ्चामि प्रतिपूर्वो मुञ्चतिर्बन्धनार्थः । पुरुषव्यत्ययश्छान्दसः । किम्भूतम् यज्ञोपवीतं यज्ञेन प्रजापतिना यज्ञाय वेदोक्तकर्माधिकारायेति वा उपवीतमुपरिस्कन्धदेशे वीतं परिहितम् । परमं पर आत्मा मीयते ज्ञायते येन वाक्योपदेशाधिकारित्वात् । पवित्रं शोधकम् । प्रजापतेर्ब्रह्मणः सहजं सहोत्पन्नं, स्वभावसिद्धं वा । पुरस्तात् प्राग्भवम् । अत इदमायुषे हितम् आयुष्यमस्तु । अग्र्यं मुख्यम् अनुपहतम् । शुभ्रं निर्म्मलम् । बलं धर्मसामर्थ्यं तेजः प्रभावप्रदम् । अथाजिनम् "अथाजिनं प्रयच्छति मित्रस्य चक्षुर्द्धरुणं बलीयस्तेजो यशस्वि स्थविरꣳ समिद्धम् । अनाहनस्यं वसनं जरिष्णुः परीदं वाज्यजिनं दधेऽहमिति" इति सूत्रम् । यज्ञोपवीतधारणानन्तरमजिनधारणम् । "ऐणेयमजिनमुत्तरीयं ब्राह्म-

णस्य रौरव ९राजन्यस्याजं गव्यं वा वैश्यस्य सर्वेषां वा गव्यमसति प्रधानत्वाद्" इति वक्ष्यमाणसूत्रात् ब्राह्मणक्षत्रियविशां यथाक्रममैणेयं रौरवं आजं गव्यं वा भवतीत्यर्थः। एणी बिन्दुरहिता मृगी गौरमृगी तत्सम्बन्ध्यैणेयम्। एणीशब्दो ढक्प्रत्ययान्तः। रुरुर्बिन्दुमान्मृगः। अजाच्छागः, गव्यं वा। अत्रै"णेयमुत्तरीय"मिति वचनात् प्रागुक्तानि शाणादीनि अन्तरीयाणीति गम्यते। तथा चाश्वलायनः—

"ऐणेयेन वाजिनेन ब्राह्मणं रौरवेण क्षत्रियमाजेन वैश्य"मिति। अत्र वाशब्दग्रहणाद्वासोऽजिनयोर्विकल्पः। उभयोरपि प्रावरणार्थत्वात्। असति यथोक्ताजिनासम्भवे गव्यं प्रधानत्वात्। प्रशस्तत्वादित्यर्थः। यमः—"सर्व्वेषां वा रौरवाजिनम्"। इतरचर्म्माभावात् इति शेषः। विष्णुः—

"मार्गवैयाघ्रबास्तानि चर्माणि"। तथा च यमस्मृतिः—

कृष्णाजिनं ब्राह्मणस्य रौरवं क्षत्रियस्य तु।
बस्ताजिनं तु वैश्यस्य सर्वेषां रौरवाजिनम्॥

तत्परिधानमाह शौनकः—

निक्षिप्य ब्रह्मसूत्रन्तु वितत्याधः प्रसार्य्य च।
वामांसे स्थापयेच्चैतत्तथा कृष्णमृगाजिनम्॥

तत्परिमाणमाह शाकलः—

अखण्डं वा त्रिखण्डं वाष्टाचत्वारिंशदङ्गुलम्।
चतुरङ्गुलविस्तीर्णं धारयेदजिनं सदा॥

खण्डत्रयपरिमाणमुक्तं रेणुदीक्षितेन कारिकायाम्—

अङ्गुलन्तु बहिर्लोम यद्वा स्याच्चतुरङ्गुलम्।
अजिनं धारयेद्विप्रश्चतुर्विंशाष्टषोडशैः॥

चतुर्विंशाङ्गुल एकः खण्डः। अष्टाङ्गुलो द्वितीयः। षोडशाङ्गुलस्तृतीयः। त्रिभिः स्यूतैरष्टाचत्वारिंश४८दङ्गुलं परिमण्डलं सम्पद्यते। अजिनस्योत्तरीयकरणं तूष्णीम्। मन्त्रपाठेन वेति वासुदेवः। मन्त्रेणाजि-

नधारणमिति गर्गपद्धतौ। कारिकायाम्—

मित्रस्य चक्षुरित्युक्त्वा तद्वत्कृष्णाजिनं ततः॥ इति।

"मित्रस्य चक्षु"रितिमन्त्रः। अथ दण्डधारणम्। "दण्डं प्रयच्छति तम्प्रतिगृह्णाति यो मे दण्डः परापतद्वैहायसोऽधि भूम्याम्। तमहं पुनरादद आयुषे ब्रह्मणे ब्रह्मवर्चसायेति" इति सूत्रम्। "पालाशो ब्राह्मणस्य दण्डो बैल्वो राजन्यस्यौदुम्बरो वैश्यस्ये"ति वक्ष्यमाणसूत्रात्। पालाशबैल्वौदुम्बरा ब्राह्मणक्षत्रियविशां यथासङ्ख्यं ज्ञेयाः। पालाशशब्दोऽत्र वृक्षवचनो न पत्त्रवचनः। औदुम्बरादिसाहचर्यात्। विष्णुः—"पालाशखादिरौदुम्बरा दण्डा" इति। भविष्यपुराणे—

ब्राह्मणो बैल्वपालाशौ तृतीयः प्लक्षजस्तथा।
न्यग्रोधखादिरौ क्षत्रे तथाऽन्ये वैतसोद्भवः॥
पैलवौदुम्बरौ वैश्ये तृतीयोऽश्वत्थजस्तथा।
दण्डानेतान्महाबाहो! धर्मतोऽर्हन्ति धारितुम्॥

अथानुकल्पः—"सर्वे वा सर्वेषा"मिति वक्ष्यमाणसूत्रात्। गौतमः—"यज्ञीयो वा सर्व्वेषा"मिति। यज्ञीयो यज्ञार्हवृक्षीयः। स चाभिहितो ब्रह्मपुराणे—

पालाशश्चाथ न्यग्रोधप्लक्षवैकङ्कतोद्भवाः।
अश्वत्थोदुम्बरो बिल्वश्चन्दनः सरलस्तथा॥
शालश्च देवदारुश्च खादिरश्चेति यज्ञियाः।

यमः—

एतेषामप्यलाभे तु सर्वेषामेव यज्ञियाः॥

अथ दण्डलक्षणम्। तत्र मनुः—

ऋजवस्ते तु सर्वे स्युरव्रणाः सौम्यदर्शनाः।
अनुद्वेगकरान्दण्डान्सत्वचो नाग्निदूषितान्॥

गौतमोऽपि। "अपीडिता यूपवक्त्राः सवल्का" इति। अपीडिता वल्लीवेष्टनादिभिः। यूपवक्त्रा यूपवदुन्नताग्राः। अथ दण्डपरि-

माणम् "केशसम्मितो ब्राह्मणस्य दण्डो ललाटसम्मितः क्षत्रियस्य घ्राणसम्मितो वैश्यस्ये"तिवक्ष्यमाणसूत्रात । तथा च मनुः—

केशान्तिको ब्राह्मणस्य दण्डः कार्यः प्रयत्नतः ।
ललाटसम्मितो राज्ञः स्यात्तु नासान्तिको विशः ॥

केशान्तिको मूर्धप्रमाण इत्यर्थः । अथ विशेषमाह वशिष्ठः—"घ्राणसम्मितो ब्राह्मणस्य ललाटसम्मितः क्षत्रियस्य केशसम्मितो वैश्यस्ये "ति । "यो मे दण्ड" इति मन्त्रेण दण्डधारणम् । मन्त्रार्थः—हे आचार्य्य ! यो दण्डः मे मह्यं मरापतत् अभिमुखमागतः । वैहायसः आकाशे वसन् । अधिभूम्यां भूमेरुपरिवर्त्तमानः । तं दण्डमहमाददे गृह्णामि । पुनर्ग्रहणात्सोमदीक्षायां यो मे दण्डो ग्राह्यस्तमप्याददं इत्याशासनम् । किमर्थम् आयुषे जीवनाय । ब्रह्मणे वेदग्रहणाय । ब्रह्मवर्चसाय यजनाध्यापनोत्कर्षतेजसे । "दीक्षावदेके दीर्घसत्रमुपैतीति वचना"दिति सूत्रम् । एके आचार्य्याः दीक्षावत्सोमयागदीक्षायां यथा तूष्णीं प्रतिगृह्णो"च्छ्रयस्वे"त्युच्छ्रयग्रहणं तथा स्मरणाभावात् । या चात्र दीर्घसंस्तुतिः सा दीर्घकालसामान्यादिति भर्तृयज्ञकर्कजयरामाः । दीक्षावद्वा दण्डग्रहणमिति वासुदेवकारिकाकारहरिहराः । "अथास्याद्भिरञ्जलिनाऽञ्जलिं पूरयत्यापो हि ष्ठेति तिसृभिः"इति सूत्रम् । अथ दण्डप्रदानानन्तरमाचार्य्योऽस्य कुमारस्याञ्जलिं स्वेनाञ्जलिनाऽऽप आदाय ताभिरद्भिः पूरयति "आपो हि ष्ठे"ति तिसृभिः ऋग्भिः । "अथैनꣳसूर्य्यमुदीक्षयति तच्चक्षुरिति" इति सूत्रम् । अथाञ्जलिपूरणानन्तरमेनं माणवकं सूर्यमुदीक्षस्वेति आचार्य्यः प्रैषं दत्वा सूर्य्यमुदीक्षयति सूर्य्यं दर्शयति । स च प्रेषितस्तेन "तच्चक्षु"रिति मन्त्रेण सूर्य्यमुदीक्षते । "अथास्य दक्षिणाꣳसमधि हृदयमालभते मम व्रते ते हृदयं दधामि मम चित्तमनु चित्तन्ते अस्तु । मम वाचमेकमना जुषस्व बृहस्पतिष्ट्वा नियुनक्तु मह्यामिति" इति सूत्रम् । अथ सूर्य्यदर्शनानन्तरमाचार्योऽस्य माणवकस्य दक्षिणांसमधि दक्षिणस्कन्धोपरि स्वदक्षिणहस्तं नीत्वा हृदयं वक्षः आलभते स्पृशति । "मम व्रते"इति मन्त्रेण । व्याख्यातश्चायं विवाहप्रकरणे ।

"अथास्य दक्षिणꣳहस्तं गृहीत्वाऽऽह को नामासीति"इति सूत्रम्। अथ हृदयालम्भनानन्तरमाचार्योऽस्य दक्षिणं हस्तं गृहीत्वा स्वहस्तेन गृहीत्वा "को नामासी"त्याह ब्रवीति। "असावहं भो ३ इति प्रत्याहे"तिसूत्रम्। एवं पृष्टो माणवक आचार्यं प्रत्याह। असाविति सर्वनामस्थान आत्मनो नामग्रहणम्। "अमुकशर्म्माहं भो ३"इति प्रतिवचनं दद्यात्। "अथैनमाह कस्य ब्रह्मचार्य्यसीति"इति सूत्रम्। अथ प्रतिवचनान्तरमाचार्य्य एनं माणवकं प्रति "कस्य ब्रह्मचार्य्यसी"त्याह। "भवत इत्युच्यमान इन्द्रस्य ब्रह्मचार्य्यस्यग्निराचार्य्यस्तवाहमाचार्य्यस्तवासाविति"इतिसूत्रम्।अमुं मन्त्रं पठति। असावित्यस्य स्थाने आमन्त्रणविभक्तियुक्तकुमारनामग्रहणं कुर्य्यात्। अमुकशर्म्मन्निति पठति। स्वनामप्रथमान्तमित्यपरे। उभयथा मन्त्रार्थोपपत्तेः। स्मृत्यन्तरान्निर्णय इति भर्त्तृयज्ञभाष्ये। मन्त्रार्थस्तु—इदि परमैश्वर्य्ये। इन्द्रस्य प्रजापतेः ब्रह्मचारी त्वमसि। तव चाग्निराचार्य्यः प्रथमः। द्वितीयश्चाहं तव हे असावमुकशर्म्मन् ब्रह्मचारिन्! "अथैनं भूतेभ्यः परिददाति प्रजापतये त्वा परिददामि देवाय त्वा सवित्रे परिददाम्यद्भ्यस्त्वौषधिभ्यः परिददामि द्यावापृथिवीभ्यां त्वा परिददामि विश्वेभ्यस्त्वा भूतेभ्यः परिददामि सर्व्वेभ्यस्त्वा भूतेभ्यः परिददाम्यरिष्ट्या इति"इति सूत्रम्। अथानन्तरमेनं कुमारमाचार्य्यो भूतेभ्यः प्रजापतिप्रभृतिभ्यः परि परितोऽरिष्टयै रक्षायै प्रयच्छति। "प्रजापतये त्वा परिददामी"त्यनेन मन्त्रेण इति। मन्त्रार्थः सुगमः। हे ब्रह्मचारिन्! प्रजापतये स्रष्ट्रे त्वा त्वां परिददामि। समर्प्पयामि विश्वेभ्यो भूतेभ्यः विश्वानि भूतानि पृथिव्यप्तेजोवाय्वाकाशानि तेभ्यः पञ्चभ्यः। सर्वेभ्यो भूतेभ्यो देवविशेषेभ्य इत्यपौनरुक्त्या किमर्थमरिष्ट्यै अहिंसायै।

इति श्रीप्रथमशाखीयरामकृष्णविरचिते पारस्करगृह्यसूत्रविवरणे संस्कारगणपतौ द्वितीयकाण्डे द्वितीयकण्डिकाविवरणम्॥

---

## ( अथ तृतीया कण्डिका )

**प्रदक्षिणमग्निं परीत्योपविशत्यन्वारब्ध आज्याहुतीर्हुत्वा प्राशनान्तेऽथैनꣳसꣳशास्ति ब्रह्मचार्यस्यपोशान कर्म कुरु मा दिवा सुषुप्था वाचं यच्छ समिधमाधेह्यपोशानेत्यथाऽस्मै सावित्रीमन्वाहोत्तरतोऽग्नेः प्रत्यङ्मुखायोपविष्टायोपसन्नाय समीक्षमाणाय समीक्षिताय दक्षिणतस्तिष्ठत आसीनाय वैके पच्छोऽर्द्धर्चशः सर्वां च तृतीयेन सहानुवर्त्तयन्संवत्सरे षण्मास्ये चतुर्विꣳशत्यहे द्वादशाहे षडहे त्र्यहे वा सद्यस्त्वेव गायत्रीं ब्राह्मणायानुब्रूयादाग्नेयो वै ब्राह्मण इति श्रुतेस्त्रिष्टुभꣳ राजन्यस्य जगतीं वैश्यस्य सर्वेषां वा गायत्रीम् ॥ ३ ॥**

"प्रदक्षिणमग्निं परीत्योपविशति"इति सूत्रम् । एवं वस्त्रदानादिभिराचार्य्येण संस्कृतो माणवकः अग्निं प्रदक्षिणं यथाभवति तथा परीत्य परिक्रमणं कृत्वाऽग्नेरुत्तरत उपविष्टस्याचार्य्यस्योत्तरत उपविशति आस्ते । पश्चादग्नेराचार्य्यस्योत्तरत उपविशतीति जयरामगदाधरहरिहराः । पश्चादग्नेरुपवेशनमिति भर्तृयज्ञकारिकाकारौ । आचार्य्यस्य दक्षिणत इति गर्गपद्धतौ । आचार्य्यस्योत्तरत इति वासुदेवः । "अन्वारब्ध आज्याहुतीर्हुत्वा प्राशनान्ते"इति सूत्रम् । तत आचार्य्यो ब्रह्मणा अन्वारब्ध आघारादिस्विष्टकृदन्ताश्चतुर्दशाज्याहुतीर्हुत्वा संस्रवप्राशनान्ते । अत्र पुनरन्वारम्भानुवादः चतुर्दशाहुतिहोमव्यतिरिक्तहोमनिषेधार्थः । "अथैनꣳसꣳशास्ति ब्रह्मचार्य्यस्यपोशान कर्म्म कुरु मा दिवा सुषुप्था वाचं यच्छ समिधमाधेह्यपोशानेति"इति सूत्रम् । अथानन्तरमाचार्य्यो ब्रह्मोपवेशनादि दक्षिणादानान्तं कर्म्म कृत्वा एनं माणवकं संशास्ति शिक्षयति । तच्चैवम् "ब्रह्मचार्यसी"त्याह । "भवानी"ति ब्रह्मचारी प्रत्याह । "अपोशाने"त्याचार्य्य आह । "अशानी"ति ब्रह्मचारी प्रत्याह । "कर्म्म कुरु"इत्याचार्य्य आह । "करवाणी"ति ब्रह्मचारी

प्रत्याह। "मा दिवा सुषुप्था"इत्याचार्य्य आह। "न स्वपानी"ति ब्रह्मचारी प्रत्याह। "वाचं यच्छे"त्याहाचार्य्यः। "यच्छानी"ति ब्रह्मचारी प्रत्याह। "समिधमाधेही"त्याचार्य्य आह। 'आदधानी"ति ब्रह्मचारी प्रत्याह। "अपोशाने"ति आचार्य्य आह। "अश्नानी"ति ब्रह्मचारी प्रत्याह। ब्रह्मचार्य्यसीत्यादिप्रैषाणामयमर्थः—ब्रह्म कर्म्म चरतीत्येवंशीलो ब्रह्मचारी असि भवसि। अपः अशान पिब। कर्म्म स्नानादिकं स्ववर्णाश्रमविहितं कुरु विधेहि। अग्नौ सर्वदा प्रक्षिप। प्रथममाचमनमाशिष्यन्। द्वितीयं चाशित्वा। "अशिष्यन्नाचामेदशित्वा चाचामे"दिति श्रुतेः। कर्म्मकरणमशेषोपदिष्टमप्याचार्य्याय। "आचार्य्याय कर्म्म करोती"ति श्रुतत्वादिति भर्तृयज्ञः। अथ साविञ्युपदेशमाह "अथास्मै सावित्रीमन्वाहोत्तरतोऽग्नेः प्रत्यङ्मुखायोपविष्टायोपसन्नाय समीक्षमाणाय समीक्षिताय दक्षिणतस्तिष्ठत आसीनाय वैके पच्छोऽर्धर्चशः सर्वां च तृतीयेन सहानुवर्त्तय"न्निति सूत्रम्। अथ शासनानन्तरं आचार्योऽस्मै ब्रह्मचारिणे सावित्रीं सवितृदेवताकां गायत्रीच्छन्दस्कां विश्वामित्रदृष्टां तत्सवितुरित्यृचं अन्वाह उपदिशति। किंभूताय प्रत्यङ्मुखाय पश्चिमाभिमुखाय। पुनः किंलक्षणाय उपविष्टाय आसीनाय। क इत्यपेक्षायां? उत्तरतोऽग्नेः—अग्नेरुत्तरस्यां दिशि। तथा उपसन्नाय पादोपग्रहणादिना भजमानाय। पुनः किंभूताय गुरुं समीक्षमाणाय। पुनः किंभूताय समीक्षिताय गुरुणा सम्यगवलोकिताय। श्रुतिः-"तस्मादेतां गायत्रीमेव सावित्रीमनुब्रूया"दिति। पक्षान्तरमाह एके आचार्याः दक्षिणतः दक्षिणस्यां दिशि तिष्ठते ऊर्द्ध्वाय ऊर्द्ध्वीभूताय ब्रह्मचारिणे आसीनाय उपविष्टाय वा सावित्रीप्रदानं आहुः। "अत्राहैके दक्षिणतस्तिष्ठते वासीनाय वान्वाहु"रिति श्रुतत्वात्। एकेग्रहणाद्विकल्पः। कथमन्वाह? सावित्रीप्रदानेऽयं प्रकारः। पच्छोऽर्द्धर्चशः प्रथमन्तावत् पच्छः पादंपादं ततोऽर्द्धर्चशः अर्द्धर्चमर्द्धर्चं ततस्तृतीयेन वारेण सह बटुना सर्वां च सावित्रीमनुवर्तयन् आवर्तयन् पठेत्। अत्राह मदनपारिजाते लौगाक्षिः—"भूर्भुवः स्वरित्युक्त्वा तत्सवितुरिति सावित्रीं

त्रिरन्वाह पच्छोऽर्द्धर्चशः सर्वामन्तत" इति । तथा च वीरमित्रोदये यमः—

ॐकारपूर्विकास्तिस्रः सावित्रीं यश्च विन्दति ।
चरति ब्रह्मचर्यं च स वै श्रोत्रिय उच्यते ॥

तिस्रो महाव्याहृतय इति शेषः । मनुः—

एतयर्चापि संयुक्तः काले च क्रियया स्वया ।
विप्रः क्षत्रियविड्योनिर्ग्राह्यतां याति साधुषु ॥

एतयर्चा "तत्सवितुर्वरेण्य"मित्यनया । अथ सावित्रीप्रदानस्य कालविकल्पानाह—"संवत्सरे षण्मास्ये चतुर्विंशत्यहे द्वादशाहे षडहे त्र्यहे वा" इति सूत्रम् । उपनयनदिनमारभ्य संवत्सरे पूर्णे वा षण्मासे मासषट्के वा चतुर्विंशत्यहे द्वादशाहे षडहे वा त्र्यहे वा सावित्रीमनुब्रूयादाचार्यः । "तां॑ह स्मैतां पुरा संवत्सरेऽन्वाहु'रित्युपक्रम्य 'अथ षट्सु मासेष्वथ चतुर्विंशत्यहेऽथ द्वादशाहेऽथ षडहेऽथ त्र्यहे" इति श्रुतत्वात् । क्षत्रियवैश्ययोरेते कालविकल्पाः । तथा च कारिकायाम्—

संवत्सरे वा षण्मासे चतुर्विंशत्यहे तथा ।
द्वादशाहेऽथ षडहे ब्रूयात्तन्तु त्र्यहे तथा ॥
एते वैकल्पिकाः काला ज्ञेयाः क्षत्रियवैश्ययोः ॥

एते कालविकल्पा आचार्यशुश्रूषादिशिष्यगुणतारतम्यापेक्षाः इति हरिहरः । षण्मास्ये इति । षडेव मासाः षण्मास्यम् । स्वार्थे तद्धितश्छान्दसश्च वृद्धिलोपः । "छन्दोवत्सूत्राणि भवन्ती"ति वचनात् । अथ ब्राह्मणस्य कालमाह "सद्यस्त्वेव गायत्रीं ब्राह्मणायानुब्रूयादाग्नेयो वै ब्राह्मण इति श्रुतेः" इति सूत्रम् । तु पुनः ब्राह्मणाय सद्य एव गायत्रीमनुब्रूयात् उपदिशेत् । कुत "आग्नेयो वै ब्राह्मण" इति श्रुतेः । आग्नेयो अग्निदैवत्यो ब्राह्मण इति वेदवचनात् । अत एवास्मै सद्य एवोपदेशो युक्तः । आचार्यः ब्रह्मचारिणं प्रति गायत्र्युपदेशकालान् कथयति । आचार्यो वदति—"सम्वत्सरेण गायत्र्युपदेशं करिष्ये" । बटुर्वदति-"अद्यैव" । "षण्मासेना"चार्यः । "अद्यै-

व"बटुः । "चतुर्विंशतिदिने" आचार्य्यः। "अद्यैव" बटुः । एवं द्वादशाहे षडहे त्र्यहेऽपि । अद्यैव कुमारेणोच्यमाने गायत्रीप्रदानं सद्य एव कर्त्तव्यम् , इति गङ्गाधरः । "आग्नेयो वै ब्राह्मणः सद्यो वाऽग्निर्जायते तस्मात्सद्य एव ब्राह्मणायानुब्रूया"दिति श्रुतेः । "त्रिष्टुभꣳराजन्यस्य जगतीं वैश्यस्ये"ति सूत्रम् । राजन्यस्य क्षत्रियस्य त्रिष्टुभम् । त्रिष्टुप् छन्दो यस्याः सा त्रिष्टुप् तां सावित्रीं त्रिष्टुभं "देव सवित"रित्यादिकामनुब्रूयात् । तत्स्वरूपमाह शातातपः–"तत्सवितुर्वरेण्यमिति सावित्रीं ब्राह्मणस्य देवसवितरिति राजन्यस्य विश्वा रूपाणीति वैश्यस्ये"ति पारिजाते । "ताꣳसवितु"रिति राजन्यस्य । "युञ्जते मन" इति वैश्यस्येति भर्तृयज्ञभाष्ये । "सर्व्वेषां वा गायत्री"मिति सूत्रम । गायत्री च्छन्दो यस्याः सा गायत्री तां सावित्रीं सर्व्वेषां ब्राह्मणक्षत्रियविशां "तत्सवितु"रित्यृचमनुब्रूयात । वाशब्दो विकल्पार्थः ।

इति श्रीप्रथमशाखीयरामकृष्णविरचिते पारस्करगृह्यसूत्रविवरणे संस्कारगणपतौ द्वितीयकाण्डे तृतीयकण्डिकाविवरणम् ।

## ( अथ चतुर्थी कण्डिका )

**अग्नि समिदाधानं पाणिनाऽग्निं परिसमूहत्यग्ने सुश्रवः सुश्रवसं मा कुरु । यथा त्वमग्ने सुश्रवः सुश्रवा अस्येवं माꣳसुश्रवः सौश्रवसं कुरु । यथा त्वमग्ने देवानां यज्ञस्य निधिपा अस्येवमहं मनुष्याणां वेदस्य निधिपो भूयासमिति प्रदक्षिणमग्निं पर्युक्ष्योत्तिष्ठन्त्समिधमादधात्यग्नये समिधमहार्षं बृहते जातवेदसे । यथा त्वमग्ने समिधा समिध्यस एवमहमायुषा मेधया वर्च्चसा प्रजया पशुभिर्ब्रह्मवर्चसेन समिन्धे जीवपुत्रो ममाचार्यो मेधाव्यहमसान्यनिराकारिष्णुर्यशस्वी तेजस्वी ब्रह्मवर्चस्य-**

न्नादो भूयासꣲस्वाहेत्येवं द्वितीयां तथा तृतीयामेषा त इति वा समुच्चयो वा पूर्ववत्परिसमूहनपर्युक्षणे पाणी प्रतप्य मुखं विमृष्टे तनूपा अग्नेऽसि तन्वं मे पाह्यायुर्दा अग्नेऽस्यायुर्मे देहि वर्चोदा अग्नेऽसि वर्चो मे देहि । अग्ने यन्मे तन्वा ऊनन्तन्म आपृण । मेधां मे देवः सविता मेधां देवी सरस्वती मेधामश्विनौ देवावाधत्तां पुष्करस्रजावित्यङ्गान्यालभ्य जपत्यङ्गानि च म आप्यायन्तां वाक्प्राणश्चक्षुःश्रोत्रं यशोबलमिति त्र्यायुषाणि करोति भस्मना ललाटे ग्रीवायां दक्षिणेꣲसे हृदि च त्र्यायुषमिति प्रतिमन्त्रम् ॥ ४ ॥

अथोपनयनाङ्गभूतं समिदाधानमाह "अत्र समिदाधान"मिति सूत्रम् । अत्रास्मिन्प्रकृतेऽग्नौ समिदाधानं तिसृणां समिधां प्रक्षेपो ब्रह्मचारिकर्तृको भवति । अत्रावसर इति केचित्तन्न । पाठादेव तत्सिद्धेः । अत्रशब्दोऽग्निपरो द्रष्टव्यः । अत्राग्नाविति भाष्यकारः । तथा च रेणुकारिकायाम्—

अस्मिन्नग्नौ भवेदेतत्सन्धुक्षत्येकपाणिना ॥ इति ।

समिदाधानस्येतिकर्त्तव्यमाह "पाणिनाग्निं परिसमूहत्यग्ने सुश्रवः सुश्रवसं मा कुरु । यथा त्वमग्ने सुश्रवः सुश्रवा अस्येवं माꣲ सुश्रवः सौश्रवसं कुरु । यथा त्वमग्ने देवानां यज्ञस्य निधिपा अस्येवमहं मनुष्याणां वेदस्य निधिपो भूयासमिति" इति सूत्रम् । ब्रह्मचारी पाणिना दक्षिणहस्तेन अग्निं कृतोपनयनाङ्गभूतहोमाधिकरणं परिसमूहति सन्धुक्षयति । शुष्कगोमयखण्डादीन्धनप्रक्षेपेण वक्ष्यमाणैः पञ्चभिर्मन्त्रैः । यथा—"अग्ने सुश्रवः सुश्रवसं मा कुरु ॥१॥ यथा त्वमग्ने सुश्रवः सुश्रवा असि ॥२॥ एवं माꣲसुश्रवः सौश्रवसङ्कुरु ॥३॥ यथा त्वमग्ने देवानां यज्ञस्य निधिपा असि ॥४॥ एवमहं मनुष्याणां वेदस्य निधिपो भूयासम् ॥ ५ ॥ एवमेव हरिहरगङ्गाधरवासु-

देवादयः। कारिकायां विशेषः—

प्रतिमन्त्रं त्रिभिः काष्ठैरग्ने सुश्रव आदिभिः।
अग्ने सुश्रव इत्येकं यथात्वं स्याद्द्वितीयकम्॥
यथा त्वमग्ने देवानां मन्त्रेणाऽपि तृतीयकम्।
कृत्वा पर्य्युक्षणं वह्नेरुत्थाय समिदाहुतिः॥

पाणिनेत्येकवचनमेकत्वनियमार्थम्। तथा च कारिकायाम्—

अस्मिन्नग्नौ भवेदेतत्सन्धुक्षत्येकपाणिना॥ इति।

उभाभ्यामपि दृश्यते सन्धुक्षणम्। मन्त्रार्थः—हे अग्ने हे सुश्रवः शोभनकीर्ते! मा मां सुश्रवसं सुकीर्त्तिं कुरु। किञ्च हे अग्ने सुश्रवः! सौश्रवसम् सुश्रवाश्च सौश्रवाश्च तम्। तत्र सुश्रवाः स्वयम्। सुश्रवा गुरुस्तस्यायं सौश्रवसः। ममाचार्य्यमपि सुश्रवसं कृत्वा तदीयत्वेन मां सौश्रवसं कुर्व्वित्यर्थः। किञ्च हे अग्ने यथा त्वन्देवानामिन्द्रादीनां यज्ञस्य च क्रतोर्निधि हविर्द्रव्यं पासि रक्षसि। एवमहं मनुष्याणां मध्ये वेदस्य श्रुतेर्निधिरधिकरणम् भूयासं भवेयम्। "प्रदक्षिणमग्निं पर्य्युक्ष्योत्थाय समिधमादधात्यग्नये समिधमहार्षं बृहते जातवेदसे। यथा त्वमग्ने समिधा समिध्यस एवमहमायुषा मेधया वर्च्चसा प्रजया पशुभिर्ब्रह्मवर्च्चसेन समिन्धे जीवपुत्रो ममाचार्य्यो मेधाव्यहमसान्यनिराकरिष्णुर्यशस्वी तेजस्वी ब्रह्मवर्च्चस्यन्नादो भूयासꣳस्वाहेति" इति सूत्रम्। ततो ब्रह्मचारी प्रदक्षिणं यथा भवति तथाग्निं पर्युक्ष्य दक्षिणहस्तगृहीतोदकेन परिषिच्य उत्थाय ऊर्ध्वीभूय प्राङ्मुखस्तिष्ठन् समिधमादधाति अग्नौ प्रक्षिपति। "अग्नये समिध"मित्यादि स्वाहाकारान्तेन मन्त्रेण। समिध्यते दीप्यतेऽग्निरनयेति समित्। अथ समिन्नियमः वायुपुराणे—

पालाश्यः समिधः कार्य्याः खादिर्य्यस्तदभावतः।
शमीरोहितकाश्वत्थास्तदभावेऽर्कवेतसम्॥ इति।

उक्तालाभे यस्य कस्यापि यज्ञियवृक्षस्य ग्राह्या समाख्याबलात्।

तथा च ब्रह्मपुराणे—

शमीपालाशन्यग्रोधप्लक्षवैकङ्कतोद्भवाः ।
अश्वत्थोदुम्बरो बिल्वश्चन्दनः सरलस्तथा ॥
शालश्च देवदारुश्च खादिरश्चेति याज्ञियाः ।

सर्वकर्म्मसाधारणं समिल्लक्षणमाह च्छन्दोगपरिशिष्टे कात्यायनः—

नाङ्गुष्ठादधिका कार्य्या समित्स्थूलतरा क्वचित् ।
न विमुक्तत्वचा चैव न सकीटा न फाटिता ॥
प्रादेशान्नाधिका न्यूना न तथा स्याद्विशाखिका ।
न पर्णा न विशीर्णाग्रा होमेषु च विजानता ॥

तथा च मरीचिः—

विशीर्णा विदला ह्रस्वा वक्राः ससुषिराः कृशाः ।
दीर्घाः स्थूला घुणैर्जुष्टाः कर्मसिद्धिविनाशकाः ॥

अत्र विशेषमाह मरीचिः—

प्रागग्राः समिधो देयास्ताश्च काम्येषु फाटिताः ।
काम्येषु च सवल्काद्रा विपरीता जिघांसता ॥

आपस्तम्बः–"नाप्रोक्षितमिन्धनमग्नावादध्या"दिति । समिदाहरणविधिमाह बैजवापः—"पुरोऽस्तमयात्प्रातः प्रागुदीचीं दिशं गत्वाऽहिंसन्नरण्यात्समिधमाहरेदाद्रामन्नाद्यकामः शुष्कां ब्रह्मवर्चसकाम उभयामुभयकामः" इति । अहिंसन्नुपयुक्तादधिकमच्छिन्दन् । पुरोऽस्तमयादिति वदताऽस्तमिते सूर्य्ये समिदाहरणं निषिध्यते । तथा चापस्तम्बः–"नास्तमिते समिदाहरणायोपगच्छे"दिति । ननु "तिष्ठन्समिधः सर्व्वत्रे"ति श्रौतसूत्रे उक्तत्वादुत्थायेति ग्रहणं व्यर्थमिति चेन्न । नायं होमः समिदाधानमित्येतत्सूचनार्थमुत्थायेति ग्रहणमित्यदोषः । कारिकायामप्युक्तम्—

कृत्वा पर्य्युक्षणं वह्नेरुत्थाय समिदाहुतिः ।
समिदाधानमित्येतत्सूचनात्तिष्ठतिक्रिया ॥

यद्वा साधारणपरिभाषाध्याये पाठाभावात् अत्राऽप्राप्तिमाशङ्क्यो-

त्थायेत्युक्तानुवादः कृतः। तेन गृह्येऽपि कर्म्मणि सर्व्वत्र तिष्ठता समिदाधानं सिद्ध्यति। अतोऽत्र त्यागाभावः। प्रयोगरत्ने त्यागो लिखितः। मन्त्रार्थः—हे देवाः इमां समिधमग्नयेऽग्न्यर्थमाहार्षम् आहृतवानस्मि। किम्भूताय बृहते महते। जातान् वेत्ति जातवेदास्तस्मै। यथा येन प्रकारेण समिधाऽनया दीप्यमानया त्वं हे अग्ने! समिध्यसे दीप्यसे। एवमहमायुषा जीवनेन। मेधयाऽतीतादिधारणवत्या बुद्ध्या। वर्च्चसा तेजसा। प्रजया पुत्रादिभिः। पशुभिः गवादिभिः। ब्रह्मवर्च्चसेन तेजसा। कृताध्ययनसम्पत्त्या। एतैरहं समिन्द्धे समृद्धो भवामि। आचार्य्यविषयं फलमप्याशंसते। जीवपुत्रो दीर्घायुरपत्यो ममाचार्य्यो भवतु। जीवन्तः पुत्रा यस्य। मेधावी अहम् असानि भवानि। अनिराकरिष्णुर्गतेरुपदिष्टधर्म्माद्यविस्मरणशीलः। यशस्वी तेजस्वी। ब्रह्मवर्च्चसी। अन्नादः अन्नमत्तीति भूयासम्भवेयम्। स्वाहा सुहुतमस्तु। "एवं द्वितीयां तथा तृतीया"मिति सूत्रम्। एवमनेनैव मन्त्रेण द्वितीयां समिधमादधाति। तिस्रः समिध आदधात्यग्नये समिधमहार्षमित्युच्यमाने मन्त्रान्ते युगपत्तिसृणामाधानं प्राप्नोति तन्निवृत्त्यर्थं "मेवं द्वितीयां तथा तृतीया"मिति। "एषा त इति वा" इति सूत्रम्। अथ वा "एषा ते अग्ने समित्तये"ति मन्त्रेण समिदाधानम्। अत्रापि मन्त्रावृत्तिः समुच्चयो वा। अथ वा "अग्नये समिधम्, एषात" इति द्वयोर्मन्त्रयोः समुच्चयेनैक्यं समिदाधाने स्यात्। अत्रापि प्रतिसमिदाधानं मन्त्रयोरावृत्तिः। "पूर्व्ववत्परिसमूहनपर्य्युक्षणे" इति सूत्रम। परिसमूहनम् "अग्ने सुश्रुव" इत्यादिना सन्धुक्षणम्। पर्य्युक्षणमग्नेः सर्वतो जलासेकः। परिसमूहनपर्य्युक्षणे पूर्व्ववत् प्राग्वत् अग्नेः कर्त्तव्ये। "पाणी प्रतप्य मुखं विमृष्टे तनूपा अग्नेऽसि तन्वं मे पाह्यायुर्दा अग्नेऽस्यायुर्म्मे देहि वर्च्चोदा अग्नेऽसि वर्च्चो मे देहि। अग्ने यन्मे तन्वा ऊनन्तन्म आपृण। मेधां मे देवः सविता मेधां देवी सरस्वती मेधामश्विनौ देवावाधत्तां पुष्करस्रजाविति" इति सूत्रम्। पर्य्युक्षणानन्तरं ब्रह्मचारी पाणी उभौ हस्तौ प्रतप्य तूष्णीमग्नौ तापयित्वा "तनूपा अग्नेऽसी"ति

सप्तभिर्मन्त्रवाक्यैर्मुखं विमृष्टे पाणिभ्यां मार्ज्जयति। वाक्यभेदाच्च प्रतिवाक्यं पाण्योः प्रतापनम् मुखविमार्ज्जनञ्च। "तनूपा" इत्येतस्य शाखीयत्वात्प्रतीकग्रहणे प्राप्ते मन्त्रवाक्यचतुष्टयस्योपयोगात्सर्वमन्त्रपाठः। "मेधां मे देवः सविता मेधां देवी सरस्वती"त्यनयोर्मन्त्रयोरादधात्विवत्यध्याहारः। मन्त्रार्थः-तनूपा अग्नेऽसीत्यादयः स्पष्टाः। मेधामित्यस्यार्थः-देवो द्युतिमान् सविता मेधां धारणावतीं बुद्धिं तथा देवी दीप्यमाना सरस्वती आदधातु। तथा अश्विनौ देवौ मे मह्यं मेधामाधत्ताम् सम्पादयताम्। पुष्करस्रजौ पद्ममालाधारिणौ। अत्राङ्गालम्भनत्र्यायुषकरणाभिवादनमनुक्तमपि सूत्रकारेणाचारतोऽनुष्ठेयम्। "अङ्गान्यालभ्य जपन्त्यङ्गानि च म आप्यायन्तां वाक्प्राणचक्षुःश्रोत्रं यशो बलमिति"इति सूत्रम्। तत्र "वाक्च म आप्यायता"मिति क्रियाविपरिणामं कुर्यात्। "त्र्यायुषाणि करोति भस्मना ललाटे ग्रीवायां दक्षिणेऽंसे हृदि च त्र्यायुषमिति प्रतिमन्त्रम्" इतिसूत्रम्। अथाभिवादनम्। तत्र याज्ञवल्क्यः—

ततोऽभिवादयेद्वृद्धानसावहमिति ब्रुवन्॥ इति।

ततोऽग्निकार्यानन्तरम्। तथा च यमः—

ततोऽभिवादयेद्वृद्धानग्निकार्य्यादनन्तरम्॥ इति।

वृद्धा गुर्वादयः। तत्र गुर्वादिलक्षणमाह--

निषेकादीनि कर्म्माणि यः करोति यथाविधि।
सम्भावयति चान्नेन स विप्रो गुरुरुच्यते॥

निषेको गर्भाधानम्। अत्र सम्भावनं वेदप्रदानस्याप्युपलक्षणम्। अत एव याज्ञवल्क्यः--

स गुरुर्यः क्रियाः कृत्वा वेदमस्मै प्रयच्छति॥ इति।

क्रिया निषेकाद्याः। एतच्च गुरुत्वं पितुरेव नान्यस्य भवति। तस्यैव निषेकाद्यधिकारात्। पितृव्यतिरिक्तानान्त्वौपचारिकं गुरुत्वम्। तथा च देवलः--

उपाध्यायः पिता ज्येष्ठो भ्राता चैव महीपतिः।

मातुलः श्वशुरस्त्राता मातामहपितामहौ ॥
वर्णज्येष्ठः पितृव्यश्च पुंस्वेते गुरुवत्स्मृताः ।
माता मातामही गुर्वी पितुर्मातुश्च सोदराः ॥
श्वश्रूः पितामही ज्येष्ठा धात्री च गुरुवत्स्त्रियः ।
इत्युक्तो गुरुवर्गोऽयं मातृतः पितृतो द्विधा ॥

अथाचार्यलक्षणम् । तत्र याज्ञवल्क्यः--

उपनीय ददद्वेदमाचार्य्यः स उदाहृतः ॥ इति ।

यो यस्योपनयनमात्रं कृत्वा वेदं प्रयच्छति स तस्याचार्य्यः । वेदग्रहणं कल्पसूत्रादेरप्युपलक्षणम् । अथोपाध्यायलक्षणम् । तत्र मनुः--

एकदेशं तु वेदस्य वेदाङ्गान्यथ वा पुनः ।
योऽध्यापयति वृत्यर्थमुपाध्यायः स उच्यते ॥ इति ।

वृत्तिर्जीविका । अथर्त्विग्लक्षणम् । तत्र मनुः--

अग्न्याधेयं पाकयज्ञानग्निष्टोमादिकान्मखान् ।
यः करोति वृतो यस्य स तस्यर्त्विगिहोच्यते ॥

एते च पूर्वोक्ता गुर्वादयो यथापूर्वं मान्याः । तथा च याज्ञवल्क्यः-

एते मान्या यथापूर्वमेभ्यो माता गरीयसी ॥ इति ।

व्यासोऽपि—

मासान्दशोदरस्थं या धृत्वा सूते समाकुला ।
येह नानाविधैर्दुःखैः प्रसूयेत विमूर्च्छिता ॥
प्राणैरपि प्रियान्पुत्रान्मन्यते सुतवत्सला ।
कस्तस्या निष्कृतिं कर्त्तुं शक्तो वर्षशतैरपि ॥

अत इयं पूज्यतमेत्यभिप्रायः । निष्कृतिरानृण्यम् । मनुः—

उपाध्यायाद्दशाचार्य्य आचार्य्याणां शतं पिता ।
सहस्रं तु पितुर्माता गौरवेणातिरिच्यते ॥

अथानभिवाद्याः । तत्र गौतमः—

ऋत्विक्श्वशुरपितृव्यमातुलानां यवीयसाम् ।
प्रत्युत्थानं नाभिवाद्या इति तेषां यवीयसाम् ॥

प्रत्युत्थानमात्रमेव कार्य्यं नाभिवादनमित्यर्थः । मनुः—

ब्राह्मणं दशवर्षन्तु शतवर्षन्तु भूमिपम् ।
पितापुत्रौ विजानीयाद्ब्राह्मणस्तु तयोः पिता ॥

ब्राह्मणस्य पितृत्ववचनमभिवाद्यत्वार्थम् । अत एव शातातपः—

अभिवाद्यो नमस्कार्य्यः शिरसा वन्द्य एव च ।
ब्राह्मणक्षत्रियाद्यैस्तु श्रीकामैः सादरं सदा ॥ इति ।
नाभिवाद्यास्तु विप्रेण क्षत्रियाद्याः कथञ्चन ।
ज्ञानकर्म्मगुणोपेता यद्यप्येते बहुश्रुताः ॥

अतः क्षत्रियाद्यभिवादने प्रायश्चित्तमाह स एव—

अभिवाद्य क्षत्रवैश्यौ प्रायश्चित्तं कथं भवेत् ।
ब्राह्मणान्दश चाष्टौ च ह्यभिवाद्य विशुद्ध्यति ॥
अभिवाद्य द्विजः शूद्रं सचैलः स्नानमाचरेत् ।
ब्राह्मणानां शतं सम्यगभिवाद्य विशुद्ध्यति ॥

ब्राह्मणेष्वपि निमित्तविशेषेण क्वचिदपवादमाह । विष्णुः—

सभासु चैव सर्व्वासु यज्ञराजगृहेषु च ।
नमस्कारं न कुर्व्वीत ब्राह्मणं नाभिवादयेत् ॥

सर्व्वासु धर्म्मव्यवहारप्रायश्चित्तादिनिर्णयसभासु । आपस्तम्बः—

समित्पुष्पकुशाग्न्यम्बुमृदन्नकृतपाणिकम् ।
जपं होमं च कुर्व्वाणं नाभिवादेत वै द्विजः ॥

शातातपः—

पाखण्डं पतितं व्रात्यं महापातकिनं शठम् ।
नास्तिकं च कृतघ्नं च नाभिवादेत्कथञ्चन ॥
धावन्तं च प्रमत्तं च मूत्रोच्चारकृतं तथा ।
भुञ्जानमाचमनार्हं नाभिवाद्येद्द्विजोत्तमः ॥
वमन्तं जृम्भमाणं च कुर्व्वन्तं दन्तधावनम् ।
अभ्यक्तशिरसं चैव नाभिवाद्येत्कथञ्चन ॥

बृहस्पतिः—

स्नक्पाणिकमनाज्ञातमशक्तं रिपुमातुरम् ।
योगिनं च तपःसक्तं कनिष्ठं नाभिवादयेत् ॥

बृहन्नारदीये—

नास्तिकं भिन्नमर्य्यादं समग्रग्रामयाजकम् ।
स्तेनं च कितवं चैव कदाचिन्नाभिवादयेत् ॥
विवादशीलं मत्तं च वमन्तं जलमध्यगम् ।
भिन्नान्नधारिणं चैव शयानं नाभिवादयेत् ॥

भिन्नान्नं भैक्ष्यम् । अनभिवाद्याः स्त्रिय आह । शातातपः—

उदक्यां सूतिकां नारीं भर्तृघ्नीं गर्भपातिनीम् ।
अभिवाद्य द्विजो मोहादहोरात्रेण शुद्ध्यति ॥

जमदग्निः—

देवताप्रतिमां दृष्ट्वा यतिं दृष्ट्वा त्रिदण्डिनम् ।
नमस्कारं न कुर्य्याचेत्प्रायश्चित्ती भवेन्नरः ॥

अथाभिवादनस्वरूपम् । तत्र मनुः—

भोःशब्दं कीर्त्तयेदन्ते स्वस्य नाम्नोऽभिवादने ।
नाम्नां स्वरूपभावो हि भोभाव ऋषिभिः स्मृतः॥ इति ।

अत्राभिवादनं नाम बटोरात्मानमभिगुरोराशीर्वचनानुकूलो व्यापारः । पादोपग्रहणपूर्वकमभिवादयेत्कृष्णशर्म्माहम् । तथा च भारद्वाजः—

स्वगोत्रनामशर्म्माहं भो इत्यन्तेऽभिवादये ।
इत्येतद्भाषणं यत्तन्मन्त्रः स्यादाभिवादनम् ॥

अत्र प्रवरानुपादानेऽपि गोत्रपरिचायकत्वात्प्रवरोपादानमावश्यकम् । अस्मिँश्च पक्षेऽ"ऽमुकप्रवरान्वितामुकगोत्रोत्पन्नोऽमुकशर्म्माहं भोऽभिवादये" इति प्रयोगः सिध्यति । अथाभिवादनप्रकारः । तत्राश्वलायनः—

वामं वामेन संस्पृश्य दक्षिणेन तु दक्षिणम् ।
हस्तेन कर्णहस्ताभ्यां गुरूणामभिवादनम् ॥

वामोपरि करं कृत्वा दक्षिणं नाम चोच्चरेत् ।
जानुप्रभृति पादान्तमारभ्य पादयोर्नमेत् ॥

एतच्च प्रत्युत्थाय कर्त्तव्यम् । तदाहापस्तम्बः—

ऊर्ध्वं प्राणा ह्युत्क्रामन्ति यूनः स्थविर आगते ।
प्रत्युत्थानाभिवादाभ्यां पुनस्तान्प्रतिपद्यते ॥

विष्णुः—

शिष्याणामाशिषं दद्यात्पादोपग्रहणे गुरुः ।
स्पृष्ट्वा कर्णौ तु विदुषां मूर्खाणान्त्वेकपाणिना ॥

वीरमित्रोदयेऽपि विशेषमाह—

अजाकर्णेन विदुषां मूर्खाणान्त्वेकपाणिना ॥ इति ।

श्रोतृसमौ करौ कृत्वा पुनरजाकर्णवत्सम्पुटितेन करद्वयेनेत्यर्थः । स्पृष्ट्वा कर्णौ त्विति प्रयोगपारिजातपाठः । एकहस्ताभिवादने निषेधमाह विष्णुः—

जन्मप्रभृति यत्किञ्चिच्चेतसा धर्म्ममाचरेत् ।
सर्व्वन्तन्निष्फलं याति एकहस्ताभिवादनात् ॥

इदं च मूर्खव्यतिरिक्तविषयम् । आपस्तम्बः—"स्वदक्षिणं बाहुं श्रोत्रसमं प्रसार्य्य ब्राह्मणोऽभिवादयेदुरःसमं राजन्यो मध्यसमं वैश्यो नीचैः शूद्रः प्राञ्जलि"रिति । अथाभिवादने फलमाह । मनुः—

आयुष्मान्भव सौम्येति वाच्यो विप्रोऽभिवादने ।
अकारश्चास्य नाम्नोऽन्ते वाच्यः पूर्वाक्षरप्लुतः ॥

अकारश्चास्य नाम्नोऽन्त इत्यस्यायमर्थः—अस्याभिवादनकस्य नाम्नोऽन्ते योऽयमकारः, अकार इति स्वरमात्रोपलक्षणम्, सर्व्वेषां नाम्नामकारान्तत्वनियमाभावात् । स एवान्त्यस्वरः पूर्व्वाक्षरे स्वरः प्लुतो वाच्यः । अथ प्रत्यभिवादाकरणे प्रत्यवायस्तत्राह यमः—

अभिवादे तु यः पूर्व्वमाशिषं न प्रयच्छति ।
यद्दुष्कृतं भवेत्तस्य तस्माद्भागं प्रपद्यते ॥
तस्मात्पूर्व्वाभिभाषी स्याच्चाण्डालस्य तु धर्म्मवित् ।

सुरां पिबेति वक्तव्यमेवं धर्म्मो न हीयते ॥ इति ।

अङ्गिराः—

अप्रणामगते शूद्रे स्वस्ति कुर्व्वन्ति ये द्विजाः ।
शूद्रोऽपि नरकं याति ब्राह्मणोऽपि तथैव च ॥
अभिवादकृते यस्तु न करोत्यभिवादनम् ।
आशिषं वा न कुर्व्वीत स याति नरकं ध्रुवम् ॥

आशिषमपि स एवाह—

स्वस्तीति ब्राह्मणो ब्रूयादायुष्मन्निति भूमिपः ।
वर्द्धतामिति वैश्यस्तु शूद्रस्तु स्वागतं वदेत् ॥

एतच्च सर्व्ववर्णसाधारणम् । तथा च भविष्यपुराणे—

ब्राह्मणः सर्ववर्णानां स्वस्ति कुर्यादिति श्रुतिः ॥

स्वस्तिशब्दार्थमपि यम आह—

यत्सुखं त्रिषु लोकेषु व्याधिव्यसनवर्ज्जितम् ।
यस्मिन्सर्वे स्थिताः कामाः सा स्वस्तीत्यभिसंज्ञिता ॥

इति श्रीप्रथमशाखीयरामकृष्णविरचिते पारस्करगृह्यसूत्रविवरणे संस्कारगणपतौ द्वितीयकाण्डे चतुर्थी कण्डिका ॥

---

## ( अथ पञ्चमी कण्डिका )

**अत्र भिक्षाचर्यचरणं भवत्पूर्वां ब्राह्मणो भिक्षेत भवन्मध्यांᳫं राजन्यो भवदन्त्यां वैश्यस्तिस्रोऽप्रत्याख्यायिन्यः षड्द्वादशापरिमिता वा मातरं प्रथमामेक आचार्याय भैक्षं निवेदयित्वा वाग्यतोऽहः शेषं तिष्ठेदित्येकेऽहिᳫंसन्नरण्यात्समिध आहृत्य तस्मिन्नग्नौ पूर्ववदाधाय वाचं विसृजतेऽधःशाय्यक्षारालवणाशी स्याद्दण्डधारणमग्निपरिचरणं गुरुशुश्रूषा भिक्षाचर्या मधु-**

माᳬंसमज्जनोपर्यासनस्त्रीगमनानृतादत्तादानानि वर्जयेदष्टाचत्वारिᳬंशद्वर्षाणि वेदब्रह्मचर्यं चरेद्द्वादश द्वादश वा प्रतिवेदं यावद्ग्रहणं वा वासाᳬंसि शाणक्षौमाविकान्यैणेयमाजिनमुत्तरीयं ब्राह्मणस्य रौरवᳬं राजन्यस्याजं गव्यं वा वैश्यस्य सर्वेषां वा गव्यमसति प्रधानत्वान्मौञ्जी रशना ब्राह्मणस्य धनुर्ज्या राजन्यस्य मौर्वी वैश्यस्य मुञ्जाभावे कुशाश्मन्तकबल्वजानां पालाशो ब्राह्मणस्य दण्डो बैल्वो राजन्यस्यौदुम्बरो वैश्यस्य केशसम्मितो ब्राह्मणस्य ललाटसम्मितः क्षत्रियस्य घ्राणसम्मितो वैशस्य सर्वे वा सर्वेषामाचार्येणाहूत उत्थाय प्रतिशृणुयाच्छयानं चेदासीन आसीनं चेत्तिष्ठँस्तिष्ठन्तं चेदभिक्रामन्नभिक्रामन्तं चेदभिधावन्स एवं वर्तमानोऽमुत्राद्य वसत्यमुत्राद्य वसतीति तस्य स्नातकस्य कीर्तिर्भवति त्रयः स्नातका भवन्ति विद्यास्नातको व्रतस्नातको विद्याव्रतस्नातक इति समाप्य वेदमसमाप्य व्रतं यः समावर्तते स विद्यास्नातकः समाप्य व्रतमसमाप्य वेदं यः समावर्त्तते स व्रतस्नातकऽउभयᳬं समाप्य यः समावर्तते स विद्याव्रतस्नातकऽइत्याषोडशाद्वर्षाद्ब्राह्मणस्य नातीतः कालो भवत्याद्वाविᳬंशाद्राजन्यस्याचतुर्विᳬंशाद्वैश्यस्यात ऊर्ध्वं पतितसावित्रीका भवन्ति नैनानुपनयेयुर्नाध्यापयेयुर्न याजयेयुर्न चैभिर्व्यवहरेयुः कालातिक्रमे नियतवत्त्रिपुरुषं पतितसावित्रीकाणामपत्ये संस्कारो नाध्यापनं च तेषाᳬंसंस्कारेप्सुर्व्रात्यस्तोमेनेष्ट्वा काममधीयीरन्व्यवहार्या भवन्तीति वचनात् ॥५॥

अथ भिक्षाचरणम्। "अत्र भिक्षाचर्य्यचरण"मिति सूत्रम्। अत्रास्मिन्समये भिक्षाचर्य्यचरणं कर्त्तव्यमित्यर्थः। अत्र विशेषो मनुस्मृतौ—

प्रतिगृह्येप्सितं दण्डमुपस्थाय च भास्करम्।

प्रदक्षिणं परीत्याग्निं चरेद्भैक्ष्यं यथाविधि ॥

एतत्त्रितयं भिक्षाङ्गमिति पारिजाते—"भवत्पूर्वां ब्राह्मणो भिक्षेत भवन्मध्यां राजन्यो भवदन्त्यां वैश्य" इति सूत्रम् । भवत्पूर्वं यस्याः सा भवत्पूर्वा तां भिक्षां ब्राह्मणो वर्णोत्तमो भिक्षेत याचेत । एवं भवच्छब्दो मध्ये यस्याः सा भवन्मध्या तां राजन्यः क्षत्रियो भिक्षेत । तथा भवच्छब्दोऽन्त्यो यस्याः सा भवदन्त्या तां वैश्यो वर्णतृतीयो भिक्षेत । अयमर्थः—सगौरवसम्बोधनार्थं भवत्पदमादिमध्यावसानेषु ब्राह्मणादिभिः कार्य्यम् । तच्च सम्बुद्ध्यर्थम् । "तिस्र"इति सूत्रसामर्थ्यात् स्त्रीप्रत्ययवच्च तत्पदं भवति । तत्रायं प्रयोगो भवति । "भवति भिक्षां देही"ति ब्राह्मणः । "भिक्षां भवति देही"ति क्षत्रियः । "भिक्षां देहि भवती"-ति वैश्यः । ब्रह्मचारिभिर्भैक्षं कुतो ग्राह्यमित्याह "तिस्रोऽप्रत्याख्यायिन्य"इति सूत्रम् । तिस्रः स्त्रियो भिक्षां भिक्षेत । किंभूताः । अप्रत्याख्यायिन्यः । अत्र द्वितीयार्थे प्रथमा । भिक्षेतेति कर्तृप्रत्ययान्तस्याख्यातस्य कर्म्मापेक्षितत्वात् । प्रत्याख्यातुं निराकर्त्तुं शीलं यासां ताः । न प्रत्याख्यायिन्यः अप्रत्याख्यायिन्यः । याः स्त्रियो निराकरणं न कुर्वन्ति ता भिक्षणीया इत्यर्थः । शौनकेन विशेषो दर्शितः—"अप्रत्याख्यायिनमग्रे भिक्षेताप्रत्याख्यायिनीं वे"ति । तथा च व्यासः—

ब्राह्मणक्षत्रियविशश्चरेयुर्भैक्षमन्वहम् ।
सजातीयगृहेष्वेव सार्ववर्णिकमेव वा ॥

सार्ववर्णिकं भैक्षचरणमापद्विषयम् । तथा च भविष्यत्पुराणे—

चातुर्वर्ण्यं चरेद्भैक्षमलाभे कुरुनन्दन ! ।

विष्णुरपि—

क्षत्रवैश्यगृहेष्वेव क्रियावर्त्तिषु साधुषु ।
चातुर्वर्ण्यं चरेद्भैक्षमापत्काल उपस्थिते ॥

यद्यपि चातुर्वर्ण्यं चरेद्भैक्ष्यमित्युक्तं तथापि शूद्रस्यामान्नमेव ग्राह्यं न पक्वान्नम् । तथा चाङ्गिराः—

आममेवाददीतास्मादवृत्तावेकरात्रकम् ।

आमं पूयंति संस्कारो धर्म्मे तेभ्यः प्रतीक्षताम् ॥
तस्मादामं ग्रहीतव्यं शूद्रादप्यङ्गिराऽब्रवीत् ॥ इति ।

अवृत्तौ वृत्त्यन्तराभावे । पराशरः—

यस्तु वेदमधीयानः शूद्रान्नमुपजीवति ।
शूद्रो वेदफलं याति शूद्रत्वं सोऽधिगच्छति ॥
शूद्रान्नेनोदरस्थेन ब्राह्मणो म्रियते यदि ।
त्रिकालज्ञो वेदवेदी धर्म्मज्ञोऽप्यषडान्वितः ॥
चतुर्वेदोऽपि यो विप्रः स प्रेतो जायते ततः ॥

यद्यपि—

यतिश्च ब्रह्मचारी च पक्कान्नस्वामिनावुभौ ।

इति पराशरेण ब्रह्मचारिणः पक्कान्नग्रहणाधिकार एवोक्तो नामान्नग्रहणाधिकारः । तथापि—

कन्दुपक्कं स्नेहपक्कं पायसं दधि सक्तवः ।
एतान्यशूद्रान्नभुजो भोज्यानि मनुरब्रवीत् ॥

अनापद्यपि स्वजातीयेभ्योऽपि प्रशस्तेभ्य एव भैक्षमाहरेदित्याह मनुः—

वेदयज्ञैरहीनानां प्रशस्तानां स्वकर्म्मणि ।
ब्रह्मचार्य्याहरेद्भैक्ष्यं गृहिभ्यः प्रयतोऽन्वहम् ॥

क्वचिदपवादमाह स एव—

गुरोः कुले न भिक्षेत न ज्ञातिकुलबन्धुषु ।
अलाभे त्वन्यगेहानां पूर्व्वं पूर्व्वं परिश्रयेत् ॥

गुरुकुले गुरुगृहे । कुलं शिष्यसमूह इत्यन्ये । "मातरं प्रथमामेके" इति सूत्रम् । एके आचार्याः मातरं स्वजननीं प्रथमां भिक्षेतेत्याहुः । तथा च मनुभविष्यत्पुराणयोः—

मातरं वा स्वसारं वा मातुर्वा भगिनीं निजाम् ।
भिक्षेत भिक्षां प्रथमां या चैनं नावमानयेत् ॥

अयं च प्रथमाह एव धर्म्म इति कर्कः । तच्च भैक्ष्यं भोजनपर्याप्त-

मेवाह कर्त्तव्यमिति। यमः—

आहारमात्रादधिकं न क्वचिद्भैक्षमाहरेत्।
युज्यते स्नेहदोषेण कामतोऽधिकमाहरन्॥

निषिद्धान्नमाहात्रिः—

हस्तदत्ता तु या भिक्षा लवणं व्यञ्जनानि च।
भुक्त्वा त्वशुचितां याति दाता स्वर्गं न गच्छति॥
माधुकरीं य आदाय ब्राह्मणेभ्यः प्रयच्छति।
स याति नरकं घोरं भुञ्जतो निरयस्तथा॥

"आचार्य्याय भैक्ष्यं निवेदयित्वा वाग्यतोऽहश्शेषं तिष्ठेदित्येके" इति सूत्रम्। ततो ब्रह्मचारी भिक्षां भिक्षित्वाऽऽचार्य्यायोपनयनकर्त्रे भिक्षा लब्धेति निवेदनं कृत्वा वाग्यतः संयमितवाक् अहःशेषं तिष्ठेत्। गौतमोऽपि—

निवेद्य गुरवे भिक्षां भुञ्जीतासन्निधौ गुरोः।
तद्भार्य्यापुत्रब्रह्मचारिभ्य इति वान्वहम्॥

याज्ञवल्क्यः—

कृताग्निकार्य्यो भुञ्जीत वाग्यतो गुर्व्वनुज्ञया।
आपोशनक्रियापूर्व्वं सत्कृत्यान्नमकुत्सयन्॥

सत्कारो हारीतेन दर्शितः—

"भैक्षमेव हितं पर्य्यग्निकृतमादित्यदर्शितं गुरवे वेदितमनुज्ञातममृतसम्मितं प्राहुर्यदश्नाति ब्रह्मचारी स ब्रह्मसिद्धिमवाप्नोतीति"। ब्रह्मचारिण एकान्ननिषेधमाह। तत्र मनुः—

भैक्षेण वर्त्तयेन्नित्यं नैकान्नाशी भवेद्व्रती।
भैक्षेण व्रतिनां वृत्तिरुपवाससमा स्मृता॥

अकरणे प्रत्यवायं स एवाह—

अकृत्वा भैक्षचरणमसमिद्ध्य च पावकम्।
अनातुरः सप्तरात्रमवकीर्णिव्रतं चरेत्॥

अथ भिक्षाचरणकालमाह आपस्तम्बः—"सायम्प्रातरमन्त्रेण

भिक्षाचर्य्यं चरे"दिति । सायं सूर्यास्तानन्तरम् । प्रातः षोढाविभक्त-दिवसाद्यभागे । अयं च कालोऽष्टवर्षन्यूनब्रह्मचारिविषयः । तथा च सुमन्तुः--

अश्नीयादष्टवर्षस्तु ब्रह्मचारी प्रगे सदा ।
तदूर्ध्वमाद्वादशाहाद्वाश्नीयात्सङ्गवे सदा ॥
तदूर्ध्वं गृहिवद्भिक्षा भोजनं च समाचरेत् ॥

काष्र्णाजिनिः—

मध्याह्ने गृहिणां भुक्तिर्वनिनामपराह्णके ।
सायाह्ने यतिनां प्रोक्ता प्रातस्तु ब्रह्मचारिणाम् ॥
नैष्ठिकानान्तु सायाह्नेऽपराह्णे वापि सा सकृत् ॥

सायम्प्रातरिति वदता मध्ये भोजननिषेधोऽभिहितः । अत एव मनुः—

सायम्प्रातर्द्विजातीनामशनं श्रुतिचोदितम् ।
नान्तरा भोजनं कुर्य्यादग्निहोत्रसमो विधिः ॥

अग्निहोत्रसमताभिधानात् कालद्वयेऽपि भोजनस्य नियमेनाकरणे प्रत्यवाय इति गम्यते । तथा च श्रुतिः—"तस्मात्सायम्प्रातराश्यव-स्स्यात्"इति । अयञ्चान्तराभोजननिषेधः समर्थस्यैव न बालस्य । तत्र विशेषमाह मनुः-

अष्टौ ग्रासा मुनेर्भक्षं वानप्रस्थस्य षोडश ।
द्वात्रिंशतं गृहस्थस्य ह्यमितं ब्रह्मचारिणः ॥

अथ मध्याह्नसन्ध्यानिर्णयः । उपनीतिदिने मध्याह्नसन्ध्यादि स-र्वं कर्म्म समाचरेत् । तत्र जैमिनिः--

यावद्ब्रह्मोपदेशो न तावत्सन्ध्यादिकं न च ।
ततो मध्याह्नसन्ध्यादि सर्वं कर्म्म समाचरेत् ॥

ब्रह्मोपदेशो गायत्र्युपदेशः । अनन्तरं मध्याह्नसन्ध्यादि सर्वं कर्म्मं कुर्यादित्यर्थः । मध्याह्नसन्ध्यैवादिर्यस्य तत्तस्मात् मध्याह्नसन्ध्यात एव सर्वकर्म्मारम्भोऽवगम्यते । वीरमित्रोदये स्मृत्यन्तरे—

उपानयेऽह्नि कर्त्तव्यं सायंसन्ध्योपासनम् ।

आरभेद् ब्रह्मयज्ञन्तु मध्याह्ने तु परेऽहनि ॥ इति ।

तच्छाखान्तरविषयमिति पारिजातकृत् । ब्रह्मयज्ञस्य तु वेदारम्भाभावादेवाप्राप्तावपि वचनात् । द्वितीयमध्याह्नमारभ्य गायत्र्यादिकर्त्तव्यतोच्यते । तथा च जैमिनिः—

अनुपाकृतवेदस्य कर्त्तव्यो ब्रह्मयज्ञकः ।
वेदस्थाने तु सावित्री गृह्यते तत्समा यतः ॥

शौनकः—

कुमारस्योपनयनं श्रुताभिजनवृत्तवान् ।
तपसा धूतनिःशेषपाप्मा कुर्य्याद्द्विजोत्तमः ॥

व्यासोऽप्याह—

वेदैकनिष्ठं धर्मज्ञं कुलीनं श्रोत्रियं शुचिम् ।
स्वशाखाढ्यमनालस्यं विप्रं कर्त्तारमीप्सितम् ॥

श्रोत्रियलक्षणं ब्राह्मे—

जन्मना ब्राह्मणो ज्ञेयः संस्कारैर्द्विज उच्यते ।
विद्यया चापि विप्रत्वं त्रिभिः श्रोत्रिय उच्यते ॥

अथ ब्रह्मचारिनियमाः । "अहिꣳसन्नरण्यात्समिध आहृत्य तस्मिन्नग्नौ पूर्ववदाधाय वाचं विसृजते" इति सूत्रम् । ब्रह्मचारी अहिंसन् अच्छिन्दन् हिंसामकुर्वन्नरण्याद्वनात्समिध आहृत्य आनीय तस्मिन्यस्मिन्नुपनयनहोमः कृतस्तस्मिन्नग्नौ पूर्वव"त्पाणिनाऽग्निं परिसमूहती"ति पूर्वोक्तरीत्याऽऽधाय समिदाधानं कृत्वा वाचं विसृजते । यदि वाग्यमो गृहीतस्तदाऽस्मिन्काले विसृजते । "अधःशाय्यक्षारालवणाशी स्याद्दण्डधारणमग्निपरिचरणं गुरुशुश्रूषा भिक्षाचर्य्या" इति सूत्रम् । अधःशायी स्यात् । अक्षारालवणाशी भवेत् । दण्डधारणं सर्वदा कार्यम् । अग्नेः परिचरणं समिदाधानम् । "परिसमूहनादि सायम्प्रातरुभयकालमग्निं परिचरे"दिति स्मृत्यन्तरात् । गुरुशुश्रूषा च प्रत्यहं कर्त्तव्या स्वाध्यायानुरोधेन । भिक्षाचर्य्या भिक्षाचरणं स्थित्यर्थम् ।

"मधुमाꣳसमज्जनोपर्य्यासनस्त्रीगमनानृतादत्तादानानि वर्जये"-दिति सूत्रम्। मधु प्रसिद्धम्। मांसमपि प्रसिद्धम्। मज्जनं गङ्गादौ स्नानं प्रतिषिध्यते। उद्धृतोदकेन तु कार्य्यमेव। उपर्य्यासनमासनस्योपरि मसूरिकाद्यासनं निधायोपवेशनम्। स्त्रीगमनम् स्त्रीणां मध्ये व्यवस्थानम्। तथा च गृह्यकारिकायाम्—

गौतमादिभिरुक्तं तन्मधुमांसादिवर्जनम्।
देवतीर्थे ह्रदे वापि मज्जनं न समाचरेत्॥
दण्डवन्मज्जनं वा स्यात्कार्य्यं चोद्धृतवारिणा।
मसूरादौ नोपविशेत्स्त्रीणां मध्ये न दीव्यति॥ इति।

अनृतमसत्यभाषणम्। अदत्तादानं परद्रव्याणामदत्तानां स्वयं ग्रहणम्। एतानि ब्रह्मचारी वर्ज्जयेत् न कुर्यात्। "अष्टाचत्वारिंशद्वर्षाणि वेदब्रह्मचर्य्यं चरे"दिति सूत्रम्। अष्टाभिरधिकानि चत्वारिंशत्ता-न्यष्टाचत्वारिंशद्वर्षाणि वेदब्रह्मचर्य्यं चरेत्। चतुर्णामपि वेदानां ग्रहणार्थ-मेकमेव ब्रह्मचर्य्यव्रतं कुर्य्यात्। अस्मिन्पक्षे चतुर्णामपि वेदानामेक एव व्रतादेशः। सर्वाश्च वेदाहुतयः। "द्वादश द्वादश वा प्रतिवेद"मिति सूत्रम्। अथ वा प्रतिवेदं द्वादश द्वादश वर्षपर्य्यन्तं ब्रह्मचर्य्यं चरेत्। अयमर्थः—एकं वेदं समाप्य समावर्त्तनं कृत्वा पुनर्द्वितीयग्रहणं यावद्ब्रह्मचर्य्यं चरित्वा स्नात्वैवं वेदान्तरं ब्रह्मचर्य्यं चरेत्। "यावद्ग्रहणं वा" इति सूत्रम्। यद्वा यावद्वेदस्य वेदयोर्वेदानां पाठतोऽर्थतश्च स्वीकरणं तावद्ब्रह्मचर्य्यं चरेत्। "वासाꣳसि शाणक्षौमाविकान्यैणेयमजिनमुत्तरीयं ब्राह्मणस्य रौरवꣳराजन्यस्याजं गव्यं वा वैश्यस्य सर्व्वेषां वा गव्यमसति प्रधानत्वान्मौञ्जी रशना ब्राह्मणस्य धनुर्ज्या राजन्यस्य मौर्व्वी वैश्यस्य मुञ्जाभावे कुशाश्मन्तकबल्वजानां पालाशो दण्डो ब्राह्मणस्य बैल्वो राजन्यस्यौदुम्बरो वैश्यस्य केशसम्मितो ब्राह्मणस्य दण्डो ललाटसम्मितः क्षत्रियस्य घ्राणसम्मितो वैश्यस्य सर्व्वे वा सर्व्वेषा"मिति सूत्रम्। अथ वा सर्व्वे पालाशादयो दण्डाः

सर्व्वेषां ब्राह्मणक्षत्रियविशामनियमेन भवन्ति न प्रतिवर्णं जातिव्यवस्था भवति। शेषं पूर्व्वमेव व्याख्यातम्। "आचार्य्येणाहूत उत्थाय प्रतिशृणुयात्" इति सूत्रम्। आचार्य्येणोपनयनकर्त्राऽऽहूत आकारितो ब्रह्मचारी आसनादुत्थाय प्रतिशृणुयात् प्रतिवचनं दद्यात्। "शयानं चेदासीन" इति सूत्रम्। चेद्यदि आचार्य्यः शयानं स्वपन्तं ब्रह्मचारिणमाह्वयति तदाऽऽसीन उपविष्टस्सन् प्रतिवचनं दद्यात्। "आसीनं चेत्तिष्ठन्" इति सूत्रम्। चेद्यदि आसीनमुपविष्टं ब्रह्मचारिणमाह्वयति आचार्य्यस्तदा स ब्रह्मचारी तिष्ठन् प्रतिवचनं दद्यात्। "तिष्ठन्तं चेदभिक्रामन्नि"ति सूत्रम्। चेद्यदि तिष्ठन्तं ब्रह्मचारिणमाह्वयत्याचार्य्यस्तदातिक्रामन् आचार्य्याभिमुखं व्रजन् प्रतिवचनं कुर्यात्। "अभिक्रामन्तं चेदभिधावन्" इति सूत्रम्। चेद्यदि अभिक्रामन्तं ब्रह्मचारिणमाह्वयत्याचार्य्यस्तदा ब्रह्मचारी अभिधावन् आचार्य्याभिमुखं धावन् प्रतिवचनं दद्यात्। अस्यार्थवादमाह—"स एवं वर्त्तमानोऽमुत्राद्य वसत्यमुत्राद्य वसतीति" इति सूत्रम्। स ब्रह्मचारी एवं पूर्वोक्तब्रह्मचर्य्यधर्मेण वर्त्तमानः अमुत्र स्वर्लोके अद्यैव स्थितः सन् वसति तिष्ठति। द्विरुक्तिः प्रशंसार्था। "तस्य स्नातकस्य कीर्तिर्भवति" इति सूत्रम्। येनैवं ब्रह्मचर्य्यानुष्ठानं कृतं तस्य स्नातकस्य समावृत्तस्य कीर्तिर्भवति यशो भवति। यथोक्तधर्म्मकर्त्तुः फलञ्चैतत्। स्नातकस्य लक्षणमाह। "त्रयः स्नातका भवन्ति" इति सूत्रम्। त्रयस्त्रिविधाः स्नातका भवन्ति। "विद्यास्नातको व्रतस्नातको विद्याव्रतस्नातक इति" इति सूत्रम्। त्रिविधाः स्नातका इत्युक्तं तत्रैको विद्यास्नातको द्वितीयो व्रतस्नातकस्तृतीयो विद्याव्रतस्नातक इति। "समाप्य वेदमसमाप्य व्रतं यः समावर्तते स विद्यास्नातकः" इति सूत्रम्। समाप्य वेदं पाठतोऽर्थतश्च वेदं वेदस्य मन्त्रब्राह्मणात्मिकामेकां शाखाम्। असमाप्य व्रतं द्वादशवार्षिकं ब्रह्मचर्यमसमाप्य यः समावर्त्तते स्नाति स विद्यास्नातक इत्युच्यते। "समाप्य व्रतमसमाप्य वेदं यः समावर्तते स व्रतस्ना-

तकः" इति सूत्रम् । ब्रह्मचर्यं द्वादशवार्षिकं समाप्य वेदमसमाप्य असम्पूर्णमधीत्य यः समावर्तते स व्रतस्नातक इत्युच्यते । एवं च स्नातकस्य विवाहोत्तरकालमध्ययनसमापनं वेदार्थज्ञानं चेति मन्तव्यम् । "**उभयँ समाप्य यः समावर्त्तते स विद्याव्रतस्नातकः**" इति सूत्रम् । उभयं वेदब्रह्मचर्यं च समाप्य यः स्नाति स विद्याव्रतस्नातक इत्युच्यते । लक्षणप्रयोजनं च "**स्नातकानेके**" इत्यादिषु ज्ञेयम् । अथ मुख्यकालातिक्रमे गौणकालमाह "**आषोडशाद्वर्षाद्ब्राह्मणस्यानतीतः कालो भवत्याद्वाविँशाद्राजन्यस्याचतुर्विँशाद्वैश्यस्ये**"ति सूत्रम् । अर्वाक् षोडशाद्वर्षाद्ब्राह्मणस्य अनतीतः न अतिक्रान्त एवोपनयनस्य कालो भवति । तथा क्षत्रियस्य आद्वाविंशात् वर्षात् । तथैव वैश्यस्य आचतुर्विंशात् वर्षात् । तथा च मनुः—

आषोडशाद्ब्राह्मणस्य सावित्री नातिवर्तते ।
आद्वाविंशात्क्षत्रबन्धोराचतुर्विंशतेर्विशः ॥

"**अत ऊर्ध्वं पतितसावित्रिका भवन्ती**"ति सूत्रम् । अत उक्तकालात् ऊर्ध्वं अनुपनीता ब्राह्मणादयः पतितसावित्रिका भवन्ति । पतिता स्खलिता सावित्री येभ्यस्ते पतितसावित्रिकाः । "**नैनानुपनयेयुर्नाध्यापयेयुर्न याजयेयुर्न चैभिर्व्यवहरेयु**"रिति सूत्रम् । एतान् पतितसावित्रिकान् न उपनयेयुः शास्त्रज्ञाः । अज्ञानादुपनीतानपि नाध्यापयेयुः । एवमध्यापितानपि न याजयेयुः यज्ञं न कारयेयुः । एभिः सह भोजनादिभिः कर्मभिर्व्यवहारमपि न कुर्युः । तथा च कारिकायाम्—

व्रात्यस्वीकृतविप्रस्य न कार्यमुपनायनम् ।
अध्यापनं याजनं च विवाहादि विवर्जयेत् ॥
सावित्रीपतितानां च कुले येषां त्रिपूरुषम् ।
तेषामपत्ये संस्कारोऽध्यापनं च न विद्यते ॥

आश्वलायनः—

अत ऊर्ध्वं पतन्त्येते द्विजत्वं नाप्नुयुर्यदि ।
मन्त्रकर्मपरिभ्रष्टा यास्यन्ति व्रात्यतामिह ॥

मन्त्रैः कर्माणि मन्त्रकर्माणि । मन्त्राश्च वैदिका एव न नमोमन्त्रः । तेषां शूद्रधर्मत्वेन तदभ्यनुज्ञानात् । तथा च मनुः—

न ह्यस्मिन्युज्यते कर्म किञ्चिदामौञ्जिबन्धनात् ।
नाभिव्याहारयेद्ब्रह्म स्वधानिनयनादृते ॥
शूद्रेण हि समस्तावद्यावद्वेदे न जायते ॥ इति ।

अथैषां प्रायश्चित्तम् । तत्र यमः—

सावित्री पतिता यस्य दशवर्षाणि पञ्च च ।
सशिखं वपनं कृत्वा व्रतं कुर्यात्समाहितः ॥
एकविंशतिरात्रं च पिबेत्प्रसृतियावकम् ।
हविषा भोजयेच्चैव ब्राह्मणान्सप्त पञ्च वा ॥
ततो यावकशुद्धस्य तस्योपनयनं स्मृतम् ॥ इति ।

इदं चातिक्रान्तषोडशवर्षस्य सप्तदशे वर्षे उपनयने द्रष्टव्यम् । अष्टादशे तूपनयने प्राजापत्यत्रयम् । तथा च मनुः—

येषां द्विजानां सावित्री नानूच्येत यथाविधि ।
तांश्चारयित्वा त्रीन्कृच्छान्यथाविध्युपनाययेत् ॥ इति ।

आश्वलायनः—

गवां दानेन भूम्या वा प्राजापत्यत्रयेण वा ।
चान्द्रायणेन वा शुद्धास्ते भवन्तीह सत्तमाः ॥ इति ।

गवां तिसृणाम् । एकोनविंशेऽब्दे उपनयने त्वाहापस्तम्बः—"अतिक्रान्ते सावित्र्याः काले ऋतुं त्रैविद्यकं ब्रह्मचर्यं चरेदथोपनयनन्ततः सम्वत्सरमुदकोपस्पर्शनमथाध्याप्य" इति । ऋतुः द्वौ मासौ । ऋतुशब्दसामर्थ्यादृत्वारम्भ एव व्रतारम्भः । त्रैविद्यकं त्र्यवयवा विद्या त्रिविद्या तामधीयते त्रैविद्याः तेषामिदं त्रैविद्यकम् । गोत्रचरणाद्वुञ् । एवम्भूतं ब्रह्मचर्यं अग्निपरिचर्यामध्ययनं शुश्रूषामिति त्रितयं परिहार्य्य सकलं ब्रह्मचारिधर्मं चरेत् । विंशेऽब्दे उपनयने मनूक्तं त्रैमासिकमुपपातकसामान्यप्रायश्चित्तम् । एकविंशेऽब्दे उपनयने चातुर्मासिकमुद्दालकव्रतं चरेत् । तथा च

वशिष्ठः—"पतितसावित्रीक उद्दालकव्रतं चरेद्द्वौ मासौ यावकेन वर्त्तयेन्मासं पयसार्धमासमामिक्षयाऽष्टरात्रं घृतेन षड्रात्रमयाचितेन त्रिरात्रमब्भक्षोऽहोरात्रमुपवासश्चे"ति । द्वाविंशेऽब्दे उपनयनेऽश्वमेधावभृथस्नानम् । तदाह वसिष्ठः—"अश्वमेधावभृथं वा गच्छे"दिति । त्रयोविंशेऽब्दे उपनयने व्रात्यस्तोमः प्रायश्चित्तम्"व्रात्यस्तोमेन वा यजेते"तिवसिष्ठस्मरणात् । "व्रात्यस्तोमादृते क्रतो"रिति योगिस्मरणाच्च । वाशब्दो व्यवस्थितविकल्पार्थः । उक्तकल्पानां गुरुलघुभावात् । व्यवस्था चेयमेव साधीयसी । "गुरूणि गुरूणि लघूनि लघूनि"त्यापस्तम्बस्मरणात् । एवं क्षत्रियवैश्ययोरपि द्वाविंशचतुर्विंशादूर्ध्वं यथोक्तक्रमेण तानि प्रायश्चित्तानि पादपादहान्या योज्यानि । अत ऊर्ध्वं आतृतीयकालसमाप्तेर्व्रात्यस्तोम एव दक्षिणाविकल्पपक्षाश्रयेण योजनीयः । तृतीयकालादूर्ध्वं गौणतमोऽपि कालो नास्तीति क्षत्रियवैश्ययोः पातित्यमेव । न ब्राह्मणस्य । "न ब्राह्मणः पतनमृच्छती"ति गौतमेन ब्राह्मणपदोपादानात् । "त्रिपुरुषं पतितसावित्रीकाणामपत्ये संस्कारो नाध्यापनं चे"ति सूत्रम् । त्रीन् पुरुषान् यावत् ये पतितसावित्रीकाः पितृपुत्रपौत्रास्तेषां अपत्ये चतुर्थे पुरुषे असंस्कार उपनयनसंस्कारो न भवति।अध्यापनञ्च न भवति । "तेषाᳬसंस्कारेप्सुर्व्रात्यस्तोमेनेष्ट्वा काममधीयीरन्व्यवहार्या भवन्तीति वचनात्"इति सूत्रम् । पितृपुत्रपौत्राणां मध्ये यः संस्कारेप्सुः आत्मानं संस्कारयितुकामः स व्रात्यस्तोमेन इष्ट्वा व्रात्यस्तोमं कृत्वा व्यवहार्यो भवति । कामं इच्छया व्रात्यस्तोमेनेष्ट्वा अधीरयीन् वेदं पठेयुः । व्यवहार्याः शिष्याणामध्ययनादिकर्मसु योग्या भवन्तीति वचनात् श्रुतेः। तथाचापस्तम्बः—"अथ यस्य पिता पितामह इत्यनुपतौ स्यातान्ते ब्रह्मसᳬस्तुतास्तेषामभ्यागमनं भोजनं विवाहमिति वर्जयेत्तेषामिच्छतां प्रायश्चित्तं यथा प्रथमेऽतिक्रम ऋतुरेवं संवत्सरोऽथोपनयनं तत उदकोपस्पर्शन"मिति । यस्य बटोः पिता पितामहश्चानुपेतः स्यात्ते त्रयोऽपि ब्रह्महतुल्यास्तेषां अभ्यागमनं उपसर्पणं भोजनं विवाहं च वर्जयेत् । तेषामिच्छतां ते यदीच्छन्ति तदा पूर्वोक्तप्रायश्चित्तं कुर्युः । न बलात्कारितव्या इत्यर्थः । तदेवाह—यथा प्रथमे

पुरुषे उपनयातिक्रमे ऋतुः शुद्धिहेतुः एवमन्यस्मिन्द्वितीयादिषु संवत्सरः शुद्धिहेतुः । अथ चरितव्रतस्योपनयनं कार्य्यम् । उदकोपस्पर्शनं वक्ष्यमाणैर्मन्त्रैः संवत्सरं शिरस्यद्भिर्मार्जनम् । अयं विधिर्नैकस्यैव, किन्तु त्रयाणामपीत्याह "**प्रतिपुरुषं संख्याय संवत्सरान्यावन्तोऽनुपेताः स्युः सप्तभिः पावमानीभिर्यदन्ति यच्च दूरक इत्येताभिर्यजुः पवित्रेण सोमः पवित्रेणाङ्गिरसेनेत्यपि वा व्याहृतिभिरेवाथाध्याप्य**" इति। यदि पितैवानुपेतस्तदा संवत्सरमेकम्। अथ पितामहोऽपि तदा संवत्सरौ। अथ स्वयमपि यथाकालमनुपनीतः तदा संवत्सरान् । उक्तं चरेदिति शेषः । पवमानः सोमोदेवता यासां ताः पावमान्यः "**आपो अस्मान्मातरः शुन्धयन्तु**" इत्याद्याः। यजुःपवित्रेण "**कया नश्चित्र आभुवदि**"त्यादि तेन वामदेव्येन, अङ्गिरसेन "**हꣳसः शुचिष**"दित्यनेन । एतैरञ्जलिना शिरस्यपो निषिञ्चेत्। पूर्वैः सह व्याहृतीनां विकल्पः। अथ प्रपितामहाद्यनुपनयने आह वीरमित्रोदये–"**अथ यस्य प्रपितामहादिर्नानुस्मर्येतोपनयनं ते श्मशानसंस्कृतास्तेषामभ्यागमनभोजनविवाहमिति वर्जयेत्तेषामिच्छतां प्रायश्चित्तं द्वादशवर्षाणि त्रैविद्यकं ब्रह्मचर्यं चरेदथोपनयनन्तत उदकोपस्पर्शनं पावमान्यादिभिरथ गृहमेधोपदेशनं नाध्यापनं ततो यो निवर्तते तस्य संस्कारो यथा प्रथमेऽतिक्रमे तत उर्ध्वं प्रकृतिवदि**"ति । यस्य माणवकस्य प्रपितामहमारभ्य त्रयाणां पुरुषाणामुपनयनं नानुस्मर्यते, ते श्मशानवदध्ययनानर्हाः । तेषामभ्यागमनादि पूर्ववन्न कार्यम् । तत्र माणवकस्य द्वादशाब्दं त्रैविद्यकं ब्रह्मचर्यं प्रायश्चित्तम् । पूर्वेषां तु प्रतिपुरुषं संवत्सरं तदिति । उपनयनं संवत्सरमुदकोपस्पर्शनं च पूर्ववत् । अथ गृह्यमन्त्राणामेवोपदेशनम् । नाध्यापनं कृच्छ्रस्य वेदस्य । ततस्तस्मात्कृतविवाह उत्पद्यते । तस्य द्वौ मासौ व्रतं चारयित्वोपनयनं कार्यम् । तदुत्पन्नस्य तु प्रकृतिवत् उपनयनादि सर्वं कार्यं न प्रायश्चित्तमिति ।

**इति श्रीप्रथमशाखीयरामकृष्णविरचिते पारस्करगृह्यसूत्रविवरणे संस्कारगणपतौ द्वितीयकाण्डे पञ्चमी कण्डिका ॥**

अथ नैष्ठिकब्रह्मचारिणः स्मृत्युक्ता धर्माः । तत्र मनुः—

अग्नीन्धनं भैक्ष्यचर्यमधःशय्यां गुरोर्हितम् ।
आसमावर्तनात्कुर्यात्कृतोपनयनो द्विजः ॥

ब्रह्मपुराणे—

मेखलामजिनं दण्डमुपवीतं च नित्यशः ।
कौपीनं कटिसूत्रं च ब्रह्मचारी तु धारयेत् ॥

तथा च यमः—

दण्डं कमण्डलुं वेदं मौञ्जीं च रशनां तथा ।
धारयेद्ब्रह्मचर्यं च भिक्षान्नाशी गुरौ वसेत् ॥

वेदो दर्भमुष्टिः । गुरौ गुरुसमीप इत्यर्थः । व्यासः-

जघन्यशायी पूर्वं स उत्थाय गुरुवेश्मनि ।
यच्च शिष्येण कर्तव्यं कार्यं दासेन वा पुनः ॥
नाभुक्तवति चाश्नीयादपीते चाम्बु नो पिबेत् ।
न तिष्ठति ह्युपविशेदासीने प्रस्वपेन्न च ॥

याज्ञवल्क्यस्तु विशेषमाह—

गुरुं चैवाप्युपासीत स्वाध्यायार्थं समाहितः ।
आहूतश्चाप्यधीयीत लब्धं चास्मै निवेदयेत् ॥

यमोऽपि—

गुर्वधीनोऽस्वतन्त्रः स्यात्पूर्वोत्थायी गुरोर्गृहे ।
सदा जघन्यसंवेशी जितस्वप्नो जितोदरः ॥
जितनिद्रो जितालस्यो जितक्रोधो जितात्मवान् ।
शुश्रूषुरनहन्ता च गुरुदेवार्चने रतः ॥

अनहन्ता अनहङ्कारी । गुरुपूजायां फलमाह शङ्खः—

न स्नानेन न होमेन नैवाग्निपरिचर्यया ।
ब्रह्मचारी दिवं याति स याति गुरुपूजनात् ॥

मनुरपि—

गोऽश्वोष्ट्रयानप्रासादप्रस्तरेषु कटेषु च ।

नासीत गुरुणा सार्धं शिलाफलकनौषु च ॥

यद्यप्येतद्यानं निषिद्धं तथापि अतिक्रान्तनिषेधस्य आपद्ग्रस्तस्य वा सहयानाभ्यनुज्ञानार्थम् । स एव--

गुरोर्यत्र परीवादो निन्दा वापि प्रवर्तते ।
कर्णौ तत्र पिधातव्यौ गन्तव्यं वा ततोऽन्यतः ॥

सद्दोषाख्यानं परीवादः । असद्दोषाख्यानं निन्दा ।

परीवादात्खरो भवति श्वा वा भवति निन्दकः ।
परिभोक्ता कृमिर्भवति कीटो भवति मत्सरः ॥

अननुज्ञातगुरुधनोपजीवी परिभोक्ता ।

अमृतस्य प्रदातारं गुरुं यस्त्ववमन्यते ।
नचैनं दहति ब्रह्म तिर्यग्योनौ च जायते ॥

गुरुनामोच्चारणे निषेधः । वीरमित्रोदये--

आचार्यं चैव तत्पुत्रं दीक्षितं च तथा गुरुम् ।
स्वसारं च पितुश्चैव मातरं मातुलं तथा ॥
हितैषिणं च विद्वांसं श्वशुरं पतिमेव च ।
न ब्रूयान्नामतो विद्वान्मातुश्च भगिनीं तथा ॥

नारदः--

आविद्याग्रहणाच्छिष्यः शुश्रूषेत्प्रयतो गुरुम् ।
तद्भक्ति गुरुदारेषु पुत्रपौत्रे तथैव च ॥

मनुः--

सेवेतेमाँस्तु नियमान्ब्रह्मचारी गुरौ वसन् ।
सन्नियम्येन्द्रियग्रामं तपोवृद्ध्यर्थमात्मनः ॥
इन्द्रियाणां तु सर्वेषां यद्येकं क्षरतीन्द्रियम् ।
तेनास्य क्षरति प्रज्ञा दृतेः पादादिवोदकम् ॥ इति ।

दृतिश्चर्मकोशः । याज्ञवल्क्यः--

मधुमांसाञ्जनोच्छिष्टशुक्तस्त्रीप्राणिहिंसनम् ।
भास्करालोकनाश्लीलपरिवादादि वर्जयेत् ॥

मधु क्षौद्रम् । मांसं च्छागादेः । इदं चाव्याधौ । सव्याधौ तु गुरूच्छिष्टं कृत्वा भोक्तव्यमेव । तथा च वशिष्ठः—"स चेद्व्याधीयीत कामं गुरोरुच्छिष्टं भेषजार्थं सर्वं प्राश्नीया"दिति । तथा च कूर्मपुराणे—

आदर्शं नैव वीक्षेत नाचरेद्दन्तधावनम् ।
गुरूच्छिष्टं भेषजार्थं प्रयुञ्जीत न कामतः ॥

अञ्जनं तैलादिना गात्रस्य । कज्जलादिना वाक्ष्णोः वर्जयेत् । एतदपि व्याध्यादौ कार्यम्। औषधस्याव्रतघ्नत्वात् । तदाह वीरमित्रोदये स्मृतिः—

अष्टैतान्यव्रतघ्नानि आपो मूलं फलं पयः ।
हविर्ब्राह्मणकाम्या च गुरोर्वचनमौषधम् ॥

शुक्तं निष्ठुरवाक्यम् । भास्करालोकनमादित्यावेक्षणम् । तदाह मनुः—

नेक्षेतोद्यन्तमादित्यं नास्तं यन्तं कदा चन ।
नोपरक्तं न वारिस्थं न मध्यं नभसो गतम् ॥

उपरक्तं राहुग्रस्तम् । अश्लीलमसत्यभाषणम् । परिवादः सद्दोषव्याख्यापनम् । आदिशब्देनान्येऽपि नियमा लक्ष्यन्ते । तथा च गौतमः—"वर्जयेन्मधुमांसं गन्धमाल्यदिवास्वप्नाञ्जनाभ्यञ्जनयानोपानच्छत्रकामक्रोधलोभमोहवाद्यवादनस्नानदन्तधावनहर्षनृत्यगीतपरिवादभयानी"ति । अत्र गन्धनिषेधो भोगार्थं न देवनिर्माल्यस्य । तथा च स्मृतिः—"देवताशिष्टमेव गृह्णीयाद्ब्रह्मचारी"ति । एवं माल्यादावपि। मनुरपि—

वर्जयेन्मधु मांसं च गन्धमाल्ये रसः स्त्रियः ।
शुक्तान्नं चैव सर्वाणि प्राणिनां चैव हिंसनम् ॥
अभ्यङ्गं मज्जनं चाक्ष्णोरुपानच्छत्रधारणम् ।
कामं क्रोधं च लोभं च नर्तनं गीतवादनम् ॥
द्यूतं च जनवादं च परिवादं तथाऽनृतम् ।
स्त्रीणां च प्रेक्षणालम्भमुपघातं परस्य च ॥

रसाः इक्षुरसादयः । प्रचेताः—

ताम्बूलाभ्यञ्जनं चैव कांस्यपात्रे च भोजनम् ।

यतिश्च ब्रह्मचारी च विधवा च विवर्जयेत् ॥

हारीतः—"हयगजचैत्यवृक्षवृषभारोहणप्रवचनसन्धिसंसर्पण-महानद्यर्णवप्रतरणमहासाहसविरुद्धानि वर्जये"दिति । चैत्यं चिता चयनस्थानं वा। प्रवचनं अध्यापनम् । सन्धिसर्पणमिति विवरेण गमनम् । यमः—

खट्वासनं च शयनं वर्जयेद्दन्तधावनम् ।
स्वपेदेकः कुशेष्वेव न रेतः स्कन्दयेत्कचित् ॥

मनुरपि—

एकः शयीत सर्वत्र न रेतः स्कन्दयेत्कचित् ।
कामाद्यः स्कन्दयेद्रेतो हिनस्ति व्रतमात्मनः ॥

व्रतं ब्रह्मचर्यम् । अथ ब्रह्मचारिव्रतलोपे प्रायश्चितम् । तत्र बौधायनः-"अत्र शौचाचमनसन्ध्यावन्दनदर्भभिक्षाग्निकार्यराहित्य-शूद्रादिस्पर्शनकौपीनकटिसूत्रयज्ञोपवीतमेखलादण्डाजिनत्यागादिवा-स्वापच्छत्रधारणपादुकाध्यारोहणमालाधारणोद्वर्त्तनानुलेपनाञ्जन-जलक्रीडाद्यूतनृत्यगीतवाद्याभिरतिषण्ढादिसम्भाषणपर्युषितभोजना-दिब्रह्मचारिव्रतलोपजसकलदोषपरिहारार्थं ब्रह्मचारी कृच्छ्र-त्रयं चरेत्" । तद्यथा लौकिकाग्निं प्रतिष्ठाप्य ब्रह्मवरणाद्याज्यभागान्तं कृत्वा प्रथमं व्यस्तसमस्ताभिर्व्याहृतिभिश्चतस्र आज्याहुतीर्हुत्वा । "ॐ भूः स्वाहा ॥ ॐ भुवः स्वाहा ॥ ॐ स्वः स्वाहा ॥ ॐ भूरग्नये च पृथिव्यै च महते च स्वाहा ॥ १ ॥ ॐ भुवो वायवेऽन्तरिक्षाय च महते च स्वाहा ॥ २ ॥ ॐ स्वरादित्याय च दिवे च महते च स्वाहा ॥ ३ ॥ ॐ भुभुर्वः स्वश्चन्द्रमसे नक्षत्रेभ्यश्च दिग्भ्यश्च महते च स्वाहा ॥ ४ ॥ ॐ पाहिनो अग्न एनसे स्वाहा ॥ ५ ॥ ॐ पाहिनो अग्ने विश्ववेदसे स्वाहा ॥ ६ ॥ ॐ यज्ञं पाहि नो विभावसो स्वाहा ॥ ७ ॥ ॐ सर्वं पाहि शतक्रतो स्वाहा ॥ ८ ॥ ॐपुनरूर्ज्जा निवर्तस्व पुनरग्न-इषायुषा । पुनर्नः पाह्यꣳहसः स्वाहा ॥ ९ ॥ ॐ सहरय्या निवर्त-

स्वाग्ने पिन्वस्व धारया । विश्वयप्स्न्या विश्वतस्परि स्वाहा ॥१०॥
पुनर्व्याहृतिभिर्हुत्वा स्विष्टकृदादि वरदानान्तं शेषं समापयेत् । इति ।

एतदल्पधर्मलोपे प्रायश्चित्तम् । बहुधर्मलोपे तु प्रायश्चित्तविशेषः ।
ऋग्विधाने शौनकः—

तं वो धिया जपेन्मन्त्रं लक्षं चैव शिवालये ।
ब्रह्मचारी स्वधर्मं च न्यूनं चेत्पूर्णमेव तत् ॥

"महानाम्न्यादिव्रतेषु लुप्तेषु तारतम्येन त्रीन् षट् द्वादश वा कृच्छ्रान् कृत्वा पुनर्व्रतं प्रारभेत" इतिस्मृत्यर्थसारे । तथा सन्ध्याग्निकार्यलोपे स्नात्वाष्टसहस्रं जपः । शातातपः—

ब्रह्मचारी तु योऽश्नीयान्मधु मांसं तथैव च ।
प्राजापत्यं चरेत्कृच्छ्रं मौञ्जीहोमेन शुद्ध्यति ॥
भिक्षाशनमकृत्वा यः स्वे स्वे ह्येकान्नमश्नुते ।
अस्नात्वा चैव यो भुङ्क्ते गायत्र्यष्टशतं जपेत् ॥
दिवा स्वपति यः स्वस्थो ब्रह्मचारी कथञ्चन ।
स्नात्वा सूर्यं समभ्यर्च्य गायत्र्यष्टशतं जपेत् ॥
सूतकान्नं नवश्राद्धं मासिकान्नं तथैव च ।
ब्रह्मचारी तु योऽश्नीयात्त्रिरात्रेणैव शुध्यति ॥

ऋग्विधाने—

एकोद्दिष्टे ब्रह्मचारी प्रजपेद्द्युभिरक्तुभिः ।
पादं भुङ्क्ते ब्रह्मचारी मुच्यते किल्बिषात्ततः ॥
अरिष्टैर्भिर्जपेत्पादं षोडशोर्मौ जपेद्यदि ।
पञ्चायुतं ब्रह्मचारी जले वा कल्मषं न हि ॥
तन्नो मित्रो जपेत्पादं वृषोत्सर्गे च भोजयेत् ।
शिवालये ब्रह्मचारी अयुतं नैव दुष्कृतम् ॥
अग्न ओजिष्ठ पादं च न्यूनं भुङ्क्ते जले यदा ।
अयुतं च ब्रह्मचारी तदा पापात् प्रमुच्यते ॥
अदितिः प्रजपेत्पादं सपिण्ड्यां भोजयेद्यदि ॥

अयुतं चेद्ब्रह्मचारी नरकान्मुच्यते तदा ।
षण्मासमन्तान्मन्त्रं च शतवारं यदा तदा ॥
व्रतलोपे ब्रह्मचारी भुक्तिकाले न किल्बिषम् ॥

विधानपारिजाते पाराशरः—

मासिकादिषु नाश्नीयादसमाप्तव्रतो द्विजः ।
त्रिरात्रमुपवासोऽत्र प्रायश्चित्तं विधीयते ॥
प्राणायामशतं कृत्वा घृतं प्राश्य विशुद्ध्यति ॥

इदमज्ञानविषयम् । ज्ञानपूर्वके तु स एव—

मधु मांसं च योऽश्नीयाच्छ्राद्धं सौतिकमेव वा ।
प्राजापत्यं चरेत्कृच्छ्रं व्रतशेषं समापयेत् ॥

अनृतप्रायश्चित्तमाह गर्गः—

त्रिरात्रमेकरात्रं वा ब्रह्मचार्यनृते चरेत् ॥

कृच्छ्रमित्यनुषज्यते । स्त्रीसङ्गे याज्ञवल्क्य आह—

अवकीर्णी भवेद्गत्वा ब्रह्मचारी तु योषितम् ।
गर्दभं समुपालभ्य नैर्ऋतं संविशुध्यति ॥

मनुरपि —

अवकीर्णी तु काणेन गर्दभेन चतुष्पथे ।
स्थालीपाकविधानेन यजेत नैर्ऋतं निशि ॥

शातातपस्तु—

ब्रह्मचारी तु यो गच्छेत्स्त्रियं कामेन पीडितः ।
प्राजापत्यं चरेन्नित्यमब्दमेकमतन्द्रितः ॥
निर्वपेच्च पुरोडाशं ब्रह्मचारी तु पर्वणि ।
मन्त्रैः शाकलहोमीयैरथावाज्यं च हापयेत् ॥

मैथुनमष्टाङ्गमित्याह दक्षः—

ब्रह्मचर्यं सदा रक्षेदष्टधा वारणं पृथक् ।
स्मरणं कीर्त्तनं केलिः प्रेक्षणं गुह्यभाषणम् ॥
संकल्पोऽध्यवसायश्च क्रियानिर्वृत्तिरेव च ।

एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः ॥
विपरीतं ब्रह्मचर्यं ब्रह्मा प्राह प्रजापतिः ॥

नष्टं भवतीति शेषः ।

न ध्यातव्यं न वक्तव्यं न श्रोतव्यं कथञ्चन ।
एतैः सर्वैः सुनिष्पन्नो यतिर्भवति नान्यथा ॥

शुना दष्टस्य प्रायश्चित्तमाह पराशरः—

ब्रह्मचारी शुना दष्टस्त्र्यहस्तप्तं पयः पिबेत् ।
गृहस्थस्तु द्विरात्रं वाप्येकाहं चाग्निहोत्रवान् ॥
नाभेरूर्ध्वन्तु दष्टस्य तदेव द्विगुणं भवेत् ।
हस्ते तत्त्रिगुणं वक्त्रमस्तके च चतुर्गुणम् ॥

एतत्प्रायश्चित्तं सर्वं नैष्ठिकेन द्विगुणं कार्यमित्याह । हारीतः—

उपकुर्वस्तु यत्कुर्यात्कामतोऽकामतोऽपि वा ।
तदेव द्विगुणं कुर्याद्ब्रह्मचारी तु नैष्ठिकः ॥

विधानपारिजाते—

यज्ञसूत्रपवित्रे च मेखलां च गुरौ वसन् ।
दण्डं च धारयेन्नित्यं ब्रह्मचारी समाहितः ॥
त्यक्त्वैतांश्चरतां येषां दिनमात्रं द्विजातिनाम् ।
कृच्छ्रेण तेषां शुद्धिः स्यान्नान्यथा ब्रह्मचारिणाम् ॥
प्रमादाद्वा स्वपेद्विप्रो विसर्गो रेतसो द्विजः ।
व्रती शुद्ध्यति कृच्छ्रेण त्रिरात्रोपोषणेन वा ॥
स्वेच्छया त्यजतो रेतो मैथुनं वा प्रकुर्वतः ।
प्राजापत्येन चीर्णेन जपेन च शुचिर्भवेत् ॥

मनुः—

स्वप्नेऽपि विसृजन् ब्रह्मचारी शुक्रमकामतः ।
स्नात्वार्कमर्चयित्वा त्रिः पुनर्मामित्यृचं जपेत् ॥

अपरादित्ये—

ब्रह्मसूत्रं विना येन सन्ध्योपास्तिर्यदा कृता ।

गायत्र्यष्टसहस्रं तु जपेत्स्नात्वा समाहितः ॥
ब्रह्मसूत्रं विना यस्तु विण्मूत्रं कुरुते द्विजः ।
गायत्र्यष्टसहस्रेण प्राणायामेन शुद्ध्यति ॥
ब्रह्मसूत्रं विना यस्तु भोजनं कुरुते द्विजः ।
गायत्र्यष्टशतेनैव प्राणायामेन शुद्ध्यति ॥

बृहस्पतिः—

सुरापलाण्डुलशुनस्पर्शी कामकृतो द्विजः ।
त्र्यहं पिबेत्कुशजलं गायत्रीं च जपेत्ततः ॥
पलाण्डुलशुनस्पर्शे स्नात्वा नक्तं समाचरेत् ॥

बौधायनः—

आपोशानमकृत्वा तु यो भुङ्क्तेऽनापदि द्विजः ।
भुञ्जानस्तु तदा विप्रो गायत्र्यष्टशतं जपेत् ॥

लघुहारीतः—

विना यज्ञोपवीतेन भुङ्क्ते तु ब्राह्मणो यदि ।
स्नानं कृत्वा जपं कृत्वा उपवासेन शुद्ध्यति ॥
यदा भोजनकाले तु अशुचिर्भवति द्विजः ।
भूमौ निक्षिप्य तद्ग्रासः स्नात्वा विप्रो विशुद्ध्यति ॥
भक्षयित्वा तु तद्ग्रासं अहोरात्रेण शुद्ध्यति ।
अशित्वा सर्वमेवान्नं त्रिरात्रेण विशुद्ध्यति ॥
मूत्रोत्सारे शकृत्सर्गे मोहाद्भुङ्क्तेऽथ वा पिबेत् ।
त्रिरात्रं तत्र कुर्वीत इति शातातपोऽब्रवीत् ॥
घृतहीनं तु यो भुङ्क्ते नरस्त्वाहुतिपञ्चकम् ।
पश्चाहूतेन यो भुङ्क्ते सोऽपि चान्द्रायणं चरेत् ॥
एकपङ्क्त्यान्तु भुञ्जानो ब्राह्मणं तु यदा स्पृशेत् ।
तदन्नशिष्टं भुक्त्वा वै गायत्र्यष्टशतं जपेत् ॥

षट्त्रिंशन्मते—

समुच्छिष्टे तु यो भुङ्क्ते भुङ्क्ते वा मुक्तभाजनः ।

एवं वैवस्वतः प्राह भुक्त्वा सान्तपनं चरेत् ॥

आपस्तम्बः—

विप्रो विप्रेण संस्पृष्ट उच्छिष्टेन कथञ्चन ।
आचम्यैव तु शुद्धिः स्यादित्याङ्गिरसभाषितम् ॥
बालापत्या तथा रोगी गर्भिणी वृद्ध एव वा ।
तेषां नक्तं प्रदातव्यं बालानां प्रहरद्वयम् ॥

देवलः—

मानुषास्थि वसां विष्ठामार्तवं मूत्ररेतसी ।
मज्जानं शोणितं स्पृष्ट्वा परस्य स्नानमाचरेत् ॥
तान्येव खानि संस्पृश्य प्रक्षाल्याचम्य शुद्ध्यति ॥

तथा च शङ्खः—

रथ्याकर्दमतोयानि ष्ठीवनाद्येन वा तथा ।
नाभेरूर्ध्वं नरः स्पृष्ट्वा सद्यः स्नानेन शुद्ध्यति ॥

इति श्रीरामकृष्णविरचिते पारस्करगृह्यसूत्रविवरणे संस्कारगणपतौ ब्रह्मचारिव्रतलोपप्रायश्चित्तानि ।

अथ त्रुटितानां मेखलादीनां प्रतिपत्तिमाह । तत्र मनुः—

मेखलामजिनं दण्डमुपवीतं कमण्डलुम् ।
अप्सु प्रास्य विनष्टानि गृहीत्वान्यानि मन्त्रवत् ॥

अन्यच्च—

यज्ञोपवीतमजिनं मौञ्जीं दण्डं च धारयेत् ।
नष्टे भ्रष्टे नवं धृत्वा नष्टं चैतज्जले क्षिपेत् ॥

विधानपारिजाते देवलः—

सावित्र्या दशकृत्वाद्भिर्मन्त्रिताभिस्तदुत्क्षिपेत् ।
विच्छिन्नं चाप्यधोयातं भुक्त्वा निर्मितमुत्सृजेत् ॥

इति श्रीप्रथमशाखीयरामकृष्णविरचिते पारस्करगृह्यसूत्रविवरणे द्वितीयकाण्डे पञ्चमी कण्डिका ।

अथोपनयनप्रयोगः । तत्र पूर्वेद्युस्तद्दिने वा पूर्वाह्णे ज्योतिर्विदुक्ते शुभे काले देशकालौ स्मृत्वा "अस्य कुमारस्य द्विजत्वसिद्ध्या वेदाध्ययनाधिकारार्थं च उपनयनमहं करिष्ये, तदङ्गभूतं गणपतिपूजनपूर्वकं स्वस्तिपुण्याहवाचनं अविघ्नपूजनं मण्डपस्थापनं मातृकापूजनं नान्दीश्राद्धञ्च करिष्ये" । पूर्ववत्सर्वं सम्पाद्य अथापरेद्युः कृतनित्यक्रियः मण्डपे देशकालौ स्मृत्वा "स्वस्योपनेतृत्वाधिकारसिद्धये प्राजापत्यप्रत्याम्नायत्वेन गवा तन्मूल्येन द्रव्येण वा कृच्छ्रत्रयं प्रायश्चित्तमहं करिष्ये" पुनरपि देशकालौ स्मृत्वा "स्वस्योपनेतृत्वाधिकारसिद्धये द्वादशसहस्रं गायत्रीजपमहं करिष्ये" । कुमारेणापि देशकालौ स्मृत्वा "कामचारकामवादकामभक्षणादिदोषापनोदार्थं प्राजापत्यप्रत्याम्नायत्वेन द्रव्येण गवा वा कृच्छ्रत्रयं प्रायश्चित्तमहमाचरिष्ये" । चूडाकरणसहोपनयनपक्षे तु उपनेता पूर्वदिने गणेशपूजनादिनान्दीश्राद्धान्तं कृत्वा परदिनेऽतिक्रान्तं चौलं कृत्वा तत उपनयनाङ्गं वपनं कुर्यात् । अत्र केचिच्चूडाकरणकर्माङ्गवपने कृते सति उपनयनाङ्गवपनं न कर्त्तव्यमिति मन्यन्ते, तदसत् । "प्रतिप्रधानं गुणावृत्ति"रिति न्यायात् । गुणत्वं च तत्संस्कारप्रधानस्याङ्गम् । चूडाकर्मणि चूडाकर्मप्रधानं वपनं तदङ्गम् । उपनयने उपनयनं प्रधानं वपनं तदङ्गमिति । तथा च संस्कारकौस्तुभप्रयोगोऽपि यथा ( उपनयनात्पूर्वदिन कृत्यं कृत्वा परदिनेऽतिक्रान्तचौलं कृत्वा प्रागिव जातचौलं त्वभ्यङ्गस्नानेन स्नापयित्वा मात्रा सह भोजयेत् , तदा ब्रह्मचारिभ्योऽन्नदानमाचारात्कार्यम् । ततो देशकालौ सङ्कीर्त्य "अस्य कुमारस्य द्विजत्वसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं गायत्र्युपदेशङ्कर्तुं तत्प्राच्याङ्गभूतं वापनादि करिष्ये" इति सङ्कल्प्य वपनं कारयेत् । मुख्यशिखाधिकशिखानां चौले धृतानामत्र वापनम् । ततः स्नापितमहताम्बरं बद्धशिखं मङ्गलतिलकं बटुं कुर्युरिति । ) ततो ब्राह्मणत्रयभोजनम् । तत्पङ्क्तौ मुण्डितशिरसं बटुं मात्रा सह भोजयेत् । बहिःशालायां पञ्चभूसंस्कारान् कृत्वा लौकिकाग्नेः स्थापनम् । ततः पुष्पमालादिभिरलङ्कृतं बटुं शुभे मुहूर्ते आचार्यपुरुषाः

आचार्यसमीपमानयन्ति ।ततो वैकल्पिकावधारणम् । "मेखलाबन्धनम् । ऐणेयमजिनम् । दण्डः पालाशः । पूर्वेण ब्रह्मणो गमनम् । उत्तरेण पात्रासादनम् । त्रीणि पवित्रच्छेदनानि । द्वे पवित्रे । मृण्मयी आज्यस्थाली । पालाश्यः समिधः । आसीनाय गायत्रीप्रदानम् । एषात इति समिदाधानम् । मातृपूर्वकं अपरिमिताश्च भिक्षणीयाः । न वाग्यतोऽहःशेषं तिष्ठेदिति पक्षः" ।तत आचार्यो बटुमग्नेः पश्चादवस्थाप्य "ब्रह्मचर्यमागामिति ब्रूहि" इति वदति । "ब्रह्मचर्यमागा"मिति ब्रह्मचारी ब्रूयादिति । ततो "ब्रह्मचार्यसानीति ब्रूही"त्याचार्यः । "ब्रह्मचार्यसानी"ति ब्रह्मचारी ब्रूयात् । अथैनं कुमारं आचार्यो वासः परिधापयति । "येनेन्द्रायेति मन्त्रस्य अङ्गिरा ऋषिः बृहतीच्छन्दः बृहस्पतिर्देवता वस्त्रपरिधाने विनियोगः । ॐ येनेन्द्राय बृहस्पतिर्वासः पर्यदधादमृतम् । तेन त्वा परिदधाम्यायुषे दीर्घायुत्वाय बलाय वर्चसे" इत्यनेन मन्त्रेण । आचार्यस्य मन्त्रपाठः । "इयन्दुरुक्तमिति मन्त्रस्य वामदेव ऋषिः त्रिष्टुप्छन्दः मेखलादेवता मेखलाबन्धने विनियोगः । ॐ इयं दुरुक्तं परिबाधमाना वर्णं पवित्रं पुनती म आगात् । प्राणापानाभ्यां बलमादधाना स्वसा देवी सुभगा मेखलेय"मिति मन्त्रेण मेखलाबन्धनम् । आचार्यस्य मन्त्रपाठः । "यज्ञोपवीतमिति मन्त्रस्य परमेष्ठी ऋषिः त्रिष्टुप्छन्दः लिङ्गोक्ता देवता श्रौतस्मार्तकर्मानुष्ठानसिद्ध्यर्थं उपवीतधारणे विनियोगः । यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् । आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेज" इति मन्त्रेण यज्ञोपवीतधारणम् । बटोर्मन्त्रपाठः । द्विराचम्य "मित्रस्येतिमन्त्रस्य परमेष्ठी ऋषिः त्रिष्टुप्छन्दः लिङ्गोक्ता देवता अजिनधारणे विनियोगः । मित्रस्य चक्षुर्द्धरुणं बलीयस्तेजो यशस्वि स्थविरꣳसमिद्धम् । अनाहनस्यं वसनं जरिष्णुः परीदं वाज्यजिनं दधेह"मिति मन्त्रेण ऐणेयकृष्णाजिनधारणम् । बटोर्मन्त्रपाठः । "यो मे दण्ड इति मन्त्रस्य प्रजापतिर्ऋषिः यजुश्छन्दः दण्डो

देवता दण्डग्रहणे विनियोगः। ॐ यो मे दण्डः परापतद्वैहाय-सोऽधिभूम्याम्। तमहं पुनरादद आयुषे ब्रह्मणे ब्रह्मवर्चसाये"-ति मन्त्रेण दण्डं प्रतिगृह्णाति। बटोर्मन्त्रपाठः। अथाचार्यः स्वकीयमञ्जलिं जलेन पूरयित्वा तेनाञ्जलिस्थेन जलेन माणवकस्याञ्जलिं पूरयति। "आपो हि ष्ठेति तृचस्य सिन्धुद्वीप ऋषिः गायत्रीच्छन्दः आपो देवता उदकासेके विनियोगः। "आपो हि ष्ठा"दित्रिभिर्मन्त्रैः। आचार्यस्यैव मन्त्रपाठः। तत आचार्यो माणवकं प्रेषयति। "सूर्यमुदीक्षस्व" इति प्रैषं ददाति। प्रेषितो माणवकः सूर्यमुदीक्षते। "तच्चक्षुरि"ति मन्त्रेण। बटोर्मन्त्रपाठः। तत आचार्यो माणवकस्य दक्षिणस्कन्धोपरि हस्तं नीत्वा हृदयमालभते। "मम व्रते ते हृदयं दधामि मम चित्तमनु चित्तन्ते अस्तु। मम वाचमेकमना जुषस्व बृहस्पतिष्ट्वा नियुनक्तु मह्यम्" इत्यनेन मन्त्रेण। आचार्यस्यैव मन्त्रपाठः। कुमारस्य दक्षिणहस्तं गृहीत्वा। "को नामासी"त्याचार्य आह। "अमुकशर्माहं भो३" इति बटुर्वदति। पुनराचार्यः पृच्छति। "कस्य ब्रह्मचार्यसी"ति। "भवत" इति बटुः। अथाचार्यः पठति "इन्द्रस्य ब्रह्मचार्यस्यग्निराचार्यस्तवाहमाचार्यस्तवामुकशर्मन्"। अथैनं कुमारं आचार्यः "एनं भूतेभ्यः परिददाति। ॐ प्रजापतये त्वा परिददामि देवाय त्वा सवित्रे परिददाम्यद्भ्यस्त्वौषधीभ्यः परिददामि द्यावापृथिवीभ्यां त्वा परिददामि विश्वेभ्यस्त्वा देवेभ्यः परिददामि सर्वेभ्यस्त्वा भूतेभ्यः परिददाम्यरिष्ट्यै" इत्यनेन मन्त्रेण। अथ बटुः अग्निं प्रदक्षिणीकृत्य आचार्यस्योत्तरत उपविशति। दक्षिणत इति गर्गमतम्। ततो देवताभिध्यानम्। तत्र "प्रजापतिं, इन्द्रं, अग्निं, सोमं, अग्निं, वायुं, सूर्यं, अग्नीवरुणौ, अग्नीवरुणौ, अग्निं, वरुणं सवितारं विष्णुं विश्वान् देवान् मरुतः स्वर्कान्, वरुणं, प्रजापतिं, अग्निं स्विष्टकृतं, आज्येनाहं यक्ष्ये"। ततो ब्रह्मोपवेशनादि पर्युक्षणान्तं कृत्वा ब्रह्मणाऽन्वारब्ध आचार्यः "ॐ प्रजापतये स्वाहा। इदं प्रजापतये। ॐ इन्द्राय स्वाहा। इदं मिन्द्राय०। ॐ अग्नये स्वाहा।

इदमग्नये० । ॐ सोमाय स्वाहा । इदं सोमाय० । ॐ भूः स्वाहा । इदमग्नये० । ॐभुवः स्वाहा । इदं वायवे० । ॐ स्वः स्वाहा । इदं सूर्याय० । ॐ त्वन्नो ऽअग्ने० । इदमग्नीवरुणाभ्यां० । ॐ स त्वन्नो ऽअग्ने० । इदमग्नीवरुणाभ्यां० । ॐ अयाश्चाग्ने० । इदमग्नये० । ॐ ये ते शतं० । इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यश्च० । ॐउदुत्तमं० । इदं वरुणाय० । ॐप्रजापये० । इदं प्र० । ॐअग्नये स्विष्टकृते स्वाहा । इदमग्नये स्विष्टकृते०" । ततः संस्रवप्राशनम् । अथैनं ब्रह्मचारिणमाचार्यः संशास्ति । 'ब्रह्मचार्यसी"-त्याचार्यो वदति । "असानी"त्याह कुमारः । "अपोऽशाने"त्याचार्यः । "अश्नानी"ति कुमारः । "कर्म कुरु"इत्याचार्यः । "करवाणी"ति कुमारः । "मा दिवा सुषुप्थाः" इत्याचार्यः । "न स्वपानि" इति कुमारः । "वाचं यच्छ" इत्याचार्यः । "यच्छानी"ति कुमारः । "समिधमाधेहि" इत्याचार्यः । "आदधानीति" कुमारः । "अपोशान" इत्याचार्यः । "अश्नानी"ति कुमारः । अथास्मै ब्रह्मचारिणे सावित्रीमन्वाह आचार्यः। कथम्भूताय ब्रह्मचारिणे अग्नेरुत्तरतो व्यवस्थिताय प्रत्यङ्मुखायोपविष्टाय पादोपग्रहणपूर्वकमुपसन्नाय आचार्यं समीक्षमाणाय स्वयमपि समीक्षिताय सावित्रीं ब्रूयादाचार्यः । यथा तत्रादौ तण्डुलपूरितपात्रे गणपतिकुलदेवतापूर्वकगायत्र्यक्षराणि लिखेत् । पञ्चोपचारैः षोडशोपचारैर्वा पूजयेत् । ततः प्रणवव्याहृतिपूर्वं प्रथमं पादं पादमध्यापयेत् । द्वितीयेनार्द्धम् । तृतीयेन सर्वाङ्गायत्रीम् । आचार्यकुमारयोः सह पठनम् । ततो ब्रह्मचारी समिदाधानं करोति । तत्र पूर्वमग्नेः सन्धुक्षणम्।पश्चाभिर्मन्त्रैरिन्धनप्रक्षेपणम् । एकमिन्धनं हस्ते गृहीत्वा । ॐ"अग्ने सुश्रवः सुश्रवसं मा कुरु" इत्यनेन मन्त्रेण हस्तस्थमिन्धनं अग्नौ क्षिपेत् । इति प्रथमम् । "यथा त्वमग्ने सुश्रवः सुश्रवा असि" द्वितीयम् । "एवं माᳬसुश्रवः सौश्रवसं कुरु" तृतीयम् । "यथात्वमग्ने देवानां यज्ञस्य निधिपा असि" चतुर्थम् । "एवमहं मनुष्याणां वेदस्य निधिपो भूयासम्" इति पञ्चमम् । ततो दक्षिणहस्तेनोदकं गृहीत्वा प्रदक्षिणमग्निं पर्युक्ष्य एकां समिधं

कर्णे धृत्वा मन्त्रमुच्चारयेत्। "ॐ अग्नये समिधमाहार्षं बृहते जातवेदसे। यथात्वमग्ने समिधा समिद्ध्यस एवमहमायुषा मेधया वर्चसा प्रजया पशुभिर्ब्रह्मवर्चसेन समिन्धे जीवपुत्रो ममाचार्यो मेधाव्यहमसान्यनिराकरिष्णुर्यशस्वी तेजस्वी ब्रह्मवर्चस्यन्नादो भूयासꣳस्वाहा" । इत्यनेन मन्त्रेण कर्णस्थां समिधं अग्नौ प्रक्षिपेत् । अनेनैव मन्त्रेण द्वितीयां तथा तृतीयाम् । "एषा ते अग्ने समि"दनेन मन्त्रेण वा समिदाधानम् । मन्त्रसमुच्चयो वा । तत उपविश्य पूर्ववत्समूहनं कृत्वा पर्युक्ष्य "अग्ने सुश्रव" इत्यादिभिः पञ्चभिर्मन्त्रैः समिन्द्धनत्रयं पञ्च वाग्नौ क्षिपेत्। पुनः प्रदक्षिणमग्निं पर्युक्षणं कृत्वा, ततस्तूष्णीं पाणी प्रतप्य "तनूपा अग्ने" इत्यादिभिर्वक्ष्यमाणैः सप्तभिर्मन्त्रैः प्रतिमन्त्रं मुखविमार्जनम् । "ॐ तनूपा अग्नेऽसि तन्वं मे पाहि ॥ १ ॥ आयुर्दा अग्नेऽस्यायुर्मे देहि ॥ २ ॥ वर्चोदा अग्नेऽसि वर्चो मे देहि ॥ ३ ॥ अग्ने यन्मे तन्वा ऊनं तन्मऽआपृण ॥ ४ ॥ मेधाम्मे देवः सविता आदधातु ॥५॥ मेधान्देवी सरस्वती आदधातु ॥६॥ मेधामश्विनौ देवावाधत्तां पुष्करस्रजौ ॥ ७ ॥" ततोऽङ्गानि स्पृष्ट्वा जपेत् । "अङ्गानि च म ऽआप्यायन्ताम्" इति मन्त्रेण सर्वाङ्गान्यालभेत्। "वाक्च म ऽआप्यायतां" इति मुखं स्पृशेत । "प्राणश्च म ऽआप्यायतां" इति नासिकां स्पृशेत् । "चक्षुश्च म ऽआप्यायता"मिति चक्षुषोः स्पर्शनं सकृत्। "श्रोत्रं च म ऽआप्यायता"मिति दक्षिणं श्रोत्रं स्पृशेत् । अनेनैव वामम् । "यशो बलं च म ऽआप्यायता"मिति मन्त्रपाठमात्रम् । ततो भस्मना ललाटे तिलकं कुर्यात् "त्र्यायुषं जमदग्ने"रिति मन्त्रेण । "कश्यपस्य त्र्यायुष"मिति ग्रीवायाम् । "यद्देवेषु त्र्यायुष"मिति दक्षिणेऽसे। "तन्नो ऽअस्तु त्र्यायुष"मिति हृदये। अथाभिवादनम्। तत्रैवं प्रयोगः-"काश्यपसगोत्रः काश्यपावत्सारनैध्रुवेति त्रिप्रवरः अमुकशर्माहं भो वैश्वानर ! अभिवादयामि" । एवं पुनः गोत्रादिकमुच्चार्य "भो वरुण ! अभिवादयामि" । तथैवाचार्यं गुरुं च । ततः पित्राद्यभिवादने विधिः । नीचोत्तानेन वा दक्षिणपाणिना दक्षिणपादं

गृहीत्वा, तादृशवामेन वामं, शिरः पादयोर्निदध्यात । "**आयुष्मान् भव सौम्य यज्ञदत्त शर्म३न्**" इति प्रत्यभिवादनं पिता कुर्यात् । अथ भिक्षाचर्यचरणम् । ततो ब्रह्मचारी दण्डं गृहीत्वा "**तत्सवितु**"रित्यादित्यमुपस्थाय अग्निं प्रदक्षिणीकृत्य हस्ताभ्यां भिक्षापात्रं धृत्वा प्रथमं मातरं भिक्षेत । "**ॐ भवति ! भिक्षां देहि** । ततो माता पात्रान्तरेण भिक्षां ददाति । दत्तायां भिक्षायां "ॐ **स्वस्ती**"ति ब्रूयात् । त्रिषट् द्वादश अपरिमिता वा भिक्षा भिक्षेत । तां भिक्षामाचार्याय निवेदयेत् । "भैक्ष्यं भुङ्क्ष्वे"त्याचार्यानुज्ञातो भिक्षां स्वीकुर्यात् । अत्र मध्याह्नसन्ध्यां कुर्यात । ततो भोजनं कुर्यात् । इतः प्रभृति सूर्यास्तपर्यन्तं मौनेन तिष्ठेत् । ततः सायङ्काले सन्ध्यावन्दनपूर्वमग्निपरिचरणं पाणिनाग्निं परिसमूहनादि अभिवादनान्तं पूर्ववत् कुर्यात । ततो वाग्विसर्गः । उपनयनाग्निस्त्रिरात्रं धार्यः । "**त्र्यह**"मित्यापस्तम्बः । "**यावद्धुतमाग्निरक्षण**"मिति गर्गपद्धतौ । अथ ब्रह्मचारिनियमाः । अधः शयनम् । अक्षारालवणाशनम् । दण्डधारणं कर्त्तव्यम् । अरण्यात् स्वयं समिधमाहृत्य । सायं प्रातर्मध्याह्ने सन्ध्योपासनं कृत्वा । परिसमूहनानि यथोक्तं अग्निपरिचरणम् । गुरुशुश्रूषां च कुर्यात । सायं प्रातर्भिक्षाशनम् । मधु मांसाशनं न कर्तव्यम् । नद्यादौ शिरसा न मज्जेत् । दण्डवत्सर्वाङ्गमवगाहयेत् । उद्धृतोदकेन वा स्नानं कुर्यात् । आसनस्योपरि मसूरिकाद्युपधानं कृत्वा नोपविशेत् । स्त्रीणां मध्ये न क्रीडेत् । अनृतं न वदेत् । अदत्तं न गृह्णीयात् । स्मृत्यन्तरोक्ताश्च वक्ष्यमाणा नियमा अनुष्ठेयाः । यस्य कर्मणो यः काल उक्तस्तदतिक्रमे अनादिष्टप्रायश्चित्तं कृत्वा कर्तव्यम । तच्च पूर्वमेवोक्तम् ।

**इति श्रीप्रथमशाखीयरामकृष्णविरचिते पारस्करगृह्यसूत्रविवरणे संस्कारगणपतौ उपनयनप्रयोगः ।**

---

अथपुनरुपनयने निमित्तानि । गदाधरभाष्ये । तत्र मनुः—

**अज्ञानात्प्राश्य विण्मूत्रं सुरासंसृष्टमेव च ।**
**पुनः संस्कारमर्हन्ति त्रयो वर्णा द्विजातयः ॥**

विष्णुरपि—"विड्वराहग्रामकुक्कुटगोमांसभक्षणेषु द्विजातीनां प्रायश्चित्तान्ते पुनःसंस्कारं कुर्यात्"। शातातपस्तु—

लशुनं गृञ्जनं जग्ध्वा पलाण्डुं च तथा शुनाम्।
उष्ट्रमानुषकेभाश्व रासभक्षीरभोजनात्॥
उपानयं पुनः कुर्यात्तप्तकृच्छ्रं चरेन्मुहुः॥ इति।

पैठीनसिरपि—"अव्युष्ट्रीमानुषीक्षीरपाने तप्तकृच्छ्रः पुनरुपनयनम्"। यमोऽपि—

भूसुरो मधुपानेन कृते गोभक्षणेऽपि वा।
तप्तकृच्छ्रपरिक्लिष्टो मौञ्जीहोमेन शुद्ध्यति॥

गौतमोऽपि—"अमत्या मद्यपाने तप्तकृच्छ्रस्ततोऽस्य संस्कारो मूत्रपुरीषकुणपरेतसां प्राशनं चे"ति। बौधायनोऽपि—"अमत्या सुरापाने कृच्छ्राब्दपादं चरित्वा पुनरुपनयन"मिति। विधानपारिजाते—

चाण्डालान्नं द्विजो भुक्त्वा सम्यक्चान्द्रायणं चरेत्।
बुद्धिपूर्वन्तु कृच्छ्राब्दं पुनः संस्कारमर्हति॥

वसिष्ठोऽपि—"एतदेव चाण्डालपतितान्नभोजनेषु ततः पुनरुपनयन"मिति। यस्तु देशान्तरगतश्चिरकालाश्रूयमाणसद्भावः पुत्रादिना कृतप्रेतकार्यो यदि जीवन्समागच्छेत्तस्य पुनरुपनयनविधिरुक्तः, विधानपारिजाते सङ्ग्रहे—

जीवन्यदि समागच्छेद्घृतकुम्भे निमज्ज्य च।
उद्धृत्य स्थापयित्वाऽस्य जातकर्मादि कारयेत्॥

स्मृतिचन्द्रिकायां बौधायनस्तु—

सिन्धुसौवीरसौराष्ट्राँस्तथा प्रत्यन्तवासिनः।
अङ्गवङ्गकलिङ्गाँश्च गत्वा संस्कारमर्हति॥

प्रत्यन्तोऽन्त्यदेशः।

हिमवत्काशिकां विन्ध्यं पारं पद्मस्य पश्चिमम्।
तीर्थयात्रां विना गच्छेत्पुनः संस्कारमर्हति॥

आदित्यपुराणेऽपि—

सौराष्ट्रसिन्धुसौवीरानावन्त्यं दक्षिणापथम्।

एतान्देशान्द्विजो गत्वा पुनः संस्कारमर्हति ॥

एतच्च तीर्थयात्रां विना गमने द्रष्टव्यम् । तथा च तत्रैव—

अङ्गवङ्गकलिङ्गेषु सौराष्ट्रमगधेषु च ।
तीर्थयात्रां विना गच्छन्पुनः संस्कारमर्हति ॥

त्रिस्थलीसेतौ—

कर्मनाशाजलस्पर्शात्करतोयाविलङ्घनात् ।
गण्डकीबाहुतरणात्पुनः संस्कारमर्हति ॥

विधानपरिजाते पराशरः—

विण्मूत्रभक्षी शुद्ध्यर्थं प्राजापत्यं समाचरेत् ।
पञ्चगव्यं च कुर्वीत स्नात्वा पीत्वा शुचिर्भवेत् ॥

प्राजापत्याचरणं पञ्चगव्यस्नानं पञ्चगव्यप्राशनं च पुनः संस्कारात्पूर्वमेव कार्यम् । ‘‘प्रायश्चित्तान्ते पुनः संस्कारं कुर्या’’दिति विष्णुस्मृतेः । तत्र विशेषमाह विधानपारिजाते कश्यपः–‘‘चीर्णप्रायश्चित्तः प्राच्यामुदीच्यां वा दिशि गत्वा यत्र ग्रामपशूनां शब्दो न श्रूयते तस्मिन्देशेऽग्निं प्रज्वाल्य ब्रह्मासनमास्तीर्य प्राक्प्रणीतेन विधिना पुनः संस्कारमर्हती’’ति । हारीतः—

रासभं महिषं मेषं बलीवर्दं क्रमेलकम् ।
आरुह्य ब्राह्मणो मोहात्पुनः संस्कारमर्हति ॥

दैवज्ञवल्लभः—

प्रदोषे निश्यनध्याये मन्दे कृष्णे गलग्रहे ।
मधुं विना चोपनीतः पुनः संस्कारमर्हति ॥

गदाधरभाष्ये हेमाद्रिः—

प्रेतशय्याप्रतिग्राही पुनः संस्कारमर्हति ॥ इति ।

अपरार्कादिसर्वग्रन्थेषु पित्रादिव्यतिरेकेण ब्रह्मचारिणः प्रेतकर्मकरणे पुनरुपनयनमुक्तम् । गदाधरभाष्येऽप्येवमेव । वीरमित्रोदये हारीतः—

शिखां छिन्दन्ति ये मोहाद्द्वेषादज्ञानतोऽपि वा ।
पुनः संस्कारमर्हन्ति त्रयो वर्णा द्विजातयः ॥

विशेषमाह वीरमित्रोदये पराशरः--

अजिनं मेखला दण्डो भैक्षचर्या व्रतानि च ।
निवर्तन्ते द्विजातीनां पुनः संस्कारमर्हति ॥

अजिनादि वपनस्याप्युपलक्षणम् । तदाह विष्णुः-"सर्वेष्वेतेषु द्विजातीनां प्रायश्चित्तान्ते भूयः संस्कारं कुर्यात्"। वपनमेखलादण्डभैक्षचर्याव्रतानि पुनः संस्कारकर्मणि वर्जनीयानि । व्रतानि सौम्यप्राजापत्यादीनि महानाम्न्यादीनि वा ।

**इति श्रीप्रथमशाखीयरामकृष्णविरचिते पारस्करगृह्यसूत्रविवरणे संस्कारगणपतौ पुनरुपनयननिमित्तानि ॥**

**अथ पुनरुपनयनविधिः** । तत्र पदार्थक्रमः । श्राद्धम् । वपनम् । विप्रभोजनम् । बटोरपि । अग्निस्थापनम् । अलङ्कृतस्यानयनम् । पश्चादग्नेरवस्थापनम् । ततो ब्रह्मासनादि बर्हिस्तरणान्तं कर्म । ततो "**ब्रह्मचर्यमागा**"मिति वाचनम् । "**ब्रह्मचार्यसानी**"ति च । वासः परिधापयति । मेखलाबन्धनम् । बटोर्मन्त्रपाठः । मन्त्रेण यज्ञोपवीतपरिधानम् । तत आचमनम् । उत्तरीयधारणं मन्त्रेण । दण्डप्रतिग्रहः । दीक्षावद्वा । अञ्जलिनाऽञ्जलिपूरणमद्भिः । प्रैषपूर्वकं सूर्यावेक्षणम् । हृदयालम्भनम् । दक्षिणहस्तग्रहणादि भूतेभ्यः परिदानान्तम् । ततो हस्तविसर्गः । ततः प्रदक्षिणं परिक्रम्योपवेशनम् । तत आचार्यस्योपयमनादानादि पर्युक्षणान्तम् । आचार्यस्यान्वारम्भो माणवककर्तृकः । तत आघाराद्याश्चतुर्दशाहुतयः । संस्रवप्राशनादि दक्षिणादानान्तम् । ततो ब्रह्मचारिशासनं "**ब्रह्मचार्यसी**"त्यादि पूर्ववत् । ततो ब्राह्मणभोजनम् । इति **पुनरुपनयनविधिः** ॥

**अथ सावित्रव्रतादेशः** । गदाधरभाष्ये—तत्र उपलेपनादि बर्हिस्तरणान्तम् । ततः कुमारं उत्थाय हस्तेनोदकं गृहीत्वाऽग्निमुखो भूत्वा "**ॐ अग्ने व्रतपते व्रतं चरिष्यामि सावित्रं सद्यस्कालं तच्छकेयं तन्मे राध्यता**"मिति व्रतग्रहणं करोति । ततो ब्रह्मचारिण उपवेशनम् । ब्रह्मचारिण आचार्यस्यान्वारम्भः सर्वास्वाहुतिषु । तत उपयमनादानादि

आज्यभागान्तम् । ततो वेदाहुतयः षोडश । प्रतिवेदं चतस्रश्चतस्रः । एवं षोडश । ततः "प्रजापतये देवेभ्य" इत्याद्याः सप्त । ततो महाव्याहृत्यादि स्विष्टकृदन्ताश्चतुर्दश । आज्यभागाद्या एताः सप्तत्रिंशदाहुतयो व्रतानामादेशे विसर्गे च होतव्याः । ततः संस्रवप्राशनादि ब्रह्मणे दक्षिणादानान्तम् । तत "अथास्मै सावित्रीमन्वाहे"त्यादि यथोक्तं सावित्रीप्रदानम् । ततो माणवकस्य "तत्सवितु"रित्यनेन मन्त्रेण सन्ध्योपासनम् । सन्ध्योपासनान्ते "तत्सवितु"रित्यनेनैवाग्निपरिचरणम् । तदन्ते गोत्रनामग्रहणपूर्वकं सर्वेषामभिवादनम् । ततो भिक्षानिवेदनम् । "भिक्षां भोः" इत्येव । आचार्यस्तु "भिक्षां भोः" इत्येव भिक्षां स्वीकुर्यात् । ततो ब्रह्मचारी शुचिर्भूत्वा स्वासने उपविशेत् । ततो बर्हिर्होमादि ब्राह्मणभोजनान्तम् । अथानन्तरं सावित्रीव्रतवत्सन्ध्योपासनाग्निपरिचरणानुष्ठानम् । तत उपलेपनादि बर्हिस्तरणान्तम् । तत उत्थाय हस्तेनोदकं गृहीत्वाऽग्निमुखो भूत्वा "ॐ अग्ने व्रतपते व्रतमचारिषं सावित्रं सद्यस्कालं तदशकं तन्मेऽराधी"ति मन्त्रेण सावित्रव्रतोत्सर्गं करोति । तत उपयमनकुशादानादि पर्युक्षणान्तम् । अन्वारम्भः आघारावाज्यभागौ वेदाहुतयः षोडश प्रजापतये इत्याद्याः सप्त महाव्याहृत्यादि स्विष्टकृदन्ताश्चतुर्दश । एवं सप्तत्रिंशदाहुतयः । ततः प्राशनादिभोजनान्तं पूर्ववत् । सावित्रव्रतादेशे ब्रह्मणे दक्षिणान्ते सावित्र्या सन्ध्यावन्दनम् । अग्निपरिचरणं च । यदनुष्ठितं व्रतोत्सर्गे तदभावः । ततः "अप्स्वन्त"-रिति दण्डस्याप्सु प्रक्षेपः । "वातो वा"इति मेखलाया अप्सु प्रक्षेपः । "वातरꣳहा भवे"ति यज्ञोपवीतस्याप्सु प्रक्षेपनम् । "नमो वरुणाये"-ति कुमारस्य दधिघृतशर्कराणां प्रत्येकं प्राशनम् । इति सावित्रव्रतोत्सर्गः ॥

अथाग्नेयव्रतम् । तत्रोपलेपनादि बर्हिस्तरणान्तम् । ततो ब्रह्मचारिणो मेखलाबन्धनं यज्ञोपवीतधारणं दण्डसमर्पणं ग्रहणं च । मेखलादिषु पूर्वोक्ता एव मन्त्राः । ततो व्रतग्रहणं पूर्ववत् । "ॐ अग्ने व्रतपते व्रतं चरिष्यामि आग्नेयं सांवत्सरिकं तच्छकेयं तन्मे राध्यता"मिति । "आग्नेयं यथाकालं तच्छकेयं तन्मे राध्यता"मितीदानीं प्रयोगं

कुर्वन्ति। ततः स्वस्थाने उपवेशनम्। आचार्यान्वारम्भः। तत उपयमनकुशादानादि पर्युक्षणान्तम्। आघाराद्याः स्विष्टकृदन्ताः सप्तत्रिंशदाहुतयोऽत्रापि होतव्याः। ततः प्राशनादि ब्राह्मणभोजनान्तम्। ततः स्मृत्युक्तं माध्याह्निकं सन्ध्योपासनम्। ततोऽग्नेः पश्चादुपविश्य "**पाणिनाऽग्निं परिसमूहती**"त्यादि आयुष्यकरणान्तं यथोक्तम्। तत्र विशेषः गात्रालम्भने कर्कमतेऽध्याहारः। "**अङ्गानि च म ऽआप्यायन्ता**"मिति गर्गपद्धतौ। त्र्यायुषकरणान्ते "**शिवो नामे**"ति जपः। यदि बटुर्मेधाकामः स्यात्तदा "**सदसस्पति**"मित्यृचा मेधां याचते। श्रीकामश्चे"**दिमम्म**" इति श्रेयो याचते। ततो मेखलास्थानप्रवरान्दक्षिणोपचारेण स्पृष्ट्वा "**ऽमुकसगोत्रोऽमुकशर्माहं भो वैश्वानर! अभिवादयामि**"। एवं वरुणाचार्यवृद्धानामभिवादनम्। ततो भिक्षाचर्यचरणम्। गुरुनिवेदनम्। अनुज्ञातो भिक्षां स्वीकृत्य मातृहस्ते समर्पयति। ततो बर्हिर्होमादि ब्राह्मणभोजनान्तम्। ततः सन्ध्याकाले अञ्जलिप्रक्षेपान्ते सूर्योपस्थानं वारुणीभिर्ऋग्भिः "**इमं मे वरुणे**"त्यादिभिः। "**सꣳसृजे**"त्यादि मन्त्रः प्रातः। "**उद्वय**"मित्यादिभिर्मध्याह्ने। इति शाखान्तरविषयम्। कातीयानान्तु "**उद्वय**"मित्यादि सन्ध्यात्रये। ततो दण्डं गृहीत्वाऽग्निपरिचरणम्। मध्याह्ने सायाह्ने च सन्ध्योपासनान्ते प्रतिदिनमग्निपरिचरणम्। एके प्रातःकालेऽप्यग्निपरिचरणमिच्छन्ति। अग्निपरिचरणान्ते वाग्विसर्गः। पूर्वोक्ता एव ब्रह्मचारिधर्मा ज्ञेयाः। सन्ध्योपासनादीनि स्वस्वकालेन कर्तव्यानि। तेषां कालातिक्रमे कर्मणां श्रेषे प्रायश्चित्तमुच्यते। परिसमूहनादि भूसंस्कारं कृत्वा"**ऽन्वग्नि**"रिति मन्त्रेणाग्नेराहरणम्। "**पृष्टो दिवी**"ति स्थापनम्। "**ताꣳसवितुस्तत्सवितुर्विश्वानि देवे**"त्यादिभिः सावित्रमन्त्रैस्त्रिभिः प्रज्वालनम्। नात्र ब्रह्मोपवेशनादि। पूर्णाहुतिवदाज्यं संस्कृत्यानादिष्टं कार्यम्। अथाग्नेयव्रतस्थितो ब्रह्मचारी "**समिधाग्निन्दुवस्यते**"त्येवमादि आग्नेयवेदविभागं संवत्सरपर्यन्तं पठित्वा व्रतमुत्सृजति। ततः संवत्सरे परिपूर्णे आग्नेयव्रतविसर्गः। तत्र परिसमूहनादि ब्राह्मणभोजनान्तमाग्नेयव्रतादेशवद्भवति। एतावान्विशेषः।

यस्मिन्काले आग्नेयव्रतग्रहणं कृतं तस्मिन्काले सन्ध्यावन्दनम् । अग्निपरिचरणम् । आग्नेयव्रतविसर्गः । "अग्ने व्रतपते व्रतमचारिषं सांवत्सरिकं तदशकं तन्मेऽराधी"ति मन्त्रेण । ततोऽनन्तरमामिक्षानिवृत्तिः । दण्डादीनामप्सु प्रक्षेपः । व्रतादौ ग्रहणं येषाम् । इति आग्नेयविसर्गः ॥

अथ शुक्रियव्रतादेशः । तत्र उपलेपनादि बर्हिस्तरणान्तं कृत्वा मेखलायज्ञोपवीतदण्डानां धारणपूर्वकं व्रतग्रहणम् । "अग्ने व्रतपते व्रतं चरिष्यामि शुक्रियं सांवत्सरिकं तच्छकेय"मिति शेषः । ततः उपयमनादि ब्राह्मणभोजनान्तमाग्नेयव्रतादेशवत् । शुक्रियव्रते स्थित "ऋचं वाच"मित्यादि शुक्रियेनेदं विभागं पठति । संवत्सरं यावत् । उत्तमेऽहनि अपराह्णकालान्ते निशामुखे त्रिगुणेन पटेन एकस्यां दिशि बद्धेन नाभिमात्रं यावन्माणकस्य प्रच्छादनम् । मूर्धानमारभ्य ग्रन्थेः शिरस उपरि करणम् । ततः सावित्र्या वेदाशिरसा "हिरण्मयेन पात्रेणे"ति मन्त्रेणैवावगुण्ठनम । एवं प्रच्छादितो ब्रह्मचारी सूर्योदयं यावत्तिष्ठति । रात्रौ ग्रामे वा गोष्ठे वा देवायतने वाधः शयनम् । रात्रौ गेहे यदि स्थितिस्तदा व्युष्टायां रात्रौ ग्रामाद्बहिर्गमनम् । ततो गुण्ठनीविसर्गः । ततो "ऽदृश्रमस्योदुत्यश्चित्रन्देवाना"मित्यादिनामुदितेऽर्के जपः । ततो व्रतस्थाने माणवकमानीय शुक्रियव्रतस्य विसर्गः । तत्र परिसमूहनादि स्तरणान्तम् । ततः प्राकृतं सन्ध्योपासनम् । अग्निस्वीकरणम । ततोऽ"ग्ने व्रत० मचारिषं शुक्रियं सांवत्सरिकन्तद०धी"ति मन्त्रेणोत्सर्गः । तत उपयमनादानादि ब्राह्मणभोजनान्ते । ततस्ताम्रपात्रे उदकप्रक्षेपः । "द्यौः शान्ति"रिति शान्तिकरम् । शान्तिपात्रं अवगुण्ठनीवस्त्रं च गुरवे दद्यात् । ततो"ऽप्स्वन्तरमृत"मित्यादिभिः पूर्ववत्प्रत्यृचं दण्डमेखलायज्ञोपवीतदण्डानां अप्सु प्रक्षेपः । दधिघृतशर्कराणां "नमो वरुणाये"ति प्रतिमन्त्रं प्राशनम । ततो वपनम् । व्रतग्रहणस्यादौ सर्वत्र शुक्रियादिषु मेखलायज्ञोपवीतदण्डानां धारणम् ॥

अथौपनिषद्व्रतम् । उपलेपनादि बर्हिस्तरणान्तम् । ततोऽ"ग्ने व्र० औपनिषदं सांवत्सरिकं तच्छकेयं तन्मे राध्यता"मिति व्रतग्र-

हणम्। तत उपयमनादानादि ब्राह्मणभोजनान्तम्। औपनिषदे व्रते स्थितो "द्वयाह प्राजापत्या" इत्याद्यौपनिषदवेदविभागं संवत्सरं यावत्पठति। तदुत्तमेऽहनि निशामुखे अवगुण्ठनीवस्त्रेण प्रच्छादनादि। उदिते "अदृश्रमस्योदुत्तमं चित्रन्देवाना"मिति जपान्तं शुक्रियवत्। ततो व्रतस्थाने माणवकमानीय व्रतविसर्गः। तत्र परिसमूहनादि बर्हिस्तरणान्तं कृत्वा पूर्ववत्सन्ध्योपासनमग्निपरिचरणं च। ततो "ऽग्ने व्रत० मचारिषमौपनिषदं सांवत्सरिकं तद०धी"ति व्रतविसर्गः। तत उपयमनादानादि ब्राह्मणभोजनान्तम्। ताम्रे उदकप्रक्षेपः। "द्यौः शान्ति"रिति शान्तिकरणम्। भाजनवस्त्रयोराचार्याय दानम्। दण्डादीनामप्सु प्रक्षेपः। दध्यादीनां प्राशनम्। इति औपनिषदं व्रतम्॥

अथ शौक्रभव्रतादेशः। तत्र परिसमूहनादि ब्राह्मणभोजनान्तमौपनिषदव्रतादेशवत्। व्रतग्रहणे "शौक्रभं सांवत्सरिक"मिति प्रयोगः। शौक्रभिनीनां ऋचां पाठो व्रते स्थितस्य। अत्राप्युत्तमेऽहनि निशामुखे पटेन प्रच्छादनादि उदिते जपान्तं पूर्ववत्। ततो व्रतस्थाने माणवकमानीय व्रतविसर्गः। तत्रैवं परिसमूहनादि बर्हिस्तरणान्तम्। ततः सन्ध्योपासनादि। ततो व्रतविसर्गः। "अग्ने० रिषं शौक्रभं सांवत्सरिकं तद०धी"ति मन्त्रः। तत उपयमनादानादि ब्राह्मणभोजनान्तम्। तत उदकं पात्रे कृत्वा "द्यौः शान्ति"रिति शान्तिकरणम्। पात्रवस्त्रयोर्गुरवे दानम्। दण्डादीनामप्सु प्रक्षेपः। दधिमधुशर्कराणां "नमो वरुणाये"ति प्रत्यृचं प्राशनम्। ततो वपनम्। इति शौक्रभम्॥

अथ गोदानव्रतादेशः। तत्र परिसमूहनादि ब्राह्मणभोजनान्तम्। व्रतग्रहणस्यादौ मेखलायज्ञोपवीतदण्डानां धारणम्। "गोदानं सांवत्सरिक"मिति मन्त्रे विशेषः। अस्मिन्व्रते अवगुण्ठन्यादीनामभावः। "त्रिष्ववगुण्ठनꣳ शुक्रियादिष्वि"ति सूत्रणात्। ततः संवत्सरे पूर्णे गोदानव्रतविसर्गः। तत्र परिसमूहनादि बर्हिस्तरणान्तम्। ततः सन्ध्योपासनादि। "अग्ने० रिषं गोदानं सांवत्सरिकं तद०धी"ति मन्त्रेणोत्सर्गः। उपयमनादानादि ब्राह्मणभोजनान्तम्। अस्मिन्विसर्गे दण्डमेख-

लायज्ञोपवीतानामप्सु प्रक्षेपाभावः । आचार्याय गोमिथुनदानम् । समाप्तानि व्रतानि । इति गर्गमते उपनयने पदार्थक्रमो व्रतानि च । इमानि च व्रतानि प्रक्षिप्तसूत्रे पठितानि । कर्कमतानुसारिभिरप्यनुष्ठेयानि । स्मृत्यन्तरे केषांचित् चत्वारिंशत्संस्कारे पाठात् ।

इति श्रीप्रथमशाखीयरामकृष्णविरचिते पारस्करगृह्यसूत्र-
विवरणे संस्कारगणपतौ उपनयने व्रतानि ।

## ( अथ षष्ठी कण्डिका )

**वेदꣳ समाप्य स्नायाद्ब्रह्मचर्यं वाऽष्टाचत्वारिꣳशकं द्वादशकेऽप्येके गुरुणाऽनुज्ञातो विधिर्विधेयस्तर्कश्च वेदः षडङ्गमेके न कल्पमात्रे कामं तु याज्ञिकस्योपसंगृह्य गुरुꣳ समिधोऽभ्याधाय परिश्रितस्योत्तरतः कुशेषु प्रागग्रेषु पुरस्तात्स्थित्वाऽष्टानामुदकुम्भानां येऽप्स्वन्तरग्नयः प्रविष्टा गोह्य उपगोह्यो मयूखो मनोहा स्खलो विरुजस्तनुदूषुरिन्द्रियहा तान्विजहामि यो रोचनस्तमिह गृह्णामीत्येकस्मादपो गृहीत्वा तेनाभिषिञ्चते तेन मामभिषिञ्चामि श्रियै यशसे ब्रह्मणे ब्रह्मवर्चसायेति येन श्रियमकृणुतां येनावमृशताꣳसुराम् । येनाक्ष्यावभ्यषिञ्चतां यद्वा तदश्विना यश इत्यापोहिष्ठेति च प्रत्यृचं त्रिभिस्तूष्णीमितरैरुदुत्तममिति मेखलामुन्मुच्य दण्डं निधाय वासोऽन्यत्परिधायादित्यमुपतिष्ठत उद्यन्भ्राजभृष्णुरिन्द्रो मरुद्भिरस्थात्प्रातर्यावभिरस्थाद्दशसनिरसि दशसनिं मा कुर्वाविदन्मागमयोद्यन्भ्राजभृष्णुरिन्द्रो मरुद्भिरस्थाद्दिवा यावभिरस्थाच्छतसनिरसि शतसनिं मा कुर्वाविदन्मागमयोद्यन्भ्राजभृष्णुरिन्द्रो मरु-**

द्विरस्थात्साथं यावभिरस्थात्सहस्रसनिरसि सहस्रसनिं मा कुर्वाविदन्मागमयेति दधि तिलान्वा प्राश्य जटालोमनखानि सꣳहृत्यौदुम्बरेण दन्तान्धावेताऽन्नाद्याय व्यूहध्वꣳ सोमो राजाऽयमागमत्। स मे मुखं प्रमाक्ष्यते यशसा च भगेन चेत्युत्साद्य पुनः स्नात्वाऽनुलेपनं नासिकयोर्मुखस्य चोपगृह्णीते प्राणापानौ मे तर्पय समानव्यानौ मे तर्पय चक्षुर्म्मे तर्प्पय श्रोत्रं मे तर्पयेति पितरः शुन्धध्वमिति पाण्योरवनेजनं दक्षिणा निषिच्यानुलिप्य जपेत्सुचक्षाऽअहमक्षीभ्यां भूयासꣳ सुवर्चा मुखेन। सुश्रुत्कर्णाभ्यां भूयासमित्यहतं वासो धौतं वाऽमौत्रेणाच्छादयीत परिधास्यै यशोधास्यै दीर्घायुत्वाय जरदष्टिरस्मि। शतञ्च जीवामि शरदः पुरूची रायस्पोषमभिसंव्ययिष्य इत्यथोत्तरीयं यशसा मा द्यावापृथिवी यशसेन्द्राबृहस्पती। यशो भगश्च माविदद्यशो मा प्रतिपद्यतामित्येकश्चेत्पूर्वस्योत्तरवर्गेण प्रच्छादयीत। सुमनसः प्रतिगृह्णाति या आहरज्जमदग्निः श्रद्धायै मेधायै कामायेन्द्रियाय। ता अहं प्रतिगृह्णामि यशसा च भगेन चेत्यथावबध्नीते यद्यशोऽप्सरसामिन्द्रश्चकार विपुलं पृथु। तेन सङ्ग्रथिताः सुमनस आबध्नामि यशो मयीत्युष्णीषेण शिरो वेष्टयते युवा सुवासा इत्यलङ्करणमसि भूयोऽलङ्करणं भूयादिति कर्णवेष्टकौ वृत्रस्येत्यक्ष्यङ्क्तेऽश्चिणी रोचिष्णुरसीत्यात्मानमादर्शे प्रेक्षते छत्रं प्रतिगृह्णाति बृहस्पतेश्छादिरसि पाप्मनो मामन्तर्धेहि तेजसो यशसो माऽन्तर्धेहीति प्रतिष्ठे स्थो विश्वतो मा पातमित्युपानहौ प्रतिमुञ्चते विश्वाभ्यो मा नाष्ट्राभ्यस्परिपाहि सर्वत इति वैणवं दण्डमादत्ते दन्तप्रक्षालनादीनि नित्यमपि वासश्छत्रोपानहश्चापूर्वाणि चेन्मन्त्रः॥ ६॥

"वेद२ँ समाप्य स्नाया"दिति सूत्रम्। वेदं मन्त्रब्राह्मणात्मकं यथोक्तविधिना समाप्य स्नायात्। स्नानशब्देन समावर्तनसंस्कार उच्यते। अत्र समाप्य इत्यनेनैव सूत्रेण वेदारम्भः सूचितः। न ह्यारम्भं विना समाप्तिर्दृश्यते। अतो वेदारम्भः कार्यः। अथ ब्रह्मचर्यकालावधिमाह "ब्रह्मचर्यं वाष्टाचत्वारि२ँशक"मिति सूत्रम्। अथ वा ब्रह्मचर्यव्रतं अष्टाचत्वारिंशकं अष्टाचत्वारिंशद्वर्षं निर्वर्त्य समाप्य अवसानं प्राप्य गुरुणाऽनुज्ञातः स्नायादिति सम्बन्धः। वेदान् वेदौ वेदं वा प्रतिवेदं द्वादशाब्दानीति न्यायेनाष्टाचत्वारिंशद्वर्षाणि ब्रह्मचर्यं भवति। यदा त्रीन् तदा षट्त्रिंशत्। यदा द्वौ तदा चतुर्विंशतिः। यदा त्वेकं तदा द्वादशेति व्याख्येयम्। न तु वेदं वेदं प्रतीति कमनीयम्। तथा प्रत्येकस्मिन् वेदेऽष्टाचत्वारिंशद्वर्षाणीति न्यायेन चतुर्षु वेदेषु द्विनवत्युत्तरं शतं वर्षाणि ब्रह्मचर्यमापद्येत तच्चासम्भवमिति, शतायुष्ट्वविरोधात्। अत एव देवलः—"अतः परमष्टाचत्वारिंशद्वार्षिकीं वेदचर्यामधितिष्ठेत्तदशक्तश्चेच्छट्त्रिंशद्वार्षिकीं चतुर्विंशद्वार्षिकीं द्वादशवार्षिकीं वेति"। अशक्तश्चतुर्वेदाध्ययनाशक्तः। एवमुत्तरत्रापि व्याख्येयम्। यमोऽपि—

वसेद्द्वादश वर्षाणि चतुर्विंशतिमेव वा।
षट्त्रिंशतं वा वर्षाणि प्रतिवेदं व्रतं चरेत्॥ इति।

गुरुगृहे वसेदित्यर्थः। "द्वादशेकेऽप्येके"इति सूत्रम्। एके आचार्याः द्वादशवार्षिकव्रतं समाप्य स्नानमिच्छन्ति। "गुरुणानुज्ञात" इति सूत्रम्। गुर्वनुज्ञा च समावर्तनकर्माङ्गं न तु स्नानकालानन्तरमेतत्। तत्र वेदशब्देन किमुच्यत इत्याह "विधिर्विधेयस्तर्कश्च वेद"इति सूत्रम्। विधीयत इति विधिः। "दर्शपौर्णमासाभ्यां यजेत। अग्निहोत्रं जुहुया"दित्यादि विधायकं वाक्यम्। विधीयते विनियुज्यते ब्राह्मणवाक्येन कर्माङ्गत्वेनेति विधेयो मन्त्रः "इषे त्वा"दिः। तर्कशब्देनार्थवादो विधीयते तर्क्यते ह्यनेन सन्दिग्धोऽर्थः। यथा "अक्ताः शर्करा उपदधाति तेजो वै घृत"मिति। अञ्जनं तैलवसादिनापि सम्भवति, तत्र "तेजो वै घृत"मिति घृतसंस्तवात् तर्क्यते घृताक्ता इति। तेन

विध्यर्थवादमन्त्रा वेदशब्देनाभिधीयन्ते इत्युक्तम् । तर्कः कल्पसूत्रमिति भर्तृयज्ञः, तर्को मीमांसेति कल्पतरुः । चशब्दान्नामधेयानां सङ्ग्रह इति हरिहरः । "षडङ्गमेके" इति सूत्रम् । शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति षड्भिरङ्गैरुपेतमेके आचार्या वेदमिच्छन्ति । तमधीत्य स्नायादित्यन्वयः । स्नानं च द्वितीयाश्रमप्रतिपत्तिः । तदनुष्ठानयोग्यता च षडङ्गवेदेऽधिगते भवति । अत एवोच्यते "न कल्पमात्रे" इति सूत्रम् । कल्पशब्देन च ग्रन्थमात्रमभिधीयते कल्पमात्रे ग्रन्थमात्रे मन्त्रब्राह्मणे वा अधीते न स्नानमिच्छन्ति, न हि ग्रन्थमात्राध्ययनेन कर्मानुष्ठानयोग्यता भवति । तस्मादर्थतो ग्रन्थतश्चाधिगम्य स्नानमिति । "कामं तु याज्ञिकस्ये"ति सूत्रम् । यज्ञं वेदेति याज्ञिकः । तुशब्दः पक्षव्यावृत्तौ, यज्ञानां संस्कारे पाठात् ॥

**इति श्रीप्रथमशाखीयरामकृष्णविरचिते पारस्करगृह्यसूत्रविवरणे संस्कारगणपतौ उपनयने व्रतानां पदार्थक्रमः ॥**

---

अथ वेदारम्भः । "वेदꣳसमाप्य स्नाया"दिति सूत्रम् । समाप्य इत्यनेनैव सूत्रेण प्रारम्भः सूचितः । नह्यारम्भं विना समाप्तिर्दृश्यते । अतो-वेदारम्भ उक्तो गृह्यकारिकायाम्—

ब्रह्मचारिप्रसङ्गेन वेदारम्भोऽधुनोच्यते ।
असुप्ते तु हरौ स स्यान्नानध्याये शुभेऽहनि ॥
नास्तङ्गते सिते जीवे बाले वृद्धे मलिम्लुचे ।
षष्ठीं रिक्तां शनिं सोमं भौमं हित्वेरितोडुनि ॥
मृगादिपञ्चधिष्ण्येषु मूलाश्विन्योः करत्रये ।
पूर्वासु तिसृषूपेन्द्रभत्रये केन्द्रगैः शुभैः ॥
व्रतादेशनिमित्तन्तु मातृपूजनपूर्वकम् ।
श्राद्धं कृत्वा यमेत्प्राणाँस्ततः सङ्कल्पमुच्चरेत् ॥
यजुर्वेदव्रतादेशं करिष्येऽथ विकल्पनम् ।
स्थापयेल्लौकिकं वह्निं स्थले भूशुद्धिपूर्वकम् ॥

ध्यायेद्देवानथाघारावाज्यभागौ तु पूर्वकान् ।
अन्तरिक्षं ततो वायुं ब्रह्माणं तदनन्तरम् ॥
छन्दांसि च स्मरेदत्र प्रजापतिमनुस्मरेत् ।
देवानृषींस्ततः श्रद्धां मेधां च सदसस्पतिम् ॥
ततोऽनुमतिमाज्येन सर्वान्भूरादिकाँस्ततः ।
अग्निस्विष्टकृदन्ताः स्युरेता यक्ष्येऽत्र देवताः ॥
ब्रह्मणो वरणाद्याज्यभागान्तं पूर्ववद्भवेत् ।
जुहुयादाज्यभागान्ताः स्थाल्याज्येनाहुतीरिमाः ॥
स्वाहान्वितान्तरिक्षाय वायवे ब्रह्मणे तथा ।
ततश्छन्दोभ्य इत्येवं प्रजापतय इत्यनु ॥
देवेभ्यश्च ऋषिभ्यश्च श्रद्धायै तदनन्तरम् ।
मेधायै वाऽथ सदसस्पतये हूयतेऽपि च ॥
ततोऽनुमतये भूराद्याश्च स्विष्टकृदन्तिकाः ।
प्राशनादि विमोकान्तं कृत्वा विघ्नेशपूजनम् ॥
सरस्वतीं हरिं लक्ष्मीं स्वविद्यां पूजयेद्द्विजः ।
ऋग्वेदेऽधीयमाने स्यात्पृथिव्या अग्नये हुती ॥
ततो ब्रह्मण इत्यादि विमोकान्तं च पूर्ववत् ।
सामवेदे दिवे स्वाहा सूर्यायेत्यथ पूर्ववत् ॥
दिग्भ्यश्चन्द्रमसे स्वाहाऽथर्ववेदेऽपि हूयते ।
एक एव व्रतादेशो यदि स्याद् ब्रह्मचारिणाम् ॥
आघारावाज्यभागौ च पृथिव्या अग्नये ततः ।
ब्रह्मणेत्यनुच्छन्दोभ्यस्त्वन्तरिक्षाय वायवे ॥
पुनर्द्वे ब्रह्मणे च्छन्दोभ्यो दिवे तदनन्तरम् ।
सूर्याय ब्रह्मणे तद्वच्छन्दोभ्यश्च पुनस्ततः ॥
दिग्भ्यश्चन्द्रमसे तद्वद्ब्रह्मणे द्वे जुहोत्यथ ।
प्रजापतय इत्याद्याः स्युस्तन्त्रेणात्र सप्त वै ॥
सर्वत्रेति पृथग्योगकरणादित्ययं क्रमः ।

कुर्यात्कर्मैतदाचार्यो वृद्ध्यादिश्रुतसंस्कृतिम् ॥
तत्र प्रत्यङ्मुखायोपविष्टायानवमीक्षते ।
वेदारम्भमनुब्रूयाद्यथाशास्त्रमतन्द्रितः ॥

अथाध्ययनप्रकारः । तत्र याज्ञवल्क्यः ।

गुरुं चैवाप्युपासीत स्वाध्यायार्थं समाहितः ॥

मनुश्च—

अध्येष्यमाणस्त्वाचान्तो यथाशास्त्रमुदङ्मुखः ॥
ब्राह्मलिश्च कृतोऽध्याप्यो लघुवासा जितेन्द्रियः ।
ब्रह्मारम्भेऽवसाने च पादौ ग्राह्यौ गुरोः सदा ॥
व्यत्यस्तपाणिना कार्यमुपसङ्ग्रहणं गुरोः ।
सव्येन सव्यः स्प्रष्टव्यो दक्षिणेन तु दक्षिणः ॥
ब्रह्मणः प्रणवं कुर्यादादावन्ते च सर्वदा ।
स्रवत्यनोङ्कृतं पूर्वं परस्ताच्च विशीर्यते ॥
प्राञ्जलिः पर्युपासीत पवित्रैश्चैव पावितः ।
प्राणायामैस्त्रिभिः पूतस्तत ॐकर्तुमर्हति ॥
अध्येष्यमाणश्च गुरुर्नित्यकालमतन्द्रितः ।
अधीष्व भो २ इति ब्रूयाद्विरामोऽस्त्विति वारयेत् ॥
नोदितो गुरुणा नित्यमप्रणोदित एव वा ।
कुर्यादध्ययने योगमाचार्यस्य सुतेषु च ॥

दक्षः—

द्वितीये तु तथा भागे वेदाभ्यासो विधीयते ।
वेदस्वीकरणं पूर्वं विचाराभ्यसनं जपः ॥

मनुः—

नित्यमुद्धृतपाणिः स्यात्स्वाध्यायार्थं समाहितः ।
आस्यतामिति चोक्तः सन्नासीताभिमुखं गुरोः ॥
हीनान्नवस्त्रवेषः स्यात्सर्वदा गुरुसन्निधौ ॥

हीनान्नवस्त्रवेषः गुर्वपेक्षया ।

उत्तिष्ठेत्प्रथमं चास्य चरमं चैव संविशेत् ॥

पाणिनीयशिक्षायाम्—

हस्तेन वेदं योऽधीते स्वरवर्णार्थसंयुतम् ।
ऋग्यजुःसामभिः पूतो ब्रह्मलोके महीयते ॥
हस्तहीनन्तु योऽधीते स्वरवर्णविवर्जितम् ।
ऋग्यजुःसामभिर्दग्धो वियोनिमधिगच्छति ॥

वेदः सार्थोऽध्येतव्य इति । व्यासः—

वेदस्याध्ययनं सर्वं धर्मशास्त्रस्य चैव हि ।
अजानतोऽर्थं तद्व्यर्थं तुषाणां कण्डनं यथा ॥

गृह्यकारिकायाम्—

मेखलाजिनदण्डानां धारिभिर्ब्रह्मचारिभिः ।
वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजातिभिः ॥
भिक्षा शिलिर्गुरोर्नित्यं शुश्रूषणपरैस्तथा ।
आसमाप्तेर्व्रतं कार्यं वेदस्य विधिवद्द्विजैः ॥
पारम्पर्यगतो येषां वेदः सपरिबृंहणः ।
तच्छाखं कर्म कर्तव्यं तच्छाखाध्ययनं तथा ॥
अधीत्य शाखामात्मीयां परशाखां ततः पठेत् ।
स्वशाखां तु परित्यज्य शाखारण्डः स उच्यते ॥
एवमध्ययनं कुर्वन्ब्रह्मसायुज्यमाप्नुयात् ।

प्रथमवेदारम्भन्तु उपाकर्म कृत्वा कुर्यात् । तदुक्तं गृह्ये—

इत्युक्तं शौनकेनोपाकर्मणोऽनन्तरं भवेत् ।
एतत्प्रथमतो वेदारम्भणं प्राह गौतमः ॥

इति गणपतौ वेदारम्भः ॥

अथ वेदारम्भप्रयोगः । उपनयनानन्तरं ज्योतिर्विदादिष्टे मुहूर्ते आचार्यो देशकालौ स्मृत्वा "अस्मिन्पुण्याहे अस्य ब्रह्मचारिणो वेदारम्भनिमित्तं पुण्याहवाचनं मातृकापूजनं नान्दीश्राद्धं च करिष्ये· निर्विघ्नेन समाप्त्यर्थं गणपतिपूजनमहं करिष्ये" पूर्ववत्सर्वं सम्पाद्य

ततः स्थण्डिले पञ्चभूसंस्कारान्कृत्वा लौकिकाग्निस्थापनं कुर्यात्। ततः प्राणानायम्य देशकालौ स्मृत्वा "अस्य ब्रह्मचारिणो यजुर्वेदारम्भमहं करिष्ये"। अथ वैकल्पिकानि। "एकस्य वेदस्यारम्भः। पूर्वेण ब्रह्मणो गमनम्। उत्तरेण पात्रासादनम्। द्वे पवित्रे। आज्यस्थाली ताम्रमयी। पालाश्यः समिधः। माज्ञावाघारौ। समिद्धतमे आज्यभागौ। वरो दक्षिणा। एतान्वैकल्पिकान्पदार्थानहं करिष्ये" अथ देवताऽभिध्यानम। "तत्र प्रजापतिं, इन्द्रं, अग्निं, सोमं, अन्तरिक्षं, वायुं, ब्रह्माणं, छन्दांसि, प्रजापतिं, देवान्, ऋषीन्, श्रद्धां, मेधां, सदसस्पतिं, अनुमतिं, अग्निं, वायुं, सूर्यं, अग्नीवरुणौ, अग्नीवरुणौ, अग्निं, वरुणं सवितारं विष्णुं विश्वान्देवान् मरुतः स्वर्कान्, वरुणं, प्रजापतिं, अग्निं स्विष्टकृतं, एता अङ्गप्रधानार्थदेवता आज्येनाहं यक्ष्ये"। ब्रह्मवरणादि आज्यभागान्तं पूर्ववत्। अथ प्रधानहोमः। "ॐ अन्तरिक्षाय स्वाहा। इदमन्तरिक्षाय न मम। ॐ वायवे स्वाहा। इदं वायवे०। ॐ ब्रह्मणे स्वाहा। इदं ब्रह्मणे०। ॐ छन्दोभ्यः स्वाहा। इदं छन्दोभ्यो०। ॐ प्रजापतये स्वाहा। इदं प्रजापतये०। ॐ देवेभ्यः स्वाहा। इदं देवेभ्यो०। ॐ ऋषिभ्यः स्वाहा। इदमृषिभ्यो०। ॐ श्रद्धायै स्वाहा। इदं श्रद्धायै०। ॐ मेधायै स्वाहा। इदं मेधायै०। ॐ सदसस्पतये स्वाहा। इदं सदसस्पतये०। ॐ अनुमतये स्वाहा। इदं अनुमतये०।" एतत्प्रधानम्। ततो भूरादिस्विष्टकृदन्ता दशाहुतयः। "ॐ भूः स्वाहा। इदमग्नये०। ॐ भुवः स्वाहा। इदं वायवे०। ॐ स्वः स्वाहा। इदं सूर्याय०। ॐ त्वन्नो अग्ने०। इदमग्नीवरुणाभ्यां०। ॐ सत्वन्नो०। इदमग्नीवरुणाभ्यां०। ॐ अयाश्चाग्ने०। इदमग्नये०। ॐ ये ते शतं०। इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यश्च०। ॐ उदुत्तमं०। इदं वरुणाय०। ॐ प्रजापतये स्वाहा। इदं प्रजापतये०। ॐ अग्नये स्विष्टकृते स्वाहा। इदमग्नये स्विष्टकृते०।" ततः संस्रवप्राशनम्। द्विराचमनम्। पवित्राभ्यां

मार्जनम् । पवित्रप्रतिपत्तिः । ब्रह्मणे पूर्णपात्रदानम् । "ब्रह्मन्नस्य कर्मणः साङ्गतासिध्यर्थं इदं पूर्णपात्रं तुभ्यमहं सम्प्रददे ।" यदि ऋग्वेदारम्भस्तदा आज्यभागान्ते । "ॐ पृथिव्यै स्वाहा । इदं पृथिव्यै० । ॐ अग्नये स्वाहा । इदमग्नये० ।" ततो ब्रह्मणे इत्यादि स्विष्टकृदन्ता एकोनविंशतिराहुतयः । यदि सामवेदारम्भस्तदा आज्यभागान्ते । "ॐ दिवे स्वाहा । इदं दिवे० । ॐ सूर्याय स्वाहा । इदं सूर्याय० ।" ततो ब्रह्मणे इत्याद्या एकोनविंशतिराहुतयः । यदि अथर्ववेदारम्भस्तदा आज्यभागान्ते । "ॐ दिग्भ्यः स्वाहा । इदं दिग्भ्यो० । ॐ चन्द्रमसे स्वाहा । इदं चन्द्रमसे० ।" ब्रह्मणे इत्याद्या एकोनविंशतिराहुतयः । यदि एकदा सर्ववेदारम्भस्तदा आज्यभागान्ते । "ॐ पृथिव्यै स्वाहा । इदं पृथिव्यै० । ॐ अग्नये स्वाहा । इदमग्नये० । ॐ ब्रह्मणे स्वाहा । इदं ब्रह्मणे० । ॐ छन्दोभ्यः स्वाहा । इदं छन्दोभ्यो० । ॐ अन्तरिक्षाय स्वाहा । इदमन्तरिक्षाय० । ॐ वायवे स्वाहा । इदं वायवे० । ॐ ब्रह्मणे स्वाहा । इदं ब्रह्मणे० । ॐ छन्दोभ्यः स्वाहा । इदं छन्दोभ्यो० । ॐ दिवे स्वाहा । इदं दिवे० । ॐ सूर्याय स्वाहा । इदं सूर्याय० । ॐ ब्रह्मणे स्वाहा । इदं ब्रह्मणे० । ॐ छन्दोभ्यः स्वाहा । इदं छन्दोभ्यो० । ॐ दिग्भ्यः स्वाहा । इदं दिग्भ्यो० । ॐ चन्द्रमसे स्वाहा । इदं चन्द्रमसे० । ॐ ब्रह्मणे स्वाहा । इदं ब्रह्मणे० । ॐ छन्दोभ्यः स्वाहा । इदं छन्दोभ्यो० । ॐ प्रजापतये स्वाहा । इदं प्रजापतये० । ॐ देवेभ्यः स्वाहा । इदं देवेभ्यो० । ॐ ऋषिभ्यः स्वाहा । इदं ऋषिभ्यो० । ॐ श्रद्धायै स्वाहा । इदं श्रद्धायै० । ॐ मेधायै स्वाहा । इदं मेधायै० । ॐ सदसस्पतये स्वाहा । इदं सदसस्पतये० । ॐ अनुमतये स्वाहा । इदमनुमतये० ।" एतावान् प्रधानहोमः । ततो भूरादिस्विष्टकृदन्ता दशाहुतयः । अनेनैव क्रमेण देवताभिध्यानम् । ततः गणेशं सरस्वतीं लक्ष्मीं हरिं विद्यादीन् पूजयित्वा ततः प्रत्यङ्मुखायोपविष्टाय ब्रह्मचारिणे आचार्यः वेदारम्भं कुर्यात । "श्रीगणेशायनमः ।

श्रीसरस्वत्यैनमः। श्रीगुरुभ्योनमः। हरिः ॐ। ॐ भूर्भुवःस्वः। ॐ तत्सवितुः" सावित्रीमुच्चार्य हस्तौ जानुभ्यामुपरि स्थापयित्वा वेदारम्भं कुर्यात्। एवमेव ब्रह्मचारी यथाध्यापितं पठेत्। आरम्भे चावसाने च ब्रह्मचारी गुरोः पादोपग्रहणं कुर्यात्। एवं स्वशाखामधीत्य परशाखां पठेत्।

अस्कन्दयँस्तथा रेतो वासुदेवपरायणः।
मुण्डो वा जटिलो वा स्यादथ वा स्याच्छिखी जटी॥

एवं धर्मेण वेदाध्ययनं कर्तव्यम्।

इति श्रीरामकृष्णविरचिते पारस्करगृह्यसूत्रविवरणे संस्कारगणपतौ वेदारम्भप्रयोगः।



अथ गोदानप्रयोगः। "षोडशवर्षस्य केशान्त" इति सूत्रम्। केशान्त इतिसंस्कारनामधेयम्। षोडश वर्षाण्यतीतानि यस्य स षोडशवर्षः। तस्य पुरुषस्य केशान्ताख्यः संस्कारः स्यात्। मुहूर्त्तरत्ने—

जाताधिकाराद्गोदानं जन्माद्यब्दे तु षोडश॥ इति।

मनुः—

केशान्तः षोडशे वर्षे ब्राह्मणस्य विधीयते।
राजन्यबन्धोर्द्वाविंशे वैश्यस्य द्व्यधिके ततः॥
गोदानं स्नानकं चैव समावर्तनकं तथा।
चौलोपनयने चैव न कुर्याद्दक्षिणायने॥

आवश्यके अपवादमाह मरीचिः—

गोदानासंस्कृतस्येह विवाहश्चेदुपस्थितः।
याम्यायनेऽपि कुर्वीत गोदानं स्नानकं च वै॥

चकारात्समावर्तनम्। षोडशवर्षे नियतकाल एव। अतो विवाहिताविवाहितयोर्भवतीति जयरामः। व्रतविसर्गात्पूर्वं कालापकर्षं कृत्वेति प्रयोगरत्नकारः। कश्यपः—

चैत्रमासविवर्जेषु माघादिषु च पञ्चसु॥

नारदः—

सौम्यायने नास्तगयोरसुरासुरमन्त्रिणोः ।
अपर्वरिक्तातिथिषु शुक्रेज्यज्ञेन्दुवासरे ॥

गुरुः—

सोमवारः सिते पक्षे कृष्णपक्षेऽतिगर्हितः ।
बुधवारः शुभः प्रोक्तः शुभग्रहयुतो यदा ॥
पापग्रहाणां वारादौ विप्राणां तु शुभो रविः ।
क्षत्रियाणां क्षमासूनुर्विट्शूद्राणां शनिः शुभः ॥

नक्षत्राणि——

हस्ताश्विविष्णुपौष्णानि श्रविष्ठादित्यपौष्णभम् ।
सौम्यचित्रे नवक्षौरऽउत्तमा नवतारकाः ॥
त्रीण्युत्तराणि वायव्यं रोहिणी वारुणं तथा ।
क्षौरे षण्मध्यमाः प्रोक्ताः शेषा द्वादश गर्हिताः ॥

नारदः—

अष्टमे शुद्धिसंयुक्ते शुभलग्ने शुभांशके ।
न नैधने भे शीतांशौ षष्ठाष्टान्त्य ६।८।१२ विवर्जिते ॥
धनत्रिकोणकेन्द्रस्थैः शुभैस्त्र्यायारिगैः खलैः ।
गोदानप्राशने शस्ताः सौम्या रन्ध्रव्ययायगाः ॥
अष्टमस्था ग्रहाः सर्वे नेष्टाः शुक्रविवर्जिताः ।

अत्र विधिमाह । चूडाकर्मणस्तुल्यत्वात्केशान्तकर्मणः चूडाकर्मणा सह कथनं कात्यायनेन महर्षिणा कृतम् । तथा च गृह्यकारिकायाम्—

केशान्ताख्यमिदं कर्म व्याख्यातं चौलकर्मणा ॥

सहेति शेषः । स्मृत्यन्तरे—

गोदानं चौलवत्कार्यं षोडशेऽब्दे तदुच्यते ।
अङ्कोपवेशनं नास्ति श्मश्रूणामुन्दनं भवेत् ॥

अत्र मातुरुपस्थ उपवेशनं न भवेत् । अबालत्वात् । शौनकः——

अबालत्वाज्जनन्यङ्के निवेशोऽप्यस्य नेष्यते ॥

मन्त्रे ऊहविशेषः—

केशान्वोक्तिप्रदेशेषु श्मश्रुशब्दमुदीरयेत् ।
श्मश्रूणामेव सेकोऽत्र सकेशानामितीरितम् ॥
केशान्वपत्वित्यत्रापि श्मश्रूणीति समीरयेत् ।
केशपक्षे तु कर्तव्यं श्मश्रुपक्षे तदाचरेत् ॥
क्षुराभिमर्शनं मन्त्रं यत्क्षुरेणादिकेष्वपि ।
श्मश्रूणि छिन्धीत्युक्त्वाथ शिरोमुखमुदीरयेत् ॥
यः शीतोष्णाभिरित्यादिमन्त्रो नापितशासनः ।
तत्र केशश्मश्रू लोमनखानीति पदात्परम् ॥
उदक्संस्थानि कुशली कुर्वित्येवमुदीरयेत् ।
ततः स्नाते समीपस्थे तस्मिन्स्विष्टकृदादिकम् ॥
उपरिष्टात्तनं मन्त्रमाचार्यस्तु समापयेत् ।
शिष्यः स्नात्वा ततो वाचं नियम्यादिवसक्षयात् ॥
तिष्ठेदस्तमिते सूर्ये गुरोरन्तिकमागतः ।
वरं ददामीत्युक्त्वाथ गोवृषौ गुरवे दिशेत् ॥
असम्भवे गोवृषयोर्निक्षिप्त्वा वा गुरौ दिशेत् ।
उत्तरेद्युर्गुरुस्तस्य वत्सरं व्रतमादिशेत् ॥
सर्वासु व्रतचर्यासु प्रसिद्धं केशधारणम् ॥

एषां चाकरणे प्रायश्चित्तमाह । शौनकः—

व्रतानि विधिवत्कृत्वा स्वशाखाध्ययनं चरेत् ।
अकृत्वाभ्यस्यते येन स पापी विधिघातकः ॥
प्रत्येकं कृच्छ्रमेकैकं चरित्वाज्याहुतीः शतम् ।
हुत्वा चैव तु गायत्र्या स्नायादित्याह शौनकः ।

अथ गोदाने स्पष्टप्रयोगः । जन्मतः सप्तदशे वर्षे नोचेत्कालापकर्षं वा कृत्वा ज्योतिर्विदुक्ते काले पूर्वेद्युर्वा कृतनित्यक्रियः बटुं दक्षिणत उपवेश्य प्राणानायम्य देशकालौ स्मृत्वा "अस्य ब्रह्मचारिणः केशान्तमहं करिष्ये । तदङ्गतया विहितं गणेशपूजनपूर्वकं स्वस्तिपुण्याह-

वाचनं मातृकापूजनं वसोर्द्धारां नान्दीश्राद्धं च करिष्ये"। ततो बहिःशालायां भूसंस्कारपूर्वकं अग्निस्थापनं कृत्वा पुनर्देशकालौ स्मृत्वा "अस्य केशान्तमहं करिष्ये। पूर्वेण ब्रह्मणो गमनम्। उत्तरेण पात्रासादनम्। द्वे पवित्रे। ताम्रमयी आज्यस्थाली। पालाश्यः समिधः। प्राश्रावाघारौ। समिद्धतमे आज्यभागौ। पूर्णपात्रं दक्षिणा। त्रिरात्रं ब्रह्मचर्यम्। घृतपिण्डः। सकेशगोमयपिण्डस्य गोष्ठे निधानम्। एतान् वैकल्पिकान्पदार्थानहं करिष्ये"। अथ देवताभिध्यानम्। "तत्र प्रजापतिं, इन्द्रं, अग्निं, सोमं, अग्निं, वायुं, सूर्यं, अग्नीवरुणौ, अग्नीवरुणौ, अग्निं वरुणं सवितारं विष्णुं विश्वान् देवान्मरुतः स्वर्कान्, वरुणं, प्रजापतिं, अग्निं स्विष्टकृतं, एतानाज्येनाहं यक्ष्ये" ततो ब्रह्मोपवेशनाद्याज्यभागान्ते विशेषः। नात्र चरुः। आसादनानन्तरं उपकल्पनीयानि। शीतोदकम्। उष्णोदकम्। घृतपिण्डः। श्येणी शलली। सप्तविंशतिकुशतरुणानि। ताम्रपरिष्कृत आयसक्षुरः। आनडुहं गोमयपिण्डम्। नापितश्च। अत्र गौरेव वरः। एतानुपकल्प्य पवित्रे कृत्वा प्रोक्षणीसंस्कारादि पर्युक्षणान्तं कृत्वा। "ॐ प्रजापतये स्वाहा। इदं प्रजापतये०।ॐ इन्द्राय स्वाहा। इदमिन्द्राय०। ॐ अग्नये स्वाहा। इदमग्नये०।ॐ सोमाय स्वाहा।इदं सोमाय०। ततो महाव्याहृत्यादि स्विष्टकृदन्तं जहुयात्। ततः संस्रवप्राशनान्ते। तत "उष्णेन वाय उदकेनेह्यदिते श्मश्रून्वपे"तिमन्त्रेण शीतास्वप्सु उष्णा अपः आसिञ्चति। उष्णोदकमिश्रिते शीतोदके उपकल्पितं घृतपिण्डं तूष्णीं प्रास्यति। तत उदकमादाय दक्षिणगोदानसमीपश्मश्रुमुन्दति। "ॐ सवित्रा प्रसूता दैव्या आप उन्दन्तु ते तनूम्। दीर्घायुत्वाय वर्चसे" इत्यनेन मन्त्रेण। तूष्णीं ततस्त्रेण्या शलल्या श्मश्रून्विनीय त्रीणि कुशतरुणान्यन्तर्दधाति। "ॐ ओषधे त्रायस्वे"ति मन्त्रेण। ततस्ताम्रपरिष्कृतमायसं क्षुरमादत्ते। ॐ शिवो नामासि० हिꣳसी"रित्यनेन मन्त्रेण क्षुरग्रहणम्। ततो दर्भतरुणान्तर्हितेषु क्षुरं संलग्नं करोति। "ॐनिवर्तया० वीर्याये"ति मन्त्रेण "ॐ येनावपत्सविता० यथास"दित्यनेन मन्त्रेण स-

श्मश्रूणि कुशतरुणानि प्रच्छिद्य उत्तरतो ध्रियमाणे गोमयपिण्डे प्रास्य। ततस्तस्मिन्नेव दक्षिणश्मश्रुणि एवमेवापरं वारद्वयं तूष्णीं कर्म कर्तव्यम्। अत्र पश्चिमगोदानाभावात् श्मश्रुमध्ये अधरोष्ठादधस्थे सर्वमुन्दनादि कर्म कुर्यात्। श्मश्रुच्छेदने मन्त्रे विशेषः। "ॐ त्र्यायुषं जमदग्नेः०"मितिमन्त्रेण। ततः पूर्ववत् तूष्णीं पुनर्वारद्वयं कर्म कुर्यात्। तत उत्तरगोदानसमीपे पूर्ववदुन्दनादि कर्तव्यम्। छेदनमन्त्रे तु विशेषः। "ॐ येन भूरिश्चरा दिवं० स्वस्तय" इति मन्त्रेण च्छेदनम्। अत्रापि वारद्वयं तूष्णीम्। त्रिःक्षुरेण शिरः प्रदक्षिणं समुखं परिहरेत्। तत्र मन्त्रः। "यत्क्षुरेण मज्जयता सुपेशसा वप्त्वा वा वपति श्मश्रूञ्छिन्धि शिरो मास्यायुः प्रमोषीः समुखम्"। नापिताय क्षुरदानम्। "अक्षण्वन्परिवप" इत्यनेन मन्त्रेण स नापितः उदङ्मुखस्थितस्य प्राङ्मुखस्थितस्य वा मुण्डनं करोति। सकेशं गोमयपिण्डं अनुगुप्तं गोष्ठे निधाय, ततो वरदानं ब्राह्मणेभ्यो भूयसीं दक्षिणां दत्त्वा, दशसंख्याकेभ्यो ब्राह्मणेभ्यो भोजनं सङ्कल्प्य कर्मसम्पूर्णतां वाचयित्वा "यस्य स्मृत्ये"त्युक्त्वा विष्णुं नमस्कृत्य आशिषो ब्राह्मणोक्ताः स्वयं गृह्णीयात्॥

**इति श्रीप्रथमशाखीयरामकृष्णविरचिते पारस्करगृह्यसूत्रविवरणे संस्कारगणपतौ गोदानप्रयोगः॥**

---

अथ समावर्तनसम्भाराः। तत्राश्वलायनः—"**अथोपकल्पयीत समावर्त्यमानो मणिकुण्डले वस्त्रयुगं छत्रमुपानद्युगं दण्डं स्रगुन्मर्दनमनुलेपनमञ्जनमुष्णीषमित्यात्मने चाचार्याय च यद्युभयोर्न विन्देताचार्यायैवे**"ति। अस्यार्थः—उपकल्पयीतेति शब्दश्छान्दसः। समावर्त्यमानः समावर्तनं नाम संस्कारः तेन संस्क्रियमाण इत्यर्थः। मणिकुण्डले। अहते वाससी। वस्त्रयुगं छत्रम्। उपानद्युगं उपानहद्वयम्। दण्डं वैणवम्, स्रक् पुष्पमाला। उन्मर्दनमनुलेपनं कस्तूर्याद्यनुलेपनम्। अञ्जनं प्रसिद्धम्। उष्णीषं शिरोवेष्टनम्। इत्यादि आत्मने आचार्याय च धार-

णार्थं एकादश द्रव्याणि उपकल्पयेदिति विधानार्थम्। तथा च शौनकः—

समावर्त्तनमानस्तु पूर्वमेवोपपादयेत्।
मण्याद्युष्णीषपर्यन्तान्सम्भारान्सकलानपि॥

यद्युभयोर्न लभेत् तदा केवलाचार्याय उपकल्पयेदिति। अथ समावर्तनकालः—

वर्षे मासे च दिवसे तृतीये वा चतुर्थके।
पञ्चषष्ठे न कुर्वीत मेखलामोक्षणं बुधः॥

नारदः—

अथोत्तरायणे जीवशुक्रयोर्दृश्यमानयोः।
द्विजातीनां गुरोर्गेहान्निवृत्तानां यतात्मनाम्॥

वसिष्ठोऽपि—

सौम्यायने निर्मलयोः सुरेज्यदैत्येज्ययोर्व्योम्नि वलक्षपक्षे।
सन्त्यज्य रिक्तामवमा(?)ष्टमीं च वैनाशिकाद्याखिलऋक्षवृन्दतः॥

अथ तिथयः। तत्र देवरातः—

विच्छिद्रासु विरिक्तासु तिथिषु स्नानमाचरेत्॥

नारदोऽपि—

प्रतिपत्पर्वरिक्तामामष्टमीं च दिनक्षयम्।
हित्वान्यदिवसे कार्यं समावर्त्तनमण्डनम्॥

अथ वाराः। देवरातः—

सौम्यानामंशवारेषु शुभाः शेषेषु वर्जिताः॥ इति।

क्रिया इति शेषः। सुरेश्वरः—

भौमभानुजयोर्वारे नक्षत्रे च व्रतोदिते।
ताराचन्द्रविशुद्धौ च स्यात्समावर्तनक्रिया॥

अत्र भौमभानुजयोर्ग्रहणं विवाहोपस्थित्या दिनवारान्तरासम्भवे द्रष्टव्यम्। इदं वीरमित्रोदये द्रष्टव्यम्। अथ नक्षत्राणि। तत्र नृसिंहः—

त्रीण्युत्तराणि मैत्रेन्दुरोहिण्यादित्यपुष्यभाः।
हस्तश्रवणपौष्णाश्च स्नानकर्मणि पूजिताः॥

वसिष्ठोऽपि—

आदित्यः सौम्यसावित्रे मैत्रतिष्योत्तरात्रयम्।
पौष्णश्रवणरोहिण्यः श्रेष्ठाः स्युः स्नानकर्मणि॥

आदित्यः पुनर्वसुः। सौम्यं मृगशिरः। सावित्रं हस्तः। मैत्रं अनुराधा। अथ राशयः। देवरातः—

नक्रगोयमकन्याश्च तौलिमीनौ सुपूजिताः।
अम्भोयुक्तं यदि स्यात्तु देशेषु स्नानमाचरेत्॥

राजमार्तण्डस्तु चौलोक्तमेवास्यापि कालमाह—

क्षुरकर्मणि प्रदिष्टं यदिष्टफलदायकं दिनाद्यन्तु।
तन्मेखलाविमोक्षे भवति हिताय द्विजातीनाम्॥ इति।

अथ ग्रहसंस्थानम्। देवरातः—

त्र्यायारिभातृगाः पापाः शुभाः केन्द्रत्रिकोणगाः।
अशुभाश्च शुभाश्चैव अष्टमे वर्जिताः सदा॥

मौञ्जीप्रकरणोक्ताः प्रदोषादयो वर्जनीयाः। शब्देन ग्रन्थमात्राधीतस्याध्वर्यवादियज्ञविद्याकुशलस्य षडङ्गमर्थतोऽनधिगम्यापि काममिच्छया स्नानं भवति। तेनायमर्थः—मन्त्रब्राह्मणात्मकं वेदमधीत्यावबुध्य च स्नायादित्येकः पक्षः। साङ्गं वेदमधीत्यावबुध्य च स्नायादिति द्वितीयः पक्षः। ग्रन्थमात्रमधीत्य यज्ञविद्यां चाभ्यस्य स्नायादिति तृतीयः पक्षः। स्नायादित्युक्तं तत्कथं स्नायादित्यपेक्षायामाह—"**उपसंगृह्य गुरुँ समिधोऽभ्याधाय परिश्रितस्योत्तरतः कुशेषु प्रागग्रेषु पुरस्तात्स्थित्वाष्टानामुदकुम्भानां येऽप्स्वन्तरग्नयः प्रविष्टा गोह्य उपगोह्यो मयूखो मनोहा स्खलो विरुजस्तनुदूषुरिन्द्रियहा तान्विजहामि यो रोचनस्तमिह गृह्णामीत्यकस्मादपो गृहीत्वा तेनाभिषिञ्चते तेन मामभिषिञ्चामि श्रियै यशसे ब्रह्मणे ब्रह्मवर्चसायेति**" इति सूत्रम्। उपसङ्गृह्य गुरुं गुरोः पादोपग्रहणं कृत्वा, समिधोऽभ्याधायाग्निपरिचरणं कृत्वा, इतश्च पूर्वं वेदाहुतिहोमः। एतदेव व्रतादेशनविसर्गेष्वित्युक्तत्वात्। ननु समिदाधानस्य पश्चाद्वेदाहुतयः कुतो न भवन्ति? क्रमान्तरानभिधा-

नात्, "उपसङ्गृह्य गुरुꣳसमिधोऽभ्याधाये"ति पाठानुग्रहापत्तेश्च। नैवम्। यतो वेदाहुतीनां पश्चादेव समिदाधानम्, ततश्च स्नानमिति श्रूयते। "स यामुपयन्त्समिधमादधाति सा प्रायणीया याꣳस्नास्यन्त्सोदयनीये"ति। तस्मात्समिदाधानस्नानयोरव्यवहितकालोपपादनाद्वेदाहुतीनां स्नानातिदेशाच्च समिदाधानात्पूर्वं वेदाहुतिहोम इत्युक्तम्। स्नानं चाष्टभिरुदकुम्भैः क्रमेण। परिश्रितस्य वस्त्रादिना वेष्टितसमावर्तनस्थानस्थितस्याग्नेरुत्तरपार्श्वे स्थापितानामष्टानामुदकुम्भानां दक्षिणोत्तरायतानां पुरस्तात्पूर्वस्यां दिशि आस्तीर्णेषु कुशेषु ब्रह्मचारी स्थित्वा ऊर्ध्वीभूय "येऽप्स्वन्तरग्नय" इति मन्त्रेण प्रथमादुदकुम्भादपो गृहीत्वा "तेन मामभिषिञ्चामी"ति मन्त्रेणात्मानमभिषिञ्चति। मन्त्रार्थः—ये ऽग्नयो गोह्यादयोऽप्सु अन्तर्मध्ये प्रविष्टाः स्थिताः। इन्द्रियहान्ताः अष्टौ तान् अमेध्यत्वादमङ्गल्यत्वादेताभ्योऽद्भ्यः सकाशात् अग्नीन् विजहामि त्यजामि। यश्च रोचनोऽग्निर्मेध्यत्वान्मङ्गल्यत्वात् प्रीतिकारित्वाच्च तमिहाप्सु विषये गृह्णामि स्वीकरोमि। यतः अद्भ्यो अग्निरुत्पद्यते। गुह्यते संव्रियते आच्छाद्यत इति गोह्यः। उपगोह्यः अङ्गतापकः। मयूखो जन्तुहिंसकः। मनस उत्साहं हन्तीति मनोहाः। अस्खलः प्रध्वंसी अजीर्णकृत्। विविधतया रुजति पीडयतीति विरुजः। तनुं शरीरं दूषयति धिक्कृतिं नयतीति तनुदूषुः। इन्द्रियाणि हन्तीति इन्द्रियहा। अभिषेकमन्त्रार्थः—तेनोदकेन मां इममात्मानमभिषिञ्चामि। किमर्थं श्रियै सम्पत्त्यर्थम्। यशसे कीर्त्यै। ब्रह्मणे ब्रह्मवर्चसाय यागाध्यापनोत्कृष्टतेजसे। "येन श्रियमकृणुतां येनावमृशताꣳसुरां येनाक्षावभ्यषिञ्चतां यद्वां तदश्विना यश इत्यापो हि ष्ठेति च प्रत्यृचं त्रिभिस्तूष्णीमितरैः"इति सूत्रम्। अष्टभ्य उदकुम्भेभ्योऽपां ग्रहणे एक एव मन्त्रो "येऽप्स्वरन्तरग्नय" इति। अभिषेचने तु भिद्यते। तद्यथा "येन श्रिय"मिति द्वितीयम्। "आपो हि ष्ठे"ति तृतीयम्। "यो वः शिवतम" इति चतुर्थम्। "तस्मा अरं गमाम व" इति पञ्चमम्। ततस्तूष्णीं त्रिभिरितरैरुदकुम्भैरभिषेकः। मन्त्रार्थः—हे अश्विनौ! येन जलप्रभावेन

भवन्तौ सुराणां श्रियं सम्पदं शोभां वा अकृणुतां कृतवन्तौ । येन सुरा-ममृतं अवमृशतां प्राप्तवन्तौ । अटोऽदर्शनं छान्दसम् । येन यत्नेनाक्ष्यौ उपमन्योरक्षिणी अभ्यषिञ्चताम् अभिषिक्तवन्तौ । वां युवयोर्यदेवम्भूतं यशस्तत् एतज्जलाभिषेकेण ममाप्यस्त्विति शेषः । "उदुत्तममिति मेख-लामुन्मुच्य दण्डं निधाय वासोऽन्यत्परिधायादित्यमुपतिष्ठत उद्य-न्भ्राजभृष्णुरिन्द्रो मरुद्भिरस्थात्प्रातर्यावभिरस्थाद्दशसनिरसि दश-सनिं मा कुर्वाविदन्मा गमयोद्यन्भ्राजभृष्णुरिन्द्रो मरुद्भिरस्थाद्दिवा यावभिरस्थाच्छतसनिरसि शतसनिं मा कुर्वाविदन्मा गमयोद्यन्भ्रा-जभृष्णुरिन्द्रो मरुद्भिरस्थात्सायं यावभिरस्थात्सहस्रसनिरसि सह-स्रसनिं मा कुर्वाविदन्मा गमयेति" इति सूत्रम् । तत "उदुत्तम"मिति मन्त्रेण मेखलां रशनामुन्मुच्य शिरोमार्गेण निःसार्य तां च भूमौ निक्षिप्य वासोऽन्यत्परिधाय वस्त्रान्तरं परिहितं कृत्वा "उद्यन्भ्राजभृष्णु"रिति मन्त्रेण सूर्यमुपतिष्ठते । मेखलानिधानोत्तरं दण्डाजिनयोर्निधानम् । तूष्णी-मिति जयरामः । तथा च गृह्यकारिकायाम्—

> मेखलोन्मोचनं कुर्यादुदुत्तममिति स्वयम् ।
> उपवीतं विना दण्डाजिनादीनि परित्यजेत् ॥
> तूष्णीं निधाय वासोऽन्यत्परिधायोपतिष्ठति ॥

मन्त्रार्थः—हे सूर्य ! यतो भवान् प्रातःसवने यावाभिर्गमनशीलैः ऋष्यादिसप्तगणैः सेवितोऽस्थात्तिष्ठति । यथेन्द्रो मरुद्भिरस्थात् तिष्ठति तद्वत् । किम्भूत उद्यन् उद्गच्छन् भ्राजभृष्णुः स्वप्रभयाऽन्यतेजोद्भासकः । आविदन् सर्वं शुभाशुभं जानन् । किञ्च यथा च त्वं प्रातःसवने दश-सनिः दशसंख्याकानां गवादीनां सनिर्दाता । षणु दाने । अतो मामपि दशसनिं दशगुणदक्षिणादिदातारं कुरु । मा मामविन्दन् वेदयन् ज्ञाप-यन् गमय प्रापय प्रतिष्ठामीति शेषः । एवमुत्तरत्रापि व्याख्येयम् । "दधि तिलान्वा प्राश्य जटालोमनखान्संहृत्यौदुम्बरेण दन्ता-न्धावेतान्नाद्याय व्यूहध्वंसोमो राजायमागमत् । स मे मुखं प्रमा-क्ष्यते यशसा च भगेन चेति" इति सूत्रम् । ततो दधितिलयोरन्य-

तरं प्राशयित्वा । जटाश्च लोमानि च नखानि च जटालोमनखानि संहृत्या-पनीय वापयित्वा, संहृत्येत्यत्र णिचो लोपश्छान्दसः । स्वयं संहर्तुमश-क्यत्वात् । तथा च गृह्यकारिकायाम् —

वपनं श्मश्रुकेशानां नखानां स्यान्निकृन्तनम् ।
हस्तयोः पादयोरेव कनिष्ठाद्यविशेषतः ॥
ततः क्षुरनिमित्तं स्यात्स्नानं शीतेन वारिणा ॥ इति ।

"औदुम्बरेण दन्तान् धावेत" इतिसूत्रम् । औदुम्बरेण का-ष्ठेन दन्तान् शोधयेत् "अन्नाद्याये"तिमन्त्रेण । तथा च कारिकायाम्—

कनिष्ठिकाग्रस्थूलेन काष्ठेनौदुम्बरेण तु ।
अन्नाद्यायेति धावेत दन्तधावनमार्द्रवत् ॥
प्राग्वोदगास्यस्तद्भुक्त्वा प्रक्षाल्य पुरतस्त्यजेत् ॥ इति ।

मन्त्रार्थः—हे दन्ताः ! यूयं अन्नाद्याय अन्नादनाय व्यूहध्वम् निर्मला भवत । यतोऽयं राजा सोमश्चन्द्रः काष्ठरूपेणागमत् आगतः । अतः स एव सोमो मे मम मुखं प्रमाक्ष्यते शोधयिष्यति, केन ? यशसा सत्कीर्त्या भगेन भाग्येन च । दन्तधावनस्य नित्यकाम्यत्वादुभयफलस-म्बन्ध इति मुरारिमिश्राः । "उत्साद्य पुनः स्नात्वाऽनुलेपनं नासिक-योर्मुखस्य चोपगृह्णीते प्राणापानौ मे तर्पय चक्षुर्मे तर्पय श्रोत्रं मे तर्पयेति" इति सूत्रम् । उत्साद्य अङ्गोद्वर्तनेन मलमपसार्य पुनः स्नात्वा मलापकर्षस्नानोत्तरं स्नानं पुनः कृत्वा अनुलेपनं चन्दनादि नासिकयोर्मुखस्य च उपगृह्णीते आदत्ते "प्राणापानौ मे" इति मन्त्रेण । मुखनासिके चा-नुलिम्पतीति हरिहरः । "पाण्योरवनेजनं निषिच्ये"ति वक्ष्यमाणत्वात् । अत्र पाणिभ्यामुपलेपनग्रहणम् । तथा च गृह्यकारिकायाम्—

उद्वर्त्तनं सुगन्धेन द्रव्येण स्यान्निशादिना ।
पुनः स्नानं सुखोष्णेन वारा मुखनसोरनु ॥

मन्त्रार्थः—हे उपलेपनाधिदेवते ! मम प्राणापानौ तर्पय प्रीण-य । तथा मे चक्षुरिन्द्रियं तथा मे श्रोत्रं श्रवणेन्द्रियं च तर्पय । "पितरः शुन्धध्वमिति पाण्योरवनेजनं दक्षिणा निषिच्यानुलिप्य जपेत्

सुचक्षा अहमक्षीभ्याम्भूयासꣳ सुवर्चा मुखेन। सुश्रुत्कर्णाभ्यां भूयासमिति" इतिसूत्रम्। प्राचीनावीती दक्षिणाभिमुखो भूत्वा "पितरः शुन्धध्व"मित्येतावता मन्त्रेण पाण्योरवनेजनं हस्तयोः प्रक्षालनोदकं दक्षिणा निषिच्य दक्षिणस्यां दिशि निषिच्य प्रक्षिप्य यज्ञोपवीती भूत्वा पितृकर्मत्वादुदकं स्पृष्ट्वा चन्दनेनानुलिप्य "सुचक्षा अह"मिति मन्त्रं जपेत्। तथा च गृह्यकारिकायाम्—

ततः पितर इत्युक्त्वा स पाण्योरवनेजनम्।
अनुषिञ्चति पाणिभ्यां प्रागास्यः प्रेतराड्दिशि॥

गङ्गाधरोऽप्येवमेव—

ततो वारि स्पृशेदस्य गुणत्वान्नापसव्यवत्।
अनुलिप्य जपेन्मन्त्रं सुचक्षा अहमित्यमुम्॥

अत्र दक्षिणापदं लुप्तसप्तम्यन्तम्। मन्त्रार्थः—हे सवितः! अहमक्षीभ्यां कृत्वा सुचक्षाः सुदर्शनो भूयासं भवेयम्। तथा मुखेन सुवर्चाः सुतेजाः भूयासमिति पूर्वत्र सम्बन्धः। तथा कर्णाभ्यां सुश्रुत् सुश्रवणो भूयासम्। "अहतं वासो धौतं वाऽमौत्रेणाच्छादयीत परिधास्यै यशोधास्यै दीर्घायुत्वाय जरदष्टिरस्मि। शतं च जीवामि शरदः पुरूची रायस्पोषमभिसंव्ययिष्य इति" इतिसूत्रम्। अहतं नवीनं सदशं वासः वसनं अथवा अमौत्रेण अरजकेन धौतं वास आच्छादयीत "परिधास्या" इति मन्त्रेण। मन्त्रार्थः—हे वासोदेवते! परिधास्यै अनेकशुभवस्त्रपरिधानाय तथा यशोधास्यै स्तुत्यै दीर्घायुत्वाय जीवनाय च इदं वासः संव्ययिष्ये परिधास्ये। किंभूतः वासोदेवतानुग्रहेण जरदष्टिरस्मि-वृद्धत्वव्याप्यायुर्भवामि। पुरूचीः पुरुभिर्बहुभिः पुत्रैर्धनादिभिरुचः संयोगोऽस्ति यस्य सः। उच समवाये। किंभूतं वासः रायस्पोषं धनादिपोषणं पुष्टिकरम्। किञ्च एतत्सम्बन्धेनाहं शतं शरदो वर्षाणि जीवामि। "अथोत्तरीयं यशसा मा द्यावापृथिवी यशसेन्द्राबृहस्पती। यशो भगश्च मा विदद्यशो मा प्रतिपद्यतामिति" इतिसूत्रम्। अथ परिधानानन्तरं आचम्य "यशसा मे"ति मन्त्रेण अहतमेव वास उत्तरीयं आच्छा-

दर्यीतेति सम्बन्धः । तथा च कारिकायाम्—

द्वितीयमुत्तरीयं स्यात्परिधत्तेति चेन्नवम् ।
मन्त्रेण यशसामेति स्याद्विराचमनं ततः ॥

मन्त्रार्थः—हे वासोदेवते ! द्यावापृथिवी द्यावाभूमी यशसा युक्तौ मा मां अविदत् विन्दताम् । प्राप्नुतामिति यावत् । विद्लृलाभे धातुः । विभक्तिवचनव्यत्ययेनान्वयः । तथा इन्द्राबृहस्पती अपि यशसा युक्तौ मा अविदत् । तथा भगः सूर्योऽपि यशसा अविदत् । तच्चैतैः सम्पादितं यशो मा मां प्रतिपद्यतां मयि सर्वदा तिष्ठत्वित्यर्थः । "एकं चेत्पूर्वस्योत्तरवर्गेण प्रच्छादयीत" । चेद्यदि एकं वासो भवति द्वितीयं न भवति तदा पूर्वस्य परिधानीयस्यैव वाससः उत्तरवर्गेण उत्तरभागेन प्रच्छादयीत उत्तरीयं कुर्यात् । तत्रापि "यशसा मे"ति मन्त्रो भवति क्रियान्तरत्वात् । अत्रैवं पूर्वं वस्त्रार्धं समन्त्रकं परिधाय द्विराचम्य उत्तरार्धं गृहीत्वा उत्तरीयमन्त्रं पठित्वोत्तरीयं कृत्वा पुनर्द्विराचामेत् । तथा च गृह्यकारिकायाम्—

एकश्चेदधरीयं स्यात्तस्यैवोत्तरभागतः ।
प्रच्छादयीत मन्त्रोऽपि चोत्तरत्वात्तयोर्भवेत् ॥
चतुस्त्रिद्व्यङ्गुलं वस्त्राकृतिर्वा ब्रह्मसूत्रकम् ।
अत्रापि यशसा मेति कार्यापत्तेर्मनुर्भवेत् ॥

अत्रैकवचनादेकमेव यज्ञोपवीतम् । गङ्गाधरगदाधरादिमतेऽप्येकमेव । तथा च मनुः—

धारयेद्वैणवीं यष्टिं सोदकं च कमण्डलुम् ।
यज्ञोपवीतं वेदं च शुभे रौक्मे च कुण्डले ॥

यज्ञोपवीतद्वयधारणमिति हरिहरः । प्रयोगरत्नेऽप्येवमेव । तथा च बौधायनः—"स्नातकोऽन्तर्वासन उत्तरीयं वैणवं दण्डं धारयेत्सोदकं च कमण्डलुं द्वे यज्ञोपवीते उष्णीषमजिनोत्तरीयोपानहौ छत्रं चे"ति । कूर्मपुराणे—

यज्ञोपवीतद्वितयं सोदकं च कमण्डलुम् ।
छत्रं चोष्णीषयुगलं पादुके चाप्युपानहौ ॥

**"सुमनसः प्रतिगृह्णाति या आहरज्जमदग्निः श्रद्धायै मेधायै कामायेन्द्रियाय। ता अहं प्रतिगृह्णामि यशसा च भगेन चेति"** इतिसूत्रम्। सुमनसः पुष्पाणि। प्रतीत्युपसर्गसामर्थ्यात् गुरुणा समर्पिताः सुमनसः प्रतिगृह्णाति "या आहरत्" इति मन्त्रेण। **मन्त्रार्थः**—याः सुमनसः पुष्पाणि जमदग्निः प्रजापतिः श्रद्धाद्यर्थमाहरत् आददे। ताः सुमनसो यशसा कीर्त्या भगेनैश्वर्येण च सह अहं प्रतिगृह्णामि श्रद्धाद्यर्थम्। तत्र श्रद्धा धर्मादरः। मेधा धारणशक्तिः। कामोऽभिलाषपूर्त्तिः। इन्द्रियं तत्सारवम्। **"अथाबध्नीते यद्यशोऽप्सरसामिन्द्रश्चकारविपुलं पृथु। तेन सङ्ग्रथिताः सुमनस आबध्नामि यशो मयीति"** इतिसूत्रम्। ताः प्रतिगृह्य स्वशिरसि बध्नाति **"यद्यशोऽप्सरसामि"**तिमन्त्रेण। **मन्त्रार्थः**—हे सुमनसः! इन्द्रो देवः अप्सरसामुर्वश्यादीनां कुसुमाबन्धेन यद्यशः सर्वजनप्रियत्वं चकार कृतवान्। तेन यशसा सङ्ग्रथिताः युष्मानाबध्नामि चूडायाम्। किम्भूतं यशः विपुलं विशालम्। पृथु सन्ततं दीर्घं तद्यशो मयि विषये तिष्ठतीत्यर्थः। **"उष्णीषेण शिरो वेष्टयते युवा सुवासा इति"** इति सूत्रम्। उष्णीषेण शिरोवेष्टनवस्त्रेण शिरो वेष्टयेत्। "युवा सुवासा" इति मन्त्रेण व्याख्यातश्चायमुपनयने। **"अलङ्करणमसि भूयोऽलङ्करणं भूयादिति कर्णवेष्टकौ"** इति सूत्रम्। कर्णवेष्टकौ कुण्डलं दक्षिणसव्यकर्णयोरामुञ्चति "अलङ्करणमसी"ति मन्त्रावृत्त्या। **मन्त्रार्थः**—हे कुण्डलदेवते! त्वमलङ्करणमलङ्कारशोभासि। अतस्त्वयाऽलङ्कृतस्य मम भूयो बहुवारं मलङ्करणं भूयादस्तु। **"वृत्रस्येत्यङ्क्तेऽक्षिणी"** इति सूत्रम्। "वृत्रस्ये"-त्यादि "चक्षुर्मे देहि" इत्यन्तेन मन्त्रेण कज्जलेनाक्षिण्यङ्क्ते संस्करोति। सौवीराञ्जनेनेति हरिहरः। अत्र च सव्यनेत्रमङ्क्त्वा ततो दक्षिणाञ्जनं मन्त्रावृत्त्या। तथा च दीक्षाप्रकरणं लिङ्गम्। **"सव्यं वाऽग्रे मानुष"** इति। कारिकायाम्—

> वृत्रस्येत्यक्षिणी अङ्क्तेऽभ्यञ्जनं वामनासिकाम्।
> सव्यं प्रथममित्येव श्रूयते बह्वृचश्रुतौ॥

हरिहरेण दक्षिणाञ्जनं पूर्वमुक्तं तदाशयं न विद्मः । "रोचिष्णुरसीत्यात्मानमादर्शे प्रेक्षते"इतिसूत्रम् । आत्मानं सर्वदेहं आदर्शे दर्पणे प्रेक्षते पश्यति । "रोचिष्णुरसी"त्येतावता मन्त्रेण । मन्त्रार्थः—रोचिष्णुः प्रकाशकः । "छत्रं प्रतिगृह्णाति बृहस्पतेश्छदिरसि पाप्मनो मामन्तर्धेहि तेजसो यशसो माऽन्तर्धेहीति"इतिसूत्रम् । उपसर्गसामर्थ्याद्ग्रहणाद्दत्तं छत्रमातपत्रं "बृहस्पतेश्छदिरसी"तिमन्त्रेण प्रतिगृह्णाति । मन्त्रार्थः-हे छत्र ! त्वं बृहस्पतेः पितामहस्य छादिर्घर्मादिनिवर्तकोऽसि प्रथममतः पाप्मनो निषिद्धाचरणात् मां अन्तर्धेहि अन्तर्हितं कुरु । तेजसः प्रतापाद्यशसश्च सकाशान्माऽन्तर्द्धेहि मा व्यवहितं कुरु तद्युक्तं कुर्वित्यर्थः । "प्रतिष्ठे स्थो विश्वतो मा पातमित्युपानहौ प्रति मुञ्चत"इति सूत्रम् । "प्रतिष्ठे स्थ"इति मन्त्रेणोपानहौ पादत्राणे पादयोः प्रतिमुञ्चते परिधत्ते युगपत् शक्यत्वात् द्विवचनान्तत्वाच्च मन्त्रस्य । मन्त्रार्थः—हे उपानहौ देवते ! युवां प्रतिष्ठे स्थितिहेतू स्थः भवथः । अतो विश्वतः सर्वस्मात् परिभवात् मा मां पातं रक्षतम् । "विश्वाभ्यो मा नाष्ट्राभ्यस्परिपाहि सर्वत इति वैणवं दण्डमादत्ते" इतिसूत्रम् । "विश्वाभ्य" इति मन्त्रेण वैणवं वंशमयं दण्डं यष्टिं आदत्ते । अत्राभिषेकादिदण्डधारणान्तं कर्म स्नानकर्तुर्नत्वाचार्यस्य । मन्त्रार्थः-हे दण्ड ! विश्वाभ्यः सर्वाभ्यो नाष्ट्राभ्यो राक्षसादिभ्यः सर्वावस्थासु मा मां परिपाहि सर्वभावेन रक्ष । "दन्तप्रक्षालनादीनि नित्यमपि वासश्छत्रोपानहश्चापूर्वाणि चेन्मन्त्रः" इति सूत्रम् । दन्तप्रक्षालनमादौ येषां पुष्पदानान्तानि दन्तप्रक्षालनादीनि तत्साधनं प्राप्य नित्यमपि नित्यमेव मन्त्रो भवति । अपिरेवार्थे । वाससी च छत्रं च उपानहौ च वासश्छत्रोपानहः चकाराद्दण्डोऽपि एतानि वास आदीनि चेद्यदि नवीनानि ध्रियन्ते तदैव मन्त्रो भवति न सर्वदा ।

इति श्रीप्रथमशाखीयरामकृष्णविरचिते पारस्करगृह्यसूत्रविवरणे संस्कारगणपतौ षष्ठी कण्डिका ॥



**अथास्य स्पष्टप्रयोगः** । अथ ब्रह्मचारी गुरुं अर्थदानेन सम्पूज्य तेनानुज्ञातो ज्योतिश्शास्त्रोक्ते शुभे काले आचार्यगृहे समावर्तनं कुर्यात् । ततो ब्रह्मचारी कृतनित्यक्रियः कृतप्रातरग्निकार्यश्च गुरोः पादावुपसंगृह्य तच्चरणयोर्मस्तकं निधाय "स्नास्यामी"ति पृच्छेत् । "स्नाही"ति गुरुरनुज्ञां दद्यात् । तत आचार्यः प्राणानायम्य देशकालौ स्मृत्वा **"अस्य ब्रह्मचारिणः गृहस्थाद्याश्रमान्तरप्राप्तिद्वारा श्रीपरमेश्वरप्रीत्यर्थं समावर्तनाख्यं कर्म करिष्ये । तदङ्गभूतं निर्विघ्नार्थं गणपतिपूजनं पुण्याहवाचनं मातृकापूजनं नान्दीश्राद्धं च करिष्ये"** पूर्ववत्सर्वं समाप्य । ततो ब्रह्मचारी आचार्यं "अहं स्नास्ये"इति पृच्छेत् । "स्नाही"ति गुरुः । अनुज्ञातः स्थण्डिले पञ्चभूसंस्कारपूर्वकं लौकिकाग्निं स्थापयेत् । अथ वैकल्पिकावधारणम् । **"तत्र पूर्वेण ब्रह्मणो गमनं, उत्तरेण पात्रासादनं, द्वे पवित्रे, ताम्रमयी आज्यस्थाली, पालाश्यः समिधः, प्राश्वाघारौ, समिद्धतमे आज्यभागौ, पूर्णपात्रं दक्षिणा, वेदाध्ययनानन्तरं समावर्तनं, दधिप्राशनं, अमौत्रधौतं वस्त्रं, एतान्वैकल्पिकान्पदार्थानहं करिष्ये"** । अथ देवताभिध्यानम् । तत्र **"प्रजापतिं, इन्द्रं, अग्निं, सोमं, अथ प्रधानदेवताः अन्तरिक्षं, वायुं, ब्रह्माणं, छन्दांसि, प्रजापतिं, देवान्, ऋषीन्, श्रद्धां, मेधां, सदसस्पतिं, अनुमतिं,"** इति यजुर्वेदपठनानन्तरं समावर्तने । यदा वेदद्वयं पठित्वा वेदत्रयं पठित्वा वेदचतुष्टयं पठित्वा वा समावर्तनं तदा तत्तद्देवताभिध्यानं ततो देवताहोमं वेदारम्भं च कुर्यात् । **"अग्निं, वायुं, सूर्यं, अग्नीवरुणौ, अग्नीवरुणौ, अग्निं वरुणं सवितारं विष्णुं विश्वान्देवान् मरुतः स्वर्कान्, वरुणं, प्रजापतिं, अग्निं स्विष्टकृतं, एता आज्येन अस्मिन्कर्मण्यहं यक्ष्ये"** । ततो ब्रह्मवरणाद्याज्यभागान्ते विशेषः । पात्रासादने उपकल्पनीयेषु **"समिन्धनकाष्ठानि, समिधः, पर्युक्षणार्थं उदकं, हरितान् कुशान् अष्टौ वारिकुम्भान्, औदुम्बरं दन्तकाष्ठं, दधि, नापितं, स्नानवारि, उद्वर्त्तनद्रव्यं, चन्दनं, अहते वाससी, यज्ञोपवीते, पुष्पा-**

णि, उष्णीषं, कर्णालङ्कारौ, अञ्जनं, दर्पणं, नूतनं छत्रं, उपानहौ, वैणवं दण्डं, पूर्णपात्रं, चे"ति । ततः पवित्रकरणादि पर्युक्षणान्तं कृत्वा होमं कुर्यात् । "ॐप्रजापतये स्वाहा । इदं प्रजापतये० । ॐइन्द्राय स्वाहा । इदमिन्द्राय० । ॐअग्नये स्वाहा । इदमग्नये० । ॐसोमाय स्वाहा । इदं सोमाय० । ॐअन्तरिक्षाय स्वाहा । इदमन्तरिक्षाय० । ॐवायवे स्वाहा । इदं वायवे० । ॐब्रह्मणे स्वाहा । इदं ब्रह्मणे० । ॐछन्दोभ्यः स्वाहा । इदं छन्दोभ्यो० । ॐप्रजापतये स्वाहा । इदं प्रजापतये० । ॐदेवेभ्यः स्वाहा । इदन्देवेभ्यो० । ॐऋषिभ्यः स्वाहा । इदं ऋषिभ्यो० । ॐश्रद्धायै स्वाहा । इदं श्रद्धायै० । ॐमेधायै स्वाहा । इदं मेधायै० । ॐसदसस्पतये स्वाहा । इदं सदस्पतये० । ॐअनुमतये स्वाहा । इदमनुमतये"० । यदि ऋग्वेदमधीत्य स्नानं करोति तदा "ॐपृथिव्यै स्वाहा । इदं पृथिव्यै० । ॐअग्नये स्वाहा । इदमग्नये०" । इत्याहुतिद्वयं हुत्वा ब्रह्मणे च्छन्दोभ्य इत्यारभ्यानुमत्यन्ता नवाहुतीर्जुहोति । एवं सामवेदेऽपि "ॐदिवे स्वाहा । इदं दिवे० । ॐसूर्याय स्वाहा । इदं सूर्याय०" । ब्रह्मण इत्याद्या नवाहुतीर्जुहोति । एवमथर्ववेदेऽपि "ॐदिग्भ्यः स्वाहा । इदं दिग्भ्यो० । ॐचन्द्रमसे स्वाहा । इदं चन्द्रमसे०" । ब्रह्मण इत्याद्या नवाहुतीर्जुहोति । यदि वेदचतुष्टयमधीत्य स्नानं करोति तदा आज्यभागानन्तरं "ॐअन्तरिक्षाय स्वाहा । इदमन्तरिक्षा० । ॐवायवे स्वाहा । इदं वायवे० । ॐब्रह्मणे स्वाहा । इदं ब्रह्मणे० । ॐछन्दोभ्यः स्वाहा । इदं छन्दोभ्यो० । ॐपृथिव्यै स्वाहा । इदं पृथिव्यै० । ॐअग्नये स्वाहा । इदमग्नये० । ॐब्रह्मणे स्वाहा । इदं ब्रह्मणे० । ॐछन्दोभ्यः स्वाहा । इदं छन्दोभ्यो० । ॐदिवे स्वाहा । इदं दिवे० । ॐसूर्याय स्वाहा । इदं सूर्याय० । ॐब्रह्मणे स्वाहा । इदं ब्रह्मणे० । ॐछन्दोभ्यः स्वाहा । इदं छन्दोभ्यो० । ॐदिग्भ्यः स्वाहा । इदं दिग्भ्यो० । ॐचन्द्रमसे स्वाहा । इदं चन्द्रमसे० । ॐब्रह्मणे स्वाहा ।

इदं ब्रह्मणे० । ॐछन्दोभ्यः स्वाहा । इदं छन्दोभ्यो० । ॐप्रजापतये स्वाहा । इदं प्रजापतये० । ॐदेवेभ्यः स्वाहा । इदं देवेभ्यो० । ॐऋषिभ्यः स्वाहा । इदं ऋषिभ्यो० । ॐश्रद्धायै स्वाहा । इदं श्रद्धायै० । ॐमेधायै स्वाहा । इदं मेधायै० । ॐसदसस्पतये स्वाहा । इदं सदसस्पतये० । ॐअनुमतये स्वाहा । इदं अनुमतये० । ॐभूः स्वाहा । इदमग्नये० । ॐभुवः स्वाहा । इदं वायवे० । ॐस्वः स्वाहा । इदं सूर्याय० । ॐत्वन्नो अग्ने० । इदमग्नीवरुणाभ्यां० । ॐसत्वन्नो अग्ने० । इदमग्नीवरुणाभ्यां० । ॐअयाश्चाग्ने० । इदमग्नये० । ॐये ते शतं० । इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यश्च न मम । ॐउदुत्तमं० । इदं वरुणाय० । ॐप्रजापतये स्वाहा । इदं प्रजापतये० । ॐअग्नये स्विष्टकृते स्वाहा । इदमग्नये स्विष्टकृते० । प्राशनान्ते ब्रह्मचारी पादोपसंग्रहणपूर्वकं गुरुं नमस्कृत्य ततस्तस्मिन्नेवाग्नौ समिदाधानं यथा—"ॐअग्ने सुश्रवः सुश्रवसं मा कुरु । यथा त्वमग्ने सुश्रवः सुश्रवा असि। एवं माऽ सुश्रवः सौश्रवसं कुरु। यथा त्वमग्ने देवानां यज्ञस्य निधिपा असि। एवमहं मनुष्याणां वेदस्य निधिपो भूयासम्" । ततः प्रदक्षिणमग्निं पर्युक्ष्य उत्थाय समिधमादधाति "ॐअग्नये समिधमाहार्षं बृहते जातवेदसे । यथा त्वमग्ने समिधा समिध्यस एवमहमायुषा मेधया वर्चसा प्रजया पशुभिर्ब्रह्मवर्चसेन समिन्धे जीवपुत्रो ममाचार्यो मेधाव्यहमसान्यनिराकरिष्णुर्यशस्वी तेजस्वी ब्रह्मवर्चस्यन्नादो भूयासꣳस्वाहा" इत्यनेन मन्त्रेण । ततोऽनेनैव मन्त्रेण द्वितीयां समिधमादधाति। अनेनैव तृतीयाम् । "एषा त"इति वा मन्त्रः । तत उपविश्य पूर्ववत्परिसमूहनपर्युक्षणे । "अग्ने सुश्रव" इत्यादिभिर्मन्त्रैरग्निं सन्धुक्ष्य पर्युक्षणं कृत्वा, ततस्तूष्णीं पाणी प्रतप्य वक्ष्यमाणैः सप्तभिर्मन्त्रैः प्रतिमन्त्रं मुखमार्जनम् । "ॐतनूपा अग्नेऽसि तन्वं मे पाहि । आयुर्दा अग्नेऽस्यायुर्मे देहि । वर्चोदा अग्नेऽसि वर्चो मे देहि । अग्ने यन्मे तन्वा ऊनं तन्म आपृण । मेधाम्मे देवः सविता

आदधातु। मेधान्देवी सरस्वती आदधातु। मेधामश्विनौ देवावाधत्तां पुष्करस्रजौ" "अङ्गानि च म आप्यायन्तां" सर्वाङ्गम्। "वाक्च म आप्यायतां" मुखम्। "प्राणश्च म आप्यायतां"नासिकाम्। "चक्षुश्च म आप्यायतां" नेत्रे। "श्रोत्रञ्च म आप्यायतां" श्रोत्रयोः। यशोबलं च म आप्यायतां" केवलमन्त्रपाठः। त्र्यायुषकरणं पूर्ववत्। ततोऽग्नेरुत्तरतः स्थापितानामष्टानां कुम्भानां दक्षिणोत्तरायतानां जलपूरितानां आम्रपल्लवसहितानां पूर्वभागे आस्तृतेषु कुशेषु प्रागग्रेषु ब्रह्मचारी उदङ्मुखः स्थित्वा"येऽप्स्वन्तरग्नयः प्रविष्टा गोह्य उपगोह्यो मयूखो मनोहा स्खलो विरुजस्तनूदुषुरिन्द्रियहा तान्विजहामि यो रोचनस्तमिह गृह्णामि" इत्यनेन मन्त्रेण प्रथमकलशाद्दक्षिणचुलुकेन जलमादाय तेनोदकेन स्वकीयं शिरोऽभिषिञ्चति। तत्र मन्त्रः "तेन मामभिषिञ्चामि श्रियै यशसे ब्रह्मणे ब्रह्मवर्चसाय"। अपरेभ्यः सप्त कुम्भेभ्यस्तदुत्तरस्थितेभ्यः दक्षिणचुलुकेन ग्राह्यम् "येऽप्स्वन्तरग्नय" इत्यनेन मन्त्रेण। अभिषेचनमन्त्रास्तु पृथक् पृथक्। तत्र मन्त्रः "येन श्रियमकृणुतां येनावमृशताᳬंसुरां येनाक्षावभ्यषिञ्चतां यद्वां तदश्विना यशः" इति मन्त्रेण द्वितीयकुम्भजलेनाभिषिच्य, पुन "येऽप्स्वन्तरग्नय" इत्यनेन मन्त्रेण तृतीयकुम्भाज्जलमादाय "आपो हि ष्ठे"तिमन्त्रेणाभिषिच्य, पुनरपि "येऽप्स्वन्त"रित्यनेन चतुर्थकुम्भजलमादाय "यो वः शिवतम" इतिमन्त्रेण अभिषेचनम्। पुनरपि "येऽप्स्वन्तरि"त्यनेन मन्त्रेण पञ्चमात्कुम्भादुदकमादाय "तस्मा अरङ्ग" इति मन्त्रेणाभिषेचनम्। पुनरपि षष्ठकुम्भात्तेनैव मन्त्रेण जलमादाय तूष्णीमभिषेचनम्। एवं सप्तमाष्टमकुम्भेभ्यो जलमादाय तेनैव मन्त्रेण तूष्णीमभिषेचनम्। "उदुत्तम"मितिमन्त्रेण मेखलां शिरोमार्गेण निःसार्य भूमौ निधाय कृष्णाजिनं चोत्तरीयं दण्डं च त्यजेत। वासोऽन्यत्परिधाय आदित्यमुपतिष्ठते "उद्यन्भ्राजभृष्णुरिन्द्रो मरुद्भिरस्थात्प्रातर्यावभिरस्थाद्दशसनिरसि दशसनिं मा कुर्वाविदन्मा गमयोद्यन्भ्राजभृष्णुरिन्द्रो मरुद्भिरस्थाद्दिवा यावभिरस्थाच्छतसनिरसि शत-

सनिं मा कुर्वाविदन्मागमयोद्य॰भ्राजभृष्णुरिन्द्रो मरुद्भिरस्थात्सायं यावभिरस्थात्सहस्रसनिरासि सहस्रसनिं मा कुर्वाविदन्मा गमय" इत्यनेन मन्त्रेण सूर्यमुपस्थाय ततो दधि तिलान्वा प्राश्य जटालोमनखानां निकृन्तनम्। आचमनम्। शीतोदकेन स्नानम्। औदुम्बरेण काष्ठेन दन्तधावनम्। तत्र मन्त्रः "ॐ अन्नाद्याय व्यूहध्वꣳ सोमो राजायमागमत्। स मे मुखं प्रमार्क्ष्यते यशसा च भगेन च" ततः सुगन्धिद्रव्येण उद्वर्तनम्। उष्णोदकेन स्नानम्। चन्दनाद्यनुलेपनं गृहीत्वा मुखनासिकयोरालम्भनम्। तत्र मन्त्रः "प्राणापानौ मे तर्पय चक्षुर्म्मे तर्पय श्रोत्रं मे तर्पय"। ततः पाण्योरवनेजनं कृत्वा तदुदकमादाय अपसव्यं कृत्वा प्राङ्मुखो भूत्वा तदुदकं दक्षिणस्यां दिशि निषिञ्चति। तत्र मन्त्रः "पितरः शुन्धध्वम्"। ततो यज्ञोपवीती भूत्वा उदकोपस्पर्शनम्। ततश्चन्दनादिनाऽऽत्मानमनुलिप्य जपेत् "ॐ सुचक्षा अहमक्षीभ्यां भूयासꣳ सुवर्चा मुखेन। सुश्रुत्कर्णाभ्यां भूयास"मिति। अहतवासःपरिधानम्। तत्र मन्त्रः "परिधास्यै यशोधास्यै दीर्घायुत्वाय जरदष्टिरस्मि। शतञ्च जीवामि शरदः पुरूची रायस्पोषमभि संव्ययिष्ये"। अत्र यज्ञोपवीतधारणं पूर्ववन्मन्त्रेण। गङ्गाधरोऽप्येवमेव। यज्ञोपवीतद्वयधारणं इति प्रयोगरत्नकारः। यजुर्वल्लभकारोऽप्येवमेव। अत्र गङ्गाधरमतं समीचीनं भासते, पूर्वयज्ञोपवीतत्यागाभावात्। यज्ञोपवीतद्वयस्य सर्वदैव परिधानविधानात्। अथोत्तरीयं "यशसा मा द्यावापृथिवी यशसेन्द्राबृहस्पती। यशो भगश्च मा विदद्यशो मा प्रतिपद्यता"मितिमन्त्रेण। अथ पुष्पमालाग्रहणं "या आहरज्जमदग्निः श्रद्धायै कामायेन्द्रियाय। ता अहं प्रतिगृह्णामि यशसा च भगेन च" इति मन्त्रेण। ततः शिरसि बन्धनं "यद्यशोऽप्सरसामिन्द्रश्चकार विपुलं पृथु। तेन संग्रथिताः सुमनस आबध्नामि यशो मयि" इतिमन्त्रेण। उष्णीषेण शिरो वेष्टयेत् "युवा सुवासाः परिवीत आगात्स उ श्रेयान्भवति जायमानः। तन्धीरासः कवय उन्नयन्ति स्वाध्यो मनसा देवयन्त" इतिमन्त्रेण। दक्षिणकर्णे कुण्डलं करोति "अलङ्करणमसि भूयोऽलङ्करणं भूयात्"इतिमन्त्रेण। ततो वामकर्णे

अनेनैव मन्त्रेण । अथाञ्जनं "वृत्रस्यासि कनिकश्चक्षुर्दा असि चक्षुर्मे देहि" इतिमन्त्रेण प्रथमं वामम् । ततो दक्षिणम् । आदर्शः "रोचिष्णुरसी"-त्यनेन मन्त्रेणात्मानमादर्शे प्रेक्षते । छत्रं "बृहस्पतेश्छदिरसि पाप्मनो मामन्तर्धेहि तेजसो यशसो माऽन्तर्धेही" त्यनेन मन्त्रेण । उपानहौ "प्रतिष्ठे स्थो विश्वतो मा पात" मित्यनेन मन्त्रेण । उपानहौ पादयोर्युगपत् । "विश्वाभ्यो मा नाष्ट्राभ्यस्परिपाहि सर्वत" इत्यनेन मन्त्रेण वैणवं दण्डमादत्ते । अभिषेकादि दण्डदानान्तं स्नानकर्त्ता करोति नाचार्यः ।

इति श्रीप्रथमशाखीयरामकृष्णविरचिते पारस्करगृह्यसूत्रविवरणे संस्कारगणपतौ समावर्तनप्रयोगः ।

---

## सप्तमी कण्डिका ।

स्नातस्य यमान्वक्ष्यामः कामादितरो नृत्यगीतवादित्राणि न कुर्यान्न च गच्छेत्कामन्तु गायति वैव गीते वा रमत इति श्रुतेर्ह्यपरं क्षेमे नक्तं ग्रामान्तरं न गच्छेन्न च धावेदुदपानावेक्षणवृक्षारोहणफलप्रपतनसन्धिसर्पणविवृतस्नानविषमलङ्घनशुक्लवदनसन्ध्यादित्यप्रेक्षणभैक्षणानि न कुर्यान्न ह वै स्नात्वा भिक्षेताप ह वै स्नात्वा भिक्षां जयतीति श्रुतेर्वर्षत्यप्रावृतो व्रजेदयम्मे वज्रः पाप्मानमपहनदित्यप्स्वात्मानं नावेक्षेताजातलोम्नीं विपुंस्रीं षण्ढं च नोपहसेद्गर्भिणीं विजन्येति ब्रूयात्सकुलमिति नकुलं भगालमिति कपालं मणिधनुरितीन्द्रधनुर्गां धयन्तीं परस्मै नाचक्षीतोर्वरायामनन्तर्हितायां भुमावुत्सर्पंस्तिष्ठन्न मूत्रपुरीषे कुर्यात्स्वयं प्रशीर्णेन काष्ठेन गुदं प्रमृजीत विकृतं वासो नाच्छादयीत दृढव्रतो वधत्रः स्यात्सर्वत आत्मानं गोपायेत्सर्वेषां मित्रमिव शुक्रियमध्येष्यमाणः ॥ ७ ॥

"**स्नातस्य यमान्वक्ष्याम**"इति सूत्रम् । स्नातस्य ब्रह्मचर्यात्समावृत्तस्य त्रैवर्णिकस्य यमान् नियमान् वक्ष्यामः । अधिकारसूत्रमेतत् । तेषु स्नातकोऽधिक्रियते "**कामादितरः**"इति सूत्रम् । कामादिच्छातः स्नानसम्बन्धशून्यः शूद्रोऽभिधीयते । स हि स्नातको भवति । एवं सति इच्छया शूद्रस्यापि यमेष्वधिकारो भवति । तानाह "**नृत्यगीतवादित्राणि न कुर्यान्न च गच्छेत्**"इति सूत्रम् । नृत्यं गीतं च वादित्रं च नृत्यगीतवादित्राणि तानि स्वयं न कुर्यात् । अन्यैः क्रियमाणानि नृत्यादीनि द्रष्टुं श्रोतुं वा न गच्छेत् । "**कामन्तु गीत**"मिति सूत्रम् । तु पुनः काममिच्छया गीतं गानं स्वयं कुर्यात् । अन्यैः क्रियमाणं द्रष्टुं श्रोतुं च गच्छेत् । कर्मण्यौपयिकत्वाद्गीतस्य । दृश्यते हि अश्वमेधे गानं "**ब्राह्मणोऽन्यां गायति राजन्योऽन्याम्**"इति । नचाक्रियमाणं शक्यते गातुमिति । "**गायति वैव गीते वा रमत इति श्रुतेर्ह्यपर**"मिति सूत्रम् । अपरं उखासम्भरणकाण्डे वचनमस्ति । "**तस्मादु हैतद्यः सर्वः कृत्स्नो मन्यते गायति वैव गीते वा रमते**"इति । अपरग्रहणाच्च पूर्वन्यायप्राप्तमभिहितम् । एवं च यत्रापि पुनर्वचनेन देवताग्रे नृत्यगीतादिकं विहितं तत्रापि ब्राह्मणादिभिः कार्यमेव, विहिते निषेधाप्रवृतेः॥ "**क्षेमे नक्तं ग्रामान्तरं न गच्छेत्**"इति सूत्रम् । क्षेमे सति रात्रौ ग्रामान्तरं अन्यग्रामं न गच्छेत् । आपदि तु रात्रावपि गच्छेत् । "**न च धावेत्**"इति सूत्रम् । क्षेमे इत्यनुवर्तते । क्षेमे सति न च धावेत किन्तु शीघ्रं गच्छेत् । "**उदपानावेक्षणवृक्षारोहणफलप्रपतनसन्धिसर्पणविवृतस्नानविषमलङ्घनशुक्रवदनसन्ध्यादित्यप्रेक्षणभैक्षणानि न कुर्यात्**" इति सूत्रम् । उदपानस्य कूपस्यावेक्षणं उपरि स्थित्वाऽधोमुखीभूयावलोकनम् । आम्रादिवृक्षस्यारोहणम् । उपरिगमनम् । फलानामाम्रादीनां प्रपतनं त्रोटनम् । सन्धौ सन्ध्यासमये सर्पणमध्वगमनम् । सन्धिः कुद्वारं वा तत्र सर्पणम् । सर्पगर्तादिलक्षणं वा । विवृतेन नग्नेन स्नानम् । विषमस्य पर्वतादेः ऊर्ध्वगमनं पर्वतगर्तादेर्लङ्घनमतिक्रमणं वा । शुक्रवदनमश्लीलभाषणम् । तत् त्रिविधं लज्जाकरम् दुःखकरम् अमङ्गलसूचकं च । सन्ध्यादित्यप्रेक्षणं सन्ध्या-

सूर्यावेक्षणम् ।

नेक्षेतादित्यमुद्यन्तं नास्तं यन्तं कदाचन ।
नोपसृष्टं न वारिस्थं न मध्यं नभसो गतम् ॥ इति ।

भिक्षणं सिद्धान्नस्यैव । उदपानावेक्षणादि वर्जयेत । तत्र भैक्षणप्रतिषेधे प्रत्यक्षमेव वचनमस्तीत्याह "न ह वै स्नात्वा भिक्षेताप ह वै स्नात्वा भिक्षां जयतीति श्रुतेः"इति सूत्रम्। स्नात्वा समावर्त्य न भिक्षेत । यतः स्नात्वा भिक्षां अपजयति अपाकरोति । "ह वै" इतिनिपातसमुदायो निश्चयार्थः । अत्र यो दृष्टार्थः विषयप्रतिषेधस्तत्र दृष्टार्थत्वादेवाकरणे प्राप्ते प्रतिषेधविधानसामर्थ्याददृष्टार्थताऽप्यनुमीयते । "वर्षत्यप्रावृतो व्रजेदयम्मे वज्रः पाप्मानमपहनदिति"इति सूत्रम् । पर्जन्ये वर्षति अप्रावृतः अनाच्छादित एव व्रजेत् गच्छेत । "अयं मे वज्र"इति मन्त्रेण । मन्त्रार्थः-जलकणरूपो वज्रो मम पाप्मानं अपहनत् अपहन्तु । "अप्स्वात्मानं नावेक्षेत"इति सूत्रम् । अप्सु जले आत्मानं स्वशरीरं न पश्येत् । "अजातलोम्नीं विपुंसीं षण्ढं च नोपहसेत्"इति सूत्रम् । समयेऽप्यनुत्पन्नलोम्नीं अजातानि लोमानि यस्याः सेयमजातलोम्नी ताम् । विपुंसीं कूर्चादिना पुरुषाकृतिं स्त्रियं, षण्ढः प्रसिद्धः । एतानि नोपहसेत् नाभिगच्छेत् । उपहासशब्देनाभिगमनमुच्यते । "गर्भिणीं विजन्येति ब्रूयात्सकुलमिति नकुलं भगालमिति कपालं मणिधनुरितीन्द्रधनुर्गां धयन्तीं परस्मै नाचक्षीत"इति सूत्रम् । गर्भिणीं गुर्विणीं विजन्येति पर्यायशब्देन वदेत् , न गर्भिणीमिति । उत्तरत्राप्येवमेव योज्यम् । सकुलं इति नकुलं ब्रूयात् । भगालमिति कपालं खर्परं ब्रूयात् । मणिधनुरिति इन्द्रधनुर्ब्रूयात् । परस्य गां सुरभिं धयन्तीं वत्सं पाययन्तीं परस्मै अन्यस्मै स्वामिनं वा नाचक्षीत न कथयेत् । "उर्वरायामनन्तर्हितायाम्भूमावुत्सर्पंस्तिष्ठन्न मूत्रपुरीषे कुर्यात्"इतिसूत्रम् । उर्वरायां सस्यवत्यां भूमौ तृणैरनन्तर्हितायां केवलायां च मूत्रस्य पुरीषस्य वा उत्सर्गं न कुर्यात् । किं च तिष्ठन् ऊर्ध्वः सन् न कुर्यात । तथोत्सर्पन् उत्प्लवमानः सन्न कुर्यात् । "स्वयं प्रशीर्णेन काष्ठेन गुदं प्रमृजीत"इतिसूत्रम् । आत्मनः -.

प्रयत्नमन्तरेण स्वयमेव प्रशीर्णेन छिन्नेन दारुशकलेन गुदं प्रमृजीत प्रोञ्छेत् परिमार्जयेत्। ततः शौचं कुर्यात्। "विकृतं वासो नाच्छादयीत" इति सूत्रम्। विकृतं नील्यादिना विकारमापादितं वस्त्रं न परिदधीत। अत्र न कषायप्रतिषेधः "कषायरक्तन्तु प्रशस्यत" इति भाष्यकारः। "दृढव्रतो वधत्रः स्या"दिति सूत्रम्। दृढं व्रतं सङ्कल्पो यस्य स दृढव्रतः स्याद्भवेत्। तथा वधात् घातादात्मानं परं च त्रायते रक्षतीति वधत्रः स्यात्। "सर्वेषां मित्रमिव" इति सूत्रम्। सर्वेषां स्वेषां परेषां च मित्रमिव सखेव सर्वेषु सुहृदिव हितकारी भवेत्। "मैत्रो वा ब्राह्मण" इति श्रुतेः।

इति श्रीप्रथमशाखीयरामकृष्णविरचिते पारस्करगृह्यसूत्रविवरणे संस्कारगणपतौ द्वितीयकाण्डे सप्तमी कण्डिका ॥ ७ ॥

## अष्टमी कण्डिका।

**तिस्रो रात्रीर्व्रतं चरेदमाꣳसाश्यमृण्मयपायी स्त्रीशूद्रशवकृष्णशकुनिशुनां चादर्शनमसम्भाषणं च तैः शवशूद्रसूतकान्नानि च नाद्यान्मूत्रपुरीषे ष्ठीवनं चातपे न कुर्यात्सूर्याच्चात्मानं नान्तर्दधीत तप्तेनोदकार्थान्कुर्वीतावज्योत्य रात्रौ भोजनꣳ सत्यवदनमेव वा दीक्षितोऽप्यातपादीनि कुर्यात्प्रवर्ग्यवाँश्चेत् ॥ ८ ॥**

स्नातस्य समावर्तनप्रभृति यावद्गार्हस्थ्यं धर्मानभिधाय अधुना तस्यैव समावर्तनमारभ्य त्रिरात्रं व्रतमाह "तिस्रो रात्रीर्व्रतं चरेत्" इति सूत्रम्। वक्ष्यमाणं व्रतं तिस्रः त्रिसंख्या रात्रीः अहोरात्राणि चरेदनुतिष्ठेत्। "अमाꣳसाश्यमृण्मयपायी" इति सूत्रम्। मांसमश्नातीत्येवंशीलो मांसाशी न मांसाशी अमांसाशी मृन्मयेन मृत्पात्रेण पिबतीत्येवंशीलो मृन्मयपायी न मृन्मयपायी अमृन्मयपायी स्यादिति शेषः। "स्त्रीशूद्रशवकृष्णशकुनिशुनां चादर्शनमसम्भाषणं च तै"रिति सूत्रम्। स्त्री नारी,

शूद्रोऽन्त्यवर्णः, शवः मृतशरीरं, कृष्णशकुनिः काकः, श्वा कुक्कुरः, एतेषां अदर्शनं भवेत् । एतैः स्त्र्यादिभिः सह असम्भाषणं च अवचनव्यवहारः । अत्र यस्य येन यादृक् सम्भाषणं तादृक् निषिद्ध्यते । "**शवशूद्रसूतकान्नानि च नाद्यात्**" इति सूत्रम् । मरणानन्तरं कृत्वा लब्धा वा ज्ञातिभिर्यदद्यते तच्छवान्नम् । शूद्रस्य भोज्यान्नस्य नापितादेरन्नं शूद्रान्नम् । प्रसवे सति अर्वाक् दशाहात् यत् ज्ञातीनामन्नं तत्सूतकान्नम् । एतानि नाद्यात् न भक्षयेत् । "**मूत्रपुरीषे ष्ठीवनं चातपे न कुर्या**"दिति सूत्रम् । मूत्रं च पुरीषञ्च मूत्रपुरीषे ष्ठीवनं थूत्कृत्य मुखाल्लालादित्यजनमेतत्त्रयं आतपे घर्मे न कुर्यात् नोत्सृजेत् । "**सूर्याच्चात्मानं नान्तर्दधीत**" इति सूत्रम् । सूर्यादादित्यादात्मानं स्वं छत्रादिनान्तर्हितं न कुर्यात् । "**तप्तेनोदकार्थान्कुर्वीत**" इति सूत्रम् । तप्तेन जलेनोदकार्थानुदकसाध्याः शौचाचमनादिकाः क्रियाः कार्याः । "**अवज्योत्य रात्रौ भोजन**"मिति सूत्रम् । रात्रौ अवज्योत्य दीपोल्काद्यन्यतरेण प्रकाशं कृत्वा भोजनं कुर्यात् । "**सत्यवदनमेव वा**"इति सूत्रम् । अथ वा सत्यभाषणमेव कुर्यात्, नाधस्तनूनियमान् । "**दीक्षितोऽप्यातपादीनि कुर्यात्प्रवर्ग्यवाँश्चेत्**" इति सूत्रम् । चेद्यदि दीक्षितः सोमयागार्थं स्वीकृतदीक्षः प्रवर्ग्यवान् प्रवर्ग्यः सोमयागाङ्गकर्मविशेषः सोऽस्यास्तीति तथा तदा आतपादीनि "**मूत्रपुरीषे ष्ठीवनं चातपे न कुर्या**"दित्यादीनि करोति । अत्रान्येऽपि नियमा उच्यन्ते । याज्ञवल्क्यः—

मातृपित्रतिथिभ्रातृजामिसम्बन्धिमातुलैः ।
वृद्धबालातुराचार्यवैद्यसंश्रितबान्धवैः ॥
ऋत्विक्पुरोहितापत्यभार्यादाससनाभिभिः ।
विवादं वर्जयित्वा तु सर्वाँल्लोकाञ्जयेद्गृही ॥

एतैः सह विवादवर्जने कारणमाह मनुः—

आचार्यो ब्रह्मलोकेशः प्राजापत्यः पिता प्रभुः ।
अतिथिस्त्विन्द्रलोकेशो देवलोकस्य चर्त्विजः ॥
जामयोऽप्सरसां लोके वैश्वदेवस्य बान्धवाः ।

सम्बन्धिनो ह्यपां लोके पृथिव्यां मातृमातुलाः ॥
आकाशेशास्तु विज्ञेया बालवृद्धकृशातुराः।
भ्राता ज्येष्ठः समः पित्रा भार्या पुत्रः स्वका तनुः ॥
छाया स्वा दासवर्गस्तु दुहिता कृपणः परः।
तस्मादेतैरधिक्षिप्तः सहेतासत्वरः सदा ॥ इति।

पैठीनसिः—"मत्तप्रमत्तोन्मत्तैः सह सम्भाषणं न कुर्वीत न परस्त्रियं रहसि सम्भाषेते"ति। मत्तो मदनीयद्रव्येण, प्रमत्तो ग्रहावेशादिना, उन्मत्तो वाय्वाहिना। सांख्यायनगृह्ये—"सूतिकोदक्यां न वदेत्" इति। गौतमः—"न म्लेच्छाशुच्यधार्मिकैः सह सम्भाषेत सम्भाष्य पुण्यकृतो मनसा ध्यायेद्ब्राह्मणेन सह सम्भाषेते"ति। महाभारते—

सम्पन्नं भोजने ब्रूयात्पानीये तर्पणं तथा।
सुश्रुतं पायसे ब्रूयाद्यवाग्वां कृसरे तथा ॥
महात्मनां च गुह्यानि न वक्तव्यानि कर्हिचित्।
त्वङ्कारं नामधेयं च ज्येष्ठानां परिवर्जयेत् ॥
अधराणां समानानामुभयेषां न दुष्यति ॥

नारदोऽपि—

गुरोर्ज्येष्ठकलत्रस्य भ्रातुर्ज्येष्ठस्य चात्मनः।
आयुःकामो न गृह्णीयान्नामातिकृपणस्य च ॥

वसिष्ठः—"नावृतो यज्ञं गच्छेद्यदि गच्छेत्प्रदक्षिणं पुनराव्रजे"दिति। नावृतोऽनिमन्त्रितः।

द्वौ विप्रौ विप्रमग्निं च दम्पत्योः स्वामिनोस्तथा।
अन्तरेण न गन्तव्यं हलस्य वृषभस्य च ॥

पैठीनसिरपि—"न गोब्राह्मणाग्न्यन्तरे व्यवेयादनुज्ञातोऽथ वा व्रजे"दिति। अथानाक्रमणीयानि। तत्र मनुः—

देवतानां गुरो राज्ञः स्नातकाचार्ययोस्तथा।
नाक्रामेत्कामतश्छायां बभ्रुणो दीक्षितस्य च ॥

बभ्रुः कपिलः । याज्ञवल्क्योऽपि—

देवर्त्विक्स्नातकाचार्यराज्ञां छायां परस्त्रियाः ।
नाक्रामेद्रक्तविण्मूत्रष्ठीवनोद्वर्त्तनानि च ॥

विष्णुपुराणे—

पूज्यदेवध्वजज्योतिश्छायां नातिक्रमेद्बुधः ॥

देवीपुराणे—

न चैव गोः प्रसूतायाः विश्वसेत्स्त्रीजनस्य च ।
न मुखेन धमेदग्निं न खड्गं लङ्घयेत्तथा ॥ इति ।

याज्ञवल्क्यः—

पादौ प्रतापयेन्नाग्नौ न चैनमभिलङ्घयेत् ॥

यमः—

स्वान्तु नाक्रामयेच्छायां क्लीबेन पतितेन वा ।
चाण्डालेन द्विषद्भिश्च नित्यं रोगान्वितेन वा ॥

अथानधिष्ठेयानि । तत्र मनुः—

मध्यन्दिनेऽर्धरात्रे च श्राद्धं भुक्त्वा च सामिषम् ।
सन्ध्ययोरुभयोश्चैव न सेवेत चतुष्पथम् ॥
उद्वर्त्तनमधःस्नानं विण्मूत्रे रक्तमेव च ।
श्लेष्मनिष्ठ्यूतवातानि नाधितिष्ठेत कामतः ॥
वैरिणो नोपसेवेत साहाय्यं नैव वैरिणः ।
अधार्मिकं तस्करं च परस्यैव च योषितम् ॥

उद्वर्त्तनं विलेपनम्, अधःस्नानं स्नानादधः पतितं जलम् । निष्ठ्यूतं उद्गीर्णं फूत्कारादि । विष्णुः—"न चतुष्पथमधितिष्ठेत न रात्रौ वृक्ष-मूलं शून्यालयं न तृणं न वधनागारम्" । तृणं तृणकूटः । आसना-र्थं तु न निषेधः । मनुः—

तृणानि भूमिरुदकं वाक्चतुर्थी च सूनृता ।
एतान्यपि सतां गेहे नोच्छिद्यन्ते कदाचन ॥

आसनत्वेन तस्य विधानात् । शङ्खः—"नोद्धृतकुद्दकैः सहैकत्र

तिष्ठेत्” उद्धतो अविनीतः । कुहकः वशीकरणादिनिष्ठः । हारीतः—

“आवपनापमार्ज्जनापस्नानतुषभस्मास्थिकपालसञ्चयन्नाधितिष्ठेत्” । आवपनं गोण्यादि भाण्डम् । अपमार्जनं सम्मार्जनी । कपालसञ्चयः खरसमूहः । याज्ञवल्क्यः—

विरुद्धं वर्जयेत्कर्म प्रेतधूमं नदीतरम् ।
केशभस्मतुषाङ्गारकपालेषु च संस्थितिम् ॥

विरुद्धं आर्याचारविरुद्धम् । तथा च मार्कण्डेयः—

म्लेच्छभाषा न वक्तव्या म्लेच्छवेषं न कारयेत् ।
नासंवृतमुखः कुर्याद्धास्यं जृम्भां तथैव च ॥
पानीयस्य क्रिया नक्तं न कार्या भूतिमिच्छता ।
शूर्पवातं नखाग्राम्बुस्नानवस्त्रघटोदकम् ॥
मार्जनीरेणुकेशाम्बु हन्ति पुण्यं पुराकृतम् ॥ इति ।

क्रिया स्नानाहरणादि । घटोदकं स्नानघटावशिष्टम् । शातातपः—

अजाविरेणुसंस्पर्शादाशु लक्ष्मीश्च हीयते ।
श्वकाकोष्ट्रखरोलूकशूकरग्रामपक्षिणाम् ॥ इति ।

विष्णुः—न संहताभ्यां पाणिभ्यां शिरः उदरञ्च कण्डूयेदिति । याज्ञवल्क्यः ।

नेक्षेतार्कं न नग्नां स्त्रीं न च संसृष्टमैथुनाम् ।
न च मूत्रं पुरीषं वा नाशुची राहुतारकाः ॥ इति ।

मनुः—

नाश्नीयाद्भार्यया सार्धं नैनामीक्षेत चाश्नतीम् ।
क्षुवन्तीं जृम्भमाणाञ्च न चासीनां यथासुखम् ॥
नाञ्जयन्तीं स्वके नेत्रे न चाभ्यक्तामनावृताम् ।
न पश्येत्प्रसवन्तीं च तेजस्कामो द्विजोत्तमः ॥ इति ।

मार्कण्डेयपुराणे—

देवतापितृसच्छास्त्रयज्ञसत्यादिनिन्दकैः ।
कृत्वा स्पर्शनमालापं शुद्ध्येतार्कावलोकनात् ॥

अवलोक्य तथोदक्यामन्त्यजं पतितं शठम् ।
विधर्मसूतिकाषण्ढविवस्त्रान्त्यावसायिनः ॥
मृगनिर्यातकाँश्चैव परदाररताँस्तथा ।
एतदेव हि कर्तव्यं प्राज्ञैः शोधनमात्मनः ॥

स्कान्दे—

कृतघ्नं मानवं दृष्ट्वा नरकेष्वपि कुत्सितम् ।
शुध्यर्थं देवि ! द्रष्टव्याः सोमानलदिवाकराः ॥ इति ।

सोमादीनां यथासम्भवं विकल्पः । अथैषां प्रायश्चित्तानि । मनुः—

वेदोदितानां नित्यानां कर्मणां समतिक्रमे ।
स्नातकव्रतलोपे तु प्रायश्चित्तमभोजनम् ॥

इदं प्रायश्चित्तं ब्राह्मणक्षत्रिययोः । तथा च हरदत्तः—

स्नातकव्रतलोपे तु प्रायश्चित्तं विधीयते ।
राजब्राह्मणयोरेव नेतरेषां कथञ्चन ॥

एषां च स्नातकधर्माणां गृहस्थादिसाधारण्यमवगन्तव्यम् ।

इति श्रीप्रथमशाखीयरामकृष्णविरचिते पारस्करगृह्यसूत्रविवरणे संस्कारगणपतौ अष्टमी कण्डिका ॥



अत्र प्रसङ्गतः शौचस्नानसन्ध्यातर्पणदेवार्चनवैश्वदेवविधिरुच्यते ।

तत्र याज्ञवल्क्यः—

उपनीय गुरुः शिष्यं महाव्याहृतिपूर्वकम् ।
वेदमध्यापयेदेनं शौचाचाराँश्च शिक्षयेत् ॥

तत्रादौ शौचविधिमाह । तत्र—

ब्राह्मे मुहूर्ते चोत्थाय चिन्तयेदात्मनो हितम् ॥

इति याज्ञवल्क्यादिवचनादात्मचिन्तनं विधातव्यम् । तथा च मनुः

ब्राह्मे मुहूर्ते चोत्थाय धर्मार्थौ चानुचिन्तयेत् ।
कायक्लेशाँश्च तन्मूलान्वेदतत्त्वार्थमेव च ॥

धर्मप्रवृत्तावपि—

उषःकाले समुत्थाय चिन्तयेदात्मनो हितम्।
स्मृत्वा नारायणं देवं स्तोत्राण्यपि च सञ्जपेत्॥

अत्र ब्राह्मो मुहूर्तः सूर्योदयात्प्रागुपान्त्यो मुहूर्तः। तत्र गर्गः—

नाडिकाः षट्पञ्चाशत्प्रातस्त्वेकाधिकोऽरुणः।
उषःकालोऽष्टपञ्चाशच्छेषः सूर्योदयः स्मृतः॥

तथा च मनुः—

रात्रेस्तु पश्चिमो यामो मुहूर्तो ब्राह्म उच्यते॥ इति।

व्यासः—

प्रातः स्मरामि भवभीतिमहार्त्तिशान्त्यै नारायणं गरुडवाहनमब्जयोनिम्
ग्राहाभिभूतवरवारणमुक्तिहेतुं चक्रायुधं तरुणवारिजपत्रनेत्रम्॥
प्रातर्नमामि मनसा वचसा च मूर्ध्ना पादारविन्दयुगलं परमस्य पुंसः।
नारायणस्य नरकार्णवतारणस्य पारायणप्रवणविप्रपरायणस्य॥
प्रातर्भजामि भजतामभयङ्करं तं प्राक्सर्वजन्मकृतपापभयापहन्त्यै।
यो ग्राहवक्त्रपतिताङ्घ्रिगजेन्द्रघोरं शोकप्रणाशमकरोद्धृतशङ्खचक्रः॥

श्लोकत्रयमिदं पुण्यं प्रातः प्रातः पठेन्नरः।
लोकत्रयगुरुस्तस्मै दद्यादात्मपदं हरिः॥

अन्यानपि स्मृत्युक्तान् पठित्वा भूमिं प्रार्थयेत्। तत्र मन्त्रः—

समुद्रवसने! देवि! पर्वतस्तनमण्डिते!।
विष्णुपत्नि! नमस्तुभ्यं पादस्पर्शं क्षमस्व मे॥ इति।

अथ मूत्रपुरीषोत्सर्गः। विधानपारिजाते पाराशरः—

ततः प्रातः समुत्थाय कुर्याद्विण्मूत्रमेव च।
नैर्ऋत्यामिषुनिक्षेपमतीत्याभ्यधिकं भुवः॥

तथा चापस्तम्बः—"मूत्रपुरीषे कुर्याद्दक्षिणा दिशि दक्षिणापरां वा गत्वे"ति। दक्षिणापरा नैर्ऋती। पराशरः—

अन्तर्धाय तृणैर्भूमिं शिरः प्रावृत्य वाससा।
वाचं नियम्य यत्नेन ष्ठीवनोच्छ्वासवर्जितः॥

कुशादिव्यतिरिक्तैः । तथा च हारीतः —

प्रभाते मैथुने चैव प्रस्रावे दन्तधावने ।
स्नाने भोजनकाले च षट्सु मौनं विधीयते ॥

शाङ्खायनगृह्यम्—"यद्येवावस्त्रो यज्ञोपवीतं कर्णे कृत्वा मूत्रपुरीषोत्सर्गं कुर्या"दिति । कर्णोऽत्र दक्षिणः । विधानपारिजाते—

कृत्वा यज्ञोपवीतन्तु पृष्ठतः कण्ठलम्बितम् ।
विण्मूत्रन्तु गृही कुर्यात्कर्णस्थः प्रथमाश्रमी ॥

विशेषमाह संग्रहे—

मूत्रे तु दक्षिणे कर्णे पुरीषे वामकर्णके ।
धारयेद्ब्रह्मसूत्रन्तु मैथुने ह्युपवीतवत् ॥

मनुः—

मूत्रोच्चारसमुत्सर्गं दिवा कुर्यादुदङ्मुखः ।
दक्षिणाभिमुखो रात्रौ सन्ध्ययोश्च यथा दिवा ॥
छायायामन्धकारे वा रात्रावहनि वा द्विजः ।
यथासुखमुखः कुर्यात्प्राणबाधाभयेषु च ॥

शङ्खः—

तर्जनीं रौप्यसंयुक्तां ब्रह्मग्रन्थियुतां शिखाम् ।
भोजने मैथुने मूत्रे कुर्वन्कृच्छ्रेण शुद्ध्यति ॥

अथ वर्ज्यदेशानाह मनुः —

न मूत्रं पथि कुर्वीत न भस्मनि न गोव्रजे ।
न फालकृष्टे न जले न चित्यां न च पर्वते ॥
न जीर्णदेवायतने न वल्मीके न शाद्वले ।
न ससत्त्वेषु गर्त्तेषु न गच्छन्नापि च स्थितः ॥
वाय्वग्निविप्रमादित्यमपः पश्यँस्तथैव च ॥

नद्यादौ विशेषमाह स्मृतौ—

दश हस्तान्परित्यज्य मूत्रं कुर्याज्जलाशये ।
शतहस्तं पुरीषं तु तीर्थे नद्यां चतुर्गुणम् ॥

तथोपकृष्य विण्मूत्रं काष्ठलोष्ठतृणादिना ॥

इतिपरिमृष्टगुदलिङ्गो गृहीतशिश्नश्चोत्तिष्ठेत्। मनुः—

अरण्येऽनुदके रात्रौ चोरव्याघ्राकुले पथि।
कृत्वा मूत्रपुरीषे च द्रव्यहस्तो न दुष्यति ॥

इति मूत्रपुरीषोत्सर्गविधिः। अथ शौचम्। दक्षः—

शौचे यत्नः सदा कार्यः शौचमूलो द्विजोत्तमः।
शौचाचारविहीनस्य समस्ता निष्फलाः क्रियाः ॥

अन्यच्च—

मूत्रं कृत्वा विना शौचं कच्छं बद्ध्वा द्विजाधमः।
कथितो मूत्रकृत्वा च स मूढो नरकं व्रजेत् ॥

स्मृत्यर्थसारे—

शौचन्तु द्विविधं प्रोक्तं बाह्यमाभ्यन्तरं तथा।
मृज्जलाभ्यां स्मृतं बाह्यं भावशुद्धिस्तथान्तरम् ॥

तत्र देवतागृहवाल्मीकमूषकोत्करादिमृद्भिन्नां मृदमुद्धृतोदकं चादाय वाग्यत उदङ्मुखो दिवा शौचं कुर्यात्। रात्रौ चेद्दक्षिणामुखः। तदप्युदपात्रं मलमूत्रोत्सर्जनसमये हस्ते न धार्यम्। गौतमः—

करस्थोदकपात्रस्तु विण्मूत्रं कुरुते यदि।
तज्जलं मूत्रसदृशं सुरापानेन तत्समम् ॥

धर्मप्रवृत्तौ—

अन्तर्जले देवगृहे वल्मीके मूषकस्थले।
कृतशौचावशिष्टा च न ग्राह्याः पञ्च मृत्तिकाः ॥
मलमूत्रसमीपे वा वृक्षमूलस्थिता च या।
वापीकूपतडागेषु न ग्राह्याः पञ्चमृत्तिकाः ॥
आहरेन्मृत्तिकां विप्रः कुल्यासारिदकूलयोः।
शुद्धदेशं तु संवीक्ष्य शर्कराश्मविवर्जितम् ॥
अभावे मृद उक्ताया यस्मिन्देशे तु या भवेत्।
तया शौचं प्रकुर्वीत द्विजो मृत्तिकयाऽपि च ॥

आर्द्रामलकमात्रा तु मूत्रशौचे तु मृत्तिका ।
त्रिपर्वपूरमात्रा वा मूत्रशौचे तु मृत्तिका ॥

शौनकः—

एका तु मृत्तिका लिङ्गे तिस्रः सव्यकरे मृदः ।
करद्वये मृद्द्वयं स्यान्मृत्प्रमाणमिहोच्यते ॥
मूत्रात्तु द्विगुणं शुक्रे मैथुने त्रिगुणं स्मृतम् ।
लिङ्गशौचमिदं प्रोक्तं गुदशौचमथोच्यते ॥

विज्ञानेश्वरः—

लिङ्गशौचं पुरा कार्यं गुदशौचं ततः स्मृतम् ॥

इति वचनाल्लिङ्गशौचानन्तरं गुदशौचम् ।

पञ्चापाने मृदः क्षेप्याः करे वामे दश स्मृताः ।
हस्तयोः सप्त दातव्याः पुरीषे मृत्प्रमाणकम् ॥
अर्धप्रसृतिमात्रा स्यात्तदर्धं तु ततः परम् ।
गुदशौचमिति प्रोक्तं पादशौचमथोच्यते ॥

विधानपारिजाते—

एकैकं पादयोर्दद्याद्धस्तयोर्लिङ्गशौचवत् ।
एतच्छौचं गृहस्थानां द्विगुणं ब्रह्मचारिणाम् ॥
त्रिगुणं स्याद्वनस्थानां यतीनां च चतुर्गुणम् ।
यद्दिवा विहितं शौचं तदर्धं निशि कीर्तितम् ॥
तदर्धमातुरे प्रोक्तमातुरस्यार्धमध्वनि ।
स्त्रीशूद्रयोरर्धमानं शौचं प्रोक्तं मनीषिभिः ॥
स्त्रीशूद्रादेरशक्तानां बालानां चोपनीतिनाम् ।
गन्धलेपक्षयकरं शौचं कुर्यादतन्द्रितः ॥
गङ्गातोयेन कृत्स्नेन मृद्भारैश्च नगोपमैः ।
आमृत्योराचरन् शौचं भावदुष्टो न शुध्यति ॥

इति स्मृतेर्भावशुद्धिरप्यपेक्षिता । अत्रोक्तसंख्यानियमातिक्रमे सति

प्रायश्चित्तमुक्तं स्मृतिरत्नावल्याम्—

गायत्र्यष्टशतं चैव प्राणायामत्रयं तथा ।
प्रायश्चित्तमिदं प्रोक्तं नियमातिक्रमे सति ॥

क्वचिद्विष्णुस्मरणमेवोक्तम् । अनुदकमूत्रकरणे सचैलं स्नानं व्याहृतिहोमश्चेति प्रायश्चित्तद्वयमिति, प्रयोगपारिजाते उक्तम् । तत आचमनात्प्राग्वामभागे गण्डूषान् क्षिपेत् । तदुक्तमाचारप्रदीपे—

मूत्रे पुरीषे भुक्त्यन्ते रेतःप्रस्रवणे तथा ।
चतुरष्टद्विषट्त्र्यष्टगण्डूषैः शुद्ध्यते क्रमात् ॥
पुरतः सर्वदेवाश्च दक्षिणे पितरस्तथा ।
ऋषयः सर्वतः पृष्ठे वामे गण्डूषमुत्सृजेत् ॥

इति शौचविधिः ।

अथाचमनम् ।

तत्त्रिविधम्–श्रौताचमनस्मार्ताचमनपौराणाचमनभेदात् । तत्र श्रौताचमनम् । पराशरः—

देव्याः पादैस्त्रिभिः पीत्वा अब्लिङ्गैर्नवधा स्पृशेत् ।
पुनर्व्याहृतिगायत्र्या शिरोमन्त्रैर्द्विधा स्पृशेत् ॥

अब्लिङ्गकै"रापो हि ष्ठे"त्यादिभिस्त्रिभिः प्रतिपादैः ।

यः करोति प्रयत्नेन श्रौतमाचमनं द्विजः ।
अशुद्धात्माऽपि पापिष्ठः स पूतो नात्र संशयः ॥

आश्वलायनः–"दक्षिण उपवीतोपविश्य हस्ताववनिज्य त्रिराचामेदद्भिः परिमृज्य सकृदुपस्पृश्य पच्छिरश्चक्षुषी नासिके श्रोत्रे हृदयमालभ्य सव्यपाणिपादं प्रोक्षति" ।

सन्ध्यादौ ब्रह्मयज्ञे च होमे देवार्चने तथा ।
श्रौतमेव द्विजैः कार्यमिति बौधायनोऽब्रवीत् ॥

विधानपारिजाते—

पौराणमथ वा स्मार्तं श्रौतमाचमनं तथा ।
तत्तत्कर्मणि कुर्वन्ति यथेष्टं वा विधीयते ॥

अथ स्मार्ताचमनम् । सूत्रोक्त"मामाग"न्निति मन्त्रेण । अथ पौराणाचमनं सङ्ग्रहे--

केशवादित्रिभिः पीत्वा द्वाभ्यां प्रक्षालयेत्करौ ।
द्वाभ्यामोष्ठौ च सम्मृज्य द्वाभ्यामुन्मार्जयेत्ततः ॥
तथा त्वेकेन मूर्द्धानं ततः सङ्कर्षणादिभिः ।
ऊर्ध्वोष्ठनासाक्षिकर्णान्नाभ्युरःस्कन्धकान्स्पृशेत् ॥
एवमाचमनं कृत्वा साक्षान्नारायणो भवेत् ॥ इति ।

आचमनधर्माः अत्रिः--

ताम्रपात्रस्थितैर्वापि तथा तोयाशयस्थितैः ॥
कुर्वीताचमनं विप्रस्ततः खानि समालभेत् ।
तदलाभे तु कुर्वीत पात्रधारोदकेन च ॥

तथा--

तावन्नोपस्पृशेद्विप्रो यावद्वामेन न स्पृशेत् ।
वामे हि द्वादशादित्या वरुणस्त्रिदशेश्वरः ॥
वर्त्तन्ते सर्वदा यस्मात्तस्माद्वामेन संस्पृशेत् ।
शूद्राहृतैस्तु नाचामेन्नैव पाण्याहृतैरपि ॥

मनुः—

कांस्येनायसपात्रेण त्रपुसीसकपित्तलैः ।
आचान्तः शतकृत्वोऽपि न कदाचन शुद्ध्यति ॥
पादशेषं पीतशेषं शौचशेषं च यज्जलम् ।
तज्जलं रुधिरैस्तुल्यं पर्यग्निकरणं विना ॥

पर्यग्निकरणमप्यसम्भवे द्रष्टव्यम् । अथ द्विराचमननिमित्तानि । याज्ञवल्क्यः—

स्नात्वा पीत्वा क्षुते सुप्ते भुक्त्वा रथ्योपसर्पणे ।
आचान्तः पुनराचामेद्वासोऽपि परिधाय च ॥

आचारदीपे यमः--

भोजने शयने दाने उच्चारे च प्रतिग्रहे ।
सन्ध्यात्रयाम्बुदाने च पूर्वं पश्चाद्द्विराचमेत् ॥

सपवित्राचमने विशेषः। मार्कण्डेयः—

सपवित्रेण हस्तेन कुर्यादाचमनक्रियाम्।
नोच्छिष्टं तत्पवित्रन्तु भुक्तोच्छिष्टं तु वर्जयेत्॥

सपवित्रत्वं दक्षिणहस्तस्य ज्ञेयम्। कात्यायनः—

सव्ये पाणौ कुशान्कृत्वा दक्षिणे सपवित्रकः॥

इत्याचमनविधिः। अथ दन्तधावनम्। दक्षः—

मुखे पर्युषिते नित्यं भवत्यप्रयतो नरः।
तदार्द्रकाष्ठं शुष्कं वा भक्षयेद्दन्तधावनम्॥

गर्गः—

दशाङ्गुलं तु विप्राणां क्षत्रियाणां नवाङ्गुलम्।
अष्टाङ्गुलं तु वैश्यानां शूद्राणां सप्त सम्मितम्॥
चतुरङ्गुलमानेन नारीणां विधिरुच्यते॥

विष्णुः—

कण्टकीक्षीरवृक्षोत्थं द्वादशाङ्गुलमव्रणम्।
कनिष्ठिकाग्रवत्स्थूलं पर्वार्धकृतकूर्चकम्॥

स्मृत्यन्तरे—

खदिरश्च करञ्जश्च कदम्बश्च वटस्तथा।
तिन्तिणी वेणुपृष्ठश्च ह्याम्रो निम्बस्तथैव च॥
अपामार्गश्च बिल्वश्च ह्यर्कश्चौदुम्बरस्तथा।
एते प्रशस्ताः कथिता दन्तधावनकर्म्मसु॥

अथ वर्ज्यकाष्ठादि। मार्कण्डेयः—

कोविदारशमीतालश्लेष्मातकविभीतकान्।
वर्जयेद्दन्तकाष्ठे च गुग्गुलं क्रमुकं तथा॥

स्मृत्यर्थसारे—

आसने शयने याने पादुके दन्तधावने।
पालाशाश्वत्थकौ वर्ज्यौ सर्वकुत्सितकर्मसु॥
अलाभे दन्तकाष्ठानां निषिद्धायां तिथौ तथा।
अपां द्वादशगण्डूषैर्विदध्याद्दन्तधावनम्॥

तृणपर्णैः सदा कुर्यादमामेकादशीं विना ।
तयोरपि च कर्तव्यं जम्बूनिम्बाम्रपल्लवैः ॥

अथ निषिद्धातिथयः ।

चतुर्दश्यष्टमीदर्शपूर्णिमासङ्क्रमेषु च ।
नन्दासु च नवम्यां च दन्तकाष्ठं विवर्जयेत् ॥
उत्पत्तौ च विपत्तौ च मैथुने दन्तधावने ।
अभ्यङ्गे ह्युदधिस्नाने तिथिस्तात्कालिकी स्मृता ॥

विधानपारिजाते—

श्राद्धे यज्ञे च नियमे तथा प्रोषितभर्तृका ।
रजस्वला सूतिका च वर्ज्जयेद्दन्तधावनम् ॥

यमः—

श्राद्धे जन्मदिने चैव विवाहे जीर्णदूषिते ।
व्रते चैव प्रवासे च वर्जयेद्दन्तधावनम् ॥

धर्मप्रवृत्तौ—

अङ्गारवालुकामिश्रभस्माङ्गुलिनखैरपि ।
इष्टकालोष्ठपाषाणैर्न कुर्याद्दन्तधावनम् ॥

दन्तकाष्ठग्रहणमन्त्रस्तु—

आयुर्बलं यशो वर्चः प्रजाः पशुवसूनि च ।
ब्रह्म प्रज्ञां च मेधां च त्वन्नो देहि वनस्पते ! ॥

भक्षणमन्त्रस्तु—"ॐअन्नाद्याय व्यूहध्वꣳ सोमो राजायमागमत् । स मे मुखं प्रमाक्ष्यते यशसा च भगेन च । उदिते सूर्ये दन्तधावने दोषमाह—

उदिते तु सहस्रांशौ यः कुर्याद्दन्तधावनम् ।
सविता भक्षितस्तेन पितृवंशस्य घातकः ॥

## अथ स्नानसूत्रम् ।

**अथातो नित्यस्नानं नद्यादौ मृद्गोमयकुशातिलसुमनस आहृत्योदकान्तं गत्वा शुचौ देशे स्थाप्य प्रक्षा-**

ल्य पाणिपादं कुशोपग्रहो बद्धशिखी यज्ञोपवीत्याच-
म्योरुर्द० हीति तोयमामन्त्र्यावर्त्तयेद्ये ते शतमिति सुमि-
त्रिया न इत्यपोऽञ्जलिनादाय दुर्मित्रिया इति द्वेष्यं
प्रति निषिञ्चेत्कटिं वस्त्यूरू जङ्घे चरणौ करौ मृदा त्रि-
स्त्रिः प्रक्षाल्याचम्य नमस्योदकमालभेदङ्गानि मृदेदं वि-
ष्णुरिति सूर्याभिमुखो निमज्जेदापोऽअस्मानिति स्नात्वो-
दिदाभ्य इत्युन्मज्य निमज्ज्योन्मज्ज्याचम्य गोमयेन
विलिम्पेन्मा नस्तोक इति ततोऽभिषिञ्चेदिमम्मे वरुणेति
चतसृभिर्माप उदुत्तमं मुञ्चन्त्ववभृथेत्यन्ते चैतन्निम-
ज्ज्योन्मज्ज्याचम्य दर्भैः पावयेदापो हि ष्ठेति तिसृभिरि-
दमापो हविष्मतीर्देवीराप इति द्वाभ्यामपो देवा द्रुपदा-
दिव शन्नो देवीरपाᳬरसमपो देवीः पुनन्तु मेति नव-
भिश्चित्पतिर्मेत्योङ्कारेण व्याहृतिभिर्गायत्र्या चादावन्ते
चान्तर्जलेऽघमर्षणं त्रिरावर्त्तयेद् द्रुपदादिवायज्ञौरिति
वा तृचं प्राणायामं वा सशिरसमोमिति वा विष्णोर्वा
स्मरणम् १ ॥

अथ स्नानविधिः "अथातो नित्यस्नान"मिति सूत्रम्। अथ श्रौत-स्मार्तक्रियाविधानानन्तरम्। अतो हेत्वर्थः। यतस्ताः क्रियाः स्नानपूर्विकाः अतो हेतोर्नित्यं सन्ध्योपासनपञ्चमहायज्ञादिनित्यक्रियानुष्ठानाधिकारसम्पादकत्वेन स्नानविधानमावश्यकं विधास्ये इति सूत्रे शेषः। शिष्यबुद्धिसमाधानार्थं प्रतिज्ञाकरणम्। काम्यनैमित्तिकस्नानव्युदासार्थं नित्यशब्दोपादानम्। स्नानं बहिःसर्वाङ्गजलसंयोगः। शङ्खः—

अस्नातो हि पुमान्नार्हो जपाग्निहवनादिषु।
प्रातः स्नानं तदर्थन्तु नित्यस्नानमुदाहृतम् ॥

योगियाज्ञवल्क्यः—

प्रातर्मध्याह्नयोः स्नानं वानप्रस्थगृहस्थयोः।
यतेस्त्रिषवणं प्रोक्तं सकृच्च ब्रह्मचारिणः ॥

ब्रह्मचारिणः सकृत्स्नानमशक्तविषयम् ।

स्नायात्प्रातश्च मध्याह्ने ब्रह्मचारी तथा गृही ॥

इतिविष्णूक्तेः ।

सप्ताहं प्रतिरस्नायी द्विजः शूद्रत्वमाप्नुयात् ।

तस्माच्छूद्रत्वशुद्ध्यर्थं रविवारं समाचरेत् ॥

इदं त्रिकण्डिकासूत्रन्तु मध्याह्नस्नानपरम् । यतः प्रातःस्नानं तिलहीनम् । अत्र तु कात्यायनाचार्यैस्तिलाहरणमुक्तम्, अतः मध्याह्नपरमेवेति । तथा च स्मृतिसमुच्चये—

प्रातःस्नाने न कर्त्तव्यं कदाचित्तिलतर्पणम् ।

जलमध्ये स्थितः कुर्यात्केवलं कुशवारिणा ॥

शौनकोऽपि—

प्रातःस्नाने विशेषोऽयं तद्धि नैव तिलैर्युतम् ।

नैमित्तिकं च नित्यं च तिलैरेव विधीयते ॥

अन्यच्च कात्यायनः—

यथाऽहनि तथा प्रातर्नित्यं स्नायादनातुरः ॥

इति वचनात्प्रातःस्नानेऽप्यस्य विधेः प्राप्तौ स्वयमेव साग्निकानां प्रातःस्नाने विस्तरनिषेधमपि वदति कात्यायनः—

अल्पत्वाद्धोमकालस्य बहुत्वात्स्नानकर्मणः ।

प्रातर्न तनुयात्स्नानं होमलोपो हि गर्हितः ॥

व्यासोऽपि—

प्रातः संक्षेपतः स्नानं शौचार्थन्तु तदिष्यते ।

विधिमन्त्रसमायुक्तं मध्याह्ने तु सविस्तरम् ॥

प्रातः संक्षेपतः स्नानं शौचार्थन्तु तदिष्यते ।

मन्त्रैस्तु विधिनिष्पाद्यं मध्याह्ने तु सविस्तरम् ॥

अत्र प्रातःशब्देनोदयात्प्राक्तनाश्चतस्रो नाड्य उच्यन्ते "अरुणरविग्रस्तां प्राचीमवलोक्य स्नाया"दिति बोधायनोक्तेः । व्यासः—

स्नानन्तु द्विविधं प्रोक्तं मुख्यगौणप्रभेदतः ।

तयोस्तु वारुणं मुख्यं तत्पुनः षड्विधं भवेत् ॥

जलनिष्पाद्यं वारुणम् ।

नित्यं नैमित्तिकं काम्यं क्रियाङ्गं मलकर्षणम् ।
क्रियास्नानं तथा षष्ठं षोढा स्नानं प्रकीर्त्तितम् ॥

तत्र प्रातःस्नानं नित्यम् ।

प्रातः समाचरेत्स्नानं तच्च नित्यमिति स्मृतम् ॥

इति मार्कण्डेयोक्तेः । चन्द्रसूर्यग्रहणादौ सूतकादौ यत्स्नानं तन्नैमित्तिकम् ।

भासवायसमार्जारखरोष्ट्रश्वानशूकरान् ।
अमेध्यानि च संस्पृश्य सवासा जलमाविशेत् ॥

इत्याद्यपि नैमित्तिकमेव ।

पुष्येऽर्के जन्मनक्षत्रे व्यतीपाते च वैधृतौ ।
अमायां च नदीस्नानं पुनात्यासप्तमं कुलम् ॥

इत्याद्युक्तं स्नानं काम्यम्। धर्मक्रियां कर्तुं यत्पूर्वं स्नानं तत्क्रियाङ्गम् ।

मलापकर्षणं नाम स्नानमभ्यङ्गपूर्वकम् ।
मलापकर्षणायैव प्रवृत्तिस्तत्र नान्यथा ॥

इत्याद्युक्तं स्नानं मलापकर्षणम् ।

यत्तु तीर्थादिषु स्नानं क्रियास्नानं प्रकीर्त्तितम् ॥

अथ गौणस्नानं विविच्यते । याज्ञवल्क्यः—

मान्त्रं भौमं तथाग्नेयं वायव्यं दिव्यमेव च ।
वारुणं मानसं चैव सप्त स्नानान्यनुक्रमात् ॥

एवमापदीमानि । तथा च जाबालिः—

असामर्थ्याच्छरीरस्य देशकालाद्यपेक्षया ।
मन्त्रस्नानादितः सप्त केचिदिच्छन्ति सूरयः ॥
आपो हिष्ठादिभिर्मान्त्रं मृदालम्भश्च पार्थिवम् ।
आग्नेयं भस्मना स्नानं वायव्यं रजसा गवाम् ॥
अद्भिः सातपवर्षाभिः स्नानं तद्दिव्यमुच्यते ।

वारुणं चावगाहश्च मानसं विष्णुचिन्तनम् ॥

सशिरस्कावगाहाशक्तौ जाबालिः—

अशिरस्कं भवेत्स्नानं स्नानाशक्तौ तु कर्मिणाम् ।
आर्द्रेण वाससा वापि मार्जनं कापिलं विदुः ॥
ऋचाभिमान्त्रितैस्तोयैः प्रोक्षयेन्मूर्द्धिन सर्वतः ।
अनुकल्पमिदं स्नानं सर्वपापहरन्नृणाम् ॥

नित्यविधावनधिकारिणमाह गोपीनाथीये—

न स्नानमाचरेद्भुक्त्वा नातुरो न महानिशि ।
न वासोभिः सहाजस्रं नाविज्ञाते जलाशये ॥

भोजनासम्भवात्ताम्बूलादिभक्षणप्रतिषेधः—

इक्षुरापः पयो मूलं ताम्बूलमौषधं फलम् ।
भक्षयित्वापि कुर्वीत स्नानदानादिकाः क्रियाः ॥

इति स्मृतिरशक्तविषया ।

स्नानार्हस्तु निमित्तेन कृत्वा तोयावगाहनम् ।
आचम्य प्रयतः पश्चात्स्नानं विधिवदाचरेत् ॥

अस्पर्श्यस्पर्शादिनिमित्तेनेत्यर्थः । तत्स्नानं कुत्र कर्तव्यमित्यपेक्षायामाह "नद्यादौ" इतिसूत्रम् । नदी आदिः प्रथमा मुख्या यस्य स्नानाधिकरणजलाशयस्य असौ नद्यादिः तस्मिन् । अकृत्रिमे जलाशये स्नायात् । तथा च गोपीनाथीये स्मृतिः—

नदीसरिद्देवखातगर्त्तप्रस्रवणेषु च ।
सरस्सु वा कृत्रिमेषु शस्तं तीर्थं विशेषतः ॥
बहुतोयासु वापीषु कूपेष्वपि कदाचन ॥ इति मरीचिः ।

तत्र नदी अशोष्यसलिला स्रवन्ती । अन्यदपि नदीलक्षणं छन्दोगपरिशिष्टे—

धनुःसहस्राण्यष्टौ च गतिर्यासां न विद्यते ।
न ता नदीशब्दवहा गर्त्तास्ते परिकीर्त्तिताः ॥

धनुर्लक्षणमाह । आदित्यपुराणे—

अष्टौ यूका यवं प्राहुरङ्गुलं तु यवाष्टकम् ।
चतुर्विंशाङ्गुलैर्हस्तश्चतुर्हस्तमितं धनुः ॥ इति ।

सरित्पुराणे प्रसिद्धा । देवनिर्मितत्वेन प्रसिद्धो देवखातः । गर्त्तस्तु योजनभूभागपर्याप्तजलप्रवाहः । प्रस्रवणं पर्वतादेः स्वतः प्रवृत्तो निर्झरः । सरः उत्तरार्कदण्डखातादिः । तीर्थं पुराणे प्रसिद्धम् । हरिहरभाष्ये—

नदीषु देवखातेषु प्रातः स्नायाद्दिनेदिने ।
तदभावे तडागे वा कूपे स्नानं समाचरेत् ॥
उत्तमन्तु नदीस्नानं तडागे मध्यमं स्मृतम् ।
कूपस्नानं तु सामान्यं भाण्डस्नानं वृथा वृथा ॥

अत्रिः—

अलाभे देवखातानां ह्रदानां सरितां तथा ।
उद्धृत्य चतुरः पिण्डान्पारक्ये स्नानमाचरेत् ॥

"पञ्च पिण्डानुद्धृत्ये"ति व्यासः । सप्त समुद्धृत्येति योगी । दशेति शौनकः । शक्त्यनुसारेणैवं व्यवस्था । स्कान्दे—

अनुद्धृत्य तु तत्कर्तुरेनसः स्यात्तुरीयभाक् ॥

अथान्यखातानि—

अन्त्यजैः खानिताः कूपास्तडागादि तथैव च ।
तेषु स्नात्वा च पीत्वा च पञ्चगव्येन शुद्ध्यति ॥

अत्रिः—

स्नानं रजकतीर्थे च भोजनं गणिकागृहे ।
ये कुर्वन्ति द्विजा मोहात्ते यान्ति निरयं परम् ॥

गोपीनाथीये स्मृतिः—

शाल्मली तिन्तिणी निम्बः करञ्जश्च हरीतकी ।
कोविदारकपित्थार्कबदर्येरण्डशिग्रवः ॥
शैलश्च खदिरश्चैषां स्नानं छायासु वर्जयेत् ।
अग्राह्या ह्यागता ह्यापो नद्याः प्रथमवेगतः ॥

प्रक्षोभितास्तु केनापि याश्च तीर्थादिनिःसृताः ॥
प्रवाहेण च्युते तोये न स्नायात्तु कदा चन ।
अमेध्यन्तद्विजानीयात्पीत्वा चान्द्रायणं चरेत् ॥

व्याघ्रपादः—
सिंहकर्कटयोर्मध्ये सर्वा नद्यो रजस्वलाः ।
तासु स्नानं न कुर्वीत वर्जयित्वा समुद्रगाः ॥

विधानपारिजाते—
गङ्गादिसरितः सर्वाः शुभाः सर्वत्र सर्वदा ॥ इति ।

भविष्योत्तरे विशेषः—
आदौ कर्काटके देवि ! महानद्यो रजस्वलाः ।
त्रिदिनं तु चतुर्थेऽह्नि शुद्धाः स्युर्जान्हवी यथा ॥

उपाकर्मादावदोषः । तथा च वसिष्ठः—
उपाकर्मणि चोत्सर्गे प्रेतस्नाने तथैव च ।
चन्द्रसूर्यग्रहे चैव रजोदोषो न विद्यते ॥

इत्यादि । मार्गमध्ये नदीप्राप्तौ विशेषः--
मार्गान्तरानदीप्राप्तौ स्नानादि परपारतः ।
अर्वाक्तीरे सरस्वत्या एष मार्गगतो विधिः ॥ इति ।

इदमपि पूर्वपारे तीर्थदेवाद्यभावे द्रष्टव्यम् , तत्सद्भावे तत्रैव भवति । अथ स्नानोपकरणान्याह "मृद्गोमयकुशतिलसुमनस आहृत्ये"ति· सूत्रम् । मृत्तिकां गोमयं कुशान् तिलान् पुष्पाणि च आहृत्य स्वयमानीय शूद्रादन्येन वा आहृत्य आनयेत् । तथा च शङ्खः—
समित्पुष्पकुशादीनि ब्राह्मणः स्वयमाहरेत् ।
शूद्रानीतैः क्रयक्रीतैः कर्म कुर्वन्पतत्यधः ॥

अशक्तौ न्यायार्जितधनैः क्रीतान्यपि गृह्णीयात् , महाजनग्रहीतत्वात् । तथा च विष्णुधर्मोत्तरे—
धर्मार्जितधनक्रीतैर्यः कुर्याद्देवतार्चनम् ।
उद्धरिष्यत्यसन्देहं सप्त पूर्वास्तथा परान् ॥

मृत्तिकां नदीकूलादिशुचिदेशस्थाम् । जीर्णत्वादिदोषरहितायाः गो- र्गोमयम् । तिलान् क्षेत्रादिसम्भवान् । कुशान् शुचिदेशसम्भवान् । सुम- नसः सुरभीणि बिल्वतुलसीप्रभृतिपुष्पाणि । वस्त्रयुग्मोदपात्राणि आदाय, स्नानोपयोगित्वात् अग्रहणे दोषश्रवणाच्च । तथा चोक्तम् स्मृतिसारे—

यदि स्नातो द्विजस्तीर्थादगृहीतकमण्डलुः ।
अज्ञानाद्गृहमागच्छेत्स्नानं तस्य वृथा भवेत् ॥
आददीत विशुद्धात्मा धौतवासोयुगं तथा ॥ इति जाबालिः ।

"उदकान्तं गत्वा शुचौ देशे स्थाप्ये"ति सूत्रम् । उदकस्य न- द्यादेः सम्बन्धिनोऽन्तं समीपं स्वगृहाद्गत्वा प्राप्य प्रक्षालनादिना शुचौ देशे स्थाप्य निधाय, तथा च गोपीनाथीये--

एकान्तमुदकं गत्वा तटं प्रक्षाल्य पाणिना ।
तत्र संस्थापयेत्सर्वं यथादेशं पृथक् पृथक् ॥

अनन्तभट्टीयेऽपि--

विशोध्य तीरं कुशपिञ्जलानि पूर्वोत्तराग्रान्मृदमभ्यसेच्च॥ इति ।

"प्रक्षाल्य पाणिपाद"मिति सूत्रम् । पाणी च पादौ च पाणिपा- दम् । "द्वन्द्वश्च प्राणितूर्यसेनाङ्गाना"मि"ति सूत्रेणैकवचनम् । ब्राह्मण- श्चेद्दक्षिणपादोपक्रमं पादौ प्रक्षाल्य पाणी प्रक्षालयेत , न तु पाठक्रमेण । तदुक्तं गोपीनाथीये--

प्रक्षाल्य पादौ हस्तौ च शिवं नत्वा समारभेत् ।
श्रीकामः पादयोः शौचं मृदा पूर्वं समाचरेत् ॥

इति नन्दिपुराणात् । एतत्पादप्रक्षालनमुद्धृतजलेन कुर्यात् । तदुक्तं बौधायनेन-"अपो देवं गृहं गोष्ठं द्विजालयं निर्णिक्तपादः प्रविशे"- दिति । कात्यायनः—

तिष्ठन्नासीनः प्रह्वो वा नियमो यत्र नेदृशः ।
तदासीनेन कर्तव्यं न प्रह्वेण न तिष्ठता ॥

प्रह्वः किञ्चिदूर्ध्वः । "कुशोपग्रह" इतिसूत्रम् । कुशास्त्रिप्रभृतयः

सव्यहस्ते उपग्रहो धृतो येनासौ कुशोपग्रहः । सर्वत्रोपग्रहः पवित्रमप्युपलक्षयति । तथाच व्यासः—

सव्यः सोपग्रहः कार्यो दक्षिणः सपवित्रकः ॥ इति ।

तथा च कात्यायनोऽपि—

स्नाने होमे तथा दाने स्वाध्याये पितृतर्पणे ।
सपवित्रौ सदर्भौ वा करौ कुर्वीत नान्यथा ॥ इति ॥
अनामिकाग्रपर्वस्थं पवित्रं बिभृयात्सदा ।
मध्यपर्वाणि कुर्वाणः पुत्रदारैर्वियुज्यते ॥

हारीतः—

चतुर्भिर्दर्भविदलैः पवित्रं ब्राह्मणस्य तु ।
एकैकं ह्रासयेत्तत्र वर्णे वर्णे यथाक्रमम् ॥
सर्वेषां वा भवेद्द्वाभ्यां पवित्रं ग्रन्थितं न वा ॥ इति ।
सपवित्रः सदर्भो वा कर्माङ्गाचमनं चरेत् ।
न चोच्छिष्टं तत्सदर्भं भुक्तोच्छिष्टं तु वर्जयेत् ॥

"बद्धशिखी यज्ञोपवीत्याचम्य"तिसूत्रम् । बद्धा चासौ शिखा च बद्धशिखा सा यस्यास्तीति बद्धशिखी, यज्ञोपवीतमस्यास्तीति यज्ञोपवीती बद्धशिखः सन् सव्यस्कन्धस्थितयज्ञोपवीती कर्म कुर्यादित्यर्थः । अत्र केचित्—

सदोपवीतिना भाव्यं सदा बद्धशिखेन च ।
विशिखो व्युपवीतश्च यत्करोति न तत्कृतम् ॥

इत्यनेन बद्धशिखित्वे यज्ञोपवीतित्वे प्राप्ते केशबन्धोत्तरीयव्युदासार्थं पुनरुक्तिरिति चेन्न ।

नार्द्रमेकं च वसनं परिदध्यात्कथञ्चन ॥

इति पुरुषस्य सर्वदैकवस्त्रनिषेधात्, वस्त्रद्वयधारणस्य नियमात्, स्नानकाले तत्परित्यागे प्रमाणाभावात् ।

स्नानं दानं जपं होमं स्वाध्यायं पितृतर्पणम् ।
नैकवस्त्रो द्विजः कुर्याच्छ्राद्धभोजनसत्क्रियाम् ॥

एकवस्त्रो न भुञ्जीयान्न कुर्याद्देवतार्चनम् ।
न कुर्यात्पितृकर्माणि दानहोमजपादिकम् ॥

इत्यादिवचनाच्च । बद्धशिखी यज्ञोपवीतीतिस्मरणं सावधानीकरणार्थम् । केशप्रसादनादौ विशिखित्वप्राप्तेः । तथा च स्मृतिसारः—

तर्जन्यां च स्थिते रौप्ये ब्रह्मग्रन्थौ च मस्तके ।
भोजनं मैथुनं मूत्रं कुर्वन् कृच्छ्रेण शुद्ध्यति ॥

यद्वा मन्त्रेण पार्श्वे कर्माङ्गं शिखैकदेशबन्धनमुच्यते । व्यासः -

स्मृत्वोङ्कारं तु गायत्रीं निबध्नीयाच्छिखां द्विजः ॥

इतिचतुर्विंशतिमतात् ।

मानस्तोकेति मन्त्रेण शिखाबन्धनमाचरेत् ॥ इति ।

यद्वा प्रशस्तं यज्ञोपवीतमस्यास्तीति यज्ञोपवीती । प्राशस्त्यन्तु क्षालनाद्भवति । उक्तञ्च अनन्तभट्टीये—

प्रक्षाल्य पादौ तु मुखं च कण्ठे
यज्ञोपवीतं च जलं पिबेत्त्रिः ॥ इति ।

नीवीं कृत्वा प्रक्षालयेदित्यर्थः । तथा च गोपीनाथीये—

प्रक्षालयेद्यज्ञसूत्रं मृद्भिरद्भिः शनैः शनैः ॥ इति ।

नागदेवा अपि—

पादौ प्रक्षालयेत्पूर्वं मुखं यज्ञोपवीतकम् ।
द्विराचम्य कराभ्यां तु दर्भान्धृत्वा शिखां स्पृशेत् ॥ इति ।

तस्य कण्ठस्थस्यैव प्रक्षालनम् । भृगुः—

कायस्थमेव प्रक्षाल्यमुत्तार्यं न कदाचन ।
सकृदुद्धारणेनास्य प्रायश्चित्ती भवेद्द्विजः ॥ इति ।

पुनर्मन्त्रेण धारणमिति प्रायश्चित्तम् । तथा चोक्तम्—

मन्त्रन्यस्तोपवीतं यत्नोद्धरेत कदाचन ।
मोहाद्द्विजस्तदुद्धृत्य पुनर्मन्त्रेण धारयेत् ॥ इति ।
तैत्रा मैत्राः कठाः काण्वाश्चरका वाजसनेयकाः ।
कण्ठादुत्तीर्य सूत्रन्तु कुर्युर्वै क्षालनं द्विजाः ॥ इति ।

विशेषः—

बह्वृचाः सामगाश्चैव ये चान्ये याजुषास्तथा ।
कण्ठादुत्तीर्य सूत्रन्तु पुनः संस्कारभागिनः ॥

इतिस्कान्दात् । आचम्येति शास्त्राचमनं कृत्वा, तत्र व्याघ्रपादः—

प्राङ्मुखोदङ्मुखो वापि कुर्यादाचमनक्रियाम् ।
पश्चिमे पुनराचम्य दक्षिणे स्नानमाचरेत् ॥
गोकर्णकृतहस्तेन माषमात्रजलं पिबेत् ।
तन्न्यूनमधिकं पीत्वा पुनराचम्य शुध्यति ॥

प्राणायामत्रयं कृत्वा सङ्कल्पं कुर्यात् । तत्र यमः—

सपवित्रकरं कृत्वा आचम्य प्राङ्मुखः स्थितः ।
प्राणायामत्रयं कुर्यात्कालज्ञानमतः परम् ॥ इति ।

तच्च—

अब्दायनर्तुमासाश्च पक्षतिथ्यर्क्षवासरम् ।
योगं च करणं चेति सङ्कल्पोऽयमुदाहृतः ॥ इति ।

"उरुꣳहीति तोयमामन्त्र्यावर्त्तयेद्येते शतमिति" इतिसूत्रम् । "उरुꣳहि राज"इत्यनयर्चा तोयं जलमामन्त्र्य सन्मुखीकृत्य "येते शत"-मित्यनयर्चा तज्जलं दक्षिणहस्तेनावर्तयेत् सकृद् भ्रामयेत् । "सुमित्रिया न इत्यपोऽञ्जलिनादाय दुर्मित्रिया इति द्वेष्यं प्रतिनिषिञ्चे"-दिति सूत्रम् । "सुमित्रियान आप ओषधयः सन्त्वि"ति मन्त्रेण अञ्जलिना हस्तद्वयसम्पुटेनादाय गृहीत्वा "दुर्मित्रियास्तस्मै सन्तु योऽस्मान्द्वेष्टि यं च वयं द्विष्म"इतिमन्त्रेण द्वेष्यं रिपुं प्रति निषिञ्चेत् । रिपुं मनसा ध्यात्वाञ्जलिगृहीतं जलं जन्तुरहिते देशे प्रक्षिपेदित्यर्थः । द्वेष्याभावे कामक्रोधमोहादीनामुत्तरतः प्रक्षेपः । "कटिं बस्त्यूरू जङ्घे चरणौ करौ मृदा त्रिस्त्रिः प्रक्षाल्याचम्ये"ति सूत्रम् । सव्यहस्ते गृहीतया मृदा कटिं सकृदालिप्य प्रक्षाल्य, तथैव द्वितीयं तथैव तृतीयं कटिं प्रक्षालयित्वा । एवमेव सर्वत्र । त्रिस्त्रिरिति वीप्सा काण्डानुसमयज्ञानार्था । "एकद्रव्ये कर्मावृत्तौ सकृदेव मन्त्रपाठ" इति परिभाषासूत्रपाठात् ।

तत आचमनं कारयेत् । ततो नद्यां तीर्थं विचिन्त्य,

यत्र स्थानेषु यत्तीर्थं नदीरायतनानि वा ।
तान्ध्यायेन्मनसा वापि नान्यतीर्थं विचिन्तयेत् ॥

इदं गङ्गातिरिक्तविषयम् । स्कान्दे—

स्नानकालेऽन्यतीर्थेषु जप्यते जान्हवी जनैः ।
विना विष्णुपदीं काऽन्या समर्थाऽघौघनाशने ॥

"नमस्योदकमालभेदङ्गानि मृदेदं विष्णुरिति" इतिसूत्रम् । "उदकाय नम" इति तीर्थोदकं नमस्कृत्य "इदं विष्णु"रित्यनयर्चा दक्षिणपाणिगृहीतया मृदा शिरःप्रभृति नाभिपर्यन्तानि सव्यहस्तगृहीतया मृदा नाभिप्रभृति पादपर्यन्तानि अङ्गानि आलभेत् अनुलिम्पेत् । "सूर्याभिमुखो निमज्जेदापोऽअस्मानिति" इतिसूत्रम् । ततः शनकैर्जलाशयं प्रविश्य नाभिमात्रं जलं स्थितः सूर्याभिमुखो मज्जेत् । विष्णुः—

नाभिमात्रे जले तिष्ठन्सप्त द्वादश पञ्च च ।
त्रिवारमपि संस्तुत्य स्नानमेवं विधीयते ॥

प्रचेताः—

नाभिमात्रे जले स्थित्वा केशान्कृत्वा द्विधा द्विजः ।
निरुद्ध्य कर्णौ नासां च त्रिःकृत्वा मज्जनं चरेत् ॥

स्मृतिसारे वसिष्ठः—

स्रोतसोऽभिमुखं स्नायान्मार्जनं चाघमर्षणम् ।
अन्यत्रार्कमुखो रात्रौ प्राङ्मुखोऽभिमुखोऽपि वा ॥ इति ।
प्रवाहाभिमुखो मज्जेद्यत्रापः प्रवहन्ति वै ।
स्थावरेषु च सर्वेषु ह्यादित्याभिमुखस्तथा ॥

इति जाबालिवचनन्तदन्यशाखाविषयम् । कुतः ?

या याः समुद्रगा नद्यस्तासु स्नानं तु सन्मुखम् ।
सर्वेऽपि शाखिनः कुर्युर्विना वाजसनेयिनः ॥ इति ।

वाजसनेयिभिस्तु सर्वत्र सूर्याभिमुखैरेव मज्जनं कार्यमित्यर्थः ।

आपस्तम्बः—

प्रवाहाभिमुखं स्नानं ऋक्सामाथर्ववेदिनाम् ।

आदित्याभिमुखं स्नानं याजुषस्य सदैव हि ॥

इत्यनेन आपस्तम्बानामपि सूर्याभिमुखं स्नानम् । "स्नात्वोदिदाभ्य इत्युन्मज्ज्य निमज्ज्योन्मज्ज्याचम्ये"ति सूत्रम् । "आपोऽस्मा"-नित्यनयर्चा स्नात्वा अङ्गानि संशोध्य "उदिदाभ्यः शुचि"रितिमन्त्रान्ते उन्मज्ज्योत्क्राम्य पुनस्तूष्णीं निमज्ज्य स्नात्वा उन्मज्ज्य तथैवोत्क्रम्याचम्योपस्पृश्य, जमदग्निः—

मध्यन्दिने य आचामेन्मन्त्रेणापः पुनन्त्विति ॥

"गोमयेन विलिम्पेन्मा नस्तोक इति" इतिसूत्रम् । "मा नस्तोक" इत्यनयर्चा गोमयेन शिरःप्रभृति सर्वाण्यङ्गान्यनुलिम्पेत् । अत्रापि नाभेरूर्ध्वं दक्षिणहस्तेनाधः सव्येन च । अत्र विशेषमाह विष्णुः—

अग्रमग्रमिति स्मृत्वा मा नस्तोकेन वा पुनः ।
गोमयैर्लेपयेत्प्राज्ञः सोदकेनानुदर्शितैः ॥ इति ।

ऐन्द्रमन्त्रत्वादुदकस्पर्शः । योगी —

गोमयेन तु यः स्नायादापादतलमस्तकम् ।
स स्नातः सर्वतीर्थेषु फलं संवत्सरं भवेत् ॥ इति ।

विष्णुर्विशेषमाह—

अपाघमित्यपामार्गं दूर्वां काण्डादिति स्मरन् ।
त्रिस्त्रिरेकैकमादाय मार्जयेत्सुसमाहितः ॥ इति ।

इदं मार्जनमुपाकर्मोत्सर्जनविषयमेव ।

काण्डादपाघमिति द्वौ युक्तौ श्रवणकर्मणि ॥ इति ।

"ततोऽभिषिञ्चेदिमम्मे वरुणेति चतसृभिर्मापो मौषधीरुदुत्तमं मुञ्चन्त्ववभृथेति" इतिसूत्रम् । ततो गोमयविलेपानन्तरं "इमम्मे वरुणे"-त्येवमादिभिश्चतसृभिर्ऋग्भिः । "मापो मौषधी"रित्येकया । "उदुत्तम"मित्येकया । "मुञ्चन्तु मे"त्येकया । "अवभृथे"त्येकया क्रमेण प्रतिमन्त्रमभिषिञ्चेत् । अञ्जलिना जलं मूर्द्धनि प्रक्षिपेदित्यर्थः । तथा च योगी याज्ञवल्क्यः—

कार्योऽभिषेकोऽञ्जलिना इमम्माद्यष्टभिस्ततः ॥ इति ।

अत्र पाठक्रमेण मन्त्रेणाभिषेचनम् । "अन्ते चैतत्" इति सूत्रम् । एतदभिषेचनमन्तेऽपि भवति पावनान्तेऽपि कर्तव्यमित्यर्थः । "निमज्ज्योन्मज्ज्याचम्य दर्भैः पावयेत्" इति सूत्रम् । निमज्ज्य तूष्णीं मज्जित्वोन्मज्ज्योत्क्राम्याचमनं कृत्वा दर्भैरप्रसूतैः कुशैर्दक्षिणहस्तगृहीतैः प्रादक्षिण्येन नाभेरूर्ध्वं शिरो यावत्ततः पुनर्नाभिपर्यन्तं पावयेत् । तदुक्तं स्मृतिसारे—

दर्भैरुन्मार्जनं नाभेरुपरिष्टात्प्रदक्षिणम् ।
इदं पावनमद्भिश्च कुशैरेवापरत्र तु ॥
अप्रसूताः स्मृता दर्भाः प्रसूतास्तु कुशाः स्मृताः ॥ इति ।

पावनसमाख्यानात्पावनमन्त्रानाह—"आपो हि ष्ठेति तिसृभिरिदमापो हविष्मतीर्देवीराप इति द्वाभ्यामपो देवा द्रुपदादिव शन्नो देवीरपाᳪरसमपो देवीः पुनन्तु मेति नवभिश्चित्पतिर्म्मेति" इति सूत्रम् । "आपो हि ष्ठे"त्यादिभि"श्चित्पतिर्म्मे"त्यन्तैर्यथाक्रमेण पठितैरेव मन्त्रैः पावयेदित्यर्थः । योगी—

दर्भैस्तु पावयेन्मन्त्रैरब्लिङ्गैः पावकैः शुभैः ॥ इति ।

"चित्पतिर्म्मे"त्यत्र पारिजातादौ मन्त्रैकतोक्ता । हरिहरदेवयाज्ञिकादयस्तु मन्त्रचतुष्टयमाहुः । "ॐकारेण व्याहृतिभिर्गायत्र्या चादावन्ते चे"ति सूत्रम् । ॐकारेण तिसृभिर्व्याहृतिभिर्गायत्र्या "आपो हि ष्ठे"त्यस्यादौ "चित्पतिर्म्मे"त्यस्यान्ते च पावयेदित्यर्थः । योगी याज्ञवल्क्यः—

ॐकारेण व्याहृतिभिर्गायत्र्या च समाहितः ।
आदावन्ते च कुर्वीत मार्जनं तु यथाक्रमम् ॥ इति ।

"अन्तर्जलेऽघमर्षणन्त्रिरावर्तये"दिति सूत्रम् । अन्तर्जले जलमध्ये मग्नः सन् अघमर्षणं "ऋतं च सत्यं चे"त्येतत्सूक्तं त्रिरावर्तयेत् वारत्रयं जपेत् । चतुर्विंशतिमते—

ततोऽङ्गुष्ठाङ्गुलिभिस्तु श्रोत्रं दृङ्नासिकामुखम् ।
पिधायान्तः प्रतिस्रोतस्त्रिर्जपेदघमर्षणम् ॥ इति ।

कात्यायनः—

अघमर्षणसूक्तन्तु अश्वमेधावभृत्समम् ।
अन्तर्जले त्रिरावृत्य मुच्यते ब्रह्महत्यया ॥ इति ।

"द्रुपदादिवायङ्गौरिति वा तृचं प्रणायामं वा सशिरसमोङ्कारं वा विष्णोर्वा स्मरण"मिति सूत्रम् । यद्वा "द्रुपदादिवे"त्यृचं "आयङ्गौ"रिति वा तृचं सशिरसं शिरसा "आपो ज्योति"रितिमन्त्रेण सह प्राणायामत्रयं चेत्यनुषङ्गः । "ॐ" इति त्रिरावर्त्तयेत् । अथ वा विष्णोः स्मरणं कुर्यात् । व्यासः—

आवर्त्तयेद्वा प्रणवं स्मरेद्वा विष्णुमव्ययम् ॥

वसिष्ठः—

प्रणवाद्यास्तथा वेदाः प्रणवं पर्युपस्थिताः ।
ब्राह्मण्यं प्रणवः सर्वं तस्मात्प्रणवमभ्यसेत् ॥

अघमर्षणानन्तरं पुनस्तस्मिंस्त्रिवारं मज्जित्वा स्नानाङ्गं तर्पणं कुर्यात् ।

अत्र प्रचेताः—

अघमर्षणमन्त्रेण धूतपापः समाहितः ।
ततो निमज्ज्य वारांस्त्रींस्ततस्तर्पणमारभेत् ॥

तथा च दक्षः—

नित्यं नैमित्तिकं काम्यं त्रिविधं स्नानमाचरेत् ।
तर्पणन्तु भवेत्तत्र ह्यङ्गत्वेनोपपद्यते ॥

शङ्खः—

देवानाञ्च पितॄणाञ्च जले दद्याज्जलाञ्जलिम् ।
असंस्कृतमृतानाञ्च स्थले दद्यात्तिलाञ्जलिम् ॥
जलमध्ये तु कर्तव्यं केवलं कुशवारिणा ।
विशेषोऽयं स्थले प्रोक्तो न जले तु कदा चन ॥

इति योगिस्मरणात् । विधानपारिजाते विष्णुः—

सव्येन चोपवीतेन देवतानाञ्च तर्पणम् ।
पितॄणामपसव्येन मनुष्याणां निवीतिना ॥

तर्पणे चाशून्यं करं कुर्यात्। तथा च याज्ञवल्क्यः—

अनामिकाधृतं स्वर्णं तर्जन्यां रौप्यधारणम्।
कनिष्ठिकाधृतं खड्गं ततस्तर्पणमारभेत्॥

स्नानाङ्गतर्पणप्रकारस्त्वाश्वलायनगृह्यपरिशिष्टे—

"अथ साक्षताभिरद्भिः प्राङ्मुख उपवीती देवतीर्थेन व्याहृतिभिर्व्यस्तसमस्ताभिर्ब्रह्मादिदेवान्सकृत्सकृत्तर्पयित्वाऽथ दक्षिणाभिमुखः प्राचीनावीती पितृतीर्थेन सतिलाभिरद्भिर्व्याहृतिभिरेव सोमः पितृमान्यमोऽङ्गिरस्वानग्निः कव्यवाहन इत्यादींस्त्रिस्त्रिस्तर्पयेदेतत्स्नानाङ्गतर्पणमथ तीरमेत्य दक्षिणाभिमुखः प्राचीनावीती ये के चास्मत्कुले जाता इति वस्त्रं निष्पीड्योपवीत्याप उपस्पृशे"-दितीदं तर्पणं येषां शाखिनां सूत्रे नास्ति तैरपि कार्यम्। "पारक्यमविरोधि च"दिति वचनात्सर्वोपसंहारन्यायाच्च। स्मृतिसारः—

संक्रान्त्यादिनिमित्ते तु स्नानाङ्गं तर्पणं द्विजः।
तिथिवारनिषेधेऽपि तिलैस्तर्पणमाचरेत्॥

अयं नियमोऽपि प्रातःस्नानाङ्गव्यतिरिक्तस्नानाङ्गतर्पण एव।

प्रातःस्नाने न कर्तव्यं कदाचित्तिलतर्पणम्।
जलमध्ये तु कर्तव्यं केवलं कुशवारिणा॥

इतियोगिवचनात्। अथ देवादितीर्थान्याह गोपीनाथीये—

कनिष्ठादेशिन्यङ्गुष्ठमूलान्यग्रं करस्य च।
प्रजापतिपितृब्रह्मदेवतीर्थान्यनुक्रमात्॥

अत्र यक्ष्मतर्पणमाहाश्वलायनः—

स्नानाङ्गतर्पणं कृत्वा यक्ष्मणे जलमाहरेत्॥

तन्मन्त्रस्तु—

यन्मया दूषितं तोयं शारीरमलसंचयात्।
तद्दोषपरिहारार्थं यक्ष्माणं तर्पयाम्यहम्॥

अत्रोदकं बहिः क्षिपेत, सदाचारात् प्रकरणाच्च। केशोदकमग्रे प्रपात-

येत् । तथा च वायवीये—

अमृतेन समा ज्ञेयाः पुरतः केशविन्दवः ।
सुराबिन्दुसमा ज्ञेयाः पृष्ठतः केशविन्दवः ॥
पिबन्ति शिरसो देवाः पिबन्ति पितरो मुखात् ।
मध्यतः सर्वगन्धर्वा अधस्तात्सर्वजन्तवः ॥
तस्मात्कायं न मृज्येत अम्बरेण करेण वा ।
केशान्दक्षिणतः कृत्वा जलमध्ये न तर्पयेत् ॥

इति पराशरः ।

स्नानं कृत्वा चार्द्रवस्त्रं त्यजेन्नग्रामथो द्विजः ।
गृहस्नानमथो कृत्वा विसृजेदेतदूर्ध्वतः ॥
अज्ञानादन्यथा कुर्वन्पुनः स्नानेन शुद्ध्यति ॥

"उत्तीर्य धौते वाससी परिधाये"ति सूत्रम् । स्नानाङ्गतर्पणानन्तरं उत्तीर्य जलाद्बहिर्निर्गम्य धौते वाससी अरजकादिप्रक्षालिते अन्तरीयोत्तरीये द्वे वस्त्रे परिधाय प्रान्तद्वयगोपनेन परिधानं कुर्यात् । कात्यायनः—

नोत्तरीयमधः कुर्यान्नोपर्यधःस्थमम्बरम् ॥ इति ।

वस्त्रविषये मनुः—

ब्राह्मणस्य सितं वस्त्रं नृपते रक्तमुल्बणम् ।
पीतं वैश्यस्य शूद्रस्य नीलं मलवदिष्यते ॥

उल्बणं निबिडम् । मिताक्षरायाम्—

नीलीरक्तं यदा वस्त्रं विप्रः स्वाङ्गेषु धारयेत् ।
तन्तुसन्ततिसंख्याके वसेत्स नरके ध्रुवम् ॥

व्याघ्रपादः—

कषायं कृष्णं वस्त्रं वा मलिनं केशदूषितम् ।
जीर्णं नीलं सन्धितं च पारक्यं मैथुने धृतम् ॥
छिन्नाग्रमुपवस्त्रं च कुत्सितं धर्मतो विदुः ।
केवले पट्टसूत्रे च नीलीदोषो न विद्यते ॥

इति विधानपारिजातात् । याज्ञवल्क्यः—

दग्धं जीर्णं च मलिनं मूषकोपहतं तथा ।

खादितं गोमहिष्याद्यैस्तस्याज्यं सर्वथा द्विजैः ॥
अधूतं क्षारधूतं वा पूर्वेद्युर्धृतमेव वा ।
त्रयमेतदसम्बद्धं सर्वकर्मसु वर्जयेत् ॥

शुष्कवस्त्रत्वमेव कार्यम् ।

प्रागग्रमुदगग्रं वा धौतं वासः प्रसारयेत् ।
पश्चिमाग्रे दक्षिणाग्रे पुनः प्रक्षालनं भवेत् ॥

शुष्काभावे गौतमः—

सप्तवाताहतं वस्त्रं शुष्कवत्प्रतिपादितम् ।
आर्द्रं वापि द्विजातीनामादृतं गौतमादिभिः ॥
धौताधौतं तथा दग्धं सन्धितं रजकाहृतम् ।
शुक्रमूत्राद्यसंसृष्टमाविकं चातसीभवम् ।
पवित्रमिति विज्ञेयं सर्वकर्मस्वसंशयम् ॥

इति पाद्मे । अतसीभवं क्षौमम् । विधानपारिजाते—

आजानुमूलं वस्त्रं स्यात्पञ्चकच्छन्तु धारयेत् ।
तन्न्यूनमधिकं चैव सर्वकर्मसु गर्हितम् ॥
कुक्षिद्वये तथा पृष्ठे नाभौ द्वौ परिकीर्त्तितौ ।
वस्त्रस्य धारणं यच्च पञ्चकच्छन्तु तद्विदुः ॥

द्वा—

कट्यां नाभौ तथा पृष्ठे कच्छत्रयमुदाहृतम् ।
कच्छत्रयसमायुक्तो यो विप्रः स शुचिः स्मृतः ॥
एककच्छो द्विकच्छस्तु मुक्तकच्छस्तथैव च ॥
एकवासा अवासाश्च नग्नः पञ्चविधः स्मृतः ॥

वसिष्ठः—

अपवित्रपटो नग्नो नग्नश्चार्द्रपटः स्मृतः ।
नग्नो मलिनवासाः स्यान्नग्नः कौपीनवानपि ॥
काषायवाससा नग्नो नग्नस्तौतलपत्रानपि ? ।
अन्तःकच्छो बहिःकच्छो मुक्तकच्छस्तथैव च ॥

साक्षान्नग्नश्च विज्ञेयो दश नग्नाः प्रकीर्तिताः ॥

एवं अन्तरीयवस्त्रं परिधाय उत्तरीयवस्त्रपरिधानं कारयेत् । द्वितीयवस्त्राभावे कात्यायनः--"एकश्चेत्पूर्वस्योत्तरवर्गेण प्रच्छादयीते"ति । जातूकर्ण्यः--

अभावश्चेद्द्वितीयस्य वस्त्रचीरं तदा भवेत् ।
द्व्यङ्गुलं त्र्यङ्गुलं वापि चतुरङ्गुलमेव वा ॥
सूत्रं वस्त्राकृतिं कुर्यात्तेन स्यादुत्तरीयकम् ॥

इदमुत्तरीयं यज्ञोपवीतेन सह योज्यम् ।

"अजिनं वासो वा दक्षिणत उपवीय दक्षिणं बाहुमुद्धरतेऽवधत्ते सव्य"मित्यापस्तम्बोक्तेः । यज्ञोपवीतेनापि द्विवस्त्रता सम्पादनीया । तथा च मनुः—

यज्ञोपवीते द्वे धार्ये श्रौते स्मार्ते च कर्मणि ।
तृतीयमुत्तरीयार्थे वस्त्राभावे चतुर्थकम् ॥ इति ।

अत्र विशेषः सङ्ग्रहे--

उत्तरीयं योगपट्टं तर्जन्यां रजतं तथा ।
न जीवत्पितृकैर्धार्यं ज्येष्ठो वा विद्यते यदि ॥ इति ।

जीवत्पित्रग्रजो नोत्तरीयं कुर्यादित्यत्रोत्तरीयं नोपरिवासोमात्रम् ।

"मृदोरू करौ प्रक्षालये"तिसूत्रम् । वस्त्रपरिधारणानन्तरं मृदाद्भिश्चोरू लोकप्रसिद्धे जङ्घे हस्तौ च प्रक्षालयेत् । तथा चोक्तम्—

स्नात्वा निरस्य वासोऽन्यज्जङ्घे प्रक्षाल्य चाम्भसा ।
अपवित्रीकृते ते तु कौपीनच्युतवारिणा ॥

ततस्तीर्थमृत्तिकया तिलकं भस्मना त्रिपुण्ड्रमुभयं वा यथा वा श्रद्धया कुर्यात् । धर्मप्रवृत्तौ—

ललाटे तिलकं कुर्यान्मृदा वापि च भस्मना ।
तदभावे तु तोयेन चन्दनेनापि वै द्विजः ॥
ऊर्ध्वपुण्ड्रं मृदा कुर्यात्तिर्यक्चैव तु भस्मना ।
चन्दनेनोभयं कुर्यादन्यथा नरकं व्रजेत् ॥

आचारप्रदीपे विशेषमाह—

ऊर्ध्वपुण्ड्रं द्विजस्योक्तं क्षत्रियस्य त्रिपुण्ड्रकम् ।
अर्द्धचन्द्रन्तु वैश्यस्य वर्तुलं शूद्रजातिषु ॥
यद्वा समस्तजातीनामूर्द्ध्वपुण्ड्रं परं स्मृतम् ॥ इति ।

अथ ऊर्ध्वपुण्ड्रकरणप्रकारमाह । ब्रह्माण्डे—

पर्वताग्रे नदीतीरे मम क्षेत्रे विशेषतः ।
सिन्धुतीरे च वल्मीके तुलसीमूलमाश्रिते ॥
मृद एतास्तु सङ्ग्राह्या वर्जयेदन्यमृत्तिकाः ।
अङ्गुष्ठः पुष्टिदः प्रोक्तो मध्यमायुष्करी भवेत् ॥
अनामिकान्नदा नित्यं मुक्तिदा च प्रदेशिनी ।
एतैरङ्गुलभेदैस्तु कारयेन्न नखैः स्पृशेत् ॥
नासामूलं समारभ्य वंशपत्रनिभं शुभम् ।
वंशकामो द्विजः कुर्यात्तिलकं चन्दनादिना ॥

गोपीनाथीये—

ललाटे हृदि बाह्वोश्च चतुष्पुण्ड्राणि धारयेत् ।
मूर्त्तयो वासुदेवाद्याश्चतुष्पुण्ड्रेषु धारयेत् ॥
द्वयोर्गोविन्दकृष्णौ तु एकं नारायणं धरेत् ।
एवं पुण्ड्रविधिः प्रोक्तः सर्वेषां गिरिजे! मया ॥
यज्ञदानं तपश्चर्या जपहोमादिकं च यत् ।
ऊर्ध्वपुण्ड्रधरः कुर्यात्तस्य पुण्यमनन्तकम् ॥
ब्रह्मघ्नो वाऽथ गोघ्नो वा हेतुकः सर्वपापकृत् ।
गोपीचन्दनसम्पर्कान्मुक्तो भवति तत्क्षणात् ॥
अभ्यङ्गे सूतके चैव विवाहे पुत्रजन्मनि ।
माङ्गल्येषु च सर्वेषु न धार्यं गोपिचन्दनम् ॥
अभ्यङ्गोत्सवकाले तु कस्तूरीचन्दनादिना ॥ इति ।

अथ त्रिपुण्ड्रमाह शैवैस्तिर्यक्पुण्ड्रमपि धार्यम् । तदुक्तं स्कान्दे—

अग्निहोत्राग्निजं भस्म अग्निकार्योद्भवं तथा ।

औपासनात्समुत्पन्नं लक्षहोमोद्भवं तथा ॥
महारुद्राग्निजं भस्म रुद्रस्थानोद्भवं तथा ।
भस्मानि षड्विधान्याहुः सर्वपापहराणि च ॥
त्रैवर्णिकानां सर्वेषामग्निहोत्रसमुद्भवम् ।
अग्निकार्यात्समुत्पन्नं तद्धार्यं ब्रह्मचारिणा ॥
आवसथ्याग्निसम्भूतं गृहस्थैरेव धार्यते ।
शेषं भस्मत्रयं चैव सर्वैः सर्वत्र धार्यते ॥

अगस्त्यः—

प्रातस्तु सजलं भस्म मध्याह्ने चन्दनान्वितम् ।
सायन्तु केवलं भस्म शैवैर्धार्यं सदैव तु ॥

स्मृतिरत्नावल्याम्—

मध्याङ्गुलित्रयेणैव स्वदक्षिणकरस्य च ।
त्रिपुण्ड्रं धारयेद्विद्वान्सर्वकल्मषनाशनम् ॥
तर्जन्यनामिकाङ्गुष्ठैरनुलोमविलोमतः ।
अतिस्वल्पमनायुष्यमतिदीर्घन्तपःक्षयम् ॥
नेत्रयुग्मप्रमाणेन त्रिपुण्ड्रं धारयेद्द्विजः ॥ इति ।

मध्याङ्गुलित्रयेणेति नियमस्तु ललाटातिरिक्तस्थले एव ।

ऊर्ध्वपुण्ड्रे त्रिपुण्ड्रं स्यान्नोर्ध्वपुण्ड्रं त्रिपुण्ड्रके ।
ततः शास्त्रोक्तविधिना नित्यं कर्म समारभेत् ॥ इति ।

"आचम्य त्रिरायम्यासूनि"ति सूत्रम् । कुशासने उपविष्टः सन् त्रिस्त्रीन्वारान् असून् प्राणान् आयम्य सन्निरुध्यात् । बृहस्पतिः—

बद्धासनमथाचम्य स्मृत्वा चार्षादिकं ततः ।
सुसम्मीलितदृङ् मौनी प्राणायामान्समाचरेत् ॥

स्कान्दे—

गायत्रीं शिरसा सार्धं सप्तव्याहृतिपूर्विकाम् ।
त्रिर्जपेत्सदशोङ्कारां प्राणायामोऽयमुच्यते ॥

कात्यायनः—

भूराद्यास्तिस्र एवैता महाव्याहृतयोऽव्ययाः ।

महर्जनस्तपः सत्यं गायत्री च शिरस्तथा ॥ इति ।

प्रतिप्रतीके प्रणवमुच्चारयेत् । शिवः—

पुनश्चैवं त्रिभिः कुर्याद्‌गृहस्थश्च त्रिसन्धिषु ।
ब्रह्मचर्याश्रमस्थानां वनस्थाना महामुने! ॥
प्राणायामो विकल्पेन प्रोक्तो वेदान्तवेदिभिः ॥

याज्ञवल्क्यः—

दक्षिणे रेचयेद्वायुं वामेनापूरितोदरम् ।
कुम्भेन धारयेन्नित्यं प्राणायामं विदुर्बुधाः ॥

विष्णुपुराणे—

पूरकः पूरणं वायोः कुम्भकः स्थापनं क्वचित् ।
बहिर्निस्सरणं तस्य रेचकः परिकीर्तितः ॥
पीडयेद्दक्षिणां नाडीमङ्गुष्ठेन तथोत्तराम् ।
कनिष्ठानामिकाभ्यां च मध्यमां तर्जनीं त्यजेत् ॥

व्यासः—

अङ्गुष्ठतर्जनीभ्यान्तु ऋग्वेदी सामगायनः ।
अङ्गुष्ठानामिकाभ्यान्तु ग्राह्या सर्वैरथर्वभिः ॥

"पुष्पाण्यम्बुमिश्राण्यूर्ध्वं प्रक्षिप्ये"ति सूत्रम् । पुष्पाणि कुसुमानि अभावे बिल्वादिपत्राणि अम्बुमिश्राणि जलयुक्तानि अञ्जलिना गृहीत्वोर्ध्वमुपरि सूर्याभिमुखस्तिष्ठन् ॐकारव्याहृतियुता गायत्र्योत्सृजेत् । तथा चोक्तं कौर्मे—

ओङ्कारव्याहृतियुतां गायत्रीं वेदमातरम् ।
कृत्वा जलाञ्जलिमूर्ध्वं भास्करं प्रति जन्मना ॥

वेदमातरमुच्चार्येत्यध्याहारः । जन्मना द्विजन्मना । योगीशः—

कराभ्यां तोयमादाय गायत्र्या चाभिमन्त्रितम् ।
आदित्याभिमुखस्तिष्ठँस्त्रिः क्षिपेत्सन्ध्ययोर्द्वयोः ॥
मध्याह्ने तु सकृच्चैव क्षेपणीयं द्विजातिभिः ।
ईषन्नम्रः प्रभाते तु मध्याह्ने ऋजुसंस्थितः ।

उपविश्य तु सायाह्ने भूमावर्घ्यं विनिक्षिपेत् ॥ इति।

विधानपारिजाते—

द्वौ पादौ तु समौ कृत्वा पार्ष्णी उद्धृत्य निःक्षिपेत् ।
मुक्तहस्तेन दातव्यं मुद्रां तत्र न कारयेत् ॥
तर्जन्यङ्गुष्ठयोर्योगे राक्षसी मुद्रिका भवेत् ।
राक्षसीमुद्रया दत्तं तत्तोयं रुधिरं भवेत् ॥

शातातपः—

जलेऽर्घ्यं प्रदातव्यं जलाभावे शुचिस्थले ।
प्रातर्मध्याह्नयोः काले उत्थायार्घ्यं जले क्षिपेत् ॥
उपविश्य तथा सायङ्काले चार्घ्यं स्थले क्षिपेत् ।
असावादित्यमन्त्रेण सोदकेनैव पाणिना ॥
प्रदक्षिणमुपव्रज्य त्वाचमेतमन्ध्ययोर्द्वयोः ॥

अत्रार्घदाने हेतुमाह स्कान्दे—

त्रिंशत्कोट्यो महावीर्या मन्देहा नाम राक्षसाः ।
कृष्णातिदारुणा घोराः सूर्यमिच्छन्ति खादितुम् ॥
ततो देवगणाः सर्वे ऋषयश्च तपोधनाः ।
उपासते सदा सन्ध्यां प्रक्षिपन्त्युदकाञ्जलिम् ॥
दह्यन्ते तेन ते दैत्या वज्रीभूतेन वारिणा ।
ततः प्रयाति भगवान्ब्राह्मणैरभिरक्षितः ॥
बालखिल्यादिभिश्चैव जगतः पालनोद्यतः ।
पश्चाज्जपेच्च सावित्रीं प्रादक्षिण्यविवर्तनम् ॥
कुर्याज्जलेन नासां च चक्षुः श्रोत्रमुपस्पृशेत् ॥

धर्मप्रवृत्तौ—

मन्देहानां विनाशाय निक्षिपेत्तु त्रिरञ्जलीन् ।
प्रायश्चित्तार्थमाचम्य मुच्यते दैत्यहत्यया ॥ इति ॥

"ऊर्ध्वबाहुः सूर्यमुदीक्षन्नुद्वयमुदुत्यञ्चित्रन्तच्चक्षुर्गायत्र्या च यथाशक्ति विभ्राडित्यनुवाकपुरुषसूक्तशिवसङ्कल्पमण्डलब्राह्मणै-

रित्युपस्थाय प्रदक्षिणीकृत्य नमस्कृत्योपविशेद्दर्भेष्वि''तिसूत्रम् । ऊर्ध्वौ सूर्याभिमुखौ बाहू यस्य स ऊर्ध्वबाहुः । अत्र विशेषमाह कश्यपः—

हस्ताभ्यां स्वस्तिकं कृत्वा प्रातस्तिष्ठेद्दिवाकरम् ।
मध्याह्ने तु ऋजू बाहू सायं मुकुलितौ करौ ॥ इति ॥

सूर्यमुदीक्षन् आदित्यमुदीक्षमाणः । शातातपः—

तिष्ठंश्चेद्वीक्ष्यमाणोऽर्कं जपं कुर्यात्समाहितः ।
अन्यथा प्राङ्मुखः कुर्यात्समासीनः कुशासने ॥

''उद्वयमुदुत्यं चित्रं तच्चक्षु''रित्यादिभिः । ऋग्भिः गायत्र्या यथाशक्ति । स्कान्दे—

उद्वयन्तदुदुत्यं च चित्रन्देवेति तत्परम् ।
तच्चक्षुरित्युपस्थानमन्त्रा ब्रह्मस्य सिद्धिदाः ॥
सहस्रपरमां देवीं शतमध्यां दशावराम् ।

इत्यादि । अथ जपधर्माः । विधानपरिजाते व्यासः—

तेजोसीति जपेन्मन्त्रं गायत्र्यावाहने द्विजः ।
प्रणवव्याहृतियुतां गायत्रीं च जपेत्ततः ॥

योगीश्वरः—

ॐकारं पूर्वमुच्चार्य भूर्भुवःस्वस्तथैव च ।
गायत्री प्रणवश्चान्ते जपो ह्येष उदाहृतः ॥

अन्ते प्रणवोच्चारस्तु वनस्थसंन्यासिनामेव । तथा च स्मृतिसारे—

गृहस्थो ब्रह्मचारी वा प्रणवाद्यामिमां जपेत् ।
अन्ते यः प्रणवं कुर्यान्नासौ सिद्धिमवाप्नुयात् ॥

पारिजाते—

समाहितमनास्तूष्णीं मनसा चापि चिन्तयेत् ।
ध्यायेच्च मनसा मन्त्रं जिह्वोष्ठौ न विचालयेत् ॥
न कम्पयेच्छिरोग्रीवां दन्तान्नैव प्रकाशयेत् ॥ इति ।

जपसंख्यामाह । मनुः—

ब्रह्मचारी गृहस्थश्च शतमष्टोत्तरं जपेत् ।

वानप्रस्थो यतिश्चैव सहस्रादधिकं जपेत् ॥

शौनकः—

अष्टोत्तरशतं नित्यमष्टाविंशतिरेव च ।
विधिना दशकं वापि त्रिकालेषु जपेद्द्विजः ॥

व्यासः—

प्रातर्मध्याह्नयोस्तिष्ठन्गायत्रीजपमाचरेत् ।
ऊर्ध्वजानुस्तु सायाह्ने ध्यानालोकनतत्परः ॥
प्रातर्नाभौ करौ कृत्वा माध्याह्ने हृदि संस्थितौ ।
सायं जपति नासाग्रे जपश्च त्रिविधः स्मृतः ॥

गोपीनाथीये व्यासः—

वस्त्रेणाच्छाद्य स्वकरं दक्षिणं यः सदा जपेत् ।
तस्य तत्सफलं जाप्यं तद्विना निष्फलं भवेत् ॥
जपकाले त्वक्षमालां गुरोरपि न दर्शयेत् ।
उल्लङ्घिते तथा मेरौ पतिते चाक्षसूत्रके ॥
प्राणायामत्रयं कृत्वा घृतप्राशनमाचरेत् ॥

अथ जपमालाप्रकारः । पाद्मे—

अरिष्टं पुत्रजीवं च शङ्खं पद्मं तथा मणिम् ।
कुशग्रन्थिं च रुद्राक्षमुत्तमं चोत्तरोत्तरम् ॥
अष्टोत्तरशतं संख्या मणीनां श्रेयसी भवेत् ।
तदर्धसंख्या कथिता मध्यमा चाधमा पुनः ॥
सप्तविंशतिसंख्याता ततो नैवाधमा भवेत् ॥ इति ॥
तर्जन्या न स्पृशेत्सूत्रं न कम्पेन्न विधूनयेत् ।
अङ्गुष्ठस्य तु मध्यस्थं परिवर्त्तं समाचरेत् ॥
मध्यमाकर्षणं तस्याः सर्वसिद्धिप्रदायकम् ।
नान्याङ्गुलीभिराकर्षेन्न नखैश्च तथा स्पृशेत् ॥
अभावे त्वक्षमालायाः कुशग्रन्थ्याऽथ पाणिना ॥

पाणिमाला चेत्थम्—

अनामिकाया मध्ये च मध्याधःप्रक्रमेण च ।

तर्जन्यादिगतान्ते च अक्षमाला करे स्थिता ॥

अस्यार्थः—अनामिकामध्यरेखामादिं कृत्वा तदधःक्रमेण प्रदक्षिणावर्तं तर्जन्या आदिरेखा अन्ते कार्या । सेयं करे स्थिता मालेत्यर्थः । यमः—

मध्यमादिपर्वद्वयं जपकाले तु वर्जयेत् ।
स तं मेरुं विजानीयाद्दूषितं ब्रह्मणा स्वयम् ॥
अङ्गुष्ठाग्रे च यज्जप्तं यज्जप्तं मेरुलङ्घनात् ।
असङ्ख्यातन्तु यज्जप्तं तत्सर्वं निष्फलं भवेत् ॥

गायत्रीजपे तु करमालैव प्रशस्ता विधानपारिजाते—

पर्वभिस्तु जपेद्देवीमन्यत्रानियमः स्मृतः ।
गायत्र्या वेदबीजत्वाद्वेदः पर्वसु गीयते ॥

धर्मप्रवृत्तावपि—

गायत्रीं वेदमूलत्वाद्वेदः पर्वसु गीयते ।
पर्वभिस्तु जपेद्देवीं न मालाभिः कदाचन ॥

विशेषमाह याज्ञवल्क्यः—

सर्वेषां चैव पापानां सङ्करे समुपस्थिते ।
दशसाहस्रिकोऽभ्यासो गायत्र्याः शोधनं परम् ॥

मन्त्रसिद्धिकामस्य चतुर्विंशतिलक्षजप उक्तः ।

शारदातिलके—

तत्त्वलक्षं विधानेन भिक्षाशी विजितेन्द्रियः ।
व्याहृतित्रयसंयुक्तां गायत्रीं दीक्षितो जपेत् ॥

तथा—

गृहे त्वेकगुणं ज्ञेयं नद्यान्तु द्विगुणं स्मृतम् ।
गवां गोष्ठे दशगुणमग्न्यगारे दशाधिकम् ॥
सिद्धिक्षेत्रेषु सर्वेषु देवतायाश्च सन्निधौ ।
सहस्रं शतकोटीनामनन्तं विष्णुसन्निधौ ॥

अथ गायत्रीजपनिषेधमाह—

पतितानामन्त्यजानां दर्शने भाषणे श्रुते ।

क्षुतेऽधोवातगमने जृम्भणे जपमुत्सृजेत् ॥

विधानपारिजाते--

यज्जले शुष्कवस्त्रेण स्थले चैवार्द्रवाससा ।
जपो होमस्तथा दानं तत्सर्वं निष्फलं भवेत् ॥

व्यासः--

आर्द्रवासाश्च यः कुर्याज्जपं होमं प्रतिग्रहम् ।
सर्वन्तद्राक्षसं विन्द्याद्बहिर्जानु च यत्कृतम् ॥ इति ।

"विभ्राडि"त्यनुवाकेन पुरुषसूक्तेन "सहस्रशीर्षे"त्यादिषोडशर्चेन शिवसङ्कल्पेन "यज्जाग्रत" इत्यादिषडर्चेन काण्वश्चैकया ऋचा मण्डलब्राह्मणेन उपस्थाय सूर्यं स्तुत्वा तमेव प्रदक्षिणीकृत्य नमस्कृत्य च कायवाङ्मनोभिः प्रणम्य उपविशेत् आसीत । अत्र सायं प्रातः सन्ध्योपासनं "विभ्राडा"दिरहितमिदमेव कार्यम् । मध्याह्नसन्ध्यायां गायत्रीजपोत्तरं "विभ्राडा"दि जपेत् । तथा च कात्यायनः--

सन्ध्यात्रयेषूपस्थानमेतदाहुर्मनीषिणः ।
मध्ये त्वह्न उपर्यस्य विभ्राडादीच्छया जपेत् ॥

स्कान्दे--

विभ्राडित्यनुवाकं वा सूक्तं वा पौरुषं जपेत् ।
शिवसङ्कल्पमथ वा मण्डलब्राह्मणं तु वा ॥
एतानि चोपस्थानानि रविप्रीतिकराणि च ॥ इति ।

एवं यत्कात्यायनाचार्येण सन्ध्योपासनमुक्तं तत्काण्वमाध्यन्दिनानां पञ्चदशशाखिनां च स्वगृह्योक्तत्वाच्छाखानुष्ठानसिद्धिकरम् । यत्पुनः सायं प्रातः सन्ध्योपासनं शाखान्तराधिकरणन्यायेनेदमेव कल्पतरुकारप्रभृतिनिबन्धकारैराह्निकपद्धतिकारैश्च स्मृत्यन्तरोक्तं "मित्रस्य चर्षणी, इमम्मे" इत्यादिकं सन्ध्योपासनमुचितं लिखितं, तत्सर्ववेदशाखाध्येतृसाधारणत्वात्सर्वशाखिनामनुष्ठातुमुचितम् । तत्रापि यदि स्मृत्यन्तरस्थं गृह्यते तर्हि योगियाज्ञवल्क्यकात्यायनोक्तमेव ग्राह्यम् । एतच्छाखाध्येतृप्रसिद्धेः । हरिहरादयोऽप्येवमेव। आवेशनानन्तरं किं कुर्यादित्याह--"दर्भपाणिः

स्वाध्यायं च यथाशक्त्यादावारभ्य वेद"मिति सूत्रम् । उपग्रहाति-रिक्तदर्भाः पाण्योर्यस्य स दर्भपाणिः सः । स्वाध्यायं ब्रह्मयज्ञं स्वशाखा-ध्ययनम् । तथा च लिङ्गपुराणे—

स्वशाखाध्ययनं विप्र ! ब्रह्मयज्ञ उदाहृतः ॥ इति ।

चकारात् अन्यशाखाथर्वाङ्गिरसपुराणेतिहासादीनां चाध्ययनं श-क्त्यनुसारेण कुर्यात् । किन्तु आदौ आदित आरभ्योपक्रम्य, किं वेदं मन्त्रब्राह्मणात्मकम् । अत्र वेदमित्येकवचनादनेकवेदाध्यायिनोऽपि एकं वेदमारभ्य प्रतिदिनमुपर्युपरि अध्ययनेन समाप्य वेदान्तरं पठेयुः । तथैवाथर्वं पुराणादीनि । याज्ञवल्क्यः—

वेदाथर्वपुराणानि सेतिहासानि शक्तितः ।
ब्रह्मयज्ञप्रसिद्ध्यर्थं विद्यां चाध्यात्मिकीं जपेत् ॥ इति ।

शौनकः—

ॐकारं व्याहृतीस्तिस्रो गायत्रीं त्रिपदां तथा ।
मनसैवमनुस्मृत्य वेदादिकमुपक्रमेत् ॥

याज्ञवल्क्यः—

आदावारभ्य वेदन्तु स्नात्वोपर्युपरि क्रमात् ।
यदधीते स्वयं शक्त्या स स्वाध्याय इति श्रुतिः ॥

गोपीनाथीये स्मृतिः—

स्वरवर्णोभयोपेतं मन्त्रस्थानक्रियान्वितम् ।
वेदमेवं पठेद्यस्तु स्वाध्यायफलमश्नुते ॥

मनुः—

इहैव स नखाग्रेभ्यः परमं तप्यते तपः ।
ऋचं वा यो द्विजोऽधीते स्वाध्यायं शक्तितोऽन्वहम् ॥
वेदोपकरणे चैव जपे चैव तु नैत्यिके ।
नानुरोधोऽस्त्यनध्याये होममन्त्रेषु चैव हि ॥

ब्रह्मयज्ञे पुरुषसूक्तस्य फलातिशय उक्तः । मात्स्ये—

ब्रह्मयज्ञे जपेत्सूक्तं पौरुषं चिन्तयन्हरिम् ।
स सर्वाञ्जपते वेदान्साङ्गोपाङ्गान्द्विजोत्तमः ॥ इति ।

कालान्तरेऽपि ब्रह्मयज्ञः स्मर्यते । छन्दोगपरिशिष्टे कात्यायनः—

यश्च श्रुतिजपः प्रोक्तो ब्रह्मयज्ञस्तु स स्मृतः ।
स चार्वाक्तर्पणात्कार्यः पश्चाद्वा प्रातराहुतेः ॥
वैश्वदेवावसाने वा नान्यत्रेत्यनिमित्तकात् ॥ इति ।

श्रुतौ पञ्चमहायज्ञसन्निहितपठितत्वात्तत्रैवेति गम्यते । अतः काण्वमाध्यन्दिनीयैर्वैश्वदेवावसान एवानुष्ठेय इति । आश्वलायनैस्तु मध्याह्नसन्ध्यायाः प्राक् । तदुक्तम्—

आवर्तनेऽवगाह्याप: कुशपाणिस्तु बह्वृचः ।
ब्रह्मयज्ञञ्च कुर्वीत सन्ध्यां माध्याह्निकीं ततः ॥
स्नानं कृत्वा तु मध्याह्ने द्विजः सन्ध्यामुपासते ।
ब्रह्मयज्ञं ततः कुर्यात्तर्पणं तैत्तिरीयकः ॥ इति ।

यदि स्मृत्यन्तरस्थं गृह्यते तर्हि योगियाज्ञवल्क्यकात्यायनोक्तमेव ग्राह्यम् , एतच्छाखाध्येतृप्रसिद्धेः । "उत्तमे शिखरे जात" इति विसर्जनं कृत्वा ब्रह्मार्पणं कार्यम् । याज्ञवल्क्यः—

करे नीरं समादाय देवा गात्विति मन्त्रतः ।
निवेदयेज्जपं प्रातः प्रयोगस्तत्र कथ्यते ॥
प्रातःसन्ध्याङ्गभूतेन गायत्र्यास्तु जपेन च ।
साष्टशतसंख्येन ब्रह्मा मे प्रीयतां रविः ॥

एवं सन्ध्यावन्दनादिकं मुख्यकाल एव कर्तव्यम् । तथा च मिताक्षरायाम्—

काले फलन्त्यौषधयः काले पुष्यन्ति पादपाः ।
वर्षन्ति तोयदाः काले तस्मात्कालं न लङ्घयेत् ॥
प्रातःसन्ध्यां सनक्षत्रां मध्यमां स्नानकर्मणि ।
सादित्यां पश्चिमां सन्ध्यामुपासीत यथाविधि ॥

अयं मुख्यकालः स्नानकर्मणि मध्याह्नस्नानान्तरमित्यर्थः ।

मुख्यकाले सन्ध्यावन्दनाकरणे प्रायश्चित्तं व्यासः—

आदित्योऽभ्युदियाद्यस्य सन्ध्योपास्तिमकुर्वतः ।

स्नात्वा प्राणांस्त्रिरायम्य गायत्र्यष्टशतं जपेत् ॥

कात्यायनः—

संध्याकाले व्यतिक्रान्ते जपं कुर्यात्पुनर्म्मनः।
ऋचं वाचमृचं जप्त्वा ततः सन्ध्यामुपासते ॥

पारिजाते तु—

कालातिक्रमणे चैव चतुर्थार्घ्यं प्रदापयेत् ॥

सङ्गवपर्यन्तं प्रातःसन्ध्यागौणकालः। आप्रदोषावसानं सायंसन्ध्याया इति मण्डनः। स्मृतिसारे—

उदयात्प्राक्तनी सन्ध्या घटिकात्रयमुच्यते।
सायंसन्ध्या त्रिघटिका अस्तादुपरि भास्वतः ॥
उदयास्तमयादूर्ध्वं यावत्स्याद्घटिकात्रयम्।
तावत्सन्ध्यामुपासीत प्रायश्चित्तमतः परम् ॥

मध्याह्ने तु दक्षः—

अध्यर्द्धयामादासायं सन्ध्या माध्याह्निकीष्यते।
अर्घप्रदानतः पूर्वमुदयास्तमयेऽपि वा ॥
गायत्र्यष्टशतं जप्यं प्रायश्चित्तं द्विजातिभिः ॥ इति।

गौणकालेऽप्यसम्भवे यमः—

दिवोदितानि कर्माणि प्रमादादकृतानि चेत्।
शर्वर्याः प्रथमे यामे तावत्कुर्याद्यथाक्रमम् ॥

अत्र मुख्यकालानुरोधात् सायंसंध्योपासनं पूर्वं कृत्वा "आगन्तुकानामन्ते निवेश" इति न्यायेनातीतकालं कर्म पश्चात्कार्यमिति न्यायतः प्राप्तम्।

मध्याह्ने समतिक्रान्ते सायङ्कालो भवेद्यदि।
सायंसन्ध्यामुपास्यादौ सन्ध्या माध्याह्निकी तदा ॥

धर्मप्रवृत्तौ शङ्खः—

सायङ्कालो व्यतीतश्चेदस्तं याते दिवाकरे।
कुर्यादावर्त्तिनीं सन्ध्यां समारभ्य यथाक्रमम् ॥

आवर्त्तनो मध्याह्नस्तस्येयं सन्ध्येत्यर्थः ।

कुर्वीतावर्त्तिनीं सन्ध्यां रात्रावपि न दुष्यति ।
दद्यादर्घ्यन्तु गायत्र्या सौरसूक्तविवर्जिता ॥
मध्याह्नसन्ध्या रात्रौ चेत्प्रमादात्क्रियते यदि ।
सौरस्थाने जपेत्सूक्तं सौरं वैश्वानरात्मकम् ॥ इति ।

तस्य निषेधार्थं यथाक्रममिति वचनमिति मदनपारिजाते—

दिवोदितानि कर्माणि प्राप्नुवन्त्युत्तराणि च ।
दिवोदितानि कृत्वैव विदध्यादुत्तराणि तु ॥
अवगाहं ब्रह्मयज्ञं सौरजप्यं च वर्जयेत् ॥ इति ।
स्नानं सन्ध्यां त्यजन्विप्रः सप्ताहाच्छूद्रतां व्रजेत् ।
तस्मात्स्नानं च सध्यां च सूतकेऽपि न सन्त्यजेत् ॥
सूतके मृतके चैव सन्ध्याकर्म समाचरेत् ।
मनसोच्चारयेन्मन्त्रान्प्राणायाममृते द्विजः ॥

प्राणायाममन्त्रा मनसा नोच्चार्या इत्यर्थः । पैठीनसिस्तु—

"सूतके सावित्र्याञ्जलिं प्रदक्षिणं कृत्वा सूर्यं ध्यायन्नमस्कुर्या-"
दित्यर्घ्यदानपर्यन्तां सन्ध्यामाह—

उच्चार्य वाचा गायत्रीं दद्यादर्घाञ्जलीनपि ।
अष्टाविंशतिकृत्वोऽत्र गायत्रीं मनसा जपेत् ॥

इत्यनेन गायत्रीजपमपि केऽप्याहुः । अत्र यथाचारं व्यवस्थेयम् । अत्र जपात्पूर्वं पश्चाद्वोभयत्र वा मुद्रा दर्शनीयाः । ताश्चोक्ता विधानपारिजाते गायत्रीहृदये—

सुमुखं १ सम्पुटं २ विततं ३ विस्तीर्णं ४ द्विमुखं ५ त्रिमुखं ६ चतुर्मुखं ७ पञ्चमुखं ८ षण्मुखं ९ अधोमुखं १० व्यापकाञ्जलिकं ११ शकटं १२ यमपाशं १३ ग्रन्थितं १४ सन्मुखोन्मुखं १५ प्रलम्बं १६ मुष्टिकं १७ मत्स्यः १८ कूर्मः १९ वराहकं २० सिंहाक्रान्तं २१ महाक्रान्तं २२ मुद्गरं २३ पल्लवं २४ । आसां लक्षणा-

नि विधानपारिजाते—

सुमुखं संहतौ हस्तावुत्तानौ कुञ्चिताङ्गुली ।
सम्पुटं पद्मकोशाभौ तावेवान्योन्यसंहतौ ॥
विततं संमुखौ हस्तावुत्तानावायताङ्गुली ।
विस्तीर्णं संहतौ पाणी मिथो मुक्ताङ्गुलिद्वयौ ॥
सम्मुखात्सन्त्यक्तपाण्योः कनिष्ठाद्वययोगतः ।
शेषाङ्गुलीनां वैरल्याद्द्विमुखप्रमुखादयः ॥

अस्यार्थः—सुमुखम् । संमुखात्सन्त्यक्तपाण्योः कनिष्ठाद्वययोगेन शेषाङ्गुलीनां विरलत्वेनाङ्गुष्ठद्वयमारम्यानामिकान्तं यावत् द्विमुखत्रिमुखचतुर्मुखपञ्चमुखा मुद्राः स्युः ।

शेषाङ्गुलीनां संयोगात्पूर्वयोगविनाशतः ।
तिर्यक् संयुज्यमानाग्रौ संयुक्ताङ्गुलिमण्डलौ ॥
हस्तौ षण्मुख इत्युक्ता मुद्रा मुद्राविशारदैः ॥

अत्र पूर्वयोगविनाशत इत्यत्र पूर्वयोगः कनिष्ठाद्वययोगस्तद्विनाशेनेत्यर्थः । शेषं सुगमम् ।

आकुञ्चिताग्रौ संयुक्तौ न्युब्जौ हस्तावधोमुखम् ।
उत्तानौ तादृशावेव व्यापकाञ्जलिकं करौ ॥
अधोमुखौ बद्धमुष्टी बद्धाग्राङ्गुष्ठकौ करौ ॥
शकटं नाम कथित"मिति ।
बद्धमुष्टिकयोः पाण्योरुत्ताना वामतर्जनी ।
कुञ्चिताग्राऽन्यया युक्ता तर्जन्या न्युब्जवक्रया ॥
यमपाशमिति ।

अस्यार्थः—बद्धमुष्टिकयोः पाण्योर्या उत्ताना कुञ्चिताग्रा वामतर्जनी साऽन्यया दक्षिणतर्जन्या न्युब्जवक्रया युक्ता यमपाशमुद्रेति ।

उत्तानसन्धिसंलीनबद्धाङ्गुलिदलौ करौ ।
सम्यगुद्घाटितौ दीर्घावङ्गुष्ठौ ग्रन्थमुच्यते ॥

उत्तानानि सन्धिसंलीनानि बद्धान्यङ्गुलिदलानि ययोस्तौ तथोक्तौ । शेषं सुगमम् ।

सञ्चितोर्ध्वाङ्गुलिर्वामस्तादृशा दक्षिणेन तु ।
अधोमुखेन संयुक्तः सन्मुखोन्मुख उच्यते ॥
उत्तानोन्नतकोटी च विलम्बः कथितः करौ ।
मुष्टी चान्योन्यसंयुक्तावुत्तानौ मुष्टिको भवेत् ॥
मीनस्तु सम्मुखीभूतौ युक्तानामकनिष्ठिकौ ।
ऊर्ध्वसंयुक्तवक्राग्रं शेषाङ्गुलिदलौ करौ ॥

युक्ते संयुक्ते अनामिकाकनिष्ठिके ययोस्तौ तथोक्तौ तावन्योन्यसम्मुखीभूतौ । तथा ऊर्ध्वसंयुक्तानि वक्राग्राणि शेषाङ्गुलिदलानि ययोः करयोस्तौ मीनो नाम मुद्रा ।

अधोमुखकरो वामस्तादृशा दक्षिणेन तु ।
पृष्ठदेशे समाक्रान्तः कूर्मो नामाभिधीयते ॥
ऊर्ध्वमध्यो वामभुजो करे दक्षकराश्रये ।
वराहेति ॥

दक्षकराश्रये करे सति उक्तलक्षणो वामभुजो वाराही नाम मुद्रा ।

यथातथाङ्गुली सिंहाक्रान्तकर्णाश्रितौ करौ ।
किञ्चिदाकुञ्चिताग्रौ चेन्महाक्रान्तं ततः परम् ॥

तावेव कुञ्चिताग्रौ महाक्रान्तं नाम मुद्रा ।

ऊर्ध्वं किञ्चिद्गतौ पाणी मुद्गरो वामतर्जनी ॥

अस्यार्थः—किञ्चिदूर्ध्वगतयोः पाण्योर्या वामतर्जनी दक्षिणहस्तेन गृहीता सा मुद्गरमुद्रा ।

अधोमुखस्थितो मूर्ध्नि पल्लवो दक्षिणः करः ॥

अस्यार्थः—उक्तलक्षणवामतर्जन्याः मूर्ध्नि अधोमुखस्थितः करः पल्लवो नाम मुद्रा ।

न जातु दर्शयेन्मुद्रां महाजनसमागमे ।
देवास्तस्य न पश्यन्ति विफलं च कृतं भवेत् ॥ इति ।

तस्माद्दहस्येव मुद्रा दर्शनीया। अत्रावसरे गायत्रीतर्पणमुक्तं शौनकेन–

अर्घान्ते वा जपान्ते वा प्रागासीनः कुशासने।
सन्ध्यासु तर्पणं कार्यं स्मृत्वा चर्घ्यादिकं ततः॥ इति।

---

(१)उत्तीर्य धौते वाससी परिधाय मृदोरू करौ प्रक्षाल्याचम्य त्रिरायम्यासून्पुष्पाण्यम्बुमिश्राण्यूर्द्ध्वं क्षिप्त्वोर्ध्वबाहुः सूर्यमुदीक्षन्नुद्वयमुदुत्यं चित्रं तच्चक्षुरिति गायत्र्या च यथाशक्ति विभ्राडित्यनुवाकपुरुषसूक्तशिवसङ्कल्पमण्डलब्राह्मणैरित्युपस्थाय प्रदक्षिणीकृत्य नमस्कृत्योपविशेद्दर्भेषु दर्भपाणिः स्वाध्यायं च यथाशक्त्यादावारभ्य वेदम्॥ २॥

ततस्तर्पयेद्ब्रह्माणं पूर्वं विष्णुꣳरुद्रं प्रजापतिं देवाँश्छन्दाꣳसि वेदानृषीन्पुराणाचार्यान्गन्धर्वानितराचार्यान्त्संवत्सरं च सावयवं देवीरप्सरसो देवानुगान्नागान्सागरान्पर्वतान्सरितो मनुष्यान्यक्षान्रक्षाꣳसि पिशाचान्त्सुपर्णान्भूतानि पशून्वनस्पतीनोषधीर्भूतग्रामश्चतुर्विधस्तृप्यतामित्योङ्कारपूर्वं ततो निवीती मनुष्यान्। सनकं च सनन्दनं तृतीयं च सनातनम्। कपिलमासुरिश्चैव वोढुं पञ्चशिखं तथा। ततोऽपसव्यं तिलमिश्रं कव्यवाडनलꣳसोमं यममर्यमणमग्निष्वात्तान्सोमपा बर्हिषदो यमाँश्चैके। यमाय धर्मराजाय मृत्यवे चान्तकाय च। वैवस्वताय कालाय सर्वभूतक्षयाय च। औदुम्बराय दध्नाय नीलाय परमेष्ठिने। वृकोदराय चित्राय चित्रगुप्ताय वै नम इत्येकैकस्य तिलैर्मिश्राँस्त्रीँस्त्रीन्दद्याज्जलाञ्जलीन्। यावज्जीवकृतं पापं तत्क्षणादेव नश्यति। जीव-

(१) कण्डिकेयं व्याख्यानानन्तरं लिखितेति सुधीभिरूह्यम्।

त्पितृकोऽप्येतानन्यांश्चेतर उदीरतामङ्गिरस आयन्तु न ऊर्जं वहन्तीः पितृभ्यो ये चेह मधु वाता इति तृचञ्च पन्प्रसिञ्चेत्तृप्यध्वमिति त्रिर्नमो व इत्युक्त्वा मातामहानां चैवं गुरुशिष्यर्त्विग्ज्ञातिबान्धवा न तर्पिता देहा-द्रुधिरं पिबन्ति वासो निष्पीड्याचम्य ब्राह्मवैष्णवरौद्र-सावित्रमैत्रवारुणैस्तल्लिङ्गैरर्चयेदद्भ्रमरठ हठस इत्युपस्थाय प्रदक्षिणीकृत्य दिशश्च देवताश्च नमस्कृत्योपविश्य ब्रह्माग्निपृथिव्योषधिवाग्वाचस्पतिविष्णुमहद्भ्योऽद्भ्योऽपाम्पतये वरुणाय नम इति सर्वत्र सं वर्चसेति मुखं विमृष्टे देवा गातुविद इति विसर्जयेदेष स्नानविधिरेष स्नानविधिः ॥ ३ ॥

"ततस्तर्पयेद्ब्रह्माणं पूर्वं विष्णुं रुद्रं प्रजापतिं देवाँश्छन्दाꣳसि वेदानृषीन्पुराणाचार्यान्गन्धर्वानितराचार्यान्संवत्सरं च सावयवं देवीरप्सरसो देवानुगान्नागान्सागरान्पर्वतान्त्सरितो मनुष्यान्यक्षान्रक्षाꣳसि पिशाचान्सुपर्णान्भूतानि पशून्वनस्पतीनोषधीर्भूतग्रामश्चतुर्विधस्तृप्यतामित्योंकारपूर्व"मिति सूत्रम् ।

"तर्पयेत्" प्रीणयेत् । कं ब्रह्माणम् । कथं ? पूर्वं आदौ । केषां ? विष्ण्वादिदेवानाम् । नन्वत्र ब्रह्माणं विष्णुमित्याद्येव वक्तुमुचितं किमर्थमत्र पूर्वपदमिति, पाठक्रमादेव पूर्वत्वसिद्धेः ? सत्यम् । उच्यते स्मृत्यन्तरोक्तं मोदादिषड्विनायकतर्पणपूर्वमिति निवृत्त्यर्थमित्यदोषः । तथा च याज्ञवल्क्यः—

आवाह्य देवताः सर्वा विश्वे देवास इत्यृचा ।
ब्रह्माणं तर्पयेत्पूर्वं विष्णुं रुद्रं प्रजापतिम् ॥ इति ।

"सावयव"मिति चकारात्संवत्सरस्यैव विशेषणम् । ॐ कारपूर्वं प्रणवपूर्वकं तर्पयेदित्यर्थः । तदुक्तं दाल्भ्यपरिशिष्टे —

ब्रह्मयज्ञो जपो होमो देवर्षिपितृकर्म च ।
अनोङ्कृत्य कृतं सर्वं न भवेत्सिद्धिकारकम् ॥ इति ।

तर्पयेद्ब्रह्माणमित्यत्र तर्पणक्रियायाः कर्मभूतान्ब्रह्मादीनभिधाय "भूतग्रामश्चतुर्विधस्तृप्यता"मित्यत्र प्रयोगमुपदिशन्त्याचार्याः। ततश्च "ॐ ब्रह्मा तृप्यता"मिति तर्पणे प्रथमान्त एव प्रयोगः कार्यः। गोभिलपरिशिष्टेऽपि -

तर्पणे प्रथमा प्रोक्ता श्राद्धे सम्बुद्धिरुच्यते।
पिता तर्पणकाले तु पितः! स्याच्छ्राद्धकर्मणि॥ इति।

अत्र विसर्जनोपदेशादावाहनमपि द्रष्टव्यम्। तथा च याज्ञवल्क्यः—

आवाह्य पूर्ववन्मन्त्रैरास्तीर्य च कुशान्क्षितौ।
प्रागग्रेषु सुरान्सर्वान्दक्षिणाग्रेषु वै पितॄन्॥
नामगोत्रे समुच्चार्य दद्यात्प्रणवपूर्वकम्।
नोदकेषु न पात्रेषु न क्रुद्धो नैकपाणिना॥
नोपतिष्ठति तत्तोयं यत्तु भूमौ प्रदीयते॥

यत्तु—

उभाभ्यामपि पाणिभ्यामुदकं यः प्रयच्छति।
स मूढो नरकं याति कालसूत्रमवाक्शिराः॥

इतिव्याघ्रपाद्वचनं तच्छ्राद्धादिविषयम्। तथा चोक्तम्—

श्राद्धे दाने विवाहे च पाणिनैकेन दीयते।
तर्पणे तूभयेनैव जलं देयं तु नान्यथा॥

गोभिलः—

द्वौ हस्तौ युग्मतः कृत्वा पूरयेदुदकाञ्जलिम्।
गोशृङ्गमात्रमुद्धृत्य जलमध्ये जलं क्षिपेत्॥

दक्षः—

प्रादेशमात्रमुद्धृत्य सलिलं प्राङ्मुखः सुरान्।
उदङ्मुखो मनुष्यांश्च पित्रादीन्दक्षिणामुखः॥

तर्पयेदित्यध्याहारः। शिष्टाचारपरिप्राप्तं यस्मिन्सूक्ष्मपात्रे धृतेऽञ्जलिभङ्गो न भवति तद्ग्राह्यमित्यवधेयम्। तथा च च्छागलेयः—

लघुपात्रं करे कृत्वा सौवर्णं खड्गमेव च।
राजतं ताम्रजं वापि तेन सन्तर्पयेत्पितॄन्॥

भृगुश्च—

प्रागग्रैस्तर्पयेद्देवानुदगग्रैश्च मानुषान् ।
तेनैव द्विगुणीकृत्य तर्पयेत्प्रयतः पितॄन् ॥

द्विगुणीकृत्योभाभ्यामग्राभ्यां पितृतीर्थगताभ्यामित्यर्थः। मनुष्यतर्पणे अग्राणां प्राजापत्यतीर्थेन सम्बन्धः । गोभिलः—

दर्भाः कृष्णाजिनं गावो मन्त्राग्निब्राह्मणाः सुराः ।
नैते निर्माल्यतां यान्ति योज्यमानाः पुनः पुनः ॥

अतो देवतर्पणे युक्तैरपि दर्भैर्मनुष्यपितृतर्पणकरणे न प्रत्यवायः । ततो निवीती मनुष्यान्देवमानवान् तर्पयेदित्यनुषङ्गः । भारद्वाजः—

कण्ठावलम्बितं चैव ब्रह्मसूत्रं यदा भवेत् ।
तन्निवीतमिति ख्यातं शस्तं कर्मणि मानुषे ॥

योगी च—

मनुष्याणां तथा कुर्यात्तर्पणं कण्ठसज्जने ।
प्राजापत्येन तीर्थेन तर्पयेद्ब्रह्मणः सुतान् ॥

अत्र दिङ्नियमोऽपि नन्दिपुराणे—

ऐशान्यामथ कौबेर्यां ब्रह्मपुत्रांश्च तर्पयेत् ॥ इति ।

स्थले तु उदङ्मुख एव । तथा चोक्तं ब्रह्मवैवर्ते—

सौम्याभिमुखतो नित्यमुदगग्रे च बर्हिषि ।
मनुष्याणां च तुष्ट्यर्थं निक्षिपेत्तु जलाञ्जलीन् ॥ इति ।

तानेवाह—

सनकं च सनन्दनं तृतीयं च सनातनम् ।
कपिलमासुरिं चैव वोढु पञ्चशिखं तथा ॥

इति श्लोकपठिताः सप्त मानुषाः । "ततोऽपसव्यं तिलमिश्रं कव्यवाडनलꣳ सोमं यममर्यमणमग्निष्वात्तान्सोमपो बर्हिषद्" इतिसूत्रम् । ततः मनुष्यतर्पणानन्तरमपसव्यं प्राचीनावीतितां कृत्वा तिलयुक्तं जलं गृहीत्वा कव्यवाडनलादींस्तर्पयेदिति सम्बन्धः । अग्निष्वात्तादावपि पितृपदं संयोज्यम् । तत्रैवं प्रयोगः—"अग्निष्वात्ताः पितरः सोमपाः पितरः

बर्हिषदः पितर" इति। अपसव्यमित्यनेन सव्यजानुपातः दक्षिणाभिमुखता च ज्ञातव्या। तथा च कात्यायनः—

सव्यं जानु ततोऽवाच्य पाणिभ्यां दक्षिणामुखः।
तल्लिङ्गैस्तर्पयेन्मन्त्रैः सर्वान्पितृगणानपि॥

"यमाँश्चैके" इति सूत्रम्। एके आचार्याः यमांस्तर्पयेदित्याहुः। एकेग्रहणाद्विकल्पः। यमानेवाह—

"यमाय धर्मराजाय मृत्यवे चान्तकाय च।
वैवस्वताय कालाय सर्वभूतक्षयाय च॥
औदुम्बराय दध्नाय नीलाय परमेष्ठिने।
वृकोदराय चित्राय चित्रगुप्ताय वै नमः॥" इतिसूत्रम्।

चतुर्दशमन्त्रैश्चतुर्दशयमास्तर्पयेदिति। अत्र केचित्—"यमस्तृप्यता"मिति प्रयोगं कुर्वन्ति, तदसत्। न ह्येतानि देवतापदानि, किं तर्हि? एते मन्त्राः। मन्त्राणां च यथाम्नातानामेव प्रयोग इति। यमतर्पणे नमस्कारः सर्वत्र योज्यः। पाद्मे विशेषः—

पितृत्वादपसव्येन दक्षिणाभिमुखस्तिलैः।
देवत्वाद्देवतीर्थेन यमान्सन्तर्पयेद्बुधः॥ इति।

पितृतर्पणेऽञ्जलिसंख्यामाह—"एकैकस्य तिलैर्मिश्राँस्त्रींस्त्रीन् दद्याज्जलाञ्जली"निति सूत्रम्। एकैकस्य प्रत्येकं कव्यवाडनलादेः तिलैर्मिश्रान्संयुक्तान् जलपूर्णानञ्जलींस्त्रींस्त्रीन् दद्यात्। तथा च व्यासस्मृतिः—

एकैकमञ्जलिं देवा द्वौ द्वौ तु सनकादयः।
अर्हन्ति पितरस्त्रींस्त्रीन् स्त्रियश्चैकैकमञ्जलिम्॥

वृद्धशातातपस्तु—

मातृमुख्याश्च यास्तिस्रस्तासां दद्याज्जलाञ्जलीन्।
त्रींस्त्रीनेव तथान्यासां दद्यादेकैकमञ्जलिम्॥

विधानपारिजाते शालङ्कायनः—

सपत्न्याचार्यपत्नीनां द्वौ द्वौ दद्याज्जलाञ्जली॥

सपत्नी सापत्नमाता। आचार्यः प्रसिद्धः। पत्नी आत्मनः। गुर्वा-

दयोऽप्येकाञ्जलिना तर्प्याः । नन्व"पसव्यं तिलमिश्र"मित्यनेनैव तिलप्राप्तौ पुनस्तिलशब्दोपादानं व्यर्थम् ? सत्यम् । 'स्मृत्यन्तरे यमादीनां पितृदेवोभयरूपत्वान्नियमार्थ'मिति गोपीनाथः । 'स्मृत्युक्तनिषिद्धदिने तिल-निवृत्तिर्माभूदित्येतदर्थ'मिति हरिहरः । तथा च कात्यायनः—

कठाः काण्वाश्च जाबालास्तथा वाजसनेयिनः ।
सतिलं तर्पणं कुर्युर्निषिद्धेषु दिनेष्वपि ॥
तीर्थे तिथिविशेषे च गयायां प्रेतपक्षके ।
निषिद्धेऽपि दिने कुर्यात्तर्पणं तिलमिश्रितम् ॥

तर्पणे प्रत्यञ्जलि मन्त्रावृत्तिः कार्या । ननु मन्त्रस्य तर्पणकर्मणि करत्वात्संख्याञ्जलिदानस्यैककर्मत्वाच्चै"कद्रव्ये कर्मावृत्तौ सकृन्मन्त्र-करण"मिति कात्यायनवचनाच्च सकृदेव मन्त्रपाठ इति चेत् ? नैवम् । प्रत्यञ्जलि ह्यन्यज्जलं दीयते। ततश्च यत्र मन्त्रः प्रयुक्तस्तदर्थ एव स्यात् । न सर्वार्थं, इति संस्कारसिद्धेस्तत्सिद्धये निर्वपणलवनादिवद्द्रव्यान्तरत्वेन प्रत्यञ्जलि मन्त्रावृत्तिः स्यादेव । "कर्मावृत्तौ मन्त्रावृत्ति"रिति कात्या-यनोक्तेश्चेत्यलं पल्लवितेन । तस्मात्सन्ध्यार्घ्यवत्प्रत्यञ्जलि मन्त्रावृत्तिरिति सिद्धम् । गोपीनाथीये—

मुक्तहस्तेन दातव्यं न मुद्रां तत्र दर्शयेत् ।
तर्जन्यङ्गुष्ठयोगेन मुद्रेयमभिधीयते ॥

योगी—

अनामिकाधृतं हेम तर्जन्यां रूप्यमेव च ।
कनिष्ठिकाधृतं खड्गं तेन पूतो भवेद्द्विजः ॥

शातातपः—

खड्गमौक्तिकहस्तेन कर्तव्यं तिलतर्पणम् ।
मणिकाञ्चनहस्तेन न शून्येन कदाचन ॥

शङ्खस्तु—

विना रौप्यसुवर्णेन विना ताम्रतिलैस्तथा ।
विना दर्भैश्च मन्त्रैश्च पितॄणां नोपतिष्ठते ॥

हरिहरभाष्ये स्मृतिः--

ये च पाणितले श्लिष्टा रोमकूपेषु ये तिलाः ।
तैस्तिलैस्तर्पणं कुर्वन् पितृघाती भवेन्नरः ॥

अन्यत्रापि—

पटे तटेऽश्मनि पात्रे रोमकूपेषु ये तिलाः ।
ते तिलाः क्रिमिसंयुक्तास्तज्जलं रुधिरायते ॥
तस्मात्ते मणिबन्धे तु कार्या विप्रैः प्रयत्नतः ॥ इति ।

अस्य तर्पणस्य नित्यत्वेऽप्यानुषङ्गिकफलमाह—

"यावज्जीवकृतं पापं तत्क्षणादेव नश्यति" ॥

इति सूत्रम् । यावज्जीवं जन्मत आरभ्य तर्पणदिनपर्यन्तं आचरितं पापं अशुभं कर्म तत्क्षणादेव तर्पणसमनन्तरमेव नश्यति क्षीयते । "जीवत्पितृकोऽप्येतानन्यांश्चेतर" इति सूत्रम् । जीवो विद्यमानः पिता यस्यासौ जीवत्पितृकः । सोऽपि एतान्पूर्वोक्तान् ब्रह्मादिचित्रगुप्तान्तान् तर्पयेदिति । इतरस्तु जीवत्पितृकादन्यो मृतपितृकः अन्यान् एभ्यः परान् पित्रादीन् चकारात् ब्रह्मादींश्च तर्पयेदिति पूर्वेण सम्बन्धः । विष्णुः—

अपसव्यं द्विजेन्द्राणां पित्र्ये सर्वत्र-कीर्तितम् ।
आप्रकोष्ठं प्रकर्तव्यं मातापित्रोस्तु जीवतोः ॥
न जीवत्पितृकः कृष्णैस्तिलैस्तर्पणमाचरेत् ॥ इति ।

योगी याज्ञवल्क्यः—

यदि स्याज्जीवपितृकः केभ्यो दद्याज्जलाञ्जलिम् ।
येभ्य एव पिता दद्यात्तेभ्यो दद्यात्स्वयं सुतः ॥

पराशरस्तु—

वृद्धौ तीर्थे च सन्न्यस्ते ताते च पतिते सति ।
येभ्य एव पिता दद्यात्तेभ्यो दद्याज्जलं सुतः ॥ इति ।

"उदीरता मङ्गिरसऽआयन्तु नऽऊर्ज्जं पितृभ्यो ये चेह मधु व्वाता इत्यृचं जपन् प्रसिञ्चेत्तृप्यध्वमिति च त्रि"रिति सूत्रम् । "उदीरता"मिति क्रमेण नवर्च्चो जपन् उपांशु आम्नायस्वरेण पठन् प्रसिञ्चेत् । अञ्जलिकृतं जलं पितृतीर्थेन तर्पणजलाधिकरणे प्रक्षिपेत् । "तृ-

प्यद्ध्व''मित्युक्त्वा प्रतिपुरुषं त्रींस्त्रीञ्जलाञ्जलीन्प्रक्षिपेदित्यर्थः । तथा च योगी—

पितॄन्ध्यायन्प्रासिञ्चेत जपन्मन्त्रान्यथाक्रमम् ।
तृप्यद्ध्वमिति च त्रिस्त्रिः पुरुषं प्रति तर्पयेत् ॥
मार्जनं तर्पणं श्राद्धं न कुर्याद्वारिधारया ।
कुर्याच्चेद्वारिधाराभिस्तत्सर्वं निष्फलं भवेत् ॥

अत्र केचित् "उदीरता"मित्यादिकानामृचां पित्रादितर्पणेऽञ्जलिदाने करणत्वं मन्यन्ते, तदसमञ्जसम् । सूत्रार्थपर्यालोचनयाऽकरणताप्रतीतेः । कथम् ? जपन्प्रसिञ्चेदित्यत्र शतृप्रत्ययेन मन्त्रान् जपता सततं जलप्रक्षेपः कार्य इति सूत्रात्प्रतीयते । करणत्वे तु "मन्त्रान्तैः कर्मादिः सान्निपात्य"इति परिभाषया मन्त्रान्ते अञ्जलिः प्राप्तः । तथा सति जपशब्दस्य शतृप्रत्ययस्य चानर्थक्यप्रसङ्गः दानार्थताकल्पना च प्रसेकशब्दस्य । तस्मादिदं प्रसेकाख्यं कर्मान्तरं स्यात् । धारानिषेधस्तु प्रसेकातिरिक्तविषयः । "नमो वऽइत्युक्त्वा मातामहानां चैव"मिति सूत्रम् । "नमो व" इत्यष्टौ यजूंषि उक्त्वा जपित्वा मातामहादित्रयाणामपि एवं अमुना प्रकारेण जलं प्रक्षिपेत् । योगी—

नमो व इति जप्त्वा वै ततो मातामहानपि ।
तर्पयेत नृशंस्यार्थं धर्मं परममाश्रितः ॥ इति ।

अत्र यद्यपि सूत्रकृता मातृतर्पणं नोक्तं, तथापि स्मृतिवाक्यात्कर्त्तव्यमेव । तथा च ऋष्यशृङ्गः—

पित्रादिभ्यो जलं दद्याज्जपन्मन्त्रान्यथाविधि ।
तृप्यद्ध्वमिति च त्रिर्वै ततो मातॄस्तर्प्यऽएव च ॥ इति ।

मरीचिः—

पित्रादित्रयपत्नीनां पृथग्देयं ततो जलम् ।
ततो मातामहानां च क्रम एवं हि तर्पणे ॥

गोपीनाथीये स्मृतिः—

अन्तर्मातामहान्कृत्वा मातॄणां यः प्रयच्छति ।
तर्पणं पिण्डदानं च नरकं स तु गच्छति ॥

"गुरुशिष्यर्त्विग्ज्ञातिबान्धवानि"तिसूत्रम् । गुरुराचार्य उपनीय वेदाध्यापकः। शिक्षितुं योग्यान् शिष्यान्पुत्रादीन्। ऋत्विजो याजकान् ज्ञातीन् पितृव्यभ्रात्रादिसपिण्डगोत्रजान्। बान्धवान् मातुलमातुलेयपितृष्वस्रीयादीन्। योगी—

पूर्वं स्ववंशजानां तु कुर्यादुदकतर्पणम्।
सुहृत्सम्बन्धिभूतानां ततः कुर्यात्तु तर्पणम्॥

तथा च भोजराजीये पितृक्रम उक्तः—

आदौ पिता ततो माता सापत्नजननी तथा।
मातामहाः सपत्नीकाः स्वपत्न्यस्तदनन्तरम्॥
सुतभ्रातृपितृव्याश्च मातुलाश्च सपत्निकाः।
दुहिता च स्वसा प्रोक्ता दौहित्रो भागिनेयकः॥
पितृष्वसा मातृष्वसा श्वशुरो गुरुरिक्थदौ।
एते स्युः पितरस्तीर्थे तर्पणे च महालये॥

पितेति पित्रादित्रयमित्यर्थः। रिक्थं धनम्। बहुपुराणाभिमतोऽयं क्रमः। याज्ञवल्क्यः—

सवर्णेभ्यो जलं देयं नासवर्णेभ्य एव च।
नामगोत्रस्वधाकारैस्तर्पयेदनुपूर्वशः॥

गोपीनाथीये—

ब्राह्मणस्त्वन्यवर्णान्सन्तर्प्य तज्जातितामियात्।
सवर्णेभ्यो जलं दद्यान्नान्येभ्यस्तु कदाचन॥
कामाल्लोभाद्भयान्मोहात्कृत्वा तज्जातितामियात्।
क्षत्रियाणां प्रकर्तव्यं तर्पणं तु पुरोहितैः॥ इत्यादि।

अतर्पणे प्रत्यवायमाह"अतर्पिता देहाद्रुधिरं पिबन्ती" ति सूत्रम्। पूर्वोक्ताः ब्रह्मादयः अतर्पिता सन्तः अतर्पयितुर्देहाच्छरीरात् रुधिरं रक्तं पिबन्ति शोषयन्ति। तर्पणाकरणप्रत्यवायेन देहाद्रक्तशोषो भवतीत्यर्थः। ब्रह्मवैवर्त्ते—

देवताश्च मुनींश्चैव पितॄन्यो नैव तर्पयेत्।
देवादीनामृणी भूत्वा नरकं स व्रजत्यधः॥ इति।

"अतर्पिता देहाद्रुधिरं पिबन्ती"ति निन्दार्थवादश्रवणान्नित्यत्वाच्च आवश्यकं कर्तव्यमिति । "वासो निष्पीड्याचम्ये"तिसूत्रम् । एव तर्पणं विधाय स्नानवस्त्रं निष्पीड्य तस्माज्जलं निष्काश्याचामेत् । योगी—

वस्त्रनिष्पीडनं तोयं श्राद्धे चोच्छिष्टभोजनम् ।
भागधेयं श्रुतिः प्राह तस्मान्निष्पीडयेत्स्थले ॥
जलमध्ये तु यः कश्चिद्ब्राह्मणो ज्ञानदुर्बलः ।
निष्पीडयति तद्वस्त्रं दक्षिणाभिमुखः स्थले ॥

पराशरः—

स्नानार्थमुपगच्छन्ति देवाः पितृगणैः सह ।
वायुभुता हि गच्छन्ति तृषार्त्ताः सलिलार्थिनः ॥
निराशास्ते निवर्त्तन्ते वस्त्रनिष्पीडने कृते ।
तस्मान्न पीडयेद्वस्त्रमकृत्वा पितृतर्पणम् ॥ इति ।
निष्पीडयति यः पूर्वं स्नानवस्त्रमतर्पिते ।
निराशाः पितरो यान्ति शापं दत्वा सुदारुणम् ॥

पराशरः—

न पूर्वं तर्पणाद्वस्त्रं न चाम्भसि न पादयोः ।
शिलास्वधोदशं नैव द्विगुणं त्रिगुणं न वा ॥
एतेषु पीडयेद्वस्त्रं राक्षसीं कुरुते क्रियाम् ॥

स्मृत्यन्तरात्—

त्रिगुणीकृतवस्त्रं न पीडनीयं विचक्षणैः ।
पीडनीयं चतुर्द्धा तु न चाधोदशमम्बुनि ॥ इत्यादि ।

विधानपारिजाते—

द्वादश्यां पञ्चदश्यां च सङ्क्रान्तौ श्राद्धवासरे ।
वस्त्रं निष्पीडयेन्नैव वस्त्रं क्षारेण योजयेत् ॥

अथ जलदेवतार्चनमाह—

"ब्राह्मवैष्णवरौद्रसावित्रमैत्रवारुणैस्तल्लिङ्गैर्मन्त्रैरर्चयेत् । ब्रह्मणोऽयं ब्राह्मः । विष्णोरयं वैष्णवः । रुद्रस्यायं रौद्रः । सवितुरयं सा-

वित्रः। मित्रस्यायं मैत्रः। वरुणस्यायं वारुणः। तल्लिङ्गैः तेषां ब्रह्मादीनां लिङ्गं प्रकाशनसामर्थ्यं तादृशैः मन्त्रैः तान् षोडशोपचारैः पञ्चोपचारैर्वा पृथक् पृथक् अर्चयेत् पूजयेत्। योगी—

ब्राह्मवैष्णवरौद्रैस्तु सावित्रैर्मैत्रवारुणैः।
तल्लिङ्गैरेव मन्त्रैस्तानर्चयेत्सुसमाहितः॥

स्मृतिसारे—

नैकं पुष्पं द्विधा कुर्यान्न भिन्द्यात्कलिकामपि।
भेदश्च कलिकुन्दानां समानो ब्रह्महत्यया॥

पुराणे—

अप्स्वग्नौ हृदये सूर्ये स्थण्डिले प्रतिमासु च।
षट्स्वेतेषु हरेः सम्यगर्चनं मुनिभिः स्मृतम्॥
अग्नौ क्रियावतां देवो हृदि देवो मनीषिणाम्।
प्रतिमास्वल्पबुद्धीनां योगिनां हृदये हरिः॥

"अदृश्रꣳहꣳसऽइत्यादित्यमुपस्थाय प्रदक्षिणीकृत्य दिशश्च देवताश्च नमस्कृत्योपविशेत्"इति सूत्रम्।

"अदृश्रमस्य केतवो०, हꣳसः शुचिषत्"। इति द्वाभ्यां ऋग्भ्यां आदित्यं सूर्यं उपस्थाय प्रदक्षिणीकृत्य दक्षिणेनावृत्य दिशः प्राच्यादयः देवताश्च सन्निधानात्तासामेवाधिपतयः इन्द्रादयः तानपि मन्त्रान्तरानभिधानात् चतुर्थ्यन्तैः नाममन्त्रैरेव नमस्कृत्य तत उपविशेत्। तथा च योगी—

ततोऽवलोकयेदर्कं हꣳसः शुचिषदृचा।
स याति ब्रह्मणः सद्म स्नात्वेच्छेद्योऽनया अपि॥
ततश्चापो नमस्कुर्याद्दिग्दिक्पालाष्टदेवताः॥ इति।

पाठक्रमेण ब्रह्मादिभ्यो जलदानपूर्वकं नमेदित्यर्थः। नम इति सर्वत्रानुषङ्गः कार्यः। ततः किं कुर्यादित्याह "सं वर्चसेति मुखं विमृष्टे देवा गातुविद ऽइति विसर्जयेत्" इति सूत्रम्। "सं वर्चसे"ति मन्त्रेणाञ्जलिना जलमादाय मुखं आस्यं विमृष्टे शोधयति। "देवा गा-

तुविद्" इति मन्त्रेण कर्माङ्गभूतान्देवान् संहारमुद्रया विसर्जयेत् स्वस्थानं गमयेत् । तथा च शिवः—

अधोमुखे वामहस्तेऽनुत्तानं दक्षहस्तकम् ।
क्षिप्ताङ्गुलीरङ्गुलिभिः संयोज्य परिवर्तयेत् ॥
एषा संहारमुद्रा स्याद्विसर्जनविधौ मता ॥ इति ।

"एष स्नानविधिरेष स्नानविधिः" इति सूत्रम् । एषः पूर्वोक्तः स्नानविधिः नित्यस्नानेतिकर्तव्यता । समाप्तिज्ञापनार्था द्विरुक्तिः । हरिहरमिश्रैः प्रातःसन्ध्यावन्दनानन्तरं तर्पणमुक्तम् । तेषामयं ग्रन्थः "एवं तु तर्पणं प्रातःस्नानानन्तरं कार्यम् । तदा न कृतं चेन्मध्याह्नस्नानानन्तरं कार्यम् । मध्याह्ने मन्त्रैः स्नानं न कृतं चेत्तदाऽपराह्णादिषु स्नानं कृत्वा कार्यम् । "पूर्वाह्णो वै देवानां मध्यन्दिनो मनुष्याणां अपराह्णः पितॄणा"मिति श्रुतिस्तर्पणव्यतिरिक्तविषया" । प्रातश्चैवं कृते तर्पणे मध्याह्नादिषु न कर्तव्यमेव । स्नानाङ्गतर्पणं तु बुधैः स्नानानन्तरं कार्यम् ।

प्रातः सध्यां समासाद्य द्विजस्तर्पणमाचरेत् ।
तत्र चेन्न कृतं तत्तु मध्यस्नानोत्तरं भवेत् ॥

कारिकायामिति । मध्यस्नानं मध्याह्नस्नानम् । गोपीनाथप्रभृतिभिस्तु मध्याह्नसन्ध्योत्तरकाले तर्पणमुक्तम् ।

इति श्रीप्रथमशाखीयरामकृष्णविरचिते पारस्करगृह्यसूत्रविवरणे संस्कारगणपतौ कातीयत्रिकण्डिकासूत्रोक्तस्नानसन्ध्यातर्पणविधिः ॥

अथ श्राद्धाङ्गतर्पणे विशेषः । प्रयोगपारिजाते—

दर्शे तिलोदकं पूर्वं पश्चाद्द्यान्महालये ।
मातापित्रोः क्षये पूर्वं न पश्चात्तु परेऽहनि ॥
वर्गैकस्य क्षयो येषामन्येषां तु विवर्जयेत् ॥

वृद्धशातातपः—

पूर्वं तिलोदकं दत्वा ह्यामश्राद्धं समाचरेत् ।
प्रत्यब्दे न भवेत्पूर्वं परेऽहनि तिलोदकम् ॥

हारीतोऽपि क्षयाहं प्रकृत्याह—

तत: परेऽह्नि कुर्वीत तर्पणं पुरुष: सुधी: ।
तच्छेषैस्तिलदर्भैस्तु प्रात: स्नात्वा सुधासमम् ॥

गार्ग्य:—

परेद्युः श्राद्धकृन्मर्त्यो यो न तर्पयते पितृन् ।
अतृप्ताः पितरस्तस्य शापं दत्वा व्रजन्ति ते ॥
स्नात्वा तीरं समासाद्य उपविश्य कुशासने ।
सन्तर्पयेत्पितृन्पूर्वान्स्नात्वा वस्त्रं च धारयेत् ॥

इदन्तु श्राद्धदेवताभूतपितृविषयम् । तेन नित्यतर्पणं बहुदैवत्यं श्राद्धदिने यथाकालं भवत्येव । अत एव--

निषिद्धेऽपि दिने कुर्यात्क्षयाहे तिलतर्पणम् ॥

इति वचनं युज्यते नित्यतर्पणविषयत्वेन । अन्यथा क्षयाहे तर्पणमेव नास्तीति कुत्र प्रतिप्रसवः स्यादिति, उक्तं प्रयोगरत्ने नारायणभट्टैः । महालयश्राद्धे तु देवर्षिपितृतर्पणं कृत्वा श्राद्धं कुर्यात् । श्राद्धानन्तरं तु श्राद्धदेवताभूतपितृतर्पणमेव तर्पयेत् । क्षयाहे तु नित्यतर्पणं पूर्वमेव कार्यम्, श्राद्धाङ्गभूततर्पणं द्वितीयदिने सन्धावन्दनात्पूर्वमेव कार्यम्, शिष्टाचारात् । तथा विधानपारिजाते--

पक्षश्राद्धन्तु निर्वर्त्य तर्पणं स्याद्दिने दिने ।
सकृन्महालये दद्यात्परेऽहनि तिलोदकम् ॥
जीवमानः पिता यस्य माता यदि विपद्यते ।
मातुः श्राद्धं सुतः कुर्यान्न कुर्याच्छ्राद्धतर्पणम् ॥ इति संग्रहे ।

श्राद्धाङ्गतर्पणमित्यर्थः । वृद्धिश्राद्धादौ तु नास्त्येव--

वृद्धिश्राद्धे सपिण्डे च प्रेतश्राद्धे तथैव च ।
मासानुमासिकश्राद्धे न कुर्यात्तिलतर्पणम् ॥ इति गर्गोक्तेः ।

तीर्थप्राप्तौ तु स्वशाखोक्तं तर्पणं कृत्वा "देवा यक्षास्तथा नागा" इत्यादिपुराणोक्तमन्त्रैः देवान्सन्तर्प्य "सनकः सनन्दन"श्चेति ऋषीन्सन्तर्प्य "अग्निष्वात्तास्तथा सौम्या" इति पितृतर्पणं च कुर्यादिति त्रि-

स्थलीसेतौ उक्तम् । अथ यमतर्पणन्तु काम्यं दिनविशेष एव । तथा च वृद्धमनुः—

यां काञ्चित्सरितं प्राप्य कृष्णपक्षे चतुर्दशी ।
यमुनां तु विशेषेण नियतो नियतेन्द्रियः ॥
यमाय धर्मराजाय मृत्यवे चान्तकाय च ।
वैवस्वताय कालाय सर्वभूतक्षयाय च ॥
औदुम्बराय दध्नाय नीलाय परमेष्ठिने ।
वृकोदराय चित्राय चित्रगुप्ताय वै नमः ॥
इत्येतैर्नाममन्त्रैस्तु प्रणवादिनमोऽन्तकैः ।
तर्पयित्वा यमं देवं सर्वपापैः प्रमुच्यते ॥

स्कान्दे तु—

कृष्णपक्षे त्रयोदश्यामङ्गारकदिनं यदि ।
तदा स्नात्वा शुभे तोये तर्पयेद्यमनामभिः ॥

इत्युक्तं यमतर्पणं वाजसनेयिनां नित्यम्, न तु काम्यम्, तत्सूत्रे नित्यत्वेन बोधनात् । इति यमतर्पणम् ।

अथ भीष्मतर्पणन्तु—कार्तिकशुक्लैकादशीप्रभृतिपञ्चसु माघशुक्लेऽष्टम्यादिषु च । इदं भीष्मतर्पणं जीवत्पितृकेणापि कर्तव्यम् । तथा च पाद्मे—

जीवत्पितृकोऽपि कुर्वीत तर्पणं यमभीष्मयोः ॥ इति ।

तत्र मन्त्रः—

वैय्याघ्रपादगोत्राय साङ्कृत्यप्रवराय च ।
गङ्गापुत्राय भीष्माय प्रदास्येऽहं तिलोदकम् ॥
अपुत्राय ददाम्येतज्जलं भीष्माय तर्पणम् ॥

इति भीष्मतर्पणम् । कालातिक्रमे तु—

न कृतानि प्रमादाच्चेत्प्रातःकर्माणि यानि च ।
रात्रावपि तु कार्याणि विना शौचं च तर्पणम् ॥

अन्यच्च—

दिवोदिताः क्रियाः कार्या रात्रावपि यथाक्रमम् ।
विना सौरं चावगाहं ब्रह्मयज्ञञ्च तर्पणम् ॥

केचिद्रात्रावपि ब्रह्मयज्ञमिच्छन्ति। "ग्रामे मनसा स्वाध्याय-मधीयीत दिवा नक्तञ्चे"त्यापस्तम्बविषयम्। तथा च—

आचार्याः केचिदिच्छन्ति रात्रावपि हि तर्पणम्।
तद्यजुःशाखिनामेव नान्येषान्तु विधीयते॥

तत्तु रात्रौ यामपर्यन्तम्। तथा च धर्मप्रवृत्तौ—

रात्रौ प्रहरपर्यन्तं दिवा कर्माणि कारयेत्।
अवगाहं च सौरञ्च ब्रह्मयज्ञं च वर्जयेत्॥

अथ गृहस्नानं चतुर्विंशतिमतात्—

आपः स्वभावतो मेध्याः किं पुनर्वह्नितापिताः।
अतः सन्तः प्रशंसन्ति स्नानमुष्णोदवारिणा॥

यमः—

आप एव सदा पूज्यास्तासां वह्निर्विशेषतः।
अतः सर्वेषु कालेषु उष्णापः पावनं स्मृतम्॥
पादौ प्रक्षालयेत्पूर्वं मुखं यज्ञोपवीतकम्।
द्विराचम्य कराभ्यान्तु धृत्वा दर्भान् शिखां स्पृशेत्॥
प्राणायामं ततः कृत्वा कालज्ञानं यथोदितम्।
पूर्वोत्तरामुखो भूत्वा इत्थं स्नानं समाचरेत्॥
( इति संस्कारगणपतौ स्नानसन्ध्याविधिः॥ )

"इषेत्वे"त्यादि "खं ब्रह्मे"त्यन्तमन्त्राणां विवस्वान् ऋषिः सर्वाणि यजूंषि सर्वाणि च्छन्दांसि प्रजापतिर्देवता स्नानादिसर्वकर्मसु विनियोगः" इति ऋष्यादिकं छात्रैः पठेत्—

अविदित्वा तु यः कुर्याद्यजनाध्यापने ततः।
होममन्तर्जलादीनि तस्य चाल्पफलं भवेत्॥

इति वचनात्। अविदित्वा आर्षादिकमित्यर्थः। प्रतिमन्त्रं चार्षादिकं पठनीयमिति।

अथ प्रयोगः। तत्रादौ स्नानोपकरणाहरणम्। ततो नद्यादेर्जल-समीपगमनम्। तत्र प्रक्षालितदेशे स्नानोपकरणस्थापनम्। मृज्जलाभ्यां

पादौ प्रक्षाल्य पाण्योः प्रक्षालनम् । कुशोपग्रहपवित्रधारणम् । गायत्र्या "मा नस्तोक"इति मन्त्रेण वा शिखैकदेशबन्धनम् । तूष्णीं जूटिकाबन्धनं च । "मानस्तोक इति मन्त्रस्य कुत्सऽऋषिर्जगतीच्छन्दः एकरुद्रो देवता शिखाबन्धने विनियोगः । ॐ मा नस्तोके० हवामहे"

ऊर्द्ध्वकेशि ! विरूपाक्षि ! मांसशोणितभोजने! ।
तिष्ठ देवि ! शिखामध्ये चामुण्डे ! चापराजिते! ॥

इति पक्षान्तरे । ततो यज्ञोपवीतप्रक्षालनम् । आचमनं प्राणायामत्रयं कालज्ञानम् । तद्यथा "अत्र पृथिव्यां जम्बूद्वीपे भारतवर्षेऽमुकक्षेत्रेऽमुकस्मिन् देशे अद्य श्रीब्रह्मणो द्वितीये परार्द्धे श्वेतवाराहकल्पे वैवस्वतमन्वन्तरे कलियुगे प्रथमचरणेऽमुकवत्सरेऽमुकायनेऽमुकर्तौ अमुकमासे अमुकपक्षे अमुकतिथावमुकनक्षत्रेऽमुकवासरेऽमुकयोगेऽमुकमुहूर्त्ते नित्यस्नानमहं करिष्ये" इति कालज्ञानम् । "उरुᳪ हीत्यस्य शुनःशेपर्षिः त्रिष्टुप्छन्दः वरुणो देवता तोयाभिमन्त्रणे विनियोगः । "ॐउरुᳪहि०"ति तोयाभिमन्त्रणम् । "ये ते शतं विश्वामित्र ऋषिः त्रिष्टुप्छन्दः वरुणो देवता तोयावर्त्तने विनियोगः । ॐ ये ते शतं वरुण ये सहस्रं यज्ञियाः पाशा वितता महान्तः। तेभिर्नोऽअद्य सवितोत विष्णुर्व्विश्वे मुञ्चन्तु मरुतः स्वर्काः स्वाहे"ति हस्तेन तोयावर्त्तनम् । "सुमित्रिया दुर्मित्रिया द्वे यजुषी प्रजापतिर्ऋषिः आपो देवताः आद्यस्य जलाञ्जलिग्रहणे द्वितीयस्य द्वेष्यं प्रत्यपां निषिञ्चने विनियोगः । "ॐसुमि० सन्त्वि"ति जलाञ्जलिं गृहीत्वा "ॐदुर्म्मि० द्विष्म"इत्यनेन द्वेष्यं प्रति निषिञ्चेत् । ततो मृदन्त्रेधा विभज्यैकं भागमादाय मृज्जलाभ्यां कट्यादीनां त्रिस्त्रिः प्रक्षालनम् । आचमनम् "उदकाय नमः" इति तीर्थोदकनमस्कारः । "इदं विष्णुरिति मेधातिथिर्ऋषिः गायत्रीच्छन्दो विष्णुर्देवता मृदाऽऽलम्भने विनियोगः । ॐइदं वि०सुरे" इति मृदाऽऽलम्भनम् । ततः शनैर्नाभिमात्रं जलं प्रविश्य केशान्द्विधा कृत्वा कर्णौ नासां च निरुद्ध्य । "आपोऽअस्मा"निति सूर्याभिमुखो मज्जेत् । "आपोऽअस्मानिति हवि-

र्द्धानऽऋषिः त्रिष्टुप् छन्दः आपो देवता मज्जने विनियोगः। ॐआ-
पोऽअस्मा० देवीः। उदिदाभ्यऽइति प्रजापतिर्ऋषिः यजुश्छन्दः
आपो देवताः अप्सु मज्जने विनियोगः। ॐउदिदाभ्यः० एमि"
इत्युन्मज्जनं पुनस्तूष्णीं निमज्ज्योन्मज्जनम्। आचमनम्। "मानस्तोक
इति कुत्सऽऋषिः जगतीच्छन्दः एकरुद्रो देवता गोमयेनाङ्गविलेपने
वि०। ॐमा न० हवामहे" इति गोमयेनाङ्गविलेपनम्। उदकोपस्पर्शनम्।
"इमं मे तत्वा यामीत्यनयोः शुनःशेपऽऋषिः आद्याया गायत्रीच्छन्दः
द्वितीयायास्त्रिष्टुप् छन्दः वरुणो देवता, त्वन्नोऽअग्ने सत्वन्नोऽअग्नऽइत्य-
नयोर्वामदेवऽऋषिः त्रिष्टुपछन्दः अग्नीवरुणौ देवते, माप इति प्रजा
पतिर्ऋषिः यजुः हृदयशूलं देवता, धाम्नोधाम्नऽइति प्रजापतिर्ऋषिः
अनवसाना गायत्री वरुणो देवता, उदुत्तमं शुनःशेपऽ ऋषिः त्रिष्टु-
पूछन्दः वरुणो देवता, मुञ्चन्त्विति आथर्वणो भिषक् अनुष्टुप्
ओषधयो देवताः, अवभृथेति प्रजापतिः यजुः यज्ञो देवता सर्वेषा-
मभिषिञ्चने विनियोगः। ॐइमम्मे०चके। तत्वा० मोषीः। त्वन्नो०
ध्यस्मत्। स त्वन्नो०एधि। मापो० यदा० मुञ्च। इदुत्तमं० स्याम।
मुञ्चन्तु मा०किल्विषात्। अवभृ० स्पाहि" इत्यष्टाभिर्मन्त्रैरञ्जलिना मस्त
के जलं प्रक्षिपेत। ततस्तूष्णीं निमज्ज्योन्मज्ज्याचम्य सोदकैर्दर्भैः पावयेत्।
"प्रणवस्य ब्रह्मर्षिर्गायत्रीच्छन्दः परमात्मा देवता, व्याहृतीनां
प्रजापतिर्ऋषिर्गायत्र्युष्णिगनुष्टुप्छन्दांसि अग्निवायुसूर्याः, गायत्री
मन्त्रस्य विश्वामित्रऽऋषिः गायत्रीच्छन्दः सविता, आपो हि ष्ठेति
तृचस्य सिन्धुद्वीप ऋषिः गायत्रीच्छन्दऽआपो देवता, इदमापः
प्रजापतिर्ऋषिः अनुष्टुप्छन्दः आपो, हविष्मतीरिति प्रजापति-
र्ऋषिः अनुष्टुप्छन्दः आपो यजमानोऽध्वरः सूर्यश्च दे०, देवीराप
इति द्वयोः प्रजापतिः पङ्क्तिः आद्यस्यापो द्वितीयस्याज्यं, अपो
देवा वरुणः त्रिष्टुबग्नेः, द्रुपदादिवेति प्रजापत्यश्विसरस्वत्य ऋषयः
अनुष्टु० आपो; शन्नो देवीरिति दध्यङ्ङाथर्वणः गायत्री शनिः०,
अपांꣳरसमिति बृहस्पतिरिन्द्रश्च० अनुष्टुप्छन्दो रसो०, अपो देवी

रुपसृजेति सिन्धुद्वीपः न्यङ्कुसारिणी बृहती आपो०, पुनन्तु मेति द्वयोः प्रजापत्याग्निसरस्वत्यः, अत्र पितरो अग्न आयूंषि वैखानसः गायत्री अग्निः, पुनन्तु मा देव प्रजापत्यग्निसरस्वत्यः अनुष्टुप् देवजना धीश्च भूतानि जातवेदाश्च दे०, पवित्रेणेत्यादीनां चतुर्णां प्रजापत्यग्निसरस्वत्यः, पञ्चम्या गायत्री० अग्निर्दे०, षष्ठ्या गायत्री अग्निर्ब्रह्म च, सप्तम्या गायत्री सोमो, अष्टम्या गायत्री सविता देवता, चित्पतिर्मा वाक्पतिर्मा देवो मेति त्रयाणां प्रजापतिः यजूंषि आद्ययोः प्रजापतिर्दे० तृतीयस्य सविता, सर्वेषां पावने विनियोगः। एभिः पावयित्वा पुनरोङ्कारेण व्याहृतिभिर्गायत्र्या च पावयेत्। तत्रैवं प्रयोगः "ॐ भूः पुनातु। ॐ भुवः पुनातु। ॐ स्वः पुनातु। ॐ तत्स० यात् सर्वं पुनातु। आपो०क्षसे। यो वः०तरः। तस्मा० च नः। इदमापः० हसः। मुञ्चन्तु०पात्" एवं क्रमेण पावयित्वा तत्कुशान्परित्यज्य, ततः पुनः "इमं मे वरुणे"त्यष्टभिरञ्जलिनाऽभिषिञ्चेत्। ततोऽघमर्षणं "ऋतञ्च सत्यञ्चेत्यघमर्षण ऋषिः अनुष्टुप्छन्दः भावभृत्तो देवता अन्तर्जले जपे वि०"। अथवा द्रुपदादिवेति प्रजापत्यग्निसरस्वत्यः आपो दे० अन्तर्जले जपे०"। अथवा "आयङ्गौरित्यस्य सार्पराज्ञीति ऋषिः गायत्री अग्निर्दे० अन्तर्जले जपे वि०" प्राणायामं वा त्रिरावर्त्तयेत्। विष्णोः स्मरणं वा कुर्यात्। ततस्तूष्णीं त्रिर्मज्जनम्। स्नानाङ्गतर्पणम्—आश्वलायनः—

स्नानाङ्गतर्पणं कृत्वा यक्ष्मणे जलमाहरेत्।
"यन्मया दूषितं तोयं मलैः शारीरसम्भवैः॥
तस्य पापस्य शुद्ध्यर्थं यक्ष्मैतत्ते तिलोदकम्"॥ इति।

ॐ ब्रह्मादयो देवास्तृप्यन्ताम्। ॐ भूर्देवास्तृप्यन्ताम्। ॐ भुवर्देवास्तृप्यन्ताम्। ॐ स्वर्देवास्तृप्यन्ताम्। ॐ भूर्भुवः स्वर्देवास्तृप्यन्ताम्"। यज्ञोपवीतं कण्ठे कृत्वा "ॐ सनकादिकद्वैपायनादयो ऋषयस्तृप्यन्ताम्। ॐ भूः ऋषयस्तृप्यन्ताम्। ॐ भुवः ऋषयस्तृप्यन्ताम्। ॐ स्वः ऋषयस्तृप्यन्ताम्। ॐ भूर्भुवः स्वः

ऋषयस्तृप्यन्ताम्"। अथापसव्यम्। "ॐ कव्यवाडनलादय-स्तृप्यन्ताम्। ॐ भूः पितरस्तृप्यन्ताम्। ॐ भुवः पितरस्तृप्य-न्ताम्। ॐ स्वः पितरस्तृप्यन्ताम्। ॐ भूर्भुवः स्वः पितरस्तृप्य-न्ताम्।" सव्यम्। आचमनं कुर्युः।

"यन्मया दूषितं तोयं शारीरमलसम्भवम्।
तस्य पापस्य शुद्ध्यर्थं यक्ष्मैतत्ते तिलोदकम्॥"

इत्यनेन अञ्जलिना जलं स्थले क्षिपेत्।

"लतागुल्मेषु वृक्षेषु पितरो ये व्यवस्थिताः।
ते सर्वे तृप्तिमायान्तु मयोत्सृष्टैः शिखोदकैः॥"

इत्यनेन शिखोदकं बहिः क्षिपेत्। इति स्नानविधिः। ततो ज-लाद्बहिर्निर्गमनम्। वस्त्रपरिधानम्। मृदाद्भिश्चोरू करौ प्रक्षाल्य ललाटे यथाविधि तिलककरणम्। पवित्रोपग्रहः। आचमनम्। "केशव, ना-रायण, माधव, गोविन्द, विष्णु, मधुसूदन, त्रिविक्रम, वामन, श्रीधर, हृषीकेश, पद्मनाभ, दामोदर, सङ्कर्षण, वासुदेव, प्रद्युम्न, अनिरुद्ध, पुरुषोत्तम, अधोक्षज, नृसिंह, अच्युत, जनार्दन, उपे-न्द्र, हरि, कृष्णाय नमः। मनो मनः। वाक् वाक्। प्राणः प्राणः। चक्षुश्चक्षुः। श्रोत्रं श्रोत्रम्। नाभिः। हृदयम्। कण्ठः। शिरः। शिखा। बाहुभ्यां यशोबलम्।

अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा।
यः स्मरेत्पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः॥

ममोपात्तदुरितक्षयार्थं ब्रह्मावाप्त्यै प्रातः सन्ध्योपासनमहं करिष्ये। ॐकारस्य ब्रह्माऋषिः गायत्रीच्छन्दः अग्निर्देवता सर्वकर्मारम्भे विनियोगः। ॐ पृथिव्या मेरुपृष्ठ ऋषिः कूर्मो देवता सुतलं छन्दः आसनोपवेशने विनियोगः।

पृथ्वि! त्वया धृता लोका देवि! त्वं विष्णुना धृता।
त्वं च धारय मां देवि! पवित्रं चासनं कुरु"॥

गायत्र्या वामजूटिकाबन्धनम् । दक्षिणजूटिकाबन्धने मन्त्रः—

"ऊर्ध्वकेशि ! विरूपाक्षि ! मांसशोणितभोजने ! ।
तिष्ठ देवि ! शिखामध्ये चामुण्डे ! चापराजिते ! ॥"

अथाभिषेकः । "ॐ भूः पुनातु । ॐ भुवः पुनातु । ॐ स्वः पुनातु । ॐ महः पुनातु । ॐ जनः पुनातु । ॐ तपः पुनातु । ॐ सत्यं पुनातु । ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् ॐ सर्वं पुनातु" । अथ न्यासाः । "ॐ भूः अङ्गुष्ठाभ्यां नमः । ॐ भुवः तर्जनीभ्यां नमः । ॐ स्वः मध्यमाभ्यां० । ॐ तत्सवितुर्वरेण्यं अनामिकाभ्यां० । ॐ भर्गो देवस्य धीमहि कनिष्ठिकाभ्यां नमः । ॐ धियो योनः प्रचोदयात् करतलकरपृष्ठाभ्यां नमः । ॐ भूः हृदयाय नमः । ॐ भुवः शिरसे स्वाहा । ॐ स्वः शिखायै वषट् । ॐ तत्सवितुर्वरेण्यं कवचाय हुम् । ॐ भर्गो देवस्य धीमहि नेत्रत्रयाय वौषट् । ॐ धियो यो नः प्रचोदयात् अस्त्राय फट् ।" अथावाहनम्—

"गायत्रीं त्र्यक्षरां बालां साक्षसूत्रकमण्डलुम् ।
रक्तवस्त्रां चतुर्वक्त्रां हंसवाहनसंस्थिताम् ॥
ऋग्वेदेन कृतात्सङ्गां दिव्याभरणभूषिताम् ।
ब्रह्माणीं ब्रह्मदैवत्यां ब्रह्मलोकनिवासिनीम् ॥
आवाहयाम्यहं देवीमायान्तीं सूर्यमण्डलात् ।
आगच्छ वरदे ! देवि ! त्र्यक्षरे ! ब्रह्मवादिनि ! ॥
गायत्रि ! च्छन्दसां मातर्ब्रह्मयोनिर्नमोऽस्तु ते ॥"

अथ प्राणायामः । "प्रणवस्य परब्रह्म ऋषिः दैवीगायत्रीच्छन्दः परमात्मा देवता सप्तव्याहृतीनां विश्वामित्रजमदग्निभरद्वाजगौतमात्रिवसिष्ठकश्यपा ऋषयः अनुष्टुप्छन्दः अग्निवायुसूर्या देवताः तत्सवितुरित्यस्य विश्वामित्र ऋषिः गायत्रीच्छन्दः सूर्यो देवता, आपोज्योतिरिति परमेष्ठी ऋषिः अनुष्टुप्छन्दः प्रजापतिर्देवता सर्वेषां प्राणायामे विनियोगः । ॐ नमो भगवते वासु

देवाय"। आत्मनः समन्तात्प्रदक्षिणमुदकं प्रक्षिप्य "ॐ भूः ॐ भुवः ॐ स्वः ॐ महः ॐ जनः ॐ तपः ॐ सत्यं ॐ तत्सवितु० प्रचोदयात्। आपो ज्योती रसोऽमृतं ब्रह्म भूर्भुवः स्वरोम्"। एवं त्रिः। अथाचमनम्। "सूर्यश्च मेति नारायण ऋषिः अनुष्टुप्छन्दः परमात्मा देवता आचमने विनियोगः। ॐ सूर्यश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः पापेभ्यो रक्षन्ताम्। यद्रात्र्या पापमकार्षं मनसा वाचा हस्ताभ्याम्। पद्भ्यामुदरेण शिश्ना रात्रिस्तदवलुम्पतु यत्किञ्च दुरितं मयि इदमहं माममृतयोनौ सूर्ये ज्योतिषि जुहोमि स्वाहा" ततो द्विराचमनम्। अथ मार्जनम्। "आपो हि ष्ठेति तिसृणां सिन्धुद्वीप ऋषिः गायत्रीच्छन्दः आपो देवता मार्जने विनियोगः। ॐ आपो हि ष्ठा मयोभुवः" पादयोः। "ॐ ता न ऊर्जे दधातन" मस्तके। "ॐ महे रणाय चक्षसे" हृदि। "ॐ यो वः शिवतमो रसः" हृदि। "ॐ तस्य भाजयतेह नः" पादयोः। "ॐ उशतीरिव मातरः" मस्तके। "ॐ तस्मा अरङ्गमाम वः" मस्तके। "ॐ यस्य क्षयाय जिन्वथ" हृदि। "ॐ आपो जनयथा च नः" पादयोः। "सुमित्रिया दुर्मित्रिया इति द्वयोः प्रजापतिर्ऋषिः यजुश्छन्दः आपो देवता जलादानक्षेपयोर्विनियोगः। ॐसुमित्रिया न ऽआप ओषधयः सन्तु" जलं गृहीत्वा "ॐदुर्मित्रियास्तस्मै सन्तु योऽस्मान्द्वेष्टि यञ्च वयन्द्विष्मः" जलं त्यजेत्। "द्रुपदादिवेति कोकिलराजपुत्र ऋषिः अनुष्टुप्छन्दः आपो देवता अघमर्षणे विनियोगः। ॐ द्रुपदादिव मुमुचानः स्विन्नः स्नातो मलादिव। पूतं पवित्रेणेवाज्यमापः शुन्धन्तु मैनसः।" इत्यनेन जलमाघ्राय त्यजेत्। "ऋतञ्चेत्यस्याघमर्षण ऋषिः अनुष्टुप्छन्दः भाववृत्तो देवता अघमर्षणे विनियोगः। ॐ ऋतञ्च सत्यञ्चाभीद्धात्तपसोऽध्यजायत। ततो रात्र्यजायत। ततः समुद्रो अर्णवः। समुद्रादर्णवादधि संवत्सरो अजायत। अहोरात्राणि विदधद्विश्वस्य मिषतो वशी। सूर्याचन्द्रमसौ धाता यथा पूर्वमकल्पयत्। दिवञ्च

पृथिवीञ्चान्तरिक्षमथो स्वः" । अथार्घ्यदानम् । ॐकारस्य ब्रह्मा ऋषिर्गायत्रीच्छन्दः परमात्मा देवता भूर्भुवःस्वरिति तिसृणां प्रजापतिर्ऋषिः गायत्र्युष्णिगनुष्टुप्छन्दांसि अग्निर्वायुः सूर्यो देवताः तत्सवितुरिति विश्वामित्र ऋषिः गायत्रीच्छन्दः सविता देवता सूर्यार्घ्यदाने विनियोगः । ॐ भूर्भुवः स्वः ॐ तत्स० प्रचोदया"दिति सूर्याभिमुखो भूत्वा तिष्ठन् सपुष्प जलं प्रक्षिपेत् । एवं त्रिः ।

"निर्गच्छ देवि ! शीघ्रन्त्वं गायत्रि ! शक्तिरूपिणि ! ।
इदमर्घ्यं मया दत्तं दुष्टदैत्यवधं कुरु ॥"

इति मन्त्रेण चतुर्थार्घः । ततः—

"आगच्छ देवि ! शीघ्रन्त्वं गायत्रि ! ब्रह्मरूपिणि ! ।
जपानुष्ठानसिद्ध्यर्थं प्रविश्य हृदयं मम ॥

ॐअसावादित्यो ब्रह्म" इति आत्मनः प्रदक्षिणी कृत्याचम्य । अथ सूर्योपस्थानम् । "उद्वयमित्यस्य हिरण्यस्तूप ऋषिः गायत्रीच्छन्दः सूर्यो देवता उदुत्यमिति प्रस्कण्व ऋषिः गायत्रीच्छन्दः सूर्यो देवता चित्रमित्यस्य कौत्स ऋषिः त्रिष्टुप्छन्दः सूर्यो देवता तच्चक्षुरित्यस्य दध्यङ्ङाथर्वण ऋषिः पुरउष्णिक् छन्दः सूर्यो देवता सूर्योपस्थाने विनियोगः । ॐ उद्वयन्तमसस्परि स्वः पश्यन्तऽउत्तरम् । देवन्देवत्रा सूर्यमगन्म ज्ज्योतिरुत्तमम् ॥ उदुत्यञ्जातवेदसं देवं वहन्ति केतवः । दृशे व्विश्वाय सूर्यम् ॥ चित्रन्देवानामुदगादनीकञ्चक्षुर्म्मित्रस्य व्वरुणस्याग्नेः । आप्रा द्यावापृथिवी ऽअन्तरिक्षꣳ सूर्य आत्मा जगतस्तस्थुषश्च ॥ तच्चक्षुर्देवहितम्पुरस्ताच्छुक्रमुच्चरत् । पश्येम शरदः शतञ्जीवेम शरदः शतꣳ शृणुयाम शरदः शतम्प्रब्रवाम शरदः शतमदीनाः स्याम शरदः शतम्भूयश्च शरदः शतात्" इत्युपस्थाय "गायत्र्या गायत्रीच्छन्दो विश्वामित्र ऋषिः सविता देवता अग्निर्मुखं ब्रह्मा शिरः विष्णुर्हृदयं रुद्रः कवचं परमात्मा शरीर श्वेतवर्णा सांख्यायनसगोत्रा सांख्यायनकात्या-

यनगार्ग्यायणेति त्रिप्रवरा पद्स्वरा सरस्वती जिह्वा पिङ्गाक्षी पृथ्वी नाभिः दिशः कुक्षी पातालचरणौ चन्द्रसूर्यौ चक्षुषी श्रुतिः कर्णौ त्रिपदा गायत्री अशेषपापक्षयार्थं गायत्रीजपे विनियोगः"। अथ मुद्राः—

"सुमुखं १ सम्पुटं चैव २ विततं ३ विस्तृतं तथा ४।
द्विमुखं ५ त्रिमुखं चैव ६ चतुः ७ पञ्चमुखं ८ तथा॥
षण्मुखा ९ धोमुखं चैव १० व्यापकाञ्जलिकं ११ तथा।
शकटं १२ यमपाशं च १३ ग्रन्थितं १४ चोन्मुखोन्मुखम् १५॥
प्रलम्बं१६ मुष्टिकं१७ चैव मत्स्यः१८ कूर्मो१९ वराहकम्२०।
सिंहाक्रान्तं२१ महाक्रान्तं२२ मुद्गरं२३ पल्लवं तथा२४॥
एता मुद्रा न जानाति गायत्री निष्फला भवेत्।
एता मुद्रा विजानाति गायत्री सफला भवेत्॥"

अथ ध्यानम्—

"मुक्ताविद्रुमहेमनीलधवलच्छायैर्मुखैस्त्रयक्षैर्-
युक्तामिन्दुनिबद्धरत्नमुकुटां तत्त्वार्थवर्णात्मिकाम्।
गायत्रीं वरदाभयाङ्कुशकशाः शुभ्रं कपालं गुणं
शङ्खं चक्रमथारविन्दयुगलं हस्तैर्वहन्तीं भजे॥"

अत्र गायत्रीजपः। अष्टोत्तरसहस्रं १००८ अष्टोत्तरशतं वा १०८ अष्टाविंशतिर्वा २८। जपानन्तरं अष्टौ मुद्राः प्रदर्श्य।

"सुरभि १ र्ज्ञानं २ योनिश्च ३ मत्स्यः ४ कूर्मो ५ ऽथ पङ्कजम् ६।
लिङ्गं ७ निर्वापणं चैव ८ अष्ट मुद्राः प्रकीर्तिताः॥

ॐ देवा गातुविदो गातुं वित्त्वा गातुमित। मनसस्पत इमन्देव यज्ञꣳ स्वाहा व्वाते धाः" इतिमन्त्रं पठित्वा "अष्टोत्तरशतसंख्याकेन गायत्रीजपेन श्रीसूर्यनारायणः प्रीयताम्। विश्वतश्चक्षुरिति विश्वकर्मा भौवन ऋषिः त्रिष्टुप्छन्दः विश्वकर्मा देवता सूर्यप्रदक्षिणे विनियोगः। ॐ विश्वतश्चक्षुरुत विश्वतो मुखो विश्वतोबाहुरुत विश्वतस्पात्। सम्बाहुभ्यां धमति सम्पतत्रैर्द्यावाभूमी जनयन्देव ऽएकः"॥

इति प्रदक्षिणीकृत्य—

"एकं चक्रं रथे यस्य दिव्यः कनकभूषितः।
स मे भवतु सुप्रीतः पद्महस्तो दिवाकरः॥"

अथ विसर्जनम्—

"उत्तमे शिखरे जाता भूम्यां पर्वतमूर्द्धनि।
ब्राह्मणेभ्योऽभ्यनुज्ञाता गच्छ देवि! यथासुखम्॥
आकाशात्पतितं तोयं यथा गच्छति सागरम्।
सर्वदेवनमस्कारः केशवं प्रति गच्छति॥

ॐप्राच्यै दिशे इन्द्राय नमः। आग्नेय्यै दिशे अग्नये नमः। दक्षिणायै दिशे यमाय नमः। नैर्ऋत्यै दिशे नैर्ऋतये नमः। पश्चिमायै दिशे वरुणाय नमः। वायव्यै दिशे वायवे नमः। उदीच्यै दिशे कुबेराय नमः। ईशान्यै दिशे ईश्वराय नमः। ऊर्ध्वायै दिशे ब्रह्मणे नमः। अधरायै दिशे अनन्ताय नमः। गायत्र्यै नमः। सावित्र्यै नमः। सरस्वत्यै नमः। अमुकगोत्रोत्पन्नोऽहं अमुकप्रवरान्वितोऽहं अमुकशर्म्मा ब्राह्मणोऽहं भो अग्ने! अभिवादयामि। भो सूर्य! अभिवादयामि। भो वरुण! अभिवादयामि। भो आचार्य! अभिवादयामि" ॥ इति प्रातः सन्ध्या।

मध्याह्नसन्ध्या प्रातः सन्ध्यावत्। अत्रावाहनाचमनयोर्विशेषः। आवाहनम्।

"सावित्रीं युवतीं शुक्लां शुक्लवस्त्रां त्रिलोचनाम्।
त्रिशूलिनीं वृषारूढां रुद्राणीं रुद्रदैवताम्॥
आवाहयाम्यहं देवीमायान्तीं सूर्यमण्डलात्।
आगच्छ वरदे! देवि! त्र्यक्षरे! रुद्रवादिनि!।
सावित्रि! च्छन्दसां माता! रुद्रयोने! नमोऽस्तुते॥"

अथाचमनम्। "आपः पुनन्त्वित्यस्य कश्यप ऋषिः अनुष्टुप् छन्दः आपो देवता आचमने विनियोगः। ॐआपः पुनन्तु पृथिवीं पृथ्वी पूता पुनातु माम्। पुनन्तु ब्रह्मणस्पतिर्ब्रह्मपूता पुनातु

माम्। यदुच्छिष्टमभोज्यं यद्वा दुश्चरितं मम। सर्वं पुनन्तु मामापोऽसताञ्च प्रतिग्रहᳬं स्वाहा"। अन्योऽपि विशेषः। सूर्योपस्थाने यथा सूर्यायार्घं दद्यात्। तद्यथा "ॐकारस्य ब्रह्मा ऋषिः गायत्री च्छन्दः परमात्मा देवता भूर्भुवः स्वरिति तिसृणां प्रजापतिर्ऋषिः गायत्र्युष्णिगनुष्टुप्छन्दांसि अग्निर्वायुः सूर्यो देवता तत्सवितुरिति विश्वामित्र ऋषिः गायत्रीच्छन्दः सविता देवता सूर्यायार्घदाने विनियोगः॥ ॐभूर्भुवः स्वः तत्सवि०"दित्यादि सूर्याभिमुखो भूत्वा तिष्ठन् सपुष्प जलेऽर्घं प्रक्षिपेत्। "ॐ उद्वयमिति प्रस्कण्व ऋषिः अनुष्टुप्छन्दः सूर्यो देवता उदुत्यमित्यस्य प्रस्कण्व ऋषिः उष्णिक्छन्दः सूर्यो देवता। ॐकारस्य ब्रह्मा ऋषिः गायत्रीच्छन्दः परमात्मा देवता। भूरिति प्रजापतिर्ऋषिः गायत्रीच्छन्दः अग्निर्देवता। भुवरिति प्रजापतिर्ऋषिः उष्णिक्छन्दः वायुर्देवता। स्वरिति प्रजापतिर्ऋषिः अनुष्टुप्छन्दः सूर्यो देवता। तत्सवितुरिति विश्वामित्र ऋषिः गायत्रीच्छन्दः सविता देवता। विभ्राडित्यस्य विभार्य ऋषिः जगतीच्छन्दः सूर्यो देवता। उदुत्यं तिस्रः प्रस्कण्वः गायत्री। तं प्रत्नथाऽवत्सारकश्यपावृषी जगतीच्छन्दः सूर्यो देवता। अयं वेनस्त्रिष्टुप्सूर्यः। चित्रन्देवानां कुत्स आङ्गिरस ऋषिः त्रिष्टुप्छन्दः सूर्यो देवता। आ नो गस्त्या, यदद्य कच्चसुतकक्षौ। तरणिः प्रस्कण्वः। तत्सूर्यस्य द्वे कुत्सः। वण्महान्द्वे जमदग्निर्बृहतीसतोबृहत्यौ। आयन्त इव नृमेधो बृहती। अद्यादेवाः कुत्सः। आकृष्णेन हिरण्यस्तूप आङ्गिरसः त्रिपदानां गायत्रीच्छन्दः अन्यासामनुक्तानां त्रिष्टुप्। सर्वासां सूर्यो देवता। सहस्रशीर्षेति षोडशर्चा नारायण ऋषिः पञ्चदशानामनुष्टुप् छन्दः षोडश्यास्त्रिष्टुप् सर्वासां सूर्यो देवता। यज्जाग्रत इति षडर्चस्य शिवसङ्कल्प ऋषिः त्रिष्टुप्छन्दः मनो देवता। उपस्थाने विनियोगः। मण्डलब्राह्मणस्य विवस्वान्नृषिः वायुर्देवता उपस्थाने विनियोगः"। एतैरुपस्थाय प्रदक्षिणीकृत्य नमस्कृत्य दर्भेषूपविशेत्।

वृद्धमनुः—न प्रातर्न प्रदोषश्च सन्ध्याकालो विपद्यते ।
मुख्यकल्पोऽनुकल्पश्च सर्वस्मिन्कर्मणि स्मृतः ॥
प्रातःसन्ध्यां सनक्षत्रां मध्यमां स्नानकर्मणि ।
सादित्यां पश्चिमां सन्ध्यामुपासीत यथाविधि ॥

इति मुख्यकालः । स्नानकर्मणीति मध्याह्नस्नानानन्तरमित्यर्थः ।

गौणकालस्तु स्मृतिसारे—
उदयात्प्राक्तनी सन्ध्या घटिकात्रयमुच्यते ।
सायं सन्ध्या त्रिघटिका अस्तादुपरि भास्वतः ॥

दक्षः—अध्यर्द्धयामादासायं सन्ध्या माध्याह्निकीर्यते ।
अर्घ्यप्रदानतः पूर्वमुदयेस्तमयेऽपि वा ।
गायत्र्यष्टशतं जप्यं प्रायश्चित्तं द्विजन्मभिः ॥

कात्यायनस्तु—सन्ध्याकाले व्यतिक्रान्ते जपं कुर्यात्पुनर्मनः ।
ऋचं वाचं तृचं जप्त्वा ततः सन्ध्यामुपासयेत् ॥

योगीशः-सर्वावस्थोऽपि यो विप्रः सन्ध्योपासनतत्परः ।
ब्राह्मण्याच्च न हीयेत अन्यजन्मगतोऽपि वा ॥
यावन्तोऽस्यां पृथिव्यान्तु विकमस्था द्विजातयः ॥
तेषां हि पावनार्थाय सन्ध्या सृष्टा स्वयम्भुवा ।
स्नानं सन्ध्यां त्यजन् विप्रः सप्ताहाच्छूद्रतां व्रजेत् ॥
तस्मात्स्नानं च सन्ध्यां च सूतकेऽपि न सन्त्यजेत् ॥

स्मृतिसारे—अशक्तौ निर्जले देशे मृतौ जाते च सूतके ।
जपेच्च मानसीं सन्ध्यां कुशवारिविवर्जिताम् ॥ इति ।

तद्यथा—सन्ध्यायां मनसा शक्त्या मन्त्रानुचारयेद्द्विजः ।
प्राणायामं विना सर्वा नाड्यः प्राणान्नियम्य च ।
मार्जनादिभवेत्सर्वं न वा कार्यं हि मार्जनम् ॥
उच्चार्य वाचा गायत्रीं दद्यादर्घाञ्जलीनपि ।
अष्टाविंशतिकृत्वोऽत्र गायत्रीं मनसा जपेत् ॥ इति ।

दर्भेषूपवेशनानन्तरं पाणिभ्यां दर्भानादाय "इषे त्वादि खं ब्रह्मा-

न्तस्य विवस्वानृषिः वायुर्देवता गायत्र्यादीनि च्छन्दांसि ब्रह्मयज्ञजपे विनियोगः"। इत्यृष्यादिकं च स्मृत्वा प्रणवव्याहृतिगायत्रीपूर्वकं यथाशक्ति ब्रह्मयज्ञं कुर्यात्। अनध्यायेऽल्पं पठेदेवं पर्वण्यल्पतरम्। "नास्ति तेष्वप्यनध्याय" इति स्मरणात्।

"इति विद्यातपोयोनिरयोनिर्विष्णुरीडितः।
वाग्यज्ञेनार्चितो देवः प्रीयतां मे जनार्दनः"॥

इति समाप्य। तान् दर्भानुत्तरतो निरस्याचामेत्। तथा च मनुः—

कुशानुत्तरतः क्षिप्त्वा यथाचमनमाचरेत्॥ इति।

अथ स्थलतर्पणम्। तद्यथा—भूमौ प्रागग्रान् कुशानास्तीर्य तत्र प्रागग्रेषु सुरान् दक्षिणाग्रेषु च पितॄन्मन्त्रैरावाहयेत् तर्पयेच्च। अथवा आवाहनपूर्वकं तर्पणमप्स्वेव कुर्यात्। तत्र "विश्वे देवास आगतेति द्वयोः प्रजापतिर्ऋषिः गायत्रीच्छन्दः विश्वेदेवा देवताः जपे विनियोगः। ॐ विश्वे देवास० ध्वम्"। २। ततोऽपसव्यं-कृत्वा दक्षिणाभिमुखः "उशन्तस्त्वेत्यस्य प्रजापत्यशिवसरस्वत्य ऋषयः गायत्रीच्छन्दः पितरो देवताः आयन्तु न इत्यस्य शङ्ख ऋषिः त्रिष्टुप्छन्दः पितरो देवता आवाहने विनियोगः"। ततः यज्ञोपवीती प्राङ्मुखः नव सप्त पञ्च त्रीन्वा कुशान् समूलानच्छिन्नाग्रान्दक्षिणपाणिनाऽऽदाय सशुक्लतिलोदकेन वाञ्जलिं देवतीर्थेन पूरयित्वा जलं क्षिपेद्गोशृङ्गमात्रमुद्धृत्य देवतीर्थेन च प्रागग्रैर्दर्भैर्जलमध्ये जलं क्षिपेत्। तद्यथा—"ॐ ब्रह्मा तृप्यताम्। ॐ विष्णुस्तृप्यताम्। ॐ रुद्रस्तृप्यताम्। ॐ प्रजापतिस्तृप्यताम्। ॐ देवास्तृप्यन्ताम्। ॐ छन्दाꣳसि तृप्यन्ताम्। ॐ ऋषयस्तृप्यन्ताम्। ॐ पुराणाचार्यास्तृप्यन्ताम्। ॐ गन्धर्वास्तृप्यन्ताम्। ॐ इतराचार्यास्तृप्यन्ताम्। ॐ सम्वत्सरः सावयवस्तृप्यताम्। ॐ देव्यस्तृप्यन्ताम्। ॐ अप्सरसस्तृप्यन्ताम्। ॐ देवानुगास्तृप्यन्ताम्। ॐ नागास्तृप्यन्ताम्। ॐ सागरास्तृप्यन्ताम्। ॐ पर्वतास्तृप्यन्ताम्। ॐ सरितस्तृप्यन्ताम्। ॐ मनुष्यास्तृप्यन्ताम्। ॐ यक्षास्तृप्यन्ताम्। ॐ

रक्षाꣳसि तृप्यन्ताम् । ॐ पिशाचास्तृप्यन्ताम् । ॐ सुपर्णास्तृ-प्यन्ताम् । ॐ भूतानि तृप्यन्ताम् । ॐ पशवस्तृप्यन्ताम् । ॐ वनस्पतयस्तृप्यन्ताम् । ॐ ओषधयस्तृप्यन्ताम् । ॐ भूतग्राम-चतुर्विधस्तृप्यताम्" इति प्रत्येकमेकैकाञ्जलिं दद्यात् । ततो निवीत्युद-ङ्मुख ऊर्ध्वं ऋजुरुदगग्रैर्दर्भैर्मनुष्यतर्पणं कुर्यात् । अथवा दर्भाणां मूलानि वामपाणितले दक्षिणे च अग्राणि कृत्वा दर्भमध्यैः प्राजापत्येन तीर्थेन शबलतिलोदकैर्वा प्रतिदैवतं मन्त्रावृत्या द्वौ द्वौ अञ्जली दद्यात् । यथा । "ॐ सनकस्तृप्यताम् । ॐ सनन्दनस्तृप्यताम् । ॐ सनातनस्तृप्यताम् । ॐ कपिलस्तृप्यताम् । ॐ आसुरिस्तृप्य-ताम् । ॐ वोढुस्तृप्यताम् । ॐ पञ्चशिखस्तृप्यताम्" । ततो-ऽपसव्यं कृत्वा दक्षिणाभिमुखः सव्यं जान्वाच्य तानेव कुशान् मध्यमो टनेन द्विगुणान्कृत्वा तेषां मध्यं वामाङ्गुष्ठतर्जन्यन्तरे धृत्वा वामहस्तमणि-बन्धे धृतान्कृष्णतिलान्सव्येनाङ्गुष्ठेन तर्जन्या वामहस्ते आदाय पितृतीर्थे-न जलाञ्जलिमापूर्य तेनैव प्रतिदैवतं मन्त्रावृत्या त्रींस्त्रीनञ्जलीन्दद्यात् । यथा "ॐ कव्यवाडनलस्तृप्यताम् । ॐ सोमस्तृप्यताम् । ॐ यमस्तृप्यताम् । ॐ अर्यमा तृप्यताम् । ॐ अग्निष्वात्ताः पित-रस्तृप्यन्ताम् । ॐ सोमपाः पितरस्तृप्यन्ताम् । ॐ बर्हिषदः पितरस्तृप्यन्ताम् । ॐ यमाय नमः । ॐ धर्मराजाय नमः । ॐ मृत्यवे नमः । ॐ अन्तकाय नमः । ॐ वैवस्वताय नमः । ॐ कालाय नमः । ॐ सर्वभूतक्षयाय नमः । ॐ औदुम्बराय नमः । ॐ दध्नाय नमः । ॐ नीलाय नमः । ॐ परमेष्ठिने नमः । ॐ वृकोदराय नमः । ॐ चित्राय नमः । ॐ चित्र-गुप्ताय नमः" । जीवत्पितृकोऽप्येतावत्तर्पणं कुर्यात् । मृतपितृकस्तु स्वपितॄणां च । तद्यथा—"अमुकगोत्रः अस्मत्पिता अमुकशर्मा तृप्यताम् । इदं जलं तस्मै स्वधा नमः" । पुनरञ्जलिद्वयम् । "अमुक-गोत्रः अस्मत्पितामहः अमुकशर्मा तृप्यताम् । इदं जलं तस्मै स्वधा नमः । अमुकगोत्रः अस्मत्प्रपितामहः अमुकशर्मा तृप्यताम् । इदं

जलं तस्मै स्वधा नमः। गोत्रा अस्मन्माता अमुकीदा वसुरूपा तृप्यताम्। इदं जलं तस्यै स्वधा नमः। गोत्रा अस्मात्पितामही अमुकीदा रुद्ररूपा तृप्यताम्। इदं जलं तस्यै स्वधा नमः। गोत्रा अस्मत्प्रपितामही अमुकीदा आदित्यरूपा तृप्यताम्। इदं जलं तस्यै स्वधा नमः"। अथ प्रसेकाख्यं कर्मोच्यते। "उदीरतामङ्गिरसो न आयन्तु न इति तिसृणां शङ्ख ऋषिः त्रिष्टुप्छन्दः पितरो देवताः। उर्ज्जं वहन्तीरिति प्रजापतिर्ऋषिः गायत्रीच्छन्दः पितरो देवता। पितृभ्यो ये चेह पितर इति द्वयोः प्रजापत्यश्विसरस्वत्य ऋषयः त्रिष्टुप्छन्दः पितरो देवता। मधु वाता इत्यस्य गौतम ऋषिः गायत्रीच्छन्दः पितरो देवता। सर्वेषां प्रसेकाख्ये कर्मणि विनियोगः। ॐ उदीरता०। अङ्गिरसो नः०। आयन्तु नः०। उर्ज्जं वहन्ती०। पितृभ्यः स्वधायिभ्यः०। ये चेह पितरो०। ॐ मधु वाता०। मधु नक्त०। मधुमान्नो०।" इति नवर्चं जपन् सन् सिञ्चेत्। ततः "तृप्यध्वं तृप्यध्वं तृप्यध्वम्"। इति नवर्चप्रसेकान्ते प्रतिपुरुषमञ्जलित्रयं दद्यात्। "अमुकगोत्रोऽस्मन्मातामहः अमुकशर्मा वसुरूपस्तृप्यतां इदं जलं तस्मै स्वधा नमः।" एवं प्रमातामहवृद्धप्रमातामहयोः। तथा मातामहिप्रमातामहिवृद्धप्रमातामहीनाञ्च। "नमो व इति यजुषां परमेष्ठी प्रजापतिर्ऋषिः पितरो देवता जपे विनियोगः। ॐ नमो वः पितरो रसाय नमो वः पितरः शोषाय नमो वः पितरो जीवाय नमो वः पितरः स्वधायै नमो वः पितरो घोराय नमो वः पितरो मन्यवे नमो वः पितरः पितरो नमो वो गृहान्नः पितरो दत्त सतो वः पितरो देष्मैतद्वः पितरो वासः।" इति मन्त्रं जप्त्वा "ॐ तृप्यध्वं तृप्यध्वं तृप्यध्वम्" इति। पूर्ववत्प्रतिपुरुषं अञ्जलित्रयं दद्यात्। ततः स्त्री। ततः पुत्रादिः। ततः पितृव्यः सपत्नीकः ससुतः। ततो मातुलः सपत्नीकः ससुतः। स्वभ्राता सपत्नीकः ससुतः। ततः पितृभगिनी सभर्तृका

ससुता । ततो मातृभगिनी सभर्तृका ससुता । स्वभगिनी सभर्तृका ससुता। ततः श्वशुरः । ततो गुरुः । तत आप्तजनाः मित्रादयः। एवं तर्पणं विधाय । एकं तिलाञ्जलिं दद्यात् । तत्र मन्त्रः । विष्णुपुराणे—

"देवासुरास्तथा नागा यक्षगन्धर्वराक्षसाः ।
पिशाचा गुह्यकाः सिद्धा कूष्माण्डास्तरवः खगाः ॥
जले चरा भूमिलया वाय्वाधाराश्च जन्तवः ।
तृप्तिमेते नयन्त्वाशु मद्दत्तेनाम्बुनाखिलाः ॥
नरकेषु समस्तेषु यातनासु च ये स्थिताः ।
तेषामाप्यायनायैतद्दीयते सलिलं मया ॥
येऽबान्धवा बान्धवा वा येऽन्यजन्मनि बान्धवाः ।
ते सर्वे तृप्तिमायान्तु ये चास्मत्तोऽभिकाङ्क्षिणः ॥
यत्र क चन संस्थानां क्षुत्तृष्णोपहतात्मनाम् ।
इदमक्षय्यमेवास्तु मया दत्तं तिलोदकम् ॥
आब्रह्मस्तम्बपर्यन्तं देवर्षिपितृमानवाः ।
तृप्यन्तु पितरः सर्वे मातृमातामहादयः ॥
अतीतकुलकोटीनां सप्तद्वीपनिवासिनाम् ।
आब्रह्मभुवनाल्लोकादिदमस्तु तिलोदकम् ॥"

ततः स्नानवस्त्रं चतुर्धा कृत्वोद्ध्वदशं भूमौ निःपीडयेत । तत्र मन्त्रः—

"ये चास्माकं कुले जाता अपुत्रा गोत्रिणो मृताः ।
ते गृह्णन्तु मया दत्तं वस्त्रनिष्पीडनोदकम् ॥
येषां नैव पिता भ्राता न पुत्रो नान्यगोत्रिणः ।
ते सर्वे तृप्तिमायान्तु मयोत्सृष्टैः कुशैः सदा" ॥

इति दर्भत्यागः । अथ जले ब्रह्मादीनां पूजनम् । तत्र "ब्रह्म जज्ञानमिति प्रजापतिर्ऋषिः त्रिष्टुप् छन्दः ब्रह्मा देवता ब्रह्मपूजने विनियोगः । इदं विष्णुरिति मेधातिथिर्ऋषिः गायत्रीच्छन्दः विष्णुः देवता विष्ण्वर्चने० । नमस्ते रुद्रेति मित्रो गायत्री रुद्रो रुद्रार्चने०" गायत्र्या सवितारम् । "मित्रस्य चर्षणीधृत इति विश्वामित्रो गायत्री

मित्रो मित्रार्चने० । इमम्मे वरुणेति शुनः शेपो गायत्री वरुणः वरुणार्चने विनियोगः ।" इति ऋष्यादि स्मृत्वा मन्त्रं पठित्वा "ॐ ब्रह्मणे नमः पाद्यं समर्पयामि । ॐ ब्रह्मणे नमः अर्घं समर्पयामि" इत्येवं षोडशोपचारैः पञ्चोपचारैर्वा ब्रह्माणं सम्पूज्य, एवं विष्णुरुद्रसवितृमित्रवरुणान् पूर्वोक्तैस्तल्लिङ्गैरर्चयेत् । ततः "अदृश्रमिति प्रस्कण्वो गायत्री सूर्यः उपस्थाने० । हꣳसः शुचिषदिति वामदेवो जगती सूर्यः उप० । ॐ अदृश्रम० । हꣳसः शु० ।" इत्युभाभ्यां सूर्यमुपस्थाय प्रदक्षिणेनावृत्य । "ॐप्राच्यै दिशे नमः इन्द्राय नमः । ॐ आग्नेय्यै दि० अग्नये० । ॐ दक्षिणायै दिशे० यमाय नमः । ॐ नैर्ऋत्यै० नैर्ऋतये० । ॐ प्रतीच्यै० वरुणा० । ॐ वायव्यै दि० वायवे० । उदीच्यै दि० सोमाय० । ॐ ईशान्यै दिशे० ईशानाय० । ॐ ऊर्ध्वायै दि० ब्रह्मणे० । ॐ अवाच्यै दि० अनन्ताय नमः ।" इति दिग्देवताश्च नमस्कृत्योपविश्य, "ॐ ब्रह्मणे नमः । ॐ अग्नये नमः । ॐ पृथिव्यै नमः । ॐ ओषधिभ्यो० । ॐ वाचेन० । ॐ वाचस्पतये० । ॐ विष्णवे० । ॐ महद्भ्यो० । ॐ अद्भ्यो० । ॐ अपां पतये वरुणाय नमः" इति क्रमेणैताभ्यो देवताभ्यो जलं दत्वा नमस्येत् । ततः "सं वर्चसेति परमेष्ठी त्रिष्टुप् त्वष्टा मुखमार्जने० । ॐ सं वर्च०लिष्ट"मिति मुखं शोधयित्वा, "देवा गातुविद इति मनसस्पतिर्ऋषिः विराट्छन्दः वातो देवता विसर्जने विनियोगः । ॐ देवा गातु० ते धाः" इति विसर्जनमुद्रया कर्माङ्गभूतदेवान्विसृज्य,

> प्रक्षाल्य तीर्थदेशं तं गत्वा स्वं कर्म चाचरेत् ।
> जलदेवं नमस्कृत्य ततो गच्छेद्गृहं बुधः ॥

इति स्मृत्यन्तरे । अथ संक्षेपतर्पणम् । तथा चोक्तम् ।

> आब्रह्मस्तम्बपर्यन्तं जगत्तृप्यत्विति ब्रुवन् ।
> जलाञ्जलित्रयं दद्यात्कुर्वन्संक्षेपतर्पणम् ॥

तच्चेत्थम्—

"आब्रह्मस्तम्बपर्यन्तं जगत्स्थावरजङ्गमम् ।
मया दत्तेन तोयेन तृप्तिं यातु परां गतिम् ॥"

इति संक्षेपतर्पणम् । वृद्धमनुः—

यां कां चित्सरितं प्राप्य कृष्णपक्षे चतुर्दशी ।
यमुनान्तु विशेषेण नियतो नियतेन्द्रियः ॥

यमाय धर्मरा० ॥

इत्येतैर्नाममन्त्रैस्तु प्रणवादिनमोऽन्तकैः ।
तर्पयित्वा यमं देवं सर्वपापैः प्रमुच्यते ॥ इति ।

स्कान्दे—कृष्णपक्षे चतुर्दश्यामङ्गारकादिनं यदि ।
तदा स्नात्वा शुभे तोये तर्पयेद्यमनामभिः ॥

यमोऽपि—सदा जलाञ्जलीन्दत्वा कृष्णपक्षे चतुर्दशी ।
धर्मराजं समुद्दिश्य सर्वपापैः प्रमुच्यते ॥

इति यमतर्पणम् ।

अथ गृहे देवार्चनविधिः । तत्र मरीचिः—

विधाय देवतापूजां प्रातर्होमादनन्तरम् ।
पूर्वाह्ण एव कुर्वीत देवतानां च पूजनम् ॥

कूर्मपुराणे—पौरुषेण तु सूक्तेन ततो विष्णुं समर्चयेत् ।
वैश्वदेवं ततः कुर्याद्बलिकर्म तथैव च ॥

इत्यनेन मध्याह्नकालो गौणः नारदीये तु—

प्रातर्मध्यन्दिने सायं विष्णुपूजां समाचरेत् ।
यथा सन्ध्या स्मृता नित्या देवपूजा तथैव च ॥
अशक्तौ विस्तरेणैव प्रातः सम्पूज्य केशवम् ।
मध्याह्ने चैव सायं च पुष्पाञ्जलिमपि क्षिपेत् ॥

पूज्यदेवताश्च पाद्मे दर्शिताः ।

आदित्यं गणनाथं च देवीं रुद्रं यथाक्रमम् ।
नारायणं विशुद्धाख्यमन्ते च कुलदेवताम् ॥

धर्मप्रवृत्तावपि— नारायणं महादेवमादित्यं गणनायकम् ।
शक्तिं चैवाथ पञ्चैतान्प्रत्यहं पूजयेद्द्विजः ॥

अथ पूजाधारो निरूप्यते । तत्र नारदीये—

आपोऽग्निर्हृदयं चक्रं विष्णोः क्षेत्रसमुद्भवम् ।
यन्त्रं च प्रतिमा स्थानमर्चयेत्सर्वदा हरेः ।

गौतमीये—शालग्रामे मणौ यन्त्रे प्रतिमामण्डलेषु वा ।
नित्यं पूजां हरेः कुर्यान्न तु केवलभूतले ॥
शालग्रामशिलास्पर्शात्कोटिजन्माघनाशनम् ।
किंपुनश्चार्चनं यत्र हरिसान्निध्यकारणम् ॥

एतेन विष्णुपूजायां शिलाया अपि प्राधान्यम् । मण्डलादीनान्तु सर्वसाधारणत्वात् विष्णुरित्युपलक्षणम । पञ्चानामपि शिला ग्राह्या । विष्णोर्गण्डकीशिला । शिवगणेशयोर्नार्मदीया । शक्तेर्माहोरकुण्डजा । रवेः सूर्यकान्तजा शिलेति ।

यन्त्रं मन्त्रमयं प्रोक्तं मन्त्रात्मा देवतेति च ॥

पञ्चायतनस्थापनक्रम उक्त आचारप्रदीपे—

शम्भौ मध्यगते हरीनहरभूदेव्यो हरौ शङ्करे-
भास्येनागसुता रवौ हरगणेशाजाम्बिकाः स्थापिताः ।
देव्यां विष्णुहरैकदन्तरवयो लम्बोदरेऽजेश्वरे-
नार्याः शङ्करभागतोऽतिशुभदा व्यस्तास्तु ते हानिदाः ॥

अत्र प्रधानस्य शङ्करभागतः ईशानकोणादारभ्य प्रदक्षिणक्रमेण स्थापनीया इत्यर्थः । यत्र प्रधानः शिवः स मध्ये । तस्येशाने हरिर्विष्णुः । आग्नेय्यां इनः सूर्यः । नैर्ऋते हरभूर्गणेशः । वायव्ये देवी शक्तिः । यत्र विष्णुः प्रधानस्तत्र ईशान्ये शङ्करः शिवः । आग्नेय्यां इभास्यो गणेशः । नैर्ऋते इनः सूर्यः । वायव्ये अगसुता शक्तिः । यत्र रविः प्रधानस्तत्रेशाने हरः शिवः । आग्नेय्यां गणेशः प्रसिद्धः । नैर्ऋते अजो विष्णुः । वायव्ये अम्बिका शक्तिः । यत्र देवी प्रधाना तत्रेशाने विष्णुः प्रसिद्धः । आग्नेय्यां हरः शिवः । नैर्ऋते एकदन्तो गणेशः । वायव्ये रविः

सूर्यः । यत्र लम्बोदरो गणेशः प्रधानस्तत्रेशाने अजः विष्णुः । आग्नेय्यां ईश्वरो महादेवः । नैर्ऋते इनः सूर्यः । वायव्ये आर्या शक्तिः । अनेन

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| वि | सू | शि | ग | शि | ग | व | शि | वि | शि |
| शि | | वि | | सू | | दे | | ग | |
| दे | ग | दे | सू | दे | वि | सू | ग | दे | सू |

क्रमेण यः पूजां कृतवान् तस्य शुभदाः शुभफलप्रदा भवन्ति । व्युत्क्रमेण पूजिता हानिदा भवन्ति । अथ प्राचीलक्षणमाह सिद्धान्तशिरोमणौ—

यत्रोदितोऽर्कः खलु तत्र पूर्वा तत्रापरा यत्र गतः प्रतिष्ठाम् ॥ इति

इयं प्राची वेदोक्तपूजाविधौ । स्मृतौ उक्तमस्ति—

यस्मिन्विवस्वत्युदिते प्रशस्ता प्राचीति तां वेदविदो वदन्ति ।
मध्ये पुनः पूजकपूज्ययोश्च सदागमज्ञाः प्रवदन्ति सन्तः ॥

इयमागमविषये प्राची । धर्मप्रवृत्तौ—

पूज्यपूजकयोर्मध्ये तत्र प्राचीं प्रकल्पयेत् । इति ।

अथ पूजनक्रममाह—

मुख्ये पुष्पाञ्जलिं दत्वा गणेशाद्यर्चनं भवेत् ।
गणेश एव मुख्यश्चेत्तत्र सूर्यक्रमाद्भवेत् ॥

इति आचारप्रदीपोक्तेः ।

गणेशार्कौ समभ्यर्च्य शैवो विष्णुं प्रपूजयेत् ।
अर्चयेच्च शिवं पश्चाच्छिवमादौ तु वैष्णवः ॥
ततो विष्णुं ततो दुर्गामेवं स्यादर्चनक्रिया ।

विष्णुविषये नारदीये—

स्नातः शुक्लाम्बरधरः स्वाचान्तः पूर्वदिङ्मुखः ।

अन्यस्य तु निबन्धे—

उपविश्यासने मन्त्री प्राङ्मुखो वाऽप्युदङ्मुखः ॥

रात्रौ पूजायां नायं नियमः । तथा च स्मृतिः—

रात्रावुदङ्मुखः कुर्याद्देवकार्यं सदैव हि ।
शिवार्चनं सदाप्येवं शुचिः कुर्यादुदङ्मुखः ॥

अथ गृहिकर्तृकपूजायां पूज्यदेवतानियममाह भविष्यपुराणे—

गृहे लिङ्गद्वयं नार्च्यं गणेशत्रितयं तथा।
शक्तित्रयं तथा नार्च्यं शालग्रामद्वयं तथा॥
द्वौ शङ्खौ नार्चयेच्चैव भग्नां च प्रतिमां तथा।
नार्चयेच्च तथा मत्स्यकूर्मादिदशकं तथा॥
द्वे चक्रे द्वारकायास्तु नार्च्यं सूर्यद्वयं तथा।
शालग्रामाः समाः पूज्या विषमा न कदाचन॥
विषमेषु त्रयं शस्तं समेषु द्वितयं न हि।
एतेषां पूजनान्नित्यमुद्वेगं प्राप्नुयाद्गृही॥
द्वारकायां चक्रतीर्थे चक्राङ्कं नेत्रमुत्तमम्।
समुत्पन्नं मुने! साक्षात्कृष्णदृष्ट्याऽवलोकितम्॥
तस्माच्चक्राङ्कमिथुनं पूज्यं भक्त्या द्विजैः सदा॥

इति विधानपारिजातात्, विशेषश्रवणाच्च। लैङ्गे—

एकीकृत्य च लिङ्गानि दशपञ्चशतानि च।
प्रत्येकेनाथ वा देवि! बिल्वपत्रैः प्रपूजयेत्॥
एकं पाशुपतं लिङ्गं मृच्छिलादिविनिर्मितम्।
शालग्रामशिलामेकां गृहस्थोऽपि प्रपूजयेत्॥

विधानपारिजाते--द्विजानामेव नान्येषां शालग्रामशिलार्चनम्।
स्त्रीणां चैवाथ शूद्राणां विप्रहस्तेन पूजनम्॥
स्त्रीणामनुपनीतानां शूद्राणां च जनेश्वर!।
स्पर्शने नाधिकारोऽस्ति विष्णौ वा शङ्करेऽपि वा॥

इति बृहन्नारदीये। कौर्मेऽपि—

ब्राह्मण्यपि हरं विष्णुं न स्पृशेच्छ्रेय इच्छती।
सनाथा सुतनाथा वा तस्या नास्तीह निष्कृतिः॥

लिङ्गस्य स्पर्शनिषेधोऽपि इदानीन्तनप्रतिष्ठितलिङ्गविषयो न पुनरनादिलिङ्गविषयः। यथा हि नारदीये—

यदा प्रतिष्ठितं लिङ्गं मन्त्रविद्भिर्यथाविधि।

ततःप्रभृति शूद्राश्च योषिच्चापि न संस्पृशेत् ॥
दीक्षितानां द्विजान्येषां स्त्रीणामपि तथैव च ।
लिङ्गे स्वगुरुणा दत्ते पूजा नान्यत्र सा स्मृता ॥

इति नन्दिपुराणोक्तेः। स्त्रीशूद्राणां पार्थिवलिङ्गादिपूजाधिकारो ज्ञेयः।

नन्दिपुराणे—आयुष्मान्बलवाञ्छ्रीमान्पुत्रवान्धनवान्सुखी ।
वरमिष्टं लभेल्लिङ्गं पार्थिवं यः समाचरेत् ॥
तस्मात्तु पार्थिवं लिङ्गं ज्ञेयं सर्वार्थसाधकम् ।
अशून्यमस्तकं लिङ्गं सदा कुर्वीत पूजकः ॥

अथ निर्माल्योद्वासनं प्रातः कार्यमित्युक्तं नारदपञ्चरात्रे—

यः प्रातरुत्थाय विधाय नित्यं निर्माल्यमीशस्य निराकरोति ।
न तस्य दुःखं न दरिद्रदुःखं नाकालमृत्युर्न च रोगमात्रम् ॥

क्रियासारे—मध्यमानामिकामध्ये पुष्पं संगृह्य पूजयेत् ।
अङ्गुष्ठतर्जनीभ्यां हि निर्माल्यमपनोदयेत् ॥

ताम्रपात्रे स्नानार्थं देवं स्थापयेत् । धातुप्रतिमासु न स्नानम् । तथा च प्रयोगपारिजाते व्यासः—

प्रतिमापट्टयन्त्राणां नित्यस्नानं न कारयेत् ।
कारयेत्सर्वदिवसे यदि वा मलधारणम् ॥

अथ न्यासाः—करयोः पादयोर्जान्वोः कट्योर्नाभौ हृदि क्रमात् ।
कण्ठे बाह्वोर्मुखे नेत्रे मूर्ध्नि वामादितो न्यसेत् ॥
ॐकारपूर्वकैर्मन्त्रैः षोडशर्ग्भिः पृथक्पृथक् ।
न्यासेनैव भवेत्सोऽपि स्वयमेव जनार्दनः ॥
यथात्मनि तथा देवे न्यासं च परिकल्पयेत् ॥

अथ द्वात्रिंशदुपचाराः । आवाहनम् १ । आसनम् २ । पाद्यम् ३ । अर्घ्यम् ४ । आचमनम् ५ । मधुपर्कम् ६ । स्नानम् ७ । वस्त्रम् ८ । उपवीतम् ९ । आभरणम् १० । गन्धम् ११ । अक्षताः १२ । पुष्पम् १३ । धूपम् १४ । दीपम् १५ । नैवेद्यम् १६ । ताम्बूलम् १७ । दक्षिणाः १८ । फलम् १९ । नीराजनम् २० । पुष्पाञ्जलिः २१ । प्रदक्षिणा २२ । नमस्कारः

२३। स्तोत्रम् २४। छत्रम् २५। चामरे २६। वाहनम् २७। नृत्यम् २८। गीतम् २९। वाद्यम् ३०। प्रार्थना ३१। विसर्जनम् ३२ इति।

आवाहनञ्चासनञ्च सान्निध्यं सन्निरोधनम्।
अर्घश्चाचमनञ्चैव गन्धपुष्पविभूषणम्॥
दद्याद्देवोपचारांस्तु सर्वेभ्यश्च पृथक्पृथक्।
सदावरणसंस्थेभ्यः स्वाहान्तैः स्वस्वनामकैः॥
धूपदीपादिकन्तेषां तत्सर्वं विष्णुना सह॥

आवाहनम्—शालिग्रामे स्थावरे च नावाहनविसर्जने।
शालिग्रामशिलायान्तु नित्यं सन्निहितो हरिः॥

तथा च भागवते—उद्वासावाहने न स्तः स्थिरायामुद्धवार्चने।
अस्थिरायां विकल्पः स्यात्स्थण्डिले तु भवेद्द्वयम्॥
वस्त्रमासाद्य ताम्रे यो ह्यर्चयेत्पुरुषोत्तमम्।
तदर्चा निष्फला यस्मात्स याति रौरवं ध्रुवम्॥
नाङ्गुष्ठैर्मर्दयेद्देवं नाधःपुष्पैः समर्चयेत्।
कराग्रैर्निक्षिपेत्तोयं वज्रपातसमं भवेत्॥
अमौनी घर्मलिप्ताङ्गो मत्पूजां विदधाति यः।
वातमूत्रनिरोधेन मत्पूजां विदधाति यः॥
कृत्वा वातमनाचम्य तथा प्रावृतकम्बलः।
पीठासनोपविष्टस्तु पूजयेद्वा निरासनः॥
मृण्मये धूपदहनं दीपं च कुरुतेऽर्चने।
मत्पूजको न कुरुते तां तु पूजां वदामि ते॥
अन्धकारे स्पृशेन्मां च सम्भाष्य च रजस्वलाम्।
वामहस्ते च मां कृत्वा स्नापयेद्यदि मूढधीः।
महापराधान् जानाहि द्वात्रिंशदक्षमानिमान्॥
यानैर्वा पादुकैर्वापि गमनं भगवद्गृहे।
देवोत्सवाद्यसेवा च अप्रणामस्तदग्रतः॥
उच्छिष्टे चैव चाशौचे भगवद्वन्दनादिकम्।

शक्तौ गौणोपचारस्तु अनिवेदितभक्षणम् ॥
तत्तत्कालोद्भवानां च फलादीनामनर्पणम् ॥

इत्याद्यपराधाः । अथ पूजोपयुक्तं लिख्यते । तत्रादौ दिक् विष्णुविषये नारदीये—

स्नातः शुक्लाम्बरधरः स्वाचान्तः पूर्वदिङ्मुखः ॥

अन्यस्य तु निबन्धे—

उपविश्यासने मन्त्री प्राङ्मुखो वाऽप्युदङ्मुखः ॥

रात्रौ पूजायां नायं नियमः । तथा च स्मृतिः—

रात्रावुदङ्मुखः कुर्याद्देवकार्यं सदैव हि ।
शिवार्चनं सदाऽप्येवं शुचिः कुर्यादुदङ्मुखः ॥
प्रक्षाल्य पादावाचम्य देवतायतनं विशेत् ।
समासीनस्तु सङ्कल्प्य पात्रासादनमाचरेत् ॥
आराधकः स्वस्य पुरः शङ्खस्थापनमाचरेत ।
यः शङ्खं भुवि संस्थाप्य पूजयेत्पुरुषोत्तमम् ॥
तस्य पूजां न गृह्णाति तस्मात्पीठं प्रकल्पयेत् ।
शङ्खोदकं सदा पुण्यमतिप्रियतमं हरेः ॥
उद्धरिण्या जलं ग्राह्यं नाप्सु शङ्खं निमज्जयेत् ।
शङ्खस्य पृष्ठसंलग्नं पयः पापकरं ध्रुवम् ॥
तेन न स्नापयेद्देवं पूजनात्पापसम्भवः ।
संच्छाद्य सितवस्त्रेण लिङ्गं संशोधितैर्जलैः ॥
सुवर्णताम्ररजतपात्रस्थैः शङ्खसंस्थितैः ।
यद्वा नूतनमृत्पात्रसंस्थितैः स्नपयेच्छिवम् ॥

इत्यादित्यपुराणे पूजाध्याये उक्तम् । स्कान्दे—

सम्प्रदायानुरोधेन शङ्खं स्थाप्य ममाग्रतः ।
दूर्वाङ्कुरैश्च पुष्पैश्च गन्धोदेन च पूरितम् ॥

धर्मप्रवृत्तौ-शिवसूर्यौ परित्यज्य शङ्खोऽन्यत्र प्रशस्यते ॥
नारदीये—आत्मनो दक्षिणे भागे तुलस्यादि निधापयेत् ।

घृतदीपं च तत्रैव तैलस्य तु विपर्ययः ॥
स्कान्दे– दक्षिणे गन्धपुष्पाणां पात्रं स्थाप्य च दैशिकः ।
वामभागे न्यसेत्कुम्भं वस्त्रपूत सुवासितम् ॥
पुरतो मम घण्टां च दिक्षु दीपान्नियोजयेत् ।
अन्यत्सर्वं साधनं च यथास्थानं तु विन्यसेत् ॥
अर्घ्यपाद्याचमनीयमधुपर्कस्य कारणात् ।
विन्यसेत्पुरतो मह्यं चत्वारि मञ्चकानि च ॥
सिद्धार्थाक्षतपुष्पाणि कुशाग्रं तिलचन्दनम् ।
फलं यवाश्चतुर्वक्त्रमर्घ्यपात्रे विनिक्षिपेत् ॥
दूर्वा विष्णुपदी श्यामा पत्रं चैव चतुर्थकम् ।
पाद्यपात्रे न्यसेत्पुत्र ! दैशिको मम तुष्टये ॥
कङ्कोलं च लवङ्गं च फलं मालतिसम्भवम् ।
कुर्याद्वै श्रद्धया पुत्र ! पात्र आचमनीयके ॥
दिव्यं पयोदधिमधुघृतखण्डसमन्वितम् ।
मधुपर्कस्य पात्रे वै दद्यात्तु श्रद्धयार्चकः ॥
उक्तानां द्रव्यजातीनामलाभे पत्रपुष्पकैः ।
तत्तद्भावनया कुर्यात्सर्वदा विधिकोविदः ।
नीलीरञ्जितवस्त्रं यन्मर्त्यो मह्यं निवेदयेत् ॥
नवमक्षालितं वस्त्रं जीर्णं मे न निवेदयेत् ।
स्नाने वस्त्रे च नैवेद्ये दद्यादाचमनीयकम् ॥
अर्घे स्नाने तथा वस्त्रे उपवीतोपहारके ॥

अथ पुष्पाणि नृसिंहपुराणे—

पुष्पैररण्यसम्भूतैः पत्रैर्वा गिरिसम्भवैः ।
अपर्युषितनिच्छिद्रैः प्रोक्षितैर्जन्तुवर्जितैः ॥
आत्मारामोद्भवैर्वापि पुष्पैः सम्पूजयेद्धरिम् ।
शमीपुष्पं बिल्वपुष्पं चम्पकं तगरन्तथा ॥
करवीरं तथा श्वेतं पाटलं कुशपुष्पकम् ।

वनमालाप्यशोकं च सेवती कुब्जमालती ॥
त्रिसन्ध्यं च तथा श्वेतं कुन्दं च शतपत्रकम् ।
मल्लिका चैव जाती च सर्वपुष्पाद्विशिष्यते ॥

प्रयोगपरिजाते व्यासः—

अपामार्गं भृङ्गराजं शमीपत्रं च खादिरम् ।
दूर्वा च कुशपत्रं च दमनं तरुकं तथा ॥
ततः श्रेष्ठं बिल्वपत्रं ततस्तु तुलसी परा ।
एतेषां च यथालाभं पत्रैरभ्यर्चयेद्धरिम् ॥
पुष्पेषु कलिका वर्ज्या ग्राह्यं कमलचम्पकम् ।
स्नातेन तुलसी ग्राह्या नान्यथा राजवल्लभा ॥
अस्नात्वा तुलसीं छित्वा देवार्थे पितृकर्मणि ।
तत्सर्वं निष्फलं याति पञ्चगव्येन शुद्ध्यति ॥

इति पाद्मे । विधानपरिजाते—

तुलसीमञ्जरी ग्राह्या तदभावे तु पल्लवम् ।
तदभावे तु पत्रं स्यात्तदभावे तु काष्ठकम् ॥
तदभावे तु मूलं स्यान्मूलाभावे तु मृत्तिका ।
मृत्तिकाया अभावे तु तुलसीशब्द उच्यते ॥

अथ वर्ज्यपुष्पाणि विष्णुधर्मोत्तरे—

उग्रगन्धीन्यगन्धीनि कुसुमानि न दापयेत् ।
अन्यायतनजातानि कण्टकीनि तथैव च ॥
रक्तानि कालजातानि चैत्यवृक्षोद्भवानि च ।
श्मशानजातपुष्पाणां दानं दैवे विवर्जयेत् ॥

विष्णोर्वर्ज्यानि । विष्णुधर्मोत्तरे—

क्रकराख्यस्य पुष्पाणि तथा धत्तूरकस्य च ।
कृष्णं च कुटजं चार्कं नैव देयं जनार्दने ॥

शिवस्य वर्ज्यानि प्रासाददीपिकायाम्—

जपाबन्धूकसिन्दूरं तथा त्रैसन्धिके शुभे ।

मदन्ती केतकी यूथी मालती कुटजानि च ॥
बर्बरी सर्जपत्री च तथा च कुमुदद्वयम् ।
आनीतं नार्पयेच्छम्भोः प्रमादादपि दोषकृत् ॥

देवीपुराणे विशेषः-शिवे विवर्जयेत्कुन्दमुन्मत्तं च हरेः सदा ।
देवीनां चार्कमन्दारावादित्ये तगरं तथा ॥

आचारदीपेऽपि—अक्षतैर्नार्चयेद्विष्णुं न तुलस्या गणेश्वरम् ।
दूर्वाभिर्नार्चयेद्दुर्गां न केतक्या महेश्वरम् ॥

नाक्षतैरर्चयेद्विष्णुमिति पुष्पाभावेऽतिदेशप्राप्तस्य तण्डुलस्य निषेधपरम् ।

तथा—पुष्पाभावे जलेनापि दूर्वया तण्डुलेन च ।
नित्यपूजा प्रकर्त्तव्या भक्तिभावेन सुन्दरि ! ॥ इति ।

न तु अर्घ्यादिनिषेधपरम् ।

स्नात्वानीतैः पर्युषितैर्याचितैः कृष्णवर्णकैः ।
स्वयं विकसितैः पुष्पैः स्वयं च पतितं भुवि ॥
वर्जयेद्दहतीपुष्पमगन्धं च विशेषतः ॥

स्वयं विकसितैरिति स्वयं पुरुषेण विकासितैरित्यर्थः ।

त्रिपदान्न्यूनकुसुमैर्नार्चयेत्तु कदाचन ॥

विधानपरिजाते—वस्त्रानीतं करानीतं स्वयं पतितमेव च ।
एरण्डपत्रैरानीतं तस्य पूजा च निष्फला ॥
योऽर्चयेद्विधिवद्भक्त्या परानीतैश्च साधनैः ।
पूजाफलार्धमेवास्य न समग्रफलं लभेत् ॥

शौनकोऽपि—उत्तमा वनजा पूजा क्रयक्रीता तु मध्यमा ।
अधमा याचिता पूजा चौर्येणैव तु निष्फला ॥
जलं पर्युषितं त्याज्यं पत्राणि कुसुमानि च ।
तुलस्यगस्तिबिल्वानि गङ्गावारि न दुष्यति ॥

अथ बिल्वादीनामनिर्माल्यादिनसंख्यामाह । बृहदाह्निके—

बिल्वापामार्गजातीतुलसिशमिशताकेतकीभृङ्गदूर्वा—
मन्दाम्भोजादिदर्भा मुनितिलतगरब्रह्मकल्हारमाल्यः ॥
पञ्चाश्वारातिकुन्तीदमनकमवका बिल्वतोऽह्नानि शस्ता—

स्त्रिय२०त्ये३का१र्यरी६शो११दधि४निधि९वसवो८ भू१य-
मा२ भूय एवम् ॥

तुळसीग्रहणे निषिद्धदिनादिकालनिर्णये—

भानुभार्गवभौमे च व्यतीपाते च वैधृतौ ।
सङ्क्रान्तौ पक्षयोरन्ते द्वादश्यां निशि सन्ध्ययोः ॥
तुळसीं ये विचिन्वन्ति ते च्छिन्दन्ति हरेः शिरः ।

गारुडेऽपि—भानुवारं विना दूर्वां तुळसीं द्वादशीं विना ॥
तद्ग्रहणमन्त्रस्तु—तुळस्यमृतजन्मासि सदा त्वं केशवप्रिये ! ।
केशवार्थं विचिन्वानि वरदा भव शोभने ! ॥

अथ गन्धम् । महाभारते—

हरिचन्दनकस्तूरीकर्पूरैः केसरान्वितम् ।
गन्धं दद्यात्प्रयत्नेन दुष्टगन्धानि वर्जयेत् ॥
गन्धेन देवास्तुष्यन्ति दर्शनाद्यक्षराक्षसाः ।
नागाः समुपभोगेन त्रिभिरेतैस्तु मानुषाः ॥

काशीखण्डे—कस्तुरिकाया द्वौ भागौ द्वौ भागौ कुङ्कुमस्य च ।
चन्दनस्य त्रयो भागाः शशिनस्त्वेक एव हि ॥
यक्षकर्दम इत्येव समस्तसुरवल्लभः ॥

गारुडे—कर्पूरं चन्दनं दर्भः कुङ्कुमं च समांशकम् ।
सर्वगन्धमिति प्रोक्तं समस्तामरवल्लभम् ॥

अथ धूपः । विधानपरिजाते—

अत ऊर्ध्वं प्रवक्ष्यामि धूपदानविधेः फलम् ।
निर्यासाः सारिणश्चैव कृत्रिमाश्चैव ते त्रयः ॥
निर्यासाः शल्लकीवर्ज्या देवानां दयितास्तु ते ।
गुग्गुलः प्रवरस्तेषां सर्वेषामिति निश्चयः ॥
अगरुः सारिणां श्रेष्ठो यक्षराक्षसभोगिनाम् ।
दैत्यानां शल्लकीयश्च काङ्क्षितो यश्च तद्विधः ॥

स्कान्दे—माहिषं गुग्गुलं यस्तु आज्ययुक्तं सशर्करम् ।

धूपं ददाति यो वै मां तस्य हीच्छां ददाम्यहम् ॥
घण्टानादं विना धूपं न विद्वान्दातुमर्हति ।
दीपोपचारं नैवेद्यं घण्टास्वनसमन्वितम् ॥
स्नाने धूपे तथा दीपे नैवेद्ये भूषणे तथा ।
घण्टानादं प्रकुर्वीत तथा नीराजनेऽपि च ॥

अथ दीपः । स्कन्दपुराणे —

अतः परं प्रवक्ष्यामि दीपमाहात्म्यमुत्तमम् ।
यस्मिन्कृते नरो याति वैकुण्ठं नात्र संशयः ॥
बहुवर्त्तिसमायुक्तं घृतपूरसमन्वितम् ।
कुर्यादारात्तिकं यो वै कल्पकोटीर्दिवं वसेत् ॥

अथ नैवेद्यम् । तत्रादौ नैवेद्यपात्रमाह । स्कान्दे—

आदौ हिरण्मयं पात्रं तदभावे च राजतम् ।
तदभावे च पालाशं विस्तार्णं बहुसुन्दरम् ॥
कचोलाः शतशः कार्याः पात्रे वै परितोऽनघ ! ।
तन्मध्ये व्यञ्जना देया नानाफलमयाः शुभाः ॥

तथा च विधानपारिजाते —

हैरण्यं राजतं ताम्रं कांस्यं पालाशपत्रकम् ।
नैवेद्यायाब्जपत्रं वा पात्रं विष्णोरतिप्रियम् ॥
मृन्मये भिन्नपात्रे वा पाषाणे लोहकाष्ठजे ।
पल्लवे करभूम्योस्तु न नैवेद्यं समर्पयेत् ॥

अथान्नानि स्कान्दे—पायसं चन्द्रसंकाशं पात्रैके शर्करायुतम् ।
भक्तं कुमुदसङ्काशं मुद्गान् काचमयान् शुभान् ॥
नानाव्यञ्जनसंरुद्धं त्रिभिः पङ्क्तिभिरेव च ।
निम्बूरसेन चार्द्रेण फलमूलयुतेन च ॥
वैकृतानि यथा कुर्याच्छतशो भोजने मम ।
द्राक्षा तु मिश्रिका चूतकरमर्दकृता शुभा ॥
मरीचपिप्पलीसार्द्रकैलाचन्द्रकसंयुता ।

कथिका वटकाः कार्य्याः शतशो भोजने मम ॥

विधानपरिजाते—भक्ष्यं भोज्यं च लेह्यं च चोष्यं पेयं गुणान्वितम् ।
दद्याच्छ्रीहरये नित्यं यद्यत्प्रियमथात्मनः ॥
प्रक्षिप्य तुलसीं प्रोक्ष्य सप्तकृत्वोऽभिमन्त्रयेत् ।
नैवेद्यं शङ्खतोयेन प्रोक्षेत न कदाचन ॥
पानीयं चामृतीकृत्य परेशाय निवेदयेत् ॥

तथा बौधायनः—गण्डूषार्थं जलं दत्वा दद्यादाचमनं ततः ।
हस्तवासं सकर्पूरं मुकुटं भूषणानि च ॥

विधानपरिजाते—न पिबेच्छङ्खतोयं च न च भूमौ विनिक्षिपेत् ।
न सम्प्रोक्षेत नैवेद्यं भुक्त्वा चैवाघवान्भवेत् ॥
तस्मात्कुम्भोदकेनैव नैवेद्यं प्रोक्षयेद्बुधः ।
ततः प्राणाद्याहुतयो दातव्याः परमात्मनि ॥
मूलमन्त्रं जपेदत्र ततो नारायणात्मकम् ।
अष्टोत्तरशतं चैव अष्टाविंशतिमेव वा ॥

स्कान्दे—अथ भुक्तवते प्रीत्या जलैः कर्पूरवासितैः ।
आचमनं च ताम्बूलं चन्दनैः करमार्जनम् ॥

विधानपरिजाते—कर्पूरैलादिसंयुक्तं ताम्बूलं च निवेदयेत् ॥

स्कान्दे—पुष्पाञ्जलिं ततः कुर्याद्भक्त्याऽऽदर्शं प्रदर्शयेत् ॥

विधानपरिजाते—प्रदर्शयेदथादर्शं कल्पयेच्छत्रचामरे ।
महानीराजनं चैव पुष्पाञ्जलिमथाक्षिपेत् ॥
प्रदक्षिणा नमस्कारान्कुर्याद्वै भक्तिपूर्वकम् ।
पदात्पदान्तरं गच्छेत्करौ चलनवर्जितौ ॥

नीराजनम्—उच्चैरादाय हस्ताभ्यामापादतलमस्तकम् ।
त्रिः परिभ्राम्य देवेशं बहिरेव ततः क्षिपेत् ॥
नीराजने महाविष्णोर्मखं सूर्यसमप्रभम् ॥

अथ प्रदक्षिणा—एका चण्ड्यां रवौ सप्त तिस्रो दद्याद्विनायके ।
चतस्रः केशवे दद्याच्छिवे चार्द्धप्रदक्षिणाम् ॥

अर्धप्रदक्षिणापि देवालये, न गृहे, तत्र वृषचण्डाद्यभावात् । अथ नमस्कारः—वाचा स्तोत्रं मनोध्यानं चतुरङ्गप्रदक्षिणाम् ।

उरसा शिरसा दृष्ट्या मनसा वचसा तथा ॥

पद्भ्यां कराभ्यां जानुभ्यां प्रणामोऽष्टाङ्ग ईरितः ॥

ततो देवं स्तुवीत । ततश्चरणोदकम् । लक्षणम्—

उदकं१ चन्दनं२ चक्रं३ शङ्खश्च४ तुलसीदलम्५ ।

घण्टा६ सूक्तं७ शिला८ ताम्रं९ नवभिश्चरणोदकम् ॥

शालिग्रामशिलातोयमपीत्वा यस्तु मस्तके ।

प्रक्षेपणं प्रकुर्वीत ब्रह्महा स निगद्यते ॥

यः पादसलिलं विष्णोः करेण पिबते यदि ।

स मूढो नरकं याति यावदिन्द्राश्चतुर्दश ॥

विष्णुपादाभिषिक्तं यत्पात्रेणैव पिबेज्जलम् ।

सर्वपापविनिर्मुक्तः स याति परमां गतिम् ॥

स्नाने चाचमने चैव भोजनादौ तथैव च ।

तथैव भोजनस्यान्ते शालिग्रामजलं पिबेत् ॥

तीर्थग्रहणप्रकारस्तु—वस्त्रं चतुर्गुणीकृत्य प्रसार्य वामके करे ।

दक्षिणेन करेणाथ शङ्खोदकमथाददेत् ॥

प्रक्षिप्य मस्तके विद्वाँस्तीर्थं ग्राह्यं त्रिवृत्ततः ॥

आदित्यपुराणे—अग्राह्यं शिवनिर्माल्यं पत्रं पुष्पं फलं जलम् ।

शालिग्रामस्य सम्पर्कात्सर्वं याति पवित्रताम् ॥ इति ।

पञ्चायतनपूजायां तन्त्रेण निवेदितामित्यर्थः । अयं निषेधस्तु केवलशिवपरो गन्तव्यः । शिवैकभक्तस्य तु ग्राह्यमपि भवति ।

निर्माल्यं धारयेद्भक्त्या शिरसा पार्वतीपतेः ।

राजसूयस्य यज्ञस्य फलं प्राप्नोति निश्चितम् ॥

स्कान्दे—लिङ्गे स्वयम्भुवे बाणे रत्नजे रत्ननिर्मिते ।

सिद्धप्रतिष्ठिते चैव न चण्डाधिकृतिर्भवेत् ॥

यत्र चण्डाधिकारोऽस्ति तद्भोक्तव्यं न मानवैः ।

चण्डाधिकारो न यत्र भोक्तव्यं तत्र भक्तितः ॥

त्रैविक्रम्याम्—बाणलिङ्गे चन्द्रकान्ते सिद्धलिङ्गे स्वयम्भुवि ।
प्रतिमासु च सर्वासु न चण्डाधिकृतिर्भवेत् ॥

तथा—बाणलिङ्गे स्वयम्भूते चन्द्रकान्ते हृदि स्थिते ।
यदर्पणं समं ज्ञेयं शम्भोर्नैवेद्यभक्षणम् ॥

गणेशस्य । स्कन्दपुराणे—

मातृयानसहस्राणि सुरापानशतानि च ।
तत्क्षणे तानि नश्यन्ति गणेशतीर्थवन्दनात् ॥
उच्छिष्टवक्रतुण्डस्य नरो भुङ्क्ते तु भक्तितः ।
राजदानसहस्राणां तेषां फलमवाप्नुयात् ॥

किञ्चिन्नैवेद्यांशं तत्तद्गणेभ्यो दत्वा भक्षयेत् । बाणादयः शिवगणाः, तेभ्यो दद्यात् । तत्र मन्त्रः—

बाणरावणचण्डीशनन्दिभृङ्गिरिटादयः ।
महादेवप्रसादोऽयं सर्वे गृह्णन्तु शाम्भवाः ॥

इति शिवगणेभ्यः ।

रमाब्रह्मादयो देवाः सनकाद्याः शुकादयः ।
श्रीनृसिंहप्रसादोऽयं सर्वे गृह्णन्तु वैष्णवाः ॥

इतिमन्त्रेण विष्णुगणेभ्यः । गणेशस्य तु वक्रतुण्डाय दद्यात् । सूर्यस्य तु चण्डांशवे दद्यात् । शक्त्यास्तु उच्छिष्टचाण्डाल्यै दद्यात् । तत्र नाममन्त्रः ।

अकुर्वन्देवतापूजां भुञ्जीयाद्ब्राह्मणो यदि ।
ग्राससङ्ख्यालोहपिण्डानश्नाति यममन्दिरे ॥
न विश्वाराधनादन्यद्विद्यते कर्मवैदिकम् ।
तस्मादनादिमध्यान्तं नित्यमाराधयेद्धरिम् ॥

इति कूर्मपुराणोक्तेः । निर्माल्यप्रमाणमाह योगिनीतन्त्रे—

मणिमुक्तासुवर्णानि देवदत्तानि यानि च ।
न निर्माल्यं द्वादशाब्दं ताम्रपात्रं तथैव च ॥
पटी शाटी च षण्मासं नैवेद्यं दत्तमात्रतः ।
मोदकं कृसरं चैव यामार्द्धेन महेश्वरि ! ॥

पट्टवस्त्रं त्रिमासाच्च यज्ञसूत्रं त्र्यहः स्मृतम् ।
यावदन्नं भवेदुष्णं परमान्नं तथैव च ।
दत्तं च रुधिरं चैव अहोरात्रेण पार्वति ! ॥
मुहूर्त्तं दधि दुग्धञ्च आज्यं यामेन शाङ्करि ! ।
ताम्बूलं दत्तमात्रेण भवेत्पर्युषितं प्रिये ! ॥

भार्गवार्चने भविष्ये—तुलस्यां विल्वपत्रेषु सर्वेषु जलजेषु च ।
न पर्युषितदोषोऽस्ति मालाकारगृहेऽपि वा ॥

इति श्रीप्रथमशाखीयरामकृष्णविरचिते पारस्करगृह्यसूत्रविव-
रणे संस्कारगणपतौ गृहे देवार्चनविधिः ।

---

## ( नवमीकण्डिका )

अथातः पञ्च महायज्ञा वैश्वदेवादन्नात्पर्युक्ष्य स्वाहाकारैर्जुहुयाद्ब्रह्मणे प्रजापतये गृह्याभ्यः कश्यपायानुमतय इति भूतगृह्येभ्यो मणिके त्रीन्पर्जन्यायाद्भ्यः पृथिव्यै धात्रे विधात्रे च द्वार्ययोः प्रतिदिशं वायवे दिशां च मध्ये त्रीन्ब्रह्मणेऽन्तरिक्षाय सूर्याय विश्वेभ्यो देवेभ्यो विश्वेभ्यश्च भूतेभ्यस्तेषामुत्तरतऽ उषसे भूतानां च पतये परं पितृभ्यः स्वधा नमऽइति दक्षिणतः पात्रं निर्णिज्योत्तरापरस्यां दिशि निनयेद्यक्ष्मैतत्तऽइत्युद्धृत्याग्रं ब्राह्मणायावनेज्य दद्याद्धन्तऽइति यथाऽर्हं भिक्षुकानतिथींश्च सम्भजेरन्बालज्येष्ठा गृह्या यथार्हमश्नीयुः पश्चाद्गृहपतिः पत्नी च पूर्वो वा गृहपतिस्तस्मादु स्वादिष्टं गृहपतिः पूर्वोऽतिथिभ्योऽश्नीयादिति श्रुतेरहरहः स्वाहा कुर्यादन्नाभावे केन चिदाकाष्ठाद्देवेभ्यः पितृभ्यो मनुष्येभ्यश्चोदपात्रात् ॥ ९ ॥

अथ पञ्च महायज्ञाः । तत्र सूत्रम् "अथातः पञ्च महायज्ञाः"

इति। अथ पूर्वोक्तकर्मानन्तरं पञ्च महायज्ञाः व्याख्यास्यन्त इति सूत्रशेषः। महायज्ञा इति कर्मनामधेयम्। ते पञ्चधा भूतयज्ञ-मनुष्ययज्ञ-पितृयज्ञ-देवयज्ञ-ब्रह्मयज्ञभेदात्। तथा च कात्यायनः-

देवभूतपितृब्रह्ममनुष्याणामनुक्रमात्।
महासत्राणि जानीयात्त एव हि महामखाः॥
पञ्चयज्ञविधानन्तु गृही नित्यं न हापयेत्॥

इतिशङ्खवचनान्नित्य एव। तथा च शतपथश्रुतिः-"पञ्चैव महायज्ञास्तान्येव महासत्राणि भूतयज्ञो मनुष्ययज्ञः पितृयज्ञो ब्रह्मयज्ञ" इति। किमर्थं कर्त्तव्यमित्याह। विधानपरिजाते--

पञ्चसूना गृहस्थस्य वर्त्तन्तेऽहरहः सदा।
कण्डनी पेषणी चुल्ली जलकुम्भ उपस्करः॥
एतानि वाहयन्विप्रो बाध्यते वा मुहुर्मुहुः।
एतेषां पावनार्थाय पञ्चयज्ञाः प्रकीर्तिताः॥

हिंसास्थानं सूना। उपस्करो मार्जनादिः।

सायं प्रातर्वैश्वदेवः कर्त्तव्यो बलिकर्म च।
अनश्नतापि सततमन्यथा किल्बिषी भवेत्॥

इति कात्यायनवचनात्। स्मृत्यन्तरेऽपि—

वैश्वदेवविहीना ये आतिथ्येन विवर्जिताः।
ते सर्वे निरयं यान्ति काकयोनिं प्रयान्ति ते॥

यज्ञपार्श्वे कात्यायनः-अनाहिताग्निभिः कार्यो वैश्वदेवो यथाविधि।
अभक्ष्यस्तु भवेत्पाको वैश्वदेवविवर्जितः॥

वीरमित्रोदये स्मृतिः-ततः पञ्चमहायज्ञान्कुर्यादहरहर्द्विजः।
न हापयेत तान्प्राज्ञः श्रूयन्ते हि श्रुतावपि॥

तत्र देवयज्ञो "ब्रह्मणे स्वाहे"त्यादिहोमरूपः। "मणिके त्री" नित्यादि बलिकर्मरूपो भूतयज्ञः। "पितृभ्यः स्वधा नम" इति बलिदानं नित्यश्राद्धं वा पितृयज्ञः। "हन्त" कारातिथिपूजादिरूपो मनुष्ययज्ञः। पञ्चग्रहणात्पञ्चमो ब्रह्मयज्ञः। तदुक्तं सङ्ग्रहे—

अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम्।
होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम्॥

तर्पणं नित्यश्राद्धम्। कात्यायनः—

**श्राद्धं वा पितृयज्ञः स्यात्पित्र्यो बलिरथापि वा॥** इति।

"**पितृभ्यः स्वधा नम**" इति पितृबलिः। एषामनुष्ठानप्रकारमाह—"**वैश्वदेवादन्नात्पर्युक्ष्य स्वाहाकारैर्जुहुया**"दितिसूत्रम्। विश्वे देवा देवता यस्येति वैश्वदेवमन्नम्। ते च देवपितृमनुष्यादयः। कथमेषां देवतात्वमिति चेत्? येन स्मृतावेषां दानं विहितम्। एभ्यो दत्वा शेषभुजा गृहपतिना भवितव्यम्। तस्माद्वैश्वदेवमन्नम्। यदहरहः पच्यते शालाग्नौ तत आदायाग्निं पर्युक्ष्य स्वाहाकारैः सह वक्ष्यमाणैर्मन्त्रैर्जुहुयात्। पर्युक्षणग्रहणाच्च कुशकण्डिकोक्तेतिकर्तव्यताव्युदासः। स्वाहाकारैरिति यज्जुहोति तत्स्वाहाकारैः। शेषा नमस्काराः। आचरन्ति हि बलिकर्मणि नमस्कारान्। यद्वा स्वाहाकारग्रहणं संस्रवव्युदासार्थम्। "**ब्रह्मणे प्रजापतये गृह्याभ्यः कश्यपायानुमतय इति**" इति सूत्रम्। एतैर्मन्त्रैः पञ्चाहुतीर्जुहोति। इतिकारो होमसमाप्त्यर्थः। "**भूतगृह्येभ्य**" इति सूत्रम्। भूतानि च गृह्याणि च भूतगृह्याणि। तेभ्यो बलीन्ददाति। तान्याह "**मणिके त्रीन्पर्जन्यायाद्भ्यः पृथिव्यै**" इति सूत्रम्। मणिके मणिकसमीपे त्रीन्बलीन्दद्यात्। सामीप्यार्थे सप्तमी। "**पर्जन्याय नमः। अद्भ्यो नमः। पृथिव्यै नमः**"। त्रीनितिग्रहणं भूतगृह्येभ्य इति चतुर्थबलिहरणशङ्काव्युदासार्थम्। केचित्तु भूतगृह्येभ्य इत्येवं समन्त्रकं चतुर्थबलिहरणमिच्छन्ति। तदसत्। "**धात्रे विधात्रे च द्वार्ययो**"रितिसूत्रम्। द्वारशाखयोर्मध्ये धात्रे विधात्रे इति द्वौ बली ददाति। "**प्रतिदिशं वायवे दिशाञ्चे**"ति सूत्रम्। दिशं दिशं प्रति इति प्रतिदिशम्। वायवे नम इत्यनेन मन्त्रेण चतुर्दिक्षु एकैकं बलिं दद्यात्। दिशाञ्च यद्दानं तदपि प्रतिदिशं स्वस्वनाममन्त्रैर्ददाति। ततश्च "**प्राच्यै दिशे नम**"इति पूर्वे। "**दक्षिणायै दिशे नम**"इति दक्षिणदिशि। "**पश्चिमायै दिशे नम**"इति पश्चिमे। "**उदीच्यै दिशे नम**"इति उत्तरस्यां

दिशि। "मध्ये त्रीन्ब्रह्मणेऽन्तरिक्षाय सूर्याय विश्वेभ्यो देवेभ्यो विश्वेभ्यो भूतेभ्यस्तेषामुत्तरत" इति सूत्रम्। मध्ये "ब्रह्मणे नमः। अन्तरिक्षाय नमः। सूर्याय नमः" इति त्रीन् बलीन् दद्यात्। आनन्तर्यात्तेषां त्रयाणां बलीनामुत्तरप्रदेशे "विश्वेभ्यो देवेभ्यो नमः। विश्वेभ्यो भूतेभ्यो नमः" इति द्वौ बली दद्यात्। "पितृभ्यः स्वधा नम इति दक्षिणत" इति सूत्रम्। तेषामेव ब्रह्मादिबलीनां त्रयाणां दक्षिणतः दक्षिणप्रदेशे "पितृभ्यः स्वधा नम इति दक्षिणत" इतिमन्त्रेण एकं बलिं दद्यात्। पित्र्यत्वाच्च दक्षिणामुखः प्राचीनावीती पातितवामजानुः भवति। नमस्कारश्चात्र प्रदर्शित आचार्येण स सर्वत्र बलिहरणेषु योजनीयः। समाचारादुक्तमेव "पात्रं निर्णिज्योत्तरापरस्यां दिशि निनयेद्यक्ष्मैतत्त" इति सूत्रम्। पात्रं उद्धरणपात्रं निर्णिज्य प्रक्ष्याल्य तदुदकं ब्रह्मादिबलित्रयाणामेवोत्तरापरस्यां वायव्यां दिशि निनयेत्। "यक्ष्मैतत्ते" इतिमन्त्रेण। अत्र निर्णेजनमित्यध्याहारः। बलिहरणे मध्यादिदेशः शालाया ग्राह्य इति भर्तृयज्ञः। "उद्धृत्याग्रं ब्राह्मणायावनेज्य दद्याद्धन्तत इति" इति सूत्रम्। तत एव वैश्वदेवादन्नादुद्धृत्य अग्रं षोडशग्रासपरिमितं ग्रासचतुष्टयमितं वा ब्राह्मणाय अवनेज्य जलं दत्वा "हन्त त" इति मन्त्रेण दद्यात्। अग्रदानासामर्थ्ये कार्ष्णाजिनिः—

भिक्षां वा पुष्कलां दद्याद्धन्तकारमथापि वा ॥ इति।

मनुः—ग्रासमात्रं भवेद्भिक्षा अग्रं ग्रासचतुष्टयम्।
अग्रं चतुर्गुणीकृत्य हन्तकारोऽभिधीयते ॥

हन्तकाराच्च पूर्वम्—"यथार्हं भिक्षुकानतिथींश्च सम्भजेरन्" इति सूत्रम्। यथार्हं यो यदन्नमर्हति तदन्नमनतिक्रम्य यथार्हं तत् यथा भवति तथा। भिक्षुकान् परिव्राजकब्रह्मचारिप्रभृतीन्। अथ भिक्षुकानाह।

व्यासः—ब्रह्मचारी यतिश्चैव विद्यार्थी गुरुपोषकः।
अध्वगः क्षीणवृत्तिश्च षडेते भिक्षुकाः स्मृताः ॥

तत्र मधुमांसवर्जितं देयम्। एवमितरेषां यथोचितम्। अतिथींश्च अध्वनीनान् सम्भजेरन् भिक्षाभोजनादिदानेन तोषयेरन् गृहमेधिनः।

अतिथिलक्षणमाह । व्याघ्रपादः—

अचिन्तितमनाहूतं वैश्वदेवे व्यवस्थितम् ।
अतिथिं तं विजानीयान्नैकग्रामनिवासिनम् ॥
क्षुधार्त्तस्तृषितश्चैव श्रान्तो गृहमुपागतः ।
प्रयत्नान्नेन वै पूज्यः सोऽतिथिः स्वर्गसङ्क्रमः ॥

अतिथिविमुखगते दोषमाह—

अतिथिर्यस्य भग्नाशो गृहाद्यदि निवर्तते ।
स तस्य दुष्कृतं दत्त्वा पुण्यमादाय गच्छति ॥

वैश्वदेवात्पूर्वं भिक्षुके गृहागते तदा वैश्वदेवार्थमन्नं पृथक् स्थाप्य भिक्षुकाय देयम् । तथा चोक्तं गदाधरभाष्ये—

अकृते वैश्वदेवे तु भिक्षुके गृहमागते ।
उद्धृत्य वैश्वदेवार्थं भिक्षुकं तु विसर्जयेत् ॥

पराशरः—वैश्वदेवकृतं दोषं शक्तो भिक्षुर्व्यपोहितुम् ।
न हि भिक्षुकृतान्दोषान्वैश्वदेवो व्यपोहति ॥

वैश्वदेवसमाप्तौ भिक्षुके आगते तदा मनुराह—

वैश्वदेवे तु निर्वृत्ते यद्यन्योऽतिथिराव्रजेत् ।
तस्मा अन्नं यथाशक्ति प्रदद्यान्न बलिं हरेत् ॥

"बालज्येष्ठा गृह्या यथार्हमश्नीयु"रिति सूत्रम् । बालो ज्येष्ठः प्रथमो येषां ते बालज्येष्ठाः । ते च गृह्याः गृहे भवाः पुत्रपौत्रादयः । यथा योग्यमश्नीयुः भुञ्जीरन् । "पश्चाद्गृहपतिः पत्नी चे"ति सूत्रम् । गृह्याणामशनानन्तरं गृहपतिर्गृहस्वामी पत्नी तत्स्त्री च अश्नीतः । "पूर्वो वा गृहपतिस्तस्मादु स्वादिष्टं गृहपतिः पूर्वोऽतिथिभ्योऽश्नीयादिति-श्रुते"रिति सूत्रम् । गृहपतिर्वा पत्न्याः पूर्वं अश्नीयात् न युगपत् । कुतः ? "तस्मादु स्वादिष्ट"मितिश्रुतेः । अस्यार्थः—तस्मात्स्वात् अन्नात् यत् इष्टं गृहपतिरश्नाति, अतिथिभ्यः अशितेभ्यः पूर्वं पत्न्या इति । "अहरहः स्वाहा कुर्यादन्नाभावे केनचिदाकाष्ठादेवेभ्यः पितृभ्यो मनुष्येभ्यश्चोदपात्रात्"इतिसूत्रम् । अहरहः स्वाहा कुर्यादन्नाभावे

केनचिद्द्रव्येण काष्ठेन वा कार्यः । स्मृत्यर्थसारे—

पक्वाभावे प्रवासे वा तण्डुलानोषधीस्तु वा ।
पयो दधि घृतं वापि कन्दमूलफलादि वा ॥
योजयेद्देवयज्ञादौ जलं वाऽऽपत्सु वा जले ॥

व्यासः—जुहुयात्सर्पिषाऽभ्यक्तं तैलक्षारं विवर्जयेत् ।
दध्यक्तं पयसाऽक्तं वा तदभावेऽम्भसाऽपि वा ॥
इदं स्रुवेण होतव्यं पाणिना कठिनं हविः ॥

विधानपारिजाते—

पाण्याहुतिर्द्वादशपर्वपूरिका घृतादिना चेत्स्रुवमात्रपूरिका ।
दैवेन तीर्थेन च हूयते हविः स्वङ्गारिणि स्वर्चिषि तच्च पावके ॥

उत्तानेन तु हस्तेन अङ्गुष्ठाग्रेण पीडितम् ।
संहताङ्गुलिपाणिस्तु वाग्यतो जुहुयाद्धविः ॥

वर्ज्यद्रव्यमाह—कोद्रवं चणकं माषं मसूरं च कपित्थकम् ।
क्षारं च लवणं सर्वं वैश्वदेवे विवर्जयेत् ॥

स्मृत्यन्तरेऽपि—कोद्रवं वरकं माषं मसूरं च कुलित्थकम् ।
काञ्जीपक्कं परान्नं च वैश्वदेवे तु वर्जयेत् ॥

अथात्र नित्यश्राद्धं कर्तव्यम् । तत्तु साग्नेर्न, पितृबलिनैव सिद्धत्वात् ।
तदुक्तं गदाधरभाष्ये—

कृत्यकृत्पितृयज्ञस्य साग्नेः श्राद्धं न विद्यते ।
नित्यं पित्र्येण बलिना निरग्नेस्तत्तु विद्यते ॥
बलेरभावात्पित्र्यस्य शिष्टात्काकबलिः स्मृतः ॥

विकल्पः प्रतिभाति ।

श्राद्धं वा पितृयज्ञः स्यात्पित्र्यो बलिरथापि वा ।
साग्निकः पितृयज्ञान्तं बलिकर्म समाचरेत् ॥
अनग्निर्हुतशेषं तु काके दद्यादिति स्मृतिः ॥

बलिर्निवेशनम् । सोदकमन्नं भूमौ चाण्डालवायसादिभ्यो निक्षिपेत् । मनुः—

शूनां च पतितानां च श्वपचां पापरोगिणाम् ।

वायसानां क्रिमीणां च शनकैर्निक्षिपेद्भुवि ॥

अथ स्पष्टप्रयोगः । वैश्वदेवपर्याप्तमन्नं पात्रान्तरे उद्धृत्य अभिघार्य पाकादुद्धृतमग्निं कुण्डस्थाग्नौ संयोज्य प्रदीप्य पवित्रपाणिराचान्तः प्राणानायम्य देशकालौ सङ्कीर्त्य "अद्य यज्ञेश्वरप्रीतये पञ्चमहायज्ञान् अहं करिष्ये । तत्र देवान् भूतानि पितॄन् मनुष्यान् वैश्वदेवान्नेन यक्ष्ये"इति सङ्कल्पं कृत्वा मणिकस्थोदकेन ईशानकोणादारभ्य प्रदक्षिणं पर्युक्षणं कृत्वा दक्षिणं जान्वाच्य वामहस्तं हृदि निधाय दक्षिणेन ग्रासार्द्धमानमोदनमादाय, "ॐ ब्रह्मणे स्वाहा । इदं ब्रह्मणे न मम । ॐप्रजापतये स्वाहा । इदं प्रजापतये न मम । ॐगृह्याभ्यः स्वाहा । इदं गृह्याभ्यो न मम । ॐकश्यपाय स्वाहा । इदं कश्यपाय न मम । ॐअनुमतये स्वाहा । इदं अनुमतये न मम" । शेषान्नेन मणिकसमीपे प्राक्संस्थमुदक्संस्थं वा । "ॐपर्जन्याय नमः । इदं पर्जन्याय न मम । ॐअद्भ्यो नमः । इदमद्भ्यो न मम । ॐपृथिव्यै नमः । इदं पृथिव्यै न मम" । इति बलित्रयं दद्यात् । द्वारशाखयोर्दक्षिणोत्तरक्रमेण । "ॐधात्रे नमः । इदं धात्रे० । ॐविधात्रे नमः । इदं विधात्रे०" इति बलिद्वयं दद्यात् । अग्नेः पश्चिमतः चतुर्दिक्षु "ॐवायवे नमः । इदं वायवे०" । इत्यनेनैव बलिचतुष्टयं दद्यात् । चतुर्णां बलीनां प्राक् । "ॐप्राच्यै दिशे नमः । इदं प्राच्यै दिशे न० । "ॐदक्षिणस्यै दिशे नमः । इदं दक्षिणस्यै दिशे० । ॐप्रतीच्यै दिशे नमः । इदं प्रतीच्यै० । ॐउदीच्यै दिशे नमः । इदमुदीच्यै०" इति । सर्वत्र बलीनां मध्ये प्राक्संस्थम् । "ॐब्रह्मणे नमः । इदं ब्रह्मणे० । ॐअन्तरिक्षाय नमः । इदमन्तरिक्षाय० । ॐसूर्याय नमः । इदं सूर्याय०" इति बलित्रयं दद्यात् । बलित्रयस्योत्तरे प्राक्संस्थम् "ॐविश्वेभ्यो देवेभ्यो नमः । इदं विश्वेभ्यो देवेभ्यो० । ॐविश्वेभ्यो भूतेभ्यो नमः । इदं विश्वेभ्यो भूतेभ्यो०" । इति द्वौ बली दद्यात् । तदुत्तरतस्तथैव "ॐउषसे नमः । इदमुषसे० । ॐभूतानां च पतये नमः । इदं भूतानां च पतये०" । इति द्वौ बली

दद्यात् । ततोऽपसव्यं कृत्वा पातितवामजानुः दक्षिणामुखः ब्रह्मबलितो दक्षिणे "ॐपितृभ्यः स्वधा नमः । इदं पितृभ्यः०" इति पितृतीर्थेन एकं बलिं सर्वशेषान्नेन दद्यात् । पात्रं प्रक्षाल्य निर्णेजनजलं वायव्यां दिशि "ॐयक्ष्मैतत्ते निर्णेजनं नमः । इदं यक्ष्मणे०" इत्युत्सृजेत् । अत्र ब्रह्मयज्ञः । वेदमारभ्य प्रत्यहं अध्यायमात्रं अध्यायद्वयं वा यावच्छक्ति जप्त्वा ततः स्मृतिपुराणगाथादि यथाशक्त्या जपेत् । "ॐ"कारः पूर्वं समाप्तौ "स्वस्ती"ति पठेत् । अशक्तौ गायत्रीमात्रं जपेत् । अस्मिन्नवसरे आगतमतिथिं पूजयेत् । तृप्तिपर्यन्तं वा षोडशग्रासमितं चतुर्ग्रासमितं वाऽन्नं "ॐसनकादिमनुष्येभ्यो नमः । इदं सनकादिमनुष्येभ्यो०" इति दद्यात् । ततो गोग्रासः—

"सौरभेय्यः सर्वहिताः पवित्राः पापनाशनाः ।
प्रतिगृह्णन्त्विमं ग्रासं गावस्त्रैलोक्यमातरः ॥"

इति गोभ्यो दद्यात् । ततो वायसबलिः—

"ऐन्द्रवारुणवायव्या याम्या वै नैर्ऋतास्तथा ।
वायसाः प्रतिगृह्णन्तु भूमौ पिण्डं मयार्पितम् ॥"

इति वायसेभ्यो दद्यात् । ततः श्वानबलिः—

"द्वौ श्वानौ श्यामशबलौ वैवस्वतकुलोद्भवौ ।
ताभ्यामन्नं प्रदास्यामि रक्षेतां पथि मां सदा ॥"

इति श्वभ्यः ।

"देवा मनुष्याः पशवो वयांसि सिद्धाश्च यक्षोरगदैत्यसङ्घाः ।
प्रेताः पिशाचास्तरवः समस्ता ये चान्नमिच्छन्ति मया प्रदत्तम् ॥"

इति देवादिभ्यः ।

"पिपीलिकाः कीटपतङ्गकाद्या बुभुक्षिताः कर्मनिबद्धबद्धाः ।
तृप्त्यर्थमन्नं हि मया प्रदत्तं तेषामिदं ते मुदिता भवन्तु ॥

इदं पिपीलिकादिभ्यः ।" पादौ प्रक्षाल्य आचम्य नित्यश्राद्धं कुर्यात् । अयं साग्नेर्वैश्वदेवः । निरग्नेरपि कात्यायनसूत्रोक्त एव वैश्वदेवो भवति । अत्रायं विशेषः । निरग्निना पृष्ठोदिविविधानेन अग्निं प्रतिष्ठाप्य

तत्र कर्तव्यः। तदुक्तं कात्यायनपरिशिष्टे—

"अथातो धर्मजिज्ञासा केशान्तादूर्ध्वमपत्नीकऽउच्छिन्नाग्निरनग्निको वा प्रवासी ब्रह्मचारी विधुरो वाऽन्वग्निरिति ग्रामादग्निमाहृत्य पृष्टो दिवीत्यधिष्ठाप्य समितमिति द्वाभ्यामुपस्थानं व्याहृतिभिस्त्रिभिश्च सावित्रैः प्रज्वाल्य ताꣳसवितुस्तत्सवितुर्विश्वानि देव सवितरिति पुनस्त्वेति समिद्‌ध्य पूर्ववदक्षतैर्हुत्वा पाकं पचेत्तत्र वैश्वदेवं कुर्याद्‌ब्रह्मणे प्रजापतये गृह्याभ्यः कश्यपायानुमतये विश्वेभ्यो देवेभ्योऽग्नये स्विष्टकृतऽइत्यपऽउपस्पृश्य पूर्ववद्‌बलिकर्म नैवङ्कृते वृथा पाको भवति न वृथा पाकं पचेन्न वृथा पाकमश्नीयादत्र पिण्डपितृयज्ञः पश्चाद्याग्रयणानि कुर्या"दिति।

अस्यार्थः—अथशब्दो गृह्यकल्पविहितपञ्चमहायज्ञानन्तर्यप्रज्ञप्त्यर्थः। अतःशब्दो हेत्वर्थः। अग्निमतो गृहस्थस्य तदधिकारात्तद्रहितस्याधिकारस्या विधेयत्वादतो हेतोः। कतिपयधर्मजिज्ञासा। ज्ञातुमिच्छा जिज्ञासा। ज्ञातुमिच्छायां"सुपां सुपो भवन्ती"ति सप्तमीस्थाने प्रथमा युज्यते। केशान्तादूर्ध्वं केशान्तसंस्कारानन्तरमुपकुर्वाणः स्नातको वा। अपत्नीकः अविवाहितपत्नीको मृतपत्नीको वा। उच्छिन्नाग्निः पतिताग्निः संस्थिताग्निर्वा। अनग्निकः कृतदारसङ्ग्रहोऽपि निमित्तवशादधिकाराभावेन अनाहितावसथ्याग्निः। प्रवासी साग्निकश्चिकीर्षितपाकः।

तदुक्तम्—

प्रवसन्नग्निमान्विप्रः पयोमूलफलादिभिः।
कालं नयेदशक्तौ तु विधिना पाकमाचरेत्॥

पाकमात्रविधानादेव साग्निकस्य न प्रवासे वैश्वदेवः। अत एव गर्गोपाध्यायैरुक्तम्। "साग्नेः प्रवासे सति यावत्प्रवासं होमवैश्वदेवयोरभाव"इति। अत्रायं विवेकः—अपत्नीकोच्छिन्नाग्न्यनग्निकानां त्रयाणां पाकपचनपूर्वकं वैश्वदेवार्थमग्न्याहरणम्। प्रवासिब्रह्मचारिणोस्तु पाकार्थमेव न वैश्वदेवार्थम्। ब्रह्मचारिणो वैश्वदेवानधिकारात्। प्रवासिनस्तु गृहे वैश्वदेवस्य कृतत्वेन पाकस्य वैश्वदेवविवर्जितत्वाभावेन चाभक्ष्यत्वा-

भावात्। एकस्मिन्नहनि वैश्वदेवनिषेधाच्च। ब्रह्मचारी नैष्ठिकः। ननु ब्रह्मचारिणः पाकविधानाभावात्,

यतिश्च ब्रह्मचारी च पक्वान्नस्वामिनावुभौ ॥ इति।

अथ कथमेतदुक्तम् ? उच्यते। पितृश्राद्धादौ तस्यापि पाकसम्भवात्। गर्गोपाध्यायस्तु "ब्रह्मचारिणः स्वाग्निविच्छेदे सति अनेनैव विधानेनाग्न्याहरणादि प्रज्वालनान्तं विधाय समिदाधानं कार्यम्। इदं चाग्न्याहरणं समिदाधानार्थम्। पाकस्य तु निवृत्तिस्तस्ये"त्याह। तच्चिन्त्यम्। यतः पारस्करगृह्यकल्पे ब्रह्मचारिणः समिदाधानार्थं नित्यतयाऽग्निधारणस्य विधानाभावात्। यत्र "तस्मिन्नग्नौ पूर्ववदाधाय वाचं विसृजत" इति पारस्करगृह्यं तत्तदहः सम्बन्धिन्यां सायङ्कालीनाग्निपरिचर्यायामुपनयनाग्निनियामकं वेदितव्यम्। "ग्रामादग्नि"मिति लौकिकं न पुनः संस्कृतम्। "पूर्ववदक्षतैर्हुत्वे"ति। पूर्ववदित्यनेन गृह्योक्तं होममात्रं गृह्यते। स च होमः सायंप्रातःकालीनस्तन्त्रेण। "पूर्ववद्बलिकर्मे"ति। अत्र मणिकाभावादुदकुम्भसमीपे पर्जन्यादिभ्यस्त्रिभ्यो दानम्। "अद्भ्य उदकुम्भ" इति गौतमाभिधानात्। "उदपानसन्निधा"विस्यापस्तम्बवचनाच्च। शेषं निगदव्याख्यातम्। "विवाहादूर्ध्वमावसथ्याधानात्पूर्वं पृष्ठोदिविविधानेनाभ्युदयिकपूर्वकमग्निं स्थापयित्वा नित्यहोमादि कुर्या"दिति हरिहरः। तथा च प्रसवोत्थानपरिशिष्टेऽपि "अथ सम्राडिति होवाच भगवान्याज्ञवल्क्यऽउच्छिन्नाग्नीनां को विधिः स्यात्स होवाच देवपितृमनुष्याणां निर्वपणार्थं पाकश्रपणं प्रसवार्थविधिं वक्ष्यामि विधानेनाग्निमुपसमाधाय ब्राह्मणानां च न वृथा पाको भवति केशान्तादूर्ध्वमपत्नीकस्योच्छिन्नाग्नेरनग्निकस्य ग्रामादन्वग्निरित्यग्निमाहृत्य पृष्ठो दिवीत्यधिष्ठाप्य त्रिभिश्च सावित्रैः प्रज्वाल्य तत्सवितुस्ता सवितुर्विश्वानि देव सवितरित्येवं प्रणीतो भवति पूर्ववदक्षतैर्हुत्वा पाकं श्रपयेत्तत्र वैश्वदेवं कुर्याद्ब्रह्मणे प्रजापतये गृह्याभ्यः कश्यपायानुमतये विश्वेभ्यो देवेभ्योऽग्नये स्विष्टकृत इति पूर्ववद्बलिं हरेन्न वृथा पाकं श्रपयेन्न

वृथा पाकमश्नीयात्तस्मादेवं न वृथापाको भवति गृहस्थो ब्रह्मचारी प्रवासी वा आमं भैक्ष्यमाहरेत्पश्चादिपिण्डपितृयज्ञाग्रयणञ्चेति"। अथापद्यालस्यादिना पृष्ठोदिविविधानं न करोति, तदा शाकलोक्तवैश्वदेवः कार्यः। यज्ञपार्श्वे कात्यायनः—

अनाहिताग्निभिः कार्यो वैश्वदेवो यथाविधि।
अभक्ष्यस्तु भवेत्पाको वैश्वदेवविवर्जितः॥

इत्युक्त्वा, सभार्यो योऽगृहीताग्निर्विधुरः स्नातकोऽपि वा।

व्याहृतिभिः समस्ताभिर्व्यस्ताभिश्च ततः परम्॥
हुत्वा तु शाकलैर्मन्त्रैः प्राजापत्यं ततः परम्।
स्विष्टकृच्च हुनेदन्ते देवयज्ञोऽयमीरितः॥
भूतयज्ञं ततः कुर्यात्पर्जन्यादित्रिकं विना।
नित्यश्राद्धं निरग्नेः स्यात्साग्नेः पित्र्यो बलिः स्मृतः॥

तथा च विधानपरिजाते व्यासः—

अनग्निकस्तु यो विप्रऽआदायान्नं घृतप्लुतम्।
शाकलोक्तविधानेन जुहुयाल्लौकिकेऽनले॥
व्यस्ताभिर्व्याहृतीभिस्तु समस्ताभिस्ततः परम्।
षड्भिर्देवकृतस्येतीत्यादिमन्त्रैर्यथाक्रमम्॥
प्राजापत्यं स्विष्टकृतं हुत्वैवं द्वादशाहुतीः।
ॐकारपूर्वः स्वाहान्तस्त्यागः शिष्टविधानतः॥

देवकृतस्येति षण्मन्त्रास्तु—

ॐदेवकृतस्यैनसोऽवयजनमसि स्वाहा॥ १॥
ॐमनुष्यकृतस्यैनसोऽवयजनमसि स्वाहा॥ २॥
ॐपितृकृतस्यैनसोऽवयजनमसि स्वाहा॥ ३॥
ॐआत्मकृतस्यैनसोऽवयजनमसि स्वाहा॥ ४॥
ॐएनसऽएनसोऽवयजनमसि स्वाहा॥ ५॥

ॐयच्चाहमेनो विद्वाँश्चकार यच्चाविद्वाँस्तस्य सर्वस्यैनसोऽवयजनमसि स्वाहा। इदमग्नये न मम"ति सर्वत्र त्यागः। अथ बलि-

दानम्—

भुवि दर्भान्समास्तीर्य बलिकर्म समाचरेत् ।
विश्वेभ्यो देवेभ्य इति सर्वभूतेभ्य एव च ॥
भूतानां पतये चेति नमस्कारेण शास्त्रवित् ।
दद्याद्बलित्रयं चाग्रे पितृभ्यश्च स्वधा नमः ॥
पात्रनिर्णेजनं वारि वायव्यां दिशि निक्षिपेत् ।
इदमन्नं मनुष्येभ्यो हन्तेत्युक्त्वा समुत्सृजेत् ॥
गोत्रनामस्वधाकारैः पितृभ्यश्चापि शक्तितः ।
षड्भ्योऽन्नमन्वहं दद्यात्पितृयज्ञविधानतः ॥
ततोन्यदन्नमादाय निर्गत्य भवनाद्बहिः ।
काकेभ्यः श्वपचेभ्यश्च प्रक्षिपेद्ग्रासमेव च ॥
उपविश्य गृहद्वारि तिष्ठेद्यावन्मुहुर्त्तकम् ।
अप्रमत्तोऽतिथिं लिप्सुर्भावशुद्धः प्रतीक्षकः ॥ इति ॥

अथ नित्यश्राद्धम् । मनुः—

दद्यादहरहः श्राद्धमन्नाद्येनोदकेन वा ।
पयोमूलफलैर्वापि पितृभ्यः प्रीतिमावहन् ॥
पितॄनुद्दिश्य विप्राँस्तु भोजयेद्विप्रमेव वा ॥

अत्र विशेषमाह व्यासः—आवाहनं स्वधाकारः पिण्डाग्नौकरणं तथा ।
ब्रह्मचर्यादिनियमो विश्वेदेवास्तथैव च ॥
नित्यश्राद्धे त्यजेदेतान्भोज्यमन्नं प्रकल्पयेत् ॥

याज्ञवल्क्योऽपि—नित्यश्राद्धं दैवहीनं नियमादिविवर्जितम् ।
दक्षिणारहितं चैव दातृभोक्तृव्रतोज्झितम् ॥

अत्र दक्षिणानिषेधो यथोक्तदक्षिणापरः । न तु तत्सामान्यपरः ।

दत्वा तु दक्षिणां शक्त्या नमस्कारैर्विसर्जयेत् ॥ इति ।

नित्यश्राद्धप्रकरणे व्यासोक्तेः । इदं श्राद्धं षट्दैवतम् । तथा च व्यासः—

तत्तु षट्पुरुषं ज्ञेयं दक्षिणापिण्डवर्जितम् ॥

इदं यत्रामावास्याश्राद्धादौ षडपि देवता इष्टास्तत्र न भवति, यत्र साम्वत्सरिकादौ नेष्टास्तत्र भवति।

नित्यश्राद्धं न कुर्वीत प्रसङ्गाद्यत्र सिद्धयति।

इति चमत्कारखण्डोक्तेः। अथ श्राद्धदिने वैश्वदेवनिर्णयः। अयं वैश्वदेवः साग्नेः पूर्वं निरग्नेः पश्चाद्भवति। हेमाद्रौ—

पक्षान्तं कर्म निर्वृत्य वैश्वदेवं च साग्निकः।
पिण्डयज्ञं ततः कुर्यात्ततोऽन्वाहार्यकं बुधः॥ इति।

आन्वाहार्यं दर्शश्राद्धम्। विधानपारिजाते—

वैश्वदेवाहुतिरग्नावर्वाग्ब्राह्मणभोजनात्।
पितॄन्सन्तर्प्य विधिवद्बलिं दद्याद्विधानतः॥ इति।

अत्र वैश्वदेवार्थं पृथक् पाकः कार्यः। तथा च विधानपारिजाते लौगाक्षिस्मृतिः—

पित्रर्थं निर्वपेत्पाकं वैश्वदेवार्थमेव च।
वैश्वदेवं न पित्रर्थं न दार्शं वैश्वदैविकम्॥

तत्तु शाखान्तरविषयम्। "उद्धृत्य घृताक्तमन्नं पृच्छत्यग्नौ करिष्य इति।" इतिसूत्रव्याख्याने कर्काचार्येण तथा व्याख्यातत्वात्। अतः कात्यायनानां तु उभयार्थमेक एव पाकः। "वैश्वदेवादन्नादि" तिसूत्रस्मरणाच्च। साग्नेरपि क्वचिदन्ते भवति। हेमाद्रौ शालङ्कायनः—

श्राद्धात्प्रागेव कुर्वीत वैश्वदेवं तु साग्निकः।
एकादशाहिकं मुक्त्वा तत्र ह्यन्ते विधीयते॥

परिशिष्टेऽपि—सम्प्राप्ते पार्वणश्राद्ध एकोद्दिष्टे तथैव च।
अग्रतो वैश्वदेवः स्यात्पश्चादेकादशेऽहनि॥ इति।

कातीयानां तु श्रौतस्मार्तवतामादावेव। निरग्निकानामन्ते। तथा च यज्ञपार्श्वे कात्यायनः—

यदा श्राद्धं पितृभ्यश्च दातुमिच्छत्यनग्निमान्।
वैश्वदेवं तदा कुर्यान्निवृत्ते श्राद्धकर्मणि॥

षट्त्रिंशन्मते—प्रातिवारसारिको होमः श्राद्धादौ क्रियते यदि ।
देवा हव्यं न गृह्णन्ति कव्यं च पितरस्तथा ॥
पैठीनसिरपि—पितृपाकं समुद्धृत्य वैश्वदेवं करोति यः ।
आसुरं तद्भवेच्छ्राद्धं पितॄणां नोपतिष्ठति ॥

श्राद्धशेषेण तदिति स एवाह—
श्राद्धाहि श्राद्धशेषेण वैश्वदेवं समाचरेत् ।
पञ्चयज्ञाँश्च अन्ते च ॥ इत्यादि ।

सुदर्शनभाष्ये मार्कण्डेयः—
ततो नित्यक्रियां कुर्याद्भोजयेच्च ततोऽतिथीन् ।
ततस्तदन्नं भुञ्जीत सह भृत्यादिभिर्वरः ॥
ततः श्राद्धशेषात् । चतुर्विंशतिमतेऽपि—
श्राद्धं निर्वृत्य विधिवद्वैश्वदेवादिकं ततः ।
कुर्याद्भिक्षां ततो दद्याद्धन्तकारादिकं ततः ॥ इति ।

मेधातिथिस्मृतिरत्नावलीकारगदाधरादयोऽप्येवमेव । बहुस्मृत्युक्तत्वात्सर्वेषां निरग्निकानां श्राद्धान्त एव वैश्वदेवः । कचिन्निरग्निकानामपि श्राद्धात्प्रागेव वैश्वदेवः । साङ्ख्यायनपरिशिष्टे—
वृद्धावादौ क्षये चान्ते दर्शे मध्ये च कुर्वते ।
महालये च पिण्डान्ते वैश्वदेवो विधीयते ॥
रेणुकारिकायामपि—निर्णेजनान्तं निर्वृत्य वैश्वदेवं द्विजोत्तमः ।
श्राद्धं करिष्ये संकल्प्य तत्कृत्वा पूर्ववत्स्थितः ॥

अतो निरग्निनाऽप्याभ्युदयिकश्राद्धे चिकीर्षिते पूर्वं वैश्वदेवः कार्यः। अत्र कठकाण्वादेरपि विशेषः । साग्निनिरग्न्योः पूर्वम् । तदुक्तं विधानपारिजाते—
श्राद्धकर्माणि निर्वृत्य वैश्वदेवं विधाय च ।
ततो गृहबलिः कार्यः कठकाण्वादिकान्विना ॥
धर्मानुशासनेऽपि—निर्वृत्य श्राद्धयज्ञं वै वैश्वदेवं विधाय च ।
ततो गृहबलिर्देयः कठकाण्वादिकान्विना ॥ इति ।

न चायमपि साग्निपरत्वेन नेयः। अनग्निकवैश्वदेवप्रकरण एव व्यवस्थापनात्, न साग्निपरत्वेन वर्णने। रूपनारायणीयकल्पलतायामपि—

साग्निकास्तद्विहीनाश्च कठकाण्वादिकास्तु ये।
श्राद्धात्प्रागेव ते कुर्युर्वैश्वदेवं यथाविधि॥

रुद्रकल्पद्रुमे बृहत्पराशरः–वैश्वदेवोऽग्रतश्चैव साग्नेर्हीनाग्निकस्य च।
कर्त्तव्यः पाकशुद्ध्यर्थं भुक्तोच्छिष्टं विवर्जयेत्॥

स्मृत्यन्तरेऽपि—याजुषाः सामगाः पूर्वं मध्ये जुह्वति बह्वृचाः।
आथर्वणैश्च पिण्डान्ते वैश्वदेवं विधीयते॥

बह्वृचां श्राद्धान्त एवेति वोपदेवः। अथ वैष्णवानां विशेषमाह।
विधानपारिजाते—

विष्णोर्निवेदितान्नेन यष्टव्यं देवतान्तरम्।
पितृभ्यश्चापि तद्देयं तदानन्त्याय कल्पते॥

पञ्चरात्रे—साग्नेस्तद्रहितस्यापि वैष्णवस्य विशेषतः।
श्राद्धं नैवेद्यशेषेण वैश्वदेवादिपूर्वकम्॥

आदिशब्दाद्बलिहरणम्। विधानपारिजाते स्मृतिः—

पितृशेषं तु यो दद्याद्धरये परमात्मने।
रेतोदाः पितरस्तस्य भवन्ति क्लेशभागिनः॥ इति।

स्थालीपाकदिने विशेषमाह देवलः—

अकृते वैश्वदेवे तु स्थालीपाकाः प्रकीर्तिताः।
अन्यत्र पितृयज्ञात्तु सोऽपराह्णे विधीयते॥

स्थालीपाका इति बहुवचनं स्थालीपाकसाध्यकर्मोपलक्षकम्।

अथ विभक्तवैश्वदेवः—

साग्निकोऽप्येकपाकाः स्युः पुत्रभ्रात्रादयो यदि।
न पृथक् वैश्वदेवाः स्युः स्वपाकान्निर्वपेद्गृही॥
एकपाके निवसतां पितृदेवार्चनादिकम्।
एकं भवेद्विभक्तानां तदेव स्यात्पृथक् पृथक्॥
संस्कारा नाशिनः सर्वे कुर्यान्नित्यत्वसिद्धये।

संसृष्टा भ्रातरः कुर्युर्ब्रह्मयज्ञं पृथक् पृथक् ॥

सच्छूद्रस्यापि वैश्वदेव उक्तो याज्ञवल्क्येन—

भार्यारतिः शुचिर्भृत्यो भर्ता श्राद्धक्रियापरः ।
नमस्कारेण मन्त्रेण पञ्चयज्ञान्न हापयेत् ॥ इति ।

न हापयेत् किन्तु अनुतिष्ठेत् । नमस्कारमन्त्रो वायुपुराणे—

देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च ।
नमः स्वाहायै स्वधायै नित्यमेव नमो नमः ॥

शूद्रेण पञ्चमहायज्ञा आमद्रव्येण कार्याः, पक्वेन निषिद्धत्वात् ।

पाकाभावे प्रवासे च तण्डुलानोषधीस्तथा ।
पयो दधि घृतं वाऽपि कन्दमूलफलानि च ॥

इति स्मृत्युक्तानुकल्पद्रव्येण पञ्चमहायज्ञान् कृत्वा तद्द्रव्यं विप्रकुले प्रवेशयितव्यमिति शास्त्ररहस्यम् । अथ वैश्वदेवः कुत्र कर्तव्य इत्यपेक्षायामाह । शातातपः—

लौकिके वैदिके वाऽपि हुतोच्छिष्टे जले क्षितौ ।
वैश्वदेवन्तु कुर्वीत पञ्चसूनापनुत्तये ॥

वैदिके आवसथ्याग्नौ । हुतोच्छिष्टे अन्येन होमं कृत्वा त्यक्ते । शेषं प्रसिद्धम् । अङ्गिराः—

शालाग्नौ तु पचेदन्नं लौकिके वाऽपि नित्यशः ।
यस्मिन्नग्नौ पचेदन्नं तस्मिन्नग्नौ विधीयते ॥

अथ चलकुण्डं वायवीयसंहितायाम्—

अथाग्निकार्यं वक्ष्यामि कुण्डे वा स्थण्डिलेऽपि वा ।
वेद्यां वाप्यायसे पात्रे मृण्मये च नवे शुभे ॥
स्थण्डिलं वालुकाभिर्वा रक्तमृद्रजसाऽपि वा ॥

क्रियासारे—कुण्डमन्त्रोक्तमार्गेण मृदमालेपयेत्तथा ।
ताम्रेण लक्षणोपेतं कुर्यान्मृत्तिकयापि वा ॥
एतत्कुण्डं चराचार्यो गृह्णीयान्न स्थिरार्चने ॥

अथ कुण्डशुद्धिमाह—अम्लेन ताम्रकं कुण्डं मृण्मयं गोमयाम्भसा ।

सौधञ्च सुधया सम्यक्शोधयेदमरर्षभ ! ॥

चुल्ल्यां वैश्वदेवो निषिद्धः । विधानपरिजाते—

चुल्लीहोमो ब्रह्मदानमनृतौ गमनं तथा ।
असङ्ख्यातन्तु यज्जप्तं तत्सर्वं निष्फलं भवेत् ॥

तथा—न पश्येद्भूबलिं वीर ! दत्वा गृहबलीन्द्विजः ।
स्वयं नैवोद्धरेन्मोहाद्यदि तच्छ्रीर्विनश्यति ॥

गालवः—वैश्वदेवं दिवा नक्तं न भवेच्चेत्पृथक् पृथक् ।
प्रातरेव द्विरावृत्त्या कर्तव्यं स्मृतिशासनात् ॥

विधानपरिजातेऽपि—दिवा वा यदि वा रात्रौ क्रियते वैश्वदेविकम् ।
द्विरावृत्त्या तदा कुर्यादिति वेदविदो विदुः ॥

एतच्च यच्छाखायां सायं प्रातर्वैश्वदेवो विहितस्तद्विषयम् । तथा-न्यद्विशेषं मदनपरिजाते । जमदग्निः—

वैश्वदेवं तथा रात्रौ कुर्याद्बलिहृतिस्तथा ।
महतः पञ्चयज्ञांस्तु दिवैवेत्याह धर्मवित् ॥

अस्यार्थः-येषां तु शाखिनां ब्रह्मयज्ञव्यतिरिक्तमहायज्ञानां वैश्वदेवे बलिहरणे चान्तर्भावस्तेषां वाजसनेयादीनां दिवैव वैश्वदेवाख्यं कर्म न रात्रौ । येषां तु स्वशाखायां कालद्वयेऽपि तद्विधानमस्ति नास्ति वा तेषा-माश्वलायनादीनां कालद्वयेऽपि भवति इति निर्णयः ।

इति श्रीप्रथमशाखीयरामकृष्णविरचिते पारस्करगृह्यसूत्रविव-रणे संस्कारगणपतौ द्वितीयकाण्डे नवमी कण्डिका ।

---

अथ भोजनविधानम् । तत्र मनुः—

सायं प्रातर्द्विजातीनामशनं श्रुतिचोदितम् ।
नान्तरा भोजनं कुर्यादग्निहोत्रसमो विधिः ॥

गोभिलः-ततो भोजनवेलायां कृत्वाचारान्सदात्मवान् ।
पोष्यवर्गसमोपेतो भोजनं कारयेद्बुधः ॥

पोष्यवर्गमाह–माता पिता गुरुर्भार्या पुत्रो दासस्तथैव च ।
अभ्यागतोऽतिथिश्चापि पोष्यवर्ग इति स्मृतः ॥
याज्ञवल्क्यः–सम्भोज्यातिथिभृत्यांश्च दम्पत्योः शेषभोजनम् ।
बालस्ववासिनीवृद्धगर्भिण्यातुरकन्यकाः ॥

दम्पत्योरपि मध्ये पूर्वं गृहपतिः श्रेष्ठान्नमश्नीयात् ततः पत्नीति ।

महाभारते दानधर्मे––

भृत्यातिथिषु यो भुङ्क्ते भुक्तवत्सु नरः सदा ।
अमृतं केवलं भुङ्क्ते इति विद्धि युधिष्ठिर ! ॥

हस्तौ पादौ मुखं प्रक्षाल्य इति अङ्गानि आर्द्राणि कुर्वन्भोजनं कुर्यात् । तथा च व्यासः––

पञ्चार्द्रो भोजनं कुर्यात्प्राङ्मुखो मौनमास्थितः ।
हस्तौ पादौ तथैवास्यमेषा पञ्चार्द्रता मता ॥
मनुः––आयुष्यं प्राङ्मुखो भुङ्क्ते यशस्यं दक्षिणामुखः ।
श्रियं प्रत्यङ्मुखो भुङ्क्ते न कदाचिदुदङ्मुखः ॥

एतत्काम्यम् । नित्यविधिस्तु––

प्राङ्मुखोऽन्नानि भुञ्जीत तथोत्तरमुखोऽपि वा ।

जीवन्मातृकस्य दक्षिणामुखभोजननिषेधः । तथा चापस्तम्बः––"अनायुष्यं त्वेवंमुखस्य भोजनं मातुरित्युपदिशन्ती"ति । पुत्रवत उत्तरामुखभोजननिषेधः । आचारप्रदीपे––

पुत्रवान्स्वगृहे नित्यं नाश्नीयादुत्तरामुखः ।
सोमवारे तथात्यन्तं वर्जयेत्तु सदा बुधः ॥
ब्रह्मपुराणे–उपलिप्ते समे स्थाने शुचौ शुद्धासनान्विते ।
मण्डलं गोमयेन स्यादथ वा गौरमृत्स्नया ॥
आसनमाह मनुः–श्रीपर्णी च शमी शल्की कदम्बश्चारणस्तथा ।
पञ्चासनोपविष्टस्तु स्नानहोमादिकं चरेत् ॥
वर्ज्यमुक्तं प्रचेतसा–गोशकृन्मृण्मयं भिन्नं तथा पालाशपिप्पलम् ।
लोहबद्धं सदैवार्कं वर्जयेदासनं बुधः ॥

मण्डलान्याह व्यासः—चतुरस्रं त्रिकोणं च वर्तुलं चार्द्धचन्द्रकम्।
कर्त्तव्यमानुपूर्व्येण ब्राह्मणादिषु मण्डलम्॥
शङ्खः--आदित्या वसवो रुद्रा ब्रह्मा विष्णुस्तथैव च।
मण्डलान्युपजीवन्ति तस्मात्कुर्वीत मण्डलम्॥
यातुधानाः पिशाचाश्च असुरा राक्षसास्तथा।
हरन्ति रसमन्नस्य मण्डलेन विवर्जितम्॥
भोजनपात्रमाह पैठीनसिः-एक एव तु यो भुङ्क्ते विमले कांस्यभाजने।
चत्वारि तस्य वर्द्धन्ते आयुः प्रज्ञा यशो बलम्॥
विधानपरिजाते स्मृतिः--सौवर्णे राजते चैव पात्रे भोजनमाचरेत्।
ताम्रपात्रे भोजननिषेधः। वृद्धमनुः--
ताम्रपात्रे न भुञ्जीत भिन्नकांस्ये मलान्विते॥ इति।
स्वीयपात्रे सर्वदा भोज्यम्। स्मृतिः--
परपात्रेषु भुञ्जानः प्राजापत्यं चरेद्द्विजः॥ इति।
पात्रपरिमाणमाह योगी—पञ्चाशतः पलादूर्ध्वं महाभाजनमिष्यते।
नातिदीर्घं नातिह्रस्वं रत्निमात्रप्रमाणकम्॥ इति।
ग्रन्थान्तरे तु—पलविंशतिमारभ्य अत ऊर्ध्वं यथेच्छया।
इदमेव गृहस्थानां न यतिब्रह्मचारिणाम्॥ इति।
तत्समन्ताल्लघुपात्राणि निधेयानि न तन्मध्ये। महाभारते—
लघीयांस्यपि पात्राणि भूमौ स्थाप्यानि भारत!।
पयःशाकादिभुक्त्यर्थं न महाभाजनोपरि।
ताम्बूलाभ्यञ्जनं चैव कांस्यपात्रे च भोजनम्।
यतिश्च ब्रह्मचारी च विधवा च विवर्जयेत्॥
पारणाहे तथा श्राद्धे वर्जयेत्कांस्यभोजनम्।
यो मोहाद्यदि भुञ्जीत कृतं कर्म च निष्फलम्॥
पात्रशुद्धिमाह—भस्मना शुद्ध्यते कांस्यं ताम्रमम्लेन शुद्ध्यति।
रजसा शुद्ध्यते नारी नदी वेगेन शुद्ध्यति॥
कांस्यपात्राभावे यमः—रम्भाकूटजमध्वाम्रजम्बूपनसचम्पकाः।

पद्मोदुम्बरपालाशब्रह्मपत्रं पवित्रकम् ।

अथ निषिद्धानि अत्रिः—

वटार्काश्वत्थपत्रेषु कुम्भीतिन्दुकपत्रयोः ।

कोविदारकदम्बानां भुक्त्वा चान्द्रायणं चरेत् ॥

प्रयोगपारिजाते गर्गः—रम्भापत्रपलाशेषु यः कुर्यात्पारणं क्वचित् ।

सप्तजन्मकृतं पुण्यं तत्क्षणादेव नश्यति ॥

करे खर्परके चैव शिलायां ताम्रभाजने ।

भिन्नकांस्ये च वस्त्रे च न भुञ्जीत तथायसे ॥

अथ पात्रे परिवेषणमाह यमः—

अन्नं मध्ये प्रतिष्ठाप्य दक्षिणे घृतपायसे ।

शाकादि पुरतः स्थाप्य भक्ष्यं भोज्यं च वामतः ॥

परिवेषणक्रममाह—अन्नं च पायसं भक्ष्यं घृतं च व्यञ्जनादिकम् ।

शर्करा च कथा चैव अन्ते च सूपमेव च ॥

षट्त्रिंशन्मते—ओदने परमान्ने च घृतपात्रस्थितिर्यदि ।

एतदाज्यं भवेद्रक्तं तदन्नं म(।)समुच्यते ॥

धर्मप्रवृत्तौ–ओदने पायसे चैव व्यञ्जने सूपके तथा ।

घृतपात्रं तु गो धृत्वा रौरवं नरकं व्रजेत् ॥

विधानपारिजाते ब्राह्मे—सैन्धवं लवणं चैव तथा मानससम्भवम् ।

पवित्रे परमे ह्येते प्रत्यक्षे च न दुष्यतः ॥

सामुद्रं भूमिजं चैव प्रत्यक्षे चैव दुष्यतः ॥

तस्मादिदं द्रव्यान्तरयुतं परिवेष्यम् । गर्गः–

सत्यन्त्वर्त्तेन वै प्रातर्वारिणा परिषेचयेत् ।

सायङ्काले तथैव स्याद्दतन्त्वेत्यादितः क्रमात् ॥

भविष्यपुराणे–उद्धृत्य किञ्चिदन्नाग्रं धर्मराजाय वै बलिम् ।

दत्वाऽथ चित्रगुप्ताय भूतेभ्यश्च तथैव च ॥

अन्नेनैव घृताक्तेन नमस्कारेण वै भुवि ।

तिस्र एवाहुतीर्दद्याद्भोजनादौ तु दक्षिणे ॥

केचित्तु–भूपतये भुवनपतये भूतानां पतये नमः ।

एवं बलित्रयं दद्याद्भोजनादौ विशेषतः ॥

अत्राचारतो व्यवस्था—

एकाहुतिं त्रिधा कृत्वा आपोशाने तथानके ।
लाजाहोमे प्रकुर्वीत इति शातातपोऽब्रवीत् ॥

चित्राहुतिः प्रदक्षिणक्रमेण । सङ्ग्रहे—

परिषिञ्चनमारभ्य प्रदक्षिणक्रमेण तु ।
अपसव्यं च चित्रान्नं भुक्त्वा चान्द्रायणं चरेत् ॥

मनुः—दत्वा तु चित्रगुप्ताय हस्तं प्रक्षालयेद्द्विजः ।
अप्रक्षालितकरो भुङ्क्ते रौरवं नरकं व्रजेत् ॥

स्मृत्यन्तरे—चित्राहुतिमनुद्धृत्य यो भुङ्क्ते ग्रासपञ्चकम् ।
अघं स केवलं भुङ्क्ते ज्ञानतोऽज्ञानतोऽपि वा ॥

चन्द्रिकायां दक्षः—भोजनादौ बलिं मुक्तं समुद्धृत्य हि भोजनम् ।
अनुद्धृत्य च यो भुङ्क्ते रौरवं नरकं व्रजेत् ॥

प्राणायामाष्टकं जपेदित्यपि पाठः ।

उक्त्वाऽमृतोपस्तरणमसि स्वाहान्तमेव च ।
आपोशानं तदित्याहुर्भोजनादौ पिबेज्जलम् ॥
आपोशानमकृत्वा तु यो भुङ्क्ते द्विजसत्तमः ।
अभोज्यं तद्भवेदन्नं भुक्त्वा दोषमवाप्नुयात् ॥
तद्दोषपरिहारार्थं प्राणायामं समाचरेत् ।
आपोशनार्थं यत्तोयं धृतं चेन्निःसृतं भवेत् ॥
हस्तं प्रक्षाल्य तोयेन पुनर्वै धारयेज्जलम् ।
आपोशानं करे कृत्वा यथाशीर्वचनं पठेत् ॥
अभोज्यं तद्भवेदन्नं दाता भोक्ता च किल्बिषी ।
यो यस्यान्नं समश्नाति स तस्याश्नाति किल्बिषम् ॥
तद्दोषपरिहारार्थं मन्त्रमेतमुदीरयेत् ।
अन्नं ब्रह्म रसो विष्णुर्भोक्ता देवो महेश्वरः ॥
एवं ध्यात्वा तु यो भुङ्क्ते सोऽन्नदोषैर्न लिप्यते ।

प्राणाहुतीरभुक्त्वा तु यश्चान्नं परिमर्दयेत् ॥
मर्दिते भोजयेद्यस्तु प्राजापत्यं ततश्चरेत् ॥

चित्राहुतिदानानन्तरं हस्तं प्रक्षाल्य पङ्क्तिदोषसम्भावनायां जलधारादिना पङ्क्तिं भिन्द्यादित्युक्तं पारिजाते वृद्धमनुना–

एकपङ्क्त्युपविष्टानां दुष्कृतं यद्दुरात्मनाम् ।
सर्वेषां तत्समं तावद्यावत्पङ्क्तिर्न भिद्यते ॥

धर्मप्रवृत्तौ—एकपङ्क्त्युपविष्टानां विप्राणां सह भोजने ।
यद्येकोऽपि त्यजेत्पात्रं शेषमन्नं न भोजयेत् ॥

विधानपारिजाते—अग्निना भस्मना चैव स्तम्भेन सलिलेन वा ।
द्वारेणैव च मार्गेण पङ्क्तिभेदो बुधैः स्मृतः ॥

धर्मप्रवृत्तावपि—अग्निना भस्मना चैव स्तम्भेन सलिलेन वा ।
अन्तरे द्वारदेशे तु पङ्क्तिदोषो न विद्यते ॥

याज्ञवल्क्यः—आपोशनेनोपरिष्टादधस्तादशनं तथा ।
अनग्नममृतं चैव कार्यमन्नं द्विजन्मना ॥

दक्षः—शब्देनापोशनं पीत्वा शब्देन घृतपायसम् ।
शब्देनापः पयः पीत्वा सुरापानसमं भवेत् ॥

विधानपारिजाते—आर्द्रामलकमानं तु यद्वा बदरिमात्रकम् ।
प्राणाहुतिप्रमाणं च सघृतान्नस्य तद्भवेत् ॥
घृतहीनं तु यो भुङ्क्ते नरस्त्वाहुतिपञ्चकम् ।
पश्चादघृतेन यो भुङ्क्ते द्विजश्चान्द्रायणं चरेत् ॥
घृताभावे तु गव्येन संस्कुर्वीत जलेन वा ॥

गव्येन दुग्धादिना इत्यर्थः । पराशरः—

मुखे चान्नस्य निक्षेपो मन्त्रैः प्राणादिपञ्चभिः ।
भोजनं तद्धि विज्ञेयं तत्रैव नियमाः स्मृताः ॥
पात्रालम्भस्तथा मौनं तदूर्ध्वमपि चेच्छया ॥

शौनकः—स्वाहान्ताः प्रणवाद्याश्च नाम्ना मन्त्रास्तु वायवः ।
जिह्वया च ग्रसेदन्नं दशनेन न संस्पृशेत् ॥

तथैव षष्ठीं दद्यात्तु सचैतन्ये सुखात्मनि ॥

स्मृतिसारसमुच्चये—तर्जनीमध्यमाङ्गुष्ठलग्ना प्राणाहुतिर्भवेत् ।
मध्यमानामिकाङ्गुष्ठैरपाने जुहुयाद्धविः ।
कनिष्ठानामिकाङ्गुष्ठैर्व्याने तु जुहुयाद्बुधः ॥
कनिष्ठातर्जन्यङ्गुष्ठैरुदानाय हुनेद्धविः ।
सर्वाङ्गुलिभिरादाय समानस्याहुतिर्भवेत् ॥
तथैव षष्ठीं जुहुयात्सचैतन्ये सुखात्मनि ॥

केचिद् "ब्रह्मणे स्वाहे"ति सप्तमीमाहुः । "श्रद्धायां प्राणे निविष्टोऽमृतं जुहोमी"त्यारण्यके । इदं च प्राणाग्निहोत्रमिति ज्ञेयम् । तदुक्तं शतपथब्राह्मणे—"ते पुरुषमाविशतस्तस्य मुखमेवाहवनीयं कुर्वीत जिह्वाꣳसमिधमन्नमेव शुक्रमाहुतिन्ते पुरुषं तर्पयतः स एवं विद्वानश्नात्यग्निहोत्रमेवास्य हुतं भवती"ति । तथा च गोभिलसूत्रेऽपि—

"पञ्च ग्रासान् गृह्णीयात्प्राणाय स्वाहेति गार्हपत्यमेव तेन जुहोत्यपानाय स्वाहेत्यन्वाहार्यपचनमेव जुहोति व्यानाय स्वाहेत्याहवनीयमेव तेन जुहोत्युदानाय स्वाहेति सभ्यमेव तेन जुहोति समानाय स्वाहेत्यावसथ्यमेव तेन जुहोती"ति॰। नात्रोच्छिष्टदोषः प्रत्याहुरिति । तदाह मनुः—

मधुपर्के च सोमे च अप्सु प्राणाहुतीषु च ।
आस्यहोमेषु सर्वेषु नोच्छिष्टं मनुरब्रवीत् ॥

स्मृतिसङ्ग्रहे—एवं पञ्चाहुतीर्हुत्वा ब्रह्मग्रन्थिं विसृज्य च ।
प्रक्षाल्य वामहस्तन्तु पश्चाद्भोजनमाचरेत् ॥
तर्जन्यां च स्थिते रौप्ये ब्रह्मग्रन्थौ च मूर्द्धनि ।
कनिष्ठिकायां स्थिते खड्गे नैव भोजनमाचरेत् ॥
शिरः संवेष्ट्य यो भुङ्क्ते यो भुङ्क्ते चोत्तरामुखः ।
वामपादे करं दद्यात्तुल्यं गोमांसभक्षणम् ॥

सङ्ग्रहे—पञ्च प्राणाहुतीर्भुक्त्वा दक्षिणे पात्रमुत्सृजेत् ।
नेत्रस्पर्शनमात्रेण शिखाग्रन्थिं विसर्जयेत् ॥

आचारदीपे मनुः—दक्षिणे तु परित्यज्य वामे नीरं निधापयेत् ।
अभोज्यं तद्भवेदन्नं पानीयं च सुरासमम् ॥
अत्र विशेषमाह विधानपरिजाते मार्कण्डेयः—
न्यस्तपात्रस्तु भुञ्जीत पञ्च ग्रासान्महामुने ! ।
शेषमुद्धृत्य भोक्तव्यं श्रूयतामत्र कारणम् ॥
उद्धृत्य यन्त्रादौ पात्रं स्थापयित्वेत्यर्थः । यन्त्रमुक्तं सङ्ग्रहे—
कांस्यस्य काष्ठकस्यापि वंशस्यापि तथैव च ।
पत्रिका तु त्रिकोणा वै कर्तव्या पात्रधारणे ॥
यद्यद्ध्यपेक्षितं चान्नं गृहीत्वा भोजनं चरेत् ।
अनिधाय पृथक् चान्नं गायत्र्या त्वभिमन्त्रितम् ॥
पुनरन्नं न गृण्हीयाद्यदि भुञ्जीत दोषभाक् ।
पङ्क्तिभेदेन यो भुङ्क्ते परकीये स्वकेऽपि वा ॥
तदन्नं मांसमित्याहुः क्षयरोगी च जायते ।
"सर्वाभिरङ्गुलिभिः समश्नीया"दिति वसिष्ठोक्तेः समुदिताङ्गुलिभिर्भुञ्जीत । मदनपारिजाते मार्कण्डेयः—
यस्तु पाणितले भुङ्क्ते यः सशब्दं समश्नुते ।
अङ्गुलिं चोद्धरेद्यस्तु गोमांसाशनवत्स्मृतम् ॥
विष्णुपुराणे—अश्नीयात्तन्मना भूत्वा पूर्वं तु मधुरं रसम् ।
लवणाम्लौ तथा मध्ये कटुतिक्तादिकं ततः ॥
प्राग्द्रवं प्रदुषोऽश्नीयान्मध्ये तु कठिनाशनः ।
अन्ते पुनर्द्रवाशी च बलारोग्ये न मुञ्चति ॥
अथ जलपानम् । विधानपरिजाते—
जलपात्रं तु निःक्षिप्य मणिबन्धे च दक्षिणे ।
विप्रो भोजनकाले तु पिबेद्वामेन पाणिना ॥
धारया नोदकं पेयं पीत्वा दोषमवाप्नुयात् ।
जलपात्रेण तत्पेयमिति शातातपोऽब्रवीत् ॥
"धारया न जलं पिबे"दिति वसिष्ठोक्तेः । अत्रोच्छिष्टदोषो न ।

मनुः—

मधुपर्के च सोमे च अप्सु प्राणाहुतीषु च ।
आस्यहोमेषु सर्वेषु नोच्छिष्टं मनुरब्रवीत् ॥
नोच्छिष्टो घृतमादद्यात्तथा गव्यं विशेषतः ।
जठरं पूरयेदर्द्धमन्नैर्भागं जलस्य च ॥
वायोः सञ्चारणार्थाय चतुर्थमवशेषयेत् ।
अनिन्द्यं भक्षयेन्नित्यं वाग्यतोऽन्नमकुत्सयन् ॥ इति ।

अनिन्द्यान्नं भोक्तव्यम् । तच्च न निन्द्यात् । अन्नं न निन्द्यात् । अथ भोजने वर्ज्यमाह याज्ञवल्क्यः—

अनार्चितं वृथामांसं केशकीटसमन्वितम् ।
शुक्लं पर्युषितोच्छिष्टं स्पृष्टं घुष्टं च कामतः ॥

अनार्चितं उत्तमायावज्ञादत्तं यदन्नं तत् । वृथामांसम्,

प्राणात्यये तथा श्राद्धे प्रोक्षितं द्विजकाम्यया ।
देवान्पितॄन्समभ्यर्च्य खादन्मांसं न दोषभाक् ॥

इत्युक्तप्रकारेण असम्पादितं मांसं वृथामांसम् । केशकीटसमन्वितमन्नम् । शुक्तं यत्स्वयमनम्लं सत्कारपरिवासादिना अम्लीभवति तदित्यर्थः । पर्युषितं राज्यन्तरितम् । उच्छिष्टं भुक्तोच्छिष्टम् । स्पृष्टं उदक्या रजस्वला तया स्पृष्टम् । संघुष्टं को भुङ्क्ते इत्यादि यदाघुष्य दीयते । पर्यायान्नं अन्यसम्बन्धि अन्यव्यपदेशेन यद्दीयते । पर्युषिते प्रतिप्रसवमाह याज्ञवल्क्यः—

अन्नं पर्युषितं भोज्यं स्नेहाक्तं चिरसंस्थितम् ।
अस्नेहा अपि गोधूमयवगोरसविक्रियाः ॥

गोधूमविकारो मण्डकः । यवविकारः सक्तुः । शङ्खः—

अपूपाः सक्तवो धानास्तक्रं दधि घृतं मधु ।
एतत्पण्येषु भोक्तव्यं भाण्डलेपो न चेद्भवेत् ॥

तथा—आभीरभाण्डसंस्थानि पयोदधिघृतानि च ।
तावत्पूतं हि तद्भाण्डं यावत्तत्तत्र तिष्ठति ॥

नारदः--वृन्ताकं च कालिङ्गं च दग्धमन्नं मसूरिका ।
उदरे यस्य तिष्ठन्ति तस्य दूरतरो हरिः ॥
शाकमूलफलेक्षूणि दन्तच्छेदैर्न भक्षयेत् ।
लवणं व्यञ्जनं चैव घृतं तैलं तथैव च ॥
लेह्यं पेयं च विविधं हस्तदत्तं न भक्षयेत् ।

अतो लवणादि दर्व्या देयम् ।

अपक्वं स्नेहपक्वं च न तु दर्व्या कदाचन ॥ इति ।

अपक्वस्नेहपक्वे हस्तेनैव देये । केचित्तु--

वृन्ताकं लशुनं चैव भुक्त्वा चान्द्रायणं चरेत् ॥

इति विशेषोक्तिरिति ।

रात्रौ दधि न भोक्तव्यं दिवा च नवनीतकम् ।
पय एकशफं हेयं तथा क्रमेलकाविकम् ॥ इति स्कान्दे ।

तिथिविशेषे वर्ज्यान्याह बृहस्पतिः--

कूष्माण्डं तरुणीं चैव मूलकं बृहतीं तथा ।
श्रीफलं च कलिन्दं च धात्रीं प्रतिपदादिषु ॥
वर्जयेत्सप्तमीं यावदन्यथा कृच्छ्रमाचरेत् ॥ इति ।
सप्तम्यां रविवारे च दिवा रात्रौ तथैव च ।
धात्रीफलं नरोऽश्नीयादलक्ष्मीको भवेन्नरः ॥

अभोज्यान्नान्याह याज्ञवल्क्यः--

कदर्यबद्धचौराणां क्लीबरङ्गावतारिणाम् ।
वैणाभिशस्तवार्धुष्यगणिकागणदीक्षिणाम् ॥
चिकित्सकातुरक्रुद्धपुंश्चलीमत्तविद्विषाम् ।
क्रूरोग्रपतितव्रात्यदाम्भिकोच्छिष्टभोजिनाम् ॥
अवीरास्त्रीस्वर्णकारस्त्रीजितग्रामयाजिनाम् ।
शस्त्रविक्रयकर्मारतन्तुवायश्ववृत्तिनाम् ॥
नृशंसराजरजककृतघ्नवधजीविनाम् ।
चैलधावसुराजीवसहोपपतिवेश्मनाम् ॥

पिशुनानृतिनोश्चैव तथा चाक्रिकबन्दिनाम् ।
एषामन्नं न भोक्तव्यं सोमविक्रयिणस्तथा ॥

अस्यार्थः—कदर्योऽतिलुब्धः । बद्धो निगडादिना । चौरो ब्राह्मणहेमव्यतिरिक्तपरद्रव्यापहारी । क्लीबो नपुंसकः । रङ्गावतारी नटादिः । वैणो वेणूच्छेदनजीवी । अभिशस्तः पतनीयेन कर्मणाऽभियुक्तः । वार्धुष्यो निषिद्धवृत्त्युपजीवी । गणिका पण्यस्त्री । गणदीक्षी बहुयाजकः । चिकित्सको भिषग्वृत्त्युपजीवी । आतुरो महारोगाभिभूतः । पुंश्चली व्यभिचारिणी । मत्तो विद्यादिना गर्वितः । विद्विट् शत्रुः । क्रूरोऽभ्यन्तराधिककोपः । उग्रो वागादिनोद्वेजकः । पतितो ब्रह्महादिः । व्रात्यः पतितसावित्रीकः । दाम्भिको वञ्चकः । अवीरा स्त्री पतिपुत्ररहिता । ग्रामयाजी ग्रामशान्त्यादिकर्ता । कर्मारो लोहकारः । तन्तुवायः सूचीशिल्पोपजीवी । श्वजीवी श्वभिर्वृत्तं जीवनमस्यास्तीति, नीचसेवको वा । नृशंसो निर्दयः । रजको वस्त्ररङ्गकृत् । चैलधावः वस्त्रनिर्णेजकः । सहोपपतिवेश्मा सह संहितं उपपतिना जारेण वेश्म यस्यासौ स तथा । पिशुनः परदोषवक्ता । चाक्रिकस्तैलिकः । बन्दी जनस्तावकः । सोमविक्रयी यज्ञे सोमलताविक्रेता । कदर्यत्वादिदोषदुष्टानां एषां द्विजानामन्नं न भोक्तव्यमिति समूहार्थः ।

गणान्नं गणिकान्नं च तथान्नं ग्रामयाजिनाम् ।
सूतकान्नं तथा भुक्त्वा द्विजश्चान्द्रायणं चरेत् ॥

बृहत्पराशरे—ब्राह्मणान्नं ददच्छूद्रः शूद्रान्नं ब्राह्मणो ददत् ।
द्वावप्येतावभोज्यान्नौ चरेतान्तौ शशिव्रतम् ॥
भुङ्क्ते शय्यासनस्थो यः पिबेद्वाऽपि द्विजोत्तमः ।
अभक्ष्येण हि तत्तुल्यं चरेच्चान्द्रायणव्रतम् ॥
परपाकनिवृत्तस्य परपाकरतस्य च ।
अपचस्य च भुक्त्वान्नं द्विजश्चान्द्रायणं चरेत् ॥

तल्लक्षणमाह याज्ञवल्क्यः—
गृहीत्वाग्निं समारोप्य पञ्चयज्ञान्न निर्वपेत् ।
परपाकनिवृत्तोऽसौ मुनिभिः परिकीर्तितः ॥

पञ्चयज्ञान्स्वयं कृत्वा परान्नमुपजीवति ।
सततं प्रातरुत्थाय परपाकरतस्तु सः ॥
गृहस्थधर्मवृत्तौ यो ददाति परिवर्जितः ।
ऋषिभिर्धर्मतत्वज्ञैरपचः परिकीर्तितः ॥

पुराणसमुच्चये—आज्यपात्रे स्थितं तक्रं मधुमिश्रं तु कारयेत् ।
ताम्रपात्रे स्थितं गव्यं त्रिषु सर्पिः सुरासमम् ॥

पारिजाते भृगुः—गव्यं ताम्रेण संयुक्तं कांस्ये चैवेक्षुगो रसः ।
सकांस्यं नारिकेलाम्बु मधुतुल्यं घृतं विना ॥
आर्द्रकं सगुडं मद्यं दधिसम्मिश्रितो गुडः ।
नारिकेलाम्बुसम्मिश्रमैक्षवं बदरं तथा ॥

मनुः—होमकाले तथा दोहे पाके च परिवेषणे ।
सुरार्चनेऽभिषेके च ताम्रे गव्यं न दुष्यति ॥

गर्गः—ग्रासशेषं न चाश्नीयात्पीतशेषं पिबेन्न च ।
अन्यथा कुरुते यस्तु जपेद्देवीशतं ततः ॥
यत्यन्नं यतिपात्रस्थं यतिना प्रेरितं च यत् ।
दम्पत्योर्भुक्तशेषं च भुक्त्वा चान्द्रायणं चरेत् ॥
एकपङ्क्त्युपविष्टानामन्योन्यं स्पृश्यते यदि ।
भुक्त्वा तदन्नमत्याज्यं गायत्र्यष्टशतं जपेत् ॥

अन्यच्च विधानपरिजाते—उच्छिष्टोच्छिष्टसंस्पृष्टो ब्रह्मणस्तु कदाचन ।
कुर्वीत तत्क्षणे स्नानमाचामेन विशुध्यति ॥

इदन्तु क्षत्रियादिस्पृष्टब्राह्मणविषयम् । ब्राह्मणस्पर्शे तु—
उच्छिष्टो ब्राह्मणः स्पृष्ट उच्छिष्टेनाग्रजन्मना ।
आचम्यैव तु शुद्धः स्याद्विष्णुनामानुकीर्तनात् ॥

चन्द्रिकायां जीवत्पितृकादेर्विशेषः—
कनीयान्सपिता चैव भुक्त्वा श्राद्धिकभोजनम् ।
प्राणाग्निहोत्रादन्यत्र न समौनं विधीयते ॥
भूताष्टम्यां दिवा भुक्त्वा रात्रौ भुक्त्वा तु पर्वणि ।

एकादश्यामहोरात्रं भुक्त्वा चान्द्रायणं चरेत् ॥

शातातपः—वनस्पतिगते सोमे परान्नं ये तु भुञ्जते।
तेषां मासकृतं पुण्यं दातारमधिगच्छति ॥

अत्र सर्वत्र चन्द्रायणप्रायश्चित्तकथनमभ्यासविषयम्। अनभ्यासे तु अहोरात्रमभोजनम्। ऋग्विधाने विशेषः—

पर्वणोरर्कवारे च रात्रौ भुङ्क्ते दिवा द्विजः।
दशवारं जपेन्मन्त्रमभिस्ववृष्टिरेव च ॥
एकादश्यां यदा भुङ्क्ते स्वेच्छया व्याधिवर्जितः।
त्यं सु मन्त्रं जपेद्भोक्ता दशवारं विशुद्ध्यति ॥
अष्टम्यां च चतुर्दश्यां यदि भुङ्क्ते दिवा द्विजः।
त्वं सोमासीति वै सूक्तं जपेत्पापात्प्रमुच्यते ॥
भोजनं तु न निःशेषं कुर्यात्प्राज्ञः कथञ्चन।
अन्यत्र दध्नः क्षीराद्वा घृतात्सक्तुभ्य एव वा ॥
भुक्त्वा पीत्वा तु यः कश्चिच्छून्यं पात्रं विमुञ्चति।
क्षुधार्त्तः स पिपासार्त्तो भवेज्जन्मनि जन्मनि ॥

देवलः—भुक्तोच्छिष्टात्समादाय सर्वस्मात्किञ्चिदेव तु।
उच्छिष्टभागधेयेभ्यः सोदकं निर्वपेद्भुवि ॥

व्यासः—अर्द्धं पीत्वा तु गण्डूषमर्द्धं त्याज्यं महीतले।
रसातलगता नागास्तेन प्रीणन्ति नित्यशः ॥
यद्युत्तिष्ठदनाचान्तो भुक्तवानासनाद्द्विजः।
सद्यः स्नानं प्रकुर्वीत नान्यथा प्रयतो भवेत् ॥
गण्डूषकरणात्पूर्वं हस्तं प्रक्षालयेद्द्विजः।
हतं दैवं च पित्र्यं च ह्यात्मा चैवोपपातकैः ॥
यो वै गण्डूषसमये तर्जन्या वक्त्रशोधनम्।
कुर्वीत यदि मूढात्मा रौरवं नरकं व्रजेत् ॥
आचम्य च ततः कुर्याद्दन्तकाष्ठस्य भक्षणम्।
भोजने दन्तलग्नानि निर्हृत्याचमनं चरेत् ॥

आदौ पञ्च तथा सप्त त्रीणि त्रीणि तथैव च ।
आचमेच्चुलकान्प्राज्ञो मुखशुद्धिं यदीच्छति ॥

गौतमः—आचान्तोऽप्यशुचिस्तावद्यावत्पात्रं न चोद्धरेत् ।
उद्धृतेऽप्यशुचिस्तावद्यावद्भूर्न प्रमार्जिता ॥
भोजनान्ते द्विराचम्य तज्जलैर्नेत्रमार्जनम् ।
कार्यं चक्षुर्विवृद्ध्यर्थं भार्गवादींश्च संस्मरेत् ॥

तदुक्तं भारते—शर्यातिं च सुकन्यां च भार्गवं चाश्विनौ खगम् ।
भोजनान्ते स्मरेद्यस्तु तस्य चक्षुर्न नश्यति ॥

आहारपरिणामार्थमन्यान्स्मरेत्—

अगस्त्यं कुम्भकर्णं च शनिं च वडवानलम् ।
अन्नस्य परिणामार्थं स्मरेद्भीमं च पञ्चमम् ॥

मार्कण्डेयः—भूयोऽप्याचम्य कर्तव्यं ताम्बूलस्य च भक्षणम् ।
श्रवणं चेतिहासस्य तथा रामायणस्य च ॥

ताम्बूलभक्षणे विशेषमाह । गर्गः—

प्रातःकाले फलाधिक्यं चूर्णाधिक्यं तु मध्यतः ।
निशि पर्णाधिकं खादेत्तस्य लक्ष्मीर्विवर्द्धते ॥
पर्णमूले भवेद्व्याधिः पर्णाग्रे पापसम्भवः ।
चूर्णं पर्णं हरत्यायुः शिरा बुद्धिं विनाशयेत् ॥
तस्मादेतान्परित्यज्य ताम्बूलं भक्षयेत्सदा ।
अनिधाय मुखे पर्णं पूगं खादति यो नरः ॥
सप्त जन्म दरिद्री स्यादन्ते नैव स्मरेद्धरिम् ।
पञ्चसप्ताष्टपत्राणि दश द्वादश वापि वा ॥
दद्यात्स्वयं च गृह्णीयाद्भक्षणे वीटकस्य तु ।
तर्जन्या चूर्णमादाय ताम्बूलं न तु भक्षयेत् ॥
यदि वा भक्षयेन्मूढो नरकं प्रतिपद्यते ।
मध्यमाङ्गुलिनादाय चूर्णं पर्णे विलेपयेत् ॥
अङ्गुष्ठाग्रेण वा तद्वदन्यथा दोषमाप्नुयात् ॥

आयुर्वेदे—भुक्त्वा वह्निमुपस्पृश्य शनैः सप्तपदीं व्रजेत् ।
शयीत वामभागेन यतो रोगैर्न पीड्यते ॥
भुक्त्वोपविशतः स्थौल्यं बलमुत्तानशायिनः ॥

इति श्रीप्रथमशाखीयरामकृष्णविरचिते पारस्करगृह्यसूत्रविवरणे संस्कारगणपतौ भोजनविधिः ॥

---

अथ प्रयोगः ।

गायत्र्याऽन्नं सम्प्रोक्ष्य। "सत्यन्त्वर्तेन परिषिञ्चामि"। इति मन्त्रेण पात्रपरितः प्रदक्षिणजलं नीत्वा, हस्तेनान्नमभिमन्त्र्य। तत्र मन्त्रः—

अन्नं ब्रह्म रसो विष्णुर्भोक्ता देवो महेश्वरः ।
एवं ध्यात्वा तु यो भुङ्क्ते सोऽन्नदोषैर्न लिप्यते ॥

दक्षिणेन हस्तेन घृताक्तमोदनमादाय आहुतित्रयं दद्यात्। "ॐभूपतये नमः। ॐभुवनपतये नमः। ॐभूतानां च पतये नमः"। इति स्वदक्षिणभागे भूमौ दद्यात्।

"अन्तश्चरसि भूतेषु गुहायां विश्वतोमुखः ।
त्वं यज्ञस्त्वं वषट्कारस्त्वं ब्रह्म त्वं प्रजापतिः ॥

त्वं विष्णोः परमं पदममृतोपस्तरणमसि स्वाहा" इति मन्त्रेण जलं पीत्वा, अथ पञ्च प्राणाहुतयः। "ॐप्राणाय स्वाहा। ॐअपानाय स्वाहा। ॐव्यानाय स्वाहा। ॐउदानाय स्वाहा। ॐसमानाय स्वाहा। ॐब्रह्मणे नमः"। दन्तैरस्पृशन्। ततः सर्वं दन्तैर्भक्षयेत्। भुक्तोच्छिष्टमन्नं सजलं गृहीत्वा। तत्र मन्त्रः—

"रौरवे पुण्यनिलये पद्मार्बुदनिवासिनाम् ।
अर्थिनां सर्वभूतानामक्षय्यमुपतिष्ठतु ॥"

इति मन्त्रेण चित्राहुतिस्थाने त्याज्यम्। तत "अमृतापिधानमसि स्वाहा" इत्यनेन आचमनं कुर्यात्। आचमनशेषजलं चित्राहुतिसमीपभूमौ क्षिपेत्। ततो मृज्जलाभ्यां हस्तशुद्धिं कृत्वा पादौ प्रक्षाल्य आच-

मनं कार्यम् । उदरे हस्तं निधाय पठेत् ।

अगस्तिरार्किर्वडवानलश्च भुक्तं मयान्नं जरयत्वशेषम् ।
सुखं ममैतत्परिणामसम्भवं यच्छत्वरोग्यं मम चास्तु देहे ॥
विष्णुः समस्तेन्द्रियदेहदेही प्रधानभूतो जगतां यथैकः ।
सत्येन तेनान्नमशेषमेतदारोग्यदं मे परिणामहेतु ॥
विष्णुरत्तात्तथैवान्नं परिणामस्तु वै यथा ।
सत्येन तेन मद्भुक्तं जीर्यत्वन्नमिदं तथा ॥

इति संस्कारगणपतौ भोजनविधिः ।

---

## दशमी कण्डिका ।

अथातोऽध्यायोपाकर्मौषधीनां प्रादुर्भावे श्रवणेन श्रावण्यां पौर्णमास्याᳬं श्रावणस्य पञ्चमीᳫं हस्तेन वाज्यभागाविष्ट्वाऽऽज्याहुतीर्जुहोति पृथिव्याऽअग्नयऽइत्यृग्वेदेऽन्तरिक्षाय वायवऽइति यजुर्वेदे दिवे सूर्यायेति सामवेदे दिग्भ्यश्चन्द्रमसऽइत्यथर्ववेदे ब्रह्मणे च्छन्दोभ्यश्चेति सर्वत्र प्रजापतये देवेभ्य ऋषिभ्यः श्रद्धायै मेधायै सदसस्पतयेऽनुमतयऽइति चैतदेव व्रतादेशनविसर्गेषु सदसस्पतिमित्यक्षतधानाभिः सर्वेऽनुपठेयुर्हुत्वाहुत्वौदुम्बर्यस्तिस्रस्तिस्रः समिधऽआदध्युरार्द्राः सपलाशा घृताक्ताः सावित्र्या ब्रह्मचारिणश्च पूर्वकल्पेन शन्नो भवन्त्वित्यक्षतधानाऽअखादन्तः प्राश्नीयुर्दधिक्राव्णऽइति दधि भक्षयेयुः स यावन्तं गणमिच्छेत्तावतस्तिलानाकर्षफलकेन जुहुयात्सावित्र्या शुक्रज्योतिरित्यनुवाकेन वा प्राशनान्ते प्रत्यङ्मुखेभ्यऽउपविष्टेभ्यऽॐ कारमुक्त्वा त्रिश्च सावित्रीमध्यायादीन्प्रब्रूयादृषिमुखानि बह्वृचानां पर्वाणि च्छन्दोगानाᳫं सूक्तान्यथर्वणानाᳫं सर्वे जपन्ति सह

नोऽस्तु सह नोऽवतु सह नऽइदं वीर्यवदस्तु ब्रह्म। इन्द्रस्तद्वेद येन यथा न विद्विषामहऽइति त्रिरात्रं नाधीयीरँल्लोमनखानामनिकृन्तनमेके प्रागुत्सर्गात् ॥ १० ॥

अथोपाकरणमुच्यते "अथातोऽध्यायोपाकर्म" इति सूत्रम्। अथशब्दोऽधिकारार्थः। अतःशब्दो हेत्वर्थः। यस्माद्ब्रह्मयज्ञो नित्यः, अतोऽध्यायोपाकर्म ब्रूम इति। अधीयन्त इति अध्याया वेदास्तेषामुपाकर्म प्रारम्भः। उक्तञ्च—

अध्यायो नाम वेदः स्यात्तस्योपाकरणं पुनः।
आरम्भणमिति प्रोचुर्भवनागादयः स्फुटम् ॥

गृह्यकारिकायामपि—उपाकरणशब्देन वेदारम्भणमुच्यते ॥ इति।
स च द्विविधः—सुतस्यैको गुरोरेकः संस्कारोऽयं द्विधा स्मृतः।
तत्राद्यं गुरुसंस्कार इत्यभाण्यत्र कैश्चन ॥
साधुः पक्षो द्वितीयोऽयं वेदारम्भः पुरोदितः।
किं वानेकस्मृतीर्दृष्ट्वाग्निहोत्रेयेवमसूसुचत् ॥
एतस्य कर्मसंज्ञा च वार्षिकं शौनकोऽब्रवीत् ॥ इति।

अत्रोपाकरणोत्सर्गयोर्मध्ये अभ्यर्हितत्वादुपाकरणस्य पूर्वनिपातः। किमर्थम्? अकृत उपाकरणे उत्सर्गस्याप्यभावः। तच्चाग्निमतोऽध्यापनप्रवृत्तस्य। उपाकरणस्यावसथ्याग्निसाध्यत्वान्निरग्नेर्नाधिकारः। उपाकर्मणि आचार्यस्याग्नौ शिष्यकर्तृका समिदाहुतिर्यस्मात् तेनाध्यापयतोऽपि निरग्नेः साग्नेरप्यनध्यापयतो नाधिकारः। तथा चोक्तं गृह्यकारिकायाम्—

अग्निमानधिकारीह नेतरः कर्कसम्मतिः।
सम्यगध्ययने सोऽपि प्रवृत्तस्तस्य सत्क्रिया ॥ इति।

तथा च शौनकः—अध्यायोपाकृतिं कुर्यात्तत्रोपासनवह्निना ॥ इति।
स्मृत्यन्तरेऽपि—अग्निमान्स च कुर्वीताध्यापने यः प्रवर्त्तते।
स एवेदमुपाकर्म भाष्यकारैरगादि च ॥

यत्तु लौकिकाग्नौ तदनुष्ठानं तत्राचारमेव मूलम्।

कर्मद्वयमिदं केचित्लौकिकाग्नौ प्रकुर्वते ॥

इत्याश्वलायनवचनं तदन्यशाखाविषयम्। उपाकरणस्य कालमाह "औषधीनां प्रादुर्भावे श्रवणेन श्रावण्यां पौर्णमास्या"मितिसूत्रम्। ओषधीनां व्रीह्यपामार्गादीनां प्रादुर्भावे उत्पत्तौ सति एतदुपाकर्म कुर्यात्। श्रावणशुक्लपक्षः सर्वेषां ऋग्यजुःसामाध्यायिनामध्यायोपाकृतेः सामान्यतो मुख्यकालः। तत्रापि यजुःशाखिनां पूर्णिमा मुख्या। ऋग्वेदिनां श्रवणः। सामवेदिनां हस्त इति। नन्वत्र सूत्रकारेण श्रवणेन युक्तश्रावण्यां पौर्णिमास्यामुक्तं तत्कथम्? उच्यते। श्रावण्यां श्रवण एव प्रायशो भवति। औषधिप्रादुर्भावश्च। एतदुभयं तस्या एव विशेषणम्। अत्र पौर्णिमास्याः प्राधान्याद्विशेषणाभावेऽपि तस्यां तद्भवति। तथा च गृह्ये—

प्रायः स्यादुडुसंयोगस्तथौषधिसमुद्गमः।
कर्कोक्त्या वै तदुभयं पौर्णमास्या विशेषणम् ॥
अनादरस्तयोर्यस्मान्नित्यत्वादस्य कर्मणः ॥ इति।

तत्र तावद्यजुःशाखिनां पूर्णिमायामपि विशेषः। एतत्कर्मणः पूर्वाह्णोऽनुष्ठानकालः। तामियं पूर्णिमा व्याप्नुयान्न व्याप्नुयाद्वा। उभयपक्षेऽपि तैत्तिरीयकैः पराऽङ्गीकार्या। काण्वमाध्यन्दिनीयैः पूर्वेति।

पर्वण्यौदयिके कुर्युः श्रावणं तैत्तिरीयकाः।

इति बह्वृचपरिशिष्टात्। केचिन्मतमिदं पूर्वा परा ग्राह्येति।

पूर्णिमा प्रतिपद्युक्ता तत्रोपाकर्मणः क्रिया।
उक्तोऽर्थोऽयं प्रसङ्गेन भविष्योत्तरसंज्ञके ॥
श्रावणी दुर्गनवमी दूर्वा चैव हुताशनी।
पूर्वविद्धैव कर्तव्या शिवरात्रिर्बलेर्दिनम् ॥ इति हेमाद्रिः।

वस्तुतस्तु हेमाद्रिमतं युक्तम्। पराशरमाधवीये—

श्रावणी पौर्णमासी तु सङ्गवात्परतो यदि।
तदैवौदयिकी ग्राह्या नान्यदौदयिकी भवेत् ॥

गदाधरभाष्ये कालादर्शे—

श्रावण्यां प्रौष्ठपद्यां वा प्रतिपत्षण्मुहूर्त्तकैः।
विद्धा स्याच्छन्दसां तत्रोपकर्मोत्सर्जनं भवेत् ॥

बह्वृचसामगयोः कालविशेषमाह—

बह्वृचाः श्रवणे कुर्युर्हस्तर्क्षे सामवेदिनः" ॥ इति।

ऋग्वेदिश्रवणेऽपि विशेषः धनिष्ठायुक्त एव ग्राह्यो नोत्तराषाढायुक्त इति।

तपो हन्त्युत्तराषाढा उपाकर्मणि वैष्णवे।
धनिष्ठामिश्रितं कार्यमुपाकरणसंज्ञितम् ॥

इति निगमवचनात्। स्मृत्यन्तरेऽप्युक्तम्—

श्रवणर्क्षे तूपाकर्म उत्तराषाढसंयुते।
संवत्सरकृतोऽध्यायस्तत्क्षणादेव नश्यति ॥
धनिष्ठासंयुतं कुर्याच्छ्रावणं कर्म यद्भवेत्।
तत्कर्म निर्मलं विन्द्यादुपाकरणसंज्ञितम् ॥

विधानपारिजाते—उदयव्यापिनं चैव विष्णवर्क्षं घटिकाद्वयम्।
तत्कर्म सफलं ज्ञेयं तस्यं पुण्यमनन्तकम् ॥

सामवेदिहस्ते विशेषः। चित्रायुक्त एव ग्राह्यो नोत्तरायुक्त इति।

धनिष्ठाप्रतिपद्युक्तत्वाष्ट्रऋक्षसमन्वितम्।
श्रावणं कर्म कुर्वन्ति ऋग्यजुःसामपाठकाः ॥

इति पारिशिष्टात्।

त्वाष्ट्रं चित्रा। इतरत्स्पष्टम्। एतेषु कालेषु त्रयाणामप्युपकर्मानुष्ठानम्। तत्सिंहस्थे सूर्ये सति एवेति कालादर्शकारः।

अध्यायानामुपाकर्म श्रावण्यां तैत्तिरीयकाः।
बह्वृचाः श्रवणे कुर्युः सिंहस्थोऽर्को भवेद्यदि ॥

विधानपारिजाते—वेदोपकरणे प्राप्ते कुलीरे संस्थिते रवौ।
उपाकर्म न कर्तव्यं कर्तव्यं सिंहयुक्तके ॥

इति विरुद्धवचनं तद्देशान्तरविषयम् । तथा च बृहस्पतिः—

नर्मदोत्तरभागे तु कर्तव्यं सिंहयुक्तके ।
कर्कटे संस्थिते भानावुपाकुर्यात्तु दक्षिणे ॥

सामगानां विशेषः । वीरमित्रोदये गार्ग्यः—

सिंहे रवौ तु पुष्यर्क्षे पूर्वाह्णे विचरेद्बहिः ।
छन्दोगा मिलिताः कुर्युरुत्सर्गं सर्वछन्दसाम् ॥

उत्सर्गशब्दऽउपाकर्मणोऽप्युपलक्षकः । ग्रहसंक्रान्त्यादिदूषिते तदा श्रावणं कर्म न कार्यम् । अनन्तपाठकसङ्ग्रहे—

उपाकर्म न कुर्वन्ति क्रमात्सामर्ग्यजुर्विदः ।
ग्रहसङ्क्रान्तियुक्तेषु हस्तश्रवणपर्वसु ॥

अत्र विशेषमाह मनुः— अर्द्धरात्रादधस्ताच्चेद्ग्रहः सङ्क्रम एव वा ।
नोपाकर्म तदा कुर्याच्छ्रावण्यां श्रवणेन वा ॥

कात्यायनोऽपि—अर्धरात्रादधस्ताच्चेद्ग्रहः सङ्क्रम एव वा ।
नोपाकर्म तदा कुर्यात्परतश्चेन्न दोषभाक् ॥

ग्रहसंक्रान्त्यादिदूषितेषु हस्तश्रवणपर्वसु तदा तान्परित्यज्य श्रावणीसितपञ्चमी हस्तयुक्ता केवला वा वाजसनेयिभिर्बह्वृचैः सामगैश्चानुष्ठेया । "श्रावणस्य पञ्चमीं हस्तेन वे"तिसूत्रम् । प्रायशः श्रावणशुक्लपञ्चम्यां हस्तनक्षत्रं भवति । अतः पञ्चम्या विशेषणम् । विशेषणाभावेऽपि केवलतिथौ कर्तव्यम् । गदाधरभाष्ये महार्णववचनम्—

संक्रान्तिर्ग्रहणं वापि यदि पर्वणि जायते ।
उपाकृतिस्तु पञ्चम्यां कार्या वाजसनेयिभिः ॥ इति ।

तैत्तिरीयैस्तु ग्रहणादिना मुख्यकालबाधे प्रौष्ठपदी ग्राह्या । तेषां श्रावणासितपञ्चम्या अविहितत्वात् । अथ वाजसनेयिनां विहिता सा यजुर्वेदित्वसाम्येन तेषामपि स्यादित्युच्यमाने 'कार्या वाजसनेयिभि'रिति वाजसनेयिविशेषविधिर्व्यर्थः स्यात् । तस्मात्प्रौष्ठपद्येवैभिर्ग्राह्येति सिद्धम् । तथा च वशिष्ठर्षिर्वैकल्पिकं कालमुदाजहार—"अथातः स्वाध्यायोपाकर्म श्रावण्यां प्रौष्ठपद्यां वे"ति । अथवोक्तनिमित्तश्रावण्यसंभवे तैत्तिरीयैराषा-

व्यां कार्यम्। "श्रावण्यां पौर्णमास्यामाषाढ्यां वोपाकृत्य च्छन्दांस्यधी-यीते"ति तदीयबौधायनोदितत्वात्। यदा पुनः श्रावणे वृष्ट्यभावदोषस्य प्रादुर्भावः स्यात्तदा भाद्रपदे पौर्णमास्यां सर्वैर्यजुर्वेदिभिरनुष्ठेयम्। श्रवणे ऋग्वेदिभिः। हस्ते सामवेदिभिः। "अथ सर्वैर्ऋग्यजुःसामवेदिभिः सितपञ्चम्या"मिति बह्वृचपरिशिष्टे।

अवृष्ट्यौषधयस्तस्मिन्मासे नो सम्भवन्ति चेत्।
तदा भाद्रपदे मासि श्रवणेन तदिष्यते॥

गोभिलमुनिरपि—"प्रौष्ठपदेन हस्तेनोपादान"मिति। मनुः—

श्रावण्यां प्रौष्ठपद्यां वाप्युपाकृत्य यथाविधि।
युक्तश्छन्दांस्यधीयीत मासान्विप्रोऽर्द्धपञ्चमान्॥ इति।

अत्रापिशब्देन भाद्रपदीयहस्तपञ्चम्योरुपादानम्। "प्रौष्ठपदीं हस्तेनोपाकरण"मिति गोभिलात्। मलमासे तूपाकर्म न भवति, किन्तु शुद्धे एव। चन्द्रिकायां पराशरः—

उपाकर्म तथोत्सर्गः प्रसवाहोत्सवाष्टकः।
मासवृद्धौ परे कार्या वर्जयित्वा तु पैतृकम्॥ इति।

प्रसवाहोत्सवः जातेष्टिः। कात्यायनोऽपि—

उत्कर्षः कालवृद्धौ स्यादुपाकर्मादिकर्मणि।
अभिषेकादिवृद्धीनां न तूत्कर्षो युगादिषु॥ इति।

छन्दोगानां तु मलमासे एव भवति, न शुद्धे।

दशहरासु नोत्कर्षश्चतुर्ष्वपि युगादिषु।
उपाकर्ममहाषष्ठ्योर्होतदिष्टं वृषादितः॥ इति।

इति ऋष्यशृङ्गश्रवणात्। एतच्च शुक्रास्तादावपि भवति,

उपाकर्मोत्सर्जनं च पवित्रदमनार्पणम्॥

इति वचनात्। पर्यग्निकरणे सति पूर्वं त्रिरात्रादिवेधाभाव उक्तः प्रयोगपारिजाते—

नित्ये नैमित्तिके जाप्ये होमयज्ञक्रियादिषु।
उपाकर्मणि चोत्सर्गे ग्रहवेधो न विद्यते॥ इति।

प्रथमारम्भस्तु न भवति । कश्यपः—

गुरुभार्गवयोर्मौढ्ये बाल्ये वा वार्द्धकेऽपि वा ।
तथाधिमाससंसर्पे मलमासादिषु द्विजः ॥
प्रथमोपाकृतिर्न स्यात्कृतं कर्म विनाशकृत् ॥

स्मृतिभास्करे—चण्डांशोर्मण्डलं प्राप्तौ यदा शुक्रबृहस्पती ।
सर्वकर्मनिवृत्तिः स्यान्नित्यं नैमित्तिकं विना ॥

निषिद्धे चेत्क्रियते तदा दोषमाह, गर्गः—

अथ चेद्दोषसंयुक्ते पर्वणि स्यादुपाक्रिया ।
दुःखशोकामयग्रस्ता राष्ट्रे तस्मिन्द्विजातयः ॥

एतच्च मध्याह्नादूर्ध्वं कर्तव्यम् । तथा चोक्तं विधानपारिजाते हेमाद्रौ—

उपाकर्मापराह्णे स्यादुत्सर्गः प्रातरेव च ॥

गोभिलोऽपि— अध्यायानामुपाकर्म कुर्यात्कालेऽपराह्णके ।
पूर्वाह्णे च विसर्गः स्यादिति वेदविदो विदुः ॥ इति ।

तन्न सर्वसम्मतम् । वचनान्तरदर्शनात् । प्रचेताः—

भवेदुपाकृतिः पौर्णमास्यां पूर्वाह्ण एव तु ॥

मनुरपि—पुष्ये तु च्छन्दसां कुर्याद्बहिरुत्सर्जनं द्विजः ।
माघशुक्लस्य वा प्राप्ते पूर्वाह्णे प्रथमेऽहनि ॥ इति ।

"पूर्वाह्णो वै देवाना"मिति श्रुतेः । तस्मात्पूर्वाह्ण एवानुष्ठेयोऽयमुपाकर्मसंस्कारः । उक्तयोगदिने गुरुः शिष्यैः सहाभ्यञ्जनक्रियां कृत्वाऽहतवासः परिधाय । उक्तञ्च—

समाचारपरिप्राप्तां कुर्यादभ्यञ्जनक्रियाम् ।
ततो नान्दीमुखं श्राद्धं मातृपूजनपूर्वकम् ॥ इति ।

भविष्योत्तरपुराणे—सम्प्राप्ते श्रावणस्यान्ते पौर्णमास्यां दिनोदये ।
स्नानं कुर्वीत मतिमान् श्रुतिस्मृतिविधानतः ॥

तत्र प्रथमप्रयोगे आचार्येण मातृपूजापूर्वकं नान्दीश्राद्धं कार्यम् । तथा च अनन्तभट्टीये—

गुरुसंस्कार एवाऽयं न शिष्याणामुदीरितः ।

अतोऽत्र गुरुणा कार्यं नान्दीश्राद्धं सपूजनम् ॥

गृह्यकारिकायामपि—

गुरोस्तदात्मसंस्कारो न शिष्याणां परार्थतः ॥ इति ।

तदिति नान्दीश्राद्धम्—तच्छ्राद्धं गुरुसंस्कारो मातृपूर्वं विधीयते ॥

तथा चोक्तं गृह्यकारिकायाम्—

दैवपूर्वं भवेच्छ्राद्धं सुतसंस्कारकर्मसु ।
तदेव मातृपूर्वं स्यादात्मसंस्कारकर्मसु ॥

अनन्तभट्टीये—नान्दीश्राद्धादिकं कार्यमध्यायोपाकृतेरिदम् ।
अनुष्ठानेऽग्रिमे न स्यादितरेष्विति निश्चितम् ॥

आचम्य प्राणानायम्य तिथ्यादिकं स्मृत्वा मातृपूजापूर्वकं नान्दीश्राद्धं च कृत्वाग्नेः पश्चादुपविश्य शालाग्निनियमाच्छालाग्निं प्रतिष्ठापयेद्गुरुः। ब्रह्मचारिणोऽपि अग्निसमीपे उपविशेयुः। ततस्तिथ्यादिकं स्मृत्वा "उपाकर्म करिष्ये" इति सङ्कल्पं कृत्वा वैकल्पिकावधारणं कुर्यात्।

तथा चोक्तं गृह्यकारिकायाम्—

शालाग्नौ स्यादिदं कर्म गुरुः श्राद्धे कृते सति ।
अग्नेः पश्चादुपविशेच्छिष्याश्चाग्निसमीपतः ॥
तिथ्यादिकल्पितं कालं स्मृत्वा सङ्कल्पमाचरेत् ॥ इति ।

अत्र चतुर्वेदोपाकर्म एकवेदोपाकर्म वा यथाशक्ति वैकल्पिकं स्मरणीयम्, अमुकवेदमेव स्मर्तव्यमिति नियमाभावात्। एवमन्यवैकल्पिकेष्वपि ज्ञेयम्। अभाणि च कैश्चित्—

विकल्पेषु च सर्वेषु स्वयमेवैकमादितः ।
अङ्गीकरोति यं कर्ता स विधिस्तस्य नेतरः ॥ इति ।

संस्कारान्तरेऽपि अयं न्यायोऽनुसर्त्तव्यः। ततो वैकल्पिकस्मरणानन्तरं छन्दऋष्यादिकं स्मरणीयम्। ततो देवताभिध्यानम्। ततः परिस्तरणम्। ततो ब्रह्मवरणम्। अत्र परिस्तरणब्रह्मवरणादीनां क्रमभङ्गेनैव विधानात् न व्यतिक्रमभ्रान्तिः कार्या। अपाठि च सोमयाजिभिः—

ब्रह्मणो वरणादादौ कुर्यादग्नौ परिस्तृतिः ॥ इति ।

ततः प्रणीताप्रणयनम् । ततः पात्रासादनम् । पर्युक्षणान्तं कृत्वा "आज्यभागाविष्ट्वाऽऽज्याहुतीर्जुहोति पृथिव्या ऽअग्नय ऽइत्यृग्वेदे-ऽन्तरिक्षाय वायव ऽइति यजुर्वेदे दिवे सूर्यायेति सामवेदे दिग्भ्य-श्चन्द्रमसऽइत्यथर्ववेदे ब्रह्मणे च्छन्दोभ्यश्चेति सर्वत्र प्रजापतये देवे-भ्यऽऋषिभ्यः श्रद्धायै मेधायै सदसस्पतयेऽनुमतय"इति सूत्रम् । आज्यभागपर्यन्तं कर्म कुर्यात् । तदनन्तरं आज्याहुतीर्जुहोति । ऋग्वेदे-ऽधीयमाने "पृथिव्यै स्वाहा । अग्नये स्वाहे"ति द्वे आहुती जुहोति । यजुर्वेदेऽधीयमाने "अन्तरिक्षाय स्वाहा । वायवे स्वाहे"ति द्वे आ-हुती जुहोति । सामवेदेऽधीयमाने "दिवे स्वाहा । सूर्याय स्वाहे"ति द्वे आहुती जुहोति । अथर्ववेदे अधीयमाने "दिग्भ्यः स्वाहा । चन्द्र-मसे स्वाहे"ति द्वे आहुती जुहोति । यदि सर्वेषु वेदेष्वधीयमानेषु "ब्र-ह्मणे स्वाहा । छन्दोभ्यः स्वाहे"ति द्वे आहुती सर्वत्र प्रतिवेदमावर्त्त-येत् । चशब्दात्प्रजापतय इत्यादिकाश्च सर्वत्र । पृथक् योगकरणे चतुर्णामपि वेदानां तन्त्रेणोपाकरणे "ब्रह्मणे छन्दोभ्य"श्चेति आहुतिद्वयं प्रतिवेद-मावर्तनीयम् । प्रजापतय इत्येवमाद्यास्तन्त्रेणैव, योगविभागसामर्थ्यात् । तत्तद्देवताभ्यस्त्यागो ज्ञेयः । "एतदेव व्रतादेशनविसर्गेषु"इति सूत्रम् । एतदेव आज्याहुतिनवकमेव कर्म व्रतादेशेषु वेदारम्भव्रतेषु विसर्गे समाव-र्तने च । व्रतादेशनानि च विसर्गाश्च व्रतादेशनविसर्गाः तेषु भवति । "सदसस्पतिमित्यक्षतधानास्त्रिः सर्वेऽनुपठेयुर्हुत्वा हुत्वौदुम्बर्यस्तिस्र-स्तिस्रः समिध ऽआदध्युरार्द्राः सपलाशा घृताक्ताः सावित्र्या"इति सूत्रम् । धानानां श्रपणानुपदेशात्सिद्धानामेवोपादानम् । तदुक्तं कारिकायाम्—

आसादने विशेषोऽयं नेह स्याच्चरुपात्रकम् ॥ इति ।

अत्र तण्डुलाभावे आज्यस्योत्तरतो धानानामासादनम् । तथा च रेणुः—

आज्योत्तरं च सिद्धानां धानानां सादनं स्मृतम् ॥ इति ।

धानाशब्देन भृष्टयवा उच्यन्ते । तथा चोक्तं कारिकायाम्——

धाना भृष्टयवाः प्रोक्ता लाजास्तु व्रीहयस्तथा ॥ इति ।

अक्षताश्च ताः धानाश्च अक्षतधानाः । ताः"सदसस्पति"मिति मन्त्रेण

आचार्यस्त्रिर्जुहोति। सर्वे शिष्या अनु सहैव वर्तमानाः "सदसस्पति"-मिति मन्त्रं त्रिः पठेयुः। किं कृत्वा हुत्वा हुत्वा एकैकामक्षतधानाहुतिम्। उदुम्बरवृक्षोद्भवाः तिस्रस्तिस्रः आर्द्राः पत्रसहिताः घृतलिप्ताः समिध आचार्यसहिताः शिष्याः सावित्र्या "तत्सवितु"रितिमन्त्रेणादध्युः अग्नौ प्रक्षिपेयुः। तिस्रस्तिस्र इति वीप्सा आधातृपुरुषविषया न समिद्विषया। अतश्च प्रत्याहुति एकैकामेवादध्युः। एवमेव पुनर्द्विवारमुक्तमन्त्राभ्यामेव धानाहोमादि समिदाधानान्तं कुर्युः। अगादि च कारिकाकारैः—

एवं द्विरपरं कर्म धानाहोमादिकं भवेत्॥ इति।

"ब्रह्मचारिणश्च पूर्वकल्पेने"ति सूत्रम्। तत्र ये ब्रह्मचारिणः शिष्यास्ते पूर्वकल्पेन प्रागुपदिष्टाग्निपरिचरणसमिदाधानमन्त्रेणादध्युः। "शन्नो भवन्त्वित्यक्षतधाना ऽअखादन्तः प्राश्नीयु"रिति सूत्रम्। "शन्नो भवन्तु व्वाजिन"इति मन्त्रेणाक्षतधानाः अनवखण्डयन्तः दन्तैरस्पृष्ट्वा जिह्वयैवाश्नीयुः सर्वे आचार्यसहिताः, बहुवचनोपदेशात्। "दधिक्राव्ण इति दधि भक्षयेयुः" इति सूत्रम्। "दधिक्राव्ण"इति मन्त्रेण सर्वे दधिभक्षणं कुर्युः। "स यावन्तं गणमिच्छेत्तावतस्तिलानाकर्षफलकेन जुहुयात्सावित्र्या शुक्रज्योतिरित्यनुवाकेन वा" इति सूत्रम्। स आचार्यो यावन्तं यावत्संख्याकं शिष्याणां गणं समूहं इच्छेत्तावत्संख्याकान् तिलान् आकर्षफलकेन औदुम्बरेण बाहुप्रमाणेन सर्पाकृतिना पात्रेण सावित्र्या "तत्सवितु"रितिमन्त्रेण जुहुयात्। "शुक्रज्योति"रित्यनुवाकेन वा जुहुयात्। तथा च रेणुकारिकायाम्—

यावन्तं गणमिच्छेत्स शिष्याणां तावतस्तिलान्।
अनन्वारब्ध आकर्षफलकेन जुहोत्यथ॥ इति।

ततो धानाभ्यः स्विष्टकृत्। तदुक्तं गृह्यकारिकायाम्—

धानाभ्यः स्विष्टकृद्धोमो भूरित्याद्यत्र पूर्ववत्।
प्राशनादि विमोकान्तं कुशेषूत्तरतोऽन्वितम्॥ इति।

"प्राशनान्ते प्रत्यङ्मुखेभ्यऽउपविष्टेभ्य ऽओङ्कारमुक्त्वा त्रिश्च सावित्रीमध्यायादीन्प्रब्रूयादृषिमुखानि बह्वृचानां पर्वाणि च्छन्दोगा-

नाथंसूक्तान्यथर्वणाना"मिति सूत्रम् । संस्रवभक्षणान्ते अग्नेरुत्तरतः स्वयं प्राङ्मुखः प्रत्यङ्मुखोपविष्टेभ्यः शिष्येभ्यो यजुर्वेदोपाकरणे ओङ्कारमुक्त्वा उच्चार्य "तत्सवितु"रिति सावित्रीं त्रिरुक्त्वा मन्त्रब्राह्मणयोरध्यायादीन्प्रब्रूयादध्यापयेत् । तथा च कारिकायाम्—

प्राशनादिविमोकान्ते कुशेषूत्तरतोऽन्वितम् ।
जलेशादिङ्मुखेभ्यः स आसीनेभ्यो गुरुस्तदा ॥
ॐकारमुक्त्वा सावित्रीं पच्छो व्याहृतिपूर्विकाम् ।
अर्धर्चशस्तकाराद्यां ब्रूयात्सर्वां तथैव सः ॥
अत्राहतुः स्पष्टतरं भवनागत्रिविक्रमौ ।
अध्यायादींस्ततो ब्रूयान्मन्त्रब्राह्मणयोरिह ॥

वेदोपाकरणविषये विशेषमाह विधानपारिजाते व्यासः—

दर्भासनो दर्भकरः प्राङ्मुखो वाऽप्युदङ्मुखः ।
उपक्रमेत वेदान्वा वेदौ वा वेदमेव वा ॥
प्रणवं प्राक्प्रयुञ्जीत व्याहृतीः प्रणवं ततः ।
पच्छोऽर्द्धर्चशः शिरसा सावित्रीमनुवाच्य च ॥
उपक्रमेत्ततो मन्त्रानादौ च ब्राह्मणस्ततः ।
ततोपनिषदं कल्पं रहस्यान्यपि शक्तितः ॥
अधीत्य प्रणवं चोक्त्वा भूमिं स्पृष्ट्वा जलं स्पृशेत् ।
नमस्कृत्वा ततो देवानृषींश्चैव गुरूनपि ॥

बह्वृचां ऋग्वेदिनां वेदोपाकरणे ऋषिमुखानि मण्डलादीन् ब्रूयात् । छन्दोगानां शिष्याणां सामवेदोपाकरणे पर्वाणि ब्रूयात् । अथर्वणानां शिष्याणां अथर्ववेदोपाकरणे सूक्तानि ब्रूयात् । तथाचोक्तं गृह्ये—

ऋग्वेदेऽधीयमाने ताऽन्ब्रूयादृषिमुखान्यपि ।
पर्वाणि सामवेदश्चेत्सूक्तान्याथर्वणो यदि ॥ इति ।

अत्र ब्रह्मचारिविषये विशेषमाह । विधानपारिजाते—

मौञ्जीं यज्ञोपवीतं च नवं दण्डं च धारयेत् ।
कटिसूत्रं नवं चैव नवं वस्त्रं तथैव च ॥

गृह्यकारिकायां च—समाचारप्रमाणं यन्मौञ्जीदण्डोपवीतकम् ।
नूतनं धारयन्तीह जीर्णान्त्यक्त्वोक्तिरेव च ॥

विधानपारिजाते स्मृत्यन्तरे—

दण्डाजिनोपवीतानि मेखलां कटिसूत्रकम् ।
धृत्वोपाकरणं कृत्वा ततः स्वाध्यायमारभेत् ॥
पुराणानि विसृज्याथ पुनः पुनरिति क्रमात् ॥

सङ्ग्रहेऽपि—सूतकान्त उपाकर्म गते मासचतुष्टये ॥
अनवं वा नवं वापि धृत्वा पूर्वं विसर्जयेत् ॥

यज्ञोपवीतमिति शेषः । प्रसङ्गतो ब्राह्मणेभ्यो यज्ञोपवीतदानं विधानपारिजाते वायुपुराणे—

उपाकर्मणि विप्रेभ्यो दद्याद्यज्ञोपवीतकम् ।
आयुष्मान् जायते तेन कर्मणा मानवो भुवि ॥ इति ।

अनन्तभट्टीये—प्रदानमुपवीतानां भवनागोऽब्रवीत्स्फुटम् ॥ इति ।

"सर्वे जपन्ति सह नोऽस्तु सह नोऽवतु सह न इदं वीर्यवदस्तु ब्रह्म । इन्द्रस्तद्वेद येन यथा न विद्विषामह इति" इति सूत्रम् । आचार्यसहिताः सर्वे शिष्याः जपेयुः । मन्त्रार्थः—साङ्गोऽयं वेदः । अध्ययनार्थं सहभावं प्राप्तानां नोऽस्माकं अस्मत्हृदये अस्तु स्थिरं भवतु । ततश्च सह मिलितान्नोऽस्मान् अवतु पापात् रक्षतु । यथा च मिलितानां नोऽस्माकं अनध्यायाद्यध्ययने शूद्रादिश्रवणादिना उपहतमपि इदं ब्रह्म वीर्यवत् अयातयाममस्तु । इन्द्रः प्रजापतिः तत् यथा यथावत् वेद । यथा येन वेदनेन परस्परं न विद्विषामहे न द्विष्मः । "त्रिरात्रं नाधीयीरँल्लोमनखानामनिकृन्तन"मिति सूत्रम् । उपाकर्मोत्तरं त्रिरात्रं नाधीयीरन् सर्वे अध्ययनं न कुर्युः । लोम्नां नखानां च छेदनं त्रिरात्रं न कुर्युः । कारिकायामपि—

अत ऊर्ध्वमनध्यायस्त्रिरात्रमनिकृन्तनम् ।
नखलोम्नामथो प्रागुत्सर्गाद्वाऽप्यनिकृन्तनम् ॥
मधुमांसादिलवणं वर्जयन्तोऽनृतौ स्त्रियम् ॥ इति ।

"एके प्रागुत्सर्गा"दिति सूत्रम् । एके आचार्याः प्रागुत्सर्गात् लो-

मनखानामनिकृन्तनमिच्छन्ति । इदमुपाकर्म ब्रह्मचारिणामेव न गृहस्थानामिति चेन्न । एतदुपाकर्म गृहस्थस्याप्यावश्यकम् । तथा च विधानपारिजाते व्यासः—

वेदव्रतानि कृत्वैव विप्रो यद्युद्वहेत तत् ।
अधीयीत गृहस्थोऽपि नियमाद्ब्रह्मचारिवत् ॥

गोभिलोऽपि—उपाकर्मोत्सर्जनं च वनस्थानामपीष्यते ।
धारणाध्ययनाङ्गत्वाद्गृहिणां ब्रह्मचारिणाम् ॥इति।

ब्रह्मचारिवदितिव्यासवचनेन मधुमांसादिभक्षणनिषेधनूतनयज्ञोपवीतधारणजीर्णत्यागादिकं गृहस्थानामपि प्राप्तम् । अस्य फलमाह कात्यायनः—

प्रत्यब्दं यदुपाकर्म सोत्सर्गं विधिवद्द्विजैः ।
क्रियते छन्दसां तेन पुनराप्यायनं भवेत् ॥
उत्सर्जनं च वेदानामुपाकरणकर्म च ।
अकृत्वा वेदजाप्येन फलं नाप्नोति मानवः ॥
अयातयामच्छन्दोभिर्यत्कर्म क्रियते द्विजैः ।
क्रीडमानैरपि सदा तत्तेषां वृद्धिकारणम् ॥ इति ।

अत्र रक्षाबन्धनमुक्तं हेमाद्रौ—

ततोऽपराह्णसमये रक्षापोटलिकां शुभाम् ।
कारयेदक्षतैः शस्तैः सिद्धार्थैर्हेमभूषितैः ॥

इदं भद्रायां न कार्यम् ।

भद्रायां द्वे न कर्तव्ये श्रावणी फाल्गुनी तथा ।
श्रावणी नृपतिं हन्ति ग्रामं दहति फाल्गुनी ॥

इति सङ्ग्रहवचनात् । भद्रासत्वे तु रात्रावपि तदन्ते कुर्यादिति निर्णयामृते । तत्र मन्त्रः—

येन बद्धो बली राजा दानवेन्द्रो महाबलः ।
तेन त्वामपि बध्नामि रक्षे ! मा चल मा चल ॥ इति ।
ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैरन्यैश्च मानवैः ।
कर्तव्यो रक्षिकाबन्धो द्विजान्सम्पूज्य शक्तितः ॥ इति ।

इति श्रीरामकृष्णविरचिते संस्कारगणपतौ दशमी कण्डिका ॥

अथ उक्तदिने गुरुः शिष्यैः सहाभ्यञ्जनक्रियां कृत्वाऽहतवस्त्रं परिधायाचम्य प्राणानायम्य देशकालौ स्मृत्वा "अस्मिन्पुण्याहे अध्यायोपाकर्माहं करिष्ये। तत्रादौ तदङ्गत्वेन विहितं पुण्याहवाचनं मातृकापूजनं नान्दीश्राद्धं च करिष्ये। निर्विघ्नेन परिसमाप्त्यर्थं गणपतिपूजनमहं करिष्ये"। सर्वं सम्पाद्य शालाग्नेः पश्चादुपविश्य गुरुः। ब्रह्मचारिणोऽप्यग्निसमीपे उपविशेयुः। वैकल्पिकं स्मरणं कुर्यात्। तदित्थम्—"वह्नेः पूर्वेण ब्रह्मणो गमनम्। पश्चिमे पात्रासादनम्। पवित्राणि त्रीणि। मृण्मयी आज्यस्थाली। खादिर्यः समिधः। पूर्णपात्रम्। विदिशावाघारौ। समिद्धतमेऽग्नौ आज्यभागौ। चतुर्णां वेदानां तन्त्रेणोपाकर्म। शुक्रज्योतिरित्यनुवाकेन तिलहोमः। न नखलोमनिकृन्तनं त्रिरात्र"मिति। ततो देवताभिध्यानम्। "अत्र प्रजापतिम्। इन्द्रम्। अग्निम्। सोमम्। अन्तरिक्षम्। वायुम्। ब्रह्माणम्। छन्दाᳬसि। पृथिवीम्। अग्निम्। ब्रह्माणम्। छन्दाᳬसि। दिवम्। सूर्यम्। ब्रह्माणम्। छन्दाᳬसि। दिशः। चन्द्रमसम्। ब्रह्माणम्। छन्दाᳬसि। प्रजापतिम्। देवान्। ऋषीन्। श्रद्धाम्। मेधाम्। सदसस्पतिम्। अनुमतिम्। एता आज्येन। ततोऽत्रातिरिक्तं सदसस्पतिं धानाभिः। सवितारं समिद्भिः। ततो अग्निᳬस्विष्टकृतम्। इयं धानाविशेषेण"। ततो व्याहृत्यादिदेवताभिध्यानं पूर्वोक्तमेव। "एताः पुनराज्येन। अपास्तिलैः। (अथ वा) सवितारं तिलैः। एता देवता अङ्गप्रधानार्था अस्मिन्कर्मण्यहं यक्ष्ये"। एवमुक्त्वाऽनन्तरं परिस्तरणं कृत्वा ब्रह्मवरणं कर्त्तव्यम्। "अमुकशर्मन् अस्मिन्नुपाकर्मणि त्वं ब्रह्मा भव"। ततः प्रणीताप्रणयनम्। ततः पात्रासादनम्। पवित्रच्छेदनानि त्रीणि। पवित्रे द्वे। प्रोक्षणीपात्रम्। आज्यस्थाली। सम्मार्गकुशाः। उपयमनकुशाः। समिधस्तिस्रः। स्रुवः। आज्यम्। पूर्णपात्रम्। अथोपकल्पनीयानि सपत्रार्द्राः खादिर्यः समिधः। औदुम्बर्यो वा। ताः समिधो गुरुः शिष्याश्च यावन्तो भवेयुस्तावतां प्रत्येकं नव नव ज्ञेयाः। धानाः

भृष्टा यवाः । दधि । आकर्षफलकम् सर्पाकारो बाहुमात्रः पात्रविशेषः । तिलाश्च । तत्रायं विशेषः अत्र तण्डुलाभाव आज्यस्योत्तरतो धानानामासादनं कार्यम् । प्रोक्षणं च । पर्युक्षणान्तं कृत्वा प्रथमं घृतेन होमः । ॐप्रजापतये स्वाहा । इदं प्रजापतये न मम । ॐइन्द्राय स्वाहा । इदमिन्द्राय न मम । ॐअग्नये स्वाहा । इदमग्नये न मम । ॐसोमाय स्वाहा । इदं सोमाय न मम" । केवलं ऋग्वेदोऽधीयमानश्चेत्तदा । "ॐपृथिव्यै स्वाहा । इदं पृथिव्यै न मम । ॐअग्नये स्वाहा । इदमग्नये न मम । ॐब्रह्मणे स्वाहा । इदं ब्रह्मणे० । ॐछन्दोभ्यः स्वाहा । इदं छन्दोभ्यो न मम" । यजुर्वेदश्चेत्तदा । "ॐअन्तरिक्षाय स्वाहा । इदमन्तरिक्षाय० । ॐवायवे स्वाहा । इदं वायवे० । ॐब्रह्मणे स्वाहा । इदं ब्रह्मणे० । ॐछन्दोभ्यः स्वाहा । इदं छन्दोभ्यो०" । सामवेदश्चेत्तदा "ॐदिवे स्वाहा । इदं दिवे० । ॐसूर्याय स्वाहा । इदं सूर्याय० । ॐब्रह्मणे स्वाहा । इदं ब्रह्मणे० । ॐछन्दोभ्यः स्वाहा । इदं छन्दोभ्यो०" । अथर्ववेदश्चेत् "ॐदिग्भ्यः स्वाहा । इदं दिग्भ्यो० । ॐचन्द्रमसे स्वाहा । इदं चन्द्रमसे० । ॐब्रह्मणे स्वाहा । इदं ब्रह्मणे न० । ॐछन्दोभ्यः स्वाहा । इदं छन्दोभ्यो न० । ॐप्रजापतये स्वाहा । इदं प्रजापतये० । ॐदेवेभ्यः स्वाहा । इदं देवेभ्यो० । ॐऋषिभ्यः स्वाहा । इदं ऋषिभ्यो० । ॐश्रद्धायै स्वाहा । इदं श्रद्धायै० । ॐमेधायै स्वाहा । इदं मेधायै न० । ॐसदसस्पतये स्वाहा । इदं सदसस्पतये न० । ॐअनुमतये स्वाहा । इदमनुमतये न० । इति सप्ताहुतयः । यो वेदोऽधीयमानो भवेत्तस्याहुतिचतुष्टयं दत्वा सप्ताहुतयः "प्रजापतये" "इत्यादिका होतव्याः । चतुर्णामपि वेदानां तन्त्रेणोपाकरणे प्रतिवेदे स्वस्वचतस्र आहुतीर्हुत्वा "प्रजापतये" इत्येवमाद्यास्तन्त्रेणैव सकृत् होतव्याः । ततो धानाभिघारणम् । "ॐसदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम् । सनिम्मेधामयासिषꣳस्वाहा" । इति मन्त्रं शिष्यैः सह आचार्यः पठित्वा स्रुवेणाक्षतधाना जुहुयात् । "इदं सदसस्पतये न

मम"। तत्र आचार्यो ब्रह्मचारिणश्च प्रत्येकं तिस्रस्तिस्रः प्रागानीताः समिधो गृह्णीयुः। तिष्ठन्तस्ताः समिधो घृताक्ताः केवलां सावित्रीं पठित्वा तिस्रस्त्रिवारं जुहुयुः। एवमेव पुनर्द्विवारं उक्तमन्त्राभ्यामेव धानाहोमादिसमिधानान्तं कुर्युः। यदा ब्रह्मचारी शिष्यस्तदा "अग्नये समिधमाहार्ष"मित्यादिना समिदाधानं कुर्यात्, न सावित्र्या। अन्यत्सर्वं समानम्। "ॐशन्नो भवन्तु व्वाजिनो हवेषु देवताता मितद्रवः स्वर्काः।

जम्भयन्तोऽहिं व्वृकꣳरक्षाꣳसि सनेम्यस्मद्युयवन्नमीवाः"। इति मन्त्रेण गुरुः शिष्याश्च तिस्रस्तिस्रो धाना अखण्डिता दन्तैरस्पृष्टा जिह्वयैवाश्नीयुः। ततो "दधिक्राव्णोऽअकारिषं जिष्णोरश्वस्य व्वाजिनः। सुरभि नो मुखा करत्प्र णऽआयूꣳषि तारिषत्"। इति मन्त्रेण सर्वेऽपि दधि भक्षेयुः। ततो द्विराचमनम्। ततो गुरुः अन्वारब्धः सन् श्राकर्षफलकेन तिलान् जुहुयात्।

"ॐशुक्रज्योतिश्च चित्रज्योतिश्च सत्यज्योतिश्च ज्योतिष्माँश्च। शुक्रश्च ऋतपाश्चात्यꣳहाः॥ ईदृङ्चान्यादृङ्च सदृङ्च प्रतिसदृङ्च। मितश्च सम्मितश्च सभराः॥ ऋतश्च सत्यश्च ध्रुवश्च धरुणश्च। धर्त्ता च व्विधर्त्ता च व्विधारयः॥ ऋतजिच्च सत्यजिच्च सेनजिच्च सुषेणश्च। अन्तिमित्रश्च दूरेऽअमित्रश्च गणः॥ ईदृक्षासऽएतादृक्षासऽऊ षु णः सदृक्षासः प्रतिसदृक्षासऽएतन। मितासश्च सम्मितासो नोऽअद्य सभरसो मरुतो यज्ञेऽअस्मिन्। स्वतवाँश्च प्रघासी च सान्तपनश्च गृहमेधी च। क्रीडी च शाखी चोज्जेषी च॥ इन्द्रन्दैवीर्व्विशो मरुतोऽनुवर्त्मानोऽभवन्यथेन्द्रन्दैवीर्व्विशो मरुतोऽनुवर्त्मानोऽभवन्। एवमिमं यजमानन्दैवीश्च व्विशो मानुषीश्चानुवर्त्मानो भवन्तु स्वाहा। इदं सवित्रे०।" अत्रायं गुरुः बहुशिष्यकामश्चेत्तदा बहुभिस्तिलैर्होमः कर्त्तव्यः। ततः धानाशेषेण "ॐअग्नये स्विष्टकृते स्वाहा। इदमग्नये स्विष्टकृते न मम। ॐभूः स्वाहा। इदमग्नये न मम। ॐभुवः स्वाहा। इदं वायवे न मम। ॐस्वः स्वाहा। इदं सूर्याय०। त्वन्नः। सत्वन्नः। अयाश्चाग्ने। ये ते शतं०।

उदुत्तमं० । ॐप्रजापतये स्वाहा । इदं प्रजापतये न मम ।" ततः संस्रवप्राशनम् । पवित्राभ्यां मार्जनम् । पवित्रप्रतिपत्तिः । ब्रह्मणे वरदानम् । तदित्थम्--"ब्रह्मन् अस्योपाकर्मणोऽङ्गतया विहितोऽयं वरः तुभ्यमहं सम्प्रददे" । ततः प्रणीताविमोकः । ततोऽग्नेरुत्तरतः कुशोपविष्टेभ्यः प्रत्यङ्मुखेभ्यः शिष्येभ्यः प्राङ्मुखः कुशोपविष्टः आचार्यः ऋष्यादिकं पठित्वा ॐकारव्याहृतिपूर्वां सावित्रीं प्रथमं पादशो ब्रूयात । ततोऽर्द्धर्चशः ब्रूयात् । ततः सर्वां तैः सहानुवर्तयेत् । अत्र ऋषिपूजनम् । ततस्तर्पणम् । एतद्द्वयं उत्सर्गे स्पष्टं वक्ष्यामि । ततोऽत्र यथाशक्ति यज्ञोपवीतदानं कार्यम् । अत्रत्यापीतिकर्तव्यता तत्रैव वक्ष्यते । तत"इषे त्वे"त्यारभ्य मन्त्राध्यायादीन् ब्रूयात् । यथा "ॐ भूर्भुवः स्वः ॐ तत्सवितु"रिति । "ॐइषे त्वा ॐकृष्णोऽसि" । इत्यादिकाः । एवं सर्व्वे अध्यायाः । एवमेव ब्राह्मणाध्यायाः । तत उपनिषत्कल्पादि यथाशक्ति पठेत् । ततः प्रणवम्-"ॐ" । भूमिस्पर्शनम् । ततो जलस्पर्शनम् । ततो देवान् ऋषीन् गुरून् नमस्कृत्य उपविशेत् ॥

## ( एकादशी कण्डिका )

**वातेऽमावास्यायाथ्ंसर्वानध्यायः श्राद्धाशने चोल्कावस्फूर्जभूमिचलनाग्न्युत्पात ऽऋतुसन्धिषु चाकालमुत्सृष्टेष्वभ्रदर्शने सर्वरूपे च त्रिरात्रं त्रिसन्ध्यं वा भुक्त्वाऽऽर्द्रपाणिरुदके निशायाथ्ंसन्धिवेलयोरन्तःशवे ग्रामेऽन्तर्दिवाकीर्त्ये धावतोऽभिशस्तपतितदर्शनाश्चर्याभ्युदयेषु च तत्कालन्नीहारेवादित्रशब्द आर्त्तस्वने ग्रामान्ते श्मशाने श्वगर्दभोलूकशृगालसामशब्देषु शिष्टाचरिते च तत्कालं गुरौ प्रेतेऽपोभ्यवेयाद्दशरात्रं चोपरमेत्सतानूनप्त्रिणि सब्रह्मचारिणि च त्रिरात्रमेकरा-**

त्रमसब्रह्मचारिण्यर्धषष्ठान्मासानधीत्योत्सृजेयुरर्धसप्त-मान्वाथेमामृचं जपन्त्युभा कवी युवा यो नो धर्मः परापतत् । परिसख्यस्य धर्मिणो विसख्यानि विसृजामह इति त्रिरात्रꣳ सहोष्य विप्रतिष्ठेरन् ॥ ११ ॥

"वातेऽमावास्यायाꣳसर्व्वानध्यायः" इति सूत्रम् । वाते वायौ प्रचण्डे सति वातस्य सर्वदा विद्यमानत्वादतिशयितोऽत्र ग्राह्यः । सर्वशब्दाच्चाङ्गानामपि न च्छन्दसामेव । यद्यदुपाध्यायसकाशाद्गृह्यते शिल्पाद्यपि तत्सर्वं ग्रहणेन गृह्यते । शिल्पिनामपि स्वनध्यायप्रसिद्धिरस्ति । अनध्यायश्च प्रकृतत्वात् गुरुमुखाद्यच्छिक्ष्यते तत्रैव भवति । न गुणनेऽपीति । अपरे तु सर्वविषयतामिच्छन्ति । "श्राद्धाशने चोल्कावस्फूर्ज्जभूमिचलनाग्न्युत्पात ऋतुसन्धिषु चाकाल"मिति सूत्रम् । आकालिका एते अनध्यायाः । आकालं यस्मिन्काले उल्कादेरापतनं अपरदिने तावत् कालपर्यन्तम् । श्राद्धाशने श्राद्धान्नभोजने । श्राद्धान्नाजीर्णे इत्यपरे । उल्का ज्वालाकृतिः पतति तारका । अवस्फूर्जं विद्योतमाना विद्युत् । भूमिचलनं भूमिकम्पः । अग्निर्ग्रामदाहः । एषामुत्पात उत्पतनम्, तस्मिन् । ऋतुसन्धिशब्देन एकस्य ऋतोरन्तः अपरस्य यावदप्रवृत्तिः स काल उच्यते । तत्र चाकालिकता नोपपद्यते । ततश्च पूर्वस्यर्तोरन्त्या रात्रिरुत्तरस्याद्यमहस्तावाननध्यायः । "उत्सृष्टेष्वभ्रदर्शने सर्व्वरूपे च त्रिरात्रं त्रिसन्ध्यं वा" इति सूत्रम् । उत्सृष्टेषु च्छन्दःसु वेदानामुत्सर्गे कृते । अभ्रदर्शनमत्रातिशयितं गृह्यते, सर्वकालमभ्रस्य विद्यमानत्वात् । विद्युदभ्रवायुवृष्टिगर्जितानां युगपत्प्रवृत्तिः सर्वस्वरूपम् । तत्रापि त्रिरात्रमनध्यायः । त्रिसन्ध्यं वेति विकल्पः । अभ्रदर्शने त्रिरात्रं सर्वस्वरूपे च त्रिसन्ध्यमिति व्यवस्थितविकल्प इत्यन्ये । "भुक्त्वार्द्रपाणिरुदके निशायाꣳसन्धिवेलयोरन्तःशवे ग्रामेऽन्तर्द्दिवाकीर्त्ये" इति सूत्रम् । भुक्त्वा यावदार्द्रपाणिस्तावन्नाधीयीत । तथा उदके यावत्तिष्ठति तावत् । निशायां स्मृत्यन्तरान्निशाशब्देनार्द्धरात्रमुच्यत इति कर्कः ।

महानिशा च विज्ञेया मध्यस्थं प्रहरद्वयम् ॥

इति स्मरणात् ।

रात्रेः पूर्वोत्तरौ यामौ वेदाभ्यासेन तौ नयेत् ॥

इति वचनेन रात्रेः पूर्वचतुर्थयामयोर्वेदाभ्यासविधिना द्वितीयतृतीययोः परिशेषादनध्याय इति हरिहरः । सन्धिवेलयोः अहोरात्रयोः सन्ध्याकालयोः अन्तःशवे ग्रामे ग्राममध्ये यावच्छवं मृतशरीरं भवति तावन्नाधीयीत । अन्तर्दिवाकीर्त्यै दिवा अह्नि कीर्त्यं पठनीयं यदप्रवर्त्तादि तद्दिवाकीर्त्यं तस्मिन्विषये ग्रामे अनध्यायः । तद्ग्राममध्ये न पठनीयम् । सूत्रयोजनायां ग्रामपदं काकाक्षिगोलकन्यायेनोभयत्र योजनीयम् । ग्रामेऽन्तर्दिवाकीर्त्यै इति । अन्ये तु अन्तः सन्निहितो दिवाकीर्तिश्चण्डालो यत्र सोऽन्तर्दिवाकीर्त्यो देशस्तत्रानध्यायः । "**धावतोऽभिशस्तपतितदर्शनाश्चर्याभ्युदयेषु च तत्कालम्**" इति सूत्रम् । धावतोऽभिशस्तपातितयोर्दर्शनम् । आश्चर्यमद्भुतमिन्द्रजालादि । अभ्युदयः पुत्रजन्मविवाहादि । एषु धावनादिनिमित्तेषु तत्कालं यावन्निमित्तं तावत्कालमनध्यायः । "**नीहारे वादित्रशब्द आर्त्तस्वने ग्रामान्ते श्मशाने श्वगर्दभोलूकशृगालसामशब्दे शिष्टाचरिते च**" इति सूत्रम् । नीहारो धूमरिकायाम् , वादित्राणां मृदङ्गादीनां शब्दे, आर्त्तस्य दुःखितस्य स्वने शब्दे, ग्रामस्यान्ते सीम्नि, श्मशाने मृतकदाहभूमौ, श्वा च गर्दभश्च उलूकश्च शृगालश्च साम च श्वगर्दभोलूकशृगालसामानि तेषां शब्दे श्रूयमाणे, शिष्टाचरिते च शिष्टस्य श्रोत्रियस्याचरिते आगमने, चकारात्तं कालं यावन्निमित्तमनध्यायः । "**गुरौ प्रेतेऽपोऽभ्यवेयाद्दशरात्रं चोपरमेत्**" इति सूत्रम् । गुरौ आचार्ये प्रेते मृते, अप उदकं अभ्यवेयात प्रविशेत्स्नानपूर्वकमुदकदानाय । दशरात्रं दशाहानि स्वाध्यायादुपरमेत् । "**सतानूनप्त्रिणि सब्रह्मचारिणि च त्रिरात्र**"मिति सूत्रम् । तानूनप्त्रं च "**ध्रौवं व्रतप्रदाने गृह्णात्यापतय इति द्विश्च स्थाल्याः स्रुवेण तानूनप्त्रमेतद्दक्षिणस्यां वेदिश्रोणौ निधायावमृशन्त्यृत्विजो यजमानश्चानाधृष्ट**"मिति ज्योतिष्टोमे विहितम् । सह तानूनप्त्रं आज्यं येन स्पृष्टं स सतानूनप्त्री तस्मिन्सतानूनप्त्रिणि प्रेते । समाने तुल्ये ब्रह्माणि

वेदे चरतीति सब्रह्मचारी तस्मिन्सब्रह्मचारिणि सहाध्यायिनि आचार्ये च प्रेते त्रिरात्रं स्वाध्यायादुपरमेत् । "**एकरात्रमसब्रह्मचारिणि**" । न स ब्रह्मचारी असब्रह्मचारी तस्मिन्नाचार्ये प्रेते एकरात्रमनध्यायः । अथ स्मृत्यन्तरोक्ता अनध्यायाः । तत्र स्मृत्यर्थसारे "अर्धषष्ठान्मासानधीत्योत्सृजेयुः" । अर्धः षष्ठो मासो येषां ते अर्धषष्ठा मासास्तानर्धषष्ठान्मासानधीत्य पठित्वा उत्सृजेयुः पूर्वमुपाकृतानि छन्दांसि । उत्सर्गश्छन्दसामेव । अङ्गानि पुनरधीयीत । "अर्धसप्तमान्वा" । अधीत्योत्सृजेयुरिति शेषः । अर्धः सप्तमो मासो येषु ते अर्धसप्तमाः । "**अथेमामृचं जपन्त्युभा कवी युवा यो नो धर्मः परापतत् । परिसख्यस्य धर्मिणो विसख्यानि विसृजामह इति**" । उत्सर्गानन्तरं आचार्येण सह शिष्या "उभा कवी" इति इमामृचं जपन्ति उच्चारयन्ति । **मन्त्रार्थः**—हे अश्विनौ ! युवां उभा उभौ यतः कवी क्रान्तदर्शनौ युवा युवानौ युष्मत्संपादितो धर्मो नोऽस्माकं परिसख्यस्य सुमित्रभावस्य परापतत् रक्षणार्थमागतः । तेन धर्मेण विसख्यानि विद्विषादीनि विषमाध्यायादीनि वा विसृजामहे त्यजाम, किंभूतस्य सख्यस्य धर्मिणः उपकारादिधर्मवतः परस्परमनुकूलस्य इत्यर्थः । "**त्रिरात्रꣳसहोष्य विप्रतिष्ठेरन्**" इति सूत्रम् । अत्र त्रिरात्रं सह एकस्मिन्गृहे आचार्यसहिताः शिष्या निवासं कृत्वा विप्रतिष्ठेरन् । विविधं प्रवासं कुर्युः । त्रिरात्रं सहवासनियमः । विप्रतिष्ठाऽत्र विद्यत एव ।

**इति श्रीप्रथमशाखीयरामकृष्णविरचिते पारस्करगृह्यसूत्रविवरणे संस्कारगणपतौ द्वितीयकाण्ड एकादशी कण्डिका ।**

---

## ( द्वादशी कण्डिका )

**पौषस्य रोहिण्या मध्यमायां वाऽष्टकायामध्यायानुत्सृजेरन्नुदकान्तं गत्वाऽद्भिर्देवाँश्छन्दाꣳसि वेदानृषीन्पुराणाचार्यान् गन्धर्वानितराचार्यान्संवत्सरं च**

**सावयवं पितॄनाचार्यान्स्वांश्च तर्पयेयुः सावित्रीं चतुरनुद्रुत्य विरताः स्म इति प्रब्रूयुः क्षपणं प्रवचनं च पूर्ववत् ॥ १२ ॥**

अथोत्सर्ग उच्यते ।

"पौषस्य रोहिण्यां मध्यमायां वाष्टकायामध्यायानुत्सृजेरन्" इति सूत्रम् । पौषमासस्य रोहिणीनक्षत्रे मध्यमायामष्टकायां पौषशुक्लपौर्णिमाया ऊर्ध्वं अष्टम्यां वा अध्यायान् वेदान् उत्सृजेरन्नाधीयीरन् उत्सर्गं कुर्यात् । उत्सर्गशब्देन श्रावणशुक्लपौर्णिमास्यां उपाकर्मविधिना स्वीकृतस्य वेदस्य त्यागः । तथा चोक्तं अनन्तभट्टीये—

श्रावणे पौर्णमास्यादौ ब्रह्मणः स्वीकृतस्य तु ।
त्याग उत्सर्गशब्देन कोविदैरभिधीयते ॥

अध्ययनस्य त्यागः न तु वेदस्य ।

पौषमासे तु या रोहिणी जायते तस्य कृष्णेऽथ वा याष्टमी तत्र च ।
कार्यमुत्सर्गकर्म द्विजैश्छन्दसां छात्रवर्गेण साकं बहिर्जीवने ॥

तथा च याज्ञवल्क्यः—

पौषमासस्य रोहिण्यामष्टकायामथापि वा ।
जलान्ते छन्दसां कुर्यादुत्सर्गं विधिवद्बहिः ॥ इति ।

यदा श्रावण्यामुपाकर्मानुष्ठितं भवेत्तदोत्सर्गः पौषशुक्लप्रतिपदि कार्यः । यदा प्रौष्ठपद्यां तदा माघशुक्लप्रतिपदि । बभाण च मनुः—

पुष्ये तु च्छन्दसां कुर्याद्बहिरुत्सर्जनं द्विजः ।
माघशुक्लस्य वा प्राप्ते पूर्वाह्णे प्रथमेऽहनि ॥ इति ।

"मासान्विप्रोऽर्द्धपञ्चमानि"त्यपि पठन् । तथा च हारीतः—

"अर्धपञ्चमानधीत्योर्द्धमुत्सृजती"ति । अथ वोपाकर्मप्रकरणे यस्य उपाकर्मकालो यो विहितः तेन तस्मिन्नेव काले उत्सर्गोऽप्यनुष्ठेयः । तथा च खादिरगृह्ये प्रोक्तम्—

पुष्ये तूत्सर्जनं कुर्यादुपाकर्मदिनेऽथवा ॥ इति ।

तस्मिन्पक्षे आरब्धोपाकर्मोत्सर्जनो नरः पूर्वमुत्सर्जनं कृत्वा तदन-

न्तरमुपाकर्म कुर्यादिति विवेकः। बौधायनादीनां तु पौषी माघी च पूर्णिमोत्सर्गकालत्वेन संमता। अपाठि च बौधायनेन—

**"श्रावण्यां पौर्णमास्यामाषाढ्यां वोपाकृत्य तैष्यमाघ्यां चोत्सृजे"**दिति। एतत्तैत्तिरीयविषयमाभाति। सामवेदिनस्तु सिंहस्थे सूर्ये सति पुष्यनक्षत्रे कुर्युः। तथा च गर्गर्षिः—

**सिंहे रवौ तु पुष्यर्क्षे पूर्वाह्णे विचरेद्बहिः।**
**छन्दोगा मिलिताः कुर्युरुत्सर्गं सर्वछन्दसाम्॥** इति।

यदा भाद्रपदे मासि हस्तनक्षत्रात्प्रागेव पुष्यो भवेत्तदा ते श्रावणेऽप्युत्सर्गं विदध्युः। तथा च परिशिष्टे—

**माघे प्रौष्ठपदे हस्तात्पुष्यः पूर्वो भवेद्यदा।**
**तदा च श्रावणे कुर्यादुत्सर्गं छन्दसां द्विजः॥** इति।

अथोत्सर्गे इयमितिकर्तव्यता। उक्तयोगदिने गुरुः शिष्यैः सहाभ्यञ्जनादिकं कृत्वाऽहतवस्त्राणि परिधायोपविश्य द्विराचम्य तिथिं स्मृत्वा **"अस्मिन् पुण्याहे अध्यायोत्सर्गमहं करिष्ये। तदङ्गत्वेन विहितं गणपतिपूजनपुण्याहवाचनमातृकापूजननान्दीश्राद्धं करिष्ये"**इति सङ्कल्पं कृत्वा पूर्ववत्सर्वं सम्पाद्य, तथा च रेणुः—

**तिथ्यादिकल्पितं कालं स्मृत्वा शिष्यैर्गुरुः सह।**
**वेदस्य गुरुमध्यायोत्सर्गं करिष्य इत्यमुम्॥**
**जपन्ति ते सहाचार्येणामुं मन्त्रमुभा कवी।**
**इतःप्रभृति सर्वेषां त्रिरात्रं स्यात्सहासनम्॥**
**नियमो प्रथमोऽब्दे स्याद्विप्रतिष्ठानुवादतः॥**

**"उदकान्तं गत्वे"**ति सूत्रम्। नद्याद्युदकसमीपं गत्वा विधिवत्स्नात्वा उत्सर्गं कुर्यात्। उदकान्तगमनेन च स्नानं लक्ष्यते। तच्च स्वगृह्योक्तम्। गन्धाक्षतपुष्पताम्बूलदर्भदूर्वागोमयमृत्तिकापामार्गादीनि स्नानार्थं यज्ञोपवीतधूपनैवेद्यादिकं ऋषिपूजनार्थं गृहीत्वा ग्रामादुत्तरतो नद्यादिसमीपे गत्वा तीरं प्रक्ष्याल्य तत्र तानि संस्थापयेत्। उक्तं च कारिकायाम्—

**मृदक्षतकुशान्दूर्वापामार्गौ गोमयं तिलान्।**

यज्ञोपवीतं गन्धादीनादायोदकमाव्रजेत् ॥
तिथ्यादिकल्पितं कालं स्मृत्वा शिष्यैर्गुरुः सह ।
एकान्तमुदकं गत्वा तटं प्रक्षाल्य पाणिना ॥
तत्र संस्थापयेत्सर्वं यथादेशं पृथक् पृथक् ।
कृत्वात्र विधिवत्स्नानं नित्यकर्मविधिं तथा ॥

एवं स्नानसन्ध्यादिकं विधाय नद्यादितटे ऋषिं पूजयेत् । तथा च विधानपारिजाते कृष्णाजिनिः—

उपाकर्मणि चोत्सर्गे यथाकालं समेत्य च ।
ऋषीन्दर्भमयान् कृत्वा पूजयेत्तर्पयेत्ततः ॥

व्यासः—विष्टरं सप्तभिर्दर्भैर्द्वादशाङ्गुलदैर्घ्यकम् ।
चतुरङ्गुलमग्रे स्याद्ग्रन्थिरेकाङ्गुलस्तथा ॥
प्रदक्षिणभ्रमं कृत्वा ऋषीनावाह्य पूजयेत् ॥

सम्प्रदायकारिकायाम्—स्नातव्यं विधिवत्तत्र स्थापयेद्दश्यरुन्धतीन् ।
प्रवरांश्च ततो धीमान्कुर्यात्तेषां प्रतिष्ठितिम् ॥

अथ ऋषिमाह । गृह्यकारिकायाम्—

कश्यपोऽथ भरद्वाज अङ्गिरा गौतमो मुनिः ।
वत्सः पराशरश्चेति माण्डव्यः सप्तमस्तथा ॥
प्रतिष्ठाप्य मनोजूतिरिमं मन्त्रं समुच्चरन् ।
मन्त्राभ्यां सप्त ऋषय इदं विष्णुर्विचक्रमे ॥
अर्चयेद्विष्णुरूपाँस्तान्गन्धाद्यैः सोपवीतकैः ।

सम्प्रदायकारिकायामपि—

इमावेवेति यजुषा नामान्येषां विनिर्दिशेत् ।
अद्भिस्तान् स्नापयेद्विप्रः सप्त ऋषय इत्यृचा ॥
अर्घ्यस्तेभ्यः प्रदातव्यः पूजनं चन्दनादिभिः ।
नैवेद्यैर्विविधैः पूज्या वेदस्य हितमिच्छता ॥
ऋषीणां प्रीतये दद्यादुपवीतान्यनेकशः ।
प्रणम्य च मुनीन्भक्त्या पश्चात्तर्पणमारभेत् ॥

अत्र यज्ञोपवीतदानमपसव्येन । तथा च स्मृतिरत्ने—

कुर्यात्सप्त ऋषिभ्यश्च स्थापनं च पृथक् पृथक् ।
प्रतिष्ठावाहनं चैव कालज्ञानं भवेत्ततः ॥
पूजोपवीतिना दानं प्राचीनावीतिपूर्वकम् ॥ इति ।

ततस्तर्पणे "अद्भिर्देवाँश्छन्दाᳬंसि वेदानृषीन्पुराणाचार्यान् गन्धर्वानितराचार्यान्संवत्सरं च सावयवं पितॄन्स्वांश्च तर्पयेयु"रिति सूत्रम् । अद्भिर्जलैर्देवादींस्तर्पयेयुराचार्यसहिताः शिष्याः । इदं तर्पणमुत्सर्गतर्पणम् । तत्तु तिलमिश्रितजलैः कार्यम् । तथा च गृह्यकारिकायाम—

उदकान्ते समासीनाः कुर्युरुत्सर्गतर्पणम् ।
अद्भिस्तु तिलमिश्राभिर्देवादीनां समाहिताः ॥
उभाभ्यामपि पाणिभ्याममरोदितदिङ्मुखाः ।
उच्चैस्तर्पणमत्यन्तं स्फुटमाह त्रिविक्रमः ॥

तथा सम्प्रदायभाष्यकारिकायाम्—

देवांश्छन्दांसि वेदांश्च ऋषयश्च सनातनाः ।
ततः पुराणानाचार्यान्गन्धर्वांश्च तथेतरान् ॥
अहोरात्रार्द्धमासांश्च मासा ऋतव एव च ।
संवत्सरोऽवयवैः सार्धं स्वान्पितॄंस्तर्पयेदथ ॥
आचार्यतर्पणैः सार्धमयंपुरश्च पञ्चभिः ।
मन्त्रैर्द्वाभ्यां च मूर्धेति माच्छन्दस्त्रित एव च ॥
एवं षोडशभिर्मन्त्रैः सप्त ऋषय एकया ।
नमोऽस्तु सर्पमन्त्रेण नवनागांस्तु तर्पयेत् ॥
भूरसीति भुवं तद्वत्समुद्रायेति सागरान् ।
पञ्च नद्यः प्रपर्वेति नद्यगाँस्तर्पयेत्ततः ।
व्रीहयेण तथा सस्यानश्मा चेति च धातवः ।
या ओषध्योषधीस्तद्वन्नक्षत्राणि च तदृचा ॥
वातायेति तथा मेघान् गणानान्त्वा गणाँस्तथा ।
प्राणायेति च मन्त्रेण भगवतीः प्रतर्पयेत् ॥

भद्रं कर्णेति करणान्योगान् योगेति मन्त्रतः ।
त्रातारेति तथा दिक्पान् लोकपालान् प्रजापते ॥
अग्नेः पक्षेति पक्षांस्तु दिशः प्राच्या अवेष्टतः ।
होता यक्षद्वनस्पति द्वेऽन्तर्हि विदेघो माधवः ॥
एतद्विष्णोः क्रान्तमिति गङ्गां च यमुनां तथा ।
चतुर्भिस्तर्पयेद्वंशैरिमावेवेत्यनेन च ॥

तृप्यन्त्वित्येवात्र प्रयोगः ।

प्रयोग ईदृशस्तज्ज्ञैर्देवास्तृप्यन्त्वितीरितः ॥

इति वचनात् । यथा—"देवास्तृप्यन्तु । छन्दाꣳसि तृप्यन्तु" । एवं सर्वत्र ज्ञेयम् । अत्रापि नामगोत्रोच्चारपूर्वकं स्वान्पितॄँश्च तर्पयेयुः । तद्यथा प्राचीनावीती तर्जनीमूलेन पितृतीर्थेन पितृतर्पणम् । अत्र मृतपितृकैर्जीवत्पितृकैरपि तर्पणं कार्यम् । तत्र जीवत्पितृकैः पितुः पितॄणाम् । मृतपितृकस्य प्रसिद्धम् । आचार्यपितॄणामप्युभयैः कार्यम् । तथा च गृह्यकारिकायाम्—

तिलमिश्राभिरद्भिस्तास्ते जीवत्पितृका अपि ।
आचार्यपितरस्तृप्यध्वं स्वधेति प्रयोगतः ॥
पितुः पितर इत्येवं स्याज्जीवत्पितृको यदि ॥ इति ।

"अमुकसगोत्राः अस्मत्पितरः अमुकशर्माणस्तृप्यध्वम्" । एवं पितामहप्रपितामहयोः । तथा—"अमुकसगोत्राः अस्मदाचार्यस्य पितरः अमुकशर्माणस्तृप्यध्वं स्वधा" । एवमाचार्यस्य पितामहप्रपितामहयोः । एवं यथाविधि तर्पणं कृत्वा ततो यज्ञोपवीतिनो भूत्वा आचम्य सर्वे ऋषिसम्मुखाः सन्तः "अथ वꣳश"इत्यादीनां चतुर्णां वंशानामुच्चारणं कुर्युः । "वंशोक्ता ऋषयस्तृप्यन्तु" । इत्येवं प्रतिवंशं वंशोक्तानामृषीणां तर्पणमिति रेणुः । "अयं पुर" इति पञ्च मन्त्रान् पठित्वा "मन्त्रोक्ताऽऋषयस्तृप्यन्तु । मूर्द्धा व्वय" इति द्वौ मन्त्रौ पठित्वा "मन्त्रोक्तानि च्छन्दांसि तृप्यन्तु । माच्छन्द" इति मन्त्रौ पठित्वा "मन्त्रोक्ता देवास्तृप्यन्तु । अग्निर्देवता" मन्त्रान्ते "देवा-

स्तृप्यन्तु। एवश्छन्द" इति मन्त्रं समुच्चार्य "मन्त्रलिङ्गोक्तानि च्छन्दांसि तृप्यन्तु। रश्मिना सत्याय" इति चतुर्दश कण्डिकाः पठित्वा "मन्त्रलिङ्गोक्ता देवास्तृप्यन्तु। सप्त ऋषय" इति मन्त्रं पठित्वा "मन्त्रलिङ्गोक्ता ऋषयस्तृप्यन्तु। एकयाऽस्तुवत" इत्यनेन मन्त्रेणापि "मन्त्रलिङ्गोक्ता देवतास्तृप्यन्तु" सम्प्रदायकारिकावचनात्। "नमोऽस्तु सर्पेभ्य" इति "नवनागास्तृप्यन्तु। भूरसी"ति "भूस्तृप्यतु। समुद्राय शिशुमारान्" इति "सागरास्तृप्यन्तु। पञ्च नद्य"इति "नद्यस्तृप्यन्तु। म पर्वतस्ये"ति "पर्वतास्तृप्यन्तु। व्रीहयश्च म" इति "सस्यास्तृप्यन्तु। अश्मा च म" इति "धातवस्तृप्यन्तु। या ओषधी"रिति "ओषधयस्तृप्यन्तु। नक्षत्रेभ्यः स्वाहे"ति "नक्षत्राणि तृप्यन्तु। वाताय स्वाहे"ति "मेघास्तृप्यन्तु। गणानान्त्वे"ति "गणास्तृप्यन्तु। प्राणाय स्वाहे"ति "भगवत्यस्तृप्यन्तु। भद्रङ्कर्णेभि"रिति "करणानि तृप्यन्तु। योगेयोगे" इति "योगास्तृप्यन्तु। त्रातारमिन्द्र"मिति "दिक्पालास्तृप्यन्तु। प्रजापते न त्वे"ति "कोकपालास्तृप्यन्तु। अग्नेः पक्षति"रिति "पक्षास्तृप्यन्तु। अवेष्टा दन्दशूका" इति "दिशस्तृप्यन्तु। होता यक्षद्वनस्पतिमभि ही"ति "वनस्पतयस्तृप्यन्तु। (१)अन्तर्हि विदेघो मा" इति "गङ्गा तृप्यन्तु। एतद्विष्णोः क्रान्त"मिति "यमुना तृप्यतु"।

इति तर्पणं सम्प्रदायभाष्यकारिकानुसारेण बोध्यम्। एवं यथाविधि तर्पणं कृत्वा सर्वे ऋषिसम्मुखाः सन्तो वंशोद्धरणं कुर्युः। तद्यथा— "अथ वꣳशः समानमासाजीवी"ति कण्डिकां पठित्वा "अग्निरहस्योक्ता ऋषयस्तृप्यन्तु। अथ वꣳशस्तदिद"मिति कण्डिकात्रयं पठित्वा "उपनिषद्वंशोक्ता ऋषयस्तृप्यन्तु। अथ वꣳशस्तदिदं वयꣳशौर्पणाय्या"दिति कण्डिकात्रयं पठित्वा "उपनिषद्वंशोक्ता ऋषयस्तृप्यन्तु। अथ वꣳशस्तदिदं वयं भारद्वाजी पुत्रा"दिति "उपनिषद्वंशोक्ता ऋषयस्तृप्यन्तु। इमावेवे"ति "ब्राह्मणोक्ता ऋषयस्तृप्यन्तु"।

---

(१) काण्वशाखीयोऽयं मन्त्राऽऽग्रमश्च।

"सावित्रीं चतुरनुद्रुत्य विरताः स्म इति ब्रूयु"रिति सूत्रम् । तर्पणस्यान्ते आचार्यसहिताः सर्वे शिष्याः सावित्रीं "तत्सवितु"रिति चतुःकृत्वा चतुर्वारं अनुद्रुत्य पठित्वा "विरताः स्म" इति मन्त्रं सकृत् प्रब्रूयुः । गृह्यकारिकायां च—

सावित्रीं ते चतुःकृत्वा ब्रूयुर्व्याहृतिवर्जिताम् ।
विरताः स्म सकृच्चेति ततः प्रत्यङ्मुखादिकम् ॥

ततः प्रत्यङ्मुखेभ्य उपविष्टेभ्यः प्राङ्मुख आचार्यः प्रथमतः ॐकारमुक्त्वा त्रिश्च त्रिवारं सावित्रीमुक्त्वा "इषे त्वा"दिसंहिताध्यायादीन् "व्रतमुपैष्यन्। स वै कपालान्येवान्यतर उपदधाती"त्येवमादीन् ब्राह्मणस्याध्यायादीन् प्रपाठकादीन् शतस्थानानि तथाध्यायान्तिमकण्डिकामन्तिमफक्किकां "अग्निमीळे पुरोहितं । इषे त्वा । अग्न आ याहि । शन्नो देवी । सह नोऽस्त्वि"ति मन्त्रं पठित्वा श्राद्धं कुर्युः । तथा च सम्प्रदायभाष्ये—

सावित्रीं त्रिः समुच्चार्य अध्यायांश्च प्रपाठकान् ।
शतस्थानान्यनुस्मृत्य कण्डिकाश्च तथान्तिमाः ॥
अन्तिमाः फक्किका ब्रूयादग्निमीळे पुरोहितम् ।
इषे त्वेत्यग्न आ याहि शन्नोदेवीरभिष्टये ॥
सह नोऽस्त्विति मन्त्रं च पश्चाद्भुभा कवीति च ।
सह नश्चोभां पठित्वा श्राद्धमार्षं चरेद्बुधः ॥

आदौ संहिताध्यायान् । "इषे त्वा ॥१॥ कृष्णोऽसि ॥२॥ समिधाग्निम्" ॥३॥ इत्यादिकान् चत्वारिंशत्संख्याकान् । ततो ब्राह्मणाध्यायान् "व्रतमुपैष्यन् ॥१॥ स वै कपालान्येवान्यतर उपदधाति" ॥ २ ॥ इत्यादिकान् शत१००सङ्ख्याकान् । ततः प्रपाठकान् । शतपथब्राह्मणे प्रपाठकसंज्ञकाः कण्डिकादिफक्किकाः । "व्रतमुपैष्यन् ॥१॥ तद्यदेवं पिनष्टि ॥२॥ अथाज्यलिप्ताभ्यां पवित्राभ्या"मित्यादिकान् । ततः शतस्थानानि संहितायाम् । प्रथमतः "इषेत्वा ॥१॥" तदारभ्य गणनया शततमा "परिते"॥२॥ सा पठनी-

या। ततः शततमा "अग्ने नय" ॥३॥ सा पठनीया। एवमनेनैव क्रमेण शतस्थानानि भवन्ति। ब्राह्मणशतानि। "व्रतमुपैष्यन्। ॥१॥ तत्पदेवं पिनष्टि ॥२॥" एवमन्यान्यपि। तत्र अन्तिमां काण्डिकां ब्रूयात्। शतपथब्राह्मणे काण्डसमाप्तौ कण्डिका अन्तिमा काण्डिका। तथैव काण्डसमाप्तौ या कण्डिका तस्या अन्तिमा फक्किका तामपि ब्रूयात्। चतुर्णां वेदानां तन्त्रेणोत्सर्गे तु "ऋषिमुखानि बह्वृचां पर्वाणि छन्दोगानाᳬसूक्तान्याथर्वणानां प्रब्रूयात्" इति सूत्रम्। कारिकाकारस्तु ऋषिमुखादेर्ज्ञानाभावे तत्तद्वेदस्याद्यैकैकऋगादि ब्रूयादित्याह। "अग्निमीळे" सम्पूर्णकाण्डिका। "इषे त्वा" सम्पूर्णकण्डिका। "अग्न आ याहि" सम्पूर्णकाण्डिका। "शन्नो देवी" सम्पूर्णकण्डिका। वासुदेवस्तु अत्रावसरे चतुर्णां वंशानां प्रब्रुवणम्। हरिहरमते तु ऋषिपूजनानन्तरं तत्र उत्सर्गतर्पणम्। ततो विसर्जनं कुर्युः। "उत्तिष्ठ ब्रह्मणस्पते०"।

ऋषीणां प्लवनं तद्वदाचम्येयुर्गृहांस्ततः॥

"क्षपणं प्रवचनं च पूर्ववत्" इति सूत्रम्। ततः क्षपणं अनध्ययनं लोमनखानामनिकृन्तनञ्च। प्रवचनं चाध्यायादीनां पठनम्। पूर्ववत् उपाकर्मकालवत्। ततस्तैः शिष्यैर्नियमेन त्रिरात्रमविरोधेन गुरुगृहे स्थातव्यम्। पश्चाद्यथेष्टं गन्तव्यम्। ततस्तत्कर्मदिनमारभ्य तैश्छन्दांसि शुक्लपक्षे पठनीयानि। वेदाङ्गानि तु कृष्णपक्षे। तथा गृह्ये—

अत ऊर्ध्वन्तु छन्दांसि शुक्ले तु नियतः पठेत्।
वेदाङ्गानि तु सर्वाणि कृष्णपक्षेषु सम्पठेत्॥

शुक्लपक्षेऽप्यनध्यायदिनेषु कल्पसूत्राणि वेदाङ्गानि च पठेत्। उक्तं च अनन्तपाठककारिकायाम्—

शुक्लपक्षेऽप्यनध्याये सर्वानध्यायमन्तरा।
वशिष्ठवचनात्कल्पसूत्राण्यङ्गानि सम्पठेत्॥

यदोपाकर्मकाल एवोत्सर्गः केनचित्कारणेनानुष्ठेयः स्यात्तदोत्सर्गपूर्वकमुपाकर्मणोऽनुष्ठानम्। तत्र सङ्कल्पो यथा "देशकालौ सङ्कीर्त्य

अध्यायोत्सर्गोपाकर्माहं तन्त्रेण करिष्ये" तदङ्गस्नानमपि ऋषिपूजनाद्यपि तन्त्रेणानुष्ठेयम्। प्रतिवर्षमेतत्कर्मद्वयं भेदेन वा तन्त्रेण विद्याकामैरनुष्ठेयमेव।

प्रत्यब्दं यदुपाकर्म सोत्सर्गं विधिवाद्द्विजैः।
क्रियते च्छन्दसां तेन पुनराप्यायनं भवेत्॥
अयातयामैश्छन्दोभिर्यत्कर्म क्रियते नरैः।
क्रीडमानैरपि सदा तत्तेषां सिद्धिकारकम्॥

इति श्रीप्रथमशाखीयरामकृष्णविरचिते पारस्करगृह्यसूत्रविवरणे संस्कारगणपतौ द्वितीयकाण्डे द्वादशी कण्डिका।

---

अथास्य स्पष्टप्रयोगः। उक्तयोगदिने गुरुः शिष्यैः अन्यैश्च ब्राह्मणैः सह अक्षतातिलदर्भदूर्वापामार्गगोमयमृत्तिकागन्धपुष्पधूपदीपनैवेद्याच्छादनयज्ञोपवीतफलताम्बूलदक्षिणापञ्चामृतपञ्चगव्यानि गृहीत्वा गृहादुदग्दिशं प्राग्दिशं वा रम्यं जलाशयं गच्छेत्। तीरं प्रक्षाल्य तत्र मृत्तिकादिकं संस्थाप्य शुचौ देशे शिष्यैरन्यैर्ब्राह्मणैश्च परिवृत उपविश्य, वामहस्ते कुशोपग्रहः। दक्षिणहस्ते पवित्रधारणम्। गायत्र्या शिखैकदेशबन्धनम्। ततो यज्ञोपवीतप्रक्षालनम्। आचमनम्। "विश्वेशं माधवं०। तीक्ष्णदंष्ट्र०। सुमुखश्चे"त्यादि पठित्वा प्राणायामत्रयं कालज्ञानं च कृत्वा "एवंगुणविशेषणविशिष्टायां पुण्यतिथौ अधीतानामध्येष्यमाणानामध्यायानामस्थापनस्थानविच्छेदक्रोषघोषणद्रुतवृत्त्युच्चारितवर्णानां पूर्वसवर्णानां ग्रामलोपविलम्बितवृत्त्युच्चारितवर्णानां श्लिष्टवर्णविघट्टनादिभिः प्रामादिकश्रुतीनां यज्जातं यातयामत्वं तत्परिहारार्थं अक्षरहीनं स्वरहीनं रङ्गहीनं मात्राहीनमनुस्वारपदच्छेदकण्डिकाव्यञ्जनविकरिषस्वरभक्तिद्विर्भावह्रस्वदीर्घप्लुतद्विष्करणपिण्डविक्षिपऔरसकण्ठ्यतालुमूर्द्धन्यदन्त्यौष्ठ्ययमानुनासिकाननुनासिकरेफजिह्वामूलीयोदात्तानुदात्तस्वरितप्रचितजातिवर्णगोत्रमपत्रस-

आरोच्चारणगुरुलघुलघुतरार्द्धक्षेपोमक्षेपोष्मान्तानुस्वाररञ्जनमाधुर्याक्षरव्यक्तिहीनं यत्कृतं शुक्लयजुर्वेदान्तर्गत(काण्व)(१)शाखाध्ययनं तज्जनितपातकनिरासार्थं म्लेच्छादिश्रवणदोषपरिहारार्थं सर्वेषां छन्दसामाप्यायनार्थं वीर्यत्वार्थं च नवोपनीतानां वेदग्रहणाधिकारार्थमितरेषामुत्सृष्टानां वेदानां पुनर्ग्रहणार्थं च यावदधीतमन्त्रराशिस्तेन च तद्देवतोपासनया यथावत्फलप्राप्त्यर्थं यजुर्वेदोत्सर्गोपाकरणमहं करिष्ये"। ततः सर्वे "उभा कवी युवा यो नो धर्मः परापतत्। परिसख्यस्य धर्मिणो विसख्यानि विसृजामहे"। इति मन्त्रं पठित्वा यथाज्येष्ठमभिवादनं कुर्युः। पुनः देशकालौ स्मृत्वा "अध्यायोत्सर्गोपाकर्मनिमित्तं गणस्नानमहं करिष्ये" इति सङ्कल्पः। "इषे त्वादि ॐ खम्ब्रह्मान्तेषु याः क्रियास्तत्र विवस्वानृषिः सर्वाणि यजूꣳषि सर्वाणि सामानि सर्वाणि च्छन्दाꣳसि प्रजापतिर्देवता स्नानादिसर्वकर्मसु विनियोगः"। अथ तीर्थस्नानानुज्ञां प्रार्थयेत्।

"ॐ नमो देवदेवाय शितिकण्ठाय वेधसे।
रुद्राय चापहस्ताय दण्डिने चक्रिणे नमः॥
सरस्वती च गायत्री वेदमाता गरीयसी।
सन्निधात्री भव त्वं च सर्वपापप्रणाशिनी॥
यद्वा सागरनिर्घोष! दण्डहस्तासुरान्तक!।
जगत्स्रष्टर्जगन्मित्र! नमामि त्वासुरान्तक!॥
तीक्ष्णदंष्ट्र! महाकाय! कल्पान्तदहनोपम!।
भैरवाय नमस्तुभ्यमनुज्ञां दातुमर्हसि॥
इमं मन्त्रं समुच्चार्य तीर्थस्नानं समाचरेत्।
अन्यथा तत्फलस्यार्धं तीर्थेशो हरति ध्रुवम्॥
उत्तिष्ठन्तु महाभूता ये भूता भूमिवासिनः।
भूतानामविरोधेन स्नानकर्म समारभे॥

(१) अत्र माध्यन्दिनीयादिभिः स्वस्वशाखानामोच्चार्यम्।

अपसर्पन्तु ते भूता ये भूतास्तीर्थसाधकाः ।
ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया ॥
पुष्कराद्यानि तीर्थानि गङ्गाद्याः सरितस्तथा ।
आगच्छन्तु पवित्राणि स्नानकाले सदा मम ॥
अपामाधिपतिस्त्वं च तीर्थेषु वसतिस्तव ।
वरुणाय नमस्तुभ्यं स्नानानुज्ञां प्रयच्छ मे ॥
अधिष्ठात्र्यश्च तीर्थानां तीर्थेषु विचरन्ति याः ।
देवतास्ताः प्रयच्छन्तु स्नानाज्ञां मम सर्वदा ॥
गङ्गे ! च यमुने ! चैवं गोदावरि ! सरस्वति ! ।
नर्मदे ! सिन्धु ! कावेरि ! जलेऽस्मिन् सन्निधिं कुरु ॥

स्वगृह्योक्तस्नानसन्ध्यातर्पणादिनित्यविधिं कुर्यात् । यथा—"उरुꣳहि"ति मन्त्रेण तोयमभिमन्त्रयेत् । "ये ते शत"मिति उदकं त्रिरावर्तयेत् हस्तेन भ्रामयेत् ।"सुमित्रिया न आप ओषधयः सन्त्वि"ति जलाञ्जलिं गृहीत्वा "दुर्म्मित्रियास्तस्मै सन्तु योऽस्मान्द्वेष्टि यञ्च वयं द्विष्मः" "इति मन्त्रेण अञ्जलिस्थोदके स्वशत्रुं मनसा विचिन्त्य स्ववामभागे क्षिपेत् । त्रिधा कृतया मृदः तृतीयभागमादाय कटिं बस्तिं ऊरू जङ्घे चरणौ करौ मृदा त्रिस्त्रिस्त्रिवारं प्रत्येकं प्रक्षालयेत् । आचम्य,

नमस्ते सर्वलोकानां प्रभवारि ! नमोऽस्तु ते ॥ इति ।

"उदकाय नमः" इति तीर्थोदकं नमस्कुर्युः । "इदं विष्णु"रिति मन्त्रेण मृत्तिकया मस्तकादिपादान्तमनुलिप्य नाभिमात्रे जले प्रविश्य "आपोऽअस्मा"निति सूर्याभिमुखा निमज्जेयुः । "उदिदाभ्यः"० उन्मज्जनं कुर्युः । पुनस्तूष्णीं निमज्जनं च । आचमनम् ।

"अग्रमग्रश्चरन्तीनामोषधीनां रसं वने ।
तासामृषभपत्नीनां पवित्रं कायशोधनम् ।
यन्मे रोगांश्च शोकांश्च पापं मे हर गोमय ! ॥

इति मन्त्रेण गोमयमभिमन्त्रयेयुः । "मा नस्तोके"० इति मन्त्रेण सोदकेन गोमयेन सूर्यदर्शनेन त्रिवारमङ्गानि विलेप्य क्षालयेयुः । ततोऽ-

भिषेकः। "इमम्मे १ तत्त्वा यामि २ त्वन्नः ३ सत्वन्नः ४ मापो मौषधीः ५ उदुत्तमं ६ मुञ्चन्तु मा ७ अवभृथ निचुम्पुण ८" इत्यष्टभिर्मन्त्रैरञ्जलिना मस्तके जलं क्षिपेत्। ततस्तूष्णीं निमज्य उन्मज्य आचम्य "काण्डात्काण्डात्०। या शतेन"०। आभ्यां मन्त्राभ्यां दूर्वाभिर्मार्जयेयुः। ततः "अपाघमप किल्बिष"० इत्यपामार्गेण मार्जनं त्रिः। ततो दर्भैः पावयेत्। "ॐभूः पुनातु। ॐभुवः पुनातु। ॐस्वः पुनातु। ॐमहः पुनातु। ॐजनः पुनातु। ॐतपः पुनातु। ॐसत्यं पुनातु। ॐतत्सवितुर्वरेण्यं० ॐसर्वं पुनातु। ॐआपो हि ष्ठा०। यो वः शिवत०। तस्मा अरङ्ग०। इदमापः०। हविष्मतीरिमा०। देवीरापः०। कार्षिरसि०। अपो देवा०। द्रुपदादिव०। शन्नो देवी०। अपाꣳरसमुद्वय०। अपो देवीरुप सृज०। पुनन्तु मा पितरः०। अग्न आयूꣳषि०। पुनन्तु मा देवजनाः०। पवित्रेण पुनीहि मा०। यत्ते पवित्र०। पवमानः०। उभाभ्यां देव सवितः०। वैश्वदेवी पुनती०। चित्पतिर्मा पुनात्व०। वाक्पतिर्मा पुनात्वच्छि०। देवो मा सविता पुनात्व०। चित्पतिर्म्मा०। ॐभूः पुनातु। ॐभुवः पुनातु। ॐस्वः पुनातु। ॐमहः पुनातु। ॐजनः पुनातु। ॐतपः पुनातु। ॐसत्यं पुनातु। ॐतत्सवितुर्वरेण्यं०। ॐसर्वं पुनातु"। तान् मार्जनकुशान् परित्यज्य पुनः "इमम्मे। तत्त्वा यामि। त्वन्नः। सत्वन्नः। मापो मौषधीः। उदुत्तमम्। मुञ्चन्तु मा। अवभृथ निचुम्पुण"० इत्यष्टभिर्मन्त्रैरञ्जलिना मस्तके जलं क्षिपेयुः। अथान्तर्जलेऽघमर्षणम्। "द्रुपदादिवे"ति मन्त्रं त्रिवारं पठेयुः। अथ वा "आयङ्गौ"-रिति त्र्यृचम्। अथवा "ॐ" इति त्रिवारं। अथ वा विष्णुस्मरणम्। ततः स्नानाङ्गतर्पणम्। "ॐब्रह्मादयो देवास्तृप्यन्ताम्। ॐभूर्देवास्तृप्यन्ताम्। ॐभुवर्देवास्तृप्यन्ताम्। ॐस्वर्देवास्तृप्यन्ताम्। ॐभूर्भुवः स्वर्देवास्तृप्यन्ताम्"। यज्ञोपवीतं कण्ठे कृत्वा। "ॐसनकादिदैपाञ्चनादय ऋषयस्तृप्यन्ताम। ॐभूः ऋषयस्तृप्यन्ताम्।

ॐभुवः ऋषयस्तृप्यन्ताम् । ॐस्वः ऋषयस्तृप्यन्ताम् । ॐभूर्भुवः स्वः ऋषयस्तृप्यन्ताम्" । अथापसव्यम् "ॐकव्यवाडनलादयः पितरस्तृप्यन्ताम् । ॐभूः पितरस्तृप्यन्ताम् । ॐभुवः पितरस्तृप्यन्ताम् । ॐस्वः पितरस्तृप्यन्ताम् । ॐभूर्भुवः स्वः पितरस्तृप्यन्ताम्" । सव्यम् । आचमनं कुर्युः ।

"यन्मया दूषितं तोयं शारीरमलसम्भवम् ।
तस्य पापस्य शुद्ध्यर्थं यक्ष्मैतत्ते तिलोदकम्" ॥

इति मन्त्रेणाञ्जलिना जलमादाय तीरे निक्षिपेयुः ।

"लतागुल्मेषु वृक्षेषु पितरो ये व्यवस्थिताः ।
ते सर्वे तृप्तिमायान्तु मयोत्सृष्टैः शिखोदकैः" ॥

इति मन्त्रेण स्वदक्षिणभागे शिखाग्रेण जलं प्रपातयेयुः । एवं स्नात्वा जलाद्बहिर्निर्गत्य धौते वाससी परिधाय मृत्तिकया ऊरू करौ प्रक्षाल्य आचमेयुः । तिलकधारणम् । गुरुः शिष्यैः सह सन्ध्यावन्दनादि कुर्यात् । सूर्योपस्थानं कुर्युः । यथा--कृतोद्र्ध्वबाहुः "उद्वयं० १ उदुत्यं० १ चित्रं० १ तच्चक्षुः"० १ । यथाशक्ति गायत्रीजपः । "विभ्राट्० १७ सहस्रशीर्षा० १६ यज्जाग्रतो"० १ । मण्डलब्राह्मणम् । इत्यादिभिः सूर्योपस्थानं कृत्वा । सन्ध्यावन्दनं समाप्य, ततो ब्रह्मयज्ञः । आदावारभ्य क्रमेण समापनीयानि । ततः स्वगृह्योक्ततर्पणं कृत्वा ऋषिपूजनं कुर्युः । यथा--ऋषिपूजनार्थं आसनादि विधाय प्राङ्मुख उदङ्मुखो वा उपविश्य स्व स्वशाखोक्तं शान्तिपाठं पठन् अपामार्गमिश्रितानां कुशादीनां त्रिभिस्त्रिभिः कुशैः सप्तर्षिस्वरूपाणि स्वगोत्रे यावन्तः प्रवराः स्युस्तावतः सावित्र्या ग्रन्थीन्कुर्यात् ।

कश्यपोऽथ भरद्वाज अङ्गिरा गौतमो मुनिः ।
वत्सः पराशरश्चेति माण्डव्यः सप्तमस्तथा ॥

प्रागग्रानुदगग्रान्वा स्थापयेत् । "ॐभूर्भुवःस्वः कश्यपं आवाहयामि । कश्यप इहागच्छ इह तिष्ठ" । एवं भरद्वाजम् । अङ्गिरसम् । गौतमम् । वत्सम् । पराशरम् । माण्डव्यम् । आवाहयेत् । "मनो जूति"-

रिति मन्त्रेण प्रतिष्ठापयेत्। "इमावेव गोतम०" इति मन्त्रेण प्रार्थना कार्या। प्राणानायम्य कालज्ञानं च कृत्वा "अध्यायोत्सर्गोपाकर्माङ्गभूतं सप्तर्षिपूजनमहं करिष्ये। सप्त ऽऋषयः० ॥१॥ इदं विष्णुर्विचक्रमे० ॥२॥" इति मन्त्रद्वयं पठित्वा षोडशोपचारैः पूजयेत्। आसनम्—

"सुवर्णघटितं दिव्यं नानारत्नसमन्वितम्।
आसनं रुचिरं यच्च गृह्यतां भो मुनीश्वराः!॥

अरुन्धतीसहितसप्तऋषिभ्यः इदमासनम्।

गङ्गाजलं समानीतं गन्धद्रव्येण संयुतम्।
पाद्यार्थं प्रतिगृह्णन्तु कश्यपाद्या महर्षयः॥

अरुन्धति स० इदं पाद्यम्।

सुवर्णपत्रसंयुक्तं गन्धपुष्पाक्षतैर्युतम्।
सप्तर्षयः प्रगृह्णन्तु अर्घ्यं दत्वा मया सह॥

अरुन्धती स० इदमर्घ्यम्।

कर्पूरवासितं तोयं सुवर्णकलशे स्थितम्।
दत्तमाचमनीयं च ऋषीणां प्रीतये सदा॥

अरुन्धतीस० इदमाचमनम्। अरुन्धतीस० इदं मधुपर्कम्। "पयः पृथिव्या"मिति पयःस्नानम्। "दधिक्राव्ण"इति दधिस्नानम्। "घृतम्मिमिक्ष"इति घृतस्नानम्। "मधु व्वाते"ति मधुस्नानम्। "अपाꣳरस"मिति शर्करास्नानम्। "आपो हि ष्ठे"ति शुद्धोदकस्नानम्।

"सुगन्धद्रव्यसंयुक्तं पवित्रं मङ्गलं जलम्।
स्नानार्थं वः समानीतं मुनीनां प्रतिगृह्यताम्॥

अरुन्धतीस० इदं स्नानीयम्।

सूक्ष्माण्यतीव शुभ्राणि वस्त्राणि विविधानि च।
ऋषयः प्रतिगृह्णन्तु सवस्त्राम्बरकानि च॥

अरुन्धतीस० वस्त्रम्।

नानामन्त्रैः समुद्भूतं त्रिवृतं ब्रह्मसूत्रकम्।
प्रत्येकं दीयते स्वच्छमृषयः प्रतिगृह्यताम्॥

अरुन्धतीस० इदं यज्ञोपवीतम् ।

आत्मसन्तापहारं च सुगन्धद्रव्यसंयुतम् ।
चन्दनं तत्प्रयच्छामि ऋषीणां प्रीतये ह्यहम् ॥

अरुन्धतीस० इदं चन्दनम् ।

शुभ्रतण्डुलजाः शुभ्राः शङ्खशुभ्रा मनोरमाः ।
अक्षतार्थं प्रयच्छामि ता गृह्णन्तु मुनीश्वराः ! ॥

अरुन्धतीस० इमा अक्षताः ।

शतपत्रं जातिपुष्पं मल्लिकाकुसुमं तथा ।
पूजार्थं तु मया भक्त्या मुनीनां विदुषां सदा ॥

अरुधतीस० इदं पुष्पम् ।

कृष्णागरुर्गुग्गुलोऽयं सुगन्धश्च दशाङ्गकः ।
धूपोऽयं कश्यपादिभ्यो दीयते प्रीतयेऽधुना ॥

अरुन्धतीसहित० इदं धूपम् ।

पञ्चवर्त्तिसमायुक्तं सर्वमङ्गलशोभनम् ।
दत्तं नीराजनं तेभ्यो दीपोऽयं प्रतिगृह्यताम् ॥

अरुन्धतीसहित० इदं दीपम् ।

स्वादून्यन्नानि सर्वाणि सुदेयं व्यञ्जनानि च ।
शर्कराघृतसंयुक्तं नैवेद्यं दीयते मया ॥

अरुन्धतीस० इदं नैवेद्यम् ।

उष्णोदकं शुद्धिकरं क्षालितं दत्तमुत्तमम् ।
गृह्णन्तु मुनयः सर्वे प्रियतां यान्तु मे सदा ॥

अरुन्धतीस० इदमाचमनीयम् ।

नारिकेलं च कूष्माण्डं कदलीकर्कटीफलम् ।
ऋतुदेशोद्भवं चान्यं दीयतेऽद्य मुनीश्वराः ॥

अरुन्ध० इदं फलम् ।

पूगीफलं सकर्पूरं नागवल्लीदलैर्युतम् ।
कर्पूरेण समायुक्तं ताम्बूलं प्रतिगृह्यताम् ॥

अरु० इदं ताम्बूलम् ।

हिरण्यगर्भगर्भस्थं हेम बीजं विभावसोः ।
अनन्तपुण्यफलदमतः शान्ति प्रयच्छ मे ॥

अरु० दक्षिणाम् ।

ब्रह्मिष्ठा ब्रह्मरूपाश्च कश्यपाद्या महर्षयः ।
ब्रह्मप्रज्ञादिदातारः सन्तु मे नित्यकर्मणि ॥

अरु० नीराजनदीपम् ।

"यज्ञेन यज्ञं"पुष्पाञ्जलिः । "अतिरिक्तो यो विधिः स सर्वः परिपूर्णोऽस्तु" । प्राचीनावीतिनो दक्षिणाभिमुखाः सर्वे कुशोदकं गृहीत्वा पुरतो यज्ञोपवीतं निधाय "अमुकगोत्रेभ्यः अमुकशर्मभ्यः अस्मत्पितृपितामहप्रपितामहेभ्यः तथा च गोत्रेभ्यः अस्मन्मातामहप्रमातामहवृद्धप्रमातामहेभ्यः ( अन्ये ) कव्यवाडनलादिदिव्यपितृभ्यः इमानि यज्ञोपवीतानि स्वाहा सम्पद्यन्ताम्" । जीवत्पितृकैरपि पितुः पित्रादिभ्यो मातामहादिभ्यः यज्ञोपवीतानि देयानि । सव्यम् । ततः सर्वेषां ब्राह्मणानां गन्धादिदक्षिणापर्यन्तं दत्वा तेभ्यो यज्ञोपवीतानि दद्युः। दीक्षाबन्धनम् । अथ पूर्वतर्पणकुशैः सह ऋषितर्पणकुशानेकीकृत्यादायोत्सर्गतर्पणम् । तच्चाञ्जलिना देवादीनां देवतीर्थेन यज्ञोपवीतिनो दक्षिणं जान्ववाच्य प्रागग्रैर्दर्भैः ईशानाभिमुखाः उच्चैः वक्ष्यमाणप्रकारेण कुर्युः । तद्यथा । आचम्य प्राणानायम्य देशकालौ संकीर्त्य—"अनध्यायादिषु अशुचित्वेन अनधिकारिभिः शूद्रादिभिः श्रूयमाणत्वे कृतस्याध्ययनस्योपसर्गनिवृत्तये शुक्लयजुर्वेदान्तर्गत(काण्व)शाखाध्यायिनश्छन्दसामुत्सर्गाख्यं तर्पणं करिष्यामहे" । इति सङ्कल्पः । "ॐ विश्वे देवास आगत० ॥१॥ ॐ विश्वे देवाः शृणुते० ॥२॥" इति मन्त्राभ्यामावाह्य । ॐ देवास्तृप्यन्तु । ॐ छन्दांसि तृप्यन्तु । ॐ वेदास्तृप्यन्तु । ॐ ऋषयस्तृप्यन्तु । ॐ पुराणाचार्यास्तृप्यन्तु । ॐ गन्धर्वास्तृप्यन्तु । ॐ इतराचार्यास्तृप्यन्तु । ॐ सम्वत्सराः सावयवास्तृप्यन्तु" । केचित्सम्वत्सरावयवान् पृथक्त्वेन तर्पयन्ति । यथा । "अहोरात्रास्तृप्यन्तु । ॐ अर्द्धमासास्तृप्यन्तु । ॐ मासा-

स्तृप्यन्तु। ॐ ऋतवस्तृप्यन्तु। ॐ सम्वत्सरस्तृप्यतु। ॐ पितरस्तृप्यन्तु। ॐ आचार्यास्तृप्यन्तु"। अपसव्यम्। "अमुकसगोत्राः अस्मत्पितरः अमुकशर्माणस्तृप्यध्वं स्वधा नमः। अमुकसगोत्राः अस्मत्पितामहाः अमुकशर्माणः तृप्यध्वं स्वधा०। अमुकसगोत्राः अस्मत्प्रपितामहाः अमुकशर्माणस्तृप्यध्वं स्वधा०। अमुकसगोत्राः अस्मदाचार्यस्य पितरः अमुकशर्माणस्तृप्यध्वं स्वधा०"। एवमाचार्यस्य पितामहप्रपितामहानाम्। आचार्यस्य पितृतर्पणं जीवत्पितृकैरपि कर्तव्यम्। एवं तर्पणं कृत्वा यज्ञोपवीतिनो भूत्वा आचम्य सर्वे ऋषिमुखाः सन्तः "अथ वꣳश" इत्यादीनां चतुर्णां वंशानामुच्चारणं कुर्युः। "वंशोक्ता ऋषयस्तृप्यन्तु। अयम्पुरः ॥१॥ अयन्दक्षिणा ॥२॥ अयम्पश्चात् ॥३॥ इदमुत्तरात् ॥४॥ इयमुपरि ॥५॥ मन्त्रोक्ता ऋषयस्तृप्यन्तु। मूर्द्धा व्वयः प्रजापतिः ॥१॥ अनड्वान्व्वयः ॥२॥ मन्त्रोक्तानि च्छन्दांसि स्तृप्यन्तु। माच्छन्दः प्रमा च्छन्दः ॥१॥ पृथिवीच्छन्दः ॥२॥ मन्त्रोक्तानि च्छन्दाꣳसि तृप्यन्तु। ॐ अग्निर्देवता व्वातो देवता० ॥१॥ मन्त्रोक्ता देवतास्तृप्यन्ताम्। एवश्छन्दो व्वरिवश्छन्दः० ॥१॥ आच्छच्छन्दः प्रच्छच्छन्दः० ॥२॥ मन्त्रलिङ्गोक्तानि छन्दाꣳसि तृप्यन्तु। रश्मिना सत्याय० ॥१॥ तन्तुना रायस्पोषेण० ॥२॥ प्रतिपदसि० ॥३॥ त्रिवृदसि० ॥४॥ राड्यसि ॥५॥ व्विराडसि० ॥६॥ सम्म्राडसि० ॥७॥ स्वराडसि० ॥८॥ अधिपत्न्यसि० ॥९॥ अयं पुरो हरिकेशः० ॥१०॥ अयन्दक्षिणा व्विश्वकर्मा० ॥११॥ अयम्पश्चाद्विश्वव्यच० ॥१२॥ अयमुत्तरात् ॥१३॥ अयमुपर्य्यर्व्वाक् ॥१४॥ मन्त्रलिङ्गोक्ता देवास्तृप्यन्तु। सप्त ऋषयः०। लिङ्गोक्ता ऋषयस्तृप्यन्तु। एकयाऽस्तुवत० ॥१॥ मन्त्रलिङ्गोक्ता देवास्तृप्यन्तु। नमोऽस्तु सर्पेभ्यः० ॥१॥ नवनागास्तृप्यन्तु। भूरसि० ॥१॥ भूस्तृप्यतु। समुद्राय शिशुमारा० ॥१॥ सागरास्तृप्यन्तु। पञ्चनद्यः० ॥१॥ नद्यस्तृप्यन्तु। मपर्वतस्य० ॥१॥ पर्वतास्तृप्यन्तु। व्रीहयश्च मे० ॥१॥ सस्यास्तृप्यन्तु। अश्मा च मे० ॥१॥ धातवस्तृप्यन्तु। या ओषधीः०

॥१॥ ओषधयस्तृप्यन्तु। नक्षत्रेभ्यः स्वाहा० ॥१॥ नक्षत्राणि तृप्यन्तु। व्राताय स्वाहा० ॥१॥ मेघास्तृप्यन्तु० ॥१॥ गणानान्त्वा० ॥१॥ गणास्तृप्यन्ताम्। प्राणाय स्वाहाऽपानाय स्वाहा० ॥१॥ भगवत्यस्तृप्यन्ताम्। भद्रं कर्णेभिः० ॥१॥ करणानि तृप्यन्ताम्। योगे योगे० ॥१॥ योगास्तृप्यन्ताम्। त्रातारमिन्द्र० ॥१॥ दिक्पाला स्तृप्यन्ताम्। प्रजापते न त्व०॥१॥ लोकपालास्तृप्यन्ताम्। अग्नेः पक्षतिर्वायोर्निपक्षति०॥१॥ पक्षास्तृप्यन्ताम्। अवेष्टा दन्दशूकाः०॥१॥ दिशस्तृप्यन्तु। होता यक्षद्वनस्पतिमभि०॥१॥ वनस्पतयस्तृप्यन्तु। विष्णोः क्रान्त०। गङ्गायमुनाद्यास्तृप्यन्तु"। एवं तर्पणं कृत्वा तर्पणार्थान् कुशांस्त्यक्त्वा मन्त्रेण स्नानवस्त्रं निष्पीड्याचम्य "देवा गातुविद्"इति मन्त्रेण तर्पणीयदेवान् विसर्जयेत्। ततो गुरुः व्याहृतिवर्जितां गायत्रीं चतुर्वारं पठेत्। ततः सर्वे शिष्याश्चानुपठेयुः। ततः सर्वे शिष्या "विरताः स्म"इति सकृत्प्रब्रूयुः। ततः प्रत्यङ्मुखेभ्य उपविष्टेभ्यः शिष्येभ्यः प्राङ्मुख आचार्यः "ॐ"कारमुक्त्वा त्रिवारं सावित्रीं पठित्वा(१)

संहिताऽध्यायान् ब्राह्मणप्रपाठकान् उभयोः शतस्थानानि अन्तिमाः कण्डिकाः अन्तिमाः फक्किकाः पठित्वा "अग्निमीळे पुरोहितम्। इषे त्वा। अग्न आ याहि। शन्नो देवीरभिष्टये। सह नोऽस्तु० विद्विषामहे। उभा कवी० विसृजामहे"। इति। त्रिरात्रमनध्यायः। लोमनखानामनिकृन्तनं च त्रिरात्रम्। ततस्त्रिरात्रादूर्ध्वं शुक्लपक्षेषु छन्दांसि कृष्णपक्षेष्वङ्गानि। ततः पुनरर्द्धषष्ठमासानधीत्यार्धसप्तमासान्वाऽधीत्य एवमेवोत्सर्गं विधाय "उभा कवी"त्यादिकामृचं जपित्वा त्रिरात्रमेकत्रावस्थाय पश्चाद्यथेष्टं पृथक् गच्छेयुः। ततः पुनरुपाकरणकाले उत्सृष्टान्वेदानुपाकृत्याध्ययनं यावदुत्सर्गम्।

इति श्रीप्रथमशाखीयरामकृष्णविरचिते पारस्करगृह्यसूत्रविवरणे संस्कारगणपतौ द्वितीयकाण्डे उत्सर्गप्रयोगः समाप्तः॥

---

(१) ग्रन्थकर्तुरेतावानेव ग्रन्थ उपलब्धः। आग्रेमः पाठो भाष्यानुसारेण पूरित इति ज्ञेयम्।

# अवशिष्ट-गृह्यसूत्रम् ।

पुण्याहे लाङ्गलयोजनं ज्येष्ठया वैन्द्रदैवत्य'मिन्द्रं, पर्जन्य,मश्विनौ, मरुत, उद्लाकाश्यपᳫं, स्वातिकारीᳫं, सीता,मनुमति' च दध्ना तण्डुलैर्गन्धैरक्षतैरिष्ट्वाऽनडुहो मधुघृते प्राशयेत् 'सीरायुञ्जन्ती'ति योजयेच्छुनᳫं सुफाला' इति कृषेत् फालं वालभेत न वाऽग्न्युपदेशाद्वपनानुपङ्क्ताच्चाऽन्यमभिविचयाकृष्टं तदाकृषेयुः स्थालीपाकस्य पूर्ववद्देवता यजेदुभयोर्व्रीहियवयोः प्रवपन्त्सीतायज्ञे च ततो ब्राह्मणभोजनम् ॥ १९ ॥

अथातः श्रवणाकर्म्म श्रावण्यां पौर्णमास्याᳫं स्थालीपाकᳫं श्रपयित्वाऽक्षतधानाश्चैककपालं पुरोडाशं धानानां भूयसीः पिष्ट्वाऽऽज्यभागाविष्ट्वाऽऽज्याहुती जुहो'त्यपश्वेतपदाजहि पूर्वेण चापरेण च । सप्त च वारुणीरिमाः प्रजाः सर्वाश्च राजबान्धवैः स्वाहा ।, न वै श्वेतस्याध्याचारेऽहि ददर्श कश्चन । श्वेताय वैदव्याय नमः स्वाहे'ति स्थालीपाकस्य जुहोति 'विष्णवे, श्रवणाय, श्रावण्यै, पौर्णमास्यै, वर्षाभ्य'श्चेति 'धानावन्तमि'ति धानानां घृताक्तान्सक्तून्सर्पेभ्यो जुहो'त्याग्नेयपाण्डुपार्थिवानाᳫं सर्पाणामधिपतये स्वाहा, श्वेतवायवान्तरिक्षाणाᳫं सर्पाणामधिपतये स्वाहा,भिभूः सौर्यदिव्यानाᳫं सर्पाणामधिपतये स्वाहे'ति सर्वहुतमेककपालं 'ध्रुवाय भौमाय स्वाहे'ति प्राशनान्ते सक्तूनामेकदेशᳫं शूर्पे न्युप्योपनिष्क्रम्य बहिःशालायाः स्थण्डिलमुपलिप्योल्कायां ध्रियमाणायां 'माऽन्तरा गमते'त्युक्त्वा वाग्यतः सर्पानवनेजय'त्याग्नेयपाण्डुपार्थिवानाᳫं सर्पाणामधिपतेऽवनेनिक्ष्व, श्वेतवायवान्तरिक्षाणाᳫं सर्पाणामधिपतेऽवनेनिक्ष्वाभिभूः सौर्यदिव्यानाᳫं सर्पाणामधिपतेऽवनेनिक्ष्वेति, यथाऽवनिक्तं दर्व्योपघातᳫं सक्तून्सर्पेभ्यो बलिᳫं हर'त्याग्नेयपाण्डुपार्थिवानाᳫं सर्पाणामधिपत एष ते बलिः, श्वेतवायवान्तरिक्षाणाᳫं सर्पाणामधिपत एष ते बलि,रभिभूः सौर्यदिव्यानाᳫं सर्पाणामधिपत एष ते बलि'रित्यवनेज्य पूर्ववत्कङ्कतैः प्रलिख'त्याग्नेयपाण्डुपार्थिवानाᳫं सर्पाणामधिपते प्रलिखस्व, श्वेतवायवान्तरिक्षाणाᳫं सर्पाणामधिपते प्रलिखस्वा,भिभूः सौर्यदिव्यानाᳫं सर्पाणामधिपते प्रलिखस्वे'त्यञ्जनानुलेपनᳫं स्रज'श्चाङ्क्ष्वा,नुलिम्पस्व, स्रजोऽपिनह्यस्वे'ति सक्तुशेषᳫं स्थण्डिले न्युप्योदपात्रेणोपनिनीयोपतिष्ठते 'नमोऽस्तु सर्पेभ्य' इति तिसृभिः स यावत्कामयेत न सर्पा अभ्युपेयुरिति तावत्सन्ततयोदधारया निवेशनं त्रिः परिषिञ्चन्परीया'दपश्वेत-

पदा जहो'तिद्वाभ्यां दर्वीॅ शूर्पं प्रक्षाल्य प्रतप्य प्रयच्छति द्वारदेशे मार्जयन्त 'आपोहिष्ठे'तितिसृभिरनुगुप्तमेतॅ सक्तुशेषं निधाय ततोऽस्तमितेऽस्तमितेऽग्निं परिचर्य दर्व्योपघातॅ सक्तून्सर्पेभ्यो बलिॅ हरेदाग्रहायण्यास्तॅ हरन्तं नान्तरेण गच्छेयुर्दर्व्याचमनं प्रक्षाल्य निदधाति धानाः प्राश्नन्त्यसॅस्यूतास्ततो ब्राह्मणभोजनम् ॥ १७ ॥

प्रौष्ठपद्यामिन्द्रयज्ञः पायसमैन्द्रॅश्रपयित्वाऽपूपाँश्चापूपैस्तीर्त्वाऽऽज्यभागाविष्ट्वाज्याहुती जुहो'तीन्द्राये,न्द्राण्या, अजायै,कपर्दे,ऽहिर्बुध्न्याय, प्रौष्ठपदाभ्यश्चे'ति स्थालीपाकस्य जुहोती'न्द्राय स्वाहे'ति प्राशनान्ते मरुद्भ्यो बलिॅहर'त्यहुतादो मरुत' इति श्रुतेराश्वत्थेषु पलाशेषु 'मरुतोऽश्वत्थे तस्थु'रितिवचना'च्छुक्रज्योति'रिति प्रतिमन्त्रं विमुखेन च मनसा 'नामान्येषामेतानी'तिश्रुते'रिन्द्रं दैवी'रिति जपति ततो ब्राह्मणभोजनम् ॥ १८ ॥

आश्वयुज्यां पृषातकाः पायसमैन्द्रॅ श्रपयित्वा दधिमधुघृतमिश्रं जुहोती'न्द्राये,न्द्राण्या, अश्विभ्या,माश्वयुज्यै, पौर्णमास्यै, शरदे' चेति प्राशनान्ते दधिपृषातकमञ्जलिना जुहो'त्यूनं मे पूर्यतां पूर्णं मे माऽपगात्स्वाहे'ति दधिमधुघृतमिश्रममात्या अवेक्षन्त 'आ यात्विन्द्र' इत्यनुवाकेन मातृभिर्वत्सान्सॅसृज्य ताॅ रात्रिमाग्रहायणीं च ततो ब्राह्मणभोजनम् ॥ १९ ॥

अथ सीतायज्ञो व्रीहियवानां यत्र यत्र यजेत तन्मयॅ स्थालीपाकॅ श्रपयेत्कामादीजानोऽन्यत्रापि व्रीहियवयोरेवान्यतरॅ स्थालीपाकॅ श्रपयेन्न पूर्वचोदितत्वात्सन्देहोऽसम्भवाद्विनिवृत्तिः क्षेत्रस्य पुरस्तादुत्तरतो वा शुचौ देशे कृष्टे फलानुपरोधेन ग्रामे वोभयसम्प्रयोगादविरोधाद्यत्र श्रपयिष्यन्नुपलिप्त उद्धतावोक्षितेऽग्निमुपसमाधाय तन्मिश्रैर्दर्भैस्तीर्त्वाऽऽज्यभागाविष्ट्वाज्याहुतीर्जुहोति 'पृथिवी द्यौः प्रदिशो दिशो यस्मै द्युभिरावृताः । तमिहेन्द्रमुपह्वये शिवा नः सन्तु हेतयः स्वाहा ।, यन्मे किञ्चिदुपेप्सितमस्मिन्कर्मणि वृत्रहन् । तन्मे सर्वॅ समृध्यतां जीवतः शरदः शतॅ स्वाहा ।, सम्पत्तिर्भूतिर्भूमिर्वृष्टिर्ज्यैष्ठ्यॅ श्रैष्ठ्यॅ श्रीः प्रजामिहावतु स्वाहा ।, यस्याभावे वैदिकलौकिकानां भूतिर्भवति कर्मणाम् । इन्द्रपत्नीमुपह्वये सीताॅ सा मे त्वनपायिनी भूयात्कर्मणि कर्मणि स्वाहा ।, अश्वावती गोमती सूनृतावती बिभर्ति या प्राणभृतो अतन्द्रिता । खलमालिनीमुर्वरामस्मिन्कर्मण्युपह्वये ध्रुवाॅ सा मे त्वनपायिनी भूयात्स्वाहे'ति स्थालीपाकस्य जुहोति सीतायै यजायै शमायै भूत्या इति मन्त्रवत्प्रदानमेकेषाॅ 'स्वाहाकारप्रदाना' इति श्रुतेर्विनिवृत्तिः स्तरणशेषकुशेषु सीतागोप्तृभ्यो बलिॅ हरति

'पुरस्ताद्ये त आसते सुधन्वानो निषङ्गिणः । ते त्वा पुरस्ताद् गोपायन्त्वप्रमत्ता अनपायिनो नम एषां करोम्यहं बलिमेभ्यो हरामीमिमि'त्यथ दक्षिणतो'ऽनिमिषा वर्मिण आसते । ते त्वा दक्षिणतो गोपायन्त्वप्रमत्ता अनपायिनो नम एषां करोम्यहं बलिमेभ्यो हरामीममि'त्यथ पश्चा'दाभुवः प्रभुवो भूतिभूमिः पार्ष्णिः शुनङ्करिः । ते त्वा पश्चाद्गोपायन्त्वप्रमत्ता अनपायिनो नम एषां करोम्यहं बलिमेभ्यो हरामीममि'त्यथोत्तरतो 'भीमा वायुः समाजवे । ते त्वोत्तरतः क्षेत्रे खले गृहेऽध्वनि गोपायन्त्वप्रमत्ता अनपायिनो नम एषां करोम्यहं बलिमेभ्यो हरामीममि'ति प्रकृतादन्यस्मादाज्यशेषेण च पूर्ववद्बलिकर्म स्त्रियश्चोपयजेरन्नाचरितत्वात्सꣳस्थिते कर्मणि ब्राह्मणान्भोजयेत्सꣳस्थिते कर्मणि ब्राह्मणान्भोजयेत् ॥ २० ॥

इति गृह्यसूत्रे द्वितीयकाण्डं समाप्तम् ॥

## अथ तृतीयं काण्डम् ।

अनाहिताग्नेर्नवप्राशनं नवꣳ स्थालीपाकꣳ श्रपयित्वाऽऽज्यभागाविष्ट्वाऽऽज्याहुतीर्जुहोति 'शतायुधाय शतवीर्याय शतोतये अभिमातिषाहे । शतं यो नः शरदोऽजीजानिन्द्रो नेषदति दुरितानि विश्वा स्वाहा ।, ये चत्वारः पथयो देवयाना अन्तरा द्यावापृथिवी वियन्ति । तेषां याज्यानिमजीजिमावहास्तस्मै नो देवाः परिधत्तेह सर्वे स्वाहे'ति स्थालीपाकस्याग्रयणदेवताभ्यो हुत्वा जुहोति स्विष्टकृते च 'स्विष्टमग्ने अभितत्पृणीहि विश्वाँश्च देवः पृतना अविष्यत् । सुगन्नु पन्थां प्रदिशन्न एहि ज्योतिष्मध्ये ह्यजरन्न आयुः स्वाहे'त्यथ प्राश्ना'त्यग्निः प्रथमः प्राश्नातु स हि वेद यथा हविः । शिवा अस्मभ्यमोषधीः कृणोतु विश्वचर्षणिः । भद्रान्नः श्रेयः समनैष्ट देवास्त्वयाऽवशेन समशीमहि त्वा । स नो मयोऽभूः पितो आविशस्व शन्तोकाय तनुवे स्योन' इत्यन्नपतीयया चाथ यवाना'मेतमु त्यं मधुना संयुतं यवꣳ सरस्वत्या अधिवनाय चक्रुः । इन्द्र आसीत्सीरपतिः शतक्रतुः कीनाशा आसन्मरुतः सुदानव' इति ततो ब्राह्मणभोजनम् ॥ १ ॥

मार्गशीर्ष्यांम्पौर्णमास्यामाग्रहायणीकर्म स्थालीपाकꣳ श्रपयित्वा श्रवणावदाज्याहुती हुत्वाऽपरा जुहोति 'यां जनाः प्रतिनन्दन्ति रात्रीं धेनुमिवायतीम् । संवत्सरस्य या पत्नीः सा नोऽअस्तु सुमङ्गली स्वाहा ।, संवत्सरस्य प्रतिमा या ताꣳ रात्रिमुपास्महे । प्रजाꣳ सुवीर्यां कृत्वा दीर्घमायुर्व्यश्नवै स्वाहा ।, संवत्सराय परिवत्सरायेदावत्सरायेद्वत्सराय

वत्सराय कृणुते बृहन्नमः । तेषां वयᳬ सुमतौ यज्ञियानां ज्योग्जीता अहताः स्याम स्वाहा।, ग्रीष्मो हेमन्त उत नो वसन्तः शिवा वर्षा अभया शरन्नः । तेषामृतूनाᳬ शतशारदानां निवात एषामभये वसेम स्वाहे'ति स्थालीपाकस्य जुहोति 'सोमाय, मृगशिरसे, मार्गशीर्ष्यै पौर्णमास्यै, हेमन्ताय, चे'ति प्राशनान्ते सक्तुशेषᳲ शूर्पे न्युप्योपनिष्क्रमणप्रभृत्यामार्जनान्मार्जनान्त 'उत्सृष्टोबलि'रित्याह पश्चादग्नेः स्रस्तरमास्तीर्याहतं च वास आप्लुता अहतवाससः प्रत्यवरोहन्ति दक्षिणतः स्वामी जायोत्तरा यथा कनिष्ठमुत्तरतो दक्षिणतो ब्रह्माणमुपवेश्योत्तरत उदपात्रᳲ शमीशाखासीतालोष्टाश्मनो निधायाग्निमीक्षमाणो जप'त्ययमग्निर्वीरतमोऽयं भगवत्तमः सहस्रसातमः। सुवीर्योऽयᳬ श्रैष्ठ्ये दधातु नावि'ति पश्चादग्नेः प्राञ्चमञ्जलिं करोति 'दैवीं नावमि'ति तिसृभिः स्रस्तरमारोहन्ति ब्रह्माणमामन्त्रयते 'ब्रह्मन्प्रत्यवरोहामे'ति ब्रह्मानुज्ञाताः प्रत्यवरोह'न्त्यायुः कीर्तिर्यशो बलमन्नाद्यं प्रजामि'त्युपेता जपन्ति 'सुहेमन्तः सुवसन्तः सुग्रीष्मः प्रतिधीयतान्नः । शिवा नो वर्षाः सन्तु शरदः सन्तु नः शिवा' इति 'स्योना पृथिवि नो भवे'ति दक्षिणपार्श्वैः प्राक्शिरसः संविशन्त्युपोत्तिष्ठ'न्त्युदायुषा स्वायुषोत्पर्जन्यस्य वृष्ट्या । पृथिव्याः सप्तधामभिरि'त्येवं द्विरपरं ब्रह्मानुज्ञाता अधः शयीरँश्चतुरोमासान्यथेष्टं वा ॥२॥

ऊर्ध्वमाग्रहायण्यास्तिस्रोऽष्टका ऐन्द्री वैश्वदेवी प्राजापत्या पित्र्येत्यपूपमाᳬसशाकैर्यथासंख्यं प्रथमाऽष्टका पत्ताष्टम्याᳬ स्थालीपाकᳬ श्रपयित्वाऽऽज्यभागाविष्ट्वाऽऽज्याहुतीर्जुहोति 'त्रिᳲशत्स्वसार उपयन्ति निष्कृतᳲ समानं केतुं प्रतिमुञ्चमानाः । ऋतूँस्तन्वते कवयः प्रजानतीर्मध्ये छन्दसः परियन्ति भास्वतीः स्वाहा ।, ज्योतिष्मती प्रतिमुञ्चते नभो रात्री देवी सूर्यस्य व्रतानि । विपश्यन्ति पशवो जायमाना नानारूपा मातुरस्या उपस्थे स्वाहा ।, एकाष्टका तपसा तप्यमाना जजान गर्भं महिमानमिन्द्रम् । तेन दस्यून्व्यसहन्त देवा हन्ताऽसुराणामभवच्छचीभिः स्वाहा ।, अनानुजामनुजां मामकर्त्त सत्यं वदन्त्यन्विच्छ एतत् । भूयासमस्य सुमतौ यथा यूयमन्या वोऽअन्यामति मा प्रयुक्त स्वाहा ।, अभून्मम सुमतौ विश्ववेदा आष्ट प्रतिष्ठामविदद्धि गाधम्। भूयासमस्य सुमतौ यथा यूयमन्यावो अन्यामति मा प्रयुक्त स्वाहा ।, पञ्च व्युष्टीरनु पञ्च दोहा गां पञ्च नाम्नीमृतवोऽनु पञ्च। पञ्च दिशः पञ्चदशेन क्लृप्ताः समानमूर्ध्नीरधिलोकमेकᳬ स्वाहा ।, ऋतस्य गर्भः प्रथमा व्यूषिष्यपामेका महिमानं बिभर्ति। सूर्यस्यैका चरति निष्कृतेषु घर्म-

स्यैका सवितैकाञ्चियच्छतु स्वाहा ।, या प्रथमा व्यौच्छत्सा धेनुरभवद्य-मे । सा नः पयस्वती धुक्ष्वोत्तरामुत्तराᳬं समाᳬंस्वाहा ।, शुक्र ऋषभ नभसा ज्योतिषाऽऽगाद्विश्वरूपा शबली अग्निकेतुः । समानमर्थᳬं स्वप-स्यमाना बिभ्रती जरामजर उप आगाः स्वाहा ।, ऋतूनां पत्नी प्रथमे-यमागादह्नां नेत्री जनित्री प्रजानाम् । एका सती बहुधोपो व्यौच्छ-त्साऽजीर्णा त्वं जरयसि सर्वमन्यत्स्वाहे'ति स्थालीपाकस्य जुहोति 'शान्ता पृथिवी शिवमन्तरिक्षᳬं शन्नो द्यौरभयं कृणोतु । शं नो दिशः प्रदिश आदिशो नोऽहोरात्रे कृणुतं दीर्घमायुर्व्यश्नवै स्वाहा ।, आपो मरीचीः परिपान्तु सर्वतो धाता समुद्रो अपहन्तु पापम् । भूतं भवि-ष्यदकृन्तद्विश्वमस्तु मे ब्रह्माभिगुप्तः सुरक्षितः स्याᳬंस्वाहा ।, विश्वे आदित्या वसवश्च देवा रुद्रा गोप्तारो मरुतश्च सन्तु । ऊर्जं प्रजाममृतं दीर्घमायुः प्रजापतिर्मयि परमेष्ठी दधातु नः स्वाहे''त्यष्टकायै स्वाहे'ति मध्यमा गवा तस्यै वपां जुहोति 'वह वपां जातवेदः पितृभ्य' इति श्वोऽन्वष्टकासु सर्वासां पार्श्वसक्थिसव्याभ्यां परिवृते पिण्डपितृयज्ञ-वत्स्त्रीभ्यश्चोपसेचनं च कर्षूषु सुरया तर्पणेन चाञ्जनालेपनᳬं स्रजश्चा-चार्यायान्तेवासिभ्यश्चानपत्येभ्य इच्छन् मध्या वर्षे च तुरीया शा काष्टका ॥ ३ ॥

अथातः शालाकर्म पुण्याहे शालां कारयेत्तस्या अवटमभिजुहो-'त्यच्युताय भौमाय स्वाहे'ति स्तम्भमुच्छ्रय'तीमामुच्छ्रयामि भुवन-स्य नाभिं वसोर्धारां प्रतरणीं वसूनाम् । इहैव ध्रुवान्निमिनोमि शालां क्षेमे तिष्ठतु घृतमुक्षमाणा । अश्वावती गोमती सूनृतावत्युच्छ्रयस्व महते सौभगाय । आ त्वा शिशुराक्रन्दत्वा गावो धेनवो वाश्यमानाः । आ त्वा कुमारस्तरुण आ वत्सो जगदैः सह । आ त्वा परिस्रुतः कुम्भ आदध्नः कलशैरुप । क्षेमस्य पत्नी बृहती सुवासा रयिं नो धेहि सुभ-गे सुवीर्यम् । अश्वावद्गोमदूर्जस्वत्पर्णं वनस्पतेरिव । अभि नः पूर्यताᳬं रयिरिदमनुश्रेयो वसान' इति चतुरः प्रपद्यतेऽभ्यन्तरतोऽग्निमुपसमा-धाय दक्षिणतो ब्रह्माणमुपवेश्योत्तरत उदपात्रं प्रतिष्ठाप्य स्थालीपाकᳬं श्रपयित्वा निष्क्रम्य द्वारसमीपे स्थित्वा ब्रह्माणमामन्त्रयते 'ब्रह्मन् प्रविशामी'ति ब्रह्मानुज्ञातः प्रविश'त्यृतम्प्रपद्ये शिवं प्रपद्य' इत्याज्यᳬं संस्कृ'त्येहरतिरि'त्याज्याहुती हुत्वाऽपरा जुहोति 'वास्तोष्पते प्रति-जानीह्यस्मान्त्स्वावेशो अनमीवो भवा नः । यत्त्वेमहे प्रति तन्नो जुषस्व शन्नो भव द्विपदे शञ्चतुष्पदे स्वाहा ।, वास्तोष्पते प्रतरणो न एधि गयस्फानो गोभिरश्वेभिरिन्दो । अजरासस्ते सख्ये स्याम पितेव पुत्रा-

स्पति तन्नो जुषस्व शन्नो भव द्विपदे शं चतुष्पदे स्वाहा ।, वास्तोष्पते शग्मया सꣳसदा ते सक्षीमहि रण्वया गातुमत्या । पाहि क्षेम उत योगे वरन्नो यूयम्पात स्वस्तिभिः सदा नः स्वाहा ।, अमीवहा वास्तोष्पते विश्वारूपाण्याविशन् । सखा सुशेव एधि नः स्वाहे'ति स्थालीपाकस्य जुहो'त्यग्निमिन्द्रं बृहस्पतिं विश्वान्देवानुपह्वये । सरस्वतीं च वाजीं च वास्तु मे दत्त वाजिनः स्वाहा ।, सर्वदेवजनान्त्सर्वान् हिमवन्तꣳ सुदर्शनम् । वसूँश्च रुद्रानादित्यानीशानं जगदैः सह । एतान्त्सर्वान्प्रपद्येऽहं वास्तु मे दत्त वाजिनः स्वाहा ।, पूर्वाह्णमपराह्णञ्चोभौ मध्यन्दिना सह । प्रदोषमर्द्धरात्रं च व्युष्टां देवीं महापथाम् । एतान्त्सर्वान्प्रपद्येऽहं वास्तु मे दत्त वाजिनः स्वाहा ।, कर्तारं च विकर्तारं विश्वकर्माणमोषधींश्च वनस्पतीन् । एतान्त्सर्वान्प्रपद्येऽहं वास्तु मे दत्त वाजिनः स्वाहा ।, धातारं च विधातारं निधीनां च पतिꣳ सह । एतान्त्सर्वान्प्रपद्येऽहं वास्तु मे दत्त वाजिनः स्वाहा ।, स्योनꣳ शिवमिदं वास्तु दत्तं ब्रह्मप्रजापती । सर्वाश्च देवताः स्वाहे'ति प्राशनान्ते काꣳस्ये सम्भारानोप्यौदुम्बरपलाशानि ससुराणि शाड्वलं गोमयं दधि मधु घृतं कुशान्यवाँश्चासनोपस्थानेषु प्रोक्ष्य पूर्वे सन्धावभिमृशति 'श्रीश्च त्वा यशश्च पूर्वे सन्धौ गोपायेतामि'ति दक्षिणे सन्धावभिमृशति 'यज्ञश्च त्वा दक्षिणा च दक्षिणे सन्धौ गोपायेतामि'ति पश्चिमे सन्धावभिमृश'त्यन्नं च त्वा ब्राह्मणश्च पश्चिमे सन्धौ गोपायेतामि'त्युत्तरे सन्धावभिमृश'त्यूर्क्च त्वा सूनृता चोत्तरे सन्धौ गोपायेतामि'ति निष्क्रम्य दिश उपतिष्ठते 'केता च मा सुकेता च पुरस्ताद्गोपायेतामि'त्यग्निर्वै केताऽऽदित्यः सुकेता तौ प्रपद्ये ताभ्यां नमोऽस्तु तौ मा पुरस्ताद्गोपायेतामि'त्यथ दक्षिणतो 'गोपायमानं च मा रक्षमाणा च दक्षिणतो गोपायेतामि'त्यहर्वै गोपायमानꣳ रात्री रक्षमाणा ते प्रपद्ये ताभ्यां नमोऽस्तु ते मा दक्षिणतो गोपायेतामि'त्यथ पश्चा'द्दीदिविश्च मा जागृविश्च पश्चाद्गोपयेतामि'त्यन्नं वै दीदिविः प्राणो जागृविस्तौ प्रपद्ये ताभ्यां नमोऽस्तु तौ मा पश्चाद्गोपायेतामि'त्यथोत्तरतो'ऽस्वप्नश्च मानवद्राणश्चोत्तरतो गोपायेतामि'ति 'चन्द्रमा वाऽअस्वप्नो वायुरनवद्राणस्तौ प्रपद्ये ताभ्यां नमोऽस्तु तौ मोत्तरतो गोपायेतामि'ति निष्ठितां प्रपद्यते 'धर्मस्थूणाराजꣳ श्रीस्तूपमहोरात्रे द्वारफलके । इन्द्रस्य गृहा वसुमन्तो वरूथिनस्तानहं प्रपद्ये सह प्रजया पशुभिः सह । यन्मे किञ्चिदस्त्युपहूतः सर्वगण सखाय साधुसंवृत्तः । तां त्वा शालेऽरिष्टवीरा गृहान्नः सन्तु सर्वत' इति ततो ब्राह्मणभोजनम् ॥ ४ ॥

अथातो वापीकूपतडागारामदेवतायतनपुष्करिण्याम्प्रतिष्ठापनं व्याख्यास्यामस्तत्रोदगयन आपूर्यमाणपक्षे पुण्याहे तिथिवारकरणे नक्षत्रे च गुणान्विते तत्र वारुणं यवमयं चरुँ श्रपयित्वाऽऽज्यभागाविष्ट्वाऽऽज्याहुतीर्जुहोति 'त्वन्नो ऽअग्ने, सत्वन्नो ऽअग्न, इमं मे वरुण, तत्त्वा यामि, ये ते शत,मयाश्चाग्न, उदुत्तम,मुरुँ हि राजा, वरुणस्योत्तम्भन,मग्नेरनीकमि'ति दशर्चँ स्थालीपाकस्य जुहो'त्यग्नये स्वाहा, सोमाय स्वाहा, वरुणाय स्वाहा, यज्ञाय स्वाहा,उग्राय स्वाहा, भीमाय स्वाहा, शतक्रतवे स्वाहा, व्युष्ट्यै स्वाहा, स्वर्गाय स्वाहे'ति यथोक्तँ स्विष्टकृत्प्राशनान्ते जलचराणि क्षिप्त्वाऽलङ्कृत्य गां तारयित्वा 'पुरुषसूक्तं' जपन्नाचार्याय वरं दत्वा कर्णवेष्टकौ वासाँसि धेनुर्दक्षिणा ततो ब्राह्मणभोजनम् ॥ ५ ॥

अथातो मणिकावधानमुत्तरपूर्वस्यां दिशि यूपवद्वटं खात्वा कुशानास्तीर्याक्षतानरिष्टकान्सुमनसः कपर्दिकाँश्चान्यानि चाभिमङ्गलानि तस्मिन् मिनोति मणिकँ 'समुद्रोऽसी'त्यप आसिञ्च'त्यापो रेवतीः क्षयथा हि वस्वः क्रतुं च भद्रं विभृथामृतं च । रायश्च स्थ स्वपत्यस्य पत्नी सरस्वती तद्गृणत वयोधा'दि'त्यापो हि ष्ठे'ति तिसृभिस्ततो ब्राह्मणभोजनम् ॥ ६ ॥

अथातः शीर्षरोगभेषजम्पाणी प्रक्षाल्य भ्रुवौ विमार्ष्टि 'चक्षुर्भ्याँ श्रोत्राभ्यां गोदानाच्छुबुकादधि । यक्ष्मँ शीर्षण्यँ रराटाद्विवृहामीममि' त्यर्द्धर्चे'द्वभेदक विरूपाक्ष श्वेतपक्ष महायशः । अथो चित्रपक्ष शिरो माऽस्याभितापसीदि'ति क्षेम्यो ह्येव भवति ॥ ७ ॥

उतूलपरिमेहः स्वपतो जीवविषाणे स्वं मूत्रमासिच्यापसलवि त्रिः परिषिञ्चन्परीया'त्परि त्वा गिरेरहं परिमातुः परिस्वसुः । परिपित्रोश्च भ्रातोश्च सख्येभ्यो विसृजाम्यहम् । उतूल परिमीढोऽसि परिमीढः क्व गमिष्यसी'ति स यदि प्रस्याद्वावाग्निमुपसमाधाय घृताक्तानि कुशेण्डुवानि जुहुया'त्परि त्वा ह्वल नो ह्वल निर्वृत्तेन्द्र वीरुधः । इन्द्रपाशेन सित्वा मह्यं मुक्त्वाथान्यमानयेदि'ति क्षेम्यो ह्येव भवति ॥ ८ ॥

शूलगवः स्वर्ग्यः पशव्यः पुत्र्यो धन्यो यशस्य आयुष्य औपासनमरण्यँ हृत्वा वितानँ साधयित्वा रौद्रं पशुमालभेत साण्डं गोर्वा शब्दाद्वपाँ श्रपयित्वा स्थालीपाकमवदानानि च रुद्राय वपामन्तरिक्षाय वसाँ स्थालीपाकमिश्राण्यवदानानि जुहो'त्यग्नये, रुद्राय, शर्वाय, पशुपतय, उग्राया,शनये, भवाय, महादेवाये,शानाये'ति च वनस्पतिस्विष्टकृदन्ते दिग्व्याघारणं व्याघारणान्ते पत्नीः

संयाजय'न्त्वीन्द्राण्या, रुद्राण्यै, शर्वाण्यै, भवान्या, अग्निं गृहपतिमि'ति लोहितं पालाशेषु कूर्चेषु रुद्राय सेनाभ्यो बलिꣳ हरति 'यास्ते रुद्र पुरस्तात्सेनास्ताभ्य एष बलिस्ताभ्यस्ते नमः। यास्ते रुद्र दक्षिणतः सेनास्ताभ्य एष बलिस्ताभ्यस्ते नमः। यास्ते रुद्र पश्चिमतः सेनास्ताभ्य एष बलिस्ताभ्यस्ते नमः। यास्ते रुद्रोत्तरतः सेनास्ताभ्य एष बलिस्ताभ्यस्ते नमः। यास्ते रुद्रोपरिष्टात्सेनास्ताभ्य एष बलिस्ताभ्यस्ते नमः। यास्ते रुद्राधस्तात्सेनास्ताभ्य एष बलिस्ताभ्यस्ते नम' इत्यूवध्यं लोहितलिप्तमग्नौ प्रास्यत्यधो वा निखनत्यनुवातं पशुमवस्थाप्य रुद्ररुपतिष्ठते प्रथमोत्तमाभ्यां वाऽनुवाकाभ्यां नैतस्य पशोर्ग्रामꣳ हरन्त्येतेनैव गोयज्ञो व्याख्यातः पायसेनानर्थलुप्तस्तस्य तुल्यवया गौर्दक्षिणा ॥ ९ ॥

अथ वृषोत्सर्गो गोयज्ञेन व्याख्यातः कार्तिक्यां पौर्णमास्याꣳ रेवत्यां वाऽऽश्वयुजस्य मध्ये गवाꣳ सुसमिद्धमग्निं कृत्वाऽऽज्यꣳ संस्कृ'त्येहरतिरि'ति षट् जुहोति प्रतिमन्त्रं 'पूषा गा अन्वेतु नः पूषा रक्षत्वर्वतः। पूषा वाजꣳसनोतु नः स्वाहे'ति पौष्णस्य जुहोति रुद्राञ्जपित्वैकवर्णं द्विवर्णं वा यो वा यूथं छादयति यं वा यूथं छादयेद्रोहितो वैव स्यात्सर्वाङ्गैरुपेतो जीववत्सायाः पयस्विन्याः पुत्रो यूथे च रूपस्वित्तमः स्यात्तमलङ्कृत्य यूथे मुख्याश्चतस्रो वत्सतर्यस्ताश्चालङ्कृ'त्यैतं युवानं पतिं वो ददामि तेन क्रीडन्तीश्चरथ प्रियेण। मा नः साप्तजनुषाऽसुभगा रायस्पोषेण समिषा मदेमे'त्येतयैवोत्सृजेरन्नभ्यस्थमभिमन्त्रयते 'मयोभूरि'त्यनुवाकशेषेण (वामे चक्रं दक्षिणे त्रिशूलꣳ) सर्वासां पयसि पायसꣳ श्रपयित्वा ब्राह्मणान्भोजयेत्पशुमप्येके कुर्वन्ति तस्य शूलगवेन कल्पो व्याख्यातः ॥ १० ॥

अथोदककर्माद्विवर्षे प्रेते मातापित्रोराशौचꣳ शौचमेवेतरेषामेकरात्रं त्रिरात्रं वा शरीरमदग्ध्वा निखनन्त्यन्तःसूतके चेदोत्थानादाशौचꣳ सूतकवन्नात्रोदककर्म द्विवर्षप्रभृति प्रेतमाश्मशानात्सर्वेऽनुगच्छेयुर्यमगाथां गायन्तो यमसूक्तं च जपन्त इत्येके यद्युपेतो भूमिजोषणादि समानमाहिताग्नेरोदकान्तस्य गमनाच्छालाग्निना दहन्त्येनमाहितश्चेत्तूष्णीं ग्रामाग्निनेतरꣳ संयुक्तं मैथुनं वोदकं याचेर'न्नुदकं करिष्यामह' इति 'कुरुध्वं मा चैवं पुनरि'त्यशतवर्षे प्रेते 'कुरुध्वमे'वेतरस्मिन्सर्वे ज्ञातयोऽपोऽभ्यवयन्त्यासप्तमात्पुरुषाद्दशमाद्वा समानग्रामवासे यावत्सम्बन्धमनुस्मरेयुरेकवस्त्राः प्राचीनावीतिनः सव्यस्यानामिकयाऽपनो'धाप न शोशुचदघमि'ति दक्षिणामुखा निमज्जन्ति प्रेतायोदकꣳ सकृत्प्रसिञ्चन्त्यञ्जलिना'ऽसावेतत्त ऽउदकमि'त्युत्तीर्णाञ्छुचौ देशे शाड्वलवत्युपविष्टाँस्तत्रै-

तानपवदेयुरनवेक्षमाणा ग्राममायान्ति रोतीभूताः कनिष्ठपूर्वा निवेशनद्वारे पिचुमन्दपत्राणि विदश्याचम्योदकमग्नि गोमयं गौरसर्षपाँस्तैलमालभ्याऽऽश्मानमाक्रम्य प्रविशन्ति त्रिरात्रं ब्रह्मचारिणोऽधःशायिनो न किञ्चन कर्म कुर्युर्न्न प्रकुर्वीरन्क्रीत्वा लब्ध्वा वा दिवैवान्नमश्नीयुरमांऽसं प्रेताय पिण्डं दत्वाऽवनेजनदानप्रत्यवनेजनेषु नामग्राहम्मृन्मये ताꣳरात्रीं क्षीरोदके विहायसि निदध्युः 'प्रेतात्र स्नाही'ति त्रिरात्रꣳ शावमाशौचन्दशरात्रमित्येके न स्वाध्यायमधीयीरन्नित्यानि निवर्त्तेरन्वैतानवर्जꣳ शालाग्नौ चैकेऽन्य ऽएतानि कुर्युः प्रेतस्पर्शिनो ग्रामं न प्रविशेयुरानक्षत्रदर्शनाद्रात्रौ चेदादित्यस्य प्रवेशनादि समानमितरैः पक्षं द्वौ वाऽऽशौचमाचार्ये चैवम्मातामहयोश्च स्त्रीणां चाप्रत्तानाम्प्रत्तानामितरे कुर्वीरꣳस्ताश्च तेषां प्रोषितश्चेत्प्रेयाच्छ्रवणप्रभृति कृतोदकाः कालशेषमासीरन्नतीतश्चैकरात्रं त्रिरात्रं वाऽथ कामादकान्यृत्विक्श्वशुरसखिसम्बन्धिमातुलभागिनेयानां प्रत्तानां चैकादश्यामयुग्मान्ब्राह्मणान्भोजयित्वा माꣳसवत्प्रेतायोद्दिश्य गामप्येके घ्नन्ति पिण्डकरणे प्रथमः पितॄणां प्रेतः स्यात्पुत्रवाँश्चेन्निवर्तेत चतुर्थः संवत्सरं पृथगेके न्यायस्तु "न चतुर्थः पिण्डो भवती"ति श्रुतेरहरहरन्नमस्मै ब्राह्मणायोदकुम्भं च दद्यात्पिण्डमप्येके निपृणन्ति ॥ ११ ॥

पशुश्चेदाप्लाव्यागामग्रेणाग्नीन्परीत्य पलाशशाखां निहन्ति परिव्ययणोपाकरणनियोजनप्रोक्षणान्यावृता कुर्याद्यच्चान्यत्परिपशव्ये हुत्वा तूष्णीमपराः पञ्च वपोद्धरणं चाभिघारयेद्देवताश्चादिशेदुपाकरणनियोजनप्रोक्षणेषु स्थालीपाके चैवं वपाꣳहुत्वाऽवदानान्यवद्यति सर्वाणि त्रीणि पञ्च वा स्थालीपाकमिश्राण्यवदानानि जुहोति पश्वङ्गं दक्षिणा यद्देवते तद्दैवतं यजेत्तस्मै च भागं कुर्याच्च 'ब्रया'दिममनुप्रापये'ति नद्यन्तरे नार्धं कारयेन्न वा ॥ १२ ॥

अथातोऽवकीर्णिप्रायश्चित्तममावास्यायाञ्चतुष्पथे गर्दभं पशुमालभते निर्ऋति पाकयज्ञेन यजेताप्स्ववदानहोमो भूमौ पशुपुरोडाशश्रपणन्ताञ्छविम्परिदधीतोर्ध्ववालामित्येके संवत्सरं भिक्षाचर्यं चरेत्स्वकर्म परिकीर्तयन्नथापरमाज्याहुती जुहोति "कामावकीर्णोऽस्म्यवकीर्णोऽस्मि काम कामाय स्वाहा। कामाभिद्रुग्धोऽस्म्यभिद्रुग्धोऽस्मि काम कामाय स्वाहे"त्यथोपतिष्ठते 'सम्मा सिञ्चन्तु मरुतः समिन्द्रः सं बृहस्पतिः। सम्माऽयमग्निः सिञ्चतु प्रजया च धनेन चे'त्येतदेव प्रायश्चित्तम् ॥ १३ ॥

अथातः सभाप्रवेशनꣳ सभामभ्येति "सभाङ्गिरसि नादिर्नामासि

त्विषिर्नामासि तस्यै ते नमः" इत्यथ प्रविशति 'सभा च मा समितिश्चावतां प्रजापतेर्दुहितरौ सचेतसौ । येना मा न विद्यादुपमा स तिष्ठेत्सचेतनो भवतु शᳬसथे जन' इति पर्षदमेत्य जपेद्'अभिभूरहमागमं विराडप्रतिवाश्याः । अस्याः पर्षद ईशानः सहसा सुदुष्टरो जन' इति स यदि मन्येत क्रुद्धोऽयमिति तमभिमन्त्रयते 'या त एषा रराट्या तनूर्मन्योः क्रोधस्य नाशनी । तां देवा ब्रह्मचारिणो विनयन्तु सुमेधसः । द्यौरहं पृथिवी चाहं तौ ते क्रोधं नयामसि । गर्भमश्वतर्यसहासाविति' त्यथ यदि मन्येत द्रुग्धोऽयमिति तमभिमन्त्रयते 'तान्ते वाचमास्य आदत्ते हृदय आदधे यत्र यत्र निहिता वाक्तां ततस्तत आददे यदहं ब्रवीमि तत्सत्यमधरो मत्तान्द्यस्वे'त्येतदेव वशीकरणम् ॥ १४ ॥

अथातो रथारोहणं 'युङ्क्ते'ति रथᳬ सम्प्रेष्य 'युक्त' इति प्रोक्ते 'सा विराडि'त्येत्य चक्रेऽभिमृशति 'रथन्तरमसी'ति दक्षिणं 'बृहदसी'त्युत्तरं 'वामदेव्यमसी'ति कूबरीᳬ हस्तेनोपस्थमभिमृश'त्यङ्कौ न्यङ्कावभितो रथं यौ ध्वान्तं वाताग्रमनुसञ्चरन्तम् । दूरे हेतिरिन्द्रियवान्पतत्रिते नोऽग्नयः पप्रयः पारयन्त्वि'ति 'नमो माणिचराये'ति दक्षिणं धुर्यं प्राजति गवां मध्ये स्थापयत्यप्राप्य देवताः प्रत्यवरोहेत्सम्प्रति ब्राह्मणान्मध्ये गा अभिक्रम्य पितृन्स्त्रीब्रह्मचारिणौ सारथी स्यातामुहूर्तमतीयाय जपे'दिहरतिरिहरमध्व'मेके 'मास्त्विह रतिरि'ति च स यदि दुर्बलो रथः स्यात्तमास्थाय जपे'दयं वामश्विना रथो मा दुर्गे मास्तरोरिषदि'ति स यदि भ्रम्याद्भूम्याᳬ स्तम्भमुपस्पृश्य भूमिं वा जपे'देवं वामश्विना रथो मा दुर्गे मास्तरोरिषदि'ति तस्य न का चनार्तिर्न रिष्टिर्भवति यात्वाऽध्वानं विमुच्य रथं यवसोदके दापये'देष उ ह वाहनस्यापह्नव' इतिश्रुतेः ॥ १५ ॥

अथातो हस्त्यारोहणमेत्य हस्तिनमभिमृशति 'हस्तियशसमसि हस्तिवर्चसमसी'त्यथारोह'तीन्द्रस्य त्वा वज्रेणाभि तिष्ठामि स्वस्ति मा सम्पारये'त्येतेनैवाश्वारोहणं व्याख्यातमुष्ट्रमारोक्ष्यन्नभिमन्त्रयते 'त्वाष्ट्रोऽसि त्वष्टृदैवत्यः स्वस्ति मा सम्पारये'ति रासभमारोक्ष्यन्नभिमन्त्रयते 'शूद्रोऽसि शूद्रजन्माग्नेयो वै द्विरेताः स्वस्ति मा सम्पारये'ति नदीमुत्तरिष्यन्नभिमन्त्रयते 'नमो रुद्रायाप्सुषदे स्वस्ति मा सम्पारये'ति नावमारोक्ष्यन्नभिमन्त्रयते 'सुनावमि'त्युत्तरिष्यन्नभिमन्त्रयते 'सुत्रामाणमि'ति वनमभिमन्त्रयते 'नमो रुद्राय वनसदे स्वस्ति मा सम्पारये'ति गिरिमभिमन्त्रयते 'नमो रुद्राय गिरिषदे स्वस्ति मा सम्पारये'ति चतुष्पथमभिमन्त्रयते 'नमो रुद्राय पथिषदे स्वस्ति मा सम्पारये'ति श्मशा-

मभिमन्त्रयते 'नमो रुद्राय पितृषदे स्वस्ति मा सम्पारये'ति गोष्ठमभिमन्त्रयते 'नमो रुद्राय शकृत्पिण्डसदे स्वस्ति मा सम्पारये'ति यत्र चान्यत्रापि 'नमो रुद्राये'त्येव ब्रूया'द्रुद्रो ह्येवेदꣳसर्व'मिति श्रुतेः सिचाऽवधूतोऽभिमन्त्रयते 'सिगसि न वज्रोऽसि नमस्ते अस्तु मा मा हिꣳसीरि'ति स्तनयित्नुमभिमन्त्रयते 'शिवा नो वर्षाः सन्तु शिवा नः सन्तु हेतयः। शिवा नस्ताः सन्तु यास्त्वꣳसृजसि वृत्रहन्नि'ति शिवां वाश्यमानामभिमन्त्रयते 'शिवो नामे'ति शकुनिं वाश्यमानमभिमन्त्रयते 'हिरण्यपर्ण शकुने देवानां प्रहितङ्गम। यमदूत नमस्तेऽस्तु किन्त्वा काकारिणोऽब्रवीदि'ति दोष्यो ह्येव भवति लक्षण्यं वृक्षमभिमन्त्रयते 'मा त्वाऽशनिर्म्मा परशुर्म्मा वातो मा राजप्रेषितो दण्डः। अङ्कुरास्ते प्ररोहन्तु निवाते त्वाऽभिवर्षतु। अग्निष्टे मूलम्माहिꣳसीत्स्वस्ति तेऽस्तु वनस्पते स्वस्ति मेऽस्तु वनस्पत' इति स यदि किञ्चिल्लभेत तत्प्रतिगृह्णाति 'द्यौस्त्वा ददातु पृथिवी त्वा प्रतिगृह्णात्वि'ति नास्य न ददतः क्षीयते भूयसी च प्रतिगृहीता भवत्यथ यद्योदनं लभेत तत्प्रतिगृह्णाति 'द्यौस्त्वा ददातु पृथिवी त्वा प्रतिगृह्णात्वि'ति तस्य द्विः प्राश्नाति 'ब्रह्मा त्वाऽश्नातु ब्रह्मा त्वा प्राश्नात्वि'त्यथ यदि मन्थं लभेत तत्प्रतिगृह्णाति 'द्यौस्त्वा ददातु पृथिवी त्वा प्रतिगृह्णात्वि'ति तस्य त्रिः प्राश्नाति 'ब्रह्मा त्वाऽश्नातु ब्रह्मा त्वा प्राश्नातु ब्रह्मा त्वा पिबत्वि'त्यथातोऽधीत्याधीत्यानिराकरणं 'प्रतीकम्मे विचक्षणं जिह्वा मे मधु यद्वचः। कर्णाभ्यां भूरि शुश्रुवे मा त्वꣳहार्षीः श्रुतम्मयि। ब्रह्मणः प्रवचनमसि ब्रह्मणः प्रतिष्ठानमसि ब्रह्मकोशोऽसि सनिरसि शान्तिरस्यनिराकरणमसि ब्रह्मकोशम्मे विश। वाचा त्वा पिदधामि वाचा त्वा पिदधामीति तिष्ठ प्रतिष्ठ स्वरकरणकण्ठ्यौरसदन्त्यौष्ठ्यग्रहणधारणोच्चारणशक्तिर्मयि भवत्वाप्यायन्तु मेऽङ्गानि वाक्प्राणश्चक्षुः श्रोत्रं यशो बलम्। यन्मे श्रुतमधीतन्तन्मे मनसि तिष्ठतु तिष्ठतु' ॥१६॥

इति श्रीपारस्कराचार्यविरचिते गृह्यसूत्रे तृतीयकाण्डं समाप्तम् ॥३॥

## अवशिष्टक्षेपककण्डिकाः

अथर्तुमतीं जायामधिगच्छेत्पिण्डपितृयज्ञेन यजेत मध्यमपिण्डं पत्नी प्राश्नाति पुत्रकामा तत एतामाहुतिं जुहो''त्याधत्त पितर' इत्यलङ्कारमवजिघ्र'न्त्या यन्तु न' इति जपत्येवमथर्त्तुमतीजायाहृदयमालभ्य पूर्ववत्सव्येन पाणिनोपस्थमभिमृशति 'भग प्रणेतरि'ति प्रा'णुतेदानीमि'ति 'रेतो मूत्रमि'ति सन्धत्ते 'गायत्रेणे'ति प्रतिमन्त्रं मन्थति पुत्रकामोऽभिगच्छेन्नित्यम् ॥ १ ॥

अथ गर्भाधानꣳ स्त्रियाः पुष्पवत्याश्चतुरहादूर्ध्वꣳ स्नात्वा विरजायास्तस्मिन्नेव दिवाऽऽदित्यं गर्भमि'त्यादित्यमवेक्षते गृहे वा स्नापयित्वा तामभिगच्छेदिति श्रुतेस्तस्मिन्प्रजायाः सम्भवकाले निशायां कुर्याद्यदि दिवा मैथुनं व्रजेत्क्लीबा अल्पवीर्या अल्पायुषाश्च प्रसूयन्ते तस्मादेतद्वर्जयेत्प्रजाकामो गृही श्रुतिस्मृतिविरोधाभ्यां दक्षिणेन पाणिनोरू प्रसार्य प्रजास्थानमभिमृशति 'पूषा भगꣳ सविता मे ददातु रुद्रः कल्पयति ललामगुं विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिꣳशतु । आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते । गर्भं धेहि सिनीवालि गर्भं धेहि पृथुष्टुके । गर्भं ते अश्विनौ देवावाधत्तां पुष्करस्रजावि'ति सꣳसृजेथा-'स्तेजो वैश्वानरो दद्याद्'ब्रह्माणमामन्त्रते 'ब्रह्मा गर्भन्दधात्वि'ति प्राङ्मुख उदङ्मुखो वोपविष्टो मन्थे'द्रेतो मूत्रमि'ति चैके स्रावणं कुर्यात् ॥२॥

अथ यमलचरुं मारुतं व्याख्यास्यामो यस्य च यमलौ पुत्रौ दारिका वा प्रजायेत पूर्णे दशाहे चतुर्णां क्षीरवृक्षाणां काषायमाहृत्याश्वत्थप्लक्षन्यग्रोधोदुम्बराश्चत्वारोऽविधवाः स्नापयन्ति ब्रह्मचारिणो वा शुक्लवासस ऐन्द्रीं दिशमुदीचीं वा मङ्गलं पूर्ववद्गायन्त्यो यमलिनीꣳ स्नापयन्त्याचार्यः स्नापयति 'वसोः पवित्रेण शतधारेण' चाष्टभिः कलशैः स्नात्वाऽप्रतिरथं जपे'दिदमापः प्रवहते'ति तौ स्नापितौ वरं प्रयच्छत्यानडुहमातृभ्यश्च हिरण्यं वस्त्रमेवपरितोषणं 'वाजे वाजेऽवते'ति जपत्वाधारं मारुतं चरुं जुहोति 'मरुताय स्वाहा, मारुताय स्वाहा, मरुद्भ्यो, विष्णवे, प्रजापतये, विश्वेभ्यो देवेभ्यो,ऽग्नये स्विष्टकृते स्वाहे'-ति प्राशनान्ते शेषं चरुं गृहीत्वाऽश्वत्थं प्रदक्षिणीकृत्योपविशेत्तदेव तन्त्रꣳ समाप्य ततो ब्राह्मणभोजनम् ॥ ३ ॥

अथ कर्णवेधो वर्षे तृतीये पञ्चमे वा पुष्येन्दुचित्राहरिरेवतीषु पूर्वाह्णे कुमारस्य मधुरं दत्वा प्राङ्मुखायोपविष्टाय दक्षिणं कर्णमभिमन्त्रयते 'भद्रं कर्णेभिरि'ति सव्यं 'वक्ष्यन्तीवेदि'ति चाथ भिन्द्यात्ततो ब्राह्मणभोजनम् ॥ ४ ॥

अथोपनीतो ब्राह्मणस्त्रिशिखः शिखी जटिलो मुण्डो वाक्षारालवणाशी स्यात्सावित्रꣳ षडात्रं त्रिरात्रꣳ सद्यःकालं वा चरेत्तदेव व्रतमुदीक्ष्य दण्डमपो निधाय मेखलां यज्ञोपवी 'चाप्स्वन्तरि'ति प्रत्यृचं 'नमो वरुणाये'ति त्रिमधुरं दत्वा ततोऽस्याग्नेयं प्रथमं वेदव्रतमादिशेद्ब्राह्मणक्षत्रियविशां पञ्च सांवत्सरिकाणि वेदव्रतानि भवन्त्याग्नेयꣳ शुक्रियमौपनिषदꣳ शीलभङ्गोदानमिति पञ्च सांवत्सरिकाणि वेदव्रतानि चरित्वा स्नात्वोपव्रतं चरेत्त्रिष्ववगुण्ठनꣳ शुक्रियादिषु शुक्रियꣳ शुक्रासिः श्रावये

द्यौपनिषदमौपनिषद्भिः शौलभं शौलभिनीभिरथ वाऽविद्यमान 'मा त्र ह्मन्नुदारता,मा नो भद्रा, आशुः शिशान, इमानुक्रमि'ति च वेदशिरस्ताऽवगुण्ठयेदवगुण्ठनीं त्रिवलिं पञ्चवलिं वा नाभिदेशात्प्रच्छाद्य वाग्यतोऽरण्येऽधः शयीत ग्रामे गोष्ठे देवतायतने वा व्युष्टायामवगुण्ठनीमरण्ये विसृजे'दद्दुश्रमस्यो,दुत्यं, चित्रन्देवाना'मित्युदितेऽर्के जपति वर्षति 'द्यौः शान्तिरि'ति शान्तिं करोति शान्तिभाजनं गुरवे दद्यादेवमेवावगुण्ठनीं च गोदाने गोमिथुनं तस्माद्गोदानमिति तस्माद्गोदानमिति ॥ ५ ॥

## अथ परिशिष्टशौचसूत्रम् ।

अथातः शौचविधिं व्याख्यास्यामो दूरङ्गत्वा दूरतरङ्गत्वा यज्ञोपवीतं शिरसि दक्षिणकर्णे वा धृत्वा तृणमन्तर्धानङ्कृत्वोपविश्याहनीत्युत्तरतो निशायान्दक्षिणत उभयोः सन्ध्ययोरुदङ्मुखो नाग्नौ न गोसमीपे नाप्सु, नागे वृक्षमूले चतुष्पथे गवाङ्गोष्ठे देवब्राह्मणसन्निधौ दहनभूमिं भस्माच्छन्नं देशं फालकृष्टभूमिञ्च वर्जयित्वा मूत्रपुरीषे कुर्यात्ततः शिश्नं गृहीत्वोत्थायाद्भिः शौचं गन्धलेपहरं विदध्याल्लिङ्गे देया सकृन्मृद्धै त्रिवारं गुदे दशधा वामपाणावुभयोः सप्तवारं मृत्तिकां दद्यात्करयोः पादयोः सकृत्सकृदेव मृत्तिका देयेति शौचं गृहस्थानां द्विगुणं ब्रह्मचारिणां त्रिगुणं वनस्थानां चतुर्गुणं यतीनामिति यद्दिवा विहितं शौचं तदर्धं निशायाम्भवति मार्गे चेत्तदर्धमार्त्तश्चेद्यथाशक्ति कुर्यात् ॥ १ ॥

प्रक्षालितपाणिपादः शुचौ देश उपविश्य नित्यं बद्धशिखी यज्ञोपवीती प्रागुदङ्मुखो वा भूत्वा जान्वोर्मध्ये करौ कृत्वाऽशूद्रानतीतोदकैर्द्विजातयो यथाक्रमं हृत्कण्ठतालुगैराचामन्ति न तद्भिन्नोष्ठेन न विरलाङ्गुलिभिर्न तिष्ठन्नैव हसन्नापि फेनबुद्बुदयुतं ब्राह्मतीर्थेन त्रिः पिबेद् द्विः परिमृजेद्ब्राह्मणस्य दक्षिणहस्ते पञ्च तीर्थानि भवन्त्यङ्गुष्ठमूले ब्रह्मतीर्थं कनिष्ठिकाङ्गुलिमूले प्रजापतितीर्थं तर्जन्यङ्गुष्ठमध्यमूले पितृतीर्थमङ्गुल्यग्रे देवतीर्थं मध्येऽग्नितीर्थमित्येतानि तीर्थानि भवन्ति ॥ २ ॥

प्रथमं यत्पिबति तेन ऋग्वेदं प्रीणाति द्वितीयं यत्पिबति तेन यजुर्वेदं प्रीणाति तृतीयं यत्पिबति तेन सामवेदं प्रीणाति चतुर्थं यदि पिबेत्तेनाथर्ववेदेतिहासपुराणानि प्रीणाति,यदङ्गुलिभ्यः स्रवति तेन नागयक्षकुबेराः सर्वे वेदाः प्रीणन्ति यत्पादाभ्युक्षणं पितरस्तेन प्रीणन्ति यन्मुखमुपस्पृशत्यग्निस्तेन प्रीणाति यन्नासिके उपस्पृशति वायुस्तेन प्रीणाति यच्चक्षुरुपस्पृशति सूर्यस्तेन प्रीणाति यच्छ्रोत्रमुपस्पृशति दिशस्तेन प्रीणन्ति यन्नाभिमुपस्पृशति ब्रह्मा तेन प्रीणाति यद्धृदयमुपस्पृशति तेन परमात्मा प्रीणाति यच्छिर उपस्पृशति रुद्रस्तेन प्रीणाति यद्बाहू उपस्पृशति

विष्णुस्तेन प्रीणाति मध्यमानामिकया मुखं तर्जन्यङ्गुष्ठेन नासिकां मध्य-माङ्गुष्ठेन चक्षुषी अनामिकाङ्गुष्ठेन नाभिं हस्तेन हृदयं सर्वाङ्गुलिभिः शिर इत्यसौ सर्वदेवमयो ब्राह्मणो देहिनामित्याहेत्येवं शौचविधिं कृत्वा ब्रह्मलोके महीयते ब्रह्मलोके महीयत इत्याह भगवान्कात्यायनः ॥ ३ ॥

## अथ भोजनसूत्रम् ।

वन्दे श्रीदक्षिणामूर्त्तिं सच्चिदानन्दविग्रहम् ।
सर्वार्थानाम्प्रदातारं शिवादेहार्धधारिणम् ॥ १ ॥

अथातः श्रुतिस्मृतीरनुसृत्य भोजनविधिं व्याख्यास्याम आचा-न्तो धृतोत्तरीयवस्त्रो धृतश्रीखण्डगन्धपुण्ड्रो भोजनशालामागत्य गो-मयेनोपलिप्य शुचौ देशे विहितपीठाधिष्ठितो नित्यम्प्राङ्मुखो न दक्षि-णामुखो न प्रत्यङ्मुखो न विदिङ्मुखः श्रीकामश्चेत्प्रत्यङ्मुखः सत्य-कामश्चेदुदङ्मुखो यशस्कामश्चेद्दक्षिणामुखो जीवन्मातृकवर्जं हस्त-पादास्येषु पञ्चस्वार्द्रोनीवारचूर्णगोमूत्रा भस्मनोदकेन वा मण्डलङ्कुर्या-च्चतुष्कोणं ब्राह्मणस्य त्रिकोणं क्षत्रियस्य मण्डलाकृति वैश्यस्याभ्युक्षणं शूद्रस्य "यथा चक्रायुधो विष्णुस्त्रैलोक्यं परिरक्षति । एवं मण्डलभ-स्मैतत्सर्वभूतानि रक्षत्वि'ति तत्र भूमौ निहितपात्रेऽन्ने परिविष्टे 'पितुन्नु स्तोषमि'त्यन्नꣳ स्तुत्वा 'मा नस्तोके, नमो वः किरिकेभ्यो, नमः शम्भ-वाये'त्यभिमन्त्र्य प्रातः'सत्यन्त्वर्त्तेन परि षिञ्चामी'ति प्रात'र्ऋतन्त्वा सत्येन परिषिञ्चामी'ति साय'न्तेजोऽसि शुक्रमस्यमृतमसी'ति यजुषाऽन्न-मभिमृश्या'ग्निरस्मी'त्यात्मानमग्निन्ध्यात्वा 'भूपतये, भुवनपतये, भूता-नाम्पतय' इति 'चित्राय, चित्रगुप्ताय, सर्वेभ्यो भूतेभ्यो नम' इति दिवा प्रणवादिकैः स्वाहानमोन्तैर्मन्त्रैः प्रतिमन्त्रं बलीन्हरे'दन्तश्चरसि भू-तेषु गुहायां विश्वतोमुखः । त्वं ब्रह्म त्वं यज्ञस्त्वं वषट्कारस्त्वमोङ्कार-स्त्वं विष्णोः परमम्पदम् । अमृतोपस्तरणमसि स्वाहे'ति विष्णुमन्त्रम-भिध्यायन्नाचम्यान्नममृतं ध्यायन्मौनी हस्तचापल्यादिरहितो मुखे पञ्च प्राणाहुतीर्जुहोति ॥ १ ॥

'प्राणाय स्वाहा,ऽपानाय स्वाहा, व्यानाय स्वाहा, समानाय स्वा-हो,दानाय स्वाहे'ति क्रमं याज्ञवल्क्योऽमन्य'तोदानाय स्वाहा, समानाय स्वाहे'ति शौनकबौधायनौ याज्ञवल्क्योदितक्रमो वाजसनेयिनान्दन्तैर्नो-पस्पृशेज्जिह्वया ग्रसेदङ्गुष्ठप्रदेशिनीमध्यमाभिः प्रथमामङ्गुष्ठमध्यमा-नामिकाभिर्द्वितीयामङ्गुष्ठानामिकाकनिष्ठिकाभिस्तृतीयां कनिष्ठिकातर्ज-न्यङ्गुष्ठैश्चतुर्थीꣳ सर्वाभिरङ्गुलीभिः साङ्गुष्ठाभिः पञ्चमीमङ्गुष्ठाना-

ऽमिकाग्राह्यान्नेनैता आहूतय इति हारीतव्याख्यातारः सर्वाभिरेता इति बौधायनो मौनन्त्यक्त्वा प्राग्द्रवरूपमश्नीयान्मध्ये कठिनमन्ते पुनर्द्रवाशी स्यान्मधुरम्पूर्वं लवणाम्लौ मध्ये कटुतिक्तादिकान्पश्चाद्यथासुखम्भुञ्जीत भुञ्जानो वामहस्तेनान्नन्न स्पृशेन्न पादौ न शिरो न बस्ति न परभाजनॅ स्पृशेदेवं यथारुचि भुक्त्वा भुक्तशेषमन्नमादाय 'मद्भुक्ताच्छिष्टशेषं ये भुञ्जते पितरोऽधमाः। तेषामन्नं मया दत्तमक्षय्यमुपतिष्ठत्वि'ति पितृतीर्थेन दत्वा'ऽमृतापिधानमसि स्वाहे'ति हस्तगृहीतानामपामर्धं पीत्वाऽर्धम्भूमौ निक्षिपे'द्रौरवे पूयनिलये पद्मार्बुदनिवासिनाम्। अर्थिनाॅसर्वभूतानामक्षयमुपतिष्ठत्वि'ति तस्माद्देशादपसृत्य गण्डूषशलाकादिभिस्तर्जनीवर्जमास्यं शोधयेत् ॥ २ ॥

न भार्यादर्शनेऽश्नीयान्न भार्यया सह न सन्ध्ययोर्न मध्यान्हे नार्द्धरात्रे नायज्ञोपवीती नार्द्रवासा नैकवासा न शयानो न ताम्रभाजने न भिन्ने न राजतसौवर्णशङ्खस्फाटिककांस्यभाजनवर्जं न लौहे न मृन्मये न सन्धिसॅस्थिते न भुवि न पाणौ न सर्वभोजी स्यात्किञ्चिद्भोज्यं परित्यजेदन्यत्र घृतपायसदधिसक्तुपललमधुभ्यः साध्वाचान्तो दक्षिणपादाङ्गुष्ठे पाणिं निःस्रावये'दङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठञ्च समाश्रितः। ईशः सर्वस्य जगतः प्रभुः प्रीणातु विश्वभुगि'ति 'श्वात्राः पीता' इति नाभिमालभे'तामता' इत्यतः प्रा'गगस्त्यं वैनतेयञ्च शनिञ्च वडवानलम्। आहारपरिणामार्थं स्मरेद्भीमञ्च पञ्चममि'त्युदरमालभ्य 'शर्यातिञ्च सुकन्याञ्च च्यवनं शक्रमश्विनौ। भोजनान्ते स्मरेन्नित्यं तस्य चक्षुर्न हीयत' इति स्मृत्वा मुखशुद्धिं कुर्यान्नमो भगवते वाजसनेयाय याज्ञवल्क्याय नमो भगवते वाजसनेयाय याज्ञवल्क्याय ॥ ३ ॥(१)

इति श्रीकात्यायनोक्तभोजनसूत्रं समाप्तम्।



(१) अत्र संस्कारगणपतौ ग्रन्थकारेणानुक्ताः क्षेपककण्डिकाः
शौचभोजनपरिशिष्टे चान्ते विनिवेश्यालङ्कृतो ग्रन्थोऽयम्।
परिशिष्टत्रिकण्डिकास्नानसूत्रस्य ग्रन्थे व्याख्यातान्नात्र पौनरुक्त्यमिति। श्राद्धपरिशिष्टन्तु ग्रन्थकर्तृश्रीमद्विद्वद्वररामकृष्णव्याख्योल्लसितमेवेतिकृत्वा श्राद्धगणपतौ प्रकाशयिष्यते। काण्वशाखीयकृतग्रन्थसाहचर्यादत्र न प्रदर्शितं यकारादिचिन्हं माध्यन्दिनीयपाठकैस्तत्स्वसम्प्रदायानुसारेण गुरुमुखात्तत्र तत्रावगन्तव्यमिति शिवम्।

# संस्कारगणपतौ प्रमाणत्वेनोपन्यस्तानां ग्रन्थानामकाराद्य-नुक्रमनिघण्टुपत्रम् ।

इति ३७७ प्रणाम ग्रन्थसूचिका ।

---

प्राप्तिस्थानम्—

चौखम्बा संस्कृत पुस्तकालय,

बनारस सिटी ।